श्रीः ।

# सिद्धान्तचन्द्रिका

## सुबोधिनी तत्त्वदीपिका चेति व्याख्याद्वयोपेता ।

( पूर्वार्धम् )

श्रीगणेशाय नमः ।

मूलम्–नमस्कृत्य महेशानं मतं बुद्ध्वा पतंजलेः ॥
वाणीप्रणीतसूत्राणां कुर्वे सिद्धांतचंद्रिकाम् ॥ १ ॥

सुबोधिनी–

पुराणपुरुषं ध्यात्वा नत्वा चार्हतनामकम् ॥
सिद्धान्तचंद्रिकावृत्तिं चक्रेऽभिमतयामहम् ॥ १ ॥

विद्यारत्नपयोनिधौ खरतराम्नाये जगत्पूज्यके
श्रीभट्टारकसंपदं गुणगणैः स्तुत्यां धरन्पुण्यवान् ॥
पूज्यश्रीजिनभक्तिसूरिरधिपो वर्वर्ति विद्यानिधिः ।
सोयं शीतकरायते च यशसा सूरायते तेजसा ॥ २ ॥

श्रीकीर्तिरत्न सूर्यार्हो यतींद्रोऽभूत्तरां ततः ॥
श्रीमत्सुमतिरंगाख्यः पाठकप्रवरस्ततः ॥ ३ ॥

श्रीपाठकः श्रीसुखलाभसंज्ञा जाग्रत्प्रभावाविलसत्मतिज्ञाः ॥
तच्छिष्यवर्याः कृतिराजिधुर्याः श्रीपाठकाः पाठकवारणेंद्राः ॥ ४ ॥

श्रीभाग्यचंद्रागणिसंप्रवर्हाः संवेगरंगांगनिमग्नगात्राः ॥
श्रीभाक्तिपूर्वं विनयं हि येषां तन्नामधेयं गुरवो वदंति ॥ ५ ॥

तेषां हि तेषां विनयप्रधानोऽनवद्यविद्याभ्यसनैकतानः ॥
प्राज्ञः सदानंदगणिः सुशिष्यः सुबोधिनीं संविदधाति वृत्तिम् ॥ ६ ॥

ग्रंथादौ ग्रंथमध्ये ग्रंथांते च मंगलमाचरणीयमिति शिष्टाचारस्तत्र मंगलं त्रिविधमाशीर्वादात्मकं नमस्कारात्मकं वस्तुनिर्देशात्मकं चेति । अथ ग्रंथादौ ग्रंथकर्ता रामाश्रमो नमस्कारात्मकं मंगलं शिष्यशिक्षायै निबध्नाति । अहं सिद्धांतचंद्रिकां कुर्वे । प्रमाणेन प्राप्तोर्थः सिद्धान्तः षिधूशास्त्रादावस्माद्गत्यर्थादिति क्तः । सिद्धो निष्पन्नोऽन्तोनिश्चयोऽत्रेति सिद्धांतः । सिद्धांते चन्द्रिकेव चंद्रिका शाकपार्थिवादित्वान्मध्यमपदलोपः सिद्धांतचंद्रिका तां । चन्द्रज्योतिरिव प्रकाशिकामित्यर्थः । सकलजनाह्लादकत्वसाम्येन चन्द्रिकाशब्दप्रयोगः । चन्द्रो-

त्यस्यामिति चन्द्रिका । अइकौचमत्वर्थे इति इकः । चंद्रं कायति प्रतिपादयतीति वा चन्द्रिका । आतोडः चंद्रमाचष्टे इति वा चन्द्रिका ञ्यताद्ब्रुञ् । चन्द्रिका कौमुदीज्योत्स्ने-त्यमरः। कुर्वे इति लट् उत्तमपुरुषस्यैकवचनम् । आख्यातप्रत्ययस्तु कर्तर्यस्ति कर्तुराख्याते-नोक्तत्वादाख्यातवाच्यकारकवाचकः प्रथमांतोऽहमिति कर्ता संगृह्यते । कुर्वे इत्यत्र र्वो-र्विहसे इति दीर्घस्तु न भवति कुरुक्षुरोर्नेति निषेधात् । ननु करिष्यमाणायाश्चन्द्रिकायाः कथं कुर्वे इति वर्तमाननिर्देशः । उच्यते । वर्तमानसमीपे भूते भविष्यति चेति भविष्यदर्थे लट् । केषां सिद्धान्त इत्यत आह । वाण्या प्रणीतानि वाणीप्रणीतानि वाणीप्रणीतानि सूत्रा-णि वाणीप्रणीतसूत्राणि तेषां । वणशब्दे पचाद्यः । वणो ब्रह्मा । देवतेदमर्थे इत्यण् ततो वणईबितीप् । वाणी वाणयति प्रेरयति जीवानिति ञ्यंतात्पचाद्यः । नदादेरितीब्वा । नियः कर्मणिक्तः । सूत्रवेष्टने चुरादिः । सूत्रयंति बहूनर्थानल्पाक्षरैरिति सूत्राणि पचाद्यः । गीर्वाग् वाणी सरस्वतीत्यमरः । किं कृत्वा । महेशानं नमस्कृत्य । महांश्चासावीशानश्चेति महेशानः शंभुस्तं । सहादित्वान्महच्छब्दस्यमहा । ईष्टे इतीशानः कर्तरिशानः । नमस्कृत्येति पूर्व-काले क्त्वाइति क्त्वा । क्त्वास्थाने समासे क्यबिति भावे क्यप् वाचस्पत्यादित्वाद्विसर्गस्य सः अनुक्तत्वात्कर्म्मणि द्वितीया । महेशानमिति एककर्तृकयोर्द्वयोः कृत्ययोः कर्तरि प्रथमा-न्ति । विशेष्ययाऽऽख्यातक्रियया कर्तुरुक्तत्वात् गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्या-यादाख्यातक्रियया कर्तुरभिसंबंधः । ननु महेशानमित्यत्र नमआदियोगे इति चतुर्थी स्यात् मैवं वद । नमस्करोति देवानित्यत्रेव द्वितीयैव युक्ता । उपपदविभक्तेः कारकविभक्तिर्बली-यसीत्युक्तत्वात् । स्वयंभुवं नमस्कृत्येत्यत्र तु स्वयंभुवमनुकूलयितुमित्यर्थविवक्षायां न तु नमःप्रयुक्तस्य कर्मणीत्यनेन चतुर्थी । किंच जहत्स्वार्थावृत्तिपक्षे नमःशब्दस्यात्र निरर्थक-त्वान्नमोयोगे चतुर्थी न भवति अर्थवद्ग्रहणे नानर्थकस्य ग्रहणमित्युक्तत्वात् । पुनः किंकृत्वा पतञ्जलेर्मतं बुद्ध्वा ज्ञात्वा । पतंजलिना मन्यते यत्तन्मतम् । मतिबुद्धीति वर्त्तमाने कर्मणिक्तः वर्तमानाधारार्थस्य क्तस्येत्यनेन पतंजलेरिति कर्तरि षष्ठी । बुध्अवगमने भावे क्त्वाप्रत्ययः पतन्तोऽञ्जलयो यस्मिन् स पतञ्जलिः शेषनागः तस्य पतञ्जलेः हलादेरीषादाविति टिलोपः। किं च "आसन्नं ब्रह्मणस्तस्य तपसामुत्तमं तपः । प्रथमं छंदसामंगमाहुर्व्याकरणं बुधाः ॥१॥ अर्थप्रवृत्तितत्त्वानां शब्दाएव निबंधनम् ॥ तत्त्वावबोधशब्दानां नास्ति व्याकरणादृते॥२॥" इत्युक्तत्वात्सर्वत उत्तमं व्याकरणं । तद्व्याकरणसूत्रं, सूत्रव्याख्यानं, वाक्याध्याहारः, उदाहरणम्, प्रत्युदाहरणं चेतिसमुदितं भवति । तस्यैकदेशः सूत्रं । तद्व्याख्यानं पंचधा । यथा । "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना ॥ आक्षेपस्य समाधानं व्याख्यानं पंचधा स्मृतम्"इति ॥ १ ॥

**तत्त्वदीपिका**–प्रणम्य जगतां नाथं महेशं साम्बमव्ययम् । सिद्धांतचंद्रिकाव्याख्या क्रियते तत्त्वदीपिका।

प्रारिप्सितनिरंतरायपरिसमाप्तये विहितं मंगलं शिष्यशिक्षायै निबध्नन् चिकीर्षितं प्रतिजानीते । **नमस्कृ-त्यादिना** अहं रामचंद्राश्रमः वाणीप्रणीतसूत्राणां सिद्धांतचंद्रिकां कुर्वे । किं कृत्वा महेशानं नमस्कृत्य । पुनः पतंजलेर्मतं बुद्ध्वेत्यन्वयः । नमो नतिं कृत्वा इति नमस्कृत्य । कृञः समासेक्यप् इति पूर्वकालेक्यप् ह्रस्व-स्येति तुक् । वाचस्पत्यादित्वाद्विसर्गस्य सः । नतिजन्यप्रीत्याश्रयत्वेन महेशानस्य कर्मत्वं । ईष्टइति ईशानः । ईशऐश्वर्ये । शतशानावितिशानप्रत्ययः । शितिचतुर्वदिति चतुर्नस्त्वादप्कर्त्तरीत्यप् तस्यादादेरितिलुक् ईशानाः सातिशयाः बहवः संति तद्व्यावृत्त्यर्थं विशेषणं महांश्चासावीशानश्चेति महेशानः सहादित्वान्महत आत्वं

सर्वापेक्षयोत्तमो यः परमेश्वरस्तं । अनेन व्याकरणस्य सिद्धांतः सूचितः ध्वनिविशेषावच्छिन्नं ब्रह्मैव प्रतिपाद्यमिति मन्यते इति मतम् मतिबुद्धिपूजार्थेभ्यश्चेति वर्त्तमाने मन्यतेः कर्मणि क्तः इच्छाविषयभूतं ज्ञानविषयभूतं वा बुद्ध्वा ज्ञात्वेत्यर्थः । बुध अवगमने । पूर्वकालेक्त्वा पूर्वकालत्वं च क्त्वाक्यपोः कुर्वे क्रियापेक्षया । खले कपोत न्यायेन द्वयोस्तत्र संबंधः विशेषणानां परस्परं संबंधानभ्युपगमात् आख्यातार्तवाच्यायाः क्रियाया विशेष्यत्वस्वीकारात् । पतन्नंजलिर्यस्मिन् सर्वेषां नमस्कार्यत्वात् पतञ्जलिस्तस्य पतंजलेरिति मननक्रियापेक्षया कर्त्तृकार्ययोरिति कर्त्तरिषष्ठी नक्तादाविति निषेधः क्तस्य स निषेधो नतु तकः अनेन प्रक्रियामात्रं दृष्ट्वायं ग्रंथो न दृष्यः किन्तु भाष्यपर्यंतं ज्ञात्वेति सूचितं वणाति वेदशब्दमुच्चारयति इति वणो ब्रह्मा वणशब्दे पचाद्यः तस्येयं शक्तिर्वाणी सरस्वती देवतेदमर्थे इत्यण् त्रण ईप् यद्वा वाणयति सर्वान् जीवान् शब्दोच्चारेण प्रेरयतीति ण्यन्तात्पचाद्यः नदादेरितीप् । प्रणयन्ते इति प्रणीतानि । णीञः कर्मणि क्तः । वाण्या प्रणीतानि वाणीप्रणीतानि अमादाविति तत्पुरुषः सीव्यन्तेऽन्तर्भाव्यस्मिन्नर्था यैस्तानि सूत्राणि । षिवु तंतुसंताने । सिवेरूच्चेत्यौणादिकत्रप्रत्ययः । यद्वा सूत्रयन्ति वेष्टयन्ति अल्पाक्षरैर्बहूनर्थानिति सूत्राणि । सूत्रवेष्टने चुरादिः पचाद्यः अल्पाक्षरैर्बह्वर्थसूचकानि वाणीप्रणीतानि च तानि सूत्राणि चेति कर्मधारयस्तेषां संबंधसामान्ये षष्ठी । कुर्वे इति कृञो वर्त्तमाने ञित्वादात्मनेपदं उत्तमपुरुषस्यैकवचनं । तनादेरुप् । गुणः क्ङित्यदुरित्युत्वं य्वोर्विहस इति दीर्घस्तु न संभवति संज्ञापूर्वकत्वात् संज्ञापूर्वकोविधिरनित्यः द्विमात्रो दीर्घ इति संज्ञा । असेधीदिति सिद्धः । षिधू शास्त्रादौ गत्यर्थेति क्तः सिद्धो निष्पन्नोन्तो निश्चयोऽस्येति सिद्धान्तः अन्यार्थे बहुव्रीहिः चंद्रोस्त्याश्रयत्वेनास्या इति चंद्रिका अइकावितीकः सिद्धांतानां चंद्रिका सिद्धांतचंद्रिका सा यथा कुमुदानां प्रकाशिका तथेयं सरस्वती सूत्रार्थप्रकाशिकेति सादृश्याद्गौणप्रयोगः सिद्धांतशब्दः संबंधित्वात्सूत्राणामिति विशेषणसापेक्षोपि चंद्रिकाशब्देन समस्यते देवदत्तस्य गुरुकुलमित्यत्र गुरुशब्दो यथा एतेन पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति नियमात्सूत्रशब्दस्य कथं सिद्धांतशब्देनान्वय इति उक्तिः परास्ता । वस्तुतस्तु साकांक्षत्वनिराकांक्षत्वे एवान्वयानन्वयप्रयोजके नतु पदार्थतदेकदेशत्वे । ननु नमस्कृत्य महेशानामित्यत्र नमआदियोगे चतुर्थीति सूत्रेण चतुर्थ्या भवितव्यमिति चेन्न । उपपदविभक्तेः कारकविभक्तिर्बलीयसीति वचनात् द्वितीयैव अथ कथं स्वयंभुवे नमस्कृत्येति चतुर्थी चेत्स्वयंभुवमनुकूलयितुमित्यर्थे तुमोऽप्रयुक्तस्य कर्मणीति कर्मणि चतुर्थीदर्शनादित्यवेहि । यत्तु कुर्वे इत्यत्र आत्मगामिफलाभावात्कथमात्मनेपदमित्याशंक्य ग्रंथकरणोत्पन्नपुण्यस्य दानफलवदात्मगामित्वादात्मनेपदमिति समाहितं तन्न । आत्मगामि चेत्फलमात्मनेपदं परगामिचेत्फलं परस्मैपदमित्यस्यासार्वत्रिकत्वात् तथा च मयूरभट्टः कमलवनोद्घाटनं कुर्वते ये मयूखाइति शेषः । कमलवनोद्घाटनरूपफलस्य कर्त्तृभूतमयूखागामित्वेपि कुर्वत इत्यात्मनेपदमुदाजहार ॥ १ ॥

**मू०–अइउऋऌसमानाः ॥ अनेन क्रमेणैते वर्णा ज्ञेयाः ते च समानसंज्ञाः स्युः । नैतेषु सूत्रेषु संधिरनुसंधेयोऽविवक्षितत्वात् । विवक्षितस्तु संधिर्भवतीति नियमात् ॥**

सुबोधिनी–अइउऋऌसमानाः । संज्ञासूत्रमिदम् । आद्यन्ताभ्यामित्यनेन संज्ञाविधायकसूत्रेण सहैकवाक्यत्वात् । तेनावेल इत्यादि प्रत्याहारसंज्ञा सिध्यति । अत्राकारादिष्वर्थवत्तु सत्स्वपि स्वरूपग्रहणस्येष्टत्वेनार्थवत्त्वस्याविवक्षितत्वमस्ति । अर्थवत्त्वाभावान्न प्रातिपदिकसंज्ञा प्रातिपदिकत्वाभावान्न स्यादिविभक्त्युत्पत्तिः । अविभक्तिकानां समासो न भवति । पदानामेव समासइत्युक्तत्वात् । समासाभावाद्वाक्यमात्रतः संकेतितम् । षट्पदमिदंसूत्रम् । ननु संधिः कथं न कृतः । उच्यते । वर्णानामसंदिग्धत्वेन बोधनायाऽविवक्षितत्वादेतेष्वसंधिः उक्तं च । "संहितैकपदे नित्या नित्या धातूपसर्गयोः ॥ नित्या समासे वाक्ये तु सा विवक्षामपेक्षते" ॥ १ ॥ इति संहिताऽत्र संधिः । एकमेव पदमित्येकपदं तत्र संहिता नित्या यथा । देवो । धातूपसर्गरूभयोः संहिता नित्या । प्रेक्ष्यते । समासे संहिता नित्या [illegible]

भागाभावात् समासे ह्येकपदत्वात् । यथा । देवेन्द्रः । सा संहिता वाक्ये विवक्षां वक्तुमिच्छामपेक्षते । यथा । 'हे रोहिणि त्वमसि शीलवतीषु धन्या एनं निवारय पतिं सखि दुर्विनीतम्' इत्यादिषु विवक्षाधीना संहिता ज्ञेया । तेन वाक्ये विवक्षितः संधिर्भवति नत्वविवक्षित इति । स्वराणां चादिषु पाठान्निपातसंज्ञा । अनिपात इति । प्रकृतिभावान्न संधिरित्यन्ये वदंति । ननु वर्णात्कार इत्यनेनैभ्यः कारप्रत्ययः । कथं न स्यात् उच्यते । वार्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्यसंभवाकारप्रत्ययः । ननु अकाराद्युपदेशेन यथा तत्सवर्णानामाकारादीनां लाभाय पृथगाकारादयो नोपदिष्टास्तथा ऋऌवर्णयोरपि सावर्ण्यादृकारोपदेशेनैवोभयग्रहणासिद्धेः किं पृथगुपदेशः उच्यते । ऋऌवर्णयोः सावर्ण्यस्यानित्यतां ज्ञापयितुमुभयोरुद्देशः । तत्फलं तु क्लृप्ता शिखा यस्य स क्लृप्तशिखस्तस्य । दूरात्संबोधने क्लृप्तशिखेत्यत्र प्लुतभवनम् । ऋऌवर्णयोः सावर्ण्यस्य नित्यत्वे तु गुरोरनृतोनंत्यस्यापीत्यत्रानृत इति निषेधादृकारस्येव ऌकारस्यापि प्लुतो न स्यादित्यर्थः । इदं सूत्रं कार्यद्वयं वक्ति । तत्कि । अकारादिक्रमं तेषां समानसंज्ञां च । समानं मानं परिमाणं येषां ते समानाः समानशब्दः संज्ञा । अकारादयः संज्ञिन इति । इह प्रत्येकमकारादीनां संज्ञा न समुदायस्य । तस्य युगपल्लक्ष्ये प्रयोगाभावात् समानसंज्ञाप्रदेशाः समानाद्धिर्लोपोधातोरित्यादयः । किंच । एतेषूक्तवक्ष्यमाणेषु सूत्रेषु संधिः संहिता नानुसंधेयो न कर्तव्यः । कस्मात् वक्तुमिच्छाविवक्षा विवक्षा जाताऽस्येति विवक्षितः । वक्तुमिष्टोविवक्षित इति वा । विवक्षितस्य भावो विवक्षितत्वं न विवक्षितत्वं अविवक्षितत्वं तस्मादविवक्षितत्वात् वक्तुरनिष्टत्वात् । तथाहि वाक्ये तु सा विवक्षामपेक्षते इति ॥

तत्त्व०—प्रकृतोपयुक्तमाह अ इ उ ऋ ऌ समानाः अत्र प्राञ्चः षट्पदमिदं । द्विपदत्वे हि पूर्वपदं । पंचवर्णात्मकं तथा च समाहारद्वंद्वः । स च अश्च इश्च उश्च आच आच अइउऋऌ एवं समासे संहिता स्यादिति तथा चोक्तम् । संहितैकपदे नित्या नित्याधातूपसर्गयोः । नित्या समासे वाक्ये तु सा विवक्षामपेक्षत इति समासे वाक्यत्वाभावेन । विवक्षाया असंभवादविवक्षितत्वादित्यादिकमनर्थकं संपद्येत । अतो न द्विपदमित्याहुः । वस्तुतस्तु नैतेषु संधिः सूत्रत्वादित्येव वक्तुमुचितम् । यथा च द्विपदत्वेपि न दोषः । उक्तं च । भो भगो अघो अपूर्वस्य योऽशीति पाणिनिसूत्रेऽसंधिःसौत्र इति भट्टोजिदीक्षितैः । औनिपात इति सूत्रेण संधिविरहात् । अत्राहुः अत्राकारादीनां स्वरूपेणानुकार्येण वार्थस्य सतोप्यविवक्षणान्नामत्वाभावाद्विभक्त्यनुत्पादादसमासेनैकपदत्वाभावात्पंचपदानीति तत्रेदमवधेयम् । पंचपदानीति तावद्व्याहृतम् । विभक्तेरनुत्पादेन पदत्वासंभवाद् विभक्त्यंतंपदमिति पदसंज्ञाविधानात् । किंतु सूत्रत्वादेव विभक्तेर्लुक् । वर्णपरिगणनस्य संज्ञोपयोगित्वेन तत्पूर्वकं संज्ञाविधानमिति दर्शयति । अनेनेति । अमिपूर्व इत्यादाविवार्थद्वयकथनेन विभागः ॥

**मू०—ह्रस्वदीर्घप्लुतभेदाः सवर्णाः ॥ एतेषां ह्रस्वदीर्घप्लुताः सजातीयाः परस्परं सवर्णा भण्यंते ।**

सुबोधिनी—ह्रस्वदीर्घप्लुतभेदाः सवर्णाः । एतेषां अइउऋऌवर्णानां ये भेदा विशेषव्यक्तयो ह्रस्वदीर्घप्लुतरूपाः सजातीयाः समाना चासौ जातिश्च सजातिः सहादित्वात्समानस्य सादेशः । सजातौभवाः सजातीयास्ते मिथः सवर्णसंज्ञका आचार्येण कथ्यंते । ह्रस्वश्च दीर्घश्च प्लुतश्च ते ह्रस्वदीर्घप्लुताः ह्रस्वदीर्घप्लुताश्च ते भेदाश्च ह्रस्वदीर्घप्लुतभेदाः जातिस्था-

**तत्त्व०**—ह्रस्वदीर्घप्लुतभेदा इति । ह्रस्वश्च दीर्घश्च प्लुतश्च तेषां ये भेदा उदात्तादयस्तेषां सवर्णसंज्ञा इत्यर्थः ह्रस्वादिभिर्भेदशब्दस्य कर्मधारयो वा । यत्तु वासुदेवेन ह्रस्वादिभेदांतस्य द्वंद्वं कृत्वा व्याख्यातम् । तदसत् । अनंतरग्रहणस्य वैयर्थ्यप्रसंगात् । एतेषामिति अनंतरोक्तानाम् अ इ उ ऋ ऌवर्णानामेवांगुल्या निर्देशः । समानो वर्णो येषां ते सवर्णा इत्यन्वर्थसंज्ञाश्रयणात्सजातीया इति तथा चाकारस्याकारेणैव सावर्ण्यं न तु विजातीयैरीकारादिभिरिति बोध्यम् । ननु अन्वर्थसंज्ञाबलादेवात्र सवर्णसंज्ञासिद्धौ तद्विधायकं सूत्रं किमर्थमिति चेन्न । संध्यक्षराणामन्वर्थसंज्ञया वर्णसंज्ञा स्यादिति तन्निरासार्थमिदं सूत्रम् । यदि त्वै औ इति पृथङ्निर्देशो ज्ञापकस्तदिदं मंदप्रयोजनम् ।

## मू०—ऋऌवर्णौच ॥ एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः ।

**सुबोधिनी**—ऋऌवर्णौच । जातिस्थानाभ्यां भिन्नत्वेन सावर्ण्याप्राप्तौ विध्यर्थं वचनं । पदांतानां समानानामिति प्रकृतिभावः । एतावपि सवर्णसंज्ञकावाचार्येण कथ्येते । सवर्णसंज्ञाप्रदेशाः सवर्णदीर्घः सहेत्यादयः । एकमात्रो ह्रस्वः । तेषां भेदानाह । मात्राशब्देनाऽक्षिस्पंदनप्रमाणः काल उच्यते । मात्रं त्ववधृतौ स्वार्थे कात्स्न्र्ये मात्रापरिच्छदे ॥ अक्षरावयवे द्रव्ये मानेऽल्पे कर्णभूषणे ॥ काले वृत्ते चेति हेमचन्द्रः । एका मात्रोच्चारणकालो यस्य स एकमात्रो ह्रस्वसंज्ञः कथ्यते । ह्रस्वेति ह्रसतेवा दीर्घापेक्षयेति ह्रस्वः । द्विमात्रोदीर्घः द्वे मात्रे उच्चारणकालो यस्य स द्विमात्रो दीर्घसंज्ञः कथ्यते दृणाति दीर्यते वा मुखमिति दीर्घः । त्रिमात्रः प्लुतसंज्ञः कथ्यते । प्लवते लंघते ह्रस्वदीर्घाविति प्लुतः ॥

**तत्त्व०**—ऋऌवर्णाविति आच आच रलौ तौ चतौ वर्णाविति । यद्वा आच ऌवर्णश्च तौ ननु ऋवर्णऌवर्णावित्यनेनैव ऋवर्णऌवर्णयोः सावर्ण्यादेव ऋकारोपदेशेनैव ऌकारोपदेशे सिद्धे अ इ उ ऋ ऌ समाना इतिसूत्रे ऌकारग्रहणं व्यर्थमिति चेत्सत्यं ऋवर्णऌवर्णयोः सावर्ण्यस्यानित्यत्वज्ञापनाय पृथक् ऌकारग्रहणात् इत्यवधेयम् तत्फलं तु हेक्लृतशिख इत्यत्र गुरोरनृत इत्यनेन प्लुतत्वे कर्त्तव्ये ऋकारपर्युदासेन ऌकारस्य न पर्युदासः । ह्रस्वादिसंज्ञाश्च लोकप्रसिद्धा इत्याह एकमात्र इति मीयते इति मात्रा उच्चारणकालः । एका मात्रा यस्येति विग्रहः एवमन्यदपि ।

## मू०—एऐओऔसंध्यक्षराणि ॥

**सुबोधिनी**—एऐओऔसंध्यक्षराणि । पूर्वपदवाक्यत्वात्पंचपदमिदंसूत्रम् । अत्रापि संध्यभावो विवक्षितत्वात् । इदमपि कार्यद्वयं वक्ति । तत्किम् एकारादिक्रमं संध्यक्षरसंज्ञां च संधौ जातान्यक्षराणि संध्यक्षराणि । संध्यक्षरसंज्ञाप्रदेशाः संध्यक्षराणामित्यादयः ।

**तत्त्वदीपिका**—एऐ ओऔ संध्यक्षराणीति । ननु संधेर्जातान्यक्षराणि संध्यक्षराणीत्यन्वर्थसंज्ञाबलादेव संध्यक्षरसंज्ञासिद्धौ तत्संज्ञाविधायकं सूत्रं व्यर्थमिति चेन्न । यकारादीनामपि संधिजत्वाविशेषेण संध्यक्षरसंज्ञा स्यादिति तन्निरासार्थमिदं सूत्रम् । एषु च भागद्वयसत्वेपि नरसिंहवज्जात्यंतराक्रांतत्वेन न भागकार्यम् तेनाग्ने इदं वायो उदकमित्यत्र सवर्णदीर्घत्वं न अत्र वर्णपरिगणनसंज्ञाविधानरूपकार्यद्वयस्य वृद्धकुमारीवरन्यायेन सिद्धेर्न वाक्यद्वयम् । एवं पूर्वसूत्रेपि बोध्यम् ।

## मू०—उभयेस्वराः ॥ अकारादय एकारादयश्च स्वरा उच्यंते ।

**सुबोधिनी**—उभये स्वराः । उभाववयवौ येषांते उभये उभये तयडटौ संख्याया अवयवे इत्ययट् । स्वरो नासासमीरे स्यान्मध्यमादित्रिकस्वरे ॥ उदात्तादावकारादौ षड्जादौ च [illegible] ॥ १ ॥ [illegible] ह्रस्वदीर्घप्लुतभेदाः एतादृशा

कारादयः एकारादयश्चाचार्येण स्वरसंज्ञकाः कथ्यंते । स्वयं राजंते शोभंते इति स्वराः
दीतावस्मान्नाम्नीति डप्रत्ययः । एकाकिनोऽपि प्रायोऽर्थप्रतिपादने समर्था इत्यर्थः । स्वरा-
बहुवचनं तु प्रत्येकं संज्ञाविधानार्थं ज्ञेयम् । ननु उभये इति ग्रहणं व्यर्थम् । अकारा-
ामेकारादीनां चानुवृत्त्यैव लब्धत्वात् । उच्यते । अनन्तरस्य विधिर्वा प्रतिषेधो वेति
योऽनेन ज्ञाप्यते अनन्तरत्वादेकारादीनामेवानुवृत्तिः स्यात् । नत्वकारादीनामंतरितत्वा-
त । स्वरसंज्ञाप्रदेशा इयं स्वरे इत्यादयः ॥

तत्त्व०–उभय इति । ननु ते स्वरा इत्येव किमिति न सूत्रितम् । तच्छब्दस्य पूर्वपरामर्शित्वेनाकारादीनामेव
ादिति चेन्न । अनंतरोक्तसंध्यक्षराणामेव तच्छब्देन परामर्शः स्यादिति शंकाया निवृत्तये उभयग्रहणस्याव-
त्वात् । यद्वा । स्वरा इत्येवास्तु आकारादीनामनुवृत्त्यैव लाभादिति चेन्न । उक्तयुक्तेः यदि तूत्तरसूत्रेऽवर्ण-
सिनाकाराद्यनुवृत्तिस्तदोभयग्रहणे सर्वादिप्रयोजनार्थमेवेति ध्येयम् । बहुवचनं प्रत्येकं संज्ञार्थमपि त्यक्तुमुचित-
ायस्य युगपल्लक्ष्ये प्रयोगाभावादेव तल्लाभात् एवं पूर्वोत्तरसूत्रेष्वपि बोध्यम् । यत्तु आकारादयः पंच चत्वार
रादय इति तन्न । अकारादिषु न्यूनाधिकसंख्याया असंभवने तद्ग्रहणस्यानर्थकत्वात् ।

## मू०–अवर्जानामिनः ॥ अवर्णवर्जाः स्वरा नामिन उच्यंते ।

सुबोधिनी–अवर्जानामिनः । अश्च आश्च तयोः समाहारः अमिति केचित्तन्मंदम् ।
त्यनेनाऽत्वजातेरेवाभिमतत्वात् । अं वर्जयतीत्यवर्जाः । वृजिवर्जने चुरादिरस्मात्कार्येऽ
यण्प्रत्ययः । पूर्वसूत्रादुभयेत्यनुवर्तनीयम् । अवर्णवर्जा उभये अकारादय एकारादयश्च
ा नामिसंज्ञका आचार्येण कथ्यंते । नमनं नामः भावे घञ् नामो विद्यतेऽस्यास्तीति
ी । नामिसंज्ञाप्रदेशा नामिनोर इत्यादयः । किं च ह्रस्वदीर्घप्लुतरूपः स्वरः प्रत्येकमुदात्ता-
दिन त्रिधाऽस्ति । ह्रस्वस्वरउदात्तः १ ह्रस्वस्वरोऽनुदात्तः २ ह्रस्वस्वरः स्वरितः ३
स्वर उदात्तः १ दीर्घस्वरोऽनुदात्तः २ दीर्घस्वरः स्वरितः ३ प्लुतस्वर उदात्तः १ प्लुतः
ोऽनुदात्तः २ प्लुतस्वरः स्वरितः ३ एवं नवविधोपि प्रत्येकमनुनासिकाननुनासिकभेदाभ्यां
ः स द्विधाऽस्ति । तदित्थम् । अ इ उ ऋ एषां चतुर्णां वर्णानां प्रत्येकमष्टादशभेदाः
ः । ऌवर्णस्य द्वादशभेदास्तस्यदीर्घाभावात् । संध्यक्षराणामपि प्रत्येकं द्वादशभेदास्तेषां
वाभावात् अइत्यष्टादशानां संज्ञा । तथैवेकारोकारौ । ऋकारस्त्रिंशतः संज्ञा ऋऌवर्णयोः
ण्यात् । एवं ऌकारेपि । एइति द्वादशानां संज्ञा । तथैकारौकारः । एदैतोरोदौतोश्च
मिथः सावर्ण्यं भिन्नजातित्वात् ।

तत्त्व०–अवर्जानामिन इति । अं वर्जयतीत्यवर्जाः कार्येण् । ननु यौनामिन इत्येव किमिति नोक्तमौ-
त इति वत् इकारमारभ्य औकारांतस्य प्रत्याहारेण ग्रहणादवर्णवर्जानां लाभात् न च यकारौकारयोः संज्ञा
निरासाय तदिति चेन्न पूर्वसूत्रोक्तस्वरानुवृत्त्या तन्निरासात् इति चेत्सत्यम् । नामि संज्ञायाः पूर्वं प्रत्याहार-
या अनुक्तत्वेन यावित्यनेनेकाराद्यौकारांतस्वरबोधस्यानुदयात् । यदि तु व्याकरणस्यानादितामाश्रित्य प्रत्या-
देसिद्धिस्तदैवमेव न्याय्यमित्यलं पल्लवितेन ।

## मू०–हयवरल ॥ ञणनङम ॥ झढधघभ ॥ जडदगब ॥ खफछठथ ॥ चटतकप ॥ शषस ॥

सुबोधिनी–हयवरल १ ञणनङम २ झढधघभ ३ जडदगब ४ खफछठथ ५ चटतकप ६

णिसंति । आद्यंताभ्यामित्यनेनैकवाक्यत्वात् । एषां वर्णानामस्याविवक्षितत्वादेभ्यो विभक्तेनुत्पत्तिर्ज्ञेया । किंच सवर्णा इत्यनुवर्त्य वाक्यभेदेन व्याख्यातव्यम् । तद्यथा । भिन्नजातीयाअप्येते वर्णास्तुल्यस्थानप्रयत्नाः संतः सवर्णा आचार्येण कथ्यंत इत्यर्थः । हकारादिष्वकार उच्चारणार्थः । नतु प्रयोजनार्थः । ननु रेफस्य यप्रत्याहारांतर्भावात् कुंडं रथेनेत्यादौ वापदान्तस्येति पक्षे रेफः स्यात् भद्र्‍हृदइत्यत्र च रहाद्यपोद्विरिति द्वित्वं उच्यते भद्र्‍हृदइत्यत्र रहाद्यपोद्विरित्यनेन रस्य द्वित्वे कृते रिलोपे दीर्घश्चेति रलोपे च पूर्वस्य हकारस्य स्वरत्वाभावान्नदीर्घ इति । कुंडं रथेनेत्यत्र त्वनुनासिकस्यानुस्वारस्य स्थानेऽनुनासिका एव यमा भवंति इत्यर्थकथनात् रेफस्यानुनासिकस्यानुस्वारस्य रकारो न भवतीत्यर्थः ॥

**तत्त्वदीपिका**—हयवरलेत्यादि । हकारादिष्वकार उच्चारणार्थः ।

**मू०—आद्यंताभ्याम् ॥ आद्यंतौ वर्णौ मध्यगानामाभ्यां संहितानां सञ्ज्ञाः स्युः । अव इल जब गभ चप एवमन्येपि ।**

**सुबोधिनी**—आद्यंताभ्यां । संज्ञासूत्रमेतत् । आदिश्च अंतश्च आद्यंतौ ताभ्यांकृत्वा मध्यस्था अक्षरा ग्राह्या इत्युक्तेः । आद्यंतवर्णरूपा मध्यगानां संज्ञा भवतीत्याद्यंतयोरप्राप्तायां तत्र वृत्त्याऽन्यतरस्य ग्रहणमाश्रित्य व्याख्येयम् । तद्यथा । आद्यंताभ्यां सहितानामिति । किंच आद्यंतौ तावदवयवौ ताभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्ववतरंती संज्ञा मध्यगेषु विश्राम्यति नत्वाद्यंतयोः । संज्ञास्वरूपांतर्भावेन तयोः पारार्थ्यनिर्णयादित्याशयेनाह । आभ्यां सहितानामाद्यंताभ्यांवर्णाभ्यां सहितानां मध्यगानामाद्यंतवर्णरूपाः संज्ञा भवंतीत्यर्थः । एतत्सूत्रेण कृताः संज्ञाः प्रत्याहारशब्देन व्यवह्रियंते । प्रत्याह्रियन्ते संक्षिप्यंते वर्णा यत्र स प्रत्याहारः । साधनाधारयोर्युडिति युटि प्राप्ते संज्ञायामकर्तरि चेति अधिकरणे घञ् प्रत्ययः ॥

**तत्त्वदीपिका**—आद्यंताभ्यामिति । आदिश्च अंतश्च आद्यन्तौ आवादेशे वकारस्य व्योर्लोपः । शितिसूत्रस्य छंदस्त्वात्पुनः संधिरित्यभिप्रेत्याह आद्यन्तौ वर्णाविति सांकेतिकं वा पदम् ।

**मू०—कार्यायेत् ॥ कार्यं विधातुमुच्चार्यभागो वर्ण इत्संज्ञो भवति या या संज्ञा सा सा फलवती । यस्येत्संज्ञा तस्य लोपः ।**

**सुबोधिनी**—कार्यायेत् । वर्णानामाद्योच्चारणं द्विधा । कार्यार्थं श्रवणार्थं चेति कार्यं विधातुं कर्तुमुच्चार्यमाण आचार्येण कथ्यमानो वर्ण इत्संज्ञकोस्ति । क्रियते संपाद्यते तत्कार्यं प्रयोजनमित्यर्थः । कार्यार्थो यथा । ङेङसिङस्ङीनांङकारोङितिङितांयडित्यादिकार्यार्थः । श्रवणार्थो यथा । हकारादिष्वकार इति एति गच्छतीतिइत् आशुविनाशीत्यर्थः । तुमोप्रयुक्तस्यकर्मणीत्यनेन कार्यायेति चतुर्थी ॥

**तत्त्वदीपिका**—कार्यायेत् इति । तुमोप्रयुक्तस्य कर्मणीति कर्मणि चतुर्थीत्याशयेनाह कार्यं विधातुमिति यत्तु प्रत्ययाद्यतिरिक्तइति प्रत्ययादयः प्रत्ययागमादेशास्तदतिरिक्त इति । तद्विवरणं च तत्सर्वमापाततः । यत्तु प्रत्ययः परस्य बोधस्तदादिकारणमुत्तमवृद्धवाक्यप्रयोगस्तदतिरिक्त इति तदपि प्रकृतानुपयुक्तत्वादुपेक्षितम् । यद्याग्रहस्तदेत्थं योज्यः प्रत्ययादिषु अतिरिक्तः लौकिकसिद्धप्रयोगोच्चारणादधिक इति कथंचित्प्राचो ग्रंथः । यस्येति । एति गच्छति प्रयोगेन समवैति इण् गतौ अस्मात्क्विपि ह्रस्वस्य पिति कृतीति तुक् । इत् आशु-

**मू०—प्रसक्तादर्शनंलोपः ॥**

**सुबोधिनी**—प्रसक्तादर्शनंलोपः । अदर्शनं सामान्यं लोप इत्यस्यार्थः । प्रसक्तानुच्चारणरूपविशेषस्तु लक्षणया ज्ञातव्यः । प्रसक्तस्य प्रसंगप्राप्तस्य वर्णस्यादर्शनमश्रवणमनुच्चारणं लोपसंज्ञं भवति । लोपसंज्ञाप्रदेशाः हसेपःसेलोंप इत्यादयः । लोपसंज्ञाफलं तु, प्रत्ययलोपेप्रत्ययलक्षणं । न यातीति । प्रसक्तस्येति किं । दधि मध्वित्यादा ह्रस्वस्यपिति कृति तुगितितुग् माभूत् । अस्ति हि तत्र क्विपोऽदर्शनं तच्च लोप इति प्रसक्तविशेषणाभावे प्रत्ययलक्षेणन तुक् स्यादेवेति ॥

**तत्त्वदीपिका**—लोपस्वरूपमाह । प्रसक्तेति प्रसक्तस्य प्रातस्यादर्शनमनुच्चारणं लोप इत्यर्थः । प्रसक्तेति किम् । दधि । अत्रापि क्विपोऽनुच्चारणस्य सत्वात्तस्य लोपत्वे प्रत्ययलक्षणेन तुक् प्रसज्येत ।

**मू०—प्रत्ययादर्शनंलुक् ॥**

**सुबोधिनी**—प्रत्ययादर्शनंलुक् । प्रत्ययस्यादर्शनमश्रवणमनुच्चारणं लुक् संज्ञं भवति । लुगिति पूर्वाचार्यसंज्ञा । लुक्संज्ञाप्रदेशाः । नपुंसकात्स्यमोर्लुगित्यादयः । लुक्संज्ञाफलं तु लुकि न तन्निमित्तामिति ॥

**मू०—वर्णविरोधो लोपश् ॥**

**सुबोधिनी**—वर्णविरोधोलोपश् । स्वानुच्चारणप्रवृत्त्यनंतरं कार्यांतरप्रवृत्तिप्रतिबंधको वर्णविरोधो लोपश्संज्ञो भवति । वर्णं विरुणद्धीति वर्णविरोधः । लोपश्संज्ञाप्रदेशाः य्वोर्लोपश्वापदांत इत्यादयः । लोपश्संज्ञाफलं तु, लोपशि पुनर्न संधिरिति । नस्य लोपशि न विभक्तिकार्यमिति च ॥

**तत्त्वदीपिका**—लोपश्स्वरूपमाह । वर्णेति । वर्णं विरुणद्धीति स तथा स्वप्रवृत्त्यनंतरं कार्यांतरप्रवृत्तिप्रतिबंधकरूपमुच्चारणमित्यर्थः ।

**मू०—स्वरानंतरिताहसाः संयोगः ॥**

**सुबोधिनी**—स्वरानंतरिताहसाःसंयोगः। अंतर्मध्यमगुरित्यंतरिताः नांतरिताः अनंतरिताः स्वरा अनंतरिता येषां ते स्वरानंतरिताः । अथवा अन्तरमवकाशो जातो येषां तेंतरिताः । तद्भिन्ना अनंतरिताः स्वैरनंतरिताः अव्यवहिताः स्वरानंतरिताः । स्वररहितानां हसानां संयोगसंज्ञा भवतीत्यर्थः । संयुज्यतेऽस्मिन् समुदाये हसा इति संयोगः । तेनात्र समुदाये वाक्यपरिसमाप्तिर्न तु गुणवृद्ध्यादिसंज्ञावत् प्रत्येकम् । यदि प्रत्येकं स्यात् तर्हि दृषद्भिर्भवतीत्यत्र बकारसंनिधौ दकारस्य संयोगत्वात् संयोगान्तस्य लोपः स्यात् । स्वरानंतरिता इति किं । पनसमित्यत्राकारेण व्यवधानेपि सकारमकारयोः संयोगसंज्ञा स्यात्तदा स्कोराद्योश्चेत्यनेन सस्य लोपः स्यादिति । हसा इतिबहुवचनं तेन द्वयोरपि संयोगसंज्ञाऽस्ति अतः शिक्षशिक्षणे अस्माद् गुरोर्हसादित्यङ्प्रत्यये शिक्षेति सिद्ध्यति ॥

**तत्त्व०**—स्वरानंतरिताइति । अंतरमितः अन्तरितः न अंतरितः अनंतरितः स्वरोऽनंतरितो येषांते अत्र स्वरशब्द इति शब्दश्च व्यर्थः अनन्तरा इत्यनेनैव तद्बोधात् । तथा हि । न अन्तरं छिद्रं येषांते हसाः संयोगः छिद्रं तु विजातीयस्वरस्य प्रवेशेन भवति । संयोग इत्येक वचनं तु वृक्षावनमिति तत्समुदायस्य संज्ञालाभार्थम्।

सुबोधिनी—कुचुटुतुपुवर्गाः । एषूकार उदित् सवर्णं गृह्णाति नतु वर्णमात्रमिति परिभाषाज्ञापनार्थः । अस्यार्थस्त्वयम् । उत् उकार इत् यस्य स उदित्स्वसवर्णस्य ग्राहको भवति तेन चोःकुरित्युक्ते पंचानां ग्रहणमस्ति । ननु कादीनां पंचानां सवर्णसंज्ञा केनेति चेच्छृणु अस्मादेवोदित्करणात् ज्ञापकाज्जानीहि त एते वर्गसंज्ञाः स्युः । वर्गसंज्ञाप्रयोजनं तु ' वर्ग्यो वर्ग्येण सवर्ण, इति ॥

तत्त्व०—कुचुटुतुपु इति । आकारात्पंचमो वर्णस्तमाहुः पंचकग्रहे । उकारस्तत्र विख्यातो नान्यो भवितुमर्हति ।

**मू०—अरेदोनामिनोगुणाः ॥ अर् ए ओ गुणसंज्ञकाः ते च नामि स्थाने भवंति ।**

सुबोधिनी—अरेदोनामिनोगुणाः। अर्च एच्च ओश्च एषां समाहारः अरेदो समाहारस्यैकत्वादेकत्वे द्विगुद्वंद्वाविति नपुंसकत्वेपि ह्स्वो न भवत्यत्र संज्ञापूर्वको विधिरनित्य इत्युक्तत्वात् अर्एओइति नामिन इति षष्ठ्यंतमस्ति नामिनः स्थाने गुणो भवतीत्यर्थः । ननु गायति ग्लायतीत्यादौ संध्यक्षराणां गुणः स्यात् । उच्यते एकारोपदेशसामर्थ्यान्न भवति अन्यथा एकारमेवोपदिशेत् एकारस्यैकारस्य च सत्यसति वा गुणे विशेषो नास्ति । औकारांतस्तु धातुर्नास्ति अस्तुवा औकारोपदेशसामर्थ्यान्न भविष्यतीति नचैवमायादेशोपि न स्यादिति वाच्यम् । यं विधिंप्रत्युपदेशो अनर्थकः स विधिर्बाध्यते यस्य तु विधेर्निमित्तमेव नासौ बाध्यते इति न्यायात् गुणं प्रति हि ऐकारोपदेशोऽनर्थकः ग्लैइत्यस्यापि सुपठत्वात् आयादेशस्य तु निमित्तमेवास्ति अतः परिशेषात् ऋवर्णोवर्णानां स्थाने अर् ए ओ यथाक्रमं गुणसंज्ञका भवंति । तपरत्वं तु, स्पष्टार्थमिति गुणसंज्ञाप्रदेशाः गुणः नूपइत्यादयः ।

तत्त्व०—अरेदो नामिनो गुण इति । विपरीतानिर्देशादकारावधिकात्त्रय एव नामिनो गृह्यंते । अत्र प्राञ्चः नामिषु इ उऋइति त्रयाणामेव ग्रहणं लकारस्यतु सावर्ण्यात् अन्यथा गायतीत्यत्र गुणः स्यादित्याहुः । वस्तुतस्तु गैशब्दइत्यैकारोच्चारणसामर्थ्यादेव गुणोन नच भवतीत्यादावपि गुणो न भवेदिति न भ्रमितव्यं तस्य बभूवेत्यादिषु चरितार्थत्वात् ।

**मू०—आरैऔवृद्धिः ॥ आ आर् ऐ औ वृद्धिसंज्ञाः स्युः ।**

सुबोधिनी—आरैऔवृद्धिः । आश्च आर्च ऐश्च औश्च एषां समाहार औरऔ समाहारस्यैकत्वादेकत्वे द्विगुद्वंद्वाविति नपुंसकत्वेपि ह्स्वोन । संज्ञापूर्वकत्वेन तस्यानित्यत्वात् समासेपि संहिताऽभावोत्र अइकौ च मत्वर्थे इति लिंगात् । अथवा असमासेऽविभक्तिकोयं निर्देशः । तद्भिन्नत्वे सति तत्सदृशकरणमनुकरणम् । अनुकरणात् विभक्तिर्नास्तीति समासाऽभावाच्चत्वारि पदानि एवमरेदोइत्यत्रापि त्रीणि पदानि अकारस्य आवृद्धिः ऋवर्णस्य आर्वृद्धिः इवर्णस्य एकारस्य चैकारो वृद्धिः उवर्णस्य औकारस्य च ओवृद्धिः । एते वृद्धिसंज्ञकाः वृद्धिसंज्ञायाः प्रदेशाः धातोर्नामिन इत्यादयः ।

तत्त्वदीपिका—आरैऔवृद्धिरिति । ननु मास्तु वृद्धिसंज्ञा । आदिस्वरस्य ञ्णित्यारै औ इति सूत्र्यताम् तदेवोत्तरत्राप्यनुवर्त्यतामिति चेन्न । संज्ञापूर्वको विधिरनित्यो यथा स्यादित्येतदर्थं संज्ञाविधानम् तत्फलं तु अभवीदित्यादौ पाक्षिको वृद्ध्यभावइति ।

... संज्ञको भवति ।

सुबोधिनी—अंत्यस्वरादिष्टिः। अंते भवोऽन्त्यः ण्यः। अंत्यश्चासौ स्वरश्चेत्यंत्यस्वरः अंत्य-
र आदिर्यस्य स अंत्यस्वरादिः। स्वराणां मध्येंऽत्यस्वर आदिर्यस्य समुदायस्य स टिसंज्ञो
वति। यत्र तु तदादिरन्यो वर्णो नास्ति तत्र स्वरस्यैवांत्यत्वं व्यपदेशिवद्भावेन भवति।
त्र चैकएव स्वरस्तत्रापि व्यपदेशिवद्भावादंत्यत्वमस्ति। यथा त्यदादिषु व्यपदेशिवद्भावस्तु
किको न्यायः। यथा यस्य बहवः पुत्रास्तस्य तस्मिन् तस्मिन् ज्येष्ठमध्यमकनिष्ठव्यप-
शोऽस्ति यस्य त्वेकः पुत्रस्तस्य ज्येष्ठादिव्यपदेशस्तस्मिन्नेवेति। टिसंज्ञाप्रदेशाः यथा
टेरित्यादयः। सोंत्यस्वर आदिवर्णो यस्य स तदादिवर्ण इति॥

तत्त्वदीपिका—अंत्यस्वरादिरिति। अन्त्यस्वर आदिर्यस्य स तथा। नत्वेवं हलीषेत्यादौ कथं टिसंज्ञा
न्त्यस्वरस्यादित्वाभावादिति चेत्सत्यम्। व्यपदेशिवद्भावेनेति गृहाण।

**मू०—अंत्यात्पूर्वउपधा॥ अंत्याद्वर्णमात्रात्पूर्वो यो वर्णःउपधासंज्ञो भवति।**

सुबोधिनी—अंत्यात्पूर्वउपधा। अन्ते भवोऽन्त्यस्तस्मात् अंत्याद्वर्णात्पूर्वो वर्ण उपधासंज्ञोऽ-
त। वर्ण इति कस्मात् लब्धन्यायात्। तद्यथा अवध्यवधिमद्भावः सजातीयानामेव
वतीत्युत्सर्गः लोके हि अमीषां ब्राह्मणानामंत्यात्पूर्वमानयेत्युक्ते एक एवांत्यादव्यवहितपूर्व
नीयते नतु समुदायः तथेहापि वर्णादव्यवहितः पूर्वो वर्ण एव संज्ञी न तु समुदाय
ति। उपधासंज्ञाप्रदेशाः नोपधाया इत्यादयः॥

तत्त्वदीपिका—अन्त्यात्पूर्व उपधेति। ननु वर्णादिति सूत्रे अनुक्तं कस्माल्लब्धमिति चेन्न पराण्यादिति
पकाद्ग्रहाण। अन्त्यादुपधेत्युक्तेपि पूर्वशब्दस्याक्षेपः संभवति। नच परशब्दस्याक्षेपः संभवति इति वाच्यं
न्त्यत्वभंगप्रसंगात्। नहि परस्मिन्वर्णे सति पूर्वस्य अन्त्यत्वं संभवति एवं सिद्धे यत्पूर्वग्रहणं तदव्यवहितपूर्वस्यैव
हणार्थम्।

**मू०—ह्रस्वोलघुः॥**

सुबोधिनी—ह्रस्वोलघुः। ह्रस्वस्वरो लघुसंज्ञो भवति। लघुसंज्ञाप्रदेशाः उपधाया लघो-
रित्यादयः॥

**मू०—विसर्गानुस्वारसंयोगपरोगुरुर्दीर्घश्च॥**

सुबोधिनी—विसर्गानुस्वारसंयोगपरोगुरुर्दीर्घश्च। विसर्गाश्चानुस्वारश्च संयोगश्च ते विसर्गा-
नुस्वारसंयोगाः विसर्गानुस्वारसंयोगाः परे यस्माद्ध्रस्वात्स विसर्गानुस्वारसंयोगपरो ह्रस्वो
गुरुसंज्ञः। दीर्घश्च गुरुसंज्ञः॥

तत्त्वदीपिका—विसर्गेति। विसर्गश्चअनुस्वारश्चसंयोगश्चते परे यस्य स तथा। वस्तुतस्तु विसर्गानु-
स्वारयोरत्रानुपयोगात्संयोग पर इत्येव वक्तुमुचितम्।

**मू०—मुखनासिकावचनोनुनासिकः॥**

सुबोधिनी—मुखनासिकावचनोऽनुनासिकः। मुखेन सहिता नासिका मुखनासिका
शाकपार्थिवादित्वान्मध्यमपदलोपः। उच्यतेसाविति वचनः युट्। मुखनासिकया वचनः
यस्य स मुखनासिकावचनो वर्णोऽनुनासिकसंज्ञो भवति॥

विग्रहे प्राण्यंगत्वादेकवद्भावे मुखनासिकमिति स्यात् । वस्तुतस्तु एकवद्भावेपि न क्षतिः आङ्प्रश्लेषेण तथा सिद्धेः मुखनासिकावचनमस्यास्तीति सः तथा अइकौ मत्वर्थे इति अ प्रत्ययः ।

## मू०—विभक्त्यंतंपदम् ॥

**सुबोधिनी**—विभक्त्यंतंपदम् । विभक्तिरंते यस्य तद्विभक्त्यंतं पदसंज्ञमस्ति । पद्यतेऽनेनेति पदम् । विभक्त्यंतमित्यंतग्रहणात् संज्ञाविधौ प्रत्ययग्रहणे तदंतग्रहणं नास्तीति ज्ञाप्यते ॥

**तत्त्वदीपिका**—विभक्त्यन्तमिति । विभक्तिरन्ते यस्य तत् ।

## मू०—तपरः ॥ स्वसमानकालस्य सवर्णस्य ग्राहकः ।

**सुबोधिनी**—तपरः । स्वसमानकालस्य सवर्णस्य ग्राहकस्तकारः परो यस्मात्स तपरः । तकारात्परो यः स तपरश्चेति । तत्रादिनोभयं विवक्षितं । अत्र उच्चार्यमाणस्तपरः स्वसमानकालस्य सवर्णस्यैव संज्ञा भवति । स्वेनात्मना सह समानस्तुल्यकाल उच्चारणकालो यस्य स स्वसमानकालस्तस्येति । तेनादिदित्यादयः षण्णां षण्णां संज्ञा । ऌदिति द्वादशानां संज्ञा ह्रस्वतपरस्तु ह्रस्वभेदानेव गृह्णाति । दीर्घतपरस्तु दीर्घभेदानेव गृह्णाति नान्यानित्यर्थः ॥

**तत्त्वदीपिका**—तपर इति । तः परो यस्मात्तात्परश्च तपरः यत्तु संध्युपयोगीति कैश्चिदुक्तम् तन्न संधिभिन्नोपयोगितया संकोचे मानाभावात् । अथवा संधिपदमुपलक्षकम् ।

## मू०—विरामोवसानं ॥ वर्णानामभावोवसानसंज्ञः स्यात् ॥ ॥ इतिसंज्ञाप्रकरणम् ॥ ॥

**सुबोधिनी**—( कादयोमावसानाःस्पर्शाः ) लोकप्रसिद्धपाठापेक्षमिदं सूत्रे मावसानत्वायोगात् कादयः पंचविंशतिवर्णाः स्पर्शसंज्ञकाः संति । ( ञमङणनाअनुनासिकाः ) एते पञ्च वर्णा अनुनासिकसंज्ञकाः संति । नासिकामनुगता इत्यनुनासिकाः । (यरलवाअंतस्थाः ।) एते चत्वारो वर्णा अंतस्थसंज्ञकाः संति ( शषसहाऊष्माणः ) । एते चत्वारो वर्णा ऊष्मसंज्ञकाः संति । ≍ कइति ≍ पइति कपाभ्यां प्रागर्धविसर्गसदृशौ जिह्वामूलीयोपध्मानीयसंज्ञकौ भवतः । अर्द्धविसर्गसादृश्यमुच्चारणे लेखने च बोध्यम् । अंइतिअः इति स्वरात्परावनुस्वारविसर्गसंज्ञकौ भवतः। (अकुहविसर्जनीयानांकंठः) एषामष्टानां वर्णानामुत्पत्तेःस्थानं कण्ठोऽस्ति। द्वंद्वसमासो बोध्यः सर्वत्र । (इचुयशानांतालु) एषामष्टानामुत्पत्तेः स्थानं तालु भवति । (उपूपध्मानीयानामोष्ठौ) एषां सप्तानामुत्पत्तेः स्थानमोष्ठौ भवतः । ( ऋटुरषाणांमूर्धा ) । एषामष्टानामुत्पत्तेः स्थानं मूर्द्धा मस्तकोऽस्ति । (ऌतुलसानांदन्ताः) एषामष्टानामुत्पत्तेः स्थानं दन्ताः संति ।(एदैतोः कंठतालु)। इत्यादौ तपरत्वमसंदेहार्थकम् । न स्वसमानकालसवर्णग्रहणार्थं । तेन प्लुतस्यापि ग्रहणमत्र भवति । एकारैकारयोरुत्पत्तेः स्थानं कंठश्च तालु च कंठतालु भवति प्राणितूर्यसेनांगानामित्येकवद्भावः । ( ओदौतोःकंठोष्ठं ) तपरत्वमसंदेहार्थम् । अनयोरुत्पत्तेः स्थानं कंठश्च ओष्ठौ च कंठोष्ठमस्ति प्राण्यंगत्वादेकवद्भावः । (वकारस्यदंतोष्ठं) । वस्योत्पत्तेः स्थानं दंताश्च ओष्ठौ च दंतोष्ठमस्ति । ओत्वोष्ठयोःसमासेवेत्योकारः । (जिह्वामूलीयस्य जिह्वामूलं । ) जिह्वामूलीयवर्णस्य जिह्वाया मूलमुत्पत्तेः स्थानमस्ति । ( नासिकानुस्वारस्य ) । अनुस्वारस्योत्पत्तेः स्थानं नासिकास्ति । हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् । औरस्यं तं विजानीयाः कण्ठ्यमाहुरसंयुतम् ॥ तं हकारमुरसि भवमुरस्यं भवार्थे ण्यः णितोवेति न

वृद्धिः । त्वं विजानीया बुद्ध्या । कीदृशं तं । पंचमैर्ञमङणनैर्युक्तम् । पुनः कीदृशं तं । अंतस्थाभिर्यरलवैः संयुतं मिलितं । पंचमैरसंयुतमंतस्थाभिश्चासंयुक्तं हकारमाचार्याः कंठे- कंठ्यं कण्ठस्थानोद्भवमाहुर्ब्रुवंति १ वर्णानामुत्पत्तेरष्टौ स्थानानि संति । तद्यथा । अष्टौस्थानानिवर्णानामुरःकण्ठःशिरस्तथा । जिह्वामूलञ्चदन्ताश्च नासिकोष्ठौचतालुच । २ मातृकायामेवमनेन प्रकारेण द्विपंचाशद्वर्णा आचार्येणोदाहृता दर्शिताः । ते के । त्रयस्त्रिंशद्व्यंजनानीत्यादयः ४ ॥ इति स्थानानि ॥ प्रयत्नो द्विधा । आभ्यंतरो बाह्यश्च । आभ्यंतरः पंचधा । तद्यथा । स्पर्शानां स्पृष्टप्रयत्नम् ।१। अंतस्थानामीषत्स्पृष्टं प्रयत्नम् २ स्वराणां विवृतं प्रयत्नम् ३ । ऊष्मणामीषद्विवृतं प्रयत्नम् ४ । ह्रस्वस्याऽकारस्य संवृतं प्रयत्नम् ५ । बाह्यस्त्वष्टधा । ≍क ≍पविसर्गशषसानां विवारः श्वासोऽघोषश्च ३ प्रयत्नः । हशानां संवारो नादो घोषश्च६ प्रयत्नः । वर्गाणां प्रथमतृतीयपंचमानामंतस्थानां चाल्पप्राणः ७ प्रयत्नः । वर्गाणां द्वितीयचतुर्थानामूष्मणां महाप्राणः ८ प्रयत्नः ॥ इतिप्रयत्नाः ॥ विरामोऽवसानं । विरम्यतेऽनेनेतिविरामः । बाहुलकात्करणे घञ् । यदुच्चारणोत्तरं वर्णांतरं नोच्चार्यते सोंत्यवर्णो विरामोऽवसानसंज्ञको भवतीत्यर्थः । सम्यक्ज्ञायते शब्दादिव्यवहारो यया सा संज्ञा ॥ इतिसंज्ञाप्रकरणम्॥

( अथ परिभाषा ) षष्ठीनिर्दिष्टस्यादेशस्तदंतस्य ज्ञेयः । स्थानषष्ठ्या निर्दिष्टस्य शब्दस्य य आदेश उच्यते स आदेशोंऽत्यस्य वर्णस्य स्थाने भवतीत्यर्थः । ऐसख्युरित्यैकारः सखिशब्दस्यांतस्येकारस्य भवति । स्थानषष्ठीति किम् । कृत इति इडागमस्तृप्रत्ययस्य ऋवर्णात्पूर्वो मा भूदिति । जश्शसोः शिरित्यादीनां शित्त्वं परिभाषां ज्ञापयति । तद्यथा । तत्रहि शित्त्वमंत्यादेशं बाधित्वा सर्वादेशो यथा स्यादित्येतदर्थं कृतं यदि षष्ठीनिर्दिष्टस्यादेशोंत्यस्य नस्यात्तर्हीतरेणापि शित्त्वं सर्वादेशः सिद्धः किं तेनेति व्यर्थेन सता शित्त्वेन ज्ञापितेपि ङिदंतस्य वक्तव्यः । ङिदादेशोप्यंतस्य स्याद्गुरुः शिच्च । सर्वस्येत्यस्यापवादोयम् ॥ त्रेरयङ्- इत्ययङादेशांत्यस्येकारस्य भवति । त्रयाणां अयङ् । असुङादीनां ङित्त्वेन ज्ञापितेयम् । ङित्त्वस्य फलांतरादर्शनात् । गुरुः शिच्च सर्वस्यअनेकवर्ण आदेशः शिदादेशश्च सर्वस्य स्यात् षष्ठीनिर्दिष्टस्येत्यस्यापवादोयम् ॥ अनटौसेरित्यवादेशस्त्रिवर्णात्मको गुरुरस्ति स सर्वस्येदमः स्थाने भवति । यथा अनेनेति जश्शसोः शिरिति शिदादेशः । सर्वस्य जसः शसश्च स्थाने भवति । यथा वारिणीति । उच्चारितप्रध्वंसिनोऽनुबंधाः स्मर्यमाणाः संत एव कार्यं निर्वाहयंतीति । ततोनुबंधकृतमनेकवर्णत्वं न स्वीक्रियतेऽत्र संध्यक्षराणि पराणीत्यादि निर्देशेन शिदंशे ज्ञाप्यते इयं परिभाषा । तथाहि । जश्शसोः शिश्चेत् सर्वस्य न स्यात्तदोक्तनिर्देशोऽनुपपन्नः स्यादिति ॥ साधनाधारयोर्युट् कारकाक्रियायुक्ते इत्यादिनिर्देशेनानेकवर्णांशे ज्ञाप्यते इयम् ॥ टित्कितावाद्यंतयोर्वक्तव्यौ टित्कितौ यस्योक्तौ तस्य क्रमादाद्यंताऽवयवौ भवतः । सिसतासीस्यपामिडितीट् । स्यादीनामाद्यवयवोभवति । अभविष्टेति । रातोऽपुगिति पुक् आत इत्यस्यांतावयवो भवति । यापयतीति । अन्यार्थटित्किरित्वयं परिभाषा न प्रवर्तते । यथा । अटाविति टकारस्य ष्टित इतीप् प्रयोजनमस्ति । कुरुचरीति यक् । चतुर्ष्विति ककारस्य गुणाप्रवृत्तिः प्रयोजनमस्ति भूयते इति । प्रत्ययविधानेयं प्रवर्तते इति । वा टिदंशे तस्मादित्यत्रातः इति स्मट् । रः संख्याया इत्यत्र यङ् । नवानामित्यत्र नुट् । किदंशेतुकार्यायेत्यत्र ङेऽक् इत्यक् । ऐसख्युरित्यत्र ऋगृङे इत्यृक् ॥ वर्तमाने इत्यत्र पुगानेत इति मगिमां परिभाषां ...

योंत्यस्वरस्तस्मात्परस्तस्यैवांतावयवोमित्स्यात् नुमयमइति नुमः पूर्वानात्वान्नोपधाया इति दीर्घः सिद्ध्यति । कुलानि यशांसीति । नुमः परादित्वेतु नोपधाया इति दीर्घो न स्यात् । वारिणे इत्यादौङितीत्येकारश्च स्यादिति अस्याः संध्यक्षराणीति निर्देशो ज्ञापकः । सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णांतरेणाऽव्यवहितस्य पूर्वस्यैव वक्तव्यम् । नियमार्थेयम् ॥ इयंस्वरे इत्यवरच्चरे इति भावेसप्तमी । अश्रूयमाणक्रियात्वाच्चांतरंगस्यास्त्यर्थस्य लोपो भवति । नस्करे सति यकारो भवतीत्यर्थः । व्यवहितेऽव्यवहितेचप्राप्तमव्यवहिते एवेति पूर्वस्य परस्य च प्राप्तंपूर्वस्यैवेति च नियम्यते । पूर्वस्येतिकिं । ननु इदमत्रेकारस्यमाभूत् । अव्यवहितस्येतिकिं । अग्निचित्रेत्यत्र सांतरस्य माभूत् अस्या ष्वादेः त्रणः लित्पुषादेः सखिपत्योदित्यां निर्देशो ज्ञापकः ॥ पंचमीनिर्देशेन क्रियमाणं कार्यमव्यवहितस्य वक्तव्यम् । उदः स्थास्तंभोः सलोपः । इत्यत्रोदइति पंचमीनिर्देशेन क्रियमाणोलोपः सोऽव्यवहितस्य परस्य स्थास्तंभोः सकारस्य भवति । उत्थानं उत्तंभनमिति । अव्यवहिस्येतिकिं । उत्संस्थानं उत्स्तंभनमित्यादौ मा भूत् । परस्येति किं । अस्था उदासने स्तंभ उद्गच्छेत्यत्र माभूत् । अस्याज्ञापकः सनपुंसकं सधातुरित्यादिनिर्देशः । तत्र हि सैषादिति विसर्गलोपः कुतोऽ कुतो ज्ञाप्यते ॥ ह्रस्वदीर्घप्लुतशब्दैर्यत्र स्वरे विधीयते तत्र स्वरेति षष्ठ्यंतं पदमुपतिष्ठते । षष्ठीनिर्दिष्टस्येत्यस्य नायमपवादः । किं तु तच्छेष एव । स्वरस्येति षष्ठ्यंतपदं सति संभवे सामानाधिकरण्येनैव संबद्ध्यते न वैयधिकरण्येन । तेन नपुंसकस्येत्यत्र स्वरांतस्यैव नाम्नो ह्रस्वो भवति । सोमपमिति । नेह सुवाक् ब्राह्मणकुलं स्वरांतत्वाभावान्नह्रस्व इत्यर्थः ॥ शमां दीर्घइत्यत्र तु सामानाधिकरणस्यासंभवात्शमादीनांस्वरस्येति संबद्ध्यते । तेन शाम्यतीत्यादिसिद्धम् । सेदीर्घ इत्यत्र स्वरांतस्य धातोर्दीर्घः। संजिगीषतीति । नेह । बिभित्सतीति ॥ दूरादाह्वाने टेःप्लुत इत्यत्र सामानाधिकरण्यस्य संभवेपि टेग्रहणसामर्थ्यात् टेरवयवस्य प्लुतो भवति । आयुष्मान् एधीन्द्रवर्मन् । ज्ञापकसिद्धेयम् । तथाहि । यजां यवराणां रुदादेश्चतुर्णामित्यत्र नामीति दीर्घस्य प्रवृत्त्यप्रवृत्तिभ्यां स्वरांतेषु नामीति दीर्घो भवति न हसांतेषु इति ज्ञापितम् ॥ एकदेशानुमितिद्वारा ह्रस्वप्लुतयोरप्येवम् ॥ वर्णानां प्रसंगे सति सदृशतम आदेशो वक्तव्यः । सादृश्यं चतुर्विधमस्ति स्थानार्थगुणप्रमाणभेदात् । स्थानतो यथा । दध्यानयेत्यत्र तालुस्थानस्येकारस्य तालुस्थानो यकारः । अर्थतो यथा । रूपवती भार्या यस्येत्यत्र पुंवद्वेत्यनेन पूर्वपदस्य स्थानेऽतिदिश्यमानः पुंशब्दो रूपवत्त्ववाचिने रूपवतीशब्दस्य स्थाने तदर्थवाची एव रूपवच्छब्दो भवतीत्यर्थः। गुणतो यथा। वाग्घरिरित्यत्र घोषवतो नावदतो महाप्राणस्य संवारवतो हस्य तादृशो वर्गचतुर्थो घकारो भवतीत्यर्थः । प्रमाणतो यथा। अमुं अमू अमून् इत्यत्र मादूइत्यनेन पूर्वपदस्यस्थाने ह्रस्वस्य ह्रस्वोदीर्घस्य दीर्घ उवर्णो भवतीत्यर्थः । न्यायसिद्धेयम् । तथाहि । सभायामास्यतामित्युक्ते हि पंडिताः पण्डितैः सहाऽऽसते शूराः शूरैः कवयः कविभिर्नतु संकरेण । किं च गवां संघं प्रति गौर्धावति। अश्वोऽश्वानामित्यादिव्यवस्था तिर्यक्ष्वपि दृश्यते लोपशि पुनर्नासंधिर्वक्तव्यः । लोपशि कृते सति सांधिर्नभवति । यथा त आगताः ॥ नस्य लोपशि तु संधिर्वक्तव्यः । श्वादेरिति निर्देशात् यथाराजाश्वः । नस्य लोपशि न विभक्तिकार्यम् । पञ्चस्विति निर्देशात् ॥ किलात्षःस इति षत्वं तु भवत्येव तस्य वर्णमात्राश्रितत्वात् । यथा पथिषु । अस्या ज्ञापक आचारउपमानात्

अप्रधानमात्मांतरस्य रूपस्य ग्राहकं भवति। स्वस्य रूपस्य चेत्यर्थः ॥ स्वरादइत्यत्र धातोरिति विशेष्य स्वरादितिविशेषणम् तदंतग्राहकं भवति। स्वरांताद्धातोरप्रत्ययो भवतीति स्वस्य रूपस्य च ग्राहकं स्वररूपाद्धातोश्वाऽप्रत्यय इति च यः अप अस्यां ज्ञापकोतिशये ह्रसादे अन्वये नाम्नामित्यादिनिर्देशः । नह्यत्र तदंतविधिंविना स्वराद इति विधीयमानोऽप्रत्ययः शीङो भवेत् । स्वरग्रहणं विना च इधातोरप्रत्ययो न लभ्येतेति इयं परिभाषा ॥ यदादेशस्तद्भवति नतु वर्णमात्रविधौ आदेशे कृते स्वरूपभेदात् । स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते ! आदेशः स्थानिवद्भवति । यथा लक्ष्म्यामित्यत्र ङेरामादेशे कृते तस्यामो ङित्वात् । ङितामडित्यट् भवति वर्णमात्रविधौ स्थानिवद्भावो न भवति । वर्णश्च स्थान्यवयवएवात्र गृह्यते । यश्च वर्णमात्रेण विधिः यश्च वर्णमात्रात् परस्य विधिर्यश्च वर्णमात्रं स विधिर्यस्य वर्णमात्रे विधिस्तत्र मा भूत् । तत्र वर्णमात्रेण विधौ यथा । व्यूढोरस्केनेत्यत्र सकारस्य स्थानिवत्त्वेन विसर्गत्वमाश्रित्यावकुप्वंतरेणीति णत्वं प्राप्तमिति तन्न भवति । वर्णमात्रात्परस्य यथा । द्यौरित्यत्र दिव औरित्यौकारस्य स्थानिवत्त्वेन पंथा इत्यत्रासावित्याकारस्य स्थानिवत्त्वेन च हसत्वमाश्रित्य हसेप इति सिलोपो न भवतीति । वर्णमात्रस्य विधौ यथा । द्युकाम इत्यत्र दिवस उरस इत्युकारस्य स्थानिवत्त्वेन यवयोर्वसे हकारे च लोपो न भवतीति। वर्णमात्रे विधौ यथा क इष्ट इत्यत्र यज देवपूजादौ धातोः क्तप्रत्यये परतः संप्रसारणस्य स्थानिवत्त्वेन यकारमाश्रित्य हवे इत्युकारो न भवतीति क्रियायां क्रियामित्यादिनिर्देशो ज्ञापकः ॥

तत्त्वदीपिका—श्रीविद्यानगरस्थायिलोकेशंकरशर्म्मणा । विहितायां हि टीकायां संज्ञासंधिरगात्सुखम् ॥

इतिसंज्ञासंधिविवरणम् ।

---

मू०—इयंस्वरे ॥ इवर्णो यत्वमाप्यते स्वरे परे ।

सुबोधिनी—इयंस्वरे । इत्यनेन इत्वजातिर्निर्दिश्यते न तु ह्रस्वव्यक्तिरेव प्लुत इति निषेधसामर्थ्यात् । यमिति द्वितीयांतं कर्म । तस्य योग्यत्वात् । प्राप्नोतीत्यस्याध्याहारः कर्तव्यः इ इति क्लीबे कर्तृपदमस्ति । अथ यमिति प्रथमांतं क्लीबे अकारउच्चारणार्थः तदा सत्तार्थवाचकम् क्रियापदमध्याहार्यमिति । स्वरे इति किम् दधि पश्य । स्थानी आदेशो निमित्तं चेति त्रयं सर्वत्र बोध्यम् । किंच अर्थवद्ग्रहणे नानर्थकस्येति परिभाषया अस्याऽपत्यमिः स्त्रीच ई इत्यत्रैव यकारः स्यात् न तु दध्यानयेत्यादौ । उच्यते स्यादावित्यादिनिर्देशेन तस्यानित्यत्वज्ञापनान्निषेधः । दध्यानयेत्यत्र नामिनः स्वरे इति नुम् न स्यादिस्वरत्वाभावात् दध्यूय इति स्थिते ॥

तत्त्वदीपिका—इयं स्वरइति । इश्चईश्चेति समाहारद्वंद्वे एकवद्भावे नपुंसकत्वे च इति एतेन सांकेतिकत्वानिर्विभक्तिकत्वाशुक्तिः परास्ता । ऋजुमार्गेणसिद्ध्यर्थतोस्य वक्रेण प्रदर्शनायोगात् । अर्थवद्ग्रहणे नानर्थकस्येति परिभाषया केवलाया इव्यक्तेरेव ग्रहणं नतु दध्यादिस्थाया इति नाशंकनीयम् । स्यादावित्यादिनिर्देशेन तस्यानित्यत्वज्ञापनात् । यमिति भावप्रधानो निर्देशः द्व्येकयोरितिवत् इत्याशयेनाह । इवर्णो यत्वमाप्यत इति । ननु इयंस्वरे इत्यत्र इकारग्रहणं किमर्थमिति । उकारादीनां यत्ववारणायेति चेन्न । उवमित्यादि सूत्रप्राबल्यात् नच षडन्नेत्यादौ टकारादीनां यत्वनिषेधार्थं तदिति चेत् । तत्रापि पूर्ववचपाअबेजबाइत्यादिसूत्रप्राबल्यात् अथपचतीत्यत्र चकारस्य तद्वारणायेतिचेत् । ङ्णनो ह्रस्वात् दीर्घादिति सूत्राभ्यां ह्रस्वदीर्घग्रहणमनुवर्त्य ह्रस्वदीर्घयोरेव यत्वविधानात् इति चेत्सत्यम् । चिनद्य्वेत्यादौ पतस्यापि पक्षे ...

नयेत्यत्र स्यादिस्वरत्वाभावान्नामिनः स्वरे इति नुमागमो न । तद्धितस्वरत्वाभावाद्यस्यलोप इति यस्यलोपोपि न । नन्वत्र संयोगांतस्य लोपइत्यनेन यलोपः कथं न स्यादिति चेत्सत्यम् असिद्धं बहिरंगमंतरंगे इति न्याये- नान्तरंगं लोपं प्रति बहिरंगस्य यादेशस्य असिद्धत्वादिति गृहाण ।

**मू०–ह्सेऽर्ह्सः ॥ स्वरात्परो रेफहकारवर्ज्जितो हसो हसे परे अवसाने च वा द्विर्भवति ।**

**सुबोधिनी–हसेऽर्हसः । र् च ह् च र्हौ न र्हौ यस्मिन् सो ऽर्हः अत्र संयोगांतस्येति हलोपः न । सभिन्नस्येति निषेधात् । रकारहकारभिन्नः स्वरात्परो हसो द्विर्वा स्यात् अवसाने हसे च । स्वरादिति किम् तस्मिन् स्नातः । हसि किम् । भवानत्र । हसः किम् । तितउच्छत्रम् अर्हति किं । ह्य्र्यनुभवः, नह्यस्ति । अवसाने यथा । वाक्‌ वाग् । दध्य्यूइत्यत्र यकारस्य स्थानिवद्भावेन स्वरत्वमाश्रित्य हसेऽर्हस इति द्वित्वनिषेधो नाशंक्यो नतु वर्णमात्रविधा- विति स्थानिद्भावनिषेधात् ॥**

**तत्त्वदीपिका–ह्सेर्हसइति** । अत्र ङ्णनोह्रस्वादिति पूर्वसूत्रात् ह्रस्वादित्यस्यानुवृत्तस्य च लक्षणया स्वपरत्वं बोध्यम् यत्तु दात्रं पात्रमित्यादौ दीर्घादित्वनिवृत्त्यर्थं ह्रस्वादित्येव वक्तुं योग्यमिति तन्न तत्र विकल्पे- नैव तद्वारणसंभवात् अत्र संयोगान्तस्य लोपइत्यनेन हलोपो न रात्सस्यैव लोप इतिनियमात् रच हच रहौ ताभ्यामन्यः स तथा । अस्वरेर्हस इति तु सुवचम् ।

**मू०–झभेजबाः ॥ झसानां झभे परे जबा भवंति ।**

**सुबोधिनी–झभेजबाः । झसानां जबाः स्युर्झभे । झसा इति किं । गीर्भ्याम् । झभे किम् खञ्जौ । दधूध्य् इत्यत्रानेन धस्य दः ॥**

**तत्त्वदीपिका–झभेझबा** इति । यत्तु झभेजबा इति तन्न । भृज्जतो भृज्जतीत्यादावव्याप्तेः ।

**मू०–वर्ग्योवर्ग्येणसवर्णः ॥ स्वरहीनंपरेणसंयोज्यं । दद्ध्यानय ।**

**सुबोधिनी–वर्ग्योवर्ग्येणसवर्णः । वर्गे भवो वर्ग्यो वर्णो वर्णेन सह सवर्णो भवतीत्युक्तत्वात् संयोगांतस्येति यलोपे प्राप्ते । अंतस्थानां प्रतिषेधोवाच्य इति असिद्धंबहिरंगमितिपरिभाषया वा यलोपाऽभावः । स्वरेण हीनं स्वरहीनं व्यंजनं परेण वर्णेन सह संयुज्यते इत्यर्थः ॥**

**तत्त्वदीपिका–वर्ग्यो**वर्ग्येत्यादि वर्गे भवो वर्ग्यः ।

**मू०–ञपाद्यवलावाद्विर्वाच्याः ॥ दद्ध्यानय । "द्वित्वंधस्यैवयस्यैवनो- भयोरुभयोरपि ॥ दध्यानयादिषुप्राज्ञैर्बोध्यंरूपचतुष्टयम् ॥"**

**सुबोधिनी–ञपाद्यवलावाद्विर्वाच्याः । ञप्रत्याहारात्परा यवला वा द्विः स्युः धकारय- कारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । इह धकारस्य द्वित्वे जबत्वे च कृते पुनर्दस्य द्वित्वं न भवति सकृच्छास्त्रं प्रवर्तते इत्युक्तत्वात् अन्यथा द्वित्वाऽऽनंत्याऽऽपत्तिः द्विधं द्वियं १ एकधं द्वियं २ द्विधमेकयं ३ एकधमेकयं ४ दद्ध्य्यानय१ दध्य्यानय २ दद्ध्यानय ३ द- ध्यानय ४ ॥**

**तत्त्व०**–ञपादिति । इतियकारस्यद्वित्वम् । तथा च धययोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । यत्तु नरोत्तमः - वाणीप्रणीतसूत्राणामितिप्रतिज्ञायतदतिरिक्तविधानेन प्रतिज्ञाभंगइत्याशंक्यात्र रामो बभ्रामेत्युक्तवान् तत्स्वमति- भ्रमादेव । यतः पतंजलेर्मतं बद्धेत्युक्त्या पतंजलिमतावबोधपूर्वकत्वेन पतंजलिमतानुसरणविशिष्टवाणीप्रणीतस

त्रसंबंधिसिद्धांतचंद्रिकाकरणप्रतिज्ञायाउद्देश्यत्वेन प्रतिज्ञाभंगाभावात् । तथाच रामाभिप्रायमज्ञात्वा तदुक्तौ दूषणार्प्पणम् । चकारानवबोधेन स्वयं भ्रांतो नरोत्तमः । नरोत्तमतया तस्य न नाम विहितं बुधैः । तृणोत्तमतया किंतु रलयोरैक्यभावनात् ।

**मू०–रहाद्यपोद्विः ॥ स्वरपूर्वाद्रेफात् हकाराच्च परो यपो वा द्विर्भवति । जलतुंबिकान्यायेन रेफस्योर्ध्वगमनं । गौर्य्यत्र । नह्यस्ति । हर्य्यनुभवः । व्यवस्थितविभाषया शसस्यापि द्वित्वं पार्श्वं । पार्श्वाद्दृण् । स्वय्यंवर्ष्मेत्यादौ ।**

सुबोधिनी–रहाद्यपोद्विः । स्वरात्पराभ्यां रेफहकाराभ्यां परो यपोद्विर्वास्यात् । स्वरादिति किं किंह्नुते । ननु मद्र्ह्रद इत्यत्र स्वरात्परात् हकाराद्रेफस्यापि द्वित्वप्रसंगः स्यादिति चेन्न विशेषेण सामान्यस्य बाधात् । विशेषे हि रस्य निमित्तत्वं सामान्ये तु कार्यित्वं माठरकौंडिन्यन्यायेन । तद्यथा ब्राह्मणा भोज्यंतां माठरकौंडिन्यौ परिवेविष्टामिति ब्राह्मणभोजने निमित्तभूतयोस्तयोर्भोजनं बाध्यते । तद्वद्यपस्य द्विरुक्तौ निमित्तस्य द्वित्वं बाध्यते । व्यवस्थितविभाषया शसस्यापि द्वित्वं । कुत्रचिद्भवति कुत्रचिन्न भवतीयं व्यवस्थितविभाषया तया स्वरात्पराभ्यां रहाभ्यां परः शसो द्विः स्यादित्यर्थः । पार्श्वम् वर्ष्मम् ॥

तत्त्व०–रहाद्यपोद्विरिति । रश्चहश्चेतिद्वंद्वः । हकाराधिक्यन्तु । अचोरहाभ्यां द्वे इति पाणिनिसूत्रानुसारात् मद्र्ह्रदइत्यादौ स्वरात्पराद्धात्परस्यापि रेफस्य न द्वित्वम् । माठरकौंडिन्यन्यायेन तद्बाधात् । तद्यथा ब्राह्मणाभोज्यन्तां माठरकौंडिन्यौ परिवेविष्टामितिब्राह्मणभोजने निमित्तभूतयोस्तयोर्भोजनं बाध्यते एवमत्रापीयद्द्वित्वनिमित्तस्य रेफस्य नयपांतर्गतत्वेन द्वित्वकार्यित्वम् । व्यवस्थितविभाषया शसस्यापि द्वित्वं पार्श्र्श्वंवर्ष्ष्मेत्यादौ । पार्श्वाद्दृणित्वाद्वृद्धिः डित्वाट्टिलोपः ।

**मू०–उवम् ॥ मद्ध्व्वत्र मच्ध्वत्र मद्ध्वत्र । मध्वत्र सूत्रेष्वदृष्टंपदंसूत्रांतराद-नुवर्तनीयम् ।**

सुबोधिनी–उवम् । चपाअवेजवा इत्यतः प्राक् स्वरे इत्यनुवर्तते । सूत्रेषु यत्पदं न दृष्टं तत् पदमन्यत्सूत्रं सूत्रांतरं तस्मात्सूत्रांतरादनुवर्तनीयमित्युक्तत्वात् । पूर्वसूत्राद्ग्रहणमनुवृत्तिः । उ वत्वं प्राप्नोति स्वरेपरे । एवं ऋरं ऌलमत्रापि पूर्ववत्सर्वं व्याख्येयम् । धस्य द्वित्वं जबत्वं च मद्ध्वत्र ॥

तत्त्वदीपिका–उवमिति । वत्वमापद्यतइतिपूर्ववत् । मद्ध्वत्रेति । अत्रापि धकारवकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि ।

**मू०–ऋरं ॥ पित्रर्थः ॥ ऌलं । ऌ इत् यस्य सः ऌित् ।**

सुबोधिनी–ऋरं ऋरत्वं प्राप्नोति स्वरे । रत्वं तकारस्य द्वित्वं । पित्रर्थः ॥ ऌ लं । ऌलत्वं प्राप्नोति स्वरे परे ॥

तत्त्व०–ऋरमित्यादिपूर्ववत् । पित्रर्थइति ॥ अत्रापितकारस्याद्वित्वविकल्पाद्रूपद्वयम् । ऌलमिति । ऌनुबंध इति ऌअनुबंधोयस्येतिविग्रहः एअयिति । प्रथमान्तं पदद्वयमपि एवमुत्तरसूत्रेपि ।

**मू०–एअय् ॥ नयनं ॥ ओअव् । भवनम् ।**

सुबोधिनी–एअय् । एरय् स्यात्स्वरे ॥ ओअव् ओरव् स्यात्स्वरे ॥

**मू०-गोरग्वापदांतेस्वरे ॥** टिति्कतावाद्यंतयोर्वक्तव्यौ । गोअग्रं । गोग्रं । गवाग्रं । पदांते किं । गवि । स्वरे किं । गोहितम् ॥

**सुबोधिनी-**गोरग्वापदांतेस्वरे । पदांते ओदंतस्य गोरग् वा स्यात् स्वरे कित्त्वादंते । पदांतेइतिकिं । गवि । ओदंतस्य किम् । चित्रग्वग्रम् ॥

**तत्त्वदीपिका-**गोरग्वेति । पदान्ते किं गवि । स्वरेकिं गोहितं । तथा च पाणिनिसूत्रे । अवङ्स्फोटायनस्येत्यत्र अकुस्फोटायनस्येत्युचितम् । अगागमे कृतेसत्येचोयवायावइत्यवादेशे गवाग्रमित्यादि रूपसिद्धिः ।

**मू०-इन्द्राक्षयोःपरतोगोरङ्नित्यम् ॥** गवेंद्रः । गवाक्षः ॥

**सुबोधिनी-**इंद्राक्षयोः परतोगोरङ्नित्यं । पदांते ओदंतस्य गोर्नित्यमङ् स्यात् इंद्रेऽक्षेच परे । गवां किरणानामक्षीव यः स गवाक्षः । टाडकाइत्यप्रत्ययः वातायने रूढोयं पुस्त्वं लोकात् ॥

**तत्त्व०-**व्यवस्थितविभाषा चेयमित्याशयेनाह । इंद्राक्षयोः परत इति ।

**मू०-ऐआय् ॥** नायकः । औआव् । पावकः ।

**सुबोधिनी-**ऐआय् । ऐआय् स्यात्स्वरे । औआव् । औआव् स्यात् स्वरे ॥

**तत्त्व०-**नायकपावक इत्यत्र णीञ् पूञ् धातुभ्यां ण्वुणाविति वुणिणित्त्वाद्वृद्धौ अकोदेशे च रूपसिद्धिः ।

**मू०-क्वचित्स्वरवद्यकारः ॥** गव्यूतिः स्त्री क्रोशयुगम् । अन्यत्र गोयूतिः ॥

**सुबोधिनी-**क्वचित्स्वरवद्यकारः । क्वचित्स्वरेण तुल्यं स्वरवद्यकारः स्यात् स्वरे परे यत्कार्यं स्वरे भवति तद्यकारे परेपीत्यर्थः । तेन गव्यूतिः इत्यत्राध्वनः परिमाणे एवाव् । 'गव्यूतिः स्त्री क्रोशयुगमित्यमरः' । अध्वपरिमाणाभावे गोयूतिर्गवां मिश्रीभाव इत्यर्थः । ननु गव्यूतिरित्यत्र य्वोर्लोपशित्यनेन वकारस्य लोपश्च कस्मान्न । उच्यते । व्यवस्थितविभाषाश्रयणात् संज्ञापूर्वकविधेरनित्यत्वाद्वा ॥

**तत्त्वदीपिका-**गव्यूतिरिति । गव्यूतिः स्त्रीक्रोशयुगमित्यमरः । य्वोर्लोपश्वा पदान्त इत्यत्र व्यवस्थितविभाषायाः श्रयणात् गव्यूतिरित्यादौ वलोपोन ।

**मू०-क्षय्यंजय्यंशक्यार्थे ॥** क्षेतुं शक्यं क्षय्यं । जेतुंशक्यं जय्यं सैन्यम् । अन्यत्र । क्षेयं पापं जेयं मनः ।

**सुबोधिनी-**क्षय्यंजय्यंशक्यार्थे । सामर्थ्यार्थे क्षय्यं जय्यमित्यत्राय् निपात्यते । क्षेतुंशक्यं क्षय्यं । जेतुं शक्यं जय्यं । क्षि क्षये जि जये आभ्यां तव्यदादयोऽर्हेऽर्थे विधौ शक्तौ चेति यः प्रत्ययः । शक्यार्थाभावे तु क्षेतुं योग्यं क्षेयं । जेतुं योग्यं जेयं नात्राय् ॥

**तत्त्वदीपिका-**क्षय्यमित्यादि । क्षेतुं शक्यं क्षय्यं । जेतुं शक्यं जय्यम् । क्षि क्षये जि जये इत्यतः स्वराद्यः इति यप्रत्यये गुणे च क्षेयं जेयमिति ।

**मू०-क्रयार्थेप्रसारितंक्रय्यम् ।** क्रेयमन्यत् ।

तिबुद्ध्या हट्टे प्रसारितं वस्तु क्रय्यं । द्रव्यविनिमयाभावे तु क्रेतुं योग्यं क्रेयं क्रयणार्हमित्यर्थः । डुक्रीञ् द्रव्यविनिमये इत्यस्मात्तव्यादयोऽर्हेऽर्थे इति यः ॥

तत्त्वदीपिका—क्रयार्थे प्रसारितं क्रय्यमिति । क्रेतारः क्रीणीयुरिति बुद्ध्याऽऽपणे प्रसारितं क्रय्यं क्रेयमन्यत् । क्रयणार्हमित्यर्थः ।

**मू०—अक्षादेरूहिन्यादावग्वक्तव्यः ॥ अक्षौहिणी सेना । प्रौढिः । स्वैरं । स्वैरी । स्वैरिणी ।**

सुबोधिनी—अक्षादेरूहिन्यादावग्वक्तव्यः । अक्षादेरक् स्यादूहिन्यादौ परतः ऊहः समूहोऽस्त्यस्याः सा ऊहिनी अक्षाणामूहिनी अक्षौहिणी परिमाणविशेषविशिष्टा सेना । संज्ञायां णत्वं । 'सा सेनाऽक्षौहिणी नाम खागाष्टैकद्विकैः २१८७० गजैः ॥ रथैश्चैः २१८७० भादयैस्त्रिघ्नैः ६५६१० पंचघ्नैश्चपदातिभिः १०९३५० ॥ प्रमाणमिति । प्रौढः प्रौढिः । अर्थवद्ग्रहणे नानर्थकस्येति ऊढग्रहे क्तांतमेव गृह्यते नतु क्तवत्वंतस्यैकदेशस्तेन प्रोढवानत्र नाक् । स्वैरं स्वेनईरितुंशीलमस्येति स्वैरी णिन्यन्तः अथवा ईरणमीरो घञंतः ततो मत्वर्थीय इनिः । स्वैरिणी ईबंतः ॥

तत्त्वदीपिका—अक्षादेरूहिन्यादाविति । अक्ष प्र स्व इत्यक्षादयः ऊहिनी ईर ईरिण ऊढ ऊढि ऊढ् इत्यूहिन्यादयः । अविधिसामर्थ्यादादौ सवर्णदीर्घो न । अक्षौहिणीति । सेनाविशेषस्य संज्ञा । तथाहि । अक्षौहिण्यामित्यधिकैः सप्तत्या ह्यष्टभिः शतैः । संयुक्तानि सहस्राणि गजानामेकविंशतिः २१८७० । एवमेव रथानां तु संख्यानं कीर्तितं बुधैः २१८७०॥ पंचषष्टिसहस्राणि षट्शतानि दशैव तु । संख्यातास्तुरगास्तज्ज्ञैर्विना रथ्यैस्तुरंगमैः ६५६१० । नृणां शतसहस्रं तु सहस्राणि नवैव तु । शतानि त्रीणि चान्यानि पंचाशत्तु पदातयः१०९३५० सप्ततिसहिताष्टशताधिकैकविंशतिसहस्राणि गजाः इयन्तएव रथाः दशोत्तरषट्शताधिकानि पंचषष्टिसहस्राणि अश्वाः । पंचाशदुत्तरशतत्रयसहितं नवसहस्राधिकमेकलक्षपदातयः इत्यक्षौहिणीलक्षणम् ।

**मू०—य्वोर्लोपश्वापदांते । पदान्तेस्थितानामयादीनां यकारवकारयोर्लोपश् वा भवति । तआगताः तयागताः । पटो इह । पटइह । पटविह । हे सखयिति । हे सखइति । तस्माइदं । तस्मायिदं । ताइह । ताविह । लोपशि न संधिः । नलोपशि तु भवति छंदसि च श्वादेरिति निर्देशात् । दामोदरः । राजाश्वः ॥**

सुबोधिनी—य्वोर्लोपश्वापदांते । य्च व्च य्वौ तयोर्य्वोः पदस्यांतः पदांतः अंतशब्दो अवयववाची पदं तु विभक्त्यंतमेव गृह्यते पद्यते गम्यतेऽर्थोनेनेति व्युत्पत्तेः । पूर्वसूत्रेभ्योऽय् अव् आय् आव् इत्यनुवर्तते । अनुवृत्तं च षष्ठ्या विपरिणम्यते । पदांते स्थितानामयादीनां य्वोर्लोपश् वा स्यात् । दाम उदरे यस्य स दामोदरः । राज्ञोऽश्वः राजाश्वः ॥ दाम्नोनलोपशिति लोपशि कृतेपि पुनः संधिर्जातः समासे न लोपशि तु भवतीत्युक्तत्वात् । पदांते किं । नायकः । पावकः । अयादीनां किम् । दध्यानय, मध्वत्र । ननु वृक्षं वाति वेति वा वृक्षवाः, वृक्षवीः । वा गतिगंधनयोः, वी गतिव्याप्तिप्रजननादौ आभ्यां क्विप् । वृक्षवां वृक्षव्यं वा करोतीति णिर्डित्करणे इति णिप्रत्यये टिलोपे च सति स धातुरिति धातुत्वं ततः क्विपि णिलोपे च वृक्षव् इति । वृक्षव् इहेत्यादावव्रूपस्य सत्त्वात् वकारस्य लोपश् कस्मान्न ।

**तत्त्वदीपिका**—य्वोर्लोपश्चेति । यूच वूच य्वौ तयोः अनन्तरोक्तत्वादयादीनामेव यकारवकारौ गृह्येते इत्याशयेनाह । अयादीनामिति । अयादयश्च अय् । आय् । अव् । आव् । पदस्यान्तः पदान्तः । अन्तशब्दोऽवयववाची पदं च विभक्त्यन्तमेव । अयादयश्चैतत्सूत्रभाषिता एव गृह्यन्ते तेन वृक्षं वातीति वृक्षवाः तं करोति णिर्डितकरणे इति णिप्रत्यये टिलोपे च साति सधातुगिति धातुत्वं ततः क्विपि णिलोपे च वृक्षाविति भवति वृक्षविहेत्यत्र लोपो न । पदांते किम् । नयनं । श्वादोरिति श्वा आदिर्यस्य सः श्वादिः तस्य । बहुव्रीहिरन्यार्थ इति समासे नाम्नालोपश्धाविति नलोपाशि सवर्णे दीर्घः ।

**मू०—एदोतोतः** ॥ पदांते स्थितादेकारादोकाराच्च परस्याकारस्य लोपश्च भवति तेऽत्र पटोऽत्र । गोर्वा ॥ तेन गोअजिनं गवाजिनम् ।

**सुबोधिनी**—एदोतोतः । अयवोरपवादः एच्च ओच्च तयोः समाहारः एदोत् तस्मात् एदोतः तपरकरणं स्पष्टार्थं प्लुतव्यावृत्तिः प्लुतइत्यादिनाबोध्या तेन आगच्छाग्ने ३ अत्र तिष्ठ । एहि विष्णो ३ अत्र हविर्भुक्ष्वेत्यादौ न संधिः । प्लुतस्य निषेधादिति । पदांते एदोतः परस्यातो लोपश्च स्यात् । पदांते किं । नयनं भवनं । एदोतः किम् । तस्मै अन्नं । तौ अत्र । अतः किं । तेआगताः ॥ गोर्वा । पदांते ओदंतात् गोशब्दात् परस्यातो लोपश्च पक्षे प्रकृतिभावश्च । ओदंतात्किं । चित्रग्वग्रं । पदांते किं । गोः । प्रकृतिभावे गोअजिनं अल्लोपेगोजिनम् । गोरग्वेत्यगागमे गवाजिनम् ॥

**तत्त्वदीपिका**—एदोतोतः । एच्च ओच्च एदोत् तस्मात् तपरकरणं सुखमुखोच्चारणार्थम् । अत इति तपरकरणं दीर्घादिनिवृत्त्यर्थम् । तेन हरे आगच्छेत्यादौ लोपोन । तेत्रेति । अत्रापवादत्वाल्लोप एव नत्वायादयः। गोर्वेति गोशब्दादकारस्य लोपो वेत्यर्थः । तेन गोजिनामित्यत्र रूपत्रयम् ।

**मू०—सवर्णेदीर्घः सह** ॥ सामान्यं सवर्णे परे सह दीर्घो भवति । दैत्यारिः, श्रद्धात्र, दधीह, भानूदयः, श्रीशः, होतॄकारः । होतॄकारः ॥ "सामान्यशास्त्रतोनूनंविशेषोबलवान्भवेत् ॥ परेणपूर्वबाधोवाप्रायशोदृश्यतामिह"

**सुबोधिनी**—सवर्णेदीर्घः सह । सवर्णशब्दस्य च ससंबंधिकत्वात्सवर्णादिति लभ्यते । वर्णशब्दोऽक्षरेस्ति । वर्णोद्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे इत्यभिधानात् सशब्देन तु समानशब्दो लक्ष्यते नामैकदेशेनापि नामग्रहणस्य संमतत्वात् सगोत्रः सनामेत्यादाविव समानशब्दस्यादेशः सइति वा । ततः समानं तद्वर्णं च सवर्णं तस्मात् सवर्णसंज्ञकस्य सवर्णस्यात्र ग्रहणं नास्ति किंतु यौगिकस्य ग्रहणं तेन समानसंज्ञात्मको वर्णः समानशब्देन ग्राह्यो न तु तुल्यार्थकः । समानसंज्ञकाद्वर्णात्सवर्णे परे सह दीर्घो भवतीत्यर्थः । सह ग्रहणं तूभयोः स्थानित्वलाभार्थं कृतं तच्च नामि इति यावदनुवर्तते । ननु विनासहेत्यनेन सहशब्दयोगे तृतीया किं न स्यात् । उच्यते । उपपदविभक्तेः कारकविभक्तिर्बलीयसीत्युक्तत्वात् सहशब्दयोगे विधीयमाना तृतीयोपपदविभक्तिः । सवर्णे इति सप्तमी तु भावे सामीपिकाधारे वा विहिता कारकविभक्तिः । क्रियान्वयित्वात् क्रियापदं अध्याहृतं भवति । नायोगे दीर्घ इत्यत्रान्योक्ते इत्यनेन प्रथमापि कारकविभक्तिः । सवर्णे किम् । दध्यत्र मध्वेतत् । उत दधीह, भानूदयः' श्रीशः वधूपमेत्यादौ उकारे वकारादिप्राप्तिः सवर्णेदीर्घ इत्यस्य प्राप्तिश्चास्ति तत्र किं भवतीत्यत आह ॥ सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत् ॥ नूनमि-

त्यर्थः । तस्मादल्पव्यापको भवतीत्यर्थः । यथा रामोत्रेत्यादौलोपशोऽपवाद उत्वं सर्वस्मै इत्यादौ ङेरगित्यस्यापवादः स्मट् । कार्य्येऽणित्युत्सर्गः आतोड इत्यपवादः । नुडागम इत्युत्सर्गः सुडागम इत्यपवादः । एवं यत्ववत्वरत्वादिविधिरुत्सर्गः दीर्घविधिरपवादः पुनः परिहारांतरमाह । परेण पूर्वबाधो वा । वेति पक्षांतरे सूत्रपाठे परेण परपठितेन विधिना पूर्वबाधः क्रियते पूर्वपठितो विधिर्बाध्यते इत्यर्थः । इदं परिहारांतरं च नित्यांतरंगापवादव्यतिरिक्तस्थले एव द्रष्टव्यं । तत्र नित्यं बाधकं आवश्यकत्वात् अंतरंगं तु बाधकं लाघवात् अपवादस्तु बाधको भवति वचनप्रमाण्यात् नुनागमइआदेशयोः यथा प्रधीनीत्यादौ परेण नुमाग्वावेति यत्वं बाध्यते तथा दीर्घविधिना यत्वादिविधिर्बाध्यते । ननु वारीणां स्त्रीणामित्यादौ परत्वान्नुमियोः सतोर्नुमागमो न स्यादित्यत आह । प्रायशोदृश्यतामिह प्रायश इत्यर्थं बाहुल्येऽर्थे । इह शास्त्रे पूर्वोक्तो न्यायो बाहुल्येन भवद्भिर्दृश्यतां ज्ञायतां न सर्वत्र दृशिर्ज्ञापनार्थः । दृशिर्ज्ञानेक्षिण दर्शने इत्युक्तत्वात् । कर्मणिलोट् । प्रायश इति कथनात् क्वचित्पूर्वेणापि परविधिर्बाध्यते इति दृश्यतां । यथा स्त्रीणाम् वारीणामित्यादावियनुमौ परावपि पूर्वेण नुटा बाध्येते ॥

तत्त्वदीपिका–सवर्णे दीर्घस्सहेति । सवर्णशब्दस्य ससंबंधिकत्वात्सवर्णस्येति लब्धं सवर्णसंज्ञा च समानस्यैव नान्यस्येति स्पष्टार्थं । समानस्येति । सहयोगे तृतीया तु न । उपपदविभक्तित्वात् सप्तम्यास्तु समीपिकाधारेविहितत्वात्कारकविभक्तित्वं दीर्घ इति प्रथमायाश्चाध्याहृतं भवति नायोगादन्योक्त इत्यनेन विहितत्वात्कारकविभक्तित्वम् ॥ उपपदविभक्तेः कारकविभक्तिर्बलीयसीति वचनात् । सामान्यस्येति किं । ये श्रद्धात्रेति । पर्जन्यवल्लक्षणप्रवृत्तिरिति दीर्घस्यापि दीर्घः । यत्तु अदीर्घो दीर्घतां याति इत्यादि कलापानुसारिभिरुक्तं । तद्भाष्यविरोधादुपेक्ष्यम् । अलोलिदीर्घइत्येव सुवचम् । सामान्यशास्त्रत इत्यादि । बहुव्यापकं सामान्यम् अल्पव्यापको विशेषः ।

**मू०–हलादेरीषादौटेर्लोपोवक्तव्यः ॥ हलीषा, लांगलीषा, मनीषा, अद्यों, शकंधुः, कर्कंधुः, कुलटा, पटत् इति पटिति । सारंगः पशुपक्षिणोः ॥ साराङ्गोन्यः । सीमंतः केशवेशे ॥ सीमान्तोन्यः ।**

सुबोधिनी–हलादेरीषादौटेर्लोपोवक्तव्यः । हलादेष्टेर्लोपः स्यादीषादौ परे । ईषउंछे गत्यादिषु च । आभ्यां गुरोर्हसादित्यङ्प्रत्यये ईषाशब्दः हलस्य ईषा हलीषा लांगलदंडः । लांगलस्य ईषा लांगलीषा । मनसः ईषा मनीषा । शकानां देशविशेषाणामंधुः कूपः शकंधुः । कर्कीणां राज्ञामंधुः कर्कंधुः । अटतीत्यटा पचाद्यच्प्रत्ययः । कुलस्याटा कुलटा । यदा कुलमटतीति विगृह्येत तदा कार्येऽणित्यण् प्रत्यये ईपि च कुलटीति स्यात् ॥ अन्यस्मिन् अर्थे साराणि प्रधानान्यंगानि यस्य स सारांगः टिलोपो न ॥ केशवेशे केशरचनायामर्थे टिलोपो भवति सीमंतः । अन्यस्मिन्नर्थे सीमाया अंतः सवर्णे दीर्घः सीम्नो अंतः सीमांत इति वा । नाम्नोनोलोपाशीति नलोपे कृते दीर्घोत्र " सीमसीमे स्त्रियामुभे इत्यमरः ॥

तत्त्वदीपिका–हलादेरिति।हलादेरीषादेशश्च आकृतिगणत्वं बोध्यम् तेन पतंजलिर्मार्तंड इत्यादिसिद्धम् हलीषेति । ईषा लांगलदंडः स्यात् इत्यमरः । मनीषेति । बुद्धिर्मनीषा धिषणेत्यपि च । शकंधुरिति । शकानां देशविशेषाणामंधुः कूप इत्यर्थः सीमान्तोन्य इति । सीम्न अन्तः सीमान्तः ।

सह औकारो वा भवति । बिम्बोष्ठः, बिम्बौष्ठः । स्थूलोतुः, स्थूलौतुः । समासे इति किम् । तवौष्ठः ।

सुबोधिनी—ओत्वोष्ठयोःसमासेवा । समासे अकारस्य लोपो वास्यादोतुशब्दे ओष्ठशब्दे च परे । बिंबवदोष्ठौ यस्य स बिंबोष्ठः । स्थूलश्चासा ओतुश्च स्थूलोतुः । ओतुर्बिडालो मार्जार इत्यमरः । एकस्मिन्समासे इदं प्रवर्तते तेनेह न । हे वृषलसुतौष्ठव्रणस्ते इति । पक्षे औत्वम् ओऔऔ । आद्यौ सप्तम्यंतौ प्रथमांतोंत्यः ॥

तत्त्वदीपिका—ओत्वोष्ठयोरिति ओतुश्च ओष्ठश्च तौ तयोः अत्र स्वराद्यदन्तत्वादोष्ठशब्दस्य पूर्वनिपातेन्याय्ये स्वराद्यदन्तनित्यस्यानित्यत्वज्ञापनायेदम् । स्थूलोतुरिति । स्थूलश्चासौ ओतुश्च सः तथा । ओतुर्मार्जारः । ननु वृषलसुतौष्ठव्रणस्ते इत्यत्र कथं न टिलोपः स्यादिति चेत्सत्यं ओत्वोष्ठयोश्चैकत्र समासे स्थितावि दं बोध्यम्

**सू०—एदोदादौधातौ ॥** अवर्णांतोपसर्गस्य लोपः । प्रेजते । उपोषति ।

सुबोधिनी—एदोदादौधातौ । अवर्णांते यस्य स अवर्णांतः अवर्णांतश्चासौ उपसर्गश्च अवर्णांतोपसर्गस्तस्य अवर्णांतोपसर्गस्य लोपः स्यात् । एच्च ओच्च एदोतौ एदोतावादौ यस्य स एदोदादिस्तस्मिन् एदोदादौ धातौ परे । राजृ दीप्तौ कंपने च । कंपनार्थस्तु परस्मैपदी प्रेजतीति । प्रेजते इति दीप्त्यर्थः ॥

तत्त्वदीपिका—एदोदादाविति । एच्च ओच्च एदोत् स आदिर्यस्य सः तथा तस्मिन् प्रेजत इति । एजृ दीप्तौ नतु एजृ कंपने भ्वादिः तस्य परस्मैपदित्वात् । उपोषतीति । उष दाहे । एदोदादिकं च कृत्रिममकृत्रिमं च ग्राह्यम् विशेषानुपादानात् । एत्येधत्योरिति निषेधज्ञापनाच्च ।

**सू०—एदोदादौनामधातौवा ॥** उपेडकीयति, उपैडकीयति । प्रोघीयति, प्रौघीयति ।

सुबोधिनी—एदोदौनामधातौवा । अवर्णांतोपसर्गस्य वा लोपः स्यात् एदोदादौ नामधातौ परे । आत्मन एडकमिच्छतीत्येडकीयति । नाम्नो य ईच्चास्येति यः । आत्मनओघमिच्छतीत्योघीयति ॥

तत्त्वदीपिका—उपेडकीयति इति । एडकमिच्छति इति वाक्ये नाम्नो य ईच्चास्येति सूत्रेण यप्रत्ययेऽकारस्येकारादेशे रूपसिद्धिः । एवं प्रोधीयतीत्यादि ।

**सू०—एत्येधत्योर्न ॥** उपैति । उपैधते ।

सुबोधिनी—एत्येधत्योर्न । अवर्णांतोपर्सगस्य लोपो न भवति एतिश्च एधतिश्च इति एत्येधती तयोरित्येधत्योः परतः । संध्यक्षराद्योरेत्येधत्योरेव । तेनेहन । उपेति । माभवान्प्रेदिधादिति । प्रपूर्वस्य एधतेर्ण्यंतस्य लुङि परे । आङि लघाविति ह्रस्वे कृते पश्चाद्वृद्धित्वे मेट इत्यडागमाभावे चेदं रूपम् ॥

तत्त्वदीपिका—एत्येधत्योरिति । इण गतौ । एध वृद्धौ ।

**सू०—प्रस्यैष्यैषयोर्न ॥** एषः, एष्यः । प्रैष्यः प्रैषः प्रस्य किम् । अपेषः ।

सुबोधिनी—प्रस्यैष्यैषयोर्न । प्रोपसर्गस्याकारस्य लोपो न स्यादेष्यशब्दे एषशब्दे च

आभीक्ष्ण्ये क्र्यादिः । एषां धातूनां घञ् प्रत्यये घ्यण् प्रत्यये च एष एष्य इति रूपे भवतः। किंच एधुसाहचर्यादेष्योप्यनव्ययं गृह्यते । तेन । ज्यंतादिषेःक्यः क्यपिकृते एष्येत्यव्ययं । तत्राकारस्य लोपो भवतीत्यर्थः । प्रेष्यगत इति ॥

**तत्त्वदीपिका**–प्रेष इति । इषु इच्छायां तुदादिः । इष गतौ दिवादिः । इषआभीक्ष्ण्ये क्र्यादिः । घञि घ्यणि च एष एष्य इति रूपे सिद्धे तत्र लोपेप्राप्तेऽनेन निषेधः । यस्तु ईष उंछे यश्च ईष गतिहिंसादानेषु तयोर्दीर्घोपधत्वादीष ईष्यस्तत्रैत्वे प्रेषः प्रेष्यः ।

**मू०–एवेनवधारणे** ॥ अद्येव । अवधारणे त्वद्यैव ।

**सुबोधिनी**–एवेऽनवधारणे । अकारस्य लोपः स्यादनिर्द्धारणे एकशब्दे परे अद्येव कुरु । अनिश्चयार्थे एवशब्दोऽत्र । निश्चयार्थेत्वकारस्य लोपो न अद्यैव ॥

**तत्त्वदीपिका**–एव अनवधारणे इति । एवशब्देपरे अनवधारणेऽर्थे अकारांतपूर्वपदस्य लोप इत्यर्थः ।

**मू०–अइए** ॥ अवर्णादिवर्णे परे सह ए भवति । ममेदम् ।

**सुबोधिनी**–अइए । अ इति पंचम्यंतं इ इति सप्तम्यन्तं ए इति प्रथमांतं सांकेतितम् ।

**तत्त्व०**–अ इ ए इति । अ इति पंचम्यंतमित्यभिप्रेत्याह अवर्णादिति इ इति सप्तम्यंतं । यत्तु प्राचा । अ इत्यस्य प्रथमांतत्वमंगीकृत्य । अवर्ण इवर्णे पर इतिविवृतं तत्पाणिनीयग्रंथाननुसारित्वादुपेक्षितम् ।

**मू०–उओ** ॥ अवर्णादुवर्णे परे सह ओ भवति । गङ्गोदकम् ।

**सुबोधिनी**–उओ । उ इति सप्तम्यंतं । ओ इति प्रथमांतम् सांकेतितम् ॥

**तत्त्वदीपिका**–उ ओ इति । उ इति सप्तम्यंतम् ।

**मू०–ऋअर्** ॥ अवर्णादृवर्णे परे सह अर् भवति ।

**सुबोधिनी**–ऋअर् । ऋइति सप्तम्यंतं अर् इति प्रथमांतं । सांकेतितम् ॥

**तत्त्वदीपिका**–ऋअरिति । अ इति सप्तम्यंतं तवर्द्धिरिति रूपत्रयम् । तथा च द्वित्वाभावे लोपे सत्येकधं । असतिलोपे द्वित्वलोपयोर्वा द्विधं । सति द्वित्वे लोपे चासति त्रिधम् ।

**मू०–हसात्परस्यझसस्यलोपोवासवर्णेझसे** ॥ तवर्धिः, तवर्द्धिः ।

**सुबोधिनी**–हसात्परस्यझसस्यलोपोवासवर्णेझसे । हसात्किं । प्रत्तं । झसस्येति किं । शार्ङ्गं । झसे इति किं प्रियपंचानां । सवर्णे किं । तप्ता । तवऋद्धिरित्यत्रार् ततोरहाद्यपोद्विरित्यनेन पक्षे ऋद्धेर्धस्य द्वित्वं । द्वित्वाभावे लोपेसति एकधं तवर्धिः लोपाभावपक्षे द्वित्वलोपयोरसतोर्वाद्विधं । तवर्द्धिः । द्वित्वे सति लोपे वासति त्रिधं । तवर्द्द्धिः । यवलाद्यपोद्विर्वेति लक्षणांतरेण पुनर्द्वित्वेचतुर्धमपि बोध्यम् ॥

**मू०–ऌअल्** ॥ अवर्णादॢवर्णे परे सह अल् भवति ।

**सुबोधिनी**–ऌअल् । ऌइति सप्तम्यंतं । अल् इति प्रथमांतं । हसेर्हसइत्यनेन लस्य द्वित्वं ॥

सुबोधिनी–यवलाद्यपोद्विर्वा । अर्थवशाद्विभक्तिविपरिणाम इत्यनेन यपाद् यवला वा द्विरित्यस्य स्थाने यवलादिति पंचमी । यप इति प्रथमेति पक्षे । ककारस्यापि द्वित्वे तवल्कार इत्यत्र रूपचतुष्टयं भवति "द्वित्वंलस्यैववकस्यैव नोभयोरुभयोरपि ॥ तवलकारादिषुबुधैर्बोध्यंरूपचतुष्टयम् ॥

मू०–एऐऐ ॥ अवर्णादेकारे ऐकारे च सह ऐकारो भवति । तवैषा । देवैश्वर्यम् ।

सुबोधिनी–एऐऐ । आद्यौ सप्तम्यंतौ प्रथमांतोंत्यः ॥

**मू०–प्रवत्सतरकम्बलवसनार्णदशभ्यऋणे ॥ प्रार्णम्, वत्सतरार्णम्, कम्बलार्णम्, ऋणार्णं, दशार्णः ।**

सुबोधिनी–प्रवत्सतरकंबलवसनार्णदशभ्यऋणे । एषामृणशब्दे परे आर् भवति । इह केचित् वत्सशब्दं प्रक्षिपंति । भाष्ये तु वत्सशब्दो नोक्तः । ऋणस्यापनयनाय यदन्यद्दणं क्रियते तद्दणार्णं । वत्सतरस्य ऋणं वत्सतरार्णमित्यत्र हसेर्हस इत्यनेन तकारसकारयोर्द्वित्वविकल्पाच्चत्वारि रूपाणि । रेफात्परस्य णस्य तु रहाद्यपोद्विरित्यनेन द्वित्वे यवलादयोद्विर्वेति वचनांतरेण पुनर्द्वित्वे एकणं द्विणं त्रिणमिति द्वादश । खपात्शसस्य द्विरिति वार्तिकेन वा सकारद्वित्वे चतुर्विंशतिः । दशार्णो देशः दशार्णा नदी च ॥

**मू०–ऋदादौनामधातौवा ॥ प्रार्षभीयति, प्रर्षभीयति ।**

सुबोधिनी–ऋदादौनामधातौवा । अवर्णांतादुपसर्गादृकारादौ नामधातौ परे सहवार् भवति । आत्मानं ऋषभमिच्छतीति ऋषभीयति यप्रत्ययः ॥

**मू०–अवर्णांतादुपसर्गादृकारादौधातावार् ॥ उपार्च्छति ।**

सुबोधिनी–अवर्णांतादुपसर्गादृकारादौधातावार् । उपसर्गादिति किं । खट्वर्च्छति । ऋकारादौ किं । उपेतः । धातौ किं । उपर्कारः ॥

तत्त्वदीपिका–उपार्च्छतीति । ऋ गतौ भ्वादिः दशादेः पश्यादिरित्यनेनास्य ऋच्छादेशः ननूपार्च्छतीत्यत्र सोर्विसर्ग इत्यनेन रेफस्य विसर्गोस्त्विति चेन्न । पदान्तत्वाभावात् । न चोपेत्यस्यांत्यावयवेन सहार्विधानात्कथं न पदान्तत्वमिति वाच्यम् । ऋच्छतीत्यस्याप्याद्यावयवत्वेन पदान्तत्वाभावात् । ननूपसर्गग्रहणेनैव धातोराक्षेपे सिद्धे धाताविति ग्रहणं व्यर्थमिति चेन्न । पदान्तानां समानानामृति ऌति वा ह्रस्वः इति पाक्षिकह्रस्वस्यापि बाधनार्थम् धातुग्रहणम् ।

**मू०–अवर्णादृतेपरेतृतीयासमासे ॥ दुःखार्तः, शीतार्तः । तृतीयासमासे किं । परमर्तः ।**

सुबोधिनी–अवर्णादृते परेतृतीयासमासे । अवर्णादृते परे सह आर्स्यात् । सुखेन ऋतः सुखार्तः । शीतेन ऋतः शीतार्तः । तृतीयासमासाभावेतु परमश्चासौऋतश्चपरमर्तः । " ऋतंशिलोंछेपानीयेपूजितेदीप्तसत्ययोरितिहेमचंद्रः " । तृतीयासमासार्थवाक्येपिन । तृतीयासमासोर्थः प्रयोजनं यस्यतत तृतीयासमासार्थं तृतीयासमासार्थं च तद्वाक्यं च तृती-

**तत्त्वदीपिका—अवर्णादृते** पर इति ॥ अवर्णादृते शब्दे परे तृतीयासमासे आर् भवति इत्यर्थः । सुखार्त इति सुखेन ऋत इति विग्रहः । समासे किं सुखेनर्तः । तृतीयेतिकिम् परमर्तः । प्रवत्सतरेत्यादि प्रादिभ्यः षड्भ्य ऋणशब्दे परे सह आर् भवतीत्यर्थः । प्रार्णमित्यादि प्रकृष्टं ऋणमिति विग्रहः वत्सतरार्णमित्यादिवत्सतरेण देयमृणमित्यादि एवं कंबलार्णमित्याद्यपि । ऋणार्णमिति । ऋणस्यापनयनाय यदृणं क्रियते तदृणार्णमित्यर्थः । दशार्णो देशः नदी च दशार्णा । ऋणशब्दो दुर्गभूमौ जलेच । अत्र कलापानुसारिणः वत्सतरशब्दमपि पठित्वा वत्सतरे देयमृणं वत्सतरार्णमित्युदाहरन्ति । अपरे तु वत्सरशब्दमपि पठन्ति तत्सर्वं भाष्यादिविरुद्धम् । ऋदादावित्यादि । प्रार्षभीयतीत्यादि । ऋषभमिच्छति ऋषभीयति । नाम्नो य ईचास्येति यप्रत्यये अवर्णस्येकारः ।

**मू०—ऌदादौनामधातौवाल् ॥ प्राल्कारीयति, प्राल्ल्कारीयति, प्राल्ल्कारीयति प्राल्कारीयति । इतिस्वरसंधिः ।**

**सुबोधिनी—ऌदादौनामधातौवाल् ।** अवर्णान्तादुपसर्गाद् ऌकारादौ नामधातौ सह आल् वा स्यात् । आत्मनः ऌकारमिच्छतीति ऌकारीयति । यप्रत्ययः । प्राल्कारीयति इत्यादावपि पूर्ववद्रूपचतुष्टयं बोद्धव्यमिति ॥ इति स्वरसंधिः ॥

**तत्त्वदीपिका—ऌ** अलिति । ऌ इति सप्तम्यन्तम् । यवलाद्यपो द्विर्वेति । हसेर्हस इति द्वित्वविकल्पाच्चत्वारिरूपाणि । एवं प्राल्कारीयतीत्यादावपि बोध्यम् ।

श्रीविद्यानगरस्थायिलोकेशंकरशर्मणा । विहितायां हि टीकायां स्वरसंधिरगादयम् ॥

॥ इतिस्वरसंधिः ॥

**मू०—नामी ॥ अदसामीशब्दःसंधिं न प्राप्नोति । अमी आदित्याः । अदसः किम् । अम्यत्र ।**

**सुबोधिनी—नामी ।** अदस इति वक्तव्यमत्र व्यवस्थार्थे वानुवृत्तेः । अदसशब्दस्यामी रूपं स्वरेपरे संधिं न प्राप्नोति । अदस इति वचनादमो रोगोऽस्यास्तीत्यमी इत्यत्र संधिर्भवत्येव नामीति ज्ञापकादकारस्य न निषेधः ॥

**तत्त्वदीपिका—नामी ।** अदसःशब्दस्येकारएवसंधिंनप्राप्नोति नत्वकारोपि । नामीति सूत्रज्ञापकादिति भावः । अमू आसाते इत्यत्र य्वे द्वित्वे इत्यनेनैव संधिनिषेधः । अदसः किम् अम्यत्राद्यर्थवद्ग्रहणपरिभाषयाप्येतद्वारयितुं शक्यते तदा अम्यत्रेति प्रत्युदाहरणं बोध्यम् । अमो रागः सोस्यास्तीत्यमी । अदस एवेति तुवेत्यस्य व्यवस्थितस्यानुवृत्तेः ।

**मू०—य्वेद्वित्वे ॥ ईकारांत ऊकारांत एकारांतश्च शब्दो द्वित्वे वर्तमानः संधिं न प्राप्नोति । अग्नी अत्र, पटमाले आनय; पचेते इमौ ।**

**सुबोधिनी—य्वेद्वित्वे ।** ईश्च ऊश्च एश्च एषां समाहारो य्वे । एकत्वे द्विगुर्द्वंद्वाविति नपुंसकस्येति ह्रस्वो न । द्विग्वादिसंज्ञापूर्वकत्वेनानित्यत्वात् । अथवा भिन्नमेवेदं सर्वत्राविभक्तिकनिर्देशश्च । ननु ईदूतोः स्थाने यवयोः कृतयोः संदेहो भवति । किं ह्रस्वयोर्निर्देश उत दीर्घयोरिति । उच्यते । दीर्घयोरेवात्र ग्रहणं न ह्रस्वयोः दीर्घस्यैकारस्य साहचर्यात् । तेनाऽकुर्वह्यावामित्यादौ प्रकृतिभावो न । पदग्रहणमित्यनुवर्त्यते तस्य य्वइति विशेषणं तदंतविधिराश्रीयते ईदूदेदंतं पदमिति । तेन पचेते इमावित्यादौ प्रकृतिभावः सिद्ध्यति । नह्य-

भावःस्यात् । उच्यते । ईकारादीनां प्रत्ययत्वस्यासिद्धेर्नप्रकृतिभावः । नह्यत्र प्रत्यय त्वोपस्थापकं किंचिदस्तीति । यद्वा । समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरन र्थकत्वान्नप्रकृतिभावः । मणी वोष्ट्रस्यलंबेते प्रियौ वत्सतरौ ममेति भारतप्रयोगेतु इवार्थे व- शब्दो वाशब्दो वा बोध्यः । विकल्पोपमानयोरिति "व प्रचेतसि जानीयादिवार्थे च तद- व्ययम्" इति मेदिनी ॥

**तत्त्वदीपिका**—त्वेद्वित्वे इति । ईकारांतत्वादिकं च परिनिष्ठत्वे सति बोध्यम् । ननु कुमार्य्योरगारं कुमा- र्य्यगारं वध्वगारमित्यत्रापि संधिनिषेधः प्राप्नोति ॥ ईकाराद्यन्तस्य द्वित्वे वर्तमानत्वात् प्रत्ययलक्षणेति चेन्न । ईकारादिभिर्द्विवचनस्य विशेषित्वात् ईकाराद्यन्तं द्विवचनमिति निष्कर्षात् । समासे कृते समुदायस्यैवार्थवत्त्वेन पूर्वोत्तरपदयोरनर्थकत्वाद्वा । नन्वेवमपि अशुक्ले वस्त्रे शुक्ले संपद्येतां शुक्ले आस्तां वस्त्रे अत्र प्राप्नोति । अत्र हि ईकाका- रादिवत् द्विवचनांतत्वं च भवति प्रत्ययलक्षणं नेति चेत्सत्यम् अत्राप्यकृते ईभावेलुग्भविष्यति च्व्यन्तस्याव्ययत्वे- नासंख्यत्वादद्वित्वार्थत्वाद्वा । यत्तु मणीवादिवर्जमिति पठित्वा मणीवाद्युदाहृतं प्राचा तच्च मुनित्रयानुक्तत्वादप्रमाण- मिति सन्तः । एवं मणीवोष्ट्रस्य लंबेते प्रियौ वत्सतरौ ममेति भारतप्रयोगसमर्थनाय इवार्थे व शब्दो वाशब्दो वा बोध्यः । ववा यथा तथैवैवं साम्ये इत्यमरग्रंथव्याख्यावसरे शात्रवं व पपुर्यश इति कालिदासप्रयोगस्याभियु- क्तैरुदाहृतत्वात् कादम्बखंडितदलानि व पंकजानि इत्यादिदर्शनाच्चेति भावः ।

**मू०—ओौनिपातः ॥ स्वरो निपातश्च संधिं न प्राप्नोति । अ अपेहि, इ इंद्रं पश्य, उ उत्तिष्ठ, आ एवं मन्यसे ।**

**सुबोधिनी**—ओौनिपातः । ओौ इति आकारादारभ्य औकारेण प्रत्याहारो ग्राह्यः । ततो निपातसंज्ञकः स्वरे परे संधिं न प्राप्नोति । अ अपेहि । अ इति निषेधाक्षेपयोः । इ इंद्रं त्वंपश्य । इ इति विस्मये । उ उत्तिष्ठ । उ इति जुगुप्सासंतापान्वर्थाप्यर्थेषु । आ एवं त्वं मन्यसे । पूर्वं प्रक्रांतवाक्यार्थस्यान्यथात्वद्योतकोयमाकारः । पूर्वमित्थं न त्वममंस्था इदानीं त्वेवं मन्यसेइत्यर्थः । आ एवं किल तत् । स्मरणद्योतकोयमाकारः । ङित आकारस्य तु निपातसंज्ञा नास्ति प्रादिषूपसर्गेषु आङः पाठात् । निपातसंज्ञाऽऽदीनामेवास्ति नतु प्रादीनां। ततो ङित आकारस्य प्रकृतिभावो न । आ ईषदुष्णं ओष्णं । किंच "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ॥ एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्" इति भाष्ये उक्तं आङ नाङोरर्थ एव भेदकोऽस्ति स्वराणामपि निपाताऽनिपातविवेकोऽर्थाधीन एव । निपातग्रहणं किं अकारो वासुदेवस्तस्य धौ अ इति रूपं अ आगच्छ आगच्छेति । उः शंभुस्तस्यधौ ओइति रूपं ओ आगच्छ अवागच्छेति । इः कामस्तस्य धौ ए इति रूपं । ए आगच्छ अयाग- च्छेति स्वररूपनिपातस्य परेण स्वरेण सह संधिनिषेधोऽस्ति । पूर्वेण स्वरेण सह तु संधिर्भ- वत्येव । जानु उ अस्य रुजतीत्यत्र उकाराकारयोः सवर्णदीर्घे कृते निपातस्य धिकृतत्वात् परेणापि संधिर्भवत्येव जान्वस्येति ॥

**तत्त्वदीपिका**—ओौनिपात इति । अकारादिरौकारान्त औप्रत्याहारः इत्यभिप्रेत्याह स्वरइति स्वरोप्येक एव बोध्यः नतु स्वरान्तः चार्थे वेङ्चोरित्यादिनिर्देशात् तेन प्रेदं ब्रह्मेत्यत्र न संधिनिषेधः । निपात इति किम् । चकारात्र जहारात्र आङो न निषेधः तस्य प्रादिषु पाठे वा निपातत्वात् चादिर्निपात इति चादेरेव तत्त्वात् ङित्वं च भाष्यात् । ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् इति आ एवमिति पूर्वप्रक्रान्तवाक्यार्थस्यान्यथात्वद्योतकोयमाकारः । पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः ओदन्त इति । अत्र भाष्यम् । ओतश्च प्रतिषेधः ओदन्तो निपातेच्व्यंतस्य प्रतिषेधोवक्तव्यः अनदः अदः अभवत्

भविष्यति एवमपि अगौर्गौः समपद्यत गोऽभवत् अत्र प्राप्नोति । एवं तर्हि गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति तद्यथा । गौरनुबध्यते इत्यत्र न वाहीकोनुबध्यते । च्व्यंतस्य क्त्वाद्यन्तर्गतत्वेन निपातत्वाभावान्नेत्यपरे । निपातः किम् । सुद्योग्यम् । यत्तु मनोरमायां निपातः किं देवोसि वायवायाहि इति प्रत्युदाहृतम् । तद्भाष्यविरोधादुपेक्ष्यम् ।

**मू०—ओदन्तोनिपातश्च ॥ अहो ईशाः । अहो आगताः ।**

सुबोधिनी—ओदंतोनिपातश्च । ओदंतो निपातः संधिं न प्राप्नोति । निपातः किं । देवोऽसि ॥

**मू०—ओदन्तोधौवेतौ ॥ विष्णो इति, विष्णविति ।**

सुबोधिनी—ओदंतोधौवेतौ । संबोधननिमित्तक ओकारः संधिं वा प्राप्नोति इतिशब्दे परे । इतौ किं । पटोत्र । धौ किं । अहो इति । प्रकृतिभावे विष्णो इति । पक्षे अवादेशः । य्वोर्लोपशीति वलोपे विष्ण इति । पक्षे विष्णविति ॥

तत्त्वदीपिका—ओदन्तोधाविति । अवैदिके इतौ बोध्यम् । धाविति किं । अहो इति अत्र विकल्पो माभूत् ।

**मू०—य्वृणामसवर्णेस्वरेऽसमासेपदान्तेवाह्रस्वः ॥ चक्रि अत्र चक्र्यत्र । मधु एतत् मध्वेतत् । कर्तृ इदम् कर्त्रिदम् । ह्रस्वविधानसामर्थ्यान्न संधिः । समासे तु हर्य्यर्थः । पदांते किम् । गौर्य्यौ ।**

सुबोधिनी—य्वृणामसवर्णेस्वरेसमासेपदांतेवाह्रस्वः । इश्च उश्च आ च ते य्वरस्तेषां य्वृणां । असमासे पदांते स्थितानामिवर्णोवर्णऋवर्णानां प्रकृतिभावो ह्रस्वश्च वा भवत्यसवर्णे स्वरे परे । ह्रस्वपक्षे चक्रि अत्र । प्रकृतिभावे चक्री अत्र । पक्षे यत्वं चक्र्यत्र । इह स्कोरिति कस्य लोपो न यत्वस्य बहिरंगपरिभाषयाऽसिद्धत्वात् स्थानिवद्भावाच्च । हरेरर्थमिति हर्य्यर्थः । समासत्वादत्र ह्रस्वप्रकृतिभावौ न ॥

तत्त्वदीपिका—य्वृणामिति । इश्च उश्च आच य्वरः तेषाम् ।

**मू०—पदांतानां समानानामृति ऌति च वा ह्रस्वः ॥ ब्रह्म ऋषिः ब्रह्मर्षिः । दण्ड ऋषिः दण्डचृषिः । वधू ऋकारः वध्वृकारः । होतृ ऋकारः । होतृ ऌकारः होतृकारः । पदांतानां किम् । आर्च्छत् ।**

सुबोधिनी—पदांतानांसमानानामृतिऌतिचवाह्रस्वः । पदांते स्थितानां समानानां प्रकृतिभावो ह्रस्वश्च वा भवति ऋकारे ऌकारे च परे । होतृ ऌकारः ब्रह्मा ऋषिरित्यादौ प्रकृतिभावार्थमिदं य्वृणां तु पूर्वेणैव प्रकृतिभावः सिद्ध्यति । समासेप्ययं प्रकृतिभावोऽस्ति तेन सप्त ऋषीणामिति । प्रकृतिभावे ब्रह्मा ऋषिः । ह्रस्वे ब्रह्म ऋषिः । संधौ ब्रह्मर्षिः । पदांते किं । आऋच्छदित्यत्र आ इत्यस्य ह्रस्वो न ऋकारे परेऽहि पदांताभावात् । ऋच्छगत्यादावित्यस्य लङि तुदादेरित्यप्रत्यये दिवादावडिति स्वरादेरिवाऽडागमयोश्च कृतयोरूपम् ॥

**मू०—ञयादुञोवोवास्वरे । किम्वुक्तम् किमु उक्तम् ।**

सुबोधिनी—ञयादुञोवोवास्वरे । ञयात्परस्य उञनिपातस्य वो वा स्यात्स्वरे परे । किम्

**तत्त्वदीपिका–अयादुञ** इति । किम्बुक्तमिति वत्वस्यासिद्धत्वान्नानुस्वारः । ओदन्तोनिपात इत्यारभ्यै-तत्पर्यंतं वेत्यस्य व्यवस्थितस्यानुवृत्तेर्लभ्यते इति बोध्यम् ।

**मू०–दूरादाह्वानेटेःप्लुतः** ॥ दूरात्संबोधने यद्वाक्यं तस्य टेः प्लुतो वा । प्लुतः संधिं न प्राप्नोति एहि देवदत्त ३ अत्राधीष्व ।

**सुबोधिनी–दूरादाह्वानेटेःप्लुतः** । दूरत्वमिहाह्वानापेक्षं बोध्यते न देशापेक्षं पुरुषापेक्षं च गृह्यते । आह्वाने इति संबोधनमात्रोपलक्षणं । तेनाह्वानादन्यत्रापि भवति सक्तून्पिब देवदत्त ३ इति । आह्वाने इत्याधारे सप्तमी आधारश्चाधेयमपेक्षते आधेयं च वाक्यमेव । तेनैवाह्वान संभवात् संबोधने वाक्यस्य टेः प्लुतः स्यादित्यर्थः । ह्रस्वदीर्घव्यक्त्योरुच्चारणात्स्वरूपलिख-नाच्च भानं प्लुतव्यक्तेरुच्चारणादेव ॥

**तत्त्वदीपिका–दूरादाह्वान** इति ॥ दूरत्वमिहाह्वानापेक्षं नतु देशापेक्षं पुरुषापेक्षं वा । वाक्यस्य टेरिति वाक्यं च सामर्थ्याल्लभ्यते । आह्वाने इत्याधारे सप्तमी । आधारश्चाधेयमपेक्षते । आधेयं च वाक्यमेव तेनैवाह्वान-संभवात् इति नव्याः । संबोधनमात्रोपलक्षकम् इत्यभिप्रेत्याह दूरात्संबोधन इति ।

**मू०–हैहेप्रयोगेहैहयोःप्लुतोवा** ॥ है अम्ब, हायम्ब । हे ईश, हयीश ।

**सुबोधिनी–हैहेप्रयोगेहैहयोःप्लुतोवा** । हैहेप्रयोगे दूरात्संबोधने यद्वाक्यं तत्र हैहयोरेव प्लुतो वा स्यात् । प्लुताभावे आय् । हायंब । हयीशेत्यत्र अय् ॥

**मू०–सप्तम्यर्थेईत्संधिंनयाति** ॥ वातप्रमी आस्ते । ययी इदम् । पपी एषः ।

**सुबोधिनी–सप्तम्यर्थेईत्संधिंनयाति** । सप्तम्यर्थे संसिद्धमीकारांतं पदं संधिं न प्राप्नोति । अर्थग्रहणात्समासे माभूत् । वाप्यामश्वोवाप्यश्व इत्यत्र वापीशब्दो वाप्यधिकरणकद्रव्ये उपसंक्रांतो न तु सप्तम्यर्थे । वातप्रमी, ययी, पपी शब्दा औणादिकईकारांताः संति तेषां सप्तम्येकवचनेन सवर्णे दीर्घे रूपम् ॥

**तत्त्वदीपिका–सप्तम्यर्थे** इति । अर्थग्रहणं किं वाप्यामश्वोवाप्यश्वः । इह यथा न स्यात् अथ क्रियमाणे प्यर्थग्रहणे कस्मादेवात्र न भवति जहत्स्वार्थावृत्तिरिति सप्तम्यर्थाभावात् । अथाजहत्स्वार्थायां वृत्तौ दोष एवेति चेन्न । समुदायार्थोभिधीयते ।

**मू०–इतौवाउञ्** ॥ उ इति, विति ।

**सुबोधिनी–इतौवाउञ्** । उञ् निपातः संधिं वा प्राप्नोति इतिशब्दे परे । ओनिपात इति नित्यं प्राप्ते विकल्पोयम् ॥

**तत्त्वदीपिका–इतौवेति** । उभयत्रसानुबंधक एव गृह्यते ।

**मू०–अप्लुतवदितौ** ॥ देवदत्तेति ।

**सुबोधिनी–अप्लुतवदितौ** । प्लुतोऽप्लुतवद्भवति इति शब्दे परे । अप्लुतवत्कार्यं यत्वादिकं करोतीत्यर्थः ॥

**तत्त्वदीपिका–अप्लुतवदिति** । अत्रापि अवैदिके इति बोध्यम् । वस्तिम । अग्नी इति इत्यत्र यथा न

**मू०—गुरोरनृतोऽनंत्यस्यापिवापर्यायेणप्लुतः** ॥ दे३वदत्त, देवद३त्त । अपिशब्दादंत्यस्याप्यगुरोर्वा पर्यायेण प्लुतः । देवदत्त३ । गुरोः किम् । वकारादकारस्य माभूत् । अनृतः किम् । कृष्ण३ गौश्चरति ॥ ॥ इति प्रकृतिभावः ॥

**सुबोधिनी**—गुरोरनृतोनंत्यस्यापि वा पर्यायेण प्लुतः । दूरात्संबोधने यद्वाक्यं तस्य ऋद्भिन्नस्यानंत्यस्यापि गुरोर्वा पर्यायेणानुक्रमेण प्लुतः स्यात् । एकत्र दे इत्येकारस्य प्लुतता । अन्यत्र द इत्यकारस्यप्लुतता । त इत्यकारस्य तु दूरादाह्वाने टेः प्लुत इत्यनेन प्लुतसंज्ञा प्रकृतेर्मूलरूपस्य भवनं प्रकृतिभावः ॥

**तत्त्वदीपिका**—गुरोरनृतइति । अपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थः ।

श्रीविद्यानगरस्थायीक्षेमंकरसुतोकरोत् । श्रीलोकेशंकरो व्याख्यां संध्यभावस्य सत्तमाम् ।

इतिस्वरसंध्यभावः ( प्रकृतिभावः )

## हससंधिः ।

**मू०—चपाअबेजबाः** । पदांते वर्तमानाश्चपा जबा भवंति अबे परे । षडत्र । वाग्यथा ।

**सुबोधिनी**—चपाअबेजबाः । पदांते इत्यनुवर्तते । पदांते वर्गप्रथमास्तृतीया भवंत्यबे परे । पदांते किं । वाचौ । भवंतौ । बहुवचनं सर्वव्यक्तिषु तात्पर्यबोधनार्थम् ॥

**तत्त्वदीपिका**—अथ हससंधिः । चपाअबेजबाः । अत्र लघुभाष्यम् अझपाइति पाठ्यम् समिदत्र ककुबत्र अभ्निमदासनमित्यादावव्याप्तिर्यथा न स्यात् । यद्वा अबे जबा इत्येव कर्तव्यम् । पदान्तइत्यनुवर्त्तते पदान्ते वर्त्तमानस्य जबा भवंत्यबे परे इत्यर्थः । स्वराणां पूर्वविधयोबाधकाः हसानां तूत्तरविधय इति । अत्रोच्यते तथागताः पटविहेत्यादौ अतिप्रसंगवारणाय तावत् अन्यतरद्वक्तव्यम् तत्र व्यक्तिलाघवाच्च यग्रहणमेव कर्तव्यम् न चोक्तदोषः वावसान इतीष्टसिद्धेः । अवसानं किमिति चेत् अत्र एवेति गृहाण । विद्यावसानमित्यादिप्रयोगदर्शनात् अत्रार्थे चपग्रहणस्यापि मानत्वात् इति । अत्रेदमवधेयम् वावसान इत्यत्रावसानशब्दस्यान्तवाचकता नोचिता विरामोवसानमित्यनेन वर्णाभावस्यावसानसंज्ञां कुर्वता सूत्रकारेण विरुद्धत्वात् किंचैवं भवत्पुत्रः बृहत्फणी महत्खंडन इत्यादिषु वावसान इत्यनेन पक्षे दकारश्रवणापत्तेः नचेष्टापत्तिः तदसाधुत्वस्य सर्वत्र दर्शनात् । न च ककुबत्रेत्यादौ अव्याप्तिपरिहारःकथमिति चेत् इत्थं ञमेञमावेत्यत्र व्यवस्थितविभाषाश्रयणात् झपानामपि जबा ञमाश्च भवंतीति व्याख्यानात् तन्मयमित्यादौ ञमकरणार्थं प्रत्यये ञमे जबस्यापीति भवद्भिरपि व्यवस्थितविभाषाश्रयणस्य स्वीकृतत्वात् अथ भवत्पुत्र इत्यादौ खसेचपा झसानामिति सूत्रेण पाक्षिकदकारस्यापि तत्त्वेन रूपसिद्धिरिति चेत्सत्यं । खसे चपाझसानामिति सूत्रं प्रतितु वावसान इत्यस्य बहिरंगत्वेनासिद्धत्वेनासिद्धत्वात् किंच तच्छिव इत्यत्र तदो वावसान इति चर्त्वे कृते पश्चाच्छिवइत्यनेन संबंधे झलांजशोंत इति जस्त्वे खरिचेति चर्त्वमिति व्याकुर्वतां कृष्णपंडितानां मते भाविन्यवसानभंगे अकृतव्यूहपरिभाषया कृतमपि शास्त्रंवा निवर्त्तयन्तीत्यनया वावसान इत्यस्याप्रवृत्तेरित्युक्त्या दूषयतां भट्टोजिदीक्षितानां मते नातिविरोधात् इतिदिक् । अबग्रहणं किम् जगत्सर्वमित्यादौ खसे मा भूत् । अथ तत्र खसे चपाझसानामित्यस्यैव प्रवृत्तिरितिचेत् तर्हि उत्तरार्थमबग्रहणं स्पष्टार्थमिहैव कृतम् । पदान्त इति किम् त्वचौ ।

**मू०—ञमेञमावा** ॥ पदान्ते वर्तमानाश्चपा ञमे परे ञमा वा भवंति ।

**सुबोधिनी**—ञमेञमावा। पदान्ते इत्यनुवर्तते। पदांते वर्गप्रथमाः पंचमाः स्युः पंचमे परे। पदांते किं। वच्मि, पाप्मा, यत्नः। पक्षे तृतीयाश्चपा अबे जवा इत्यनेनैव ॥

**तत्त्वदीपिका**—ञमेञमावेति। अत्रापि पदान्त इत्यनुवर्त्तते तेन वच्मीत्यादौ न। वाशब्दोऽत्र व्यवस्थावाची तेन क्वचित् झपानामपि ञमा भवंति प्रत्यये च नित्यतालाभः। यत्तु कैश्चिन्मयाटि नित्यमित्युक्तं तद्भाष्यविरोधादुपेक्ष्यं। चपा इति किम्। विष्णो मां रक्षेत्यादौ स्वरस्य मा भूत्।

**मू०—प्रत्ययेञमेजबस्यापि नित्यम् ॥ तन्मयम्। चिन्मात्रम्।**

**सुबोधिनी**—प्रत्यये ञमेजबस्यापिनित्यम्। वर्गतृतीयानां पंचमा भवंति प्रत्ययसंबंधिनि ञमे परे। अपि शब्दाद्वर्गप्रथमानामपि। कथं तर्हि रघुकाव्ये 'मदोदग्राः ककुद्मंत' इति उच्यते। यवादिगणे दकारस्य निपातनान्न यमो भवतीति कौमुदी। क्वचिज्जबस्यापि ञमो भवति। त्वन्मदेकत्वे इति ज्ञापकात्। तत्स्वरूपमस्येति तन्मयं। प्राचुर्यविकारप्राधान्यादिष्विति मयट्। चित्प्रमाणमस्येति चिन्मात्रं। प्रमाणे द्वयसट् दघ्नट् मात्रट् इति मात्रट् ॥

**मू०—चपाच्छःशः। पदांते वर्तमानाच्चपादुत्तरस्य शकारस्य छो वा भवत्यबे परे। वाक्छूरः, वाक्शूरः। अबे किम्। वाक् श्च्योतति।**

**सुबोधिनी**—चपाच्छःशः। चपादुत्तरः शकारः छकारो वा भवत्यबे परे। चपादिति किम्। प्रशान् शेते। अबे इति किम्। वाक्श्च्योतति। शः किं। वाक्साधुः ननु चपाच्छः श इत्युक्ते संदेहो भवति। किं। शस्य छः छस्य शो वेति। लोकाच्छेषस्येति निर्देशान्न संदेह इति ॥

**तत्त्वदीपिका**—चपाच्छःश इति। पदान्त इति किम्। विरप्शम् रपेर्विपूर्वादौणादिशप्रत्यये रूपमेतत् इति प्राञ्चः तच्चिन्त्यम्। विरप्शमित्यस्य छांदसत्वलाभात् छंदसिदृष्टानुविधिस्वीकारात् इत्युक्तम् लघुभाष्ये तत्रेदमवधेयम्। विरप्शमित्यस्य पदांतप्रत्युदाहरणत्वमेवोचितम् पतंजलिसंमतत्वात् किंच शश्छोटीत्यस्य हि पदान्ताज्झयः परस्य शस्य छ इत्यर्थ आकरे स्थितः। विपूर्वाद्रूपेरौणादिकशप्रत्यये मध्वश्च्योतंत्यभितोविरप्शमित्यादौ यथेति मनोरमायामुक्तवतां दीक्षितानां मतेन विरोधात् छांदसत्वादित्यस्यागतित्वेनोपेक्षितत्वात्। चपादिति किम् प्रशान्शेते। अे इति किम् वाक् श्च्योतति। शः किम् वाक्साधुः। ननु चपा इत्यनुवर्त्यार्थवशाद्विभक्तिविपरिणामं कृत्वा चपादिति व्याख्यां श्रियेत इति चेत् तर्ह्युत्तरार्थं तच्च होझभाइत्यत्र वक्ष्यते इहार्थं च। अत्र तंत्रादिना वाक्यद्वयमाश्रियते तत्राद्यउक्तएव द्वितीयस्तु चपमततीतिचपात् तेन सहितः छः तस्य शो ञमे तेन च पाप्रश्मीत्यादौ सत्वं विधेयस्य पूर्वनिर्देशस्त्वसंदेहार्थः चपाच्छः छइत्युक्ते संदेहः स्यात्।

**मू०—होझभाः। चपादुत्तरस्य हकारस्य झभा वा भवंति। यद्वर्गगश्च यस्तद्वर्गगश्चतुर्थो भवति। तद्धविः तद्हविः। वाग्घरिः वाग्हरिः।**

**सुबोधिनी**—होझभाः। चपाच्छः शः इत्यतश्चपादित्यनुवर्तते चपात्परस्य हस्य स्थाने झभाः स्युर्वा। निमित्तादेशयोश्चपझभयोः समसंख्ययं यथाक्रमं वक्ति। यद्वर्गगश्चपस्तद्वर्गगश्चतुर्थो भवतीति। चात्परस्य हस्य झः। टात्परस्यहस्य ढः। कात्परस्यहस्य घः। तात्परस्य हस्य धः। पात्परस्य हस्य भः इति। चपादिति किं। भगवन् हरे। हस्येति किं। तत् षष्ठं वाग्घरिः। वर्गचतुर्थाभावे वाग् हरिः। उभयत्र जबत्वम् ॥

**तत्त्वदीपिका**—होझभाइति। चपादित्यनुवृत्तेर्नेह भगवन् हरे। हकारस्येति किम् तत्षष्ठं। चपानां

कथं यथाक्रमं लभ्यत इति चेन्न ज्ञापकाद्वचनमस्तीति अनुमानात् । ज्ञापकन्तु शैषाद्धसेइतिसूत्रे तकारात्परस्य धकारकरणम् ।

**मू०—स्तोः श्चुभिः श्चुः ॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः ॥ उद्दिश्यमानप्रतिनिर्दिश्यमानयोर्यथाक्रममितिवाच्यम् ॥ कश्चरति । कश्शूरः । तच्चित्रम् । तच्छादयति ।**

सुबोधिनी—स्तोः श्चुभिः श्चुः । स् च तुश्चानयोः समाहारस्तु तस्य स्तोः । आगमजमनित्यमित्युक्तत्वान्न नुम् । अथवा सा सहितः तुः स्तु तस्य स्तोः । शाकपार्थिवादित्वान्मध्यमपदलोपः । स् च चवश्च श्चवस्तैः श्चुभिः । श्चुरिति पुंलिंगनिर्देशोयमित्येके । नपुंसकनिर्देशोयमित्यन्ये । श्चुभिरिति सहादियोगं विनापि सहार्थे तृतीया । सिनेति निर्देशात् । अत्र स्थान्यादेशयोर्यथासंख्यमस्ति । निमित्तस्थानिनोस्तु न यथासंख्यं । न शादिति ज्ञापकात् । उद्दिश्यते इति । उद्दिश्यमानः स्थानी निर्दिश्यते विधीयतेयःस निर्दिश्यमानआदेशस्तयोर्यथाक्रमं यथासंख्यं वक्तव्यं चवर्गयोगे । कश्चरतीति । कश्शूर इत्यत्र शसे वेत्यस्य पाक्षिकत्वाद्विसर्जनीयस्य सस्तस्य शकारेण योगे शः । तच्चित्रमित्यत्र चवर्गयोगे तवर्गस्य चुत्वं तच्छिरः इत्यत्र शकारेण योगे तोश्चुत्वम् ॥

तत्त्वदीपिका—स्तोश्चुभिःश्चुरिति । स् च तुश्च अनयोः समाहारस्तु तस्य स्तोः एकत्वोद्विगुर्द्वन्द्वावित्यस्यानित्यत्वान्न क्लीबत्वम् । तज्ज्ञापकं चेदमेव । स्सहित इति वा शाकपार्थिवादिः । श् च चवश्च श्चवः तैश्चुभिः श्चुना इत्यत्रार्द्धमात्रागौरवाद्बहुवचनं अत्रस्थान्यादेशयोर्यथासंख्यं निमित्तकार्यिणोस्तु न नशादिति ज्ञापकात् इत्यभिप्रेत्याह संख्यासाम्यइति समस्य भावः साम्यं संख्यायाः साम्यं संख्यासाम्यम् तस्मिन् क्रममनतिक्रम्य यथाक्रमं यावत्संख्याकस्योद्दिश्यमानस्य तावत्संख्याकमेव प्रतिनिर्दिश्यमानं भवतीत्यर्थः । स्तोः श्चौ श्चुरित्येवसुवचं । न च तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिध्येत् । नशादिति लिंगेन तस्यानुपस्थानाभ्युपगमात् ।

**मू०—नशात् । शकारात्परस्य तवर्गस्य चुत्वंन भवति । प्रश्नः । विश्नः**

सुबोधिनी—नशात् । स्तोःश्चुरित्यनुवर्तते । शात्परस्य सस्य शकारप्रसंगोनास्त्यतः शात्परस्य तोश्चुत्वं न । प्रच्छ ज्ञीप्सायां, विच्छ गतौ आभ्यां नङ्कीति नङ्प्रत्ययः । क्ङिति झसे क्वौ ञमे चेति छस्य शत्वं । नङो ङित्त्वाद्गुणाभावः । प्रच्छेस्तु संप्रसारणं न । भाष्येऽनुक्तत्वात् ॥

तत्त्वदीपिका—नशादिति । शात्परस्य सस्य शकारप्रसंगो नास्ति अतः शात्परस्य तवर्गस्य चवर्गो निषिध्येत । शादिति किम् याच्ञा ।

**मू०—ष्टुभिःष्टुः ॥ सकारतवर्गयोः षकारटवर्गाभ्यां योगे षकारटवर्गौ भवतः । कष्षष्ठः । तट्टीकते ।**

सुबोधिनी—ष्टुभिःष्टुः । स्तोरित्यनुवर्तते । ष् च टवश्च ष्टवस्तैः ष्टुभिः । ष् च टुश्चानयोः समाहारः ष्टु । नपुंसकनिर्देशोयमित्येके । षा सहितः टुः ष्टुः । शाकपार्थिवादित्वान्मध्यमपद लोपः इति पुँल्लिंगनिर्देशोयमित्यन्ये । इहापि स्थान्यादेशयोर्यथासंख्यं । निमित्तस्थानिनोस्तु न नषीतिनिषेधात् । स्तोः ष्टुभिर्योगे ष्टः स्यादिति ॥

**तत्त्वदीपिका**—ष्टुभिः ष्टुरिति । स्तोरित्यनुवर्त्तते समासः पूर्ववत् । अत्रापि ष्टोष्टुरित्येव सुवचम् ।

**मू०—नषि । षकारे परे तवर्गस्य टुत्वं न भवति । भवान्षष्ठः ।**

**सुबोधिनी**—नषि । तोष्टुर्न स्यात् षकारे परे । तोरिति किं । कष्षष्ठः । षीति किं तट्टीका। षीतिसप्तमीनिर्देशात्पूर्वे षकारे ष्टुत्वं स्यादेव । रोष्टीति ॥

**तत्त्वदीपिका**—नषीति । अत्र तोरित्यनुवर्त्तते । षीति किम् । तट्टीकते । षीति सप्तमीनिर्देशात्पूर्वस्य षकारस्य योगे ष्टुत्वं स्यादेव क्रोष्टा ।

**मू०—टोरंत्यात् ॥ पदांते वर्तमानाट्टवर्गात्परस्य स्तोष्टुर्न भवति । षण्नरः । षड्नरः । षट्सीदंति ।**

**सुबोधिनी**—टोरंत्यात् । स्तोरित्यनुवर्तते । अंते भवोऽन्त्यस्तस्मादंत्यात् । अंत्यशब्देन पदांतं कथ्यते । भवार्थे ण्यः । णितो वेति णित्त्वविकल्पाद्वृद्ध्यभावः । पदांते स्थिताट्टोः परस्य स्तोष्टुत्वं न भवति पदांतात्टोः किं । ईट्टे । टोः किं । सर्पिष्टमं । ञमे ञमा वेति ञमे षण्नरः । जबभावपक्षे षड्नरः नर इति बहुवचनम् ॥

**तत्त्वदीपिका**—टोरन्त्यादिति । स्तोरित्यत्रानुवर्त्तते न तोरिति । टोरिति किम् सर्पिष्टमम् । अन्त्यभावार्थे ण्यः णितोवेति वृद्धिविकल्पाद्वृद्ध्यभावः ।

**मू०—नवतिनगर्योर्न ॥ षण्णवतिः । षण्णगर्यः ।**

**सुबोधिनी**—नवतिनगर्योर्न । पदांताट्टवर्गात्परयोर्नवतिनगरीशब्दयोर्न ष्टुत्वनिषेधोभवति । टोरंत्यादिति निषेधो न प्रवर्तते इत्यर्थः । षड्भिरधिका नवतिरित्यत्र षस्य डत्वे कृते तस्य ष्टुत्वं । ततः षण्णवतिः । षड्नगर्य्यः इत्यत्र नस्य ष्टुत्वं । षण्णगर्य्यः ॥

**तत्त्वदीपिका**—पदान्तइत्यनुवृत्तेः पदान्तादिति लब्धे अन्त्यादिग्रहणमस्यानित्यत्वज्ञापनायेत्यभिप्रेत्याह नवतिनगर्य्योर्नेति षण्णवतिरिति षट्चनवतिश्च षडधिकानवतिरिति वा ।

**मू०—सुपोन । लिट्सु ॥ टनात्सस्य वा धुट् । लिट्त्सु ।**

**सुबोधिनी**—सुपोन । टवर्गात्परस्य स्यादीनांसुपः सकारस्य ष्टुत्वं न भवति ॥

**तत्त्वदीपिका**—नशान्नषीत्यत्रनञ्द्वयोपादानं ष्टुत्वस्यानित्यत्वज्ञापनार्थमित्याशयेनाहसुपो नेति । सुपः सकारस्य ष्टुत्वं नेत्यर्थः ।

**मू०—तोर्लिलः॥ तवर्गस्य लकारे परे लकारः स्यात् । तल्लुनाति । भवाँल्लिखति । अनुनासिकाननुनासिकत्वेन द्विधा यवलास्तत्र नकारस्यानुनासिको लकारः ।**

**सुबोधिनी**—तोर्लिलः । तोरिति किं । शक्नोतीति शक् । शक्लुनातीति । लिइति किं । तदन्नं । यकारवकारलकाराः सानुनासिका निरनुनासिकाश्च । तत्र सानुनासिकस्य नकारस्य स्थाने सानुनासिक एव लो भवतीत्यर्थः ॥

**तत्त्वदीपिका**—तोर्लिलइति।अत्र लघुभाष्यम् स्तोरित्यनुवर्त्तमाने तोः ग्रहणं सकारनिवृत्त्यर्थमित्येके तन्न। लकारपरस्य सकारस्याभावात् । न च कोलुनातीत्यादावंतरंगेण विसर्गेण भाव्यं । स्लावक इत्यत्रापि परत्वाद-

अत्रेदमवधेयम् । तोर्लि इत्युक्ते लकारात्परत्वात्तन्निमित्तकद्वित्वमाशंक्य विधेयसंदेहस्यानिवार्यत्वात् । किंच स्तोः श्चुभिःश्चुरित्यत्र प्रकृतस्य श्चुरित्यस्य विधेयत्वेनोपन्यासाद्वा भवाँल्लिखति इति अत्रानुनासिको लकारः ।

**मू०–उदःस्थास्तंभोस्सलोपः ॥ उत्थानम् । उत्तंभनम् ।**

सुबोधिनी– उदः स्थास्तंभोः सलोपः । उदः परयोः स्थास्तंभोः सकारस्य लोपो भवति ष्ठागतिनिवृत्तौ । स्तंभुनिरोधने । सलोपे कृते खसे चपा झसानामिति दस्य तः । उत्थानम् ॥

तत्त्वदीपिका–उदःस्थास्तंभोरिति । उदः परयोः स्थास्तंभोः सलोपः स्यादित्यर्थः । उत्थानं उत्तंभनमिति । स्थीयत इति स्थानं भावेयुट् । युवोरनाकावित्यनादेशेकृते सलोपे खसे चपाझसानामिति दकारस्य तकारः ।

**मू०–नःसक्छते । नांतस्य पदस्यावपरे छते सगागमो भवति । राजँश्चित्रम् । भवाँस्तनोति । अवपरेकिम् । सन्त्सरुः ।**

सुबोधिनी–नः सक्छते । नांतस्य पदस्य सक् स्यात् । अवः परो यस्मात्सः अवपरस्तस्मिन्अवपरे छते । किर्त्त्वादंते सकोऽकारस्तूच्चारणार्थः । कस्यांते इत्याकांक्षायां पदस्यांते भवति । नस्यापदांतत्वान्नश्चापदांते झसे इत्यनुस्वारः । तस्य सगागमो भवतीति वचने तु नस्यानुस्वारो न स्यात् । सको नकारस्य भक्तत्वात् । तस्य पदांतत्वाऽनपायात् । आगमाष्टित्कित्मितस्ते यस्य गुणीभूता यद्गुणीभूता यस्य विशेषणीकृतास्तद्ग्रहणेन कृत्वा ते आगमाः आचार्यैर्गृह्यंते अभ्युपगम्यंते । तद्यथा सगागमः पदस्य विहितः । पदं विशेष्यं सागगमो विशेषणं पदग्रहणेन सक् गृह्यते । सक्पर्यंतं पदमित्यर्थः । पदस्येति किं । हंति । नांतस्येति किं । तट्टीकते । छतेकिं । भगवन् कुरु । अवपरे छते किं । सन्त्सरुः खड्गमुष्टिः

तत्त्वदीपिका–नः सक् छते इति । अत्र पदस्य सगागमः न तु नस्य । तथा सति नस्यानुस्वारो न स्यात् । अपदान्तत्वाभावात् इत्याशयेनाह नांतस्येत्यादि । पदस्येति किम् हन्ति । न इति किम् तट्टीकते । छते किम् भगवन्कुरु । अवपरे किं सन्त्सरुः । त्सरुः खड्गादिमुष्टिः स्यात् ।

**मू०–नप्रशानः ॥ प्रशान्तनोति ।**

सुबोधिनी–नप्रशानः । प्रशानिति नांतस्य पदस्य सग् न भवत्यवपरे छते । प्रपूर्वात् शाम्यतेः क्विप् । यमांतस्योपधाया दीर्घइत्यनेनदीर्घः । मोनोधातोरितिनः । नस्यासिद्धत्वान्नलोपो न प्रशाम्यतीति प्रशान् ॥

तत्त्वदीपिका–अवेत्याकृष्य तस्य व्यवस्थितत्वाश्रयणात्म स्थानिकस्य नस्यसग्नेत्याशयेनाह । नप्रशानिति प्रशान्तनोतीति शमु उपशमे इत्यस्मात् क्विपि अमांतस्य क्वाविति दीर्घो मोनोधातोरित्यनेन नत्वे रूपम् ।

**मू०–शेचक्वा॥ नांतस्य पदस्यावपरे शे वा चगागमो भवति । भवाञ्छूरः, भवाञ्च्छूरः, भवाञ्च्शूरः, भवाञ्शूरः ।**

सुबोधिनी–शेचक्वा । नइत्यनुवर्तते, । नांतस्य पदस्य चक् स्याद्वा शे । पदस्येति किं भवांश्चिनोति । चक्वा इत्यत्र वाक्ये सा विवक्षामपेक्षते इत्युक्तत्वाज्जबाभावः । भवान्शूर इत्यत्र चगागमस्य कित्त्वात् पूर्वांतत्वेन चपाच्छःश इति छत्वविकल्पः । पक्षे हसात्परस्य झसस्येति चलोपः । नकारस्यानुस्वारपरसवर्णौ अपदांतत्वात् । भवाञ्छूरः भवाञ्चछूरः भवाञ्च्शूरः भवाञ्शूरः ञ्छौञ्चछा ञ्चश। ञ्शाविति चतुष्टयम् ॥ रूपाणा-

नुस्वारचुत्वाभ्यां परत्वात्प्राप्तं णत्वं न । कस्मात् । असिद्धं बहिरंगमंतरंगे इति परिभाषया बहिरंगयोः सकुचकोरसिद्धत्वात् अनंतेइत्यंतरंगे णत्वनिषेधे सति तच्छास्त्रं सञ्च्छंभुरित्यादौ चोः कुरिति कुत्वमपि न । अंतरंगे कुत्वे कर्तव्ये चुत्वस्य चकारासिद्धत्वात् । कुत्वविधिस्तु वाग्भ्यां वक्ष्यतीत्यादावेकपदस्थे चवर्गे सावकाशः । चपाच्छःशः अम्वयुक्ताच्छसादावित्यादिनिर्देशात् ॥

**तत्त्वदीपिका**–शेचकुर्वेति भवाञ्छूर इत्यादि ञछौञचछाञचशाञशाविति चतुष्टयम् । रूपाणामिह चकछत्वचलोपानांविकल्पनात् । पदस्येतिकिम् दंशः । नान्तस्य किम् । पश्चशः । पदस्येति किम् । भवांश्चिनोति । अत्र शीत्येव वक्तुमुचितम् मात्रालाघवात् । ननु कुर्वंस्तिष्ठ कुर्वञ्छेतेइत्यत्र अपदान्तत्वान्नस्य चुत्वादनुस्वाराच्च परत्वाच्च णत्वं प्राप्नोति । सत्यम् । अनन्त इत्यंतरंगं निषेधं प्रति बहिरंगयोश्चकुसकोरसिद्धत्वाश्रयणात् तच्छास्त्रमित्यत्रापि चुत्वेकुत्वमप्यासिद्धत्वादेव न ।

**मू०–ङ्णनोह्रस्वाद्द्विःस्वरे** ॥ ङकारणकारनकारा ह्रस्वादुत्तरा द्विर्भवंति स्वरे परे पदांते च । प्रत्यङ्ङिदम्, सुगण्णिह, राजन्निह । ह्रस्वात्किम्, प्राङास्ते । पदांते किं । परमदण्डिनौ ।

**सुबोधिनी**–ङ्णनोह्रस्वाद्द्विःस्वरे । ङ् च ण् च न् च ते ङ्णनः । पदांते इत्यनुवर्तते । ह्रस्वात्पराः पदांते स्थिताः ङ्णनः द्विः स्युः स्वरे परे । ह्रस्वादिति किं । प्राङास्ते । प्राण्आस्ते । भवान्आस्ते । ङ्णनइति किम् । आस्ते । स्वरे किं । प्रत्यङ्करोति, सुगण्ददाति, पचन्वदाति । पदांते किं । दंडिनौ । ननु समिद्दण्डिनावित्यादौ पूर्वपदस्येव चोत्तरखंडस्यापि प्रत्ययलक्षणेन पदत्वात् नस्य द्वित्वं स्यात् । उच्यते । उत्तरखंडस्य प्रत्ययलक्षणेन पदांतकार्यं न । एदोतोतः वत्विनावित्यादि निर्देशात् । अत एव परमवाचौ परमगोदुहौ, परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न भवंति ननु अनश्व इत्यादौ नस्य द्वित्वं स्यात् । उच्यते । अनंते अनपीत्यादिज्ञापनान्न द्वित्वम् ॥

**तत्त्वदीपिका**–ङ्णनोह्रस्वाद्द्विःस्वरेइतिङ्चणचनचतेङ्णनः । ह्रस्वादितिकिं प्राङ्आस्ते स्वरेइतिकिम् प्रत्यङ् करोति पदान्ते इति किं दंडिनौ । ननु समिद्दण्डिनावित्यत्र पूर्वपदस्येवोत्तरखंडस्यापि प्रत्ययलक्षणत्वेन पदत्वात् नस्य द्विर्वचनं प्राप्नोतीति चेन्न । उत्तरपदस्य प्रत्ययलक्षणेन न पदान्तकार्यतेति एदोतोतइति ज्ञापनात् । अत एव नलोपोपि न अनश्व इत्यादौ तु अनपीत्यादिज्ञापकाद्द्वित्वं न नलोपस्तु अम्विधिसामर्थ्यान्न द्विरिदि क्रियावृत्तौ द्वित्रिचतुर्भ्यस्सुरिति स्वन्तत्वादव्ययम् क्रिया चात्रोच्चारणमेव तथा च द्विरुच्चार्यो इत्यर्थो बोद्धव्यः ।

**मू०–छः** ॥ ह्रस्वात्परश्छकारो द्विर्भवति ।

**सुबोधिनी**–छः । ह्रस्वादित्यनुवर्तते छकारे अकार उच्चारणार्थः । तेन विच्छिन्नमित्यादि सिद्ध्यति ॥

**तत्त्वदीपिका**–छइति । अत्र स्वरेइत्यनुवर्त्य विभक्तिव्यत्ययेन स्वरात्इति बोध्यम् पदान्ते वेत्यनुवर्तते । तच्च वाक्यभेदेन संबध्यते विकल्पस्तु व्यवस्थितः तेन पदान्ते दीर्घादाङ्माङ्वर्जिताद्वा । स्वरादितिकिम् छत्रम् संयोगांतस्यलोप इत्यत्र वावसान इत्यतो वेत्यपकृष्य तस्य व्यवस्थितत्वाश्रयणात् क्वचिन्न इत्याशयेनाह पुंसो वपरइत्यादि । तेन ख्यातो वा समिन्नस्य राज्ञइत्यादिसिद्धम् ।

सुबोधिनी–खसेचपाझसानां । झसानां चपाःस्युः खसे परे । झसानामिति किं । खन्सु खसे किं वेद्मि ॥

**मू०–दीर्घाच्च ॥ हीच्छः ।**

सुबोधिनी–दीर्घाच्च । दीर्घात्परश्छकारो द्विः स्यात् ॥

**मू०–पदांताद्दीर्घाद्वा ॥ लक्ष्मीछाया लक्ष्मीच्छाया ।**

सुबोधिनी–पदांताद्दीर्घाद्वा । पदांताद्दीर्घात्परश्छो वा द्विः स्यात् ॥

**मू०–आङ्माङ्भ्यां नित्यम् ॥ आच्छादयति माच्छिदत् ।**

सुबोधिनी–आङ्माङ्भ्यांनित्यम् । पदांताद्दीर्घादित्यस्यापवादोयम् । आङ्माङ्भ्यां परश्छो द्विः स्यान्नित्यम् ॥

**मू०–पुंसोऽवपरेखपेसंयोगांतस्यलोपोन ॥ पुंस्कोकिलः पुंस्पुत्रः । अवपरे किम् । पुङ्क्षीरम् । खपे किं । पुन्दासः**

सुबोधिनी–पुंसोऽवपरेखपेसंयोगांतस्यलोपोन । पुंस् शब्दस्य सस्य लोपो न भवति । अवः परो यस्मात्स अवपरस्तस्मिन् अवपरे खपे । संयोगांतस्य लोप इति प्राप्तावयं निषेधः । अवपरे किं । पुंक्षीरं । सलोपोत्र । खपे किं । पुंदासः । अत्रापि सलोपः ॥

तत्त्वदीपिका–पुंस्कोकिल इति ॥ पुमांश्चासौ कोकिलश्च सः ।

**मू०–ख्याधातौवा ॥ पुंख्यानम् पुङ्ख्यानम् ।**

सुबोधिनी–ख्याधातौवा । पुंस्शब्दस्य सकारस्य लोपो वा भवति । चक्षिङःख्याञ् इति ख्याधातौ परे पुंख्यानमिति । चक्षिङो युटि रूपम् ॥

**मू०–मोनुस्वारः ॥ मकारस्यानुस्वारो भवति हसे पदांते च । तं हसति । पटुं वृथा । पदांते किं गम्यते । हसे किं । किमत्र ।**

सुबोधिनी–मोनुस्वारः । पदांते इत्यनुवर्तते । पदांते मोनुस्वारः स्यात् हसे परे । पदांते किं । गम्यते । म इति किं । भवान्हसति । हसे किं फलमस्ति । मइत्यत्राकार उच्चारणार्थः । अनुस्वार इति पूर्वाचार्याणां संज्ञा ॥

तत्त्वदीपिका–मोनुस्वार इति । पदांते किं गम्यते । मकारस्य किम् । भवान् हसति । हसे इति किम् फलमस्ति । अत्र लघुभाष्यम् । ननु मोंइति सूत्र्यताम् अत्राकारउच्चारणार्थः ततः परस्यादेशःस्यादिति । सत्यम् । संज्ञापूर्वकोविधिरनित्यो यथा स्यादित्येवमर्थमिदम् । अनुस्वार इति प्राचां संज्ञा तेन सम्राडिति सिद्धम् । वस्तुतस्तु मोंइति कर्तुं शक्यं अम्शसोरित्यादिनिर्देशेनास्यानित्यत्वज्ञापनात् सम्राडित्यादि सिद्धम् । अत्रेदमवधेयम् मों इति कृते ओअवित्यादिष्विव म इत्यस्य प्रथमांतत्वमाशंक्य ओकारस्य विधेयत्वशंकाया अनिवार्यत्वादनुस्वारस्य तत्संदेहनिराकरणायावश्यं वक्तव्यत्वात् । यत्तु अत्र म इति योगं विभज्य तत्र सकं चानुवर्त्य कश्चिन्मस्य सगागम इति व्याख्येयम् तेन पुंस्कोकिलः पुंस्पुत्र इत्यादि सिध्यतीत्युक्तम् । यत्तु पुंसोवपरेखपेसंयोगांतस्यालोप इति स्वोक्त्या विरोधादुपेक्ष्यम् ।

**मू०–नश्चापदांतेझसे ॥ नस्य मस्य चापदांते वर्तमानस्यानुस्वारो भवति झसे हकारे च परे । यशांसि । पुंभ्यां । स्वनडांहि । अपदांते किं । ब्रह्मन्**

सुबोधिनी–नश्चापदांतेझसे । चकारो मकारस्य समुच्चयार्थः । अपदांते नस्य मस्य चानुस्वारः स्यात् झसे परे । अपदांतेकिं । भवान् भाति । झसे किं मन्यते । यम्यते ।

तत्त्वदीपिका–नश्चापदान्ते झस इति । चकारो मकारस्य समुच्चयार्थः अन्यथा अपदान्ते नस्यैव स्यात् । अपदान्ते किम् । भवान् याति । अत्रापदान्तग्रहणादेतत् सूत्रपर्यन्तः पदान्त इत्यधिकारो बोध्यः । झस इति किम् । मन्यते यम्यते । अत्र हो झभा इत्यतो हकारोनुवर्त्यः स च विभक्तिविपरिणामेन सप्तम्यन्तो बोध्यः इत्याशयेनाह हकारे चेति ।

**सू०–यमायपेस्य ॥** अपदांते वर्तमानस्यानुस्वारस्य यमा भवंति यपे परे । अस्य यपस्य सवर्णाः । शान्तः । आङ्कितः । अञ्चितः । कुण्ठितः । गुम्फितः ।

सुबोधिनी–यमायपेस्य । अस्येति यपपरामर्शार्थं । अनुस्वारस्यानुवृत्त्यैवलाभात् अपदांते अनुस्वारस्य यमा भवंति यपे परे । ते यमा अस्य यपस्य सवर्णा भवंतीत्यर्थः । सानुनासिकस्यानुस्वारस्य सानुनासिकाएव यमाः स्युः । यमा इति बहुवचनं जातौ ज्ञेयं । कुंडं रथेनेत्यत्रानुस्वारस्य पाक्षिको यमो न रकारस्यानुनासिकत्वाभावात् । यपे किं आक्रंस्यते, स्वनड्वांहि । अनुस्वारस्येति किं । राजन्गच्छ, गम्यते । अंकपदे लक्षणे चेति चुरादिर्ण्यं तात् क्तः । सेटोः क्तवत्वोर्णिलोप इति णेर्लोपः । अनेनानुस्वारस्य ङः । अकिलक्षण इत्यस्माद्वा क्तः । नुमोनुस्वारे परसवर्णेन ङः । अङ्कितः । अंचेः पूजायामिडितीट् । पूजार्थस्यांचतेर्नेति नलोपोन । अंचितः । कुठि प्रतिघाते क्तः नुमोनुस्वारे परे परसवर्णेन णः कुण्ठितः । शमुउपशमे क्तः । दांतादयो वा निपात्यंते इति निपातनादिडभावः । अमांतस्योपधायादीर्घः काविति दीर्घः । मस्यानुस्वारे परसवर्णेन नकारः । शान्तः । गुंफग्रंथे क्तः । मस्यानुस्वारे परसवर्णेन मः गुम्फितः । ननु कुर्वन्तीत्यत्रानेन कृतस्य नस्य णत्वं कस्मान्न । उच्यते । असिद्धं बहिरंगमंतरंगे इति परसवर्णस्यासिद्धत्वान्न णत्वम् ॥

तत्त्वदीपिका–यमायपेस्येति । अस्येति किमर्थम् अनुस्वारपरामर्शार्थं चेन्न तस्यानुवृत्त्यैव लाभात् । न च प्रथमांतस्यानुवृत्तस्य अनुस्वारइत्यस्य षष्ठीविपरिणामार्थमिति वाच्यम् यमा इत्यादेशापेक्षया अर्थात् षष्ठीविपरिणामसंभवात् । एवं तर्हि यपपरामर्शार्थम् इत्यभिप्रेत्याह अस्य यपस्य सवर्णा इति अनुनासिकस्यानुस्वारस्य सदृशयपस्य सवर्णा अमाभवंतीत्यर्थः । तेन रेफो न भवति अनुस्वारसादृश्याभावात् । न च सादृश्याभावेपि वचनात् स्यादिति वाच्यम् यपे इत्यस्य जातिपरत्वेन यपजातीये सवर्णे यस्य जातीयस्यानुस्वारसदृशस्य विधानेन वचनस्य चरितार्थत्वात् । यत्तु यमोस्येति सूत्रं युक्तं अनुस्वारेण झसे हसे इति वा क्षेपणीयम् अनुस्वारस्य सदृशझसहसयोः सवर्ण आदेशो भविष्यतीति व्यर्थमिह । यपे इति शषसहेषु तु नातिव्याप्तिः तेषां यमे सवर्णाभावादिति तत्रेदमवधेयम् । हसाक्षेपेणैव तदंतर्गतस्य झसस्याक्षेपस्याशक्यत्वात् किंच अनुवृत्तिलब्धेनानुस्वारेण हसाक्षेपे पदान्तस्याक्षेपाच्च ।

**सू०–वापदांतस्य ॥** पदांते वर्तमानस्यानुस्वारस्य यमा वा भवंति यपे परे अस्य यपस्य सवर्णाः । त्वङ्करोषि, त्वंकरोषि । तन्तनोति, तं तनोति । सँय्यन्ता, संयंता । सँव्वत्सरः, संवत्सरः । यँल्लोकम् । यंलोकम् ।

सुबोधिनी–वापदांतस्य । अत्रानुस्वारस्यानुनासिकाएव यमा वा स्युः ॥

**मू०-मोराजिसमःक्कौ** ॥ क्विबंते राजतौ परे समो मस्य म एव स्यात् । सम्राट् ।

सुबोधिनी-मोराजिसमः क्कौ । क्विबंते राजतौ परे समो मस्य म एव । मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् । राजतौ किं गमादीनांमस्येति मलोपे ह्रस्वस्येति तुक् । संपत् । सम इति किम् । इदं राट् । क्विबंते इति किं । संराजितव्यं संराजते इति । राजृदीप्तौ । संपूर्वादस्माद्वर्तमाने क्विप् । षत्वडत्वचपत्वानि सम्राट् ।

**मू०-यवलमनपरेहकारेमस्ययवलमनावा** ॥ किंह्यः, कियँह्यः । किव्ँह्वलयति, किंह्वलयति । किल्ँह्लादयति, किंह्लादयति । किम्ह्मलयति, किंह्मलयति । किन्ह्नुते, किंह्नुते ।

सुबोधिनी-यवलमनपरेहकारेमस्ययवलमनावा । यश्च वश्च लश्च मश्च नश्च ते यवलमनाः यवलमनाःपरे यस्मात् सः यवलमनपरस्तस्मिन्यवलमनपरे हकारे मस्य यवलमना वा भवंति । ह्वलह्मलसंचलने ह्नुङ् अपनयने ॥

तत्त्वदीपिका-वेति व्यवस्थितो विकल्प इत्यभिप्रेत्याह । यवलमनपरेति हकारे इति विशेष्यम् यश्च वश्च लश्च मश्च नश्च ते ते परे यस्य स तथा तस्मिन् किंह्य इति ह्योऽतीते किंह्वलयतीत्यादि ह्वल ह्मल चलने ज्वलह्वलह्मलनमामनुपसर्गाद्वेति मित्त्वाद्ध्रस्वत्वम् । ह्नुङ् अपह्नवे अदादिः । ह्लादी सुखे कुर्वन्तीत्यत्र नस्य णत्वं तु असिद्धं बहिरंगमंतरंग इत्यसिद्धत्वात् नवेति व्यवस्थितविभाषाश्रयणात् शसेचपस्य द्वितीयो वेति टनात्सस्य वा धुट् । शसेङ्णोःकुक्टुकौ वा पकारे परेनृन्तकारस्य नृ सवा इत्यादिसंगृहीतम् ।

**मू०-शसेचपस्यद्वितीयावा** ॥ वथ्सरः, वत्सरः । अफ्सरः, अप्सरः ।

सुबोधिनी-शसेचपस्यद्वितीयावा । वर्गप्रथमानां द्वितीया भवंति शसे परे ॥

**मू०-नपदांते** ॥ तत्साधुः ।

सुबोधिनी-नपदांते । पदांते स्थितानां वर्गप्रथमानां द्वितीया न भवंति ॥

**मू०-कुक्टुग्वर्जितस्यविभक्तौन** ॥ भवत्सु ।

सुबोधिनी-कुक्टुग्वर्जितस्यविभक्तौन । चपस्यविभक्तौद्वितीया न स्युः कुक्टुकोश्चद्वितीयाःस्युर्विभक्तौ परे ॥

**मू०-टनात्सस्यवाधुट्** ॥ षट्त्सन्तः, षट्सन्तः । सन्त्सः, सन्सः ।

सुबोधिनी-टनात्सस्यवाधुट् । टश्च नश्च तयोः समाहारः टनं तस्मात्टकारनकाराभ्यां परस्य सकारस्यधुट् वा स्यात् । धुटश्च यपत्वेन तकारः । ततः शसेचपस्येत्यनेन तकास्य थो न । चपत्वस्यासिद्धत्वात् । षट्त्संतः ॥

**मू०-शसेङ्णोःकुक्टुकौवा** ॥ प्राङ्क्षष्ठः, प्राङ्ख्षष्ठः । सुगण्ट्साधुः,

सुबोधिनी—शसेङ्णोःकुक्टुकौवा । ङकारणकारयोः कुक्टुकावागमौ वास्तः शसे परे । कुगभावे प्राङ्षष्ठः, कुगागमे प्राङ्क्षष्ठः कुकौ द्वितीये प्राङ्ख्षष्ठः ॥

तत्त्वदीपिका—ङ्चणचङ्णौ तयोः ङस्य कुक् णस्य टुक् भवतीत्यर्थः वर्ग्यत्वात् ।

**मू०—पकारेपरेनॄन्नकारस्यनॄसवा ॥**

सुबोधिनी—पकारेपरेनॄन्नकारस्यनॄसवा । नॄनित्यस्य नकारस्य न्सूआदेशः स्याद्वा पकारे परे । अकार उच्चारणार्थः । तेन नॄः पुनाति इत्यादि सिद्ध्यति ॥

**मू०—स्रोर्विसर्गः ॥ सकाररेफयोर्विसर्गो भवति ।**

सुबोधिनी—स्रोर्विसर्गः । स्च र्च स्रौ तयोः स्रोः । पदांते स्रोर्विसर्गः स्यात् । धात्वधातुसाधारणमिदम् ॥

**मू०—अधातोरसेपदांतेच ॥**

सुबोधिनी—अधातोरसेपदांतेच । अधातोः स्रोर्विसर्गः स्याद्रसे परे, पदांते च । पदांते किम् । स्यात् । ब्रूयात् । पयसी । वारि । रसे किं । चातुर्यं । सुप्प्रत्यये परे रस्य विसर्गो न । चतुर्ष्विति निर्देशात् । तेन गीर्षु, वार्षु, पूर्षु इत्यादि सिद्ध्यति । नार्पत्यः, भार्गवः इत्यादौ तु बहिरंगाया वृद्धेरसिद्धत्वान्न विसर्गः । वर्ष्म वर्त्मेत्यादौ कर्तृसाधनयोरिति निर्देशान्न विसर्गः ॥

**मू०—कुप्वोःᳵकᳶपौवा ॥ कवर्गपवर्गसंबंधिनि खसे परे विसर्गस्य ᳵक ᳶपौ भवतः । कपावुच्चारणार्थौ । नॄँᳶपाहि नॄँःपाहि, नॄन्पाहि ॥ इति हससंधिः ॥**

सुबोधिनी—कुप्वोः ᳵक ᳶपौ वा । आदेशनिमित्तयोर्यथाक्रममत्रास्ति । आदेशे ककारपकारावुच्चारणार्थौ । केवलयोर्जिह्वामूलीयोपध्मानीययोरुच्चारणासंभवात् । किंच । ककारखकारयोः परतः ᳵकः स्यात् । पकारफकारयोश्च ᳶपः स्यात् । कुप्वोरिति किं कश्चारः । वाग्रहणात्पक्षे विसर्गः । विसर्जनीयस्य स इत्ययस्यापवादोयम् । उपध्मानीये नॄं ᳶ पाहि । विसर्गे नॄंःपाहि । नॄ भावे नॄन्पाहि ॥

॥ इति हससंधिः ॥

तत्त्वदीपिका—कुप्वो ᳵ क ᳶ पौवेति । कुश्च पुश्च कुपू तयोः । अत्रादेशनिमित्तयोर्यथाक्रमम् । आदेशो कपावुच्चारणार्थौ केवलयोरुच्चारणासंभवात् कखयोःᳵकः पफयोःᳶपःअन्यत्रोत्तरविधिभिर्बाधनात् ।

श्रीविद्यानगरस्थायीपौत्रोरामकरस्याहि । हससंधेर्व्यधाद्व्याख्यांसहिलोकेशसंज्ञकः ।

इतिहससंधिः ।

## विसर्गसंधिः ।

**मू०—विसर्जनीयस्यसः ॥ खसे परे । कस्तनोति ।**

सुबोधिनी—विसर्जनीयस्यसः ।

तत्त्वदीपिका–अथविसर्गसंधिः ॥ विसर्जनीयस्यसइति । आसंधिसमाप्तीदं षष्ठ्यन्तमधिक्रियते । परिशेषात् खसे एवास्य प्रवृत्तिः । अन्यत्र तूत्तरसूत्रैस्तत्र तत्र बाधः विसर्गस्य सः इति नोक्तम् । पर्यायशब्दानां गौरवलाघवयोरनपेक्षणात् । यत्तु प्राचामुपहासार्थंविसर्जनीयादिग्रहणं प्राञ्चो लाघवं न जानन्तीत्युक्तम् तत्रेदमवधेयम् । प्राञ्चोऽत्र के विवरणकर्त्तारः सूत्रकर्त्तारो वा । आद्ये सूत्रस्थगौरवेण तेषामुपहासासंभवात् । अन्ते सरस्वत्याः सूत्रकर्तृत्वेन तदुपहासे प्रत्यवायसंभवात् । न निंदेन्मनसा वाचा सर्वव्याधिपराङ्मुख इति निषेधदर्शनात् अः सः इति सूत्रणीयं यद्विसर्जनीयस्येत्युक्तम् तत्संज्ञापूर्वकत्वेन सस्यानित्यबोधनार्थम् । तेन कः साधुरित्यादि सिद्धम् । ननु कुप्वो ≍ क ≍ पावित्यस्य वैकल्पिकत्वात् पक्षे सत्वं कुतो नेति चेन्न शेषाः कार्य्यैं इति निर्देशेन ≍क≍पाभ्यामुक्ते पक्षे सत्वप्रवृत्त्यभावस्य ज्ञापनात् अत्र वेत्यनुवृत्तस्य व्यवस्थितविभाषाश्रयणात् शसेवासकारः ।

**मू०–शसपरेखसेविसर्जनीयस्यविसर्गएव ॥ कःत्सरुः, घनाघनःक्षोभणः ॥**

सुबोधिनी–शसपरे खसे विसर्जनीयस्य विसर्ग एव । शसः परो यस्मात्स शसपरस्तस्मिञ्शसपरे खसे विसर्जनीय एव भवति न त्वन्यत् । यदि तु शसपरे खसे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धे ≍ क ≍ पौ स्याताम् । विसर्गवचनात्तु विकारमात्रमपि निषिध्यते तेन वासः क्षौमं, अद्भिः प्सातमित्यादौ विसर्ग एव ॥

तत्त्वदीपिका–शसपरे खसे इत्यादि । शसः परो यस्मात्सः शसपरः तस्मिन् ।

**मू०–शसेवा ॥ कश्शूरः कःशूरः । कष्षण्ढः, कःषंढः । कस्साधुः, कःसाधुः ।**

सुबोधिनी–शसेवा । शसे परे विसर्जनीयस्य विसर्जनीय एव वा भवति । पक्षे सः । कस्शूरः, श्चुत्वं कश्शूरः । कःषंढः, कस् षंढः ष्टुत्वं कष्षंढः ॥

**मू०–खपपरेशसेविसर्गस्यलोपोवा॥हरिस्फुरति, हरिःस्फुरति, हरिस्स्फुरति । कुप्वोः ≍क≍ पौवा । क ≍ करोति, कःकरोति । कः पचति क≍पचति ।**

सुबोधिनी–खपपरेशसेविसर्गस्यलोपोवा । खपः परो यस्मात्सः खपपरः तस्मिन्खपपरे शसे । विसर्जनीयस्य लोपो वा भवति । वाग्रहणात्पक्षे शसे वेति विसर्गे सत्वे च त्रैरूप्यं हरिस्फुरति, हरिःस्फुरति, हरिस्स्फुरति ॥

तत्त्वदीपिका–खपपरे इति । खपःपरो यस्मात्सः खपपरः तस्मिन् । एतत्सर्वं व्यवस्थितविभाषाश्रयणादेव । कुप्वोः≍क ≍पाविति व्याख्यानं पूर्वोक्तमेव ।

**मू०–वाचस्पत्यादयोनिपातात्सिध्यंति॥वाचस्पतिः,बृहस्पतिः, तस्करः, कौतस्कुतः, कान्कान्, कांस्कान्, कस्कः, भास्करः, पयस्पाशं, यशस्कल्पम्, यशस्कम्, यशस्काम्यति, सर्पिष्पाशं, सर्पिष्कल्पम्, सर्पिष्कम्, सर्पिष्काम्यति, नमस्करोति, पुरस्करोति, निष्प्रत्यूहम्, आविष्कृतम्, तिरस्कर्ता, द्विष्करोति, द्विः करोति, त्रिष्करोति, त्रिः करोति, चतुष्करोति, चतुःकरोति, चतुष्कपालं, सर्पिष्करोति, सर्पिः करोति, धनुष्करोति धनुःकरोति, सर्पिष्कुण्डिका अयस्कारः, अयस्कामः, अयस्कुम्भः, अयस्पात्रं, अयस्सहिता कुशा**

[illegible] । आकृतिगणोऽयम् । अविहित-

सुबोधिनी–वाचस्पत्यादयो निपातात् सिद्ध्यंति । सिद्धस्वरूपोच्चारणं निपातन शब्दाःसिद्धिं यांति । वाचःपतिरित्यत्र षष्ठ्या अलुक् । निपातनाद्विसर्गस्य सत्वं वाचस्प तत् चौर्यं करोतीति तकारस्य सत्वं निपातनात् तस्करः । बृहतां पतिरिति निपात तकारस्य सत्वं बृहस्पतिः । कुतःकुत आगत इत्यत्र त्यतनावित्यनेनाव्ययात्त्यप्प्रत्यये गणपाठसामर्थ्यादण्प्रत्ययष्टिलोपश्च । निपातनाद्विसर्गस्य जिह्वामूलीयाभावः । कौतस्कुत कान्कानिति । अत्र एकः किंशब्दः प्रश्ने द्वितीयो निंदार्थे । सगागमाभावोत्र भिन्नार्थत्वा गणे चाम्रेडितस्यैव ग्रहणं कान् कुत्सितान् पश्यसीत्यर्थः । कांस्कानिति । अत्र आम्रेडि त्वात्तु पूर्वनकारस्य सगागमो भवति निपातनात् । कांस्कान् । कान्कान् पश्यतीत्य कःक इति कस्कः । जिह्वामूलीयाभावोत्र । भासः करोतीति भास्करः । जिह्वामूलीया वः । कुत्सितं पयइति पयस्पाशं । कुत्सायामिति पाशः । ईषन्न्यूनं यश इति यशस्कल्प ईषदसमाप्ताविति कल्पः । कुत्सितं यश इति कुत्सितेर्थे कः यशस्कम् । आत्मनो यश इ तीति काम्यश्चेति काम्यप्रत्ययः यशस्काम्यति इत्यादौ विसर्गस्य जिह्वामूलीयोपध्मानी भावो निपातनात् । कुत्सितं सर्पिरिति सर्पिष्पाशम् । ईषन्न्यूनं सर्पिरिति सर्पिष्कल्पं । कुत्सि सर्पिरिति सर्पिष्कं । आत्मनः सर्पिरिच्छतीति सर्पिष्काम्यति । इत्यादौ विसर्गस्य षत्वं नि तनात् । नमस्करोति नमःकरोतीत्यत्र विकल्पेन सकारविसर्गौ निपातनात् । पुरस्करोति त्र जिह्वामूलीयाभावः । निष्प्रत्यूहं, आविष्कृतं, दुष्कृतमित्यादौ विसर्गस्य षत्वं निपात त् । तिरस्कर्ता, तिरःकर्तेत्यत्र विकल्पेन सकारविसर्गौ । द्वौ वारौ करोतीति द्विष्क द्विःकरोति । त्रीन् वारान्करोतीति त्रिष्करोति । त्रिःकरोति । चतुरो वारान् करोति चतु रोति, चतुःकरोति । द्वित्रिचतुर्भ्य इति सुः । चतुर्षु कपालेषु संस्कृत इत्यर्थे अण् । द्वि मासेऽणो लुक्च । चतुष्कपालः, चतुःकपालः । सर्पिष्करोति, सर्पिःकरोति, धनुःकरोति, ष्करोति इत्यादौ विकल्पेन विसर्गस्य षत्वविसर्गौ निपातनात् । सर्पिषो घृतस्य कुंडि सर्पिष्कुंडिका । नित्यं षत्वमत्र । अयसःकार इत्ययस्कारः, अयसःकाम इत्ययस्कामः यसः कुंभ इत्ययस्कुंभः, इत्यत्र विसर्गस्य जिह्वामूलीयाभावः । अयसःपात्रमित्ययस्पात्रमित्य पध्मानीयाभावः । अयःसहिता कुशेत्ययस्कुशा । वेदे औदुम्बरशंकुकुशेति व्यवहारं अयोविकारे तु कुशीति । अयइवकर्णौ यस्याः सा अयस्कर्णी नासिकोदरेतीप् । अत्र जि मूलीयाभावः । पदस्याध इत्यधस्पदं, शिरसः पदमिति शिरस्पदमित्यत्रोपध्मानीयाभा आकृत्या स्वरूपेण गण्यते यः सआकृतिगण इति ॥

तत्त्वदीपिका–अत्रापि वेत्यस्य व्यवस्थितत्वात् अनेकार्थलाभ इत्याशयेनाह । वाचस्पत्यादय इति । स्पतिरित्यत्र तकारस्य सकारः तस्करइत्यत्र तकारस्य । एवमन्येपि ।

मू०–रोऽरात्रिषु ॥ अह्नो विसर्जनीयस्य पदान्ते रो भवति । न तु रात्र्या दिषु । अहर्गणः अहरहः । अरात्रिषु किं । अहोरात्रः । अहोरूपं । अहोरथन्तरम् ।

सुबोधिनी–रोऽरात्रिषु । पदांतेऽहन्शब्दस्य विसर्गस्य रः स्यात् । रात्र्यादिवर्जितेषु पर रात्रिष्विति बहुवचनमादिशब्दार्थे । तेन रात्रिरात्ररूपरथंतराणि रात्र्यादयः । अह्नां गण त्यहर्गणः । अहः इति नस्य रः । अहः अहः इत्यहरहः । वीप्सायां द्वित्वं । अहश्च

त्रिरेषा, इदमह एषा रात्रिरस्तीत्यर्थः। प्रशस्तमह इत्यहोरूपं । प्रशंसायामिति रूपः। अहोरूपः। गुणवाचको रूपशब्दोप्यत्र। रथंतरं सामवेदसंज्ञा। अहोरथंतरं। एषुविसर्गस्यउत्त्वं तत ओत्वं। पदांते किं। अहोभ्याम् ॥

**तत्त्वदीपिका**—रोऽरात्रिष्विति। अरात्रिष्विति बहुवचनात् रात्र्यादि गृह्यते अहोरात्र इति एकदेशविकृतस्यानन्यवत्त्वाद्रात्रशब्दस्यापि ग्रहणम्। रात्राह्नाहाः पुंसीति नियमात्पुंस्त्वम्। गतमहोरात्रिरेषेति मुख्यःप्रयोगः।

**मू०—अतोऽत्युः ॥** अकारात्परस्य विसर्ज्जनीयस्योकारो भवत्यति परे। कोर्थः।

**सुबोधिनी**—अतोऽत्युः। आदवेलोपशित्यस्यापवादोयम्। अतः परस्य विसर्गस्य उत्त्वं स्यादति। अत इति किम्। अग्निरत्र। तपरः किं। देवा अत्र। सुस्रोतः ३ अत्र। दूराद्धूते इति प्लुतः। अतीति किं। देव इह। तपरः किं। देव आगतः। तिष्ठतु पयः, अग्निदत्तेत्यत्र गुरोरनृत इति प्लुतः। विसर्गस्य उत्त्वे ओत्वे च एदोतोत इत्यल्लोपः। कोऽर्थः ॥

**तत्त्वदीपिका**—अतोत्युरिति। अत इति किम्। हरिरत्र। तपरः किम्। देवा अत्र। अतीतितपरः किम् देव आगतः विसर्गस्येति किं नाम मनुः। आदवेलोपश् इत्यस्यापवादोयम्।

**मू०—हवे ॥** अकारात्परस्य विसर्ज्जनीयस्योकारो भवति हवेपरे। देवोयाति। मनोरथः।

**सुबोधिनी**—हवे। अत इत्यनुवर्तते। अतः परस्य विसर्गस्य उत्वं स्यात् हवे। आदवेलोपशित्यस्यापवादोयम्। अतः किम्। वायुर्वहः। तपरः किं। वेधावन्द्यः। हवे किम्। देवः पश्यति ॥

**तत्त्वदीपिका**—हवे इति लोपशोपवादः। अतः किं भानुर्वेद्यः। तपरः किम् वेधानम्यः। हवे किं रामः कर्त्ता। अत्र लघुभाष्यम्। अतोहवे उरित्येकयोगो न कृतोस्यानित्यत्वज्ञापनाय तेन उषर्बुध इत्यादिसिद्धम्। अत्रेदमवधेयम्। कुप्वो ᳲक ᳲपौ वेत्यस्य व्यवस्थितत्वाश्रयणेनैव वाचस्पत्यादीनां सिद्धत्वेनोषर्बुध इत्यत्रापि रत्वसिद्धेरनित्यत्वज्ञापनस्यानुचितत्वात् किंच ज्ञापितेप्यस्यानित्यत्वे आदवेलोपश् इत्यस्याप्राप्तौ रेफार्थयत्नस्य त्वयाऽप्यभ्युपगमात्।

**मू०—आदवेलोपश् ॥** अवर्णात्परस्य विसर्जनीयस्य लोपश् भवत्यवे परे। देवा अत्र। वाता वान्ति। देवाइह।

**सुबोधिनी**—आदवेलोपश्। आदिति पंचम्यन्तं। न तु तपरत्वं। दिवऔ इत्यादिनिर्देशात् अवे किं। देवाः संति ॥

**तत्त्वदीपिका**—आदवेलोपशिति। नन्वाद्ग्रहणं किमर्थम्। न चेकारादिनिवृत्त्यर्थं नामिनोर इति रेफेण बाधितत्वात् न च ह्रस्य व्यावृत्त्यर्थहसाद्विसर्गस्यासंभवात्। तस्मादुत्तरार्थमेव। नन्ववग्रहणं किमर्थं न च ह्वग्रहणाननुवृत्त्यर्थं ब्रुवआह पूर्वउपधेत्यादिनिर्देशस्यज्ञापनात् नाप्युत्तरार्थम् असंदेहार्थं लाघवार्थं च तत्रैवाकारिष्यत्। नाप्यवसानबाधनार्थं ज्ञापकादेव तत्राप्यस्याप्रवृत्तेः तथाहि यदाप इति सिलोपं शास्ति तज्ज्ञापयति नानेनावसाने लोपश्भवतीति। अन्यथास्त्रोर्विसर्गलोपशोः कृतयोर्गंगेत्यादिसिद्धौ किम् सिलोपविधानेन। ननु लोपशि सति गंगात्रेत्यादौ संधिर्न स्यादतो लोपविधानं न ज्ञापकमिति चेन्न यस्मिन्स्वरे परे लोपश् तेन सह संधिर्नेति ज्ञेयं वस्तुतोवसानेति प्रसंगवारणार्थमेवावग्रहणम्। ननु आद्यो अवे इत्येव सूत्र्यतां स्वरे यत्वं वेति तु न कर्त्तव्यम् देव इहेत्यादौ यकारे य्वोर्लोपश्वेत्यनेन लोपशि कृते रूपसिद्धेः न च तत्र याद्यनुवर्त्तनादस्य कथं लोप इति वाच्यं वात्पूर्वमवर्णं गृहीत्वा अप इत्यादिरूपसंभवात् लक्षणप्रतिपदोक्तयोः परिभाषायास्तु अनित्यत्वा-

**मू०—स्वरेयत्वंवा ॥ देवायिह ।**

**सुबोधिनी**—स्वरेयत्वंवा । लोपशोविकल्पेनाऽपवादोयम् । अवर्णात्परस्य विसर्गस्य य वा स्यात् । पक्षे लोपश् । स्वरे किं । रामश्चतुरः ।

**तत्त्वदीपिका**—स्वरे यत्वं वेति । अवर्णात्परस्य विसर्जनीयस्य स्वरे यत्वं वेत्यर्थः ।

**मू०—भोसः ॥ भोस्भगोस्अघोस् इत्येतस्य विसर्ज्जनीयस्य लोपश् भवत्यवे परे । भोहरे । भगोनमस्ते । अघोयाहि । स्वरेयत्वंवा । भोस्भगोस्-अघोस्विसर्गस्य स्वरे यत्वं वा भवति । भोयेहि, भगोयेहि, अघोयगच्छतु ।**

**सुबोधिनी**—भोसः । भोस् भगोस् अघोस् इति सकारांता निपाताः संति । तत्राऽऽद्यंत भ्यां प्रत्याहारो भोस इति गृहीतः । भोसः इति षष्ठ्यंतं । भोसः भोस् भगोस् अघोस् विसर्गस्य लोपश् स्यादवे । अवे किं । भोस्तपस्विनः । स्वरे यत्वं वा । भोस्भगोस्अघो विसर्गस्य यत्वं वा भवति स्वरे । पक्षे लोपश् ॥

**तत्त्वदीपिका**—भोस इति षष्ठ्येषा नतु पंचमी भोःशब्दस्य सान्तत्वेन ततः परस्य विसर्गस्याभावादि भिप्रेत्याह भोस् भगोस् अघोस् इत्येतस्येति भोस् भगोस् अघोस् इत्येतस्मात्परस्येति तु प्राचः प्रमाद एव । भे इत्यत्र निपातभवच्छब्दयोरपि सामान्येनानुकरणम् तथा च भो देव भो लक्ष्मि भो विद्वन् इत्यादिसिद्धम् । न भोस इत्यत्र भोस्मात्रग्रहणात् भगो इह अघोयाहीत्यादावव्याप्तमिति वाच्यम् । प्रत्याहाराश्रयणेनाव्याप्तिवारणात् च विभोरित्यादावतिप्रसंगवारणं च संभवति तस्य प्रत्याहारेऽनंतर्भावात् अत्र लघुभाष्यं । ननु अभोसोलोपशि त्येकयोग एव लाघवाय कर्त्तुमुचितः उच्यते नञ्समासोत्र प्रतीयेद् भोस्व्यतिरिक्ताच्छब्दात्परस्येति । अथै द्दोषवारणाय अभोसोरवेलोपशिति सूत्रणीयम् तदर्द्धमात्रालाघवेऽपि वैरूप्यं दोषः भोसोऽवयवोऽवर्णात्पर इ सूत्रभेदे तु नायं दोष इति सूत्रभेद एवाश्रितः अत्रेदमवधेयम् । आद्भोसोवेलोपशितिसूत्रणीयम् । तथा च नञ्समासभ्रमवैरूप्यदोषयोरसंभव एव आदित्यस्य पंचम्यंतत्वात् । भोस इत्यस्य षष्ठ्यन्तत्वात् च भोसोऽवय ऽवर्णात्तु पर इत्यस्यार्थस्य सुलभत्वात् एवं च स्वरे यत्वंवेत्यस्याद्विरुक्तिश्चेति महल्लाघवम् ।

**मू०—नामिनोरः ॥ नामिनः परस्य विसर्ज्जनीयस्य रेफो भवत्यवेपरे । अग्निरत्र पटुर्वक्ता । उषसोबुधे । उषसो विसर्ज्जनीयस्य रेफो भवति बुधे परे । उषः बुधः । उषर्बुधः ।**

**सुबोधिनी**—नामिनोरः । नामिन इति किम् । रामो वंद्यः । अवे किं अग्निः करोति ।

**तत्त्वदीपिका**—नामिनोर इति । ननु नामिन इति किमर्थम् । अवर्णाल्लोपशादिविधानेनच तस्यै परिशेषात् यत्तु नामिनइति योगविभागे आदवेलोपशित्यतोऽवे लोपशिति चानुवर्तते क्वचिन्नामिनः परस्य विस र्गस्यावेलोपशि तेन सेमांभूमाददे इत्यादि सिद्धमित्याहुः तन्न । सेमामित्यादेश्छांदसत्वात् । छंदसि दृष्टानुविधि रित्यस्योक्तत्वात् । सेमां भूम्याददे इत्यत्रापि भूमिशब्दस्य कृदंतत्वेन कृदिकारादिति ईपिकृते हसे पः सेलों इति सिलोपे इष्टसिद्धेः । उच्यते नामिनोर इत्यत्र योगविभागार्थं नामिग्रहणं । तथा च वाक्यभेदेन व्याख्यानं नामिन इत्येको योगः तत्र खपे वेति चानुवर्त्य र इतिषष्ठ्यन्तं च कृत्वा च वाक्यभेदेन व्याख्येयमित्याशयेनाह

**मू०—रेफप्रकृतिकस्यखपेवारेफः ॥ गीःपतिः, गीर्पतिः, गीᳶपतिः, । अह-**

सुबोधिनी—रेफप्रकृतिकस्यखपेवारेफः । प्रकृतिर्मूलकारणं यस्य स रेफप्रकृतिकस्तस्य रेफप्रकृतिकस्य विसर्गस्य रकारो वा भवति खपे परे । वा ग्रहणात् पक्षे विसर्गोपध्मानीयौ ॥

तत्त्वदीपिका—रेफप्रकृतिकस्य खपेवेति । रेफः प्रकृतिर्यस्य सः तथा तस्य । वस्तुतस्तु रेफप्रकृतिकस्येति नोचितम् वक्तुं रइति सूत्रार्थेनैव तद्गतार्थे । रइति षष्ठ्येषा न तु पंचमी ।

**सू०—अहन् ॥ अहर्पतिः अहःपतिः, अह॒पतिः ।**

सुबोधिनी—अहन् । अहन्शब्दस्य विसर्गस्य रो भवति । रात्रिष्विति रत्वे विसर्गे च कृतेऽयं विधिः प्रवर्तते । अहर्पतिः, अहःपतिः, अह॒पतिः ॥

**सू०—रः ॥ रेफसम्बन्धिनो विसर्जनीयस्य रेफो भवत्यवे परे । प्रातरत्र अन्तर्गतः ।**

सुबोधिनी—रः । षष्ठ्यंतमिदं । रेफस्य स्थाने विहितो यो विसर्ज्जनीयस्तस्य रो भवत्यवे परे । अवे किं । प्रातःकालः । रेफप्रकृतिकस्येति किं । रामो नम्यः ॥

**सू०—रिलोपोदीर्घश्च ॥ रेफस्य रेफे परे लोपो भवति पूर्वस्य च दीर्घः । पुना रमते, हरी राजते, भानू रम्यः, शम्भू राजते ।**

सुबोधिनी—रिलोपोदीर्घश्च । र इति षष्ठ्यंतमनुवर्तते । रि इति सप्तम्यंतं । रो लोपः स्याद्रेफे परे । चकारो विधेययोर्लोपदीर्घयोः समुच्चारणार्थः । तेन पूर्वस्वरस्य दीर्घश्च । रीति किम् । प्रातर्वायुः । र इति किम् । मनोरथः ॥

तत्त्वदीपिका—रिलोपो दीर्घश्चेति । रि इति सप्तमी अत्र र इति षष्ठ्यन्तमनुवर्त्तते इत्यभिप्रेत्याह । रेफस्येति । रीति सप्तमीनिर्देशाल्लोपनिमित्तात् रेफात्पूर्वस्येत्याशयेनाह पूर्वस्येति । चकारो विधेययलोपदीर्घयोः समुच्चयस्य द्योतकः ।

**सू०—सैषाद्धसे ॥ सशब्दादेषशब्दाच्च परस्य विसर्ज्जनीयस्य लोपो भवति हसे परे सचरति । एष हसति ।**

सुबोधिनी—सैषाद्धसे । सश्च एषश्च तयोः समाहारः सैषं तस्मादनञ्समासेऽककारात्सैषात् परस्य विसर्गस्य लोपः स्यात् हसे परे । स इति, एष इति च कृतात्वसत्वस्य तच्छब्दस्य एतच्छब्दस्य चानुकरणम् । अनुकार्य्यानुकरणयोरभेदेऽर्थवत्त्वाद्विभक्त्युत्पत्तौ सत्यां द्वंद्वे विभक्तिलोपे च कृते नामत्वात् ङसि परतः स्मटोऽभावः । द्वंद्वे सर्वादीनां न सर्वकार्यमित्युक्तत्वात् । अककारात् किम् । एषको रुद्रः । अनञ्समासे किम् । असःशिवः । हसे किम् एषोत्र ॥

तत्त्वदीपिका—सैषाद्धसे इति । सश्च एषश्च तयोस्समाहारस्सैषं तस्मात् स इति तच्छब्दस्य कृतात्वसत्वस्यानुकरणं । एष इत्येतच्छब्दस्य अनुकार्यानुकरणयोर्भेदादर्थवत्त्वम् । स्मटोभावो द्वंद्वे सर्वादीनां सर्वकार्याभावो ज्ञापितः सधातुरित्यादिज्ञापकात् तच्छब्दस्यैवानुकरणम् । तत्साहचर्य्यादेषशब्दोप्येतच्छब्दस्यैव विकृत-

यथा । शुक्लः कृष्ण इत्यादयः । क्रियाशब्दा यथा । पाचकः गंतेत्यादयः । द्रव्यशब्दा यथा । डित्थं कपित्थमित्यादयः । ननु वंध्यापुत्राभावशशविषाणगगनकुसुमादीनामर्थाऽभावादेषां नामसंज्ञा न स्यादिति चेदुच्यते । अभावोपि पदार्थांतरत्त्वेनाभिधेयवत्वाद्भावशब्दस्य सिद्धा संज्ञा । वंध्यादिशब्दार्थः पुत्रादिशब्दार्थश्च प्रसिद्ध एव । तयोः संसर्गमारोप्य शब्दप्रयोगसंभवात्तेषामप्यस्ति । विभक्तिरहितमिति किं । हरिषु, करोषि । सुप्सिपोर्माभूत् पदादित्वात्सस्य षो न स्यात् । विभक्त्यंतरहितमिति किं । देवौ । भवंति । अत्र द्वित्वाद्यनभिधानेप्यऽव्ययादिवच्चैकवचनं स्यात् धातुवर्जितमिति किं । अहनीत्यत्र नाम्ने नोलोपशित्यनेन लोपश् स्यात् । अहन्नित्यत्राह इत्यनेन सत्वं तु न । तस्य लाक्षणिकत्वात् । अर्थवदिति किं । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । अत्र वार्तिकम् । कृत्तद्धितसमासाश्चेति । चकारोऽनुक्तसमुच्चयार्थः । तेन निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति ॥

**तत्त्वदीपिका—अविभक्तिनामे**ति । विभक्तेरन्यत् इति । अविभक्तिविशेष्यं तु शब्दस्वरूपं तंत्रादिना विभक्त्यंतमपि लब्धम् । ननु सूत्रे अविभक्तीत्येतावन्मात्रमर्थवद्ग्रहणं कुतो लब्धमिति चेत् । उच्यते । द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्॥ १॥प्राधान्यन्तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः सविज्ञेयो यत्रोत्तरपदेन नञ्॥ २॥अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यस्तु सविज्ञेयः क्रियया सह यत्र नञ् इति । ३ ॥ तथा च पर्युदासोऽत्र नञ् गृह्यते ततश्च विभक्तेरर्थत्वात् तत्सदृशमर्थवदेव संज्ञि उपपततीत्यर्थवल्लाभः । तंत्रादिलब्धविभक्त्यन्तपर्युदासाद्धातुपर्युदासोपि । अर्थवदिति किम् । धनं वनमित्यत्र प्रतिवर्णं संज्ञा मा भूत् । तस्यां सत्यां स्याद्युत्पत्तौ नलोपः प्रसज्येत । ननु च एकवर्णानामप्यर्थदर्शनादेतीत्यादाविव देवादिष्वपि वर्णा अर्थवन्तः कथं न । तथा च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति भाष्येपि श्रीमत्पतंजलिनोक्तम् उदाहृतं च कूप इति ककारेसति कश्चिदर्थो गम्यते यूप इति यकारे अर्थान्तरं तेन मन्यामहे । यः कूपे कूपार्थः सककारस्य यो यूपे यूपार्थः स यकारस्येति तथा ब्राह्मण इत्युक्ते योर्थो गम्यते नासौ बकारादीनामन्यतमापायेतिगम्यते । येषां च संघातो यत्कार्यं करोति ते प्रत्येकमपि तत्कुर्वंति ॥ यथा तिलानां खारी तैलमुत्पादयति प्रत्येकं च तिलाः ये तु यस्मिन् प्रत्येकमसमर्थास्तेषां समुदायोपि तत्रासमर्थः यथा प्रत्येकं सिकतास्तैलं नोत्पादयंति तेषां खार्य्यपि । अतः संघातार्थवत्त्वाच्चार्थवन्तो वर्णाः तत्कथनमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिरिति चेत् उच्यते अनर्थका वर्णाः प्रतिवर्णमर्थानुपलब्धेः । नहि ब्राह्मण इत्यत्र ब्रा इत्युक्ते कश्चिदर्थो गम्यते अतो धात्वादीनामेकवर्णानामर्थवत्त्वादन्येपि वर्णा अर्थवन्त इत्यनुपलब्धिवादिमतमेतत् किंच कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वादन्येपि वर्णानामानर्थक्यमभ्युपगतं स्यात् अथ तेषामप्यर्थवत्त्वम् भूयिष्ठः कूपे यूपार्थः स्यात् । कूपार्थश्च यूपे । यत्र भूपसार्थानामन्वयोव्यतिरेकस्तु कस्यचित् ॥ तत्रार्थानामपि भूयसामनुवृत्तिव्यतिरेकस्तु कस्यचित् यथा देवदत्त गामानय शुक्लां, देवदत्त गामानय कृष्णामिति अतः संघाता एव तेनार्थेनार्थवंतः संघातार्थवत्त्वाच्चेति हेतुरनैकान्तिक इति शंका तैलाग्निवर्त्तिसंघातेन दीपो न प्रत्येकं । रथावयवैश्चक्रादिभिः संहितैः व्रजिक्रिया । किंचार्थवत्तां विपर्यासे अर्थप्रत्ययस्याविपर्यासः आहर पात्रं पात्रमाहरेति । अपाये चाणयः गामानय शुक्लां शुक्लां गामानयेति उपजने चोपजनः गामानय शुक्लामिति । वर्णेषु नैवं हिनस्ति इति सिंहः हंति हतः घ्नंति भविता । अतः संघाता एवार्थवन्तः विभक्तिरहितमिति किम् । हरिषु करोषि । सुप्सिपोर्मा भूत् । पदादित्वात्सस्य षो न स्यात् । विभक्त्यन्तरहितमिति किम् देवा भवन्ति । अत्र द्वित्वाद्यभिधानेप्यव्ययादिवच्चैकवचनंस्यात् । धातुवर्जितमिति किम् । अहन् नलोपश् स्यात् । यत्तु प्राक्चोक्तम् । अथ विभक्तिर्विभाव्यते । तत् व्याख्यातृभिश्च व्याकृतं संधिप्रकरणकथनानन्तरं ये विधयो वक्ष्यंते तेषां विभक्तिसंज्ञा स्यात् । सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यत इति विभक्तिशब्दावृत्त्या योज्यम् ॥ स्वमते शब्दार्थयोरभेदोपचारादित्यर्थः । अभेदोपचाराच्च द्वितीयोविभक्तिशब्दः संज्ञिवचनः आदिः संज्ञावचनः महासंज्ञाकरणं तु विभज्यंते [illegible]

विभज्यते प्रकटीक्रियते कर्तृकर्माद्यर्थोऽनया सा विभक्तिः अतिप्रसक्तं योगमात्रं कृदादौ यद्यपि तथापि स्यादिषु तिबादिषु च योगरूढिः । यच्च कृत्तद्धितसमासाश्चेति वार्तिकं । चकारो नामसंज्ञानुकर्षणार्थः अत्र तद्व्याख्यातारः ननु किमर्थमिदं नामसंज्ञा तु पूर्वेणैव सिद्धा न सिद्ध्यति । तत्र कृत्सु क्विबाद्यंतानां धातुत्वानपाया अतएव हे सोमपा इति धिलोपो न स्वार्थतद्धितानामपि गुणीभूतार्थवत्त्वात् । तथाहि । चोर एव चौरः स्वार्थेऽ अत्र हि चोरशब्दस्य साक्षादर्थवत्त्वं चौरशब्दस्य चोरशब्दस्मरणद्वारागौणमुख्यन्यायेन चोरशब्दस्यैव पूर्वे संज्ञा स्यान्न चौरशब्दस्येति विध्यर्थं कृतद्धितग्रहणं समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावात् अत ए पंचाशीति पदान्ताश्रयो नलोप इत्याहुः अत्रेदं वक्तव्यं । पंच नव दधि मधु इत्यादीनामविभक्तिकत्वेन नामत्वा नपायात्कथं पदत्वम् । अत्र यदि विभक्तिसत्त्वसमये एव प्रवृत्ता पदसंज्ञा लुप्तायां विभक्तौ एकदेशविकृतन्याये प्रकृतिभागेपि सास्तीति ब्रूषे तर्हि प्रकृतेपि समं क्विबादिसत्त्वसमये प्रवृत्ता नामसंज्ञा लुप्तेपि तस्मिन्प्रकृतिभागेपि सास्तीति तुल्यं । यदि च लुप्ते प्रत्यये प्रत्ययलक्षणेन पदसंज्ञां स्वीकरोषि यदपि समं समाधानं स्वार्थतद्धितानामपीत्यादि तदपि न गौणत्वासंभवात् स्वार्थोपसर्ज्जनार्थान्तराभिधायित्वं गौणत्वं । तच्चात्र न संभवति । नहि चौरचोरशब्दयोरर्थौ भिन्नौ येनैकोपरत्र गौणो भवेत् यदपि अत्र चोरशब्दस्य साक्षादित्यादि तदपि न । नहि पर्यायानां परस्परस्मरणद्वारा स्वार्थबोधकत्वम् क्वचित्स्वीक्रियते । व्याकरणानभिज्ञस्यापि शक्तिग्रहे सति तत बोधो जायते । अन्यथा ज्ञानं ध्यानमित्यादौ पुरःस्वार्थिकत्वेन गौणत्वादिकं स्यात् यदपि समासेष्वपि भूतपूर्वविभक्त्येत्यादि तदपि न अवयवानां विभक्त्यन्तत्वेपि समुदायस्यातथात्वात् । यस्माद्विभक्तिर्विधीयते तद्विभक्त्यन्तम् । सा चावयवेभ्यो विधीयते न समुदायात् । अन्यथा समासवत् वाक्यस्यापि विभक्त्यन्तत्वेन पूर्वेण प्राप्तिविरहादेव तत्र नियमानुपयोगात् । यदि नन्वेवमपि अव्ययीभावादिति विभक्तिलुग्विधानाज्ज्ञापकात्समासे नामसंज्ञा भविष्यति एवमपि नियमार्थं समासग्रहणम् । अर्थवत्समुदायानां मध्ये समासस्यैव यथा स्यात् तेन वाक्यस्यार्थवतो न भवतीति । तदपि न । उक्तरीत्या समासस्याविभक्त्यन्तत्वेन ज्ञापकोपन्यासवैयर्थ्यात् अन्यथा समासवद्वाक्यस्यापि विभक्त्यन्तत्वेन समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावादित्यनेन विध्यर्थतायास्त्वयैवोक्तत्वात् पूर्वापरविरोधः नियमफलाभावेन समासग्रहणवैयर्थ्यात् । नियमस्तत्र क्रियते यत्र सर्वत्र प्राप्तिर्भवति । अत्र तु तव मते वाक्ये प्राप्तिर्नास्ति वाक्यस्य चेत्प्राप्तिर्भवति तर्हि वार्त्तिके समासपदं व्यर्थम् तस्मात्पूर्वेणैव सिद्धे वार्त्तिकमिदं न कार्यम् ।

**मू०–तस्मात् ॥**

**सुबोधिनी**–तस्मात् । इत्यधिकारोयं । धातोरित्यतः प्राक् स्यादयोऽणादयश्च प्रत्यया नाम्नः पराः स्युः । तस्मादिति पंचमी । इयं न विश्लेषावधौ विश्लेषस्यासंभवात् । किन्तु ऋते आदिषु दिक्शब्दपाठाद्दिग्योगलक्षणापंचमी । तत्र परःपूर्वो वा इत्यनियमनाध्याहारे प्रसक्ते । बहुर्वा उक्तेर्थे स च प्रयोगेवेत्यनेन बहोः पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एवेति परशब्दोऽध्याहार्यः ।

**तत्त्वदीपिका**–तस्मादिति । अधिकारोयं प्राग्धातोः । तथा च स्यादयोऽणादयश्च नाम्न एव परे बोध्या इति । ननु धातोरित्यग्रिमाधिकारात्ततः प्राक्तनानां प्रत्ययानां नाम्नः परत्वमवधेयमेवेति किं तस्मादित्यनेनेति चेन्न किं परिमाणमिति वक्तव्ये किंद्धमित्यपि स्यात् इति निराकरणाय तस्मादित्यस्यावश्यकत्वात् । अथ न केवलः प्रत्ययः प्रयोक्तव्य इति नियमेन तद्वारणसंभवादिति चेत् । एतस्यापि तन्मूलकत्वादित्यवधेहि । तस्मादिति पंचमी न विश्लेषावधौ । विश्लेषस्यात्रासंभवात् । किंतु ऋतादिमध्ये दिक्शब्दस्य पाठात्तद्योगे तत्र च पूर्वः परो वेति नियमाभावेपि परशब्द एवाध्याहार्य्यः सगानाद्धेर्लोप इति निर्देशात् तच्छब्दस्य पूर्वपरामर्शित्वान्नाम्नः परामर्शः

**मू०–सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् ॥**

यथा । शुक्लः कृष्ण इत्यादयः । क्रियाशब्दा यथा । पाचकः गंतेत्यादयः । द्रव्यशब्दा यथा । डित्थं कपित्थमित्यादयः । ननु वंध्यापुत्राभावशशविषाणगगनकुसुमादीनामर्थाऽभावादेषां नामसंज्ञा न स्यादिति चेदुच्यते । अभावोपि पदार्थांतरत्त्वेनाभिधेयवत्वादभावशब्दस्य सिद्धा संज्ञा । वंध्यादिशब्दार्थः पुत्रादिशब्दार्थश्च प्रसिद्ध एव । तयोः संसर्गमारोप्य शब्दप्रयोगसंभवात्तेषामप्यस्ति । विभक्तिरहितमिति किं । हरिषु, करोषि । सुप्सिपोर्माभूत् पदादित्वात्सस्य षो न स्यात् । विभक्त्यंतरहितमिति किं । देवौ । भवंति । अत्र द्वित्वाद्यनभिधानेप्यऽव्ययादिवच्चैकवचनं स्यात् धातुवर्जितमिति किं । अहनीत्यत्र नाम्नो नोलोपशित्यनेन लोपश् स्यात् । अहन्नित्यत्राह इत्यनेन सत्वं तु न । तस्य लाक्षणिकत्वात् । अर्थवदिति किं । धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत् । अत्र वार्तिकम् । कृत्तद्धितसमासाश्चेति । चकारोऽनुक्तसमुच्चयार्थः । तेन निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्येति ॥

**तत्त्वदीपिका—अविभक्तिनामेति** । विभक्तेरन्यत् इति । अविभक्तिविशेष्यं तु शब्दस्वरूपं तंत्रादिना विभक्त्यंतमपि लब्धम् । ननु सूत्रे अविभक्तीत्येतावन्मात्रमर्थवद्ग्रहणं कुतो लब्धमिति चेत् । उच्यते । द्वौ नञौ च समाख्यातौ पर्युदासप्रसज्यकौ । पर्युदासः सदृग्ग्राही प्रसज्यस्तु निषेधकृत्॥ १॥प्राधान्यन्तु विधेर्यत्र प्रतिषेधेऽप्रधानता । पर्युदासः सविज्ञेयो यत्रोत्तरपदेन नञ्॥ २॥अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता । प्रसज्यस्तु सविज्ञेयः क्रियया सह यत्र नञ् इति ।। ३ ।। तथा च पर्युदासोऽत्र नञ् गृह्यते ततश्च विभक्तेरर्थत्वात् तत्सदृशमर्थवदेव संज्ञि उपपततीत्यर्थवल्लाभः । तंत्रादिलब्धविभक्त्यन्तपर्युदासाद्धातुपर्युदासोपि । अर्थवदिति किम् । धनं वनमित्यत्र प्रतिवर्णं संज्ञा मा भूत् । तस्यां सत्यां स्याद्युत्पत्तौ नलोपः प्रसज्येत । ननु च एकवर्णानामप्यर्थदर्शनादेतीत्यादाविव देवादिष्वपि वर्णा अर्थवन्तः कथं न । तथा च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति भाष्येपि श्रीमत्पतंजलिनोक्तम् उदाहृतं च कूप इति ककारेसति कश्चिदर्थो गम्यते यूप इति यकारे अर्थान्तरं तेन मन्यामहे । यः कूपे कूपार्थः सककारस्य यो यूपे यूपार्थः स यकारस्येति तथा ब्राह्मण इत्युक्ते योर्थो गम्यते नासौ बकारादीनामन्यतमापायेतिगम्यते । येषां च संघातो यत्कार्यं करोति ते प्रत्येकमपि तत्कुर्वंति ॥ यथा तिलानां खारी तैलमुत्पादयति प्रत्येकं च तिलाः ये तु यस्मिन् प्रत्येकमसमर्थास्तेषां समुदायोपि तत्रासमर्थः यथा प्रत्येकं सिकतास्तैलं नोत्पादयंति तेषां खार्य्यपि । अतः संघातार्थवत्त्वाच्चार्थवन्तो वर्णाः तत्कथनमर्थवद्ग्रहणे सत्यपि तेषां निवृत्तिरिति चेत् उच्यते अनर्थका वर्णाः प्रतिवर्णमर्थानुपलब्धेः । नहि ब्राह्मण इत्यत्र ब्रा इत्युक्ते कश्चिदर्थो गम्यते अतो धात्वादीनामेकवर्णानामर्थवत्त्वादन्येपि वर्णा अर्थवन्त इत्यनुपलब्धिवादिमतमेतत् किंच कूपो यूप इत्यन्वयव्यतिरेकाभ्यां ककारयकारयोरर्थवत्त्वादन्येपि वर्णानामानर्थक्यमभ्युपगतं स्यात् अथ तेषामप्यर्थवत्त्वम् भूयिष्ठः कूपे यूपार्थः स्यात् । कूपार्थश्च यूपे । यत्र भूयसार्थानामन्वयोव्यतिरेकस्तु कस्यचित् ॥ तत्रार्थानामपि। भूयसामनुवृत्तिव्यतिरेकस्तु कस्यचित् यथा देवदत्त गामानय शुक्लां, देवदत्त गामानय कृष्णामिति अतः संघाता एव तेनार्थेनार्थवंतः संघातार्थवत्त्वाच्चेति हेतुरनैकान्तिक इति शंका तैलाग्निवर्त्तिसंघातेन दीपो न प्रत्येकं । रथावयवैश्चक्रादिभिः संहितैः व्रजिक्रिया । किंचार्थवत्तां विपर्यासे अर्थप्रत्ययस्याविपर्यासः आहर पात्रं पात्रमाहरेति । अपाये चाणयः गामानय शुक्लां शुक्लां गामानयेति उपजने चोपजनः गामानय शुक्लामिति । वर्णेषु नैवं हिनस्ति इति सिंहः हंति हतः घ्नंति भविता । अतः संघाता एवार्थवन्तः विभक्तिरहितमिति किम् । हरिषु करोषि । सुप्सिपोर्मा भूत् । पदादित्वात्सस्य षो न स्यात् । विभक्त्यन्तरहितमिति किम् देवा भवन्ति । अत्र द्वित्वाद्यभिधानेप्यव्ययादिवच्चैकवचनंस्यात् । धातुवर्जितमिति किम् । अहन् नलोपश् स्यात् । यत्तु प्राक्चोक्तम् । अथ विभक्तिर्विभाव्यते । तत् व्याख्यातृभिश्च व्याकृतं संधिप्रकरणकथनानन्तरं ये विधयो वक्ष्यंते तेषां विभक्तिसंज्ञा स्यात् । सा च विभाव्यते प्रस्तूयते तत्प्रकरणमारभ्यत इति विभक्तिशब्दावृत्त्या योज्यम् ॥ स्वमते शब्दार्थयोरभेदोपचारादित्यर्थः । अभेदोपचाराच्च द्वितीयोविभक्तिशब्दः संज्ञिवचनः आदिः संज्ञावचनः महासंज्ञाकरणं तु विभज्यंते विरच्यंते संख्याकर्मादयो अर्थाअनयेति विभक्तिः इत्यन्वर्थसंज्ञाविज्ञानार्थं तेनागमादीनामत्र वक्ष्यमाणानामपि विभक्तिसंज्ञा नेति तन्न वार्त्तिकं दृष्ट्वा सूत्रकृतः प्रवृत्त्ययोगात् । अन्येतु यौगिकार्थेनैव सिद्धमित्याहुः ।

विभज्यते प्रकटीक्रियते कर्तृकर्माद्यर्थोऽनया सा विभक्तिः अतिप्रसक्तं योगमात्रं कृदादौ यद्यपि तथापि स्यादि-षु तिबादिषु च योगरूढिः । यच्च कृत्तद्धितसमासाश्चेति वार्तिकं । चकारो नामसंज्ञानुकर्षणार्थः अत्र तद्व्या-ख्यातारः ननु किमर्थमिदं नामसंज्ञा तु पूर्वेणैव सिद्धा न सिद्ध्यति । तत्र कृत्सु क्विबाद्यंतानां धातुत्वानपायात् अतएव हे सोमपा इति घिलोपो न स्वार्थतद्धितानामपि गुणीभूतार्थवत्त्वात् । तथाहि । चोर एव चौरः स्वार्थेऽण् अत्र हि चोरशब्दस्य साक्षादर्थवत्त्वं चौरशब्दस्य चोरशब्दस्मरणद्वारागौणमुख्यन्यायेन चोरशब्दस्यैव पूर्वेण संज्ञा स्यान्न चौरशब्दस्येति विध्यर्थं कृतद्धितग्रहणं समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावात् अत एव पंचाम्नीति पदान्ताश्रयो नलोप इत्याहुः अत्रेदं वक्तव्यं । पंच नव दधि मधु इत्यादीनामविभक्तिकत्वेन नामत्वा-नपायात्कथं पदत्वम् । अत्र यदि विभक्तिसत्त्वसमये एव प्रवृत्ता पदसंज्ञा लुप्तायां विभक्तौ एकदेशविकृतन्यायेन प्रकृतिभागेपि सास्तीति ब्रूषे तर्हि प्रकृतेपि समं क्विबादिसत्त्वसमये प्रवृत्ता नामसंज्ञा लुप्तेपि तस्मिन्प्रकृतिभागे-पि सास्तीति तुल्यं । यदि च लुप्ते प्रत्यये प्रत्ययलक्षणेन पदसंज्ञां स्वीकरोषि यदपि समं समाधानं स्वार्थतद्धि-तानामपीत्यादि तदपि न गौणत्वासंभवात् स्वार्थोपसर्जनार्थान्तराभिधायित्वं गौणत्वं । तच्चात्र न संभवति । नहि चौरचोरशब्दयोरर्थौ भिन्नो येनैकोपरत्र गौणो भवेत् यदपि अत्र चोरशब्दस्य साक्षादित्यादि तदपि न । नहि पर्यायानां परस्परस्मरणद्वारा स्वार्थबोधकत्वम् क्वचित्स्वीक्रियते । व्याकरणानभिज्ञस्यापि शक्तिग्रहे सति ततो बोधो जायते । अन्यथा ज्ञानं ध्यानमित्यादौ पुरःस्वार्थिकत्वेन गौणत्वादिकं स्यात् यदपि समासेष्वपि भूतपूर्व-विभक्त्येत्यादि तदपि न अवयवानां विभक्त्यन्तत्वेपि समुदायस्यातथात्वात् । यस्माद्विभक्तिर्विधीयते तद्विभक्त्य-न्तम् । सा चावयवेभ्यो विधीयते न समुदायात् । अन्यथा समासवत् वाक्यस्यापि विभक्त्यन्तत्वेन पूर्वेण प्राप्ति-विरहादेव तत्र नियमानुपयोगात् । यदि नन्वेवमपि अव्ययीभावादिति विभक्तिलुग्विधानाज्ज्ञापकात्समासे नाम-संज्ञा भविष्यति एवमपि नियमार्थं समासग्रहणम् । अर्थवत्समुदायानां मध्ये समासस्यैव यथा स्यात् तेन वाक्य-स्यार्थवतो न भवतीति । तदपि न । उक्तरीत्या समासस्याविभक्त्यन्तत्वेन ज्ञापकोपन्यासवैयर्थ्यात् अन्यथा समासवद्वाक्यस्यापि विभक्त्यन्तत्वेन समासेष्वपि भूतपूर्वविभक्त्या अविभक्तित्वाभावादित्यनेन विध्यर्थतायास्त्व-यैवोक्तत्वात् पूर्वापरविरोधः नियमफलाभावेन समासग्रहणवैयर्थ्यात् । नियमस्तत्र क्रियते यत्र सर्वत्र प्राप्तिर्भव-ति । अत्र तु तव मते वाक्ये प्राप्तिर्नास्ति वाक्यस्य चेत्प्राप्तिर्भवति तर्हि वार्त्तिके समासपदं व्यर्थम् तस्मात्पूर्वे-णैव सिद्धे वार्त्तिकमिदं न कार्यम् ।

**मू०–तस्मात् ॥**

**सुबोधिनी**–तस्मात् । इत्यधिकारोयं । धातोरित्यतः प्राक् स्यादयोऽणादयश्च प्रत्यया नाम्नः पराः स्युः । तस्मादिति पंचमी । इयं न विश्लेषावधौ विश्लेषस्यासंभवात् । किन्तु ऋते आदिषु दिक्शब्दपाठादिग्योगलक्षणापंचमी । तत्र परःपूर्वो वा इत्यनियमनाध्याहारे प्रसक्ते । बहुवां उक्तेर्थे स च प्रयोगेवेत्यनेन बहोः पूर्वत्वस्य नियतत्वादन्यः प्रत्ययः पर एवेति परशब्दोऽध्याहार्यः ।

**तत्त्वदीपिका**–तस्मादिति । अधिकारोयं प्राग्धातोः । तथा च स्यादयोऽणादयश्च नाम्न एव परे बोध्या इति । ननु धातोरित्यग्रिमाधिकारात्ततः प्राक्तनानां प्रत्ययानां नाम्नः परत्वमवधेयमेवेति किं तस्मादित्यनेनेति चेन्न किं परिमाणमिति वक्तव्ये किंदघ्नमित्यपि स्यात् इति निराकरणाय तस्मादित्यस्यावश्यकत्वात् । अथ न केवलः प्रत्ययः प्रयोक्तव्य इति नियमेन तद्वारणसंभवादिति चेत् । एतस्यापि तन्मूलकत्वादित्यवधेहि । तस्मादिति पंचमी न विश्लेषावधौ । विश्लेषस्यात्रासंभवात् । किंतु ऋतादिमध्ये दिक्शब्दस्य पाठात्तद्योगे तत्र च पूर्वः परो वेति नियमाभावेऽपि परशब्द एवाध्याहार्य्यः सगानाद्धेर्लोप इति निर्देशात् तच्छब्दस्य पूर्वपरामर्शित्वान्नाम्नः परामर्शः ।

**मू०–सि औ जस्, अम् औ शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् ॥**

**नाम्नः पराः स्यादयः सप्त विभक्तयो भवन्ति ।**

सुबोधिनी—सि औ जस् १ अम् औ शस् २ टा भ्यां भिस् ३ ङे भ्यां भ्यस् ४ ङसि भ्यां भ्यस् ५ ङस ओस् आम् ६ ङि ओस् सुप् ७ । सिप्रत्ययस्येकारोऽत्वसोः सावित्यादौ विशेषणार्थः । जस्शसोर्जकारशकारौ जसिशसीत्यनयोर्विषयविभागार्थौ । टाप्रत्ययस्य टकारः टेन टाना टौसोः टाङ्योरित्यादौ भेदकः । ङेङसिङस्ङीनाम् ङकारस्तु ङितीत्यादौ विशेषणार्थः । ङसेरिकारो ङसिरदिति विशेषणार्थः। सुप्प्रत्ययस्य पकारः प्रत्याहारार्थस्तेन सिप्प्रत्याहारो यथा स्यात्। स्यादिभेदतो विभक्तिर्द्विधा। तत्र सिऔजसित्यादीनां सप्तानां त्रिकाणां प्रथमादयः सप्तम्यंताः प्राचां संज्ञास्ताभिरिहापि व्यवहारस्तेषु त्रिकेषु त्रीणि त्रीणि वचनानि एकवचनद्विवचनबहुवचनसंज्ञकानि संति ।

तत्त्वदीपिका—सिऔजसइत्यादि । सेरिकारोऽत्वसोः सावित्यादौ सीत्युक्तेसकारादिलाभसंभवात् । नचेष्टापत्तिः वेधस्सु इत्यादावपि दीर्घत्वप्रसंगात् । नच श्रवणार्थः गुण इत्यादिलिंगात् एतेन सेरिकार उच्चारणार्थः इत्युक्तिः प्रयुक्ता । सइत्यनेनाप्युच्चारणसंभवात् ।

**मू०-एकत्वद्वित्वबहुत्वेषु॥ एकवचनद्विवचनबहुवचनानि । स्रोर्विसर्गः । देवः ।**

सुबोधिनी—एकत्वद्वित्वबहुत्वेषु । एकत्वद्वित्वबहुत्वशब्दा इह संख्यापराः संति । तेन बहुः पर्वत इति वैपुल्यवाचिनो ग्रहणं न आश्रयद्रव्यगतेषु एकत्वद्वित्वबहुत्वेषु सत्सु एकवचनद्विवचनबहुवचनसंज्ञकाः प्रत्यया भवंति । उच्यतेऽनेनेति वचनं । एकस्य वचनमेकवचनं । द्वयोर्वचनमिति द्विवचनं । बहूनां वचनमिति बहुवचनं ।

तत्त्वदीपिका—एकवचनादिसंज्ञानामन्वर्थतामाश्रित्याह । एकत्वेत्यादि । तथाच । एकं वक्ति एकवचनं। द्वौवक्ति द्विवचनं । बहुन्वक्ति बहुवचनं । यद्वा उच्यत इति वचनम् एकवचनमिति । स्रोर्विसर्ग इति पदान्ते-वर्त्तमानयोः स्रोर्विसर्गः स्याद्धात्वधातुसाधारणमिदम् तेन अबिभः देवः प्रातरित्यादि सिद्धम् अव्ययादित्यस्य परत्वात्सिलुकि नात्र रसपरत्वम् । पदान्ते किम् धुर्य्यात् पयसी । नाम्नश्च रसपरयोः स्रोर्विसर्गः स्यात् । तेन वेधोभ्यां दोःष्वित्यादि सिद्धम् । सौ तु प्रथमं सिलोपात्परत्वाद्विसर्गे कृते तस्य हसपरत्वाभावेन सिलोपाभावे नित्यम् विसर्गद्वयश्रवणप्रसंगः अथ वेधोभ्यामित्यत्र द्वयोस्सकारयोरेको विसर्गो भविष्यति सत्वजातेनाश्रयणादिति चेत् शृणु प्रियचत्वाः गीरित्यादौ रसपरयोरेकजात्यभावादुक्तदोषतादवस्थ्यामिति केचित् तन्न प्रायशो दृश्यतामिति वचनात् क्वचित्पूर्वेणापि परबाध इष्टसिध्यर्थम्।रसे किम् चीवरान् वस्ते। क्वचित्क्विब्विशिष्टस्य नामसंज्ञा भवति लुप्तेपि क्विपि एकदेशविकृतन्यायेन नामत्वमस्ति । तेन सुवोभ्यामित्यादौ विसर्गः सिध्यति । स् च र् च स्रौ तयोः अत्र रेफो निर्दिष्टो न तु रेफभूत ऋकारः रेफस्थानिकविसर्गस्य रादेशविधायकस्य र इति सूत्रस्य वैयर्थ्यापत्तेः कर्तृकार्ययोरित्यादिनिर्देशाच्च । नह्यत्र ऋकारस्य विसर्गो निर्दिष्टः । प्रातःपाशमित्यादावुभयथा विसर्गः । नामसंज्ञाप्रवृत्तिकाले सतो रेफस्य सुपि न विसर्गः चतुर्ष्विति ज्ञापकात् तेन गीर्ष्वित्यादि सिद्ध्यति नार्पत्य इत्यत्रतु बहिरंगाया वृद्धेरसिद्धत्वान्न विसर्गः । वर्ष्मइत्यादौ न विसर्गः कर्तृसाधनयोरिति निर्देशादिति दिक् । जसो जकारस्य फलमाह जसो जकार इति तथा च शसः शकारोपि शसीति विशेषणार्थः । वस्तुतस्तु एकतरो न पठितुं योग्यः एकेनैव द्वितीयवारणात् ।

**मू०-सरूपाणामेकशेषएकविभक्तौ ॥ देवौ । देवाः ।**

सुबोधिनी—सरूपाणामेकशेषएकविभक्तौ। यानि सरूपाण्येव दृष्टानि तेषामेकएव शिष्यते। रूप्यते बोध्यते इति रूपमर्थः । समानं रूपं येषां ते सरूपाः । सहादित्वात्समानस्य सादेशः । तथा समानं रूपं सरूपं येषां ते सरूपाः सरूपाश्च सरूपाश्चेति सरूपास्तेषामि-

त्वेकशेषेण व्याख्यानम् । एकविभक्ताविति विभक्तिसारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम्। एवं च निमित्तिकत्वेनांतरंगोयमेकशेषः स्याद्युत्पत्तेः प्रागेव प्रवर्तते । यद्येतन्नारभ्यते तर्हि प्रत्येकं विभक्तिः स्यात् द्वंद्वश्च प्रवर्तेत । आरब्धे त्वेकशेषो भवति नतु द्वंद्वः अनेकपदाभावात् । ननु स्याद्युत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थम्बोधयतीति द्विवचनाद्युत्पत्तौ देवौ देवा इत्यादि न सिध्येत् । उच्यते । शिष्यमाणो लुप्यमानार्थं कथयति । एकशेषस्य वृत्तिषु पाठात् । परार्थाभिधानं वृत्तिरिति । अत एव लुप्तेपि प्रत्यये लिट् धुक् इत्यादौ कर्ता प्रतीयते । एकस्यां विभक्तौ परतः सरूपाण्येवेति किं । मातृशब्दयोर्जननीपरिच्छेत्तृवाचिनोर्नैकशेषो भवति मातृभ्यां मातृभिरित्यादौ सारूप्येपि औजसादिषु वैरूप्यात् । नन्वेवं पयः पयो नयति देवदेव इत्यादावतिप्रसंगः स्यात् । अधातोरिति चानुवर्तते । सहविवक्षायामेकशेषः प्रवर्तते इतरेतरयोगे द्वन्द्वस्य विषये इत्यर्थो नान्यत्र ॥

**मू०—अम्शसोरस्य ॥ समानादुत्तरयोरम्शसोरकारस्य लोपो भवति । देवम् । देवौ । शसश्शकारश्शसीति विशेषणार्थः ।**

**सुबोधिनी**—अम्शसोरस्य । समानाद्धेर्लोपोऽधातोरित्यतः समानादिति लोप इति अधातोरिति चानुवर्तते । अधातोः समानात्परयोरम्शसोरकारस्य लोपः स्यात् । अधातोरिति किम् । श्रियं भुवमित्यादावियुवौ । सेनान्यं खलप्वमित्यादौ य्वौ । सोमपमित्यादौ सवर्णदीर्घः । समानादिति किम् । रायं । ग्लावम् ।

**तत्त्वदीपिका**—अम्शसोरस्येति अत्र सामानाद्धेर्लोपो धातोरिति सूत्रात्समानलोपावनुवर्त्तेते इत्याशयेनाह समानादिति । समानादिति किम् । रायम् अत्र स्याद्याधिकारस्यैवामो ग्रहणादधातोरिति नानुवर्त्यम् । अतोचिनवमित्यादौ नातिव्याप्तिः । अस्येति किम् षष्ठीनिर्दिष्टत्वेनान्त्यस्य मा भूत् । नच सो नः पुंस इत्यत्र सकारस्य नत्वविधेर्लिंगादत्रानन्त्यस्य विधिरन्यथा शसःसकारस्यान्तत्वेन लोपे सदभावान्नत्वासंभवः स्यादिति वाच्यम् तत्र सोनः पुंसइत्युक्त्या ज्ञापनासंभवात् । नहि तत्र शसो न इत्युक्तं येन ज्ञापकं स्यात् नच सो न इत्यत्रापि शसः सकारस्यैव ग्रहणमिति वाच्यम् नहि शस्येव सकारो नान्यत्रेति नियमोस्ति येन ज्ञापकमिदं स्यात् । यत्तु लघुभाष्यं अत्र आदवेलोपश् इत्यत आदित्यस्यानुवृत्तेरस्येति व्यर्थमिति कश्चित् इति अत्रेदमवधेयम् । आदित्यस्य पंचम्यन्तत्वेन षष्ठचर्थालाभात् अथार्थवशाद्विभक्तिविपरिणाम इति विभक्तिविपरिणामेन षष्ठचर्थलाभः विभक्तिविपरिणामे त्वर्थलाभस्यातिक्लिष्टत्वेन्त्यस्येत्यस्यैवावश्यकत्वात् ।

**मू०—सोनःपुंसः ॥ पुँल्लिंगात्समानादुत्तरस्य शसस्सकारस्य नकारादेशो भवति न त्वाम्शसीत्यात्वे ।**

**सुबोधिनी**—सोनः पुंसः । पुँल्लिंगात्समानान्नाम्नः परस्य शसः सस्य नः स्यात् । शस इत्यनुवृत्तं लिंगं नामार्थइति मते पुंस इति पंचमी । पुँल्लिंगात्समानांतान्नाम्न इति । यदा तु लिंगं प्रत्ययार्थस्तदा पुंस इति षष्ठी । समानांतान्नाम्नः परस्य पुंसो वाचकस्य शसः सस्य नः स्यादिति । उक्तंच । "एकं द्विकंत्रिकंचाथ चतुष्कं पंचकं तथा ॥ नामार्थइतिसर्वेमीपक्षाः शास्त्रे निरूपिताः" इति स्वार्थद्रव्यलिंगसंख्याकारकात्मकः पंचको नामार्थः । उक्तपंचसु पूर्वस्य पूर्वस्य नामार्थत्वे परः परो विभक्त्यर्थो ज्ञेयः शब्दप्रवृत्तिनिमित्तः स्वार्थोस्ति स्वार्थश्चानेकविधः स्वरूपजातिगुणक्रियाद्रव्यसंबंधभेदात् । स्वरूपं यथा । डित्थः । यदा शब्दरूपेण विशिष्टा जातिः कथ्यते गौरिति तदा गोशब्दस्य स्वरूपं स्वार्थोऽ-

स्ति विशेषणत्वात् जातिस्तु द्रव्यं भवति विशेष्यत्वात् । यदा जात्या विशिष्टो गुणः कथ्यते पटस्य शुक्लो गुण इति तदा जातिः स्वार्थो भवति विशेषणत्वात् शुक्लो गुणो द्रव्यं भवति विशेष्यत्वात् । यदा गुणेन विशिष्टं द्रव्यं कथ्यते शुक्लः पटइति तदा विशेषणभूतो गुणः स्वार्थो भवति विशेष्यभूतं पटादिकं द्रव्यं भवति । यदा तु द्रव्यमपि द्रव्यांतरस्य विशेषणं भवति यष्टीः प्रवेशयेत्यादौ तदा यष्ट्यादिकं द्रव्यं विशेषणत्वमापन्नं स्वार्थो भवति पुरुषादिविशेष्यं द्रव्यं भवति । दंडीत्यादौ दंडपुरुषसंबंधः स्वार्थो भवति दंडीति द्रव्यं विशेषणं भवति । पाचक इत्यादौ क्रिया स्वार्थो भवति पुरुषो द्रव्यं भवति । किं च "शब्दस्य यत्र विश्रांतिर्वाच्यं द्रव्यं तदिष्यते " पर्यवसानभूमिरित्यर्थः तच्चानेकप्रकारम् । जातिगुणक्रियाद्रव्यस्वरूपमिति । गौः शुक्लः पाचकः डित्थः । सिसतासीस्यपामिट् लिंगं स्त्रीत्वादि । संख्या एकत्वादिः । कर्मादयः कारकविशेषास्तत्र स्वार्थो विशेषणम् । द्रव्यं तु विशेष्यमिति निर्गलितार्थः । आम्शसीति सूत्रेणौकारस्य स्थाने आत्वे कृते सति सोनःपुंस इत्येतत्सूत्रं न प्रवर्तते इत्यर्थः । कुतो न उच्यते । पदविभागात् । यथा स् १ ओ २ न् ३ अः ४ पुंसः ५ इति पंच पदानि छित्त्वा पुँल्लिंगात्समानाच्छसः सस्य न् स्यात् ओकारसंबंधिनोऽवर्णात्तु विसर्गः स्यादीति व्याख्येयम् । अतो गाः पश्येत्यादौ नत्वं न । पुँल्लिंगादिति किम् । बुद्धिः समानादिति किं । रायः ग्लावः । लोविषये एवास्य प्रवृत्तिः । समानादम्शसोरल्लोपस्यानिषेधात् । अत एव बहुशइत्यत्र नत्वं न स्यादधिकाराद्वा शसि दीर्घश्रुत्योपस्थितस्य स्वरस्येति पदस्य नाम्नो विशेषणत्वात्तदंतविधिः । पूर्वस्य स्वरान्तस्य नाम्नो दीर्घः स्यात् ॥

**तत्त्वदीपिका**–सोनः पुंस इति पंचमीत्याशयेनाह । पुंलिंगादिति। तथा च समानान्तान्नाम्न इति बोद्धव्यम् यद्वा पुँल्लिंगात्समानादित्येकं पदं पुँल्लिंगमततीति पुल्लिंगात् स चासौ समानश्चेति स तथा । तस्मादित्यर्थः । अत्राम्शसोरित्यतः शसइत्यनुवृत्तम् यद्यपि समानान्तर्गतं तथापि नापोनुवृत्तिस्तत्र सस्यासंभवादित्याह शस इति । ननु गाइत्यत्र नत्वं कुतो नामशसीत्यात्वेन समानात्परत्वादिति चेत् अत्र केचित्सो न इत्यावर्त्य शसो नकारस्य सकार इति व्याख्येयम् । इष्टसिद्ध्यर्थमिदम् तेन गा इत्यादि सिद्धम् यद्वा आवृत्त्या लब्धं यत्सो न इति सूत्रं तत्र शसो नस्येत्यनुवर्तते स इत्यविभक्तिको निर्देशः ओरिति षष्ठी ततश्च ओकारसंबंधी योऽवर्णः तस्मात्परो यः शसो नकारस्तस्य सकार आदेशो भवतीत्यर्थो लभ्यतेऽतो नातिप्रसंगः । यद्वा स् ओ न् अः पुंस इति पंच पदानि छित्त्वा पुँल्लिंगात्समानात् शसः सस्य नकारः ओकारसंबंधिनो वर्णात्तु विसर्ग इति व्याख्येयम् । अत्रेदं वाक्यम् गा इत्यत्र नत्ववारणे सन्निपातपरिभाषयैव सिद्धे तदर्थमेतावता वृत्ताद्यनुसरणक्लेशेन किं नच तानित्यादावपि सन्निपातपरिभाषया निषेध इति वाच्यम् कानित्यादिलिंगेन त्यदादिषु शसो नत्वविधौपरिभाषानाश्रयणात् यद्वा त्यदादेष्टेरस्यादावित्यत्रादिपदगृहीतस्य शसो निमित्तत्वे लाक्षणिकत्वेनाम्शसीत्यत्र शसः साक्षाच्छ्रवणेन निमित्तत्वे प्रतिपदोक्तत्वात् लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणात् किंच परिभाषाश्रयणस्येष्टसिद्ध्यर्थत्वात् । तानित्यादावनाश्रयणात् यच्च पुंस्त्वादिविचारे स्तनकेशवती स्त्री स्याल्लोमशः पुरुषो भवेत् । उभयोरन्तरं यच्च तदभावे नपुंसकमिति लक्षणे खट्वावृक्षादावव्याप्तिवारणाय चेतनेषु स्तनादिमद्व्यक्त्यादिस्त्रीत्वादिव्यंजकप्रचेतनेषु तु सर्वत्रोपदेश एवाभिव्यंजकः। उपदेशस्तु लिंगानुशासनादिष्वित्युक्तं तत्रापि चेतनाचेतनविषयविभागो व्यर्थः अतिप्रसक्तस्य दारशब्दस्य स्त्रीवाचकस्य स्तनकेशवत्त्वस्य व्यंजकस्य सत्वेपि स्त्रीत्वादर्शनात्सर्वचेतनाचेतने उपदेश एव स्त्रीत्वादिव्यंजक इत्यलमतिविस्तरेण ।

**मू०–शसि ॥** शसि परे पूर्वस्य दीर्घो भवति । यदादेशस्तद्वद्भवति नतु वर्णमात्रविधौ । देवान् । टकारष्टेनेतिविशेषणार्थः ।

**सुबोधिनी**–शसि । शसि परे सोनः पुंस इति नत्वे दीर्घत्वं । पूर्वं नत्वं ततोदीर्घत्वम् ।

पश्चादलोपो वैपरीत्यं वा ज्ञेयं । शसि किम् । हरिभिः । स्वरस्य किम् । लिहः । ननु इह शस्परत्वाभावात्कथं दीर्घः । उच्यते । यस्य स्थाने आदेशः यदादेशो स तेन स्थानिना तुल्यं तद्वत् । स्थानिवद्भवतीत्यर्थः। स्थानिवर्णाश्रयविधौ कर्तव्ये न भवति। अस्य व्याख्यानं परिभाषाप्रकरणे उक्तम् ॥

**तत्त्वदीपिका—शसीति** दीर्घश्रुत्योपस्थितेन स्वरेण नाम्नो विशेषणत्वात्तदन्तविधिः पूर्वं दीर्घः पश्चादलोपः वैपरीत्यं वा उभयथा वैलक्षण्यं नास्ति । एवं सोनः पुंस इति नत्वेपि ज्ञेयम् ।

**मू०—टेन ॥ अकारात्परष्टा इनो भवति।देवेन ।**

**सुबोधिनी—टेन** । पदद्वयमपि प्रथमांतं संकेतितं । अतः परष्टा इनः स्यात् । अतः किं । कर्त्रा भवता । तपरः किं । हाहा । टा किम् । देवैः ॥

**तत्त्वदीपिका—टेनेति** । टा इन इति छेदः पदद्वयमपि लुप्तप्रथमान्तम् । अत्रात इत्यनुवर्त्तते । टा इति किम् ।देवैः। अतः किं । पित्रा । तपरः किम् हाहा । ननु टानेत्येव सूत्र्यताम् किमेकारेण । एकग्रहणं चानुवर्त्य एवेनेति रूपसिद्धेरिति चेन्न। लाघवे विशेषाभावादित्युक्तं कैश्चित् तत्र एइत्यनुवृत्त्या गौरवस्य जागरूकत्वेन विशेषाभावादित्युक्तेरपार्थत्वात् । नच एनेत्येव सूत्र्यताम् आइन इति छेदः । स्याद्यधिकाराच्च नातिव्याप्तिः आमि तु नुटा बाधात् नातिप्रसंग इति वाच्यम् स्पष्टार्थत्वाद्टकारस्य ।

**मू०—अद्भि ॥ अकारस्यात्वं भवति भकारादौ स्यादौ । देवाभ्याम् ।**

**सुबोधिनी—अद्भि** । अकार आकारो भवति भादौ स्यादौ च । अदिति किम् । हरिभ्याम् । तपरत्वमुत्तरार्थं । भीति किम् । देवस्य । स्यादौ किम् । देवभवनं । बहुत्वेतु परत्वादेत्वं भवति । देवेभ्यइति ॥

**तत्त्वदीपिका—अद्भीति** । अत्रादिति प्रथमान्तम् भीतिसतम्यन्तम् तच्च भकारादावितिव्याख्येयम् अदिति न स्वरूपग्राहकम् आद्यन्ताभ्यामिति लिंगात् तेन महद्भ्यामित्यत्रात्वं न । अदिति किम् । हरिभ्यां, । भीति किम् । देवस्य । ननु रैस्भीत्यतो भीति सिद्धे किं भग्रहणेनेति चेन्न एकयोगनिर्दिष्टत्वेन सकारस्यानुवृत्तिः स्यादिति तन्निरासार्थं भीत्यस्यावश्यकत्वात् । भ्यामो मस्य च नेत्वं इदुद्भ्यामिति लिंगात्। स्यादौ किम् देवभवनम् ।

**मू०—ङभ्यः ॥ अकारात्परस्य भिसो भकारस्य अकारादेशो भवति । देवैः । ङकारो ङित्कार्यार्थः ।**

**सुबोधिनी—ङभ्यः** । एस्भिबहुत्वे इत्यस्यापवादोयं । भ् भि अ इति पदच्छेदः। भि इत्येकदेशद्वारेण भिस एवानुकरणम् । अत इत्यनुवृत्तम् । अतो भिसो भकारस्याकारः स्यात् । स्याद्याधिकारात् स्यादिसंबन्धी भिस् गृह्यते तेन ब्राह्मणभिस्सेत्यादौ नातिप्रसंगः ॥

**तत्त्वदीपिका—ङभ्य इति** । भ् भि अः इति छेदः । अत इति पूर्वसूत्रादनुवर्त्तते भीति भिस एकदेशानुकरणम् नामैकदेशग्रहणे नामग्रहणम् यथा भीमो भीमसेन इति । यत्तु ङभ्यइति चतुर्थीपंचम्योर्बहुवचनस्य ग्रहणम् । अद्भि इत्यस्मादकारात्परत्वात् हसेर्हस इति द्वित्वम् झबे जबा इति भस्य बः तथा चातः परस्य भ्यस एवाकारादेश इत्यर्थो लभ्यते । यद्वा भ् भ्य इति छेदः अकारत्परस्य भ्यसो भकारस्याकार इत्यर्थोस्तु । अकारो वास्वितोनुवर्त्तते । एवं भिसो ग्रहणे व्याख्यायमाने भिस् इति सूत्रं व्यर्थं स्यात् । ननु तर्हि भिअ इति छित्त्वा भकारे परे पूर्वस्य अत एव भवति तस्यादेशान्तरं न भवतीति व्याख्यानमस्तु । यद्वा भि इत्येकदेशद्वारेण भिस एवानुकरणम् ततश्च भिसि परे अतः एवेत्यर्थोस्तु मैवम् । आद्ये पक्षे भीति व्यर्थं स्यात् पूर्वसूत्रादनुवृत्तेः सत्त्वात् द्वितीये तु भागैरिति निर्देशो नोपपद्यते । इत्याद्युक्तम् तत्रेदमवधेयम् । भकारस्य द्वितीयसूत्रकारस्य

निमित्तत्वे बहुस्थलेऽतिप्रसंगः स्यात्। किंच भागैरिति लिंगस्यैव विद्यमानत्वेनैव भिस्भिस्इति निर्देशपर्यन्तानुधावनस्य क्लिष्टत्वात् अवर्णविधानसामर्थ्यात्सवर्णदीर्घं बाधित्वाप्येत्वमेव अन्यथा समानाद्वेलोप इत्यता लोपमनुवर्त्य लोऽमेव व्यधास्यत्। ननु भिस इति सूत्रमस्तु अकारो वास्त्वित्यतोनुवर्त्तते तथाच भिसो भकारस्यात्वेपि रूपसिद्धेः। यद्वा भइत्येवास्तु भि इति पूर्वसूत्रादनुवर्त्तनीयम्। तच्च रूपपरं इत्थं च भि समुदाये यो भः स आकारो भवतीत्यर्थः। अत्रार्थे भागैरिति लिंगदर्शनम्। उच्यते। इमौ यकाराकारौ योगविभागेन स्यादिप्रकरणं भित्त्वाऽन्यस्माद्विधीयते। अतः प्रौढः स्वैरी वापयतीत्यादि सिद्धम्। पादैर्युक्गवादैरिति न वक्तव्यं भवति।

**मू०—ङेअक् ॥** अकारात्परस्य ङे इत्येतस्यागागमो भवति। देवाय। देवाभ्याम्।

**सुबोधिनी—**ङेअक्। ङेइत्यविभक्तिको निर्देशः। अतोङेः इत्यस्याक् स्यात्। किंत्वादंते अत इत्यनुवृत्तेर्नेह वातप्रम्ये। तपरत्वान्नेह। हाहै। अथ अकि कृते एदोतोत इत्यकारस्य लोपश्तु न। विधानसामर्थ्यादपदांतत्वाद्वा। न हि अकि कृते एतः पदांतत्वं संभवतीति ॥

**तत्त्वदीपिका—ङेअगिति**। अत्र ङेइत्यविभक्तिको निर्देशोसंदेहार्थः। ङेरित्युक्तौ चतुर्थीसप्तम्येकवचनयोः संदेहः स्यात् वस्तुतस्तु ङेरित्युक्तिरपि न्याय्या आम्ङेरित्यादौ चतुर्थ्येकवचनसंदेहनिराकरणाय व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणमित्यस्याश्रयणीयत्वात् ङकारो व्यर्थः स्याद्यधिकारेणैवातिप्रसंगवारणादित्याहुः। वस्तुतस्तु स्पष्टार्थमुपात्तत्वान्न व्यर्थता। अत इत्यनुवृत्तेर्वातप्रम्ये इत्यादौ न। ङे इति किं। देवौ देवे। एदोतोत इत्यनेन लोपस्तु एतो अपदान्तत्वात्। अग्विधानसामर्थ्यादित्युक्तिस्तु निर्मूला प्राप्ता लोपे विधानसामर्थ्यावलंबनस्योचितत्वादिह तु पदान्तत्वाभावे प्राप्तरेवासंभवात्।

**मू०—ए स्भि बहुत्वे ॥** अकारस्यैत्वं भवति सकारभकारादौ विभक्तौ बहुत्वे सति। देवेभ्यः ॥

**सुबोधिनी—**एस्भि बहुत्वे। अकार एकारो भवति बहुत्वे वर्तमानेषु सकारभकारादिषु स्यादिषु परेषु। अकार इति किम्। हाहाभ्यः। बहुत्वे किं। देवस्य। स्यादिष्विति किम्। पचध्वम् ॥

**तत्त्वदीपिका—एस्भि** बहुत्वे इति। स्भीति सप्तम्यन्तं। स् च भ् च स्भ् तस्मिन् स्भि। अतः क हरिभ्यः। तपरः किम् हाहाभ्यः। स्भीति किम् देवानाम्। ननु स्भीति किम् नच देवानामित्यत्रातिप्रसंगः तत्र परत्वान्नामीति दीर्घेण बाधात् देवानित्यादौ तु शसीत्यनेन अथ देवा इत्यत्रातिप्रसंगः स्यादिति चेन्न तद्वारणाय रैस्मीति सूत्रात् भीत्यस्यानुवृत्तेस्सत्त्वात् अथानन्तरत्वादद्भीत्यतो भीत्यस्यैवानुवृत्तिः स्यादिति तत्र इच्छार्थेष्विति ज्ञापकात्। अथवा देवा इत्यत्रापि सवर्णदीर्घपूर्वापि झभेजबा इत्यादिनिर्देशेन क्वचित्पूर्वेणापिपरबाधस्येष्टसिद्ध्यर्थमभ्युपगमात् तस्माद्व्यर्थं स्भीति। अत्राहुः देवपूज्या इत्यादौ पूर्वपदस्थस्यैव वारणाय स्भीत्यावश्यकमिति तन्नेति वृद्धाः विहितविशेषणाश्रयणात्। नाम्नो विहिते बहुत्वे वर्त्तमान पर एत्वमित्यभ्युपगमात्। अन्ये तु बहुत्वविशेषणार्थं पुनः स्भीत्युक्तं तेन बहुत्वे वाच्ये सति विहितो यः सकारो भकारश्च तस्मिन् परतो नाम्नोत एत्वम्। तेन सोमं सुनातीति सोमसुत् तमाचक्षते सोमसयंति ते सोमस इत्यत्र नेत्याहुः तन्नेति नव्याः स्याद्यनुवृत्त्यैतद्वारणसंभवात् अत्रोच्यते रे स्भीत्यत्र तकारोपि द्रष्टव्यानादावपि स्यादात्रात्वमित्यर्थः। तथा च प्रराणामिति सिद्ध्यति अत्रार्थे इदं स्भिग्रहणमेव लिंगम् यदि तस्याप्यत्रानुवृत्तिः स्यात्तदा देवानामित्यत्राप्येत्वं स्यात् नामीति तु हरीणामित्याद्यर्थं स्यात् ततस्तन्निवृत्त्यर्थं पुनः स्भिग्रहणस्यावश्यकत्वात्।

**मू०—ङसिरत ॥** अकारात्परो ङसिरद्भवति। देवात्। देवाभ्यां। देवेभ्यः।

सुबोधिनी—ङसिरत् । आदंतान्नाम्नः परो ङसिरत् स्यात् । अतः किं । वातप्रम्यः । ग्लावः । तपरः किं । हाहाः । ननु ङसेरदादेशे कृते यस्य लोप इत्यतो लोपः स्यात् । उच्यते । स्यादौ यस्य लोप इत्यस्याभावो ज्ञापितोऽकारविधानेन । अन्यथा ङसिस्त इत्यवक्ष्यत् । यद्वा तद्धितप्रकरणादीपीतिसूत्रारंभाच्च नात्र यस्य लोपः देवादित्यत्र वावसाने इति जबत्वचपत्वे इसेऽर्हस इति दतयोर्द्वित्वे रूपचतुष्टयं बोध्यम् ॥

तत्त्वदीपिका—ङसिरत् । अत्राप्यत इत्यनुवर्त्तते । अतो वातप्रम्यइत्यादौ न । तपरत्वात् हाहा इत्यत्र न अत्रापि ङकारो व्यर्थ इत्युक्तिः पूर्वोक्तयुक्त्यैव निरसनीया । नचाति कृते यस्य लोप इत्यनेनाकारस्य लोपेस्त्विति वाच्यम् अकारोच्चारणसामर्थ्यात्स्यादौ न यस्य लोप इति प्रवर्त्तते । अत्राहुः कार्ये सिस्योः शेषा इत्यादिनिर्देशात् तद्धितप्रकरणाद्वा यस्य लोपो न एवं स्थिते लाघवे विशेषाभावात् ङसिस्त इति न सूत्रितम् । तत्रोच्यते सेस्त इत्येवमुवचनम् । नच देव इत्यत्राव्याप्तिः स्त्वन्यादेरिति लिंगेनातिव्याप्तिवारणात् नचामर्थ तदिति वाच्यम् छइत्यादिलिंगात् अथ देवस्येत्यत्रातिप्रसंगः तत्र ङस्स्येति विशेषसूत्रेण बाधात् इकारसहितानुकरणसंभवात् ।

सू०—ङस्स्य ॥ अकारात्परो ङस्स्यो भवति । देवस्य ।

सुबोधिनी—ङस्स्य । अतो ङस्स्यः स्यात् । अत इति किम् । वातप्रम्यः । तपरः किम् हाहाः ।

तत्त्वदीपिका—ङस्स्य । पदद्वयमपि प्रथमान्तम् । अतः किम् वातप्रम्यः । तपरः किम् हाहाः । अत्राहुः पूर्वस्य स्वरादित्यादिलिंगात्तदंतलाभः आदिति लिंगाच्च तस्यापीति ज्ञापकद्वयबलमाश्रित्य देवस्य अस्येत्यादिसिद्धिरिति । वस्तुतस्तु तदन्तलाभाय तल्लाभाय च ज्ञापकद्वयानुसरणक्लेशोपार्थ एव देवस्येत्यादौ ङसोतःपरत्वसंभवात् । नच विहितविशेषणादातो विहितत्वाभावेन देवस्येत्यादिसिद्धिर्न स्यादिति शंकनीयम् तस्येत्यादिसिद्ध्यर्थविहितविशेषणानाश्रयणात् ।

सू०—ओसि ॥ अकारस्यैत्वं भवति ओसि परे । देवयोः ।

सुबोधिनी—ओसि । अत एकारः स्यादोसि परे । आदिति किं । हय्योः । तपरः किं । हाहौः । ओसि किं । देवस्य ॥

तत्त्वदीपिका—ओसि । अत्रापि स्याद्यधिकारादेव ओस इत्यादौ नातिप्रसंगः । आउस्रः ओस्रः । अ इति किम् भान्वोः । तपरः किं हाहौः । ओसीति किम् देवस्य ।

सू०—नुडामः ॥ समानादुत्तरस्यामो नुडागमो भवति पुंसि तु ह्रस्वादेव ।

सुबोधिनी—नुडामः । आमो नुडिति कर्तव्ये नुटः पूर्वोच्चारणं प्राथम्यार्थं । यत्र नुडन्यच्च प्राप्नोति तत्र प्रथमं नुडेव भवति । तेन स्त्रीणां वारीणामित्यादावुभयप्रसंगे पराविय्नुमौ बाधित्वा नुडेव । अत एव प्राक् प्रायशो हश्यतामित्युक्तेर्बीजं तत्र नुटा क्वचित्पूर्वेणापि परस्य बाधः क्रियते इति तदर्थः । किं च मंडूकप्लुत्या ङ्णनोह्रस्वादिति पदं पुंस इति चात्रानुवर्त्य वाक्यभेदेन संबध्यते । समानादित्यनुवृत्तं समानांतान्नाम्नः आमो नुट् स्यात् । पुँल्लिङ्गे तु ह्रस्वांतान्नाम्न एव परस्यामो नुट् । नदीवर्जितान्नाम्न इत्यर्थः । समानादिति किं । रायां भवतां । ह्रस्वांतात् किं हाहां । पुंस इति किम् । वातप्रम्यां । नाम्नइति किम् । कारयांचकार । पचतितरामित्यत्र तूकारानुबंध आम् ज्ञेयः, तेन न नुट् । निरनुबंधकस्येति वचनात् । ङेरादेशस्यामस्तु न नुट् परत्वेनाड्यड्भ्यां बाधनात् स्त्रियामित्यादिनिर्देशाच्च ॥

**तत्वदीपिका—नुडामः** । नुट् आम इति छेदः।अत्र समानादित्यनुवर्त्तते। तेन रायामित्यादौ न। अत्राहुः।अत्राधातोरित्यनुवर्त्तनीयम् श्रियामित्याद्यर्थं। तन्न परेणेयाबाधात् एवं तर्हि कारयांचकारेत्यादावतिप्रसंगवारणायाधातोरित्यनुवर्त्तनात्तदपि न परत्वाद्गुणेन बाधात्। पातयांचकारेत्यादावपि लोपेन बाधः पचतितरामित्यादावपि यस्य लोपः परः। नचैवमपि मालांचकारेत्यत्र नुट् स्यादिति वाच्यम्। स्याद्यधिकारेण तद्बाधात् इति। अत्रेदमवधेयम् स्याद्यधिकारस्य जागरूकत्वेन गुणाल्लोपादीनां परत्वानुधावनेन बाधनान्वेषणस्य व्यर्थत्वात्। अत्र ङेरामः कुतो न नुडिति चेन्न स्त्रियामित्यादिलिंगेन विभक्त्युपदेशकाले विद्यमानस्य वामोत्र ग्रहणात्। अतएव चतुराम् शौ च देव आमः देव आमि इत्यादौ नातिप्रसंगः। एतेनैतद्वारणायानर्थकत्वेन समानान्तान्नाम्नोऽभावेन वा प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणमित्यादि समाधानं परास्तम्। ननु वारीणां स्त्रीणामित्यत्र परत्वान्नुमियौ भविष्यतः न नुट् अथनुमि न क्षतिरिति वाच्यम्। नुट्सहित एवामिदीर्घविधानात् दीर्घताभावः प्रसज्येत। अत्रोच्यते। प्रायशो दृश्यतामिहेत्यत्र प्रायश इत्यस्य ग्रहणेन क्वचित्पूर्वेणापि परस्य बाधदर्शनात्। आमोमस्येत्त्वं तु गर्मा स्वर इत्यादिनिर्देशान्न। ननु हाहामित्यादौ कुतो न नुट्। समानात्परत्वसंभवादित्याह पुंसि त्वित्यादि। अयमाशयः अत्र ङ्णोर्ह्रस्वादिति सूत्रान्मंडूकप्लुत्याह्रस्वादिति पुंस इति चानुवर्त्य पुंसि तु ह्रस्वादेवेति व्याख्यानात्तत्र ह्रस्वात्परत्वाभावान्न नुट् अत्रार्थे झषानादां हौ इत्यादिलिंगम्।

**मू०—नामि ॥ नामि परे पूर्वस्य दीर्घो भवति। देवानाम्। देवे। देवयोः।**

**सुबोधिनी—नामि। पूर्वस्य स्वरांतस्य नाम्नो दीर्घः स्यात् नुट्सहिते आमि परे। नुम्सहिते आमि तु न दीर्घो भवति। यदि हि नुम्सहिते आम्यपि दीर्घः स्यात्तर्हि नुमं बाधित्वा नुड्विधानं व्यर्थं स्यात्। नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेत्युक्तत्वान्नुट्सहित एव आम् गृह्यते ॥**

**तत्त्वदीपिका—नामीति**। नुट्सहित आम् नाम् तस्मिन् नामि परे पूर्वस्य दीर्घो भवति इत्यर्थः। आमीति तु न सूत्रितम् वर्मणामित्यादावपि दीर्घः स्यात्। तथाहि। अत्र नोपधाया इति सूत्रस्य प्राप्तिसंभवः स्यात्तत्राप्यामीत्यस्यानुवृत्तेरामः सत्वात्। यत्तु कैश्चिन्नामीत्युक्त्या वारीणामित्यत्र सनुम्यप्यामि दीर्घः सिध्यतीत्युक्तम्। तत्र नुट्सहित आम् नाम् तस्मिन्नामीति व्याख्यानं सर्वसंमतत्वेन स्वोक्त्यैव तद्विरोधन चोपेक्षितम्।

**मू०—किलात्षःसःकृतस्य ॥ कवर्गादिलाञ्च प्रत्याहारात्परस्य केनचित्सूत्रेण कृतस्य सकारस्य षकारादेशो भवति अन्ते स्थितस्य न भवति। देवेषु।**

**सुबोधिनी—किलात्षःसःकृतस्य। कुश्च इलश्चानयोः समाहारः किलं तस्मात् किलात्। क्रियते स्म विधीयते स्मेति कर्मणिः क्तः। कृञो विहितस्य कृतस्य शास्त्रेण विहितस्येत्यर्थः। स इति षष्ठ्यंतं ष इति प्रथमांतम् अकारउच्चारणार्थः। किलात्परस्य कृतस्यादेशरूपस्य प्रत्ययावयवस्य च सः स्थाने षः स्यात्। षरुर्नो णोऽनन्ते इत्यतोऽनन्ते इत्यनुवर्तते तेन पदांते स्थितस्य सस्य षत्वं न। किलात्किं देवस्य। कृतस्येति किम् सुपीः सुपिसौ। पदांते स्थितस्य नेति किम्। हरिस्तत्र ॥**

**तत्त्वदीपिका—किलात्षःसः कृतस्येति**। कुश्च इलश्च किलं तस्मात्। ष इति प्रथमान्तम् स इति षष्ठ्यन्तम्। अत्रषरुर्नोणोनन्त इत्यतोऽनन्त इत्यनुवर्त्तते ततश्चान्ते स्थितस्य सस्य षत्वं न हरिस्तत्रेत्यादौ। ननु कृतस्य सस्येति व्याख्यानात् देवेष्वित्यादौ सुपः कृतत्वेन समात्रस्य कृतकत्वाभावात्कथं षत्वमिति चेन्न अरात्रिष्वित्यादिलिंगात्क्वचिदवयवग्रहणेनापि समुदायस्य ग्रहणात्। नचैवं तिस्र इत्यादौ षत्वप्रसंगइति वाच्यम् तत्र तिस्र चतस्र इति सत्वनिर्देशेन तद्बाधनसंभवात्। अत्र केचित् नन्वत्र कु इति कुशब्द इति धातोर्ग्रहणं। कुत्सितार्थाव्ययस्य वा कवर्गस्य वा। नाद्यः इलादित्येवसिद्धत्वात्। ननु यदा कुधातुस्तदा इलोपि गत्यर्थो धातुरेव साहचर्यान्मैवं अकारोच्चारणसामर्थ्यान्न धातुः। एवं तर्हि कोरेव यथा स्यान्नान्यस्माद्धातोरिति नियमार्थं

कुधातुरेवेति चेन्न । इलेन संज्ञाशब्देन साहचर्यात्संज्ञाशब्दस्यैव कोर्ग्रहणात् चोः कुरित्यादौ कवर्गार्थस्यैव सिद्धत्वाच्चेत्याहुः । सतो हि कार्य्यिणः कार्येण भवितव्यमिति । सः षः इति निर्देष्टव्ये विपरीतनिर्देशः ष स स इति द्विसकारनिर्देशेन षत्ववत्सत्वस्यापि क्वचिद्विध्यर्थः तेन सिस्वेदयिषतीत्यादि सिद्धम् । यच्च दधिसेचौ । यजुष्षु सर्प्पींषि । अवष्टंभः सुष्टु इत्यादिसिद्ध्यर्थमनेकक्लेशानुकरणं तत्सर्वं रभसोक्तिमात्रमित्युपेक्षितं । बहुसेचावित्यत्र षत्वनिषेधार्थं शेषा निपात्या कत्यादय इत्यस्य शरणीकर्त्तव्यत्वेन सर्वस्यानुक्तस्यानेनैव निर्वाहसत्वात् । किलात्किम् । देवस्य । विश्वपासु । कृतस्येति किम् । बिसम् ॥

**मू०–सिर्द्धिः ॥ आमन्त्रणेऽर्थे सिर्द्धिसंज्ञको भवति ।**

**सुबोधिनी–**सिर्द्धिः । आमंत्र्यते प्रसन्नं क्रियतेऽनेनेत्यामंत्रणं । साधने युट् । आमंत्रणे किम् । रामः, सत्यः । सिः किम् । रामौ ॥

**तत्त्वदीपिका–**सिर्द्धिरिति । आमंत्रण इत्यनुवर्त्तते । इत्यभिप्रेत्याह आमंत्रणेर्थे इति । आमंत्रणं चानुकूलकरणम् । आमंत्रणे किं रामः । सिः किं हेरामौ ।

**मू०–समानाद्धेर्लोपोऽधातोः ॥ ह्रस्वात्समानादेदोतश्चोत्तरस्य धेर्लोपो भवत्यधातोः । आभिमुख्याभिव्यक्त्यै हेशब्दस्य प्राक् प्रयोगः । हे देव । हे देवौ । हे देवाः । एवं घटपटरामकृष्णमुकुन्दादयः ।**

**सुबोधिनी–**समानाद्धेर्लोपोऽधातोः । ङ्णनो ह्रस्वादित्यतो मंडूकप्लुत्या ह्रस्वादिति पदं एदोतोत इत्यत एदोत इति चानुवर्तते । ह्रस्वसमानान्तादेदोदन्ताच्च नाम्नः परस्य धेर्लोपः स्यात् । ह्रस्वसमानांतादिति किम् । हे वातप्रमीः । अधातोरित्युत्तरार्थम् । एदोत इति ग्रहणं किम् । हे हरे । हे विष्णो । अत्रहि परत्वान्नित्यत्वाच्च धावित्यनेनैदोतोः कृतयोर्ह्रस्वात्परत्वं नास्ति । अभिमुखस्य भाव आभिमुख्यं संमुखीकरणम् आभिमुख्यस्याभिव्यक्तिः प्रकटीकरणं आभिमुख्याभिव्यक्तिस्तस्यैनाम्नः प्राक् हेशब्दस्य प्रयोगोऽर्थतः शब्दतो वा योज्यः ।

**तत्त्वदीपिका–**समानाद्धेर्लोपोऽधातोरिति । लोप अधातोरिति छेदः । समानादिति किं गौः । धातोरिति किं हे श्रीः । ननु हे हाहाः हे हर इत्यादावतिव्याप्त्यव्याप्तीइत्यतआह ह्रस्वादिति। ननु सूत्रे ह्रस्वादित्येव किमिति नोक्तम् किंसमानादित्यनेनेति चेत् । अमृशसोरस्येत्यत्रानुवृत्त्यर्थमेतस्यावश्यकत्वात् । न च समानादित्युक्त्या कथं ह्रस्वलाभ इति वाच्यम् लक्षणयेति गृहाण । अथैवमप्येदोतोः कुतो लब्धिरिति चेत् अधातुग्रहणात् । अधातुग्रहणात्कथमिति चेत् शृणु अधातुग्रहणं तावद्व्यर्थं । नच हे श्रीरित्यादावतिव्याप्तिः ह्रस्वग्रहणेनैव तद्वारणात् । नचाम्शसोरित्यत्रानुवृत्त्यर्थं श्रियमित्यादौ परत्वादिनैव तद्बाधात् । न चाचिनवमित्यादिवारणार्थं स्याद्यधिकारेणैव तद्वारणसंभवात् तस्माद्धातुग्रहणं व्यर्थत्वादेतज्ज्ञापनार्थमेवोपात्तम् । लोपग्रहणं तु व्यर्थमेव । रिलोपो दीर्घ इत्यतोनुवृत्त्यैव तल्लाभात् न चैकयोगनिर्दिष्टत्वेन दीर्घस्याप्यनुवृत्तिः स्यादिति वाच्यम् । सैषाद्धस इत्यत्र केवलाप्यनुवृत्तिदर्शनात् । यद्वा लोपग्रहणस्यैवैतज्ज्ञापनमधातुग्रहणन्तु त्रितोनुमित्यत्रोपयोगार्थमपि न्याय्यम् जलधिरित्यादौ तु स्याद्यधिकारेण वारणम् । एवं च ग्रामणि कुलमित्यादि एकदेशविकृतन्यायेन धातुत्वेऽनेनाप्राप्तेपि नपुंसकात्स्यमोर्लुकैव रूपसिद्धेः ।

**मू०–सर्व्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम, सम, सिम, त्वत्, त्व, भवतु, नेम, एक, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर्, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, द्वि, किम्, युष्मद्, अस्मद् । एतेसर्व्वादयस्त्रिलिङ्गाः ।**

सुबोधिनी–सर्व, विश्व, उभ, उभय, अन्य, अन्यतर, इतर, डतर, डतम, सम, सिम, त्वत्, त्व, भवतु, नेम, एक, पूर्व, पर, अवर, दक्षिण, उत्तर, अपर, अधर, स्व, अन्तर, त्यद्, तद्, यद्, एतद्, इदम्, अदस्, द्वि, किम्, युष्मद्, अस्मद्, । एते सर्वादयस्त्रिलिंगाः । एतेपंचत्रिंशच्छब्दाः त्रीणि लिंगानि येषां ते त्रिलिंगाः सर्वादिसंज्ञका ज्ञेयाः । गणसूत्रमिदम् । आदिशब्दोत्रावयववाची। सर्वः आदिराद्यावयवो येषां ते सर्वादयः । तद्गुणसंविज्ञानोयं बहुव्रीहिस्तस्यान्यपदार्थस्य गुणानां विशेषणानां वृत्तिपदार्थरूपाणां कार्य्यान्वयितया संविज्ञानं यस्मिन् स तद्गुणसंविज्ञान इत्यक्षरार्थः । आदिशब्दस्यावयववाचित्वादुद्भूतावयवभेदः समुदायः समासार्थ इति । बहुवचनं तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदंगेष्विति न्यायेन तदवयवेषु प्रवर्तमाना सर्वादिसंज्ञाऽविशेषात्सर्वशब्देऽपि वर्तते इति युक्तम् । तद्गुणसंविज्ञानत्वं संयोगसमवायान्यतरसंबंधेन । लंबकर्णमानयेत्यादौ तद्गुणसंविज्ञानत्वमेव । स्वस्वामिभावसंबंधे तु चित्रगुमानयेत्यादावतद्गुणसंविज्ञानत्वं । तदंतस्यापीयं सर्वादिसंज्ञा भवति । द्वंद्वे सर्वादीनां सर्वकार्यं नेति ज्ञापकात् संज्ञोपसर्जनीभूतेषु सर्वादिषु सर्वादिसंज्ञा न प्रवर्तते । मुख्यामुख्ययोर्मुख्ये कार्य्यसंप्रत्ययो नामुख्ये इतिन्यायात् । मुख्यो हि लोकप्रसिद्धोर्थः । तत्र सर्वविश्वशब्दौ कृत्स्नपर्यायौ । उभशब्दो द्वित्वविशिष्टस्य वाचकोत एव नित्यं द्विवचनांतः । ननु उभस्य सर्वनामत्वे कोर्थ इति भाष्यकारप्रयोगो विरुध्येत । उच्यते । अर्थपरस्यैव नित्यं द्विवचनांतता न तु स्वरूपानुकरणस्येति । अथ सर्वादिषु उभशब्दपाठो व्यर्थः । सर्वादिकार्याणां स्मडादीनां द्विवचनेऽभावात् उच्यते । सर्वादिगणे उभशब्दस्य पाठस्तु उभकाविति रूपसिद्ध्यर्थः । तथाहि । उभशब्दस्तावद्द्विवचनमात्रविषयः । ञित्स्वरितेत उभे इति लिंगात् । समासताद्धितादौ तु द्विवचनलोपे नासौ प्रयुज्यतेऽनभिधानात् । द्विवचनलोपे तु उभशब्दाद्वृत्तिविषये स्वार्थे नित्यमयट् भवति । उभयोन्यत्रेति । अन्यत्र द्विवचनपरत्वाभावे इत्युक्तत्वात् । तेन उभयतः, उभयत्र । उभाभ्यां पक्षाभ्यां विनीता निद्रा यैस्ते इति विग्रहे उभयपक्षविनीतनिद्रा इत्यादिप्रयोगवत् कप्प्रत्ययेप्ययट् प्राप्तः । अयटि सति उभयकाविति रूपापत्तिः स्यात् तन्निवारणार्थः सर्वादिषूभशब्दस्य पाठः । तेनाख्यातान्ययसर्वादेष्टेः प्रागक् इत्यक्प्रत्ययेउभकाविति सिध्यति । ताद्धितस्य मध्यपतितत्वेन द्विवचनपरत्वानपायात् । उभयशब्दस्तु अवयवद्वयारब्धेऽवयविनि वर्तते । उभाववयवौ यस्य स उभयः । संख्याया अवयवे तयडयटावित्ययट् । ननु "द्वयेषामपि मेदिनीभृतामिति" माघप्रयोगः कथं संगच्छते तस्य सर्वादित्वाभावात् । उच्यते । द्वयं द्वैधमिच्छंति गच्छंतीति द्वयेषस्तेषां द्वयेषामिति । इषेः क्विबंतस्य रूपम् । अन्यशब्दो भिन्नार्थः । अन्यतरशब्दोऽव्युत्पन्नः । स्वभावात् द्विविषयेनिर्द्धारणेऽस्ति । इतरस्त्वन्यनीचयोः । डतरडतमौ प्रत्ययौ । यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदंतग्रहणं नास्ति विभक्त्यंतं पदमिति ज्ञापकात् तथापीह तदंतग्रहणं । येभ्यो डतरडतमौ विहितौ तेषां तदंतानां ग्रहणमित्यर्थः । केवलयोः संज्ञायाः प्रयोजनाभावात् । कतरकतमयतरयतमादयस्तदंताः । द्वयोर्बहूनां चैकस्य निर्द्धारणे इति डतरडतमौ । समशब्दः सर्वपर्यायः तुल्यपर्यायस्तु नेह गृह्यते । "सिमः कृत्स्ने च शक्ते च स्यान्मर्य्यादावबद्धयोः" त्वत्त्वशब्दावन्यपर्यायौ । आद्यस्तांतएतस्य पाठोऽकार्थः । भवतु शब्दस्तु भवदर्थः । उणादौ भातेर्डवतुरिति डवतुप्रत्ययांत उकारानुबंधो व्युत्पादितः । आसर्वादेरित्यात्वमक्प्रत्ययश्च प्रयोजनमस्य भवादृक् भवकान् । नेमशब्दोऽर्धवाची । "एकोन्यार्थे प्रधाने च प्रथमे

केवले तथा ॥ साधारणे समानेल्पे संख्यायां च प्रयुज्यते ॥" संख्यायामेकवचनान्तः । पूर्वपरावरशब्दादिग्देशकालवाचकाः सर्वादिसंज्ञकाः । दक्षिणशब्दस्तु दिग्देशवाचकः सर्वादिः नतु प्रवीणवाची । उत्तरपरशब्दौ दिग्देशकालवाचकौ सर्वादी । अधरस्तु दिग्देशवाचकस्स र्वादिः । " स्वो ज्ञातावात्मनिस्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने" इत्यमरः। "स्वः स्यात्पुंस्यात्मविज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने " इति मेदिनी । इतिचत्वारोर्थाः स्वशब्दस्य तत्रात्मात्मीययोरेव सर्वादित्वम् " अंतरमवकाशावधि परिधानांतर्द्धिभेदतादर्थ्ये ॥ छिद्रात्मीयविना बहिरव सरमध्येंतरात्मनि च " इत्यंतरशब्दस्यार्थास्तत्र परिधानबहिर्योगयो रेव सर्वादित्वम् । त्यत्तदौ शब्दौ पूर्वोक्तपरामर्शकौ । यद्शब्द उद्देश्यसमर्थकः । एतद्इदमौ शब्दौ प्रत्यक्षोपस्थितवाचकौ । अदस्शब्दस्तु व्यवहितवाचकः । उक्तंच " इदमस्तु सन्निकृष्टं समीपतरवर्ति चैतदो रूपं ॥ अदसस्तु विप्रकृष्टं तदिति परोक्षे विजानीयात्" इति । द्विशब्दो द्वित्वविशिष्टवाचकः । किम्शब्दाः प्रश्ने आक्षेपेच । अलिंगः संबोधनैकविषयकश्च युष्मदर्थः । अलिंगउच्चारयितॄर्थोऽस्मच्छब्दः ॥

**तत्त्वदीपिका**—सर्वविश्वेत्यादि । सर्वादयः पंचात्रिंशत् । तत्र सर्वविश्वशब्दौ कृत्स्नपर्यायौ उभशब्दोद्वित्वविशिष्टस्य वाचकः अत एव नित्यं द्विवचनान्तः इह पाठस्तूभकावित्यकार्थः अन्यथा कएव स्यात् । तस्मिन् द्विवचनपरत्वाभावादुभयकावित्येव रूपं स्यात् उभयशब्दस्तु अवयवद्वयारब्ध इत्यर्थः तिरोहितावयवभेदत्वादेकवचनम् । अन्योभिन्नार्थः अन्यतरान्यतमशब्दावव्युत्पन्नौ स्वभावाद्द्विबहुविषये निर्द्धारणे वर्त्तेते । तत्रान्यतमशब्दस्य गणे पाठाभावान्न संज्ञा ॥ इतरशब्दस्त्वन्यनीचयोः । त्वत् त्व इत्यन्यपर्य्यायौ । आद्यस्तान्तः । नेम इत्यर्द्धे । समः सर्वपर्यायः तुल्यपर्यायस्तु नेह गृह्यते । सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः । पूर्वपरावरोत्तरापराः पंच दिक्कालयोस्तदवच्छिन्ने च । दक्षिणाधरशब्दौ दिशि तदवच्छिन्ने च न दाक्षिणः प्रवीणः अधरे तांबूलरागः उत्तरे प्रत्युत्तरे वा शक्तइत्येते गृह्यंते । कथं परे शत्रवः अपरे वा दिन इति शत्रुप्रतिपादिवाचिनोः सर्वादित्वं उपचारादिति गृहाण । न चोपसर्जनत्वात्कथमिति वाच्यम् । न हि लाक्षणिकत्वमुपसर्जनत्वम् किं तु स्वार्थविशिष्टार्थांतरसंक्रमः । अथ दिग्वाचकत्वे संज्ञात्वात्सर्वादिकार्यानिषेध इति वाच्यम् ॥ आधुनिकसंकेतो हि संज्ञा न च सा दिक्षु कुरुषु तु सास्त्येव तेनोत्तराः कुरवः केचित्तु दिक्षु चिरन्तनः कुरुषु तु आधुनिकः संकेत इत्यत्र प्रमाणाभावः सुमेरुमवधिमपेक्ष्य कुरुषूत्तरशब्दप्रवृत्तेरित्याहुः । तत्र वृद्धव्यवहार एव प्रमाणमिति तु नव्याः स्वशब्दस्य ज्ञातिरात्माधनमात्मीयं चेति चत्वारोऽर्थाः तत्र जातौ धने च न सर्वादित्वम्। अन्तरमवकाशावधिपरिधानांतर्द्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येन्तरात्मनि चेति । अन्तरशब्दस्यार्थेषु परिधानबहिर्योगयोरेवसर्वादित्वम् । बहिरित्यनावृत्तो देशो बाह्यं चोच्यते । भवच्छब्दस्य पाठस्तु आसर्वादेरित्यात्वार्थोऽकार्थश्च त्यद् तद् शब्दौ पूर्वोक्तपरामर्शकौ । यदुद्देशसमर्पकः । एतदिदमौ प्रत्यक्षोपस्थिते। अदसव्यवहिते । एकोऽन्यार्थे प्रधानेल्पे प्रथमे केवले तथा । साधारणे समाने च संख्यायां च प्रवर्त्तते । संख्यायामेकवचनान्तएव अलिंगः । संबोधनैकविषयश्च युष्मदर्थः । किंशब्दः प्रश्ने आक्षेपे च ।

**मू०—जसी ॥ सर्वादेरकारान्तात्परो जस् ईर्भवति । सर्वे ।**

**सुबोधिनी**—जसी । अदंतात्सर्वादेर्जस ईः स्यात् । षष्ठया अविधानान्नांतस्यायमादेशो भवति । निर्दिश्यमानस्यादेशा भवंतीति न्यायेन जस् इत्यस्य सर्वस्यैव स्थाने आदेशः । यद्वा जसीत्यत्र ईई इति प्रश्लेषेण गुरुत्वात्सर्वादेशः अन्यथा दीर्घग्रहणस्य प्रयोजनाभावात् । यद्वा अस्त्यत्र दीर्घस्य प्रयोजनं । द्वितीय इकारः प्रथमचरमादिभ्योपि विध्यर्थः । ननु अकारमाश्रित्य जातईकारः कथमेत्वरूपेणाकारस्य विघातकः स्यात् । उच्यते । उभय इति निर्देशेन सन्निपातपरिभाषाया अनित्यत्वाऽभ्युपगमाद्विघातको भवतीत्यर्थः ॥

तत्त्वदीपिका—जसी । जसईइइतिछेदः इकारप्रश्लेषः किमर्थम् इति चेत्सत्यं प्रथमादिभ्योपि विध्यर्थो द्वितीयः अथैवं जसोत्यस्य सस्यैव किन्नेति चेन्न । अन्त्यविधायकषष्ठ्याअदर्शनात् । उभयइतिलिंगाच्च । अत्रके- चित्ससमभिभव्यावृत्त्यर्थं दीर्घविधिः नतु तदर्थमित्याहुः । तन्न । उभयइतिनिर्देशेन तद्भ्रमनिरासात् । ननुसर्वेईत्यत्र- कथनमइएइत्यनेनैत्वं । सन्निपातपरिभाषया तस्य बाधात्इतिचेन्न । अत्रोभयोरपि विनाशे सन्निपातपरिभाषाया अविषयत्वात् । उभयइति निर्देशेन तस्या अनित्यत्वज्ञापनाद्वा ।

**मू०—ष्रुर्नोणोऽनन्ते ॥ षकाररेफऋवर्णेभ्यः परस्य नकारस्यैकपदस्थस्य णकारादेशो भवत्यन्ते स्थितस्य न भवति । सर्वानित्यादौ ।**

सुबोधिनी—ष्रुर्नोणोऽनंते । षृच रृच आच एषां समाहारः ष्रृ तस्मात् ष्रुः । संज्ञापूर्वकत्वेनानित्यत्वान्नामिनः स्वर इति न नुम् । अंनत इत्यत्र नञ् प्रसज्यप्रतिषेध एव अन्तः- शब्देन पदान्त एव गृह्यते । न तु वाक्यांतः । व्याकरणे पदसंस्कारपक्षस्याभ्युपगमात् । ष्रुर्न धातोर्नामिन इत्यादिनिर्देशादेकपदे एव णत्वविधिरस्ति तेनैकपदस्थस्य षृरृऋवर्णेभ्यः परस्य नस्य णः स्यादपदान्ते । यथा पुष्णाति, चतुर्णाम् । धातॄणाम् । अपदान्ते किम् । पितॄन् । ष्रुरिति किं देवेन ।

तत्त्वदीपिका—ष्रुर्नोणोनन्तइति।षृचरृचआ च एषांसमाहारः ष्रृ तस्मात् ष्रुःषकारफऋवर्णेभ्यइत्यर्थः ननुसमासे नपुंसकत्वात् ष्रुरिति कथमिति चेत्सत्यम् । नामिनः स्वरइतिनुमः संज्ञापूर्वकत्वेनानित्यत्वात् सौत्रत्वाद्वा पुंस्त्वम् । अनन्तेइति किं कर्तॄन् । ष्रुरिति किं देवेन । न इति किं वर्म । ननु हरेर्नेत्रमित्यत्र कुतो न णत्वमिति चेन्न धातोर्नामिन इत्यादि निर्देशेनैकपदएवास्यस्वीकारात् । अथैवं रामनामेत्यादावपि कुतो न णत्वं समासेनै- कपदत्वादिति चेन्न गर्गनडेत्यादि निर्देशेन समासेनैकपदत्वे न णत्वं । अथ हरिकामेणेत्यादौ कथमिति वाच्यम् ज्ञापकसिद्धं न सर्वत्रेत्याद्याश्रयणात् । नन्वत्र षग्रहणं किमर्थं । पुष्णातीत्यत्र णत्वं कथमिति वाच्यम् । ष्टुत्वे- नैव तत्सिद्धेः नच पुषाणेत्यादौ व्यवहितेपि णत्वार्थमिति चेत् । ष्रुरिति पंचमीनिर्देशेनाव्यवहितस्यैव णत्वविधा- नात्।तथाचोत्तरार्थमिहैव कृतं षरेफस्यसाहचर्यादृकारोपि वर्ण एव गृह्यते नतुधातुः ननु पितॄणामित्यत्र ऋकारैक- देशरेफमाश्रित्य णत्वं भविष्यति किमृकारेणेति चेन्न नरसिंहवज्जात्यन्तराक्रान्तत्वादृकारत्वेनैव तस्य सर्वव्यव- हारसिद्धत्वान्न तु रेफत्वेनेति न तत्र रेफत्वमतोवश्यं ऋग्रहणम् अत एव हरेइन्द्रइत्यादावेकारान्तर्गतमिकारमा- श्रित्य न सवर्णदीर्घः । अत्र केचित् । ननु चैवमपि धातर्नमस्ते इत्यादौ पदादेर्नस्य णत्वं स्यात् । अनन्त इति निषेधानुपस्थानात् अनन्त इत्यस्यकाकाक्षिगोलकन्यायेनावृत्त्या वा ष्रुरित्यनेनापि संबंधात् पदान्तेभ्यः षका- ररेफऋवर्णेभ्योऽपि प्रतिषेधादित्याहुः तत्रेदमवधेयम् । एकपदे एव णत्वविधानस्योक्तत्वेन द्वितीयपदस्थस्य न- स्यणत्वशंका निर्मूलेति सूरिभिर्विभावनीयम् ।

**मू०—अवकुप्वन्तरेऽपि॥अवप्रत्याहारेण कवर्गेण पवर्गेणानुस्वारेण विसर्गेण ᳵक ᳶपाभ्याञ्च मध्ये व्यवधानेऽपि भवति नान्येन । सर्वेण ।**

सुबोधिनी—अवकुप्वन्तरेऽपि । अवश्च कुश्च पुश्च तेषां समाहारः अवकुपु । तेनांतरं अवकुप्वंतरं तस्मिन् स्वराद्यदंतस्येति अवशब्दस्य पूर्वनिपातः । दंतोष्ठ वकारेणावप्रत्या- हारः । अंतरशब्दो मध्यवाची । ष्रुरित्यनुवर्तते । पंचमीनिर्देशाद्व्यवधाने सति णत्वं न प्राप्नोत्यत इदमारभ्यते । अत्रापिशब्दोऽनुक्तसमुच्चयार्थस्तेनानुस्वारविसर्गजिह्वामूलीयोपध्मा- नीयाज्ञेयाः।एतेषां व्यस्तानां यथासंभवं मिलितानां च मध्ये व्यवधाने सति ष्रुः परस्य नस्य णः स्यादनंते । अवेत्यादि किम् । मृत्स्ना । ष्रुरिति किम् । भावना । अनंते किं । सर्वान् । अनुस्वारादिव्यवधाने यथा बृंहणम् । उरः केन, उर ᳵकेण । उरः पेन, उरᳶ- पेणेत्यादि ॥

तत्त्वदीपिका–अवकुप्वंतरेपि । अवश्च कुश्च पुश्च एतेषां समाहारः अवकुपु तेन अन्तरं तस्मिन् यदिगर्गाः शतं दंड्यंतामितिवत्समुदाये वाक्यसमाप्तिराश्रियते तदा क्वापि न प्राप्तिः ब्राह्मणा भोज्यन्तामितिवद्यदि प्रत्येकं वाक्यपरिसमाप्तिस्तदा अवर्णेत्यादि न स्यात् तस्मादेतैर्व्यस्तैर्यथासंभवमिलितैश्च व्यवाये णत्वं भवति यथा गर्गैः सह न भोक्तव्यमिति प्रत्येकं च न सह भुज्यते समुदितैरपि तथेहापि व्यस्ताः समस्ताश्चावादयो व्यवायमुपलक्षयितुं शक्ताः।अपिशब्दोनुक्तसमुच्चयार्थः तेनानुस्वारविसर्ग ᳲ क ᳲ पैर्व्यवायेपि णो भवति कुप्ववान्तरेपीति सुवचं अल्पस्वरत्वादुकारान्तत्वात्कुपुएतयोरेव पूर्वनिपातस्य न्याय्यत्वात्तथा च लाघवमपीति ध्येयम् स्वराद्यदन्तस्येत्यस्य यदि परत्वाद्बलवत्त्वं तदेदम् ।

**मू०–सर्वादेःस्मट् ॥ सर्व्वादेरकारान्तात्परस्य ङेइत्येतस्य स्मडागमो भवति । सर्व्वस्मै ।**

सुबोधिनी–सर्वादेःस्मट् । ङेअगित्यस्यापवादोयं । अदंतात्सर्वादेर्ङेइत्यस्यस्मट् स्यात् । अदंतादितिकिम् । त्वते, भवते । सर्वादेरिति किं । रामाय ॥

तत्त्वदीपिका–सर्वादेःस्मडिति । अत्रातइत्यनुवृत्तेरदंतादिति अतो भवते इत्यत्र न।तपरकरणन्तु स्पष्टार्थमेव न त्वाबन्तानिवृत्त्यर्थं तत्रायडादिनैव बाधात्।सर्वादेरिति किं देवाय।अकोप्ययमपवादो येननाप्राप्तिन्यायात् सर्वं आदिर्यस्य स सर्वादिरिति तद्गुणसंविज्ञानो बहुव्रीहिरतः सर्वशब्दस्यापि लाभः न च सर्वादिशब्दस्य समुदायवाचित्वात्कथं तदवयवे सर्वशब्दे इति वाच्यम् समुदायस्य युगपल्लक्ष्ये प्रयोगाभावादानर्थक्यात्तदंगेष्विति न्यायेन तदवयवे एव तत्कार्यम् ।

**मू०–अतः ॥ सर्व्वादेरकारान्तात्परस्यातस्स्मडागमो भवति । सर्व्वस्मात् ।**

सुबोधिनी–अतः । ङसिरदित्यतो ङसिरिनुवर्त्य विभक्तिविपरिणामेन व्याख्यातव्यं । यथा अदंतात्सर्वादेः परस्य ङसेरादेशस्यातः स्मट् स्यात् ॥

तत्त्वदीपिका–अत इति । अत्र ङसेरादेशएवात् गृह्यते नत्वकारः तस्मादिति ज्ञापकात् ।

**मू०–सुडामः ॥ सर्व्वादेरवर्णान्तात्परस्यामः । सुडागमो भवति । सर्वेषाम् ।**

सुबोधिनी–सुडामः । अमूशसोरस्येत्यतो मंडूकप्लुत्या ऽस्येत्यनुवर्त्य व्याख्येयं । यथाअवर्णातात्सर्वादेरामः सुट् स्यात् । नुडाम इत्यत आम् इत्यनुवर्तनीयं तेनामः षष्ठीबहुवचनस्यामः सुडित्यर्थो ज्ञेयः । तेन आमङेरित्यादिना कृतस्यामस्तुसुड् न । युवां आवां सर्वस्यामित्यत्र परत्वात् ङितां यडित्यपि समाधानमस्ति ॥

तत्त्वदीपिका–सुडाम इति अत्रामूशसोरस्येत्यतो मंडूकप्लुत्यास्येत्यनुवृत्त्या अदिति नेत्याह। अवर्णान्तादिति सर्वादेरेतावन्मात्रोक्तौ भवत इत्यत्रातिप्रसंगः स्यात् । अदन्तादित्युक्तावावन्तेऽव्याप्तिः ।किंचैवंसर्वमिच्छति सर्वीयतीति सर्वीयां सर्वं कुर्वतामित्यादावतिव्याप्तिवारणाय यादीनां परत्वाद्यनुसरणक्लेशोपि न कार्यः ॥

**मू०–ङिःस्मिन् ॥ सर्व्वादेरकारान्तात्परो ङिः स्मिन्भवति । सर्व्वस्मिन् । शेषन्देववत् । एवंविश्वादयः । डतरडतमौ प्रत्ययौ ततस्तदन्ताः शब्दा ग्राह्याः ।**

सुबोधिनी–ङिःस्मिन् । अदंतात्सर्वादेर्ङिः स्मिन् भवति।अतः किं। भवति । सर्वादिगणे डतरडतमौ प्रत्ययौ पठितौ । न केवलःप्रत्यय इत्युक्तत्वात्।तौ डतरडतमावंते येषांते तदंताः कतरकतमादयो ज्ञेयाः ॥

तत्त्वदीपिका–ङिःस्मिन्निति । अत्राप्यत इत्यनुवर्तते इस्मिन्नित्येव सूत्रयितुमुचितं ङकारग्रहणं स्पष्टार्थम् । न च जसःशी सर्वाणीत्यादावतिव्याप्तिरिति वाच्यम् । तत्र परत्वान्नुमाबाधात् । अथ जातिपक्षे ह्रस्वग्रहणेन दीर्घस्यापि ग्रहे ईमौ जसीति कृतेष्वतिप्रसंग इति वाच्यम् । उमे उभये इत्यादिलिंगेन ह्रस्वव्यक्तेरेवालाभात्सर्वेष्टिरित्यादौ तु स्यादिविशेषणेन वारणसंभवात् स्यादीनां परवर्णइति व्याख्यानात् । ततस्तदन्ता इत्यादि केवलयोः संज्ञायाः प्रयोजनाभावादित्यर्थः।एतन्मूलं तु जसीसर्वादेः स्मट् अतः ङिःस्मिन्निति सूत्रचतुष्टये । वेत्यनुवर्त्य तस्य व्यवस्थितत्वमाश्रित्य सर्वार्थनिर्वाहो बोध्यः ।

**मू०–पूर्वादीनांनवानांजस्ङसिङीनामीस्मात्स्मिनोवा ॥ पूर्वे, पूर्वाः, पूर्वस्मात्, पूर्वात्, पूर्वस्मिन्, पूर्वे, शेषं सर्ववत् । एवंपरादयः "सर्वादिस्सर्वकार्य्यीस्यान्नचेद्गौणोऽथवाभिधा ॥ पूर्वादिश्च व्यवस्थायां समोऽतुल्येऽन्तरोऽपुरि ॥ परिधाने बहिर्योगेस्वोऽर्थज्ञात्यन्यवाच्यपि" ॥ सर्वमतिक्रान्तोऽतिसर्वः तस्मै अतिसर्वाय देहि । प्रियं सर्वं यस्यासौ प्रियसर्वः तस्मै प्रियसर्वाय । सर्वो नाम कश्चित्तस्मै सर्वाय । अतिपूर्वाय । अंतरायां पुरि । समाय तुल्याय । व्यवस्थायां किम् । दक्षिणा गाथकाः कुशला इत्यर्थः । असंज्ञायां किम् । उत्तराः कुरवः । अन्तरेऽन्तरा वा शाटकाः परिधानीया इत्यर्थः । अन्तरेऽतरा वा चांडालस्य गृहाः । बाह्या इत्यर्थः । बहिर्योगे किम् । ग्रामयोरन्तरे तापसाः । मध्य इत्यर्थः ।**

सुबोधिनी–पूर्वादीनांनवानांजस्ङसिङीनामीस्मात्स्मिनोवा । पूर्वादीनां सप्तानां व्यवस्थायामसंज्ञायां स्वशब्दस्य चात्माऽऽत्मीयार्थयोरंतरशब्दस्य बाह्ये परिधानीये चार्थे गणपाठात्सर्वत्रसर्वादिसंज्ञा प्राप्ता सा जस्ङसिङिषु परतो वा भवतीत्यर्थः । "सर्वादिः सर्वकार्यीस्यान्नचेद्गौणोऽथवाभिधा ॥ पूर्वादिश्च व्यवस्थायां समोऽतुल्येंतरोऽपुरि॥ परिधानेबहिर्योगे स्वोर्थज्ञात्यन्यवाच्यपि ॥ " चेद्यदि सर्वादिःसर्वादिगणे गौणो नाऽथवाऽभिधा नाम न स्यात् तदा सर्वादिः सर्वशब्दस्य कार्यमस्ति यस्य सः सर्वकार्यी स्याद्भवेत् । मांतोपधादितीन् । सर्वनामाख्य इति वा पाठः । येतु संज्ञोपसर्जनीभूताः सर्वादयस्तेषां सर्वादिकार्यमन्तर्गणकार्यं च न । सर्वादिसंज्ञाया अभावात् । सर्वादिकार्यम् यथा । जसीतीत्वं, सर्वादेरिति स्मट्, अत इतिस्मट् ङिःस्मिनिति स्मिन्, सुडाम इति सुडागमः, यटोच्चेतिसुट्, इत्यादि । अंतर्गणकार्यं यथा। त्वन्यादेरिति श्नुः, त्यदादेष्टेरित्यः, दस्यमइति मः, सौस इति स इत्यादि । स्वार्थं परित्यज्य अन्यार्थं ब्रूते स गौणोयथा । सर्वमतिक्रान्त इत्यत्रात्यादयः क्रांताद्यर्थेद्वितीययेति तत्पुरुषः । अतिसर्वस्तस्मै अतिसर्वाय पुरुषाय त्वं देहि । गौणत्वादत्र न स्मट्।प्रियं सर्वं यस्येति बहुव्रीहिः स प्रियसर्वः संकेतकरणं संज्ञा यथा। कश्चित्पुरुषस्तस्य नाम सर्वेति तस्मै सर्वाय। संज्ञात्वादत्र न स्मट् । पूर्वादिसप्तको गणो व्यवस्थया सर्वकार्यी स्यात् । स्वाभिधेयापेक्षाऽवधिनियमोव्यवस्थेति। स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्याऽवधेर्नियम इत्यर्थः । अपेक्ष्यते इति अपेक्षः । कर्मणिघञ्प्रत्ययः स्वशब्देन पूर्वादयः सप्त ग्राह्याः । स्वेषां पूर्वादीनामभिधेयः स्वाभिधेयो दिग्देशकालरूपोऽर्थः स्वाभिधेयस्यापेक्षः स्वाभिधेयापेक्षः कर्तृकार्य्ययोरक्तादाविति कर्तृषष्ठ्या समासः । स्वाभिधेयेनापेक्ष्यतेइत्यर्थः । स्वाभिधेयापेक्षश्चासावबधिनियमश्च स्वाभिधेयापेक्षावधिनियमोव्यवस्था । अवधिमपेक्षते पूर्वादयो यत्र स्युस्तत्र व्यवस्था

भवतीत्यर्थः । व्यवस्थायां किम् । दक्षिणा नराः । कुशलाइत्यर्थः । एवं अधरे तांबूलरागः उत्तरे प्रत्युत्तरे च शक्त इति । गौणे यथा । पूर्वमतिक्रांतोऽतिपूर्वस्तस्मै अतिपूर्वाय पुरुषाय त्वं देहि । गौणत्वादत्र न स्मट् । समशब्दोऽतुल्येऽर्थे सर्वकार्यम् । तुल्येऽर्थे न भवतीत्यर्थः । समाय देहि । तुल्यार्थत्वादत्र न स्मट् । अंतरशब्दः परिधाने उत्तरीयेऽर्थे बहिर्योगेचार्थे सर्वकार्यः । अपुरि पुरोविषयतायां सर्वकार्यो न भवति । बहिःशब्देनानावृत्तो देशो बाह्यं चोच्यते अंतरायां पुरीति प्राकाराद्बाह्यायां पुरि प्राकारांतरवर्तिन्यां वा पुरि गृहाः संति । सत्यपि बहिर्योगे पुरिविषयत्वान्न सर्वादिसंज्ञात्र । सर्वादित्वाभावाद्यटोऽत्रोति न सुट् । परिधाने तु अंतरे अंतरा वा शाटका इति । परिधानीया इत्यर्थः । सर्वादित्वाद्वा जसीति ईत्वं । बाहिःशब्दोऽर्थद्वयवाची उक्तः । तत्राद्ये यथा । अंतरे अंतरा वा गृहा इति नगराद्बाह्याश्चांडालादिगृहा इत्यर्थः । द्वितीये तु नगराभ्यंतरा गृहा इत्यर्थः । बाह्येन गृहाभ्यंतरस्य योगो ह्यस्ति । बहिर्योगे किम् । ग्रामयोर्द्वयोरंतरे मध्ये तापसा वसंतीति अन्तरशब्दस्य मध्यार्थत्वान्न सर्वादिसंज्ञा । अत एवात्र पाक्षिको न स्मिन् । अर्थश्च ज्ञातिश्चार्थज्ञाती अर्थज्ञातिभ्यमन्यावात्मात्मीयावर्थौ अर्थज्ञात्यन्यौ । अर्थज्ञात्यन्यौ वक्तीत्यर्थः । ज्ञात्यन्यवाची स्वशब्दः सर्वकार्यः । आत्मात्मीयज्ञातिधनवाची स्वशब्दः । तत्रज्ञातिधनयोः पर्युदासादात्मात्मीयौ परिशिष्टौ तत्र सर्वादिसंज्ञा भवति । स्वे स्वाः । आत्मानः, आत्मीया वेत्यर्थः । सर्वादित्वादत्र वा जसीतीत्वं । ज्ञातिधनवाचिनस्तु स्वायेत्यत्र सर्वादित्वाभावान्न स्मट् । ननु आत्मात्मीयवाचीति वक्तुं युक्तं पर्युदासग्रहणमनर्थकम् । उच्यते । ज्ञातित्वेन धनत्वेन च विवक्षायां सत्यामात्मीयार्थसर्वादिसंज्ञा मा भूदित्यर्थम्पर्युदासग्रहणमिति । अन्यशब्दग्रहणमनर्थकम् । उच्यते । आत्मीयार्थस्यापि ज्ञातित्वेन धनत्वेन च विवक्षयां सत्यां सर्वादिसंज्ञा माभूदित्येतदर्थमन्यशब्दग्रहणमिति ।

**तत्त्वदीपिका–सर्वादिः सर्वकार्यी स्यादित्यादि ॥** सर्वादिस्तदा सर्वकार्यी स्याच्चेद्गौणो न अथव अभिधानपूर्वादिश्च व्यवस्थायां वाच्यायां सर्वकार्यी स्यादित्यर्थः । च शब्दाद्गौणाभिधेययोस्सर्वत्रान्वयः । समः अतुल्ये अन्तरः अपुरि परिधाने बहिर्योगे च अन्तरः एव । स्वः शब्दः अर्थज्ञातिभिन्नार्थवाची चेत्तदा सर्वकार्यीत्यर्थः । स्वाभिधेयापेक्षावधिनियमो व्यवस्था । अवधेर्नियमः कीदृशः स्वाभिधेयापेक्षः स्वस्य पूर्वादेरभिधेयं वाच्यं दिगादि अपेक्षत इत्यर्थः । दिशः सपत्नी भव दक्षिणस्या इत्यादावपि व्यवस्थास्त्येव प्रसिद्धत्वात्तु नावधिवाची शब्दः प्रयुज्यते न च संज्ञात्वान्निषेधः आधुनिकसंकेतस्यैव संज्ञात्वात् आधुनिकत्वं तु व्यवहार- एव शरणं एवं च विश्वेषांदेवानामित्यपि सिद्धम् । वेदे प्रसिद्धत्वादाधुनिकत्वाभावात् अन्यच्च पूर्वमेवोक्तम् । गौणत्वं च स्वार्थविशिष्टार्थान्तरसंक्रमः अभिधानसंज्ञा । ननु सर्वादिगणे सर्वविश्वादीनामेव पाठो नत्वतिसर्वातितदित्यादीनां तत्कथं तेषु सर्वादिकार्यातिप्रसंगशंकेति चेन्न । तदंतग्रहणस्यात्रेष्टत्वात् अन्यथा परमसर्वस्मै इत्यादावपि न स्यात् इति चेदुच्यते । सर्वादेः स्मडित्यत्र सर्वादेरित्यावर्तते आदिशब्दश्चात्र प्रकारे । प्रकारश्च सादृश्यम् । तच्च सर्वार्थाभिधानसामर्थ्यम् तथा च सर्वार्थाभिधानसामर्थ्यविशिष्टानामेव गणे पाठस्यावश्यकतया प्रकरांतरजुषां च पाठे प्रमाणाभावादेव विशेष्यव्यवस्थितानां संज्ञानामुपसर्जनानां च सर्वादित्वमेव नास्ति तेन तेषां सर्वादिकार्यमन्तर्गणकार्यं च न भवति । यत्तु शब्दस्वरूपमात्राश्रयं न तु गणापेक्षम् तत्तूपसर्जनत्वेपि स्यादेव युष्मदस्मदोस्त्वमहमितिवत् । न चैवम् युष्मदिचास्मदिचेत्यत्र त्वन्मदादिप्रसंगः लोकप्रसिद्धार्थवाचकतायामेव तत्प्रसंगः न तु शब्दस्वरूपत्वे वाच्ये । नन्वेवमसद्इत्यादौ कथमतिसर्वे इतिवद्गौणत्वेपि तत्कार्यसंभवः । अब्राह्मण इत्यादौ ब्राह्मणभिन्न इत्यादिपूर्वपदार्थप्राधान्येन विवरणसंभवादिति चेत्सत्यम् । वैयाकरणैर्नञ्समासे उत्तरपदार्थप्राधान्यस्यैवाभ्युपगमात् तथाहि आरोपितत्वं नञर्थः तथा च मायामनुष्यः कप-

टब्राह्मणइतिवत् मिथ्याभूते ब्राह्मणइत्येव शाब्दबोधः ब्राह्मणभिन्न इत्याद्यर्थस्तु न शाब्दः अत्राचतुर्णामिति निर्देशोनुकूलः ।

**मू०–द्वंद्वे सर्वादीनां न सर्वकार्यम् ॥ पूर्वपरावराणाम् ।**

सुबोधिनी–द्वंद्वे सर्वादीनां न सर्वकार्यं । द्वंद्वसमासे सर्वादिसंज्ञा न भवति । समुदायस्यायं निषेधो न त्ववयवानां । वर्णाश्च आश्रमाश्च इतरे च ते वर्णाश्रमेतराः तेषां वर्णाश्रमेतराणां सर्वादिसंज्ञाभावान्न सुट् ॥

तत्त्वदीपिका–द्वंद्वे सर्वादीनामिति । एतन्मूलं तु पूर्वोक्तमेव । वर्णेत्यादि । वर्णाश्च आश्रमाश्च इतरे च ते तथा तृतीयेत्यादि व्यवस्थितविभाषाश्रयणात् अत्र निषेधः शेषं देववत् । अथ कथं द्वयेषामपि मेदिनीभृतामिति माघः । उच्यते द्वयमिच्छंतीतिद्वयेषः तेषामितिक्विबन्तस्येच्छते रूपं । उभये इति । अयडन्तत्वेपि न जसि विकल्पः व्यवस्थितत्वात् ।

**मू०–वाजसी ॥ वर्णाश्रमेतरे वर्णाश्रमेतराः ।**

सुबोधिनी–वाजसी । द्वंद्वे उक्ता संज्ञा वा स्याज्जसीति ईआदेशे कर्तव्ये ॥

**मू०–तृतीयासमासेतृतीयासमासार्थवाक्येपिचन॥ मासपूर्वाय, मासेन पूर्वाय ।**

सुबोधिनी–तृतीयासमासेतृतीयासमासार्थवाक्येपिचन । तृतीयातत्पुरुषसमासेच तृतीयासमासोऽर्थः प्रयोजनं यस्य तत् तृतीयासमासार्थंच तद्वाक्यंतच्च तृतीयासमासार्थवाक्यं तस्मिन् तृतीयासमासार्थवाक्येपि सर्वादिसंज्ञा न भवति । मासेन पूर्वं मासपूर्वं तस्मै मासपूर्वाय देहि । तृतीयासमासेऽत्रसर्वादित्वाभावान्न स्मट् ॥

**मू०–प्रथमचरमतयडयडल्पार्द्धकतिपयनेमानांजसीवा ॥ प्रथमे, प्रथमाः । चरमे, चरमाः । तयडयटौ प्रत्ययौ । ततस्तदन्ताश्शब्दा ग्राह्याः । द्वितये, द्वितयाः । द्वये द्वयाः । शेषं देववत् । नेमे, नेमाः शेषं सर्ववत् ।**

सुबोधिनी–प्रथमचरमतयडयडल्पार्द्धकतिपयनेमानांजसीवा । एतेषांसर्वादिसंज्ञा वा स्यात् । जसीतीत्वे कर्तव्ये । नेमशब्दस्य नित्ये प्राप्ते अन्येषामप्राप्ते चायमारम्भः । तयडयटौ प्रत्ययौ । केवलयोः संज्ञायाः प्रयोजनाभावात् । तयडयडंताद्वितयद्वयादिका ग्राह्याः । संख्याया अवयवे इति तयडयटौ । द्वाववयवौ यस्य सः द्वितयः, द्वयः ॥

**मू०–तीयस्यङित्सुवासर्ववद्रूपम् ॥ द्वितीयस्मै , द्वितीयाय । द्वितीयस्मात्, द्वितीयात् । द्वितीयस्मिन्, द्वितीये । एवं तृतीयः । उभशब्दो नित्यं द्विवचनान्तः । उभौ, उभौ, उभाभ्याम्, उभाभ्याम्, उभाभ्याम् । उभयोः, उभयोः । उभयशब्दस्य द्विवचनं नास्तीत्येके । अस्तीत्यन्ये । उभयः, उभये। निर्ज्जरः ।**

सुबोधिनी–तीयस्यङित्सुवासर्ववद्रूपम् । तीयप्रत्ययांतस्य वा सर्वशब्दतुल्यं रूपं भवति ङेङसिङिषु परतः । द्वित्रिभ्यामिति तीयः । अर्थवद्ग्रहणान्नेह । पटुजातीयायेत्यत्र प्रकारेण जातीयइति जातीयः । उभशब्दस्य आख्याताव्ययसर्वादेरित्यकार्थः सर्वादौ पाठः । द्विवचन-

परत्वाभावेतु उभशब्दान्नित्यं मयट् भवतीति न कप्रत्ययादिष्टसिद्धिः । उभयशब्दस्य द्विवचनांताऽनभिधानादिति कैय्यटः । उभयशब्दस्य द्विवचनमस्ति अनभिधाने प्रमाणाभावादिति हरदत्तः । उभयशब्दस्यायट्प्रत्ययांतत्वात् प्रथमचरमेति विकल्पे प्राप्ते सर्वादौ पाठसामर्थ्यान्नित्यसंज्ञा भवति विभक्तिनिरपेक्षत्वेनांतरंगत्वाच्च । अयमर्थः । उभयशब्दे प्रथमचरमेति विकल्पस्य जसपेक्षया बहिरंगत्वं सर्वादिगणपाठसिद्धनित्यसंज्ञायास्तु विभक्त्यपेक्षारहित्वेन अंतरंगत्वम् । ततोंतरंगबहिरंगयोर्मध्येंतरंगोविधिर्बलीयानिति न्यायादत्र नित्यैव संज्ञास्यान्नतु विकल्प इति । निष्क्रांतो जराया इति निरादयः क्रांताद्यर्थे पंचम्येति तत्पुरुषः । अन्यार्थे इति ह्रस्वः निर्जरः " अमरानिर्जरादेवाइत्यमरः " ॥

**मू०–जरायास्स्वरादौजरस्वावक्तव्यः ॥** तदन्तविधिरत्र । षष्ठीनिर्दिष्टस्यादेशस्तदन्तस्य ज्ञेयः । गुरुश्शिञ्च सर्वस्य । निर्दिश्यमानस्यादेशा भवंति । एकदेशविकृतमनन्यवत् । निर्ज्जरसौ निर्ज्जरौ । निर्ज्जरसः निर्ज्जराः । पक्षे हसादौ च देववत् ।

सुबोधिनी–जरायाःस्वरादौजरस्वावक्तव्यः । जराशब्दस्य वा जरस् भवति स्वरादौ विभक्तौ परतः । तदंतविधिरत्र । जराया इत्यस्य नाम्नो विशेषणत्वात् । षष्ठीनिर्दिष्टस्येति परिभाषया निर्जरशब्दस्यांतस्य जरस् प्राप्तोऽत आह । गुरुःशिञ्चेति । अनया परिभाषया सोपपदस्य सर्वस्य स्थाने जरसादेशे प्राप्ते सत्याह । निर्दिश्यमानस्यादेशा भवंति । निर्दिश्यते इति निर्दिश्यमान उच्चार्यमाणस्तस्य स्थाने आदेशाः स्युः एवमपि निर्दिश्यमानजराशब्दस्य जरसादेशो भवति न त्वन्यत्रेत्यत आह । एकदेशेति । एकदेशेन विकृतमेकदेशविकृतं शब्दरूपमन्येन तुल्यमित्यन्यवन्न भवति । अनया परिभाषया निर्जर इत्यत्र जरोपि जरावज्ज्ञेयः । जरसादेशाभावपक्षे हसादौ च देववद्रूपम् ॥

तत्त्वदीपिका–जराया इत्यादि । तदन्तइत्यादि । स अन्ते यस्य तस्यविधिरित्यर्थः । तथा च जराशब्दस्योक्तोजरस् निर्जरशब्दस्यापि भवतीत्याशयः षष्ठीनिर्दिष्टस्यादेशिन इतिभावः । एतदपवादमाह । गुरुःशिञ्चेति । अनेकाक्षर आदेशो गुरुः तथा च निर्जरस्य कृत्स्नस्य प्राप्तिरित्यत आह निर्दिश्यमानस्येत्यादि एवमपि जराशब्दनिर्देशादत्रादन्तत्वात्कथं प्राप्तिरित्यतआह एकदेशेत्यादि। अन्येन तुल्यमन्यवत् न अन्यवत् अनन्यवत् नहि कर्णे पुच्छे वा छिन्ने श्वा अश्वो भवतिवा गर्दभः किन्तु श्वैव। स्वरादौविभक्तावेव जरस् बोध्यः नान्यत्र तेन जराया इदं जारमित्यत्र नातिप्रसंगः । पक्षेत्यादि पक्षे सर्वत्र देववत् हसादौ देववदेवेति बोध्यम् ।

**मू०–संख्याविसायपूर्वस्याह्नस्याहन्वाङौ ॥**

सुबोधिनी–संख्याविसायपूर्वस्याह्नस्याहन्वाङौ । संख्याविसायाःपूर्वेयस्यसः संख्याविसायपूर्वस्तस्य संख्यादिपूर्वस्याह्नस्य स्थानेऽहन् आदेशो वा स्यात् ॥

तत्त्वदीपिका–संख्याविसायेत्यादि । संख्या च विश्च सायश्च संख्याविसायाः ते पूर्वे यस्य स तस्येत्यर्थः॥

**मू०–वेङ्योः ॥** अन्नन्तस्योपधाया लोपो वा भवति । ईङीत्येतयोः परयोर्म्मकारवकारान्तसंयोगादुत्तरस्य न । द्व्यह्नि द्व्यहनि द्व्याह्ने । विगतमहर्व्यह्नः । व्याह्नि व्यहनि व्यह्ने । अह्नस्सायः सायाह्नः । सायाह्नि सायाहनि सायाह्ने ।

**सुबोधिनी**—वेङ्योः । ईश्च ङिश्च ईङी तयोरीङ्योः । ईइति ईमौइति सूत्रेण कृतोत्र गृह्यते न तु जस्शसोः शिरिति शिः नापि ईप् । निरनुबंधकस्येत्युक्तत्वात् । अल्लोप इति नित्ये प्राप्ते विकल्पोयम् । अन्नंतस्य नाम्न उपधाया लोपो वा स्यात् ईङ्योः परतः । वकारमकारौ अंते यस्य संयोगस्य स वकारमकारांतः वकारमकारांतश्चासौ संयोगश्च वकारमकारांतसंयोगस्तस्मात्परस्यान उपधाया लोपो न भवतीत्यर्थः । यथा । बहुयज्वनी, चर्मणी, इत्यादि । द्वयोरह्नोर्भव इति तद्धितार्थे द्विगुसमासोयं भवार्थे इकप्रत्ययस्तस्य लुक् च । ततः समासांतष्टप्रत्ययः । नोवेत्युपधालोपः । द्व्यह्नः । विगतमहरिति तत्पुरुषः । व्यह्नः । अह्नः सायं इति क्वचिद्मामाद्यंतस्येति परनिपातः स्यतेर्घञ् प्रत्यये युकि च कृते सति सायशब्दोऽवसानवाची साधितः । अहन्नादेशे उपधालोपे द्व्यह्नि लोपाऽभावे द्व्यहनि, अहन्नभावे द्व्यह्ने ॥

**तत्त्वदीपिका**—वेङ्योरिति । वाईङ्योरिति छेदः ईश्चङिश्च ईङी तयोः ईङ्योः ईइतीमौ इत्यनेन कृतो गृह्यते न तु जस्शसोरिति सानुबंधकनिरनुबंधकयोर्निरनुबंधकस्यैव ग्रहणमिति न्यायात् अत एव ईपोपि न ग्रहणं अत्र वाङ्योरित्येव छेदः द्विर्वचननिर्देशेनैव ईकारलाभात् । अह्नः साय इति षोन्त कर्मणीत्यस्माद्घञिकृते स्यतेर्घञिअवसानवचनः सायशब्दः न तु मान्तमव्ययम्मलोपस्यादर्शनात् ।

**मू०— पाददन्तनासिकामासहृदयनिशाअसृज्यूषदोषयकृच्छकृदुदकास्यमांसपृतनासानूनाम् ॥** पद् दत् नस् मास् हृद् निश् असृक् यूषन् दोषन् यकन् शकन् उदन् आसन् मांस् पृत् स्नु एते आदेशा भवंति शसादौ वा । पदः, पदा, पद्भ्याम्, पद्भिः । दतः, दता, दद्भ्याम्, दद्भिः । मासः, माभ्यां, मासाभ्याम् ।

**सुबोधिनी**—पाददंतनासिकामासहृदयनिशाअसृज्यूषदोषयकृत्शकृत्उदकआस्यमांसपृतनासानूनां एषांपदादय आदेशा वा स्युः शसादौ । माभ्यामित्यत्र सस्य विसर्गे आदवे इति विसर्गलोपश्च । यूषो मंडः “ मुद्गामलकयूषस्तु भेदी दीपनपाचन” इति दर्शनात् ॥

**तत्त्वदीपिका**—शसादौवेति । आदिशब्दः प्रकारे इत्यभिप्रेत्याह पदादय इति तेन पदंघ्रिश्चरणोस्त्रियामिति स्वांतंहृन्मानसं मन इति संगच्छते ।

**मू०—अल्लोपःस्वरेऽम्वयुक्ताच्छसादौ ॥** अन्नन्तस्योपधाया लोपो भवति शसादौ स्वरे परे । मकारवकारान्तसंयोगादुत्तरस्य न । यूष्णः, यूष्णा ॥

**सुबोधिनी**—अल्लोपः स्वरेऽम्वयुक्ताच्छसादौ । नोपधाया इत्यनुवर्तते । नांतस्य नाम्नः उपधाया अतो लोपः स्यात् शसादौ स्वरे । नांतस्येति किम् । भवतः । अतः इति किं । दंडिनः । तपर इति किम् । प्रतानयतीति प्रतान् । क्विप्प्रत्ययस्तान् प्रतानः । स्वरे किं राजभ्यां । शसादौ किं मघोन इदं माघवनं देवतेदमर्थे इत्यण् । म् च वश्च म्वौ युक्तःकर्म्मणिक्तः । म्वाभ्यां युक्तोम्वयुक्तः न म्वयुक्तोऽम्वयुक्तस्तस्मादम्वयुक्तादम्वाभ्यां युक्ताद्वर्णात्परस्यातो लोपो न भवतीत्यर्थः । यथा । यज्वनः । ब्रह्मणः । म्वेति किम् तक्ष्णः । युक्तादिति किं । अर्यम्णः । णत्वे कृते ष्णयोगे ष्णइत्यक्षरं भवति यूष्णः ॥

**तत्त्वदीपिका**—अल्लोपः स्वरेम्वयुक्ताच्छसादाविति । अत्रादिर्निर्विभक्तिकोनिर्देशः ॥ नोपधायाइत्यनुवर्त्तते तथा च नान्तस्योपधायाऽनोलोपः स्यादित्यर्थः । म् च वश्च म्वौ म्वाभ्यां युक्तः वर्णः म्वयुक्तः न म्वयुक्तः अम्वयुक्तः तस्मात् म्वाभ्यां युक्ताद्वर्णान्नेत्यर्थः । प्रसज्यप्रतिषेधः पर्युदासो वा । तथा च म्वयुक्तभिन्नाद्वर्णात्प-

रस्यातोलोप इत्यर्थः । उपधाया अत इति किं तपस्विनः । नान्तस्य किं महतः । अतः किं दंडिनः । स्वरे किं राजभ्यां । तपरः किं प्रतानयतीति प्रतान् तस्य शसि प्रतानः इत्यत्र लोपो न केवलस्य क्विपिनान्तत्वाभावात्। अन्तत्वमाश्रित्यौदाहृतमिति भावः ॥ श्वेति किं तक्ष्णः । युक्तात्किं अर्य्यम्णः।यूष्णा इति यूषो मंडः । मुद्गामलकयूषस्तु भेदी दीपनपाचन इति दर्शनात् ।

**मू०–नाम्नोनोलोपश्धौ ॥** नान्तस्य नाम्नो नस्य लोपश् भवति रसे पदान्ते चधौ । यूषभ्याम् यूषभिः । पक्षे पञ्चसु देववत् । पदादयः पृथक्शब्दा-इत्येके । सोमपाः, सोमपौ, सोमपः सोमपाम् ।

सुबोधिनी–नाम्नोनोलोपश्धौ । न इत्यनेन नाम विशेष्यते विशेषणत्वात्तदंतविधिर्भवति । नांतस्य नाम्नोंतस्य लोपश् स्याद्रसे पदांतेचधौ । नाम्न इति किम् । अहन् । नाम्न इत्यनुवर्तमाने पुनर्नामग्रहणं नामसंज्ञाप्रवृत्तिकाले स्थितस्य नकारस्य लोपशर्थं । तेनागमादेशयोर्नकारस्य लोपश् न भवति । यथा । पचन् । भवन् । श्वन् । सुहिन् । प्रशान् । यूषभ्यामत्र नस्य लोपशि कृते अद्वीत्यात्वे प्राप्ते । उच्यते । नस्य लोपशि न विभक्तिकार्यमिति । विभक्तौ कार्य्यं विभक्तेर्वा कार्यमिति समासः । पथिष्वित्यादौ षत्वं तु न विभक्तिकार्यं । सैषादितिज्ञापकात् । आदेशाभावपक्षे सर्वाणि रूपाणि देववत् । आदेशपक्षे पंचवचनानि देववत्। पदादयो नादेशाः किंतु पृथक्शब्दाः इति एके आचार्या वदंति तेन पदंघ्रिश्वरणोऽस्त्रियां । स्वांतं हृन्मानसं मन इत्यादि संगच्छते । इत्यदन्ताः । सोमं पिबतीति सोमपाः पापाने इत्यस्मादातोड इति डप्रत्ययं बाधित्वा क्विप् ॥

तत्त्वदीपिका–नाम्नो नो लोपश्धाविति अत्र न इति षष्ठ्यन्तनाम्नो विशेषणं अतस्तत्र तदन्तलाभ इत्यभिप्रेत्याह । नान्तस्येति। ननु राजेत्यत्र परत्वात्प्रथमं नलोपशास्त्वितिचेन्न प्रायशोदृश्यतामिति वचनात्क्वचित्पूर्वेणापि परबाधः असाविति ज्ञापकाच्च अन्यथा अधावित्येवावक्ष्यत् । ननु यूषभ्यां यूषभिरित्यादौ आद्भ्य इत्यादिनात्वादिकमस्त्वित्यत आह नस्यलोपशीति। अविभक्तिकार्यमिति विभक्तौ कार्यं विभक्तेर्वा कार्यमिति समासः तेन दंडिष्वित्यादौ नलोपे सति षत्वं भवत्येव सैषादिति ज्ञापकेन तस्य विभक्तिकार्यत्वाभावात् । अत्र नाम्न इत्यनुवर्त्तमाने पुनर्न्नामग्रहणान्नामसंज्ञाप्रवृत्तिकाले नान्तत्वं ग्राह्यम् । तेन पचन्नित्यादौ नलोपो न ।

**मू०–आतोधातोर्लोपः ॥** धातुसंबन्धिन आकारस्य लोपो भवति शसादौ स्वरे परे । सोमपः सोमपा सोमपाभ्यामित्यादि । एवं कीलालपा शंखध्मा मधुपा विश्वपा प्रभृतयः । धातोः किम् । हाहान् । हाहाः । हाहौ । हाहाः । हाहै । हाहौः ॥ हरिः ।

सुबोधिनी–आतोधातोर्लोपः । आकारांतस्य धातोर्लोपःस्याच्छसादौ स्वरे । "शतृशानकसंतानां तृजंतानां तथैव च ॥ क्विबंतानां च शब्दानां धातुत्वं नोपहन्यते ॥" प्रादिपदिकसंज्ञयेत्यर्थः । आतो डस्य द्वे संज्ञे स्तः। षष्ठीनिर्दिष्टस्येत्यंतलोपः । धातोः किं । हाहान् गंधर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदं । "हाहाहूहूश्चैवमाद्या गंधर्वा "इत्यमरः । टा सवर्णदीर्घः हाहा । ङे एत्वं हाहै । ङसिङसोर्दीर्घः हाहाः २ । ओसि औत्वं हाहौः । ङौ एत्वं हाहे । शेषं सोमपावत् । आत इति योगविभागादधातोरप्याकारलोपः क्वचित् क्त्वः ॥ इत्यादंताः ॥

तत्त्वदीपिका–आतोधातोर्लोप इति। आत इति किम्। वातप्रम्याः। धातोः किम् खट्वाः पश्य नच नामत्वधातुत्वयोर्विरोधात्कथं धातुत्वमिति वाच्यम् क्विबंता विजंता विडंताः धातुत्वं न जहति नामत्वं प्रतिपादयंतीति वचनादविरोधात्। ननु अस्य धातोरिति किमिति न सूत्रितमिति चेन्न श्रीपेण कुलेनेत्यादावपि परत्वादकारालोपापत्तेर्दुर्वारत्वात् तपरकरणं तु व्यर्थमेव अत्रात इति योगविभागादधातोरप्यालोपः क्वचित् तेन क्त्वः॥ हाहानिति गंधर्वविशेषवाचकमव्युत्पन्नं नामेदं। केचित्तु जहातीति हाहा इति क्रियाशब्दं वदन्तः सोमपावद्रूपमाहुः।

**मू०–औ यू ॥ इकारान्तादुकारान्ताच्च पर औ यू आपद्यते। इउभवतः। हरी।**

सुबोधिनी–औयू। इदुद्भ्यां पर औ यू स्याताम्। ईदूतोर्दीर्घयोर्ग्रहणे। ईऊ इति पदद्वयं बोध्यम्। ह्रस्वग्रहणपक्षे तु यूइत्यत्रेतरेतरद्वंद्वः। इदुद्भ्यामिति किम्। देवौ। तपरत्वमिति किम्। वातप्रम्यौ। हूह्वौ॥

तत्त्वदीपिका–औयू इति।अत्र इदुद्भ्यामित्यनुवर्त्तते दीर्घयोर्ग्रहणे ई ऊ इति छेदः ह्रस्वयोर्ग्रहणे तु इतरेतरद्वंद्वः

**मू०–एओजसि ॥ इकारांतस्योकारान्तस्य च जसि परे एकार ओकारश्च भवति। हरयः**

सुबोधिनी–एओजसि। इदुद्भ्यामित्यनुवर्तते तच्च षष्ठ्या विपरिणम्यते तच्च नाम्नो विशेषणं। विशेषणे हि तदंतविधिः। इदुदंतस्य नाम्न ए ओ स्यातां जसि परतः। इदुदंतस्येतिकिम्। रायः, ग्लावः। तपरत्वं किम् वातप्रम्यः। हूहूः॥

तत्त्वदीपिका–एओजसीति। अत्रेदुद्भ्यामित्यनुवृत्तस्यापि विभक्तिविपरिणामेन व्याख्यानमित्यभिप्रेत्याह इदुदन्तस्येत्यादि। इदुदन्तस्य किम् रामाः। गुणोजसीतिं तु न सूत्रितं लाघवे विशेषाभावात् जसि गुण इत्युक्ते त्वर्द्धमात्रालाघवेपि प्रतिपत्तिलाघवार्थमिदमुक्तम्।

**मू०–धौ ॥ इकारान्तस्योकारान्तस्य च धौ परे एकार ओकारश्च भवति। हेहरे। हरिम्। हरी। हरीन्।**

सुबोधिनी–धौ। इदुदन्तस्य ए ओ भवतः धौ परे। कृताकृतप्रसंगित्वेन नित्यत्वाच्च पूर्वमेत्वमोत्वं च। ततः समानाद्धेरिति धिलोपः। इदुदंतस्य किं। हे ग्लौः।तपरत्वं किम्। हेवातप्रमीः हेहूहूः॥

तत्त्वदीपिका–धाविति। अत्र एओधिजशोर्जस्ध्योरिति एकयोगो न कृतो यथाक्रमे स्थानिनोरादेशविधानशंकानिरासाय। यत्तु योगविभागो विषयसप्तमीलब्ध्यर्थ इति तत्र विषये सप्तम्याअविधानादित्युक्तं तच्चिन्त्यम् विषयसप्तम्या बहुस्थले दर्शनात् किं च यत्र प्रत्ययोत्पत्तेः पूर्वमेव कार्यं विधीयते तत्रैव विषयसप्तमीति व्यवहारः प्राचां यथार्द्धधातुके ब्रूञो वच् चक्षिङःख्याञादय एवं वदता त्वया स्वयमेव विषयसप्तम्याःस्वीकृतत्वात्।

**मू०–टानाऽस्त्रियाम् ॥ इकारान्तादुकारान्ताच्च परष्टा ना भवत्यस्त्रियाम्। हरिणा। हरिभ्याम्। हरिभिः।**

सुबोधिनी–टानाऽस्त्रियाम्। इदुद्भ्यां परष्टा ना स्यात्। स्त्रीलिंगे तु न। किंच सौत्युक्ते तु अदसष्टाप्रत्यये त्यदाद्यत्वे मत्वे च अमटा इति स्थिते इनादेशतः परत्वादंतरंगत्वाच्च मादूइत्यूत्वेपुँल्लिंगे सिद्धममुनेति। क्लीबेत्वमुनेति न सिद्ध्यति। नामिनः स्वरे इतिनुमि

कर्तव्ये उत्वस्यासिद्धत्वादतोऽस्त्रियामित्युक्तम् । इदुद्भ्यां किं । गवा । तपरत्वं किम् । वातप्रम्या । हूह्वा ॥

तत्त्वदीपिका–टानास्त्रियामिति । इदुद्भ्यामित्यत्राप्यनुवर्त्तते अत्र अस्त्रियामिति नञं प्रक्षिप्य छेदः नञ्प्रक्षेपे च व्याख्यानमेव शरणमिति तु वृद्धाः । ननु पुंसीत्येव किमिति न सूत्रितं लाघवात् । अत्राहुः । अमुना कुलेनेत्येत्र उत्वादन्तरंगत्वादिनादेशः स्यादतो नाम्यभावान्नभावे रूपासिद्धिः स्यादित्यस्त्रियां ग्रहणसामर्थ्याद्दुर्बलमप्युत्वं प्रवर्त्य नाभावो भवतीत्युक्तं कैश्चित्तन्न नादेशत उत्वस्यान्तरंगत्वात् । अदसूशब्दमकारान्तात्पर वर्णं ह्यपेक्षतेउत्वम् इनादेशस्तु नाम स्यादिअकारटाचतुष्टयापेक्षत्वेन बह्वाश्रयत्वात् बहिरंगः किंच कृतेपीनादेशे स्थानिवद्भावेन टात्वमाश्रित्य नाप्रवृत्तेरिति । पूर्वपक्षस्योत्तरमुत्तरार्थमस्त्रियां ग्रहणं सूत्रकृता कृतं कथं मु इति सूत्रांतरं मुशब्दात्परष्टाना भवति । मुशब्दश्चादस एव गृह्यते नान्यस्य पूर्वसूत्रेणैव सिद्धे तथा चात्र सूत्रे पुंसीत्यस्यानुवृत्तौ क्लीबे अमुनेति रूपसिद्धिर्न कर्त्तव्येति उत्वस्यासिद्धत्वात् । अस्त्रियामित्यनुवृत्तौ तु नपुंसकेत्यस्य प्रवृत्तिरिति । अत्रेदं वक्तव्यं । मु इति सूत्रान्तरकल्पनापेक्षया अस्त्रियामित्यस्यैव तज्ज्ञापने लाघवात् । इदुद्भ्यां किं । गवा । तपरत्वं किम् हूह्वा । टाकिं । हरिभ्याम् ।

**मू०–ङिति ॥ इकारान्तस्योकारान्तस्यच ङिति परे एकार ओकारश्च भवति। हरये । हरिभ्याम् । हरिभ्यः ।**

सुबोधिनी–ङिति । इदुदंतस्य नाम्न ए ओ स्याताम् । ङइत् यस्य स ङित् तस्मिन् ङिति ङिति स्यादौ । ङिति किं । हरिभ्यां । स्यादौ किं हरिरिवाचरतीति हरयति । आचारे क्विप् । ततः प्रत्ययांतात् क्रियामङित्यङ् । हर्या । नाम्नः किं । नुतः, नुवंति । किंच ङ् चासौ इच्च ङित् तस्मिन् ङिति इति कर्मधारयकरणे इत्संज्ञकङकारादौ प्रत्यये परे इत्यर्थो भवति । तदा नाम्नः स्यादावित्येतयोरनुवृत्तिर्न कर्तव्येति लिरपुषादेर्ङ इत्यादि ङप्रत्यये तु परत्वादि युवौ । अदूदुवदित्यादि ॥

तत्त्वदीपिका–ङितीति । अत्र इदुद्भ्यां एवोजस इति चानुवर्तते तत्र विभक्तिविपरिणामेन व्याख्यानम् । ङ इयस्य स ङित् तस्मिन्ङिति । ङिति किम् । हरिभ्यां । ङिच्च स्यादिरेव गृह्यते न त्वन्यः ङस्येति ङकारग्रहणेन ङसिङसोर्ग्रहणमेव ॥

**मू०–ङस्य ॥ एदोद्भ्यामुत्तरस्य ङसिङसोरकारस्य लोपो भवति हरेः । हर्योः । हरीणाम् ।**

सुबोधिनी–ङस्य । एदोतोत इति सूत्रमनुवर्त्तते लोपश्च इति स्यात् । ङकारस्य इत्संज्ञायामकारः परत्वेन लभ्यते । एदोतइति किं । रायः ग्लावः ङस्येति किं । हरये, भानवे । ङस्यातः किं । हरयः, भानवः ॥

**मू०–ङेरौङित ॥ इदुद्भ्यामुत्तरस्य ङेरौ भवति स च ङित् ॥**

सुबोधिनी–ङेरौङित् । इदुद्भ्यां परस्य सप्तम्येकवचनस्य औः स्यात्सच ङित्संज्ञकः । ननु ङेऔ इत्येव वक्तव्यं किं ङिच्छब्देन । उच्यते । ङिद्ग्रहणं ऋतो ङः इत्यादौ ङिदित्यस्यानुवृत्त्यर्थं । इदुद्भ्यां किम् । रायि, गावि । तपरत्वं ।किं । वातप्रमी, हूह्वि ॥

तत्त्वदीपिका–ङेरौङिदिति । इदुद्भ्यां किम् गवे । तपरत्वं किं वातप्रमी । ङेः किंहरिभ्यां आमादावित्यादिनिर्देशेन च औङिदित्ययं नादेशः अतएव ङेरित्यनेन चतुर्थ्येकवचनस्य न ग्रहः नच ङिति टेरित्यत्र ङित्संज्ञकस्यैव ग्रहणं । ननु यौगिकस्य कृत्रिमत्वात् तथा च सेर्ङो धेरित्यत्र ङकारस्य ङित्संज्ञा न प्रयोजनाभा-

वादिति चेत्सत्यम् स्त्रियामिति निर्देशेन कृत्रिमाकृत्रिमयोःकृत्रिमस्यैवग्रहणम् । तथा हि स्त्यायतेर्डटि स्त्रीति रूपं तच्चैवं न स्यात् । ङेर्डावित्येव किमिति न सूत्रितामिति चेन्न उत्तरार्थं ङित्करणं ऋतोङउरित्यादावावश्यकत्वात् अथ तत्रापि ङोउरित्येव किमिति न कृतामिति वाच्यम् ङावित्यत्र घेररित्यनुवर्त्तते तथा च ऋकारस्य उरिकृते टिलोपे पितरीत्यादि रूपं न सिद्ध्येत् । अपृक्तर्त्तरीति लिंगेन तत्र टिलोपः स्यादिति वाच्यम् । न पंचस्विति वाच्यम् । न पंचस्विति सूत्रेपि ङरोनुवृत्तौ ज्ञापकाभावात् टिलोपे पितरावित्यादिरूपं न सिद्ध्येत् इति डिदि-त्युक्तम् यदि तु ङिति प्रत्यये लोप इति व्याख्यायते तदा न कर्त्तव्यं भवति ।

**मू०-ङितिटेः ॥** ङिति परे टेर्ल्लोपो भवति । हरौ । हर्य्योः । हरिषु एवम-ग्निगिरिरविकविमुन्यादयः । उकारान्ता विष्णुवायुभानुगुर्वादयोऽप्येवंज्ञेयाः । भानुः । भानू । भानवः ।

**सुबोधिनी**-ङितिटेः । नाम्नष्टेर्लोपः स्यात् ङिति परतः । अव्ययानां टेर्लोपश्च । तद्धित-स्य ये स्वरे च यथा बहिर्भावो बाह्यः । पुनः पुनरेव पौनःपुन्यं ण्यः । कुतःकुत आगत कौ-तस्कुतः । कारकादित्यण् ॥

**तत्त्वदीपिका**-ङितिटेरिति । ङ इत् यस्य स ङित् तस्मिन् ङिति । अत्राहुः अत्र वाक्यार्थत्रयं नाम्नो लोपो भवति ङिति परे इत्येकं तथा च विंशतेः पूरण इति वाक्ये अप्रत्यये यस्य लोप इतीकारलोपे विंश इति सिध्यति ततः टेः नाम्नः तथा टेर्लोपो भवति यकारे स्वरे वेति द्वितीयं । तथा च लघिष्ठः बहिर्भवति बाह्य-इत्यादि सिद्धिः ततः नाम्नष्टेर्लोपो भवति ङितीति तृतीयम् । अत्र तद्धिते यस्वरे इति सम्बध्यते विश्लेषाव-धावित्यादिनिर्देशात् तत्र ङेरौदिति न तद्धित इति अत्रेदं संप्रधार्य्यं तृतीयवाक्ये नाम्न इति संबंधे स्त्री तित-उरित्यादि न सिध्यति । तथाहि स्त्यैधातोर्डटि कृते टिलोपावसरे नामत्वाभावात् तितउरित्यत्रापि तनोतेर्डउः सन्वच्चेति डउप्रत्यये टिलोपावसरे धातुत्वानपायेन नामत्वाभावात् । तस्मादत्र न नाम संबध्यते किंतु ङितीति परसतम्यापूर्वमात्रमाक्षिप्यते तथा च सर्वत्र निर्वाह इति दिक् ।

**मू०-सेर्डाधेः ॥** सखिशब्दात्तदन्ताच्च परस्य सेरधेर्डा भवति । सखा ।

**सुबोधिनी**-सेर्डाधेः । सखिशब्दात्सखिशब्दांताच्च नाम्नः परस्य सेर्डास्यात् । ऐसख्युरि-ति सूत्रे विपरीतनिर्देशात्तदंतग्रहणं । कीदृशस्य सेः । नधिः अधिस्तस्याधेर्धिभिन्नस्येत्यर्थः । समानं ख्यायते जनैरिति सखा । नीव्यादय इति निपातनात्ख्याधातोरिप्रत्ययो या इत्यस्य निवृत्तिश्च । तदंते तु शोभनः सखा सुसखा । धौ तु धावित्येकारो न तु डा । अधेरिति निषेधात् ॥

**तत्त्वदीपिका**-सेर्डाधेरिति । अधेरिति छेदः धिभिन्नस्य सेर्डा भवतीत्यर्थः । ऐ सख्युरित्यतः सख्युरि-त्यनुवर्त्तते तच्च षष्ठ्यन्तमर्थवशाद्विपरिणम्यते सख्युरे इतिकर्त्तव्ये विपरीतनिर्देशात्तदन्तलाभइत्यभिप्रेत्याह तद-न्तादिति । सख्युः किम् । हरिः । सेः किं सखिभ्यां । अधेः किं हे सखे ।

**मू०-ऐसख्युः ॥** सखिशब्दस्य तदन्तस्याप्यैकारादेशो भवत्यधिषु पंचसु । सखायौ । सखायः । सखायम् । सखायौ सखीन् ।

**सुबोधिनी**-ऐसख्युः । तस्मादित्यनुवर्तते । तस्य । सखिशब्देन विशेषणात्तदंतविधिः । सखिशब्दस्य सखिशब्दान्तस्य च नाम्नः ऐः स्यात् । पंचसुशब्दः प्राक्स्यादिष्वेव रूढः । सौतु परेण डादेशेन बाधितत्वादैर्न । अथवा सेर्डादेशे प्रकृतेरैत्वे च कृते टिलोपः । विशेषाऽभावात्तदंते सुसखायौ । सख्युरिति षष्ठीनिर्दिष्टत्वेनांत्यस्येकारस्य ऐः । सखायौ ॥

**तत्त्वदीपिका**—ऐसख्युरिति । अत्राधेरित्युत्तरसूत्रादपकृष्यते । तथा चाधिप्रत्ययान्तस्य सखिशब्दस्य ऐकारादेशः पंचस्त्रितिव्याख्येयम् । अथ औप्रभृतीनि पंचवचनानि कुतो न गृहीतानि इति वाच्यं पंचसु शब्दः स्यादिष्वेव रूढ इति व्याख्यानात् । यद्वा अधेरिति पर्युदासात्स्यादिग्रहः ।

**मू०—सखिपत्योरीक् ॥** सखिपतिशब्दयोरीगागमो भवति टाङेङिषु परतः। दीर्घत्वान्ना न भवति । सख्या सख्ये ।

**सुबोधिनी**—सखिपत्योरिति । सखिपत्योरीक् स्यात् टाङेङिषु । कित्वादंते टाप्रत्यये ईकाराऽव्यवधानात् । टानास्त्रियामिति न प्रवर्तते । सवर्णे दीर्घे यत्वे च । सख्या, सख्ये । ङौतु औत्वे टिलोपे च कृते पश्चादेकदेशविकृतमिति न्यायेनेक् यत्वे । सख्यौ । सखिपत्योर्विशेषस्य विवक्षणात् तदंतविधिर्न । तेनातिसखिना भूपतिना, इत्यत्र नेक् ॥

**तत्त्वदीपिका**—सखिपत्योरीगिति।अत्र टाङ्योरित्यनुवर्त्तते । तथा च टाङ्योरेवानेन ईक् सख्ये इति सिद्ध्यर्थं तु ङे इति सूत्रान्तरं । तथा च ङयि परे सखिपत्योरीगागमो भवति इति तस्यार्थः दीर्घविधिर्नात्वादिप्रतिषेधार्थइत्यभिप्रेत्याह दीर्घत्वादिति यद्यपि ह्रस्वकरणेपि विधानसामर्थ्यान्नात्वादिप्रतिषेधो लभ्यते तथापि ङौ सवर्णदीर्घे सखीइत्येव स्यादिति दीर्घकरणात्प्रथममौत्वटिलोपयोः प्रसक्तयोः पश्चादेकदेशविकृतन्यायेन ईगागमे कृते सख्याविति रूपसिद्ध्यर्थं दीर्घविधानस्यावश्यकत्वात् । अतएव ईदिद्वा न कृतः सखिपत्योर्य इत्यपि न सूत्रितं । सख्या सख्यै इति सिद्धावपि ङौ सख्यि इति रूपापत्तेः । अत्र नाम्नो विशेषणत्वाभावान्न तदन्तलाभः ।

**मू०—ऋङ्ङे ॥** सखिपतिशब्दयोर्ऋगागमो भवति ङसिङसोरकारे परे सख्ऋ अस् इति स्थिते ।

**सुबोधिनी**—ऋङ्ङे । सखिपत्योर्ऋक् स्यात् उपलक्षितः अङस्तस्मिन्नङे ॥

**तत्त्वदीपिका**—ऋङ्ङे इति । ऋक्ङे इति छेदः ङे इतिसप्तमी ङोपलक्षिताः अङः तस्मिन् तेन ङसिङसोरकारो लभ्यते ङङः इति सूत्रणीयेईगनुवृत्त्याङितीत्येतस्य बाधे रूपसिद्धावपि गुरुकरणमागमजस्यानित्यत्वज्ञापनार्थमेतेन सखिना वानरेन्द्रेणेति अन्यत्र पतिना सहेति च संगच्छते । ङेकिम् । सखीन् सखिपत्योः किम् । वातप्रम्यः ।

**मू०—ऋतोङ्उः ॥** ऋकारान्तात्परस्य ङसिङसोरकारस्योकारो भवति स च ङित् । सख्युः । ङेरौङिदित्यौकारे कृते सखिपत्योरीक् । सख्यौ । शोभनः सखा सुसखा । सुसखायौ । सुसखायः । सुसखीन् । सुसखये । सुसखेः । सुसखौ । अतिशयितः सखा अतिसखा परमसखा परमसखा सखीमतिक्रान्तोऽतिसखिः। इह डैत्वेन । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमिति न्यायात् । पतिः, पती, पतयः, पतिम्, पती, पतीन् । पत्या, पत्ये, पत्युः पत्यौ ।

**सुबोधिनी**—ऋतोङ्उः । ङिदित्यनुवर्तते । ऋदंतान्नाम्नः परो ङ्उः स्यात् सच ङित् नाम्नः किं आरत् । उरिति लिंगात्केवलादपि ऋत उर्भवति । ऋगागमे कृते यत्वोत्वटिलोपाः। सख्युः । तदंते यथा । शोभनः सखेति प्रादिसमासे तत्पुरुषे राजाहः सखिभ्य इति टप्रत्ययो न पूजार्थोपपदे निषेधात् । इहैडात्वयोः प्रवृत्तिस्तदन्तग्रहणात् । सुसखिशब्दस्य पंचसु

सखिवद्रूपम् । शेषंहरिवत् । एवमतिशयितः सखेति अतिसखा प्रादिसमासोत्र । परमः सखा यस्य स परमसखेति बहुव्रीहिः कर्म्मधारये तु टप्रत्ययेन भाव्यं । गौणत्वेप्यैडात्वे भवतः । अनिदग्धेत्यादावस्थ्नामितिवत् । सखीमतिक्रांतोऽतिसखिः अत्यादयः क्रांताद्यर्थे इति तत्पुरुषः । अन्यार्थे इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् टप्रत्यय ऐडात्वे च न लक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यैव ग्रहणं न तु लाक्षणिकस्येति परिभाषणात् लक्षणं च प्रतिपदं च लक्षणप्रतिपदे लक्षणप्रतिपदाभ्यामुक्तौ लक्षणप्रतिपदोक्तौ तयोर्द्वंद्वांते श्रूयमाणत्वादुक्तशब्दः प्रत्येकं संबध्यते । लक्षणोक्तः प्रतिपदोक्त इति । लक्षणेन सूत्रेणोक्तो लाक्षणिकः । प्रतिपदोक्तस्य झटिति बुद्ध्यारोहो लक्षणिकस्य तु लक्षणानुसंधानद्वारेण विलंबितो बुद्ध्यारोहो भवतीत्यर्थः । क्लीबे तु पूर्वेणापि नुमा परस्याप्यत्वस्य बाधः क्रियते । प्रायशो दृश्यतामित्युक्तत्वात् । यथा प्रियसखीनि । प्रियसखिनि पतिशब्दस्य टाङेङसिङस्ङिषु सखिवद्रूपम् । शेषं हरिवत् ॥

**तत्त्वदीपिका—ऋतोङ उरिति** । अत्र नाम्न इति ऋदंतस्य विशेषणं स्यादेरिति ङस्य तेन आरत्कर्तारिलुङिवते इत्यादौ नातिप्रसंगः सख्युरित्यादि लिंगाच्चतुर्थ्येकवचनस्यादेशे लोपे च न निर्देशशंका-ऋतःकिम् ग्लावः । ऋतोङरिति सूत्रणीये ङग्रहणं वर्णमात्रविधौ यदादेशस्तद्वद्भवतीति न प्रवर्त्तते इति ज्ञापनाय । तथाहि । ऋतः अः उरिति छेदः । जसमोस्तु परत्वाद्गुण एव स्थानिवद्भावेन प्राप्तावपि पंचसु ग्रहणसामर्थ्यान्न । अन्यथा । अर्वीत्येवोच्यते तथा च शस्यतिप्रसंगः तत्रापि परत्वाच्छसीति दीर्घेण भवितव्यम् दीर्घेकृतेपि यदादेशस्तद्वदित्यनेनोत्वेन भाव्यम् एवं चोत्वे कृते यदादेशस्तद्वदित्यम्शसोरस्येत्यलोपो भविष्यति इत्थं च कृताकृतप्रसंगित्वेन नित्यत्वादतः पूर्वमलोपो भविष्यति तथा च शस्यपि नातिप्रसंगनिःशंकेति यज्ज्ञापनफलकमेव ङकारग्रहणमिति वृद्धाः । अतिसखिरिति अन्यार्थे इति ह्रस्वः अतिसखेरिति भाष्यप्रयोगादीदुदंतस्येत्यादिना स्त्रीकार्यन्नलक्षणप्रतिपदोक्तयोरिति सूत्रानुसंबद्धद्वारेण कृतं लाक्षणिकं झटिति बुध्यारोहणं प्रतिपदोक्तम् त्यदादेष्टेरस्यादाविति । त्यदादेः किं । मरुतौ । स्यादौ किं तस्यापत्यं तादः तामिच्छति तद्यति अत्र धातुरित्यादि लिंगेनैवं टेरेवात्वासिद्धौ टेरितिग्रहणम् टेरपि क्वचिद्विधानार्थं तेनकिम् शब्दस्याकसहितस्य तदाद्यत्वे क इत्येवरूपम् ।

**मू०—पतिस्समासेहरिवत्** ॥ भूपतये ।

**सुबोधिनी**—पतिः समासेहरिवत् । पतिशब्दस्य रूपं समासे हरिवत्स्यात् समासाऽभावे शसादौ सखिवत् । भुवः पतिः भूपतिस्तस्मै भूपतये । समासत्वादत्रनेक् । कथं सीतायाः पतये नमः । पराशरश्चाह " नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ ॥ पंचस्वापत्सु नारीणां पतिरन्यो विधीयते " ॥ १ ॥ इति । उच्यते । पतिशब्दोऽयमाख्यातप्रत्ययांतो यथा नाम्नो ञिडिदिति ञिप्रत्यये टिलोपे धातोरित्यौणादिके इप्रत्यये ञेरिति ञिलोपे च निष्पन्नोयं पतिशब्दः । पतिमाचष्टे इति पतयतीति पतिः । लाक्षणिकत्वादस्य सखिवद्रूपम् । एवं "कृष्णस्य सखिरर्जुन" इतिभारते " सखिना वानरेन्द्रेण"इति रामायणे च बोध्यम् ॥

**मू०—आगमजमनित्यम्** ॥ सखिना पतिना । द्विशब्दो नित्यं द्विवचनान्तः ।

**सुबोधिनी**—आगमजमनित्यम् । आगमाज्जातमागमजं कार्य्यमनित्यमस्ति इति न्यायाद्वा सखिनेत्यादौ नेक् । अथ ऋङ्ङे इत्यत्र ङउरिति सूत्रणीये ईगनुवृत्त्या ङितित्वेत्वस्य बाधे रूपसिद्धावपि गुरुकरणमेतत्सत्वे ज्ञापकं बोध्यम् ॥

**मू०—त्यदादेष्टेरःस्यादौ ॥ द्वौ । द्वौ । द्वाभ्याम् ३ । द्वयोः २ ।**

**सुबोधिनी**—त्यदादेष्टेरः स्यादौ । त्यदादीनां दशानां टेरत्वं भवति स्यादिविभक्तौ । विभक्ताविति किम् । त्यद् । तत् । स्यादौकिं । तस्यापत्यं तादः । तमिच्छतीति तदति । यः । टेः किं । सः । य इत्यादावत्वे सवर्णे दीर्घे च सा या इति स्यात् । द्विशब्दस्यात्वे सति सर्ववद्रूपम् ॥

**मू०—संज्ञोपसर्जनयोर्नात्वम् ॥ द्विर्नामकश्चित् द्विः । द्वी । द्वयः । द्वावतिक्रान्तोऽतिद्विः । प्राधान्येतुपरमद्वौ । त्रिशब्दो नित्यम्बहुवचनान्तः । त्रयः । त्रीन् । त्रिभिः । त्रिभ्यः ।**

**सुबोधिनी**—संज्ञोपसर्जनयोर्नात्वम् । संज्ञायां गौणत्वे च त्यदादेरित्यत्वं न भवति । सर्वाद्यंतर्गणकार्य्यत्वात् । कस्यचित् पुरुषस्य द्विर्नाम तस्य हरिवद्रूपम् । गौणेऽतिद्विस्तस्यापि हरिवद्रूपम् । प्राधान्ये मुख्ये तु परमौ च तौ द्वौ च परमद्वौ कर्मधारयः । सर्ववद्रूपम् ॥

**मू०—त्रेरयङ् ॥ त्रिशब्दस्यायङादेशो भवति नामि परे । तदन्तविधिरत्र ङिदन्तस्यैव वक्तव्यः । त्रयाणाम् । परमत्रयाणाम् । त्रिषु । कतिशब्दो नित्यम्बहुवचनान्तः ।**

**सुबोधिनी**—त्रेरयङ् । आमइत्यनुवर्तते । तच्च सप्तम्या विपरिणम्यते । तस्मादिति च तस्य नाम्नस्त्रेरिति विशेषणे विशेषणत्वात्तदंतविधिः । त्रिशब्दस्य त्रिशब्दान्तस्य चायङ् स्यदामि । गुरुत्वात् सर्वादेशे प्राप्ते ङिदादेशः अन्तस्य स्थानेभवतीतीकारस्याङ् । त्रेरित्येकवचननिर्देशस्त्वनुकरणत्वात् तदंते । प्रियाश्च ते त्रयश्च प्रियत्रयस्तेषां प्रियत्रयाणां । गौणत्वे नेति केचित् । तरतेरौणादिको ड्रिप्रत्ययः डित्वात् । टिलोपे त्रिशब्दः ।

**तत्त्वदीपिका**—त्रेरयङिति । ननु त्रिशब्दस्य बहुवचनान्तत्वात् कथं त्रेरिति चेत्सत्यम् ॥ त्रिशब्दस्त्रित्वविशिष्टवाचको बहुवचनान्तः अयन्तु न त्रित्वविशिष्टवाचकः किन्तु तदनुकरणेन गृहीतः अनुकार्यानुकरणयोश्च भेदविवक्षाया इष्टत्वात् प्रकृतिवदनुकरणमित्यस्य त्वनित्यत्वात् एवं स्थिते त्रयाणामयमित्युक्तौ त्रिशब्दसमानवचनाशंकाया तदुद्धारार्थं अचतुर्णामित्यादि लिङ्गानुशरणं कृत्वा पुनर्गौरवदोषोद्भावेन यथान्याससूत्रस्थापनप्रयासो निजपाण्डित्यप्रस्थापनायैवेति दिक् । तदन्तविधिरत्रेति तस्मादित्यनुवृत्तेः शब्दान्तस्य नाम्न इति व्याख्यानात् । त्रयाणामित्यत्र तु व्यपदेशिवद्भावादित्यभिप्रायः । ङिदन्तस्येति गुरुःशिच्चेत्यस्यापवादः ।

**मू०—डतेः ॥ संख्यावाचिनो डत्यन्ताज्जश्शसोर्लुक् । प्रत्ययलोपे प्रत्ययलक्षणम् ।**

**सुबोधिनी**—डतेः । किमः संख्यापरिमाणे डति चेति डतिः संख्यापरिमाणे विहित इह गृह्यते । पातेर्डतिरिति तु न । संख्यायां इत्यनुवर्तते । कतीत्यत्र यदादेशस्तद्वदिति जसमाश्रित्य एओजसीत्येव प्राप्ते सत्याह ॥

**तत्त्वदीपिका**—डतेरिति । डत्यन्तान्नाम्न इतिबोध्यम् डतिप्रत्ययश्च शेषानिपात्याः कत्यादय इति गृह्यते संख्याया इत्यनुवृत्तेः संख्यासंबंधे च डतिर्गृह्यते । ननु पातेर्डतिः पतिरिति कतेरिति तु न सूत्रितं पतिततीनां ग्रहणार्थम् यत्तु कतेरित्येव युक्तं पतिततीनां लोकेऽदर्शनादित्युक्तं तत् प्रौढिवादमात्रं पतिते नागशीर्षाणि

ततीतेनांगवेदनेत्यादिषु दर्शनात् बहुगणवतुडतिसंख्येति पाणिनिसूत्रेपि डतेरेव ग्रहणात् कतीत्यत्र एओसीत्यस्य प्राप्तौजसोत्राभावात् प्रत्ययलोपेपि प्रत्ययाश्रितं कार्यं भवतीति तत्प्राप्तिः यदादेशस्तद्वद्भवतीति सिद्धे प्रत्ययलोप इत्याद्युक्तिर्न्नियमार्था । तेन यत्रप्रत्ययस्यासाधारणं रूपं प्रयोजकं तदेव प्रत्ययलोपे सति भवति नतु प्रत्ययाप्रत्ययसाधारणं तेन शोभना दृषदोस्य सुदृषत् प्रासाद इत्यत्र अत्वसोः साविति दीर्घो न ।

**मू०-लुकिनतन्निमित्तम्॥** कति २ । कतीनाम् । कतिषु । औडुलोमिः । औडुलोमी ।

**सुबोधिनी**-लुकिनतन्निमित्तं । लुक्शब्देन लुप्ते सति लुग्वान्निमित्तमाश्रित्य कार्य्यं न भवतीत्यर्थः । शीङोगुणश्चतुर्षु इत्यनेन ज्ञापितमिदं अन्यथा शेत इत्यादावदादेर्लुगिति लुप्तेप्रत्ययलोपे प्रत्ययलक्षणं न याति तद्वद्भावे गुणस्य सिद्धत्वाद्व्यर्थमिदं सूत्रं ततो ज्ञापयतीति । का संख्या येषां ते कति । उडूनीव लोमानि यस्य स उडुलोमाः उडुलोम्नोऽपत्यमौडुलोमिः बाह्वादित्वादिञ् ॥

**तत्त्वदीपिका**-सिद्धान्तमाह॥ **लुकि न तन्निमित्तमिति** । स प्रत्ययो निमित्तं यस्य तत्कार्यमिति शेषः लुकि सति प्रत्ययाश्रितं कार्यं न भवति इत्यर्थः । एतद्बीजन्तु शेते इत्यत्र शीङइति सूत्रेण गुणकरणं अन्यथा अपो लुकि प्रत्ययलक्षणेन पित्वाद्गुण इत्यनेनैव गुणे सिद्धे यत्सूत्रान्तरप्रणयनं तज्ज्ञापयति लुकि न तन्निमित्तमिति ।

**मू०-लोम्नोऽपत्येषुबहुष्वकारः॥** उडुलोमाः । औडुलोमिम् । औडुलोमी । उडुलोमान् । वातप्रमीः । वातप्रम्यौ । वातप्रम्यः । वातप्रमीम् । वातप्रम्यौ । वातमीन् । वातप्रम्या । एवं ययीपप्यादयः।क्विबन्तवातप्रमीशब्दस्यामि शसि ङौ च विशेषः। वातप्रम्यम् । वातप्रम्य ।वातप्राम्यि । य्वो वेति यः। बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी ।

**सुबोधिनी**-लोम्नोऽपत्येषुबहुष्वकारः । लोमन्शब्दांतादप्रत्ययो भवति अपत्यानां बहुत्वे वाच्ये । उडुलोम्नोऽपत्यानि उडुलोमाः । नोवेति टिलोपः । बहुत्वाभावे औडुलोमिशब्द इदंतस्य हरिवद्रूपम् । बहुत्वे तु उडुलोमशब्दोऽदंतोऽन्य एव । तस्य इकारांतेषु व्युत्पादनं प्रासंगिकम् । औडुलोमिशब्दस्य बहुत्वेऽदंतत्वं भवतीति नभ्रमितव्यमिति । अदंतस्य तु देववद्रूपम् ॥ इतीदंताः ॥ वातं प्रमिमीते इति वातप्रमीः । वातप्रम्यादय इत्युणादिसूत्रेण माङ इक् प्रत्ययः । आतोनपीत्यालोपः । स्वरादिविभक्तौ इयं स्वरे इति यत्वम् । अमि शसि च परत्वादामशसोरित्यालोपः । वातप्रमीम् । वातप्रमीन् । आमि तु दीर्घत्वान्न नुट् । वातप्रम्यां । ङौ तु सवर्णदीर्घः । वातप्रमी । एवं यांत्यनेनेति ययीमार्गः । पातिलोकमिति पपीः सूर्यः । यापोरिक् प्रत्ययो द्वित्वं च निपातनात् । यदा वातं प्रमीनातीति । मीञ् हिंसायामस्मात् क्विपि वातप्रमीः । अथवा ईक्प्रत्ययांताद्वातप्रमीशब्दादाचारे यङंतात्कर्तरि क्विप् क्रियते तदा क्विबंते वातप्रमीशब्दः । धातुत्वाद्य्वो वेति यः । स्वरादिविभक्तौ परतः सर्वत्र प्रधीवत् । बह्व्यः श्रेयस्यो यस्य स बहुश्रेयसी पुरुषः । पुंवद्धेतीपो निवृत्तिः । अतिशयेन प्रशस्य इति ईयसुप्रत्यये प्रशस्य शब्दस्य श्रादेशः । ष्ठ्रन्नितइतीप् । अन्यार्थे इति ह्रस्वस्तु न । ईयसुप्रत्ययांतस्य बहुव्रीहौ नेति निषेधात् ॥

**तत्त्वदीपिका-औडुलोमिरिति** । बाह्वादेश्चेति इञ् । आदिस्वरस्य ञ्णिति चेति वृद्धिः टिलोपः बहुष्वकार इति तथा च एकत्वद्वित्वयोरिदं न औडुलौमिशब्दः बहुत्वे त्वकारान्तो भिन्न उडुलोमशब्दः इकारान्तस्य बहुत्वेऽदन्तमिति न भ्रमितव्यमिति भावः । ययीपप्यादय इति यान्त्यनेनेति ययीर्मार्गः पातिलोकमिति पपीः सूर्यः औणादिकौ । क्विबन्तेत्यादि । तथा च वातं प्रमिमीते इति वातप्रमीरिति क्विबन्तत्वे धातुत्वानपायेन धौवेति य इति भावः औणादिकस्य तु धातुत्वाभावात् य्वौ वेत्यस्याप्रवृत्तावपि अम्शसोरित्यस्याप्रवृत्तिः ङौ तु सवर्णे दीर्घः सहेत्यस्येति रूपभेदः बहुश्रेयसीति समासाश्रितविधेरनित्यत्वान्न कः ईयसोनेति निषेधान्न ह्रस्वः ।

**मू०-ईदूदंतस्य** ॥ इयवस्थानभिन्नस्यस्त्र्याख्यस्योपसर्ज्जनत्वेऽपिस्त्रीकार्यंवक्तव्यम् ।

**सुबोधिनी-ईदूदंतस्य** । स्त्र्याख्यस्योपसर्जनत्वेपि स्त्रीकार्यं वक्तव्यं । स्त्रियमाचष्टे इति स्त्र्याख्याः चक्षिङोमूलविभुजादित्वात्कप्रत्यये ख्याञादेशे चातोनपीत्यालोपः । स्त्रियामिति वक्तव्ये आख्याग्रहणं नित्यस्त्रीत्वलाभार्थं । तेन वृत्तेः प्राक् स्त्र्याख्यस्य नित्यस्त्रीलिंगस्य ईकारोकारांतस्य नाम्नो गौणेऽपि स्त्रीलिंगकार्यं भवति । स्त्र्याख्यस्येति किं । ग्रामण्ये ॥

**तत्त्वदीपिका-स्त्र्याख्यस्येति** । स्त्रियमाख्यातीति स तस्य पूर्वं स्त्रीत्ववाचकस्येत्यर्थः इयुवस्थानभिन्नस्य किं । अतिश्रिये ।

**मू०-हसेपस्सेर्लोपः** ॥ हसांतादीबंताच्च परस्य सेर्लोपो भवति । बहुश्रेयसी बहुश्रेयस्यौ ।

**सुबोधिनी-हसेपस्सेर्लोपः** । हसांतादीबंताच्च नाम्नो सेर्लोपो भवति । हसश्च ईप् चानयोः समाहारो हसेप् तस्मात् । ननु कौशांव्या निष्क्रांत इति निष्कौशांबिरित्यत्रातिव्याप्तिः स्यात् अन्यार्थइति ऱ्हस्वे कृते एकदेशविकृतस्यानन्यत्वात् ।उच्यते । ईईप् इति प्रश्लिष्य दीर्घस्यैवेपो ग्रहणात् ईकाररूपादीपः सेर्लोप इति ऱ्हस्वे कृते क्वीबंतत्वेपीकारान्तत्वं नास्तीति । सेरिति किम् । मरुतौ । हसांतात्प्रथमं सिलोपे पश्चात्कार्यांतरं भवति । इतोदित्यनेनात्वे उपधादीर्घे नलोपश्चि स्नोर्विसर्गे च कृते पंथा इति सिद्धम् । असावित्यकारविधानेन प्रथमसिलोपस्य ज्ञापनात् ॥

**तत्त्वदीपिका-हसेपःसेर्लोप इति** । हस् च ईप् च एतयोः समाहारः हसेप् तस्मात् हसेपः । ननु हसग्रहणं किमर्थम् हसान्तात्संयोगान्तलोपे रूपसिद्धेरिति चेन्न वेधाइत्यत्रपरत्वादपवादत्वाद्वा स्कोराद्योरित्यनेन सलोपे अत्वसोः साविति दीर्घासिद्धेः । अथ परं नित्यं च लोपं बाधित्वा निरवकाशत्वादत्वसोरित्यस्यैव प्रवृत्तिरिति चेत् । मैवम् शक्नोतीति शक् इत्यस्यासिद्धेः । संयोगांतलोपं बाधित्वा स्कोराद्योरिति कलोपप्राप्तेः तस्माद्धसग्रहणं । अथ गंगामिच्छति गंगीयति ततः क्विपि अल्लोपयलोपौ गंगीरिति । तत्रापःभूतपूर्वपकारमाश्रित्य ईपःसिलोपोस्त्विति वाच्यम् लक्षणप्रतिपदोक्तस्यैव ग्रहणमिति परिभाषयातदग्रहणात् । ननु निष्कौशाम्बिरित्यत्र ऱ्हस्वत्वेपि ईपमाश्रित्यसेर्लोपोस्त्विति चेन्न तत्र ई ईबिति प्रश्लिष्य दीर्घस्यैवेपः सर्वत्र ग्रहणात् । अत्र तस्मादित्यनुवृत्य स्वाद्यनुवृत्य वा ईप्साहचर्याद्वा अर्हत्सीदित्यादौ नलोपः ।

**मू०-धौ-ऱ्हस्वः** ॥ इयुवस्थानवर्जितयोरीदूतोरस्त्रीशब्दस्य च स्त्रियां धौ परे ह्रस्वो भवति । ह्रस्वविधानसामर्थ्याद्धाविति न । हेबहुश्रेयसि । बहुश्रेयसीम् । बहुश्रेयसीन् ।

**सुबोधिनी**—धौह्रस्वः । स्त्रियां वर्तमानयोरीदूतोः स्त्रीशब्दस्य च ह्रस्वो भवति । वेयु-वइत्यपकृष्य व्यवस्थितविकल्पं चाश्रित्य वाक्यभेदेन व्याख्येयम् । तेन इत्युवूस्थानिनोरी-दूतोर्धौ न ह्रस्वः । हेबहुश्रेयसि इत्यत्र ह्रस्वे कृते धाविति गुणो न ह्रस्वविधिसामर्थ्यात् ॥

**तत्त्वदीपिका**—धौह्रस्व इति । अत्र वेयुव इत्यतो वा इति इयुव इति चानुवर्त्य वा इत्यस्य व्यवस्थित-त्वमाश्रित्य सर्वत्र निर्वाहः । तथा च इयुवस्थानवर्जितयोरीदूतोः स्त्रीशब्दस्य च धातुवर्जितस्य चेत्यादिलाभः तेन हेश्रीः हेस्त्री हे ग्रामणि हे अतिचमु इत्यादावव्याप्त्यतिव्याप्तिपरिहारः सिद्ध्यतीति ध्येयम् ।

**मू०—ङिताम**ट् ॥ स्त्रियामीकारांतादूकारांताच्च ङितामडागमो भवति । बहु-श्रेयस्यै । बहुश्रेयस्याः । बहुश्रेयसीनाम् ।

**सुबोधिनी**—ङितामट् । य्वोरित्यनुवर्तते । इदुद्भ्यामिति परत्वाद्विकल्पेन बाधनाद्दीर्घ-योरेव ईदूतोर्ग्रहणं । स्त्रियामीदूदंतात्परेषां ङेङसिङस्ङीनामट् स्यात् । यदागमास्तद्गुणीभूता-स्तद्ग्रहणेन गृह्यंते इति परिभाषया स्याद्यवयव एवाट् तेन स्वरादौ स्यादौ परतो विधीयमा-नावियुवौ य्वौ च भवतः । यथा श्रियै । भ्रुवै । प्रध्यै । वर्षाभ्वै । स्त्रियां किं । वातप्रम्ये । हूह्वे । आमितु नुट् । बहुश्रेयसीनाम् ॥

**तत्त्वदीपिका**—ङितामडिति । ङ इत् येषाम् ते ङितस्तेषां नन्वटः स्यादित्वाभावेन कथं तस्मिन् इयुवौ य्वौ वेति चेत्सत्यम् यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यंते इतिपरिभाषयाऽपि स्यादिग्रहणेन ग्रहणसंभवात् । अत्र स्त्रियामिति निर्देशो मानम् अत्र च दीर्घौ ईदूतौ ग्राह्यौ । इदुद्भ्यां परत्वाद्विकल्पेन बाधात् । नन्वतिल-क्ष्म्यै कथमत्र समासस्य स्त्रियामभावादिति चेन्न अवयवस्यैव स्त्रियां वर्त्तमानत्वेनेष्टसिद्धेः । स्त्रियां किं वातप्रम्ये । य्वोः किं मात्रे ।

**मू०—स्त्रियांयोः** ॥ इवर्णांतादुवर्णांताच्च स्त्रियां वर्त्तमानात्परस्य ङेरामादेशो भवति । बहुश्रेयस्याम् अनीबंतत्वान्नसिलोपः । अतिलक्ष्मीः । धौ ह्रस्वः । हे अतिलक्ष्मि । शेषं बहुश्रेयसीवत् । सुश्रीः ।

**सुबोधिनी**—स्त्रियां योः । इश्चउश्चानयोः समाहारो यु तस्माद् योः समाहारे नपुंसक-त्वस्यानित्यत्वात्पुँल्लिंगनिर्देशः । आगमशास्त्रस्यानित्यत्वाद्वा न नुम् । अथवा इना सहित उरिति युः । शाकपार्थिवादित्वान्मध्यपदलोपः । स्त्रियामिवर्णोवर्णांतात्परस्य ङेराम् स्यात् । स्त्रियां किं । वातप्रमी । हूह्वि । योरिति किम् । गवि । किंच अडागमाऽभावे आमोप्यभाव इति यद्वृत्तौ पठ्यते तस्यायमाशयः । तथाहि । मत्यां मतावित्यादिषु स्त्रियां योरित्यनेन नित्यमामि कृते इदुद्भ्यामित्यादिविकल्पेनाट् क्रियते । अडागमाभावे तु स्थानिवद्भावेनामो ङित्त्वात् ङेरौदित्यनेन औत्वटिलोपौ भवतः । अट्पक्षे तु तेन व्यवधानादौत्वाभाव इति । तेनाडामोः सहैव प्रवृत्तिर्भवति । बहुश्रेयसी ङि इत्यत्र ङेरामादेशे कृते नुट् न । परत्वेनाटा बाधनात् । बहुश्रेयस्यां । लक्षेर्मुट्चेत्यौणादिक ईप्रत्ययांतो लक्ष्मीशब्दः । लक्ष्मीमतिक्रांत इत्यतिलक्ष्मीः । अन्यार्थे इति ह्रस्वो न स्त्रीप्रत्ययांतत्वाभावात् । हल्ङ्याब्भ्यो दीर्घात् इति सेर्लोपोपि न ईप्प्रत्ययांतत्वाभावात् । सुष्ठु श्रीर्यस्येति सुश्रीः । ईबंतत्वाभावान्नसिलोपः ॥

**तत्त्वदीपिका**—स्त्रियां योरिति । इश्च उश्च एतयोः समाहारः यु तस्मात् योः । आगमजस्यानित्यत्वान्न नुम् । स्त्रियां किम् । वातप्रमी । योरिति किम् गवि ।

**मू०—य्वोर्द्धातोरियुवौस्वरे ॥ धातोरिवर्णोवर्णयोरियुवौ भवतः स्यादौ स्वरे परे। सुश्रियः। एवं सुधीयवक्र्यादयः। सेनानीः।**

सुबोधिनी—य्वोर्द्धातोरियुवौ स्वरे। यत्त्वाद्यपवादोयम्। इश्च उश्च यू तयोर्य्वोः। व्याख्यानतो विशेषप्रतिपत्तिर्नहिसंदेहादलक्षणमिति परिभाषया य्वोरिति ह्रस्वयोरिह ग्रहणे सावर्ण्याद्दीर्घयोश्च नाम्नो धातोरिवर्णोवर्णयोरियुवौ भवतः स्यादौ स्वरे। धातोः किं। वातप्रम्यौ हूह्वौ। स्यादौ किं। श्र्यर्थं। भ्वर्थं। ननु सुश्रिये इत्यादौ वेयुवइत्यनेनाट् कथं न क्रियते। ईदूदंतस्य स्त्र्याख्यस्येत्युक्तत्वादाह इयुवोर्निमित्तभूतयोरीदूतोर्गौणे स्त्रीकार्यं न वक्तव्यं। स्त्रीशब्दं विना सुष्टु धीर्यस्येति सुधीशब्दस्य च नेति निषेधात् य्वौवेति न प्रवर्तते। यवंक्रीणातीति यवक्रीः। क्विबंतः। सेनां नयतीति सेनानीः। क्विबंतः ॥

तत्त्वदीपिका—य्वोर्द्धातोरियुवौ स्वरे इति। धातोः किम्। वातप्रम्यौ। य्वोः किम् विश्वपौ। स्वरे किम् सुश्रीभ्याम्। स्यादौ किम् श्र्यर्थम् भ्वर्थम्। अत्र इश्च उश्च एतयोः य्वोरिति व्याख्यानतो विशेषप्रतिपत्तिर्नहिसंदेहादलक्षणमिति वचनादवर्णोवर्णयोरिति व्याख्यास्यामः। अत्राहुः नामिनः स्वरे इति तु स्वरग्रहणमच्चास्थामिति शसादिना संबद्धमिति तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यादिति पुनः स्वरग्रहणमिति तत्रेदमवधेयम्। तर्ह्यन्यसूत्रस्यपदसंबद्धस्यानुवृत्तिरिह दृष्टा एकयोगनिर्दिष्टानामेव प्रवृत्तिनिवृत्त्योर्दर्शनात् किन्तु बहुसूत्रव्यवधानादन्यविधानात्तन्निवृत्तौ स्वरग्रहणमित्येव वक्तुमुचितम्। अत्रातोधातोरित्यतो धातोरिति लब्धेपि पुनर्धातुग्रहणं योगविभागेनार्थविशेषज्ञापनार्थम्। यत्तु इयेष इत्यादौ स्पष्टतयोपपादयिष्यते। अत्राहुः य्वोरिति किमर्थम्। परिशेषादेव तल्लाभात्। तथाहि ऋदंतस्य तुक् ऋदन्तस्य तु इरुरौ ऌदन्तस्यतु धातोरेव संध्यक्षरान्तस्य त्वात्वमेव अदन्तस्यतु यत इति लोपः अदन्तस्य शसादौ लोपः। पंचसु तु आतः पंचसु नेति पदत्रयमनुवर्त्य पञ्चसु नेति निषेधः हसांतस्य गमामित्यादिनिर्देशान्नेति। श्रीपं कुलमित्यादौ तु अत इति नेति च पदद्वयमनुवर्त्य अतोनेति व्याख्यातुं शक्यत्वान्नेति परिशेषात् य्वोरिति लब्धे किमर्थं तदितीति अत्रेदमवधेयम्। आदन्तस्य वारणाय आतः पंचसुनेति अदन्तवारणाय अतो नेत्याद्यनुवृत्तिक्लेशतो य्वोरिति ग्रहणस्य स्पष्टप्रतिपत्तितया लघुत्वादिति तदुपेक्षितम्।

**मू०—य्वौवा ॥ अनेकस्वरस्य नाम्नो धातोरिवर्णोवर्णयोर्यकारवकारौ भवतः स्यादौ स्वरे परे। धातोरवयसंयोगः पूर्वो यस्मात्तस्य तु न। सोपपदस्यानेकस्वरस्य चेदुपसर्गकारकपूर्वस्यैव नान्यपूर्वस्य। वर्षाकरहन्पुनरपूर्वस्यभूशब्दस्यवत्वं। अन्यभूशब्दस्य सुधीशब्दस्य च य्वौ न। सेनान्यौ। सेनान्यः।**

सुबोधिनी—य्वौवा। इयुवोरपवादोयं। तस्मादिति य्वोर्धातोः स्वरे इति चानुवर्तते। अनेकस्वरस्य नाम्नो धातोःसंबंधिनोरिवर्णोवर्णयोर्यकारवकारौ भवतः स्यादौ स्वरे। धात्ववयवसंयोगपूर्वयोरिवर्णोवर्णयोस्तु य्वौ न चेद्यदि सोपपदस्य धातोरिवर्णोवर्णयोर्य्वौ स्यातां तदोपसर्गकारकपूर्वस्य धातोरिवर्णोवर्णयोरेव य्वौ स्तः। न तूपसर्गकारकेतरपूर्वस्य धातोरिवर्णोवर्णयोरर्थादुपसर्गकारकपूर्वत्वेन योऽनेकस्वरो धातुस्तस्यैवर्णोवर्णयोरेव य्वौ उपसर्गकारकेतरपूर्वत्वेन योऽनेकस्वरो धातुस्तस्यैवर्णोवर्णयोर्य्वौ न। अनेकस्वरस्यय्वौ किं। नियौ। लुवौ। धातोर्य्वोः किं। वातप्रम्यौ। हूह्वौ। स्यादौ स्वरे किम्। सेनान्यर्थं। सुल्वर्थम्। धात्ववयवसंयोगपूर्वत्वे सुश्रियौ। उपसर्गधात्ववयवसंयोगपूर्वत्वे तु य्वौ भवतः। उन्न्यौ। उल्ल्वौ। धात्ववयवसंयोगोत्र न उपसर्गकारकाभ्यामितरपूर्वत्वे तु य्वौ न परमनियौ। शुद्धधियौ। वर्षाकरहन्पुनर्पूर्वस्य भुवो वत्वमितरपूर्वस्य भूशब्दस्य सुधीशब्दस्यच य्वौ न। किंतु इयुवौ ॥

तत्त्वदीपिका—य्वौवेति। अत्र तस्मात् य्वोर्धातोः स्वरे इति पदचतुष्टयमप्यनुवर्तते इत्यभिप्रेत्याह नाम्नोधातोरित्यादि अत्र वाशब्दो व्यवस्थितः ततश्च सर्वेष्टिसिद्धिरिति । अनेकस्वरस्य किम् । नियौ । धातोः । किं वातप्रमीम् । य्वोः किं । सोमपौ । स्वरादौ किं । सेनानीभ्यां स्यादौ किं सेनान्यर्थम् ।

**मू०—नियः ॥ नीशब्दादुत्तरस्य ङेरामादेशः । सेनान्याम् । एवं सुनीप्रधीग्रामण्यादयः । धातुना संयोगविशेषणात् उन्न्यौ । उपसर्गकारकपूर्वस्य किं । परमनियौ । शुद्धधियौ । अनेकस्वरस्य किं । नियौ । कुमारीमिच्छन् कुमारीवाचरन् कुमारी । हसेप इति सिलोपः । कुमार्य्यौ । कुमार्य्यः । अमि शसि च कुमार्य्यम् । कुमार्य्यः शेषं बहुश्रेयसीवत् । सखायमिच्छति सखीयति । एकदेशविकृतस्यानन्यत्वात् डैत्वे सखा । सखायौ । सखायः । हे सखीः । सखायं । सख्यः । सह खेन वर्तते सखस्तमिच्छीत सखीः सख्यौ । सुतमिच्छति सुतीः । सुत्यौ ।**

सुबोधिनी—नियः । नीशब्देन नाम्नो विशेषणात्तदंताविधिः । नीशब्दान्नीशब्दांताच्च नाम्नो ङेराम् स्यात् । लुन्वीत्यत्र तु नातिव्याप्तिः। लक्षणप्रतिपदोक्तयोरिति न्यायात्। अर्थवद्ग्रहणे नानर्थकस्येति न्यायाच्च । यत्वे आमादेशेच सेनान्यां । एवं सुष्ठु नयतीति सुनीः । प्रध्यायतीति प्रधीः । ध्यायतेः क्विपि संप्रसारणे रूपं। यदा तु प्रकृष्टाधीर्बुद्धिर्यस्येति विग्रहस्तदा धीशब्दस्य नित्यस्त्रीलिंगत्वात् ईदंतस्य स्त्र्याख्यस्येति स्त्रीकार्य्ये बहुश्रेयसीवद्रूपम् । सुष्ठुध्यायतीति सुधीः । सुधीशब्दस्य च नेति निषेधादिय् सुधियौ । सुधिय इत्यादि । ग्रामंनयतीति ग्रामणीः । उन्नयतीत्युन्नीः । धातुना संयोगस्य विशेषणादिह य्वौ वेति यत्वं स्यादेव । परमश्चासौ नीश्च परमनीः । शुद्धा धीर्यस्य स शुद्धधीः । उपसर्गकारकेतरपूर्वत्वादितीय् । यदा तु शुद्धं ब्रह्म ध्यायतीति विगृह्यते तदाय्वौ वेति यत्वं भवत्येव । नयतीति नीः एकस्वरत्वादिहेय् । कुमारीयति । अथवा कुमारीवाचरतीति कुमारीयते कुमारयति वा । नाम्नो य ईचास्येति यप्रत्ययांतात् कर्तर्युङिति नाम्न आचारे क्विप् । यगंताभ्यां च कर्तरि क्विपि परतः यत इत्यल्लोपे यवयोर्वसे हकारे चेति यलोपे च कुमारीति रूपम् । ननु कुमारीत्यत्रान्यार्थे इत्यनेन न ह्रस्वः स्यात् क्विबर्थं प्रतीबंतस्योपसर्जनत्वात् । उच्यते । अन्यार्थे इति सूत्रे कृत्रिमोपसर्जनं गृह्यते । न त्वप्रधानरूपमिति । कुमारीशब्दे इदुदंतस्य स्त्र्याख्यस्येति स्त्रीकार्यं भवति । तेन धौपरे धौन्ह्रस्व इति ह्रस्वः । ङिद्वचनेषु ङितामाडित्यट् स्त्रियां यारिति ङेराम् । आमि तु नुट्स्वरे य्वौ वेति यत्वं । कथं तर्हि दुर्धियः वृश्चिकभिय इत्यादि उपसर्गकारकपूर्वत्वाद्यत्वेन भाव्यमिति उच्यते । दुःस्थिता धीर्येषामिति विग्रहे दुरित्यस्योपसर्गसंज्ञा नास्ति । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञका इत्युक्तत्वात् । वृश्चिकसंबंधिनी भीर्वृश्चिकभीरित्युत्तरपदलोपोत्रबोध्यः । भययोगाभावाद्वृश्चिकस्य नापादानत्वमिति भावः । सखायमिच्छतीति सखीयति नाम्नो य इति यप्रत्ययः यङाति दीर्घः ततः क्विपि यत इत्यलोपः अलोपस्यात्र स्थानिवत्त्वेन यत्वं न भवति क्वौ लुप्तं न स्थानिवदिति निषेधात्। एकदेश विकृतस्यानन्यतया डात्वमेव च भवति। शसादौ स्वरे य्वौ वेति यः। सह इति बहुव्रीहिः "कं शीर्षे च सुखे खं खः सदिवि व्योमनींद्रिये । शून्ये विदौ सुखे खस्तु इति हैमः । " सखमिच्छतीति सखीयति । नाम्नो यईच्चास्येति यः इत्वं च। ततः क्विपि सखी। लक्षणप्रति-

पदोक्तयोरिति न्यायान्नात्र ङात्वं । स्वरादिविभक्तौ य्वौ वेवेति यः । एवं सुतमिच्छतीति सुतीयति । क्विपि सुतीः ॥

**तत्त्वदीपिका**—नियः इति । अत्रणीञ् प्रापणे इति धातुरेव गृह्यते नत्वन्यः लक्षणप्रतिपदोक्तपरिभाषया लून्य इत्यादौ नातिप्रसंगः क्वचिन्नियश्चेति चकारः स चिन्त्यप्रयोजन इति वृद्धाः । उन्न्याविति अत्र संयोगपूर्वकत्वेपि उपसर्गधात्ववयवसंयोगत्वाद्य्वौकुमारीमिच्छन्नित्यादि इच्छार्थायां तदाचारक्विबन्ताद्वा कर्त्तरि क्विपि कुमारीति रूपं । नेति पुरुष इत्यर्थः । पुंस्त्वद्योतनायेदं कुमार्यमिति अल्लोपं बाधित्वा य्वोवेति यः सखेति अत्रापि सखायमिच्छतीति वाक्ये अल्लोपययोः सखीति दीर्घान्तः सेर्डाधेरित्यस्य ह्रस्वान्तस्यानुवृत्तेरिह च ह्रस्वान्तस्य ग्रहणात् कथं दीर्घान्ते कार्यद्वयमित्यत आह एकदेशेत्यादि एकदेशेन एकादेशावयवेन विकृतं विकारवत् विपरीतकृतापि नान्यवद्भवतीत्यर्थः यथा छिन्नकर्णोपि श्वा श्वैव नान्य इति भावः । नन्वत्रालोपस्य स्थानिवद्भावेन यादेशोऽस्त्विति चेन्न क्वौ लुप्तं नस्थानिवदिति परिभाषोपस्थानात् । लुप्तेति नपुंसके भावेक्तः क्वौ लोप इति यावत् सखायमिति अत्राम्शसोरिति बाधित्वा य्वौवेति यः प्राप्तः ततोपि परत्वादेसख्युरित्यैत्वमेव तकारस्थानजादिति स्थानिवद्भावेनेति भावः ।

**मू०—खीतीभ्यांकृतयादेशाभ्यांङसिङसोरकारस्यउः ॥ सख्युः सुत्युः ।**

**सुबोधिनी**—खीतीभ्यांकृतयादेशाभ्यांङसिङसोरकारस्य उः । य्वोवेतिकृतयाभ्यां खीतीवर्णाभ्यां परस्यङसिङसोरस्य उः स्यात् ॥

**तत्त्वदीपिका**—कृतयादेशेत्यादि । धात्ववयवसंयोगपूर्वत्वान्न यत्वं तदभावान्नोत्वमित्यर्थः ।

**मू०—तकारस्थानजाद्वर्णादपि ॥ लूनमिच्छतीति लूनीः । लून्युः । क्षामं प्रस्तीमं वेच्छतीति क्षामीः । क्षाम्युः । प्रस्तीमीः । प्रस्तीम्युः । शुष्कीः । पक्वीः । कृतयादेशत्वाभावान्नोत्वम् । शुष्कियः । पक्वियः । हूहूः । हूह्वौ । हूह्वः । हे हूहूः । हूहूं । हूहून् । वातप्रमीवत् । एवं हन्भूः अतिचमूः । बहुश्रेयसीवत् । खलपूः । खलप्वौ । खलप्वः । एवमुल्लूसुल्वादयः । स्वयंभूः । स्वयंभुवौ । स्वयंभुवः । एवंभुवः । एवं स्वयंभू कटप्रूहन्भूकाराभूपरमल्वादयः । वर्षाभूः । वर्षाभ्वौ । वर्षाभ्वः । वर्षाभ्वम् । एवं करभूपुनर्भूहन्भूकाराभूशब्दाः ॥**

**सुबोधिनी**—तकारस्थानजाद्वर्णादपि । कृतयादेशात्तकारस्थानोत्पन्नाद्वर्णात्परस्य ङसिङसोरस्य उः स्यात् । लूनमिच्छतीति लूनीयति । क्विपिलूनीः । ल्वाद्योदितश्चेति क्तस्य नः । क्षाममिच्छतीति क्षामीयति क्षामीः । क्षायोम इति क्तस्य मः । प्रस्तीनमिच्छतीति प्रस्तीमीयति क्विपि प्रस्तीमीः । प्रस्त्यायतेः संप्रसारणं क्तस्य नत्वं च निपातनात् । क्षामं क्षीणां तु प्रस्तीमं विपरीतं निगद्यत इति । शुष्कं पक्वं वेच्छति शुष्कीयति पक्वीयति । क्विपि, शुष्कीः शुषःक इति क्तस्य पचो व इति वः ङसिङसोः परतो य्वोर्धातोरितियादेशे कृते य्वौवेति यादेशत्वस्याभावात् खीतीभ्यामित्युत्वं न ॥ इतीदंताः ॥ उदन्त हरिवत् । इत्युदंताः ॥ गंधर्वविशेषवाचकोऽव्युत्पन्नो हूहूशब्दः । अमिशसि च अम्शसोरित्यलोपः । अन्यत्र स्वरादौ विभक्तौ उवमिति वत्वं । हंभतीति हंभूः । अंदूहंभूजंबूककफेलूककर्कंधूदीधिषूः इत्युणादिसूत्रेण कूप्रत्ययो नुगागमश्च निपात्यते अयमुकारो धातोर्न । तेन उवमिति वत्वं । हभीग्रंथे हम्भूः ग्रंथकर्ता । चमूं सेनामतिक्रांतो यः

सोऽतिचमूः । अतिचमूशब्दे तु स्त्रीकार्यविशेषः धौ हे अतिचमु ङिति अतिचम्वै । अतिचम्वाः । आमि अतिचमूनां । ङौ अतिचम्वां । खलं पुनातीति खलपूः । पूञः क्विप् । स्वरादौ विभक्तौ य्वौवोति वत्वं स्वयं भवतीति स्वयंभूः क्विबंतः । अन्यभूशब्दस्येति निषेधात् वत्वं न । लुनातीति लूः । अनेकस्वरत्वाभावात् वत्वं न भवतीति । स्वभूः अन्यभूशब्दस्य निषेधाद्वत्वं न । कटं प्रवत इति कटप्रूः । धातोरवयवसंयोगपूर्वकत्वादत्वं न । दृग्भ्यां भवतीति दृग्भूः । कारायां भवतीति काराभूः । अन्यभूशब्दस्येति वत्वं न । परमश्चासौ लूश्च परमलूः । उपसर्गकारकेतरपूर्वत्वादत्वं न । वर्षासु भवतीति वर्षाभूः । य्वौवेति वत्वं स्वरे । भेके मंडूकवर्षाभूशालूरप्लवदर्दुरा इत्यमरः । भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवः । कर एव कारः स्वार्थिकोऽण् । कारे भवतीति कारभूः वत्वं । पुनर्भवतीति पुनर्भूरिति क्रियाशब्दः । पुनर्भूर्दिधिषूरूढाद्विरित्यमरः पुनर्भूशब्दस्तु नित्यस्त्रीलिंग एव । हन्निति नांते हिंसार्थाव्यये पूर्वपदे भुवः क्विप् । हन्भूतरुसर्पजातिः कपिश्चाकरे भवतीति करभूः वत्वं । इत्यूदंताः ॥

**सू०-सेरा ॥ ऋकारान्तात्परस्य सेरा भवति स च डित् । पिता ॥**

**सुबोधिनी**-सेरा । ऋतौ ङञरित्यत ऋत इत्यनुवृत्तं । ऋदतान्नाम्नः सेरास्यात् स च ड्डित् । पितृसि इत्यत्र पंचसु इत्यर् प्राप्तः सेरा इत्यात्वं च प्राप्तम् । तत्र येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवाद इति न्यायेनार् इत्यस्य बाधकोयमाकारः प्रथमं प्रवर्तते । ततस्तस्य स्थानिवत्त्वेन आ इत्यस्य सित्त्वात्तस्मिन् परे अर टिलोपश्चेति द्वयं प्राप्तं । तत्र परत्वान्नित्यवाच्च टिलोपः । पिता माता ननांदा नप्तृत्वष्टृभ्रातृयातरः ॥ जामाता दुहिता देवा न हि त्रंता इमे दश अव्युत्पत्तिपक्षमाश्रित्येदमुक्तम् ॥

**तत्त्वदीपिका**- सेरेति । अत्र ऋतोङ्डरित्यतः ऋत इत्यनुवर्त्तते । से किं पितृभ्याम् । ऋतः किम् हूहूः । तपरत्वं किम् तॄः । अत्र सि इति स्थिते पश्चस्वप्यरिप्राप्तेप्यल्पविषयत्वात्सेरेत्येवादौ प्रवर्त्तते ततः स्थानिवद्भावादेरप्राप्तावपि परत्वाट्टिलोप एव अत्राहुः । अन्सावित्येव सूत्रयितुमुचितम् । तथाच । अनि सति नोपधाया इति दीर्घे हसेप इतिलोपे सिद्ध्यतीष्टमिति । तत्रेदमवधेयम् अन् साविति कृतेऽर्द्धमात्रालाघवेपि सूत्रद्वयापेक्षत्वेन प्रक्रियागौरवमित्युपेक्षितम् ।

**सू०-पंचसु ॥ ऋकारस्यार् भवति पंचसु । पितरौ । पितरः ।**

**सुबोधिनी**-पंचसु । नाम्न ऋतोऽर् स्यात् स्यादिषु पंचसु । स्यादौ किं विभृतः ॥

**तत्त्वदीपिका**- पंचस्विति । अरित्यनुवर्त्तते तच्च ऋत एव नतु तदन्तस्य । निर्दिश्यमानस्यादेशा भवंतीति वचनात् । ऋतः किं हूहौ । तपरत्वं किम् त्रौ । पंचसु किं पितृभ्यां अत्र लाघवात् ङिपंचस्वित्येकयोगः समुचितः पृथग्योगकरणमरोनित्यत्वज्ञापनायेति काश्चित् तेन प्रियतिसौप्रियतिसेत्यादि नेति भावः ।

**सू०-धेरर् ॥ ऋकारांतात्परस्य धेरर् भवति स च डित् । हे पितः । पितरम् । पितरौ । पितॄन् ।**

**सुबोधिनी**-धेरर् । पंचसु इत्यस्य स्तुरार् इत्यस्य चापवादोयं । ऋदंताद्धेरर् स्यात् स च ड्डित् ॥

**तत्त्वदीपिका**-धेररिति । अत्र वृद्धाः मास्त्विदं सूत्रं पंचस्वित्यनेनारि कृते हसेप इति संयोगान्ते वा सिलोपे रूपसिद्धेः अथ सेरेत्यस्य प्रवृत्तौ रूपासिद्धिरिति वाच्यम् न तत्राधेरिति योजनीयमतो न हानिः ।

अथाङाविति अत्रानुवृत्यर्थमिति चेत् । तत्राङावित्येव सुवचत्वात् । लाघवं विशेषाभाव इति चेत् एकवाक्येनार्थ-लाघवसद्भावात् न चैवं हे कर्त्तरित्यत्रातिप्रसंग इति वाच्यं तत्रापि सेराधेररित्यतो धेरित्यनुवर्त्य विभक्तिविप-रिणामेनाधाविति व्याख्येयमित्यतो धावरः प्रतिषेधात् अत्रोच्यते सूत्रं विना हेकर्त्तरिति न सिद्ध्येत् तथाहि प्रथमं पंचस्विति अरप्राप्तः तदपवादः स्तुरारिति आरप्राप्तः स चाधाविति प्रतिषिद्धः देवदत्तस्य हन्तरि हते नहि देवदत्तो जीवतीति न्यायेनारिनिषिद्धेप्यरन् स्यात् सूत्रारंभे तु धेरिति टिलोपे च सिद्धम् हे कर्तरिति यदि त्वपवादे पुनरुत्सर्गस्य प्रवृत्तिरिति न्याय आश्रीयते यथा वासिष्ठ इत्यादौ तददं सूत्रं व्यर्थमित्याहुः ।

**मू०–ऋतोऽङ्उः ॥ पितुः ॥**

**मू०–ङौ ॥ ऋकारस्यारभवति ङौ परे । पितरि । एवं जामातृभ्रात्रादयः ।**

सुबोधिनी–ङौ । नाम्न ऋतोऽर् स्यात् ङौ परे । ङौ किं पित्रे । नयतेर्डिच्चेति ऋप्रत्ययांतो नृशब्दः । ना । नरौ । नरः ।

तत्त्वदीपिका–ङाविति । अत्राङिदिति निवृत्तं ङित्कार्यस्यासंभवात् ऋत इत्यनुवृत्तं पंचम्यन्तमर्थव-शात्षष्ठ्या विपरिणम्यते अत्रापि कर्त्तरीति निर्देशान्निर्दिश्यमानस्यैव ग्रहणात् न तु तदन्तस्य ङिपरत्वमप्यत एव । तेन ग्रंथकृतेत्यादौ नातिप्रसंगः । ऋतः किम् । वातप्रमी । तपरः किम् । पित्र्यम् ।

**मू०–नुर्वानामिदीर्घः । नृणाम् नॄणाम् । शेषं पितृवत् ।**

सुबोधिनी–नुर्वानामिदीर्घः । नृशब्दस्य वा दीर्घो भवति नामि परे ॥

**मू०–स्तुरार् ॥ सकारतृप्रत्ययसम्बन्धिन ऋकारस्यार् भवति पंचसु । कर्त्ता । कर्त्तारौ । कर्त्तारः । हे कर्त्तः । कर्त्तारम् । कर्त्तारौ । कर्तॄन् ।**

सुबोधिनी–स्तुरार् । स् च ता चानयोः समाहारः स्तृ तस्य स्तुः । स्तोरितिवद्बोध्यं सकारसहितस्ता तस्य स्तुरिति वा । सकारात् परस्य तृप्रत्ययावयवस्य च ऋत आर् स्यात् पंचसु । कर्तृ सि इत्यत्र आरपेक्षया सेरेत्यस्यैव प्रथमप्रवर्तनस्यौचित्यं नित्यत्वात् । तत-ष्टिलोपः । वस्तुतः पूर्वमारि कृतेतु वर्णमात्रविधौ यदादेश इत्यस्याभावात् सेरा इत्यात्वं न स्यादिति । आत्वमेव पूर्वं विधेयमिति । स्तुरिति किं । ना । नरौ । नरः ॥

तत्त्वदीपिका–स्तुरारिति । स च तृच स्तृ तस्य स्तुः स्तोरिति केचित् सातपरत्वं तृ शब्दस्यावय-वमकारे बोध्यम् । न तु संयोगसमवायौ ऋकारस्य वर्णत्वेन शब्दत्वात् संयोगसमवाययोरभावात् शब्दस्य गुणत्वेन संयोगाभावः तस्य द्रव्यमात्रधर्मत्वात् शब्दस्याकाशमात्रसमवेतत्वेन समवायाभावश्च ननु इत्युक्ते तृणो न ग्रहणं निरनुबंधग्रहणेनसानुबंधकस्येति न्यायात् इति चेन्न परिभाषाया अनित्यत्वात् प्रशास्तृशब्दस्यैव तृशब्दस्य तु न ग्रहणं व्याख्यानात् लक्ष्यानुरोधो व्याकरणान्तरं चात्र मूलं । न आदीनां मातृपित्रादीनां तु नेति व्याख्यायां व्याख्यानमेव शरणं उभयेषामपि व्युत्पत्त्यव्युत्पत्तिपेक्षया समत्वात् ।

**मू०–उद्गातृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणांच ॥ उद्गाता । नप्ता । क्रोष्टुशब्दस्य पुंसि पंचस्यादिषु स्त्रियां च तृवद्रूपम् । क्रोष्टा । क्रोष्टारौ । क्रो-ष्टारः । हेक्रोष्टो । क्रोष्टारं । क्रोष्टारौ । क्रोष्टून् ।**

सुबोधिनी–उद्गातृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृणां च । एषामप्यार् स्यात् पंचसु । किंच । उद्गात्रादीनां त्रंतानामारिष्टः । पितृमातृभ्रातृजामातृयातृदुहितृशब्दानां त्रंतानामरि-ष्टस्तत्र किं प्रमाणम् । व्युत्पत्तिपक्षे उद्गात्रादयः पित्रादयश्च उणादौ त्रंता व्युत्पादिताः ।

अव्युत्पत्तिपक्षे तृन्नात्रादयः पित्रादयश्चाव्युत्पन्ना न तृप्रत्ययांताइत्युच्यते व्युत्पत्तिपक्षे तृप्रत्ययांतत्वादेवारिसिद्धे उद्गात्रादिग्रहणं व्यर्थं । व्यर्थं सति नियम्यते । औणादिकानामुद्गात्रादीनामेव ऋंतानामार् न तु औणादिकानां ऋंतानाम् । संज्ञाशब्दानामन्येषां पितृप्रभृतीनामिति । अव्युत्पत्तिपक्षे तृन्नात्रादिग्रहणं विध्यर्थमिति पितृमातृभ्रातृप्रभृतीनामार् इत्यस्य शंकैव नास्तीति । क्रोष्टुशब्दस्य पुंसि पंचसुस्यादिषु स्त्रियां तृवद्रूपम् । क्रोष्टुशब्दस्य स्थाने क्रोष्टृ इति तृप्रत्ययांतं रूपं भवति । पुंसि पंचसु परेषु स्त्रीलिंगे च क्रुशआह्वानेऽस्मादौणादिके तुप्रत्यये क्रोष्टुशब्दः । तृवुणाविति तृप्रत्यये तु क्रोष्टृशब्दः । द्वावपि शृगालवाचिनौ तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते पंचस्यादिषु स्त्रियां च तृप्रत्ययांत एव । तृतीयादौ स्वरे उभयम् । अन्यत्र तु प्रत्ययांत एवेति नियमार्थमिदमारंभणीयं । निमित्तव्यपदेशात्तादात्म्यशास्त्रकार्यरूपविषयकत्वेनातिदेशस्य षड्विधत्वेपि प्राधान्यादिह रूपमेवातिदिश्यते तच्च क्रुशेरेव । उपस्थितत्वादर्थतः सादृश्याच्च ॥

**मू०-टादौस्वरे ॥ क्रोष्टुशब्दस्य तृवद्वा । क्रोष्ट्रा । क्रोष्टुना क्रोष्ट्रे । क्रोष्टवे । क्रोष्टुः । क्रोष्टोः । क्रोष्टुः । क्रोष्टोः । क्रोष्टुः । क्रोष्ट्रोः । क्रोष्ट्रोः कृताकृतप्रसंगी यो विधिः स नित्यः । नित्यानित्ययोर्मध्ये नित्यविधिर्बलवान् । क्रोष्टूनाम् । क्रोष्टरि । क्रोष्टौ । सह इना कामेन वर्तते सेः । सयौ । सयः । स्मृता ईर्लक्ष्मीर्येन स स्मृतेः स्मृतयौ । स्मृतयः ।**

सुबोधिनी—टादौस्वरे । क्रोष्टुशब्दस्य तृवद्वा । क्रोष्टुशब्दो वा तृप्रत्ययांतः प्रयोज्यष्टादौ स्वरे । तृप्रत्ययांतक्रोष्टुशब्दस्य कर्तृवद्रूपमुकारांतक्रोष्टुशब्दस्य भानुवत् । आमि तु तृवद्भावे नुडागमे च प्राप्ते सत्याह । कृतं चाकृतं च कृताकृते कृताकृतयोः प्रसंगोस्यास्तीति कृताकृतप्रसंगी यो विधिः स नित्यो विधिर्भवति । तृवद्भावे कृतेऽकृते च नुड्विधिर्नित्यः तृवद्भावस्त्वनित्यः । नित्यश्चानित्यश्च नित्यानित्यौ तयोर्नित्यानित्ययोर्विध्योर्मध्ये नित्यो विधिर्बलवान्बलिष्ठः । कौमुद्यां तु आमि परत्वात् तृज्वद्भावे प्राप्ते नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेनेति नुडेव । तेन बारीणां तिसृणां । क्रोष्टूनामिति ॥ इत्युदंताः ॥ कॄविक्षेपे । तॄप्लवनतरणयोः अनयोरनुकरणे कॄतॄ इति प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशादृत इरिति इर् र्वोर्विहसे इति दीर्घे च । कीः । किरौ । किरः । तीः । तिरौ । तिरः इत्यादि गीर्वत् । इर्भावपक्षे तु कॄः । क्रौ । क्रः । क्रम् । कॄन् । क्रा । क्रे । ङसिङसोः क्रः । दीर्घान्तत्वादामो न नुट् । क्राम् । ङौ तु क्रि ॥ इत्यॄदन्ताः ॥ गम्लृगतौ शकॢ शक्तौ अनयोरनुकरणे गम्लृ शकॢ इति । ऋवर्णल्वर्णौ चेति सावर्ण्यात् सेरेत्यात्वं । गमा । शका । पंचस्वित्यल् । गमलौ । गमलः । गमलं । गमलौ । शसि तु गम्लृन् । लृकारस्य दीर्घत्वाभावाच्छसीति न दीर्घः । लृलमितिलः । गम्ला । गम्ले । ङसिङसोस्तु ऋतोङउरित्युत्वं गमुल् । शकुल् । ङौ तु गमलि । शकलि ॥ इतिलृदंताः ॥ अस्यापत्यमिः कामः । अस्य कृष्णस्य स्त्री ईर्लक्ष्मीः तेन तया वा सह वर्तते यः स सेः सहादेरिति सहस्य सस्तत एत्वं । स्वरादौ विभक्तावय् सयौ ॥ इत्येदंताः ॥

**मू०-रैस्भि॥ रैशब्दस्याकारादेशो भवति सकारभकारादौ स्यादौ विभक्तौ । सुराः । सुरायौ । सुरायः । सुराभ्याम् । सुरासु ।**

सुबोधिनी–रैस्भि। रैइत्यविभक्तिको निर्देशः। रायः आत्वं स्यात् सभादौ विभक्तौ। स्भीति किं रायौ। स्यादौ किं रैभारः। रै सहायः। अर्थरैविभवा अपीत्यमरः॥ इत्यैदंताः॥

तत्त्वदीपिका–रैस्भीति। स च भच स्भ तस्मिन्सभादौ स्यादावित्यर्थः। सभादौ किं रायौ। स्यादौ किं रैभारः। रैसहायः। ऐस्भीति न सूत्रितमैकारः स्यान्महेश्वरइत्येकाक्षरकोशादिस्थैकारान्तेऽतिप्रसंगात्।

**मू०–ओरौ** ॥ ओकारस्यौकारादेशो भवति पंचसु। गौः। गावौ। गावः। हे गौः।

सुबोधिनी–ओरौ। ओकारस्यौकारो भवति ओकारांताद्विहितेषु पंचसु परेषु। पंचसु किम् गवा। विहितविशेषणं किम् हे भानो हे भानवः। घोएओजसीत्योकारे कृते औत्वं प्राप्तं विहितविशेषणाद्वार्य्यते॥

तत्त्वदीपिका–ओराविति। ओकारान्ताद्विहितेषु पंचसु स्यादिष्विति बोध्यम् तेन हे भानो हेभानव इत्यादौ नातिप्रसंगः उकारन्ताद्विहितौ सिजसावत्र नत्वोकारान्तात् नन्वोरित्युक्ते उवर्णस्य कुतो न ग्रहणमिति चेन्न द्विगुः ज्वत्तडरित्यादिनिर्देशेन ओकारस्यैव ग्रहणात्।

**मू०–अम्शसि**। ओकारस्याम्भवति अमि शसि च। गाम्। गावौ। गाः। गवा। गोभ्याम्। ङस्य गोः। एवं सुद्यौः। स्मृत उः शम्भुर्येन स स्मृतोः। स्मृतावौ। स्मृतावः। ग्लौः। ग्लावौ। ग्लावः।

इति स्वरान्ताः पुंल्लिङ्गाः ॥

सुबोधिनी–अम्शसि। ओत आत्वं स्यात्। शसा साहचर्यात् स्यादीनामेवाम् गृह्यते। नेह अचिनवं असुनवम्। औतोपवादोयं। अम् च शश्चानयोः समाहारोम्शस् तस्मिन् अम्शसि। गाः इत्यत्र न त्वाम्। शसीत्यात्वे इत्युक्तेः। सोनःपुंस इत्यनेन सस्य नकारो न। सुष्ठु द्यौर्यस्मिन् दिवसे स सुद्यौः। द्योदिवौ द्वे स्त्रियामभ्रमित्यमरः। उः शंभुः स्मृतो येन सः स्मृतौः बहुव्रीहाविति क्तान्तस्य पूर्वनिपातः॥ इत्योदंताः ग्लौर्मृगांकः कलानिधिरित्यमर। स्वरे आव्। ग्लावौ। ग्लावः॥ इत्यौदंताः॥ इति स्वरांताः पुंलिंगाः॥

तत्त्वदीपिका–अम्शसीति। अम् शसीति च्छेदः अम् च शस् च अनयोः समाहारोऽम्शस् तस्मिन्। अम् शसीति किं। गावौ। वसोर्वडरित्यादिनिर्देशान्नो वर्णशंका स्याद्यधिकारादचिनवमित्यत्रातिप्रसंगोपि न। ओतः किम्। ग्लावम्।

श्रीविद्यानगरस्थायिलोकेशंकरशर्म्मणा।
कृतायामिहटीकायां पुंल्लिंगोगात्स्वरान्तकः॥

**मू०–आपः** ॥ आदंतादाबन्तात्परस्य सेर्लोपो भवति। गङ्गा।

सुबोधिनी–आपः। आ आप इत्याकारप्रश्लेषादाकारान्तादाबंतान्नाम्नः परस्य सेर्लोपः स्यात्। आबंतात्किं सोमपाः। आदंतात्किम् खट्वामतिक्रांतोऽतिखट्वः। एकदेशविकृतस्यानन्यत्वादाबंतत्वेपि न सिलोपः आदंताबंताऽभावात्॥

तत्त्वदीपिका–आपइति॥ अत्र आ आबिति प्रश्लेषादाकाररूपस्यैवापो ग्रहणादतिगंग इत्यादौ नातिप्रसंगः। न चात्र गौणमुख्यन्यायादेव नेतिवाच्यं तस्य विशिष्टरूपोपादानविषयत्वात्। अत्र तु आप इति प्रत्ययग्रहणं नतु किंचिद्विशिष्टरूपम्। अत्राहुः आपइति सानुबंधग्रहणं व्यर्थम् विशेषग्रहणं त्वर्थविशेषादेवेति। अत्रेदमवधेयम्। अर्थविशेषानुशरणानुधावनतः सानुबंधनिर्देशस्य लघुत्वात् न चाप इति सूत्रं व्यर्थम् हसेपः

सेर्लोप इत्यत्रैव हसआईविति प्रश्लेषेण पकारस्योभययोजनेनैवेष्टसिद्धेः उत्तरत्राभयानुवृत्तिस्तु स्त्रीभ्रुवोरित्यस्याम्शसीत्यत्रैव निरसनायेति चेत्। न त्रिद्वंद्वे सति पश्चात्पकारेण संबंधे अंतरंगत्वादइएइतिकृते हसेप इति स्यात् द्वित्रिपदे द्वंद्वे तु पकारस्याकारेण संबंधो न लभ्यते । अतः सूत्रारंभ एवोचित इत्युक्तं वृद्धैः तत्रेदमवधेयम् अइएसवर्णदीर्घयोरंतरंगबहिरंगत्वविशेषेमानाभावः किंच हसेप इति जातेपि मात्रा गौरवाभावः किंच त्रिपदेपि द्वंद्वे पकारानन्वये न कापि क्षतिः लूनः शान्तिः सोममालभेतेत्यत्रैव अर्थविशेषस्यैव निश्चायकत्वमिति स्वयमेवास्याभ्युपगमादित्यूहनीयमायुष्मता ।

**मू०-औ ॥ आदन्तादाबन्तात्परस्य औ ईर्भवति । गंगे । गंगाः ।**

**सुबोधिनी**-औ । औ इत्यविभक्तिको निर्देशः । आपइत्यनुवर्त्तते धिरीरित्यत ई इति च ॥

**तत्त्वदीपिका**-औइति । अविभक्तिकमौकारविभक्तेरनुकरणम् आपइति किं सोमपौ आदंतात्किं गंगियौ । दीर्घग्रहणं तु य्वेद्वित्वे इत्येतदर्थम् जरसीति तु सन्निपातपरिभाषयैव तद्ध्रस्वत्वेपि न क्षतिः ।

**मू०-धिरीः ॥ आदन्तादाबन्तात्परो धिरीर्भवति । हे गंगे । गंगाम् । गङ्गे । गंगाः ।**

**सुबोधिनी**-धिरीः । आप इत्यनुवर्तते । दीर्घविधानमौ इति सूत्रेऽनुवृत्त्यर्थम् । वस्तुतस्तु ह्रस्व एव युक्तः । शसि तु स्त्रीत्वान्नत्वाभावः । गंगाः ॥

**तत्त्वदीपिका**-धिरीरिति । दीर्घविधानमुत्तरार्थं जराशब्दस्य तूक्तरीत्यैव निरासः । आपः किं हेहाहाः आदन्तात्किं हे अतिगंग हे अतिगंगे इत्यत्र स्थानिवद्भावेन धेर्लोपस्तु न सूत्रारंभसामर्थ्यात् ।

**मू०-टौसोरेः ॥ आदन्तस्याबन्तस्य टौसोःपरयोरेत्वं भवति । गंगया ।**

**सुबोधिनी**-टौसोरेः । टाश्च ओश्च टौसौ तयोष्टौसोः परतः आदंतस्याबंतस्यैत्वं स्यात् ॥

**तत्त्वदीपिका**-टौसोर इति । टाश्च ओश्च टौसौ । आपः किं हाहा हाहौ । अत्राप्याकारं प्रश्लिष्य पूर्वपदादन्तस्याबन्तस्येति व्याख्यानादतिगंगीया इत्यादौ नातिप्रसंगः ।

**मू०-ङितांयट् ॥ आदन्तादाबन्तात्परेषां ङेङसिङस्ङीनां यडागमो भवति । गंगायै । गंगायाः । गंगायाः । गंगयोः । गंगानाम् ।**

**सुबोधिनी**-ङितांयट् । ङइद्येषां तानि ङितानि तेषां ङितां । वचनापेक्षया क्लीबत्वं । ङ् इत् यासां ता ङितस्तासां । विभक्त्यपेक्षया स्त्रीत्वं वा । ङ इत् येषां ते ङितस्तेषां । प्रत्ययपेक्षया पुंस्त्वं वा । आदंतादाबंतात् ङितां यट् स्यात् । टित्वादादौ एत्वं । गंगायै । सवर्णदीर्घे गंगायाः ॥

**तत्त्वदीपिका**- ङितायडिति । ङ इद्येषां यासां वेति वचनं विभक्तिप्रत्ययानामन्यतमस्यान्यपदार्थत्वेन विग्रहः आप इति किं हाहौ । आदन्तादिति किम् । अतिगंगाय । ङितांकिं गंगाः । अतिगंगायेत्यत्र तु आकारश्रूयमाणत्वात्स्थानिवत्वेनाबंतत्वाच्च यट् तु न । लाक्षणिकत्वात् अवयवशो व्युत्पादितत्वादिति स्त्रीकारात् ।

**मू०-आम्ङेः ॥ आदन्तादाबन्तात्परस्य ङेरामादेशो भवति गंगायाम् । गंगयोः । गंगासु । एवं श्रद्धामेधादुर्गादयः ।**

सुबोधिनी–आम्ङेः । तिप्तेवत्क्रियायामित्यादि निर्देशात् सप्तम्येकवचनस्यैव ग्रहणं नतु चतुर्थ्येकवचनस्य । ननुगंगायामित्यादौ ङेरामादेशे कृते नुडागमइति नुट् स्यादिति चेन्न परत्वात् ङितामिति यटा बाधनात् । ननु ङितां यडागमो विधीयते आमादेशस्तु नङिदिति कथं तस्य यडिति चेन्न । आदेशः स्थानिकार्यं लभते इतिस्त्रीकारात् अत्र क्रियायामिति निर्देशो मानं । श्रद्धा प्रतीतिः । मेधा बुद्धिः । दुर्गा पार्वती ॥

तत्त्वदीपिका–आम्ङेरिति । अत्रङेरिति सप्तम्येकवचनम् न तु चतुर्थ्येकवचनं व्याख्यानात् । अत्रार्थे क्रियायामित्यादिनिर्देशोऽप्यनुकूलः ननु गंगायामित्यादौ नुडाम इति नुडस्तु इति चेत् न परत्वाद्यटा बाधात् । न चापि कृते ङित्वाभावाद्यडेव कथमिति वाच्यम् आदेशः स्थानिकार्यं लभत इत्यभ्युपगमात् । अत्रापि क्रियायातिनिर्देशो मानम् ।

**मू०–अम्बार्थानांद्विःस्वराणांधौह्रस्वः ॥ हे अम्ब । हे अक्क । हे अल्ल । शेषं गंगावत् । द्विःस्वराणामिति किम् । हे अंबाडे हे अम्बाले हे अम्बिके ।**

सुबोधिनी–अंबार्थानां द्विःस्वराणां धौ ह्रस्वः । अंबार्थानां द्विःस्वराणां ह्रस्वः स्याद्धौ परे । अंबामाताथ बाला स्यादित्यमरः ॥

तत्त्वदीपिका–अम्बार्थानामिति । एतन्मूलं तु यटोच्चेत्यतोनुक्तसमुच्चयार्थचकारानुवृत्तिस्ततोस्यार्थस्य संग्रह इति वृद्धाः ।

**मू०–यटोच्च ॥ सर्व्वादेःपरस्य यटः सुडागमो भवति पूर्वस्य चापोकारः । सर्व्वस्याः । सर्व्वस्याः सर्व्वयोः । सर्व्वासाम् । सर्वस्याम् । एवं विश्वादयोऽप्याबन्ताः । जरा । जरसौ । जरे । जरसः । जराः ।**

सुबोधिनी–यटोच्च । आप इत्यनुवर्तते । आबंतसर्वादेर्यडागमस्य सुट् स्यात् । आपःस्थानेऽच्च । सर्वादेः किं गंगायै । यटः किं । सर्वाभ्यां । जृषृब्रयोङानावित्यस्मात् षिद्भिदामङित्यङि ऋतोऽङि गुणइति गुणे कृते आप् । जरा । जरायाः । स्वरादौ जरसीति स्वरादिविभक्तौ जरस् औपरतः । औ इतीत्वं न नित्यत्वाज्जरस् जरसौ । आमितुजरसामिति जराया इति वचनसामर्थ्यात् । पक्षे हसादौ च गंगावत् ॥

तत्त्वदीपिका– यटोच्चेति । यटः अत्चेति छेदः । अत्राहुः ननु यटः सर्वादेः परत्वं नास्ति आपाव्यवधानात् इति चेत्सत्यम् वचनसामर्थ्यात्तेन व्यवधाने सह्यते । आपं विनाहि यट एव दुर्लभत्वात् अद्विधावपि सर्वादेरिति पंचमीति पक्षे सवर्णदीर्घे कृते एकदेशविकृतन्यायेन सर्वादेः परस्य विधीयमानो यडाप एव भवति अन्यस्यासंभवात् षष्ठीपक्षएकदेशविकृतन्यायेन सर्वादेरकारो भवति ऊनादिकभावेन विकारस्य द्वैविध्यादिति । अत्रेदमवधेयम् अत्राबंतात्सर्वादेरिति व्याख्याने आपो व्यवधायकत्वाभावेन तद्व्यवधानशंका निर्मूलैव तदन्तग्रहणे वाप इत्यादावत्वाकारप्रश्लेष एव लिंगं । किं च केवलस्यापः प्रत्ययत्वेन तत्परविभक्तेरभावात्तत्कार्यं संभव इति दिक् ।

**मू०–दिक्समासेबहुव्रीहौसर्वादेर्वासर्वकार्य्यम् ॥ दक्षिणपूर्व्वस्यै । दक्षिणपूर्वायै । उत्तरपूर्व्वस्याः । उत्तरपूर्वायाः । अन्तरस्यै शालायै । बाह्यायै इत्यर्थः । अपुरीत्युक्तेर्नेह । अन्तरायै नगर्य्यै । । द्वितीयस्यै । द्वितीयायै।**

तृतीयस्यै । तृतीयायै । नासिकायाः नस् । नासिका । नासिके । नासिकाम् । नसः । नासिकाः । नसा । नासिकया । नोभ्याम् । नासिकाभ्याम् । पक्षे पंचसु गंगावत् । पृतनायाः पृत् । पृतः पृता । पृद्भ्याम् । निशाया निश् । निशः । निशाः ।

सुबोधिनी–दिक्समासेबहुव्रीहौसर्वादेर्वासर्वकार्य्यम् । गौणत्वादप्राप्ते विभाषेयम् । दिशां समासो दिक्समासस्तस्मिन् । बहुव्रीहौ सर्वादेः सर्वादिकार्य्यं वा वाच्यं दक्षिणस्याः पूर्वस्या अंतराले मध्ये या दिक् सा दक्षिणपूर्वा तस्यै । उत्तरस्याः पूर्वस्या अंतराले यादिक् सा उत्तरपूर्वा तस्याः । अन्यपदार्थोपि दिक्शब्दवाच्य एव ग्राह्यस्तेन नेह । योत्तरा सा पूर्वा यस्या उन्मत्तायाः सा उत्तरपूर्वा तस्यै उत्तरपूर्वायै । अंतरोऽपुरि परिधाने बहिर्योगे इत्युक्तत्वादंतरशब्दस्य बहिरर्थे सर्वकार्यं । अंतरस्यै शालायै । नगरबाह्यायै इत्यर्थः । अंतरस्य न पुनर्यथासर्वकार्यं । अंतरायै । न सुट् । द्वितीयातृतीययोस्तृतीयस्य ङित्सु वा सर्ववदित्युक्तत्वात् । ङेङसिङस्ङिषु वा सर्ववत् । शेषं गंगावद्रूपम् । पाद्दंतेति नासिकाशब्दस्य शसादौ नस् । सस्य विसर्गे हवे इत्युत्वे ओत्वे च नोभ्यां । पृतना सेना ।

तत्त्वदीपिका–दिक्समासे इति । दिशां दिग्वाचकानां शब्दानां समास इत्यर्थः । एतन्मूलं तु यटोच्चेत्यत्र वेत्यनुवृत्तेर्व्यवस्थिततत्वाश्रयणम् ।

मू०–छशषराजादेः षः ॥ छकारान्तस्य शकारान्तस्य षकारान्तस्य राज् यज् सृज् मृज् भ्रस्ज् व्रश्च भ्राजादेश्च षकारो भवति धातोर्झसे परे नाम्नश्च रसे पदांते च ।

सुबोधिनी–छशषराजादेः षः । छांतस्य शांतस्य षांतस्य राजादेश्चनाम्नः षः स्यात् झसे पदांते च । छांतस्य नाम्नो यथा । तत्वप्राड् २ भजां विणिति विण् प्रत्यये अकृतव्यूहपरिभाषयाद्वित्वं न प्रवर्तेत । ततोऽसिद्धपरिभाषया न वृद्धिः । वृद्धेर्विण् निमित्तत्वेन षत्वं प्रति बहिरंगत्वात् । धातोश्च यथा । प्रष्टा । अपाप्रट् । शांतस्य नाम्नो यथा । विट् । विड्भ्यां । धातोश्च यथा । वेष्टा । अवेवेट् । षांतस्य नाम्नो यथा । द्विट् । द्विड्भ्याम् । धातोश्च यथा । वेष्टा । अद्वेट् । षस्य षविधानमादेशान्तरनिवृत्त्यर्थं । ततः पुरस्तादपवादन्यायेन खसे चपा एव बोध्यो न तु व्यवहितो झबे जबा इति च । अयं च । निषेधः स्यादौ न । लक्ष्यानुरोधात् । तेन षट्सु इत्यादिसिद्धिः । द्विड्ढे ऽत्र झबे जबाः । अद्वेट् । अद्वेडत्र वावसाने च स्यादेव । व्यवहितविधित्वात् । राजादयस्तु राजृदीप्तौ । यजदेवपूजादौ । सृज्विसर्गे । मृजूषशुद्धौ । भ्रस्जपाके । ओव्रश्चूछेदने । भ्राजृदीप्तौ । आदिशब्दात् परिव्राज्शब्दो विण्णंतो ग्राह्यः दिशामिति सूत्रे स्त्रगृत्विजोः । पाठस्तु षत्वबाधनार्थः । अस धातोरौणादिके ऋज् प्रत्यये सिद्धौऽसृज्शब्दो न गृह्यते लाक्षणिकत्वात् ॥

तत्त्वदीपिका–छशषराजादेः षः इति । यद्यपि छांतस्य नाम्नो संभवः क्विपि छस्य शविधानात् तथापि विणितत्वप्रच्छशब्दस्य तत्वप्राडिति रूपम् मन्वानैः सूत्रे छग्रहणमंगीकृतं । अकृतव्यूहपरिभाषया द्वित्वाभावः असिद्धपरिभाषया वृद्ध्यभावः वृद्धेर्विण्णिमित्तकत्वेन षत्वं प्रतिबहिरंगत्वात् अत्र षस्य षविधानमन्यविधिबाधनार्थम् । पुरस्तादपवादन्यायेन खसे चपा एव बाध्यः न तु व्यवहितो झबेजबा इति वावसान इति वा अयं निषेधो न स्यादौ लक्ष्यानुरोधादिति वृद्धाः तेन षट्स्वित्यादिसिद्धिः द्विड्ढि अत्र झबेजबाः अद्वेट् अद्वेड

अत्र च वावसाने च भवत्येव व्यवहितविधित्वात् राज् यज् सृज् भृज् व्रश्चभ्रस्जपरिव्राजोष्ठौ राजादय सृजऋत्विजोस्तुदिशादिषु पाठः षत्वबाधनार्थः असृज् शब्दस्तु नसृजेः किं तु असेरौणादिकऋजप्रत्ययो बोध्य लाक्षणिकत्वान्न गृहीतः भ्राजिस्तु राजृसाहचर्यादेजृसहचरितो न गृहीतः ।

**मू०–षोडः ॥ निड्भ्याम् निड्भिः । निट्त्सु निट्सु । निशासु । केचित्तु धातोरेव षत्वमाहुः । तन्मते तु झबे जबा इति जकारः । निज्भ्यां । निज्भिः । श्चुत्वम् । निच्छु । निशासु । गोपाः सोमपावत् । बुद्धिः । बुद्धी । बुद्धयः । हे बुद्धे । बुद्धिम् । बुद्धीः । बुद्ध्या ।**

सुबोधिनी–षोडः । षस्य नाम्नो विशेषणात्तदंतविधिः षांतस्य नाम्नोन्तस्य डःस्यात् रसे पदांते च । षष्ठीति निर्देशात् थट्प्रत्ययेन षस्य डः । षष्ठः । ननु वावसाने झबे जबाः । खसे चपा झसानामित्यंतैः सूत्रैष्टडयोर्लाभान्मास्त्विदं सूत्रं उच्यते । षाण्मातुर इत्यादि सिद्धयर्थमिदमावश्यकं । यथा । षाष् मातुर इति स्थिते षोड इति डत्वे कृते त्वत्मदेकत्वे इति निर्देशाज्जबस्यापि अमो भवतीति । अष्टनोडोवेति निर्देशाच्च । द्वेष्टीत्यादावपि न डत्वं ।शस्य षत्वे डत्वं । निड्भ्यां । सुपि डस्य खसे चपा इति चप्त्वे टनात्सस्य वेति वा धुट् । धस्य चपत्वं । धुडभावे टस्य धुट् । पक्षे च तकारस्य शसे चपस्येत्यनेन ठथौ न । कुक्टुक् वर्जितस्येति निषेधात् स्यादीनां सस्येति न ष्टुत्वं निट्त्सु निट्सु । परिशिष्टकारादयः खशषराजादेरिति सूत्रे धातोश्च इति सूत्राद्धातोरित्येवानुवर्तयंति न तु नाम्नइति तन्मते इत्यनेन शस्य जकारे निज्भ्यामिति । सुपि खसे चपाइति शस्य चः । स्तोश्चुभिरिति शत्वं । चपाच्छः श इति पक्षे शस्य च्छत्वमपि बोध्यं । निच्छु । चोः कुरिति कुत्वं न चपस्यासिद्धत्वात् ॥ इत्यावन्ताः ॥ गोपाशब्द आकारांतः । बुद्धिः प्रायेण हरिवत् । स्त्रीत्वात्सोनः पुंस इति न नत्वं । बुद्धिः । अस्त्रियामित्युक्तत्वाट्टानेति नात्वं न । बुद्ध्या ॥

तत्त्वदीपिका–षोड इति । ननु इदं सूत्रं किमर्थं झबेजबाः वावसान इति सूत्राभ्यां कार्यसिद्धेरव्याहतत्वात् अथ कथं षडानन इत्यादाविति चेत्सत्यम् ।वावसान इत्यस्याप्रवृत्तेः अत्र वावसानत्वाभावात्कथमिति चेत् शृणु अवसीयत इत्यवसानपदेन नह्यवसीयतेऽतः पदान्ततैव वावसानं अन्यथा षाण्मातुर इति न सिद्ध्येत् तथाहि षाष्मातुर इति स्थिते षोड इति डत्वे चपाभावाद् ञमत्वाभावः अस्मन्मते तु वावसाने इत्यनेनैव रूपसिद्धिः अथत्वन्मदेकत्व इति निर्देशेन जबस्यापि ञमत्वमिति वाच्यम् तत्र वावसाने इत्यनेनैव तत्त्वे तस्य ञमत्वाद्रूपसिद्धेर्ज्ञापकानुसरणक्लेशस्य अर्थत्वात् षण्णामित्यपि ड्णइत्यस्य षोणोनामित्यर्थस्यैव वक्तुमुचितत्वेन षषशब्दस्यैव प्रथमैकवचनम् । ड इति रूपत्वात् द्वेष्टीत्यादौ त्वष्टन इति निर्देशेन षोडः खसेचपा इत्युभयोरपि निवृत्तिरिति सूत्रं व्यर्थम् । वस्तुतस्तु झबेजबा इति सूत्रेण विधास्यमानस्य षस्थाने डस्यैव विधानानुवादार्थमिदं सूत्रमिति ध्येयम् । अस्मिन् ग्रंथे समानवर्गजस्यैव सावर्ण्यस्योक्तत्वेन षडयोस्तदभावात्तुल्यास्यप्रयत्नं सवर्णमित्यस्याप्रणयनात्कथं षस्य डत्वमित्याशंकायां षोड इत्यस्य विहितत्वादिति दिक् । निड्भ्यामिति प्रथमातिक्रमेकारणाभावात्प्रथम इति न्यायेन जकार इति भावः निच्स्विति खसे चपाइति शस्य चत्वें तद्योगे स्तोश्चुभिश्चुरिति सोः सस्य शत्वमित्यर्थः ।

**मू०–इदुद्भ्याम् ॥ स्त्रियां वर्तमानाभ्यामिकारोकाराभ्यां परेषां ङितां वचनानां वाडागमो भवति । बुद्ध्यै । बुद्धये । बुद्ध्याः बुद्धेः । बुद्ध्याः बुद्धेः बुद्धीनां । स्त्रियां य्वोः बुद्ध्यां । अडागमाभावे आमोप्यभावः । बुद्धौ । एवं मतिभूतिधृतिरुच्यादयः । धेनुरज्जुदनुचंच्वादयोप्येवम् ।**

सुबोधिनी—इदुद्भ्याम् । इश्च उश्च इदुतौ ताभ्यामिदुद्भ्यां । वेयुव इत्यतो वेत्यनुवर्तते ङितामाडिति च । स्त्रियां ङितां वाऽट् स्यात् । ङितामाडिति नित्ये प्राप्ते विभाषेयं । स्त्रियामिति किं सख्ये । पत्ये । ङितामिति किम् मतिभ्यः । तपरत्वं किं नद्यै । अट् बुद्ध्यै । अडभावेऽङितात्येत्वं बुद्धये । ङौ तु आडामोः सहैव प्रवृत्त्यप्रवृत्ती । सन्नियोगविशिष्टानां सह वा प्रवृतिः सह वा निवृत्तिरिति न्यायात् ॥

तत्त्वदीपिका— इदुद्भ्यामिति । इच्च उच्च इदुतौ ताभ्यां सन्नियोगशिष्टन्यायादडामोः सहैव प्रत्ययप्रवृत्ती यद्वा आमो भावे परत्वात् ङेरौडिदित्यौकारः नच नित्यत्वादट् । औकारे टिलोपे च इकारान्तत्वाभावात् परत्वादटाबाधादामिकृते नुडभावः वेयुव इत्यत्र ह्रस्वानुवृत्ते ह्रस्वाद्वेति सिद्धेपि मात्रे इत्यादौ ह्रस्वत्वाविशेषेणातिव्याप्तिवारणायेदं सूत्रमिति वृद्धाः तपरत्वमपि नित्यविकल्पयोर्व्यवस्थार्थम् अन्यथा उभयोर्विकल्पः नित्यो वा स्यात् दीर्घस्य विकल्पः ह्रस्वस्यैव नित्य इति विपर्ययो वास्यादिति । स्त्रियामिति किं सख्ये ङितामिति किं मतिभ्यां । इदुद्भ्यामिति किं मात्रे । तपरत्वं किम् नद्यै इदुद्भ्यामित्यस्यैव तन्त्राश्रयणात् इदुद्भ्यां ङितामड्वा अटि सति ङ्रामिति एतेनाटि सति अटोङिद्विभक्तित्वेन ङेरिदुदंतात्परत्वानपायादौत्वस्यादित्यादिकमपास्तम् अडामोः सहैव प्रवृत्तत्वात् ।

**मू०—त्रिचतुरोःस्त्रियांतिसृचतसृवत्॥** स्त्रियां वर्तमानयोस्त्रिचतुर्शब्दयोस्तिसृचतसृइत्येतावादेशौ भवतः विभक्तौ । ऋकारश्च ऋकारवत् । ततोऽरारुकारा न भवंति । सेरा धेरर् तु भवति । तिस्रः२ । तिसृभिः । तिसृभ्यः२ ।

सुबोधिनी—त्रिचतुरोः स्त्रियांतिसृचतसृवत् । त्यदादेरित्यतःस्यादावनुकृष्यते । स्त्र्यर्थवाचकयोरेतयोरेतावादेशौ स्तो विभक्तौ । रा ऋकारेण तुल्यं ऋवदिति वाक्यांतरं । ऋऋवदिति पदच्छेदः । य्वोरित्यतः स्वरे इत्यनुवर्तते स्वरे परे तिसृचतसृशब्दयोः ऋकार ऋकारकार्यं लभते तच्च रत्वं । तेन पंचसु इति डाविति चारस्तुरारित्यार् ऋतो ङउ इत्युकारः एते विधयो न अमूशसोरल्लोपोपि न । सेरेत्यात्वं । धेरारित्यर् तु भवत्येव । स्वरपरत्वाभावात् । तिसृ इत्यत्र किलादिति षत्वाभावप्रदर्शने नाऽऽदेशावयवे षत्वं नेति ज्ञापितं । सैषादिति षत्वानिर्देशेन समात्रादेशस्य षत्वं भवतीति ज्ञापितं च । विभक्तौ किं तिस्रः प्रिया यस्य स त्रिप्रिय इत्यत्र तु न लुकि न तन्निमित्तमित्युक्तत्वात् । स्त्रियां किं त्रयः । चत्वारः ॥

तत्त्वदीपिका—त्रिचतुरोः स्त्रियाम् तिसृचतसृवदिति । अत्र त्यदादेरित्यत स्यादावित्यनुकृष्यते स्त्र्यर्थवाचकत्रिचतुरत्रनाम्नस्तिसृचतसृआदेशावित्यर्थः । अनेकाक्षरत्वात्संपूर्णस्य प्राप्तौ निर्दिश्यमानस्यादेशा भवन्तीति त्रिचतुरोरेव केवलयोस्तु व्यपदेशिवद्भावात् । ऋकारश्चेति अत्र य्वोरित्यतः स्वरेइत्यनुवर्त्य वाक्यभेदेन व्याख्येयम् तेन ऋकारः स्वरे ऋवद्भवतीत्यर्थः रातुल्यं ऋवत् अतोरारुकाराणां स्वरकार्यत्वाभावः सेरा धेरर्एतयोस्तु हसकार्यत्वात्प्रवृत्तिरितिभावः ।

**मू०—नतिसृचतस्रोर्नामिदीर्घः ॥** तिसृणां । स्त्रियामिति त्रिचतुरोर्विशेषणान्नेह । प्रियास्त्रयः प्रियाणि त्रीणि वा यस्यास्सा प्रियत्रिः बुद्धिवत् । आमि प्रियत्रयाणां । यदा स्त्रियां मुख्यौ लिगान्तरे गौणौ तदैतौ स्तः । प्रियास्तिस्रो यस्य सप्रियतिसा । प्रियतिस्रौ । प्रियतिस्रः । हे प्रियतिसः । नामूशसोरल्लोपः प्रियतिस्रं । प्रियास्तिस्रो यस्य कुलस्य तत् कुलं प्रियत्रि ।

सुबोधिनी–नतिसृचतसॄर्नामिदीर्घः । एतयोर्दीर्घो न स्यान्नामि । आमितु नुट् । तिसृणां श्रुतत्वात् त्रिचतुरोरित्यस्यैव स्त्रियामिति विशेषणं। नानुवृत्तस्य नाम्नः । प्रियास्त्रयः पुरुषाः प्रियाणि त्रीणि कुलानि वा यस्याः सा प्रियात्रिः । तस्य बुद्धिवद्रूपं । समासस्य स्त्र्यर्थाविधायकत्वेपि त्रिचतुरोः स्त्र्यर्थाविधायकत्वाभावात् । आमि तु त्रेस्त्रयङित्ययङ् । प्रियत्रयाणामिति विशेषः । यदा स्त्रियां मुख्यौ लिंगान्तरे गौणौ तदैतौ स्तः । यदा विग्रहे त्रिचतुरशब्दौ स्त्र्यर्थवाचकौ मुख्यौ । तिसृचतसृरूपावित्यर्थः । यस्य यस्या वेत्यादिसमासार्थरूपे लिंगांतरे तु तौ गौणौ स्तः । तदा त्रिचतुरोस्तिसृचतसृ इत्येतौ भवतः । यथा प्रियाः तिस्रो यस्य पुंसः स इत्यत्र प्रिया जस् त्रि जस् इति स्थिते अंतरंगानपि विधीन् बहिरंगो लुक् बाधते इत्युक्तत्वैव तिस्रादेशं सिपो लुकि कृते समासाद्यविभक्तिस्तस्यां परतस्तिस्रादेशः । पुंवद्वेति प्रियाशब्दस्य पुंवद्भावः । सेरेत्यात्वं प्रियतिसेति । यद्यपीह जहत्स्वार्थावृत्तिपक्षे त्रिशब्दस्य निरर्थकत्वेन स्त्रीवाचित्वं दुर्लभं तथापि भूतपूर्वगत्या स्त्रियां वृत्तिर्बोध्या । उत्तरपदार्थप्रधानस्तत्पुरुष इत्यादि सिद्धांतस्यैवमेव निर्वाह्यत्वात् । अजहत्स्वार्थावृत्तिपक्षे तु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोर्थः । प्रियतिस्रौ । प्रियतिस्रः । प्रियतिस्रं । प्रियतिस्रौ । प्रियतिस्रः प्रियतिस्रा । प्रियतिसृभ्यां । प्रियतिसृभिः । प्रियतिस्रे । प्रियतिस्रः । प्रियतिस्रोः प्रियतिसृणां । प्रियतिस्रि । प्रियतिस्रोः । प्रियतिसृषु । हे प्रियतिस्रः । प्रियाः तिस्रो यस्य कुलस्येत्यत्र स्यमोर्लुका लुप्तत्वेन प्रत्ययलक्षणाभावान्न तिस्रादेशः । प्रियत्रि ॥

तत्त्वदीपिका–स्त्रियामिति । चतुरोर्विशेषणादिति श्रुतत्वात् । तयोरितिभावः नामविशेषणं नेति बोध्यम् तद्विशेषणे तु विपरीतं स्यात् अत्रेदं तत्वं जहत्स्वार्थैव वृत्तिरिहाभिमता लक्ष्यानुरोधात् । तेन नाम्नस्त्रियामिति सम्यगेव त्रिशब्दस्य पुंनपुंसकवाचित्वन्तु भूतपूर्वगत्या अजहत्स्वार्थावृत्तिरिति पक्षेतु स्त्रीनिष्ठसंख्यासमर्पकयोस्त्रिचतुरोरिति विवक्षितोर्थः नतु स्त्रियां प्रियस्तिसेति कथं ऋकारान्तत्वादीपः प्रवृत्तेरिति चेत्सत्यं सन्निपातपरिभाषाविरोधात् विभक्त्यनंतर्य्येण प्रवृत्ते आदेशे स न विहितः । विभक्तौ किं तिस्रो भार्य्या अस्येति त्रिभार्य्य इत्यादौ न लुकि न तन्निमित्तमिति प्रत्ययलक्षणनिषेधात् । स्त्रियां किं त्रयः तिस्र इत्यत्र षत्वं तु षःसः कृतस्येति व्याख्याने सस्य कृतत्वाभावान्न अत एव संधिसंपर्दाधश्चेति द्विर्वचनादेशे तु प्रकृतेपि न षत्वं देवेषु एधिष्यते इत्यादौ तु चतुर्षु भविष्यतीत्यादि निर्देशात् प्रत्ययावयवस्य षत्वं भवतीति ज्ञापकात् व्यधिकरणषष्ठीपक्षे तु प्रत्ययावयवस्य भवत्येव आदेशावयवस्य तु तिसृइतिनिर्देशादेव न अन्यथा तिस्र चतस्र इत्येव ब्रूयात् सैषादितिनिर्देशेन सकारमात्रादेशस्य षत्वं भवतीति ज्ञापितं द्वेरत्व इति स्यादि सन्निपातकृतमपि त्यदात्वमापोनिमित्तम् सन्निपातपरिभाषया अनित्यत्वात् ।

मू०–न्रणईप् ॥ नकारांतादृकारांतादण्णंताच्च स्त्रियामीप् प्रत्ययो भवति । प्रियतिसृणी प्रियतिसृणि । य्वृणां नपुंसके धौ गुणो वा हे प्रियतिसः । हे प्रियतिसृ । टादौ स्वरे । टादाविति पुंवत् । नामिनस्स्वरे । प्रियतिसृणा। प्रियतिस्रा द्वेरत्वे सत्याप् । द्वे । द्वे । द्वाभ्याम् ३ । द्वयोः २ । हसेपस्सेर्लोपः । नदी। नद्यौ । हे नदि नदीम् । नद्यौ । नदीः । नद्या । ङितामट् । नद्यै । नद्याः । नदीनाम् । नद्याम् एवं ब्राह्मणीसखीकुमारीगौर्य्यादयः । लक्ष्मीः । अनीबंतत्वान्न सिलोपः । धौ ह्रस्वः । हे लक्ष्मि । शेषं नदीवत् । एवमवी तंत्री तरी प्रभृतयः ईबन्तत्वात्सु लोपः । स्त्री ।

सुबोधिनी–ऋणईप् । लुकि न तन्निमित्तमित्यस्यानित्यत्वात्पक्षे प्रियतिसृ । एतद्रूपद्वयं कैयटेन स्वीकृतं । इदमोयं पुंसीत्यनेनानित्यत्वं ज्ञापितं । नामिनः स्वरे इति नुम् । ईमा-वितीत्वं । प्रियतिसृणी । नोपधाया इति दीर्घः । प्रियतिसृणि । तृतीयादिषु वक्ष्यमाणेन टादावित्यनेन पुंवद्भावविकल्पात् पर्यायेण नुम् रत्वे । प्रियतिस्रा । प्रियतिसृणा । प्रियतिस्रे प्रियतिसृणे । प्रियतिस्रः । प्रियतिसृणः । आमि रत्वं बाधित्वा परत्वान्नुम् प्राप्तः । तं च बाधित्वा विप्रतिषेधे परमिति नुट् । प्रियतिसृणाम् । ॠणामिति वा गुणः । हे प्रियतिसः । हे प्रियतिसृ । द्विशब्दस्य त्यदादेरित्यकारे कृते सन्निपातपरिभाषाया अनित्यत्वादाबत इत्याप् ॥ इतीदंताः ॥ नदादेरितीप् । नदी । धौह्रस्व इति हे नदि । प्रातिपदिकग्रहणे लिंग-विशिष्टास्यापि ग्रहणमिति सेर्डीधेरिति डात्वे ऐसख्युरित्यैत्वे च प्राप्ते विभक्तौ लिंगवि-शिष्टाग्रहणमिति न । सखी । लक्षेर्मुट् चेति ईप्रत्ययः । लक्ष्मीः । केचिदिहकृदिकारादिति पाक्षिकमीपमिच्छंति । तन्मते पक्षे सिलोपः स्यादेव । वातप्रमी श्री लक्ष्मीति पक्षे ङ्यंताः सुसाधव इति रक्षितः । लक्ष्मीर्लक्ष्मी हरिप्रियेति द्विरूपकोशश्च । अवी रजस्वलास्त्री । तंत्रीर्वीणा । स्तरीर्धूमः । तरीर्बेडा स्त्यायतेर्ड्रडिति ड्रट्प्रत्यये यवयोर्वसे इति यलोपः । ष्ट्रित्-तइतीप् । स्त्यायतेऽस्याः शुक्रशोणिते इति स्त्री ॥

मू०–स्त्रीभ्रुवोः ॥ स्त्रीशब्दस्य भ्रूशब्दस्य चेयुवौ भवतः स्यादौ स्वरे परे स्त्रियौ । स्त्रियः । हे स्त्रि ।

सुबोधिनी–स्त्रीभ्रुवोः । अप्राप्ते विधिरयं । यत्ववत्वयोरपवादः । एतयोरिवर्णोवर्णयोरि-युवौ भवतः स्वरादौ । स्यादौ किम् स्त्र्यर्थं । भ्र्वर्थं । धौह्रस्व इति ह्रस्वे । हे स्त्रि ॥

तत्त्वदीपिका– स्त्रीभ्रुवोरिति । अधातुत्वात् ध्योरित्येतदप्राप्तौ विधिरयं वत्वयत्वयोरपवादोयं । स्यादौ किं स्त्र्यर्थम् । भ्र्वर्थम् । अत्रध्योरित्यनुवर्त्तते अनेकवर्णत्वात्सर्वादेशबाधनाय ।

मू०–वामृशसि ॥ आमि शसि च परे स्त्रीशब्दस्य वा इय् भवति । स्त्रियम् । स्त्रीम् । स्त्रियः । स्त्रीः । स्त्रियां । स्त्रीणाम् । स्त्रियमतिक्रांतोऽतिस्त्रिः । अन्यार्थे अतिस्त्रियौ । एओभावोत्वनुड्भिः पूर्वस्थैः पुंसि बाध्यते ॥ क्लीबे नुमा च स्त्रीशब्दस्येय् इत्यवधार्यतां ॥ अतिस्त्रयः । हे अतिस्त्रे । अतिस्त्रियं । अतिस्त्रिम् । अतिस्त्रियौ । अतिस्त्रियः । अतिस्त्रीन् । अतिस्त्रिणा । अतिस्त्रये । अतिस्त्रेः । अतिस्त्रियोः । अतिस्त्रीणां । अतिस्त्रौ । अतिस्त्रियोः । अतिस्त्रिषु । ओस्यौकारे च नित्यं स्यादम्शसोऽस्तु विभाषया ॥ इयादेशस्तु नान्यत्र स्त्रियाः पुंस्युपसर्ज्जने ॥ क्लीबे तु नुम् । अतिस्त्रि अतिस्त्रिणी । अतिस्त्रीणि । अतिस्त्रिणा । अतिस्त्रिये । अतिस्त्रिणे । अतिस्त्रेः । अतिस्त्रिणः । अतिस्त्रेः । अतिस्त्रिणः । अतिस्त्रियोः । अतिस्त्रिणोः । अतिस्त्रीणां । अतिस्त्रौ । अतिस्त्रि-णि ॥ ॠणां नपुंसके धौ गुणो वा वक्तव्यः ॥ हे अतिस्त्रे । अतिस्त्रि । स्त्रिया-न्तु प्रायेण पुम्वत् । अतिस्त्रिः । अतिस्त्रियौ अतिस्त्रयः । शसि अतिस्त्रीः । अतिस्त्रिया । इदुद्भ्याम् । अतिस्त्रियै । अतिस्त्रये । अतिस्त्रियाः । अतिस्त्रेः २।

अतिस्त्रियोः । अतिस्त्रीणाम् । अतिस्त्रियां । अतिस्त्रौ । श्रीः । श्रियौ । श्रियः । हे श्रीः ।

सुबोधिनी—वाम्शसि । पूर्वेण नित्ये प्राप्ते विकल्पोयम् । क्वचिदेकदेशोऽनुवर्तते इति । स्त्रीभ्रुवोरित्यतः स्त्रीशब्दस्यानुवृत्तिः । ङितामडित्यट् । स्त्रियै । आमि स्त्रियास्तु नित्यमिति वक्ष्यमाणेन नुट् स्त्रीणां । ङौ स्त्रियां योरित्याम् । स्त्रियां । गौणे तु स्त्रियमतिक्रांतः पुमान् अतिस्त्रिः । अन्यार्थे इति ह्रस्वः । एओनेत्यादि एओनाभावौ त्वनुड्भिः पुंसि स्त्रीशब्दस्य इय् बाध्यते इति त्वयाऽवधार्यतम् ज्ञायताम् ॥ एश्च ओश्च नाश्च तेएओनाः एओनानां भावः एओनाभावः एओनाभावश्च औत्वं च नुट् च ते एओनाभावौत्वनुटस्तैः । एओजसि ङितीत्ये-त्वौत्वे टानास्त्रियामिति नाङेरौडिदित्यौत्वं नुडाम इति नुट् । कीदृशैः । पूर्वस्मिन्नास्मितष्ठंतीति पूर्वस्थास्तैश्च । पुनः क्लीबे नामिनः स्वरे इति नुगागमेन स्त्रीशब्दस्येय् बाध्यते ॥ ओसी-त्यादि । स्त्रियाः स्त्रीशब्दस्य पुंस्युपसर्ज्जने विद्यमानस्य ओसादिषु चतुर्ष्वेव परेषु स्त्रीभ्रुवोरि-तीयादेशो भवति । यथा । ओसि औकारप्रत्यये च परतः इय् नित्यं । तु पुनरम्-शसोः परतो विकल्पेनेय् । अन्यस्मिन् प्रत्यये इय् न । एओनाभावौत्वनुड्भिः पूर्वोक्तैर्बाधि-तत्वादित्यर्थः ॥ क्लीबे तु नुम् । ईमावितीत्वं अतिस्त्रिणी । जस्शसोरितिशिः । नोपधाया इति दीर्घः । अतिस्त्रीणि । टादिस्वरे तु टादावुक्तपुंस्कमिति वक्ष्यमाणेन पुंवद्भावपक्षे हरिवद्रूपम् । स्त्रियमतिक्रांताया स्त्री सा अतिस्त्रिः । शसि स्त्रीत्वात् सोनः पुंस इति न नत्वं । अतिस्त्रीः । स्वरादिविभक्तौ स्त्रीभ्रुवोरितीय् ङिद्वचनेषु इदुद्भ्यामिति वाऽट् । अति-स्त्रियै । ङितीत्येत्वपक्षे अतिस्त्रये आमि नुट् अतिस्त्रीणां । ङौ स्त्रियां योरित्याम् अतिस्त्रियां, पक्षे ङेरौडिदित्यौत्वे । अतिस्त्रौ क्विपि वचिप्रच्छायतस्तुकटप्रुजुश्रीणामिति क्विपि दीर्घः अनीबंतत्वान्न । सिलोपः । श्रीः । य्वोर्धातोरितीय् । श्रियौ । इयुवस्थानिवर्ज्जितयोरित्युक्त-त्वात् धाविति ह्रस्वो न । हे श्रीः ॥

तत्त्वदीपिका—वाम्शसीति । वाऽम्शसीति छेदः क्वचिदेकदेशोऽप्यनुवर्त्तत इति स्त्रीशब्दस्यैवानुवृत्ति-रित्यभिप्रेत्याह । स्त्रीशब्दस्येति वार्तिकमिदं लेखकैर्भ्रमात् सूत्ररीत्या लिखितमिति केचित् स्थानसादृश्यात् एरिय् ओरुव् । एओनाभावेत्यादीति एओ इत्यनेन एओविधायकं सूत्रं गृह्यते तथाचैओजसि इति सूत्रं गृह्यते इयादेशस्त्विति स्वरादौ यइयादेशो विहितः उपसर्जनत्वे पुंसि विद्यमानस्य स्त्रीशब्दस्य स्यादिषु चतुर्ष्वेव नत्वन्यत्र एवोनाभावादिभिः पूर्वोक्तैर्बाधितत्वादित्यर्थः ।

मू०—वेयुवः ॥ इयुवन्तान् ङितामट् वा स्त्रीं विना । श्रियै श्रिये श्रियाः । श्रियः । इयुवन्तादामो नुड्वा स्त्रियास्तु नित्यम् । श्रीणाम् । श्रियाम् । श्रियि श्रियाम् । एवं ह्रीधीप्रभृतयः । एवं भूभ्रूप्रभृतयः । प्रधी शब्दस्य तु लक्ष्मी-शब्दवद्रूपम् । केषांचिन्मते तु पुंवत् । प्रकृष्टा धीरिति विग्रहेतु लक्ष्मीवत् । अमि शसि च । प्रध्यम् । प्रध्यः । सुष्ठु धीर्यस्य सुष्ठु ध्यायति वेति विग्रहे सुधीः श्रीवत् । केषाञ्चिन्मते पुंवत् । सुष्ठु धीरिति विग्रहे तु श्रीवदेव । ग्रामणीः । पुंवत् । एवं खलप्वादिः ॥

सुबोधिनी—वेयुवः । ङितामाडित्यनेन नित्ये प्राप्ते विकल्पोयं । स च व्यवस्थितः तेन स्त्रियां नित्यमेवाट् । इय् च उव् चानयोः समाहारः इयुव् तस्मादियुवः य्वोरित्यनुवर्त्तते ।

स्त्रियामियुवस्थानिभ्यामिवर्णोवर्णाभ्यां परेषां ङितामड् वा स्यात् । स्त्रियामिति किं सुधिये स्वयंभुवे । इयुव इति किं प्रध्यै । वर्षाभ्वै । इयुवंतादामोनुड् वा । स्त्रियास्तु नित्यं । स्त्रियामियुवस्थानिभ्यामिवर्णोवर्णाभ्यां परस्यामो नुड्वा स्यात् । स्त्रीशब्दात्परस्यामो नित्यमेव नुट् । धीः प्रज्ञा शेमुषी मतिरित्यमरः । ह्रीर्लज्जा । भूर्भूमिरचलानंतेत्यमरः । भ्रमतीति भ्रमेर्डूरिति भ्रमतेर्डूप्रत्ययः । डित्वाट्टिलोपः । नेत्रयोरुपरिरोमपद्धतिर्भ्रूः । पदांतरं विनापि स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वमिति वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य लक्ष्मीशब्दवद्रूपम् । अमि शसि च प्रध्यं प्रध्य इति विशेषः । धातुत्वात् य्वौवेति स्वरे यत्वं । लिंगांतराऽनभिधायकत्वं नित्यस्त्रीत्वमिति वदतः कैयटस्य मते प्रकृष्टा धीर्यस्याः सा प्रकर्षेण ध्यायतीति वा विग्रहे प्रधीशब्दस्य पुंवद्रूपं । अयं मतभेदः । प्रकृष्टा धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेपि लक्ष्मीवत्प्रधीशब्दस्य स्याद्रूपम् । सुष्ठुधीर्यस्याः सा सुष्ठु ध्यायति वेति विग्रहे वृत्तिकारमते सुधीशब्दस्य श्रीशब्दवद्रूपं । कैयटमते तु नित्यस्त्रीत्वाऽभावात्पुंवद्रूपं । सुष्ठु धीरिति विग्रहेण तत्पुरुषे तु मतद्वयेपि श्रीवदेव । बुद्धिवाचकधीशब्दस्य नित्यस्त्रीत्वात् । ग्रामणीशब्दः पुंवत् । ग्रामनयनस्योत्सर्गतः पुंधर्मतया पदांतरं विना स्त्रियामप्रवृत्तेः । एवं खलपवनादेरपि पुंधर्मत्वमौत्सर्गिकं बोध्यम् ॥

**तत्त्वदीपिका–वेयुव** इति । इयूच उव् चानयोः समाहारः इयुव् तस्मात् इयुवः अत्र य्वोरित्यनुवर्त्तते तयोरभेदस्य बाधित्वादियुवस्थानिनो योरित्यर्थो लभ्यते विकल्पश्चायं व्यवस्थितः तेन स्त्रियां नित्यं आमोनुड्वा स्त्रियां नित्यमित्येव सर्वं लब्धम् । लक्ष्मीवदिति पदान्तरं विना स्त्रियां वर्त्तमानत्वं नित्यस्त्रीत्वमिति वदतां वृत्तिकारादीनां मते प्रधीशब्दस्य तथात्वादिति भावः । केषामिति लिंगांतरानभिधायित्वं नित्यस्त्रीत्वमिति वदतां कैयटादीनां मते इत्यर्थः । ग्रामणीरितिग्रामनयनस्योत्सर्गतः पुंधर्म्मतया पदान्तरं विना स्त्रियामप्रवृत्तेः एवं खलपवनादेरपि पुंधर्मत्वमौत्सार्गिकं बोध्यम् ।

**मू०–न्रणईप् ॥ नकारान्तादृकारान्ताच्च स्त्रियामीप्प्रत्ययो भवति । क्रोष्ट्री । क्रोष्ट्र्यौ । नदीवत् । वधूजम्ब्वादयोनदीवत् । पुनर्भूः । य्वौ वा । पुनर्भ्वौ । हेपुनर्भु । पुनर्भ्वा । पुनर्भूणाम् । "भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्" ॥ हे वर्षाभु वर्षाभ्वा । स्वयम्भूः पुंवद्वा ।**

**सुबोधिनी–न्रणईप्** । न् च आ च अण् च एषां समाहारो न्रण् तस्मान्न्रणः । आणिति प्रत्ययो न तु क्विबंतोऽणिति गृह्यते प्रत्ययाप्रत्यययोरिति न्यायात् । अस्य व्याख्यानं स्त्रीप्रत्यये द्रष्टव्यं क्रोष्टुशब्दस्य पुंसि पंचस्वविषु स्त्रियां वेति तृवद्भावः । क्रोष्ट्री । धाविति ह्रस्वः हे पुनर्भु । स्त्रियां योरिति ङेराम् । पुनर्भ्वां । कैयटमते भेकजातौ नित्यस्त्रीत्वाभावात् हे वर्षाभूः । वृत्तिकारमते तु हे वर्षाभु । पुनर्नवायां तु हे वर्षाभु । उक्तंच "भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमानिति यादवः । " भेक्यां मंडूक्यां तथा पुनर्नवा औषधी तस्यां वाच्यायां वर्षाभूशब्दः स्त्रीलिंगः । दर्दुरवाची तु पुँल्लिंगः । ङौ वर्षाभ्वां । स्वयंभूशब्दे स्वरे परतो य्वोधीतोरित्युव् । मतद्वयेपि नित्यस्त्रीत्वाभावात् ङितामडित्यादिना ॥

**तत्त्वदीपिका–न्रणईप्** इति । न्च आच अण् च एतेषां समाहारः न्रण् तस्मात् न्रणः अत्र मध्ये रेफभूत ऋकारो गृह्यते न रेफः व्याख्यानात् मध्यपाठस्य लाघवार्थत्वाच्च अत्राणप्रत्ययः नतु क्विबन्तो णितिप्रत्ययाप्रत्यययोरिति न्यायात् तथाच तदन्तनाम गृहीतम् प्रत्ययग्रहणे यस्मात्स विहित इति परिभाषया तदन्तलब्धम्

नाम्नो विशेषणात्तदन्तमप्यायातं नकारान्तेत्यादि एतद्वीजन्तु त्रणईवित्यत्र न संधीत्यतो न इत्यनुवर्त्य लक्ष्यानुरोधात्तस्य व्यवस्थितत्वमाश्रित्य क्वचिन्नेति व्याख्यानात् तेन क्वचिदणन्तादपि न । कामिका यथा अणन्तांतात् नगरकारी अणन्तादेवान्नेविति तु न तथा संतीबन्तादेयणि तद्धितप्रकृतिभूतस्यादेः स्वरस्य वृद्धौ नगरकारे परत्येव स्यात् । ननु परमनगरकार्या अपत्यमित्यर्थेऽणि कस्य वृद्धिरिति चेत्सत्यम् समुदायादेरेव प्रत्ययग्रहणं रादेरन्तस्य च नियमोस्त्विति यत्र विधौ प्रत्ययो गृह्यते तत्र तदादिनियमो नास्ति स्त्रीप्रत्ययेनुपसर्जने तदादिनियमो नेति वचनात् परमनगरकारेय इति भवति । अनुपसर्जने किम् । अतिनगरकारेरपत्यमित्यर्थे तदादिनियमाभावे एयण् स्यात् स माभूत् । किंत्वणेवातिनगरकार इति प्रियौपगवेत्यत्र नत्वमाश्रित्य नेप् गौणत्वात् गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इति न्यायात् ।

**मू०–नकारांतसंख्यायाःस्वसृतिसृचतसृननांदृदुहितृयातृमातृभ्यश्चनेवार्यौ॥ माता पितृवत् । स्वसा कर्तृवत् । शसिमातॄः । स्वसॄः । राः पुंवत् । गौःपुंवत् । नौग्लौवत् ॥ इतिस्वरांताःस्त्रीलिंगाः ॥**

सुबोधिनी–नकारांतसंख्यायाः स्वसृतिसृचतसृननांदृदुहितृयातृमातृभ्यश्चनेवार्यौ । स्वस्रादीनामपि प्राप्तौ नकारांतसंख्यायास्तूभौ प्राप्तावनेन निषिध्येते । सावसेऋइति ऋप्रत्ययः । स्वसा । स्तुरारित्याङ् । स्वसारौ । शसि स्वसॄः । स्त्रीत्वात्सोनः पुंस इति न नत्वं । "ननांदा तु स्वसा पत्युरित्यमरः । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परामिति च । " यद्यपि पुंलिंग एव रैशब्दः अर्थरैविभवा अपीत्यमरे भिन्नलिंगानां न द्वंद्व इति परिभाषितत्वात् । तथापि रात्येनामिति राः स्त्रीत्येके । नुदतेर्ग्लानुदिभ्यांडाविति डौप्रत्ययः । डित्वाट्टिलोपः नौः । "स्त्रियां नौस्तरणिस्तरिरित्यमरः" ॥

> श्रीविद्यानगरस्थायिलोकेशकरशर्मणा ।
> कृतायामिह टीकायां स्त्रीलिंगोऽगात्स्वरान्तकः ।

**मू०–अतोऽम् ॥ अकारान्तान्नपुंसकलिंगात्परयोस्स्यमोरम् भवत्यर्थौ । कुलम् ।**

सुबोधिनी–अतोऽम् । अदन्तान्नपुंसकान्नाम्नः परयोः स्यमोरम् स्यात् । नपुंसकात्स्यमोलुगित्यस्यापवादोयम् । अतःकिं । पयः तपरकरणं मुखसुखार्थं । नपुंसकस्येति ह्रस्वे कृते दीर्घत्वाभावात् । केचित्तु म् इत्येव पदच्छेदं कुर्वंति । लाघवात् । तत्र सेर्मे कृते कुलमितिसिद्धं । द्वितीयैकवचने तु मस्यैव मे कृते अमृशसोरित्यल्लोपे सिद्धमिष्टं । यत्त्वाहुः । अतिजरसामिति सिद्धयर्थम् विधानम् । तन्न । द्वितीयैकवचने लुकोपवादे अतोमिति मृभावे कृते अमृशसोरित्यल्लोपं बाधित्वा जरस् ततः सन्निपातपरिभाषया लुकोऽप्रवृत्तौ रूपसिद्धिरिति हे कुलेत्यत्र धेरमिकृते अल्लोपे च समानाद्धेरिति मलोपः । यद्वाऽतोमिति सूत्रे सन्महत इत्यतो मंडूकप्लुत्याऽधावित्यनुवर्त्य षष्ठया विपरिणम्यते । अमादेशनिषेधाद्धेर्ल्लोप एव विधेयः ॥

**तत्त्वदीपिका–अतोमिति** । अत्र अतः म् इति छेदः तथा च सेर्मादेशे कुलमिति सिद्धम् द्वितीयैकवचने मस्यैव मादेशोऽस्यामृशसोरिति लोपे रूपसिद्धेः न चाजरसमिति सिद्धयर्थं तादिति वाच्यम् । लुकोपवादमंभावं बाधित्वा जरसि कृते ततः सन्निपातपरिभाषाविरोधादमोलुकि सिद्धत्वादिष्टस्य सौ तु सन्निपातपरिभाशयैव जरसादेशो नेति मूले एव स्फुटीकरिष्यति। यत्त्वाहुः। अत्राकारविधानं सन्निपातपरिभाषाया अनित्यत्व-

ज्ञापनार्थम् तेनामिजरसादेशोऽतिजरसमिति । अत्रेदं वक्तव्यम् अमि अनित्यं सौ नेत्यत्र विनिगमनाविरहः इष्टसिद्धेरेव विनिगमनकत्वमिति चेत् अन्यथापीष्टसिद्धेरव्याहतत्वात् यदपि वमत इति सूत्रणीये मच अच्चेति समासे मान्तादन्तात्स्यमोर्लुगित्यर्थः स्यात् क्लीबे पूर्वेण सिद्धेः क्लीबार्थमेतत्स्यात् तथा च किम् इदंशब्दयोर्दो-षशंकाव्यावृत्त्यैतत्तज्ज्ञापकानुसरणेलाघवाभावः किन्तु आंतिमत्येव वक्तुमुचितामित्युक्तम् । अत्राप्यनिष्टशंकाया अनिवार्यत्वात् अच्चमच्चेति समासे क्लीबाद्यथाक्रमं स्यमोरांमौ स्यातामिति तस्मान्मइत्यत्र निष्कारणमुद्देश्यविधे-यक्रमबाधस्यैव दुष्टत्वात् ।

**मू०–ईमौ ॥ नपुंसकलिंगात्पर औरीकारमापद्यते । कुले ।**

**सुबोधिनी–ईमौ ।** नपुंसकान्नाम्नः पर औरीत्वं प्राप्नोति । दीर्घोच्चारणं तु मधुनी इत्यादौ श्रवणार्थं विपरीतनिर्देशो नित्यादपि नुमः पूर्वमीविधानार्थम् ॥

**तत्त्वदीपिका–**ईमाविति । अत इति नानुवर्त्तते दीर्घोच्चारणन्तु वारिणीत्यादौ श्रवणार्थम् विपरीतनि-र्देशो नित्यादपि नुमः पूर्वमीविधानार्थः सत्यपि चाप्रथमनुमक्षत्यभावात् ।

**मू०–जश्शसोश्शिः ॥ नपुंसकलिंगात्परयोर्जश्शसोश्शिर्भवति ।**

**सुबोधिनी–जश्शसोःशिः ।** नपुंसकान्नाम्नः परयोर्जश्शसोः शिस्स्यात् । नपुंसकात्किम् देवाः । जसा सहचरितस्य शसो ग्रहणान्नेह । शतशो ददाति । शकारः सर्वादेशार्थः ॥

**तत्वदीपिका–जश्शसोः** शिरिति । जसा सहचरितस्य शसो ग्रहणात् शतशो ददातीत्यादौ नाति-प्रसंगः शकारः सर्वादेशार्थो न तु श्रवणार्थः पणीत्यादिनिर्देशात् । अत्राहुः अत्रासोरित्येव वक्तुमुचितं पराणी-त्यादिनिर्देशात् स्याद्यधिकाराच्च । जश्शसोः शिरित्येव ग्रहणं । न तु ङसिङसोः नपुंसकात् नपुंसकस्येति निर्देशात् । अर्थस्य नियामकत्वाद्वैपरीत्यशंकापि नेति अत्रेदमवधेयम् । लाघवार्थम् सोरिति सूत्रिते ज्ञापकानु-नुसरणं वैपरीत्यशंकानिवृत्त्यर्थं अर्थनियामकत्वानुसरणस्य चातिगौरवेण ततोस्यैव लघुत्वात् ।

**मू०–नुमयमः ॥ नपुंसकस्य नुमागमो भवति शौ परे यमप्रत्याहारान्तस्य न । मिदन्त्यात्स्वरात्परः ।**

**सुबोधिनी–नुमयमः ।** अयमप्रत्याहारांतस्य नपुंसकस्य नुम् स्यात् शौपरतः । नपुंसका-दिति षष्ठ्या विपरिणम्यते शिरिति सप्तम्या च । अयम इति षष्ठी । मकाराऽकारस्योच्चार-णार्थत्वात् । मित्वादंत्यात्स्वरो नुम् । अयमः किं विमलदिवि । चत्वारि । वारि । फलि सुगणि । ब्रह्माणि । प्रशामि ॥

**तत्त्वदीपिका–नुमयम** इति । अत्र नपुंसकादित्यनुवृत्तस्यार्थवशाद्विभक्तिविपरिणामः एवं शिरित्यपि सप्तम्या विपरिणम्यते इत्यभिप्रेत्याह । नपुंसकस्य शाविति च अयम इति षष्ठी अकारस्योच्चारणार्थत्वात् । षष्ठ्यर्थे प्रथमा । मिदन्त्यादिति । अत्र च संध्यक्षराणीति ज्ञापकमिति भावः ।

**मू०–नोपधायाः ॥ नान्तस्योपधाया दीर्घो भवति शौ पंचस्वधिषु नामि च । ईतिन । कुलानि । हे कुल । शेषं देववत् । एवं मूलफलादयः**

**सुबोधिनी–नोपधायाः ।** नेत्यविभक्तिको निर्देशः । नाम्नो विशेषणं । तेन नांतस्य नाम्न उपधाया दीर्घः स्यात् शौ परे पंचस्वधिषु । ईमाविति ईकारे तु न । ब्रह्मणी इति । वा दीपोरित्यत ईकारस्य अनुक्तसमुच्चयार्थस्य निषेधार्थस्य वाचकस्य चानुवर्तनात् । नामी-

त्यस्यापकर्षणान्नाम्यपि नोपधायादीर्वः । विदोनवानामिति निर्देशात् । भवन्नित्यादौ संयोगांतलोपस्यासिद्धत्वान्न दीर्घः ॥

तत्त्वदीपिका–नोपधाया इति । न उपधाया इति छेदः नेति लुप्तषष्ठीकं । तदन्तत्वंच बोध्यम्-विशेष्यस्य नाम्न उपस्थितत्वात् इत्यतआह । नान्तस्येति अत्र वादीपोरित्यत ईकार इत्यनुवर्त्य नेतिवेत्यत आह । ईति नेति तेन ब्राह्मणीत्यादि च सिद्धम् अत्र नामीत्यस्यापकर्षणमित्याह । नामीति यदि तु ज्ञापक-सिद्धस्यासार्वत्रिकत्वात् पंचानामिति निर्देशाद्वा न लोपस्यापि दीर्घस्तदा नापकर्षणीयम् । हे कुलेति अकारस्य लोपे मकारस्य समानाद्धेरिति लोपः अधेरित्यनुवृत्तेर्वा ।

मू०–श्त्वन्यादेः ॥ अन्यादेः । क्लीबात्परयोस्स्यमोः श्तुर्भवति । अन्यत् ।

सुबोधिनी–श्त्वन्यादेः । क्लीबादन्यादेर्नाम्नः परयोः स्यमोः श्तुः स्यात् । अतोमित्यस्यापवादः अन्य अन्यतर इतर डतर डतमेति पंचात्मकोऽन्यादिः । सर्वाद्यंतर्गणः । डतर-डतमौ प्रत्ययौ । ततस्तदंताः कतरकतमादयो ग्राह्याः । क्लीबादिति किं । अन्यः अन्यं । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः ।

तत्त्वदीपिका–श्त्वन्यादेरिति । श्तु अन्यादेरिति छेदः शः सर्वादेशार्थः उकार उच्चारणार्थः सेरेक-वर्णत्वादेव सर्वादेशः सिद्धः । द्वितीयैकवचने तु मस्य तादेशे कृते एकदेशविकृतन्यायेनाम् शसोरस्य त्यलोपे कृते सिद्धमिष्टमिति शकारो व्यर्थ इति चेत्सत्यम् स्वविषये प्राप्तस्य सर्वस्य स्थाने तुर्यथास्यात् । सिलोपबाध-नार्थः शकार इति फलितं इत्याशयेनाह । अन्यदिति ।

मू०–वावसाने ॥ अवसाने वर्तमानानां झसानां जबा भवन्ति चपा वा । अन्यत्, अन्यद् । अन्ये, अन्यानि ।

सुबोधिनी–वावसाने । अवसातिरवसानं । षोंतकर्मणि अस्माद्भावे युट् समाप्तिरंत इति यावत् । पदस्यांते वर्तमानानां झसानां जबाश्चपाश्च वा स्युः ॥ पदस्य किं । मरुतौ । अंते किं गतः । झसानां किं राजन् ॥

तत्त्वदीपिका–वावसान इति । अत्राऽवसातिरवसानम् षोन्तकर्मणि भावे युट् समाप्तिरन्त इति यावत् अत्रावसानशब्दस्यान्तावयवार्थस्यावयविनि साकांक्षस्य परस्येत्यवयवी संबध्यते । यदि तु खसे चपा-झसानां झबेजबा इति सूत्रद्वये पदान्त इत्यनुवर्त्य वाक्यभेदेन व्याख्यायते पदान्ते झसानां जबाश्चपा भवन्ती-ति तदेदं सूत्रं व्यर्थमेव ।

मू०–अन्यादेर्धेर्लोपोन ॥ हे अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् ।

सुबोधिनी–अन्यादेर्धेर्लोपोन । अन्यादेः परस्य धेर्लोपो न । समानाद्धेरिति प्राप्ते निषेधः ॥

मू०–एकतरस्यश्तुर्न ॥ एकतरम् । शेषं सर्ववत् । सेरमादेशे सन्निपात-परिभाषया न जरस् । अजरम् । अजरसी । अजरे, अजराणि ।

सुबोधिनी–एकतरस्यश्तुर्न । एकतरात्परयोः स्यमोः श्तुर्न स्यात् । डतरप्रत्ययांतत्वा-त्प्राप्ते निषेधः । अविद्यमाना जरा यस्य तत् । अन्यार्थे इति ह्रस्वे कृते अतोमित्यम् । अजरमित्यत्राजरशब्दमाश्रित्य सिस्थानेऽम् उत्पन्नः तेनाजरशब्दस्याम् विधिः संनिपातः । अतः सन्निपातोम्विधिर्जरसादेशविघातेनाजरशब्दस्य विघातको नेति । अजरमित्येकमेव रूपं प्रथमैकवचने । अजर सि इति स्थिते परत्वाज्जरसि कृते नुमयम इति नुम् ॥

**तत्त्वदीपिका**—सेरमादेशे इति । यो यमाश्रित्योत्पद्यते स तं प्रति सन्निपातः संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ।

**मू०—न्सम्महतोऽधौदीर्घःशौच ।** न्संतस्याप्शब्दस्य महच्छब्दस्य च दीर्घो भवति पंचस्वधिषु शौ च । अजरांसि । अमि लुकोपवादमम्भावं बाधित्वापरत्वाज्जरस् । ततस्सन्निपातपरिभाषया न लुक् । अजरसम्, अजरसी, अजरे । अजरांसि, अजराणि । शेषंनिर्ज्जरवत्, हृदयोदकास्यमांसानाम् । हृद् उदन् आसन् मांस् । हृदि । हृदा । हृद्भ्याम् । उदानि । उद्ना । उद्भ्याम् । आसानि । आस्ना । आसभ्याम् । मांसि । मांसा । मान्भ्याम् ।

**सुबोधिनी**—न्सम्महतोऽधौदीर्घः शौच । न्स् च अप्च महच्च एषां समाहारोन्सम्महत् तस्य न्सम्महतः । अमे अमा वा इत्यनेन यस्य मादेशं कृत्वा अप् शब्दोऽत्र निर्दिश्यते । अधिकाराल्लब्धस्य नाम्नो विशेषणमिदं विशेषणेन च तदंतविधिरिति तदंतस्यापि दीर्घो भवतीत्यर्थः । अधाविति छेदो न तु धाविति । पंचस्वित्यनुवर्तते । तद्विशेषणं चेदं । अत्र पूर्ववत् । ईइत्यनुवर्तते । चकारोस्त्येव । तेन स्वपी इत्यादौ इति नेत्यर्थः । अत्रान्महत्साहचर्य्याद्धातोरेव न्स् गृह्यते तेन सुहिन् इत्यादौ न दीर्घो धातुत्वात् । न्संतत्वाद्दीर्घे अजारांसि । नोपधाया इति दीर्घे अजराणि । अजरअमित्यत्र नपुंसकात्स्यमोर्लुगित्यस्यापवादमतोऽमित्यम्भावं बाधित्वा परत्वाज्जरस् । ततो योयमाश्रित्योत्पद्यते स तं प्रति सान्निपातःसान्निपात लक्षणो विधिरानिमित्तं तद्विघातस्येति परिभाषया नामो लुग् । अजरसं । अजरम् । पाददंतेत्यनेन हृद् उदन् मांस् आदेशाः । अल्लोपः स्वरेइत्यकारलोपे उद्ना । नाम्नो नो लोपशिति नलोपे उद्भ्यां । संयोगांतस्येति सलोपे मान्भ्यामिति ॥

**तत्त्वदीपिका**— न्सम्महतोऽधौ दीर्घः शौचेति । न्स च अप् च महच्च एतेषां समाहारः न्सम्महत् तस्य यस्य अमे अमावेति मः अत्राधाविति छेदः तच्च पंचस्वित्यनुवृत्तस्य विशेषणं तेन धिवर्ज्जितेषु पंचस्वित्यर्थः केवलस्य न्सोऽसंभवात्तदंतस्य ग्रहः अत्र नोपधाया इत्यत उपधामात्रमपकृष्य तच्च पूर्वमात्रोपलक्षकम् पारिभाषकार्थस्येहासंभवात् एवं स्थिते दीर्घग्रहणस्य सामर्थ्यकल्पनादिकमनर्थकामित्युपेक्षितं शसः पंचस्वनन्तर्भावात् । शाविति । स्वपीत्यत्र तु न दीर्घः ईमौ इत्यनुवर्त्य वकारस्य निषेधार्थत्वं परिकल्पना इति व्याख्यानात् ।

**मू०—नपुंसकस्य न्हस्वः ॥** नपुंसकस्य न्हस्वो भवति । श्रीपं कुलवत् ।

**सुबोधिनी**—नपुंसकस्यन्हस्वः । अत्र न्हस्वश्रुत्या स्वरस्येत्युपस्थितं तच्च नपुंसकस्य विशेषणम् । नाम्नइत्यनुवृत्तमाधिकारात् । तत्र स्वरांतस्य नपुंसकस्य नाम्न इति सामानाधिकरण्येन व्याख्यातं । लिंगस्य नामार्थत्वाभ्युपगमात् । तस्य न्हस्वः स्यादित्यर्थः । श्रियं पाति यत् कुलं तत् श्रीपं । अत्र न्हस्वे कृतेऽतोमित्यम् ॥

**तत्त्वदीपिका**—नपुंसकस्येति । इह न्हस्वश्रुत्या स्वर इत्युपस्थितं तच्च नाम्नो विशेषणं । तेन स्वरान्तस्य नाम्नो नपुंसकस्येत्यर्थः न तु नपुंसकस्य स्वरस्य न्हस्व इत्यर्थः । सुवाक् कुलमित्यादावतिव्याप्तेः ।

**मू०—नपुंसकात्स्यमोर्लुक् ॥** अस्थि ।

सुबोधिनी–नपुंसकात्स्यमोर्लुक् । नपुंसकान्नाम्नः परयोः स्यमोर्लुक् स्यात् । त्यदित्यादौ लुका त्यदाद्यत्वं बाध्यते । क्वचित्पूर्वेणापि परस्य बाधस्वीकारात् नित्यत्वाद्वा । कृताकृतप्रसंगित्वाल्लुङ् नित्यः त्यदाद्यत्वं विभक्तावुच्यमानं कृते लुकि विभक्त्यभावान्न ॥

तत्त्वदीपिका–नपुंसकात्स्यमोर्लुगिति । तत्कुलमित्यत्र तु त्यदाद्यत्वमेतेन बाध्यते । नित्यत्वाद्वा । कृताकृतप्रसंगित्वात् न च कृते त्यदाद्यत्वे लुकोऽपि प्राप्तिः । अतोमित्यनेन बाधात् इति चेत् । लुको निमित्तस्य लक्षणांतरेण बाधात् । न पुनस्त्यदाद्यत्वेनैव । यस्य लक्षणांतरेण निमित्तं विहन्यते न तदनिमित्तं भवति ।

**मू०–स्वृणांनपुंसकेधौगुणोवा ॥** हे अस्थे हे अस्थि ।

सुबोधिनी–स्वृणांनपुंसकेधौगुणोवा । इश्च उश्च आ च ते स्वरस्तेषां स्वृणामिकारोकारऋकारांतानां नपुंसकानां गुणो वा स्यात् धौ ॥

तत्त्वदीपिका–स्वृणामिति । इश्च उश्च आ च स्वरस्तेषां स्वृणाम् ।

**मू०–नामिनःस्वरे नाम्यन्तस्य नपुंसकस्य नुमागमो भवति स्यादौ स्वरे ॥** अस्थिनी ।

सुबोधिनी–नामिनःस्वरे । नाम्यंतस्य नपुंसकस्य नाम्नो नुम् स्यात् स्वरादौ स्यादौ । नाम्यंतस्य किम् जगते । नपुंसकस्य किं वातप्रम्ये । स्वरादौ किं वारिभ्यां । स्यादौ किं दध्यत्र ॥

तत्त्वदीपिका–नामिनः स्वर इति । नाम्यन्तस्य किं जगता । नपुंसकस्य किं । वातप्रम्या स्वरादौ किं वारिभ्यां । स्यादौ किं दध्यत्र । ननु स्वरग्रहणं किमर्थम् । वारिभ्यामित्यादौ वारणार्थमिति चेन्न । तत्र लोपशारूपसिद्धेः । अथ सुराभ्यामित्यत्र नुमा जातेन व्यवधानादात्वं न स्यात् । नलोपेपि कृते विभक्तिविधौ तस्यासिद्धत्वाद्व्यवधानमेव सुरेत्यस्य व्यवधायकत्वाद्रैशब्दस्य व्यवधायकत्वं भवत्येव । अथ तस्माद्रैशब्दान्तनाम्नो नुमाव्यवधानमेवेति वाच्यम् । तथा सति पूर्वस्य पतेकृतिर्याभ्यामिति स्यात् । नैवं । राय आत्वं नुमाव्यवधानं प्राप्यापि भवति विभक्तिविधानदशायामानन्तर्याश्रयणात् अथ नुडबाधनार्थं स्वरग्रहणं अथ नित्यत्वान्नुमेव स्यादिति चेन्न नुडर्थं यत्नांतरस्यावश्यकत्वात् अथ नुटि कृति नुम्बाधनार्थमितिचेन्न किन्ततो लोपेनेष्टसिद्धेः अथ लोपाशि नामीत्यस्याप्रसंग इतिवाच्यम् नोपधाया इत्यनेनैव निर्वाहसत्वात् अथ शुचीनामित्यादौ इनां शौ सावित्यनेन नियमः स्यादिति वाच्यं न प्रतिपदोक्तस्यैवेनोग्रहणात् उत्तरार्थमित्यपि न तथासति तत्रैव कृतं स्यात् तेन इह करणं ज्ञापयति । आगमजस्य लोपइनेति तेन भवानित्यादि सिद्धम् ।

**मू०–अन्वास्थ्नांशसादौ ॥** शसादौ स्वरेऽस्थ्यादीनां नुमागम इकारस्य चाकारः । अल्लोपस्स्वरेऽम्वयुक्ताच्छसादौ । अस्थ्ना । अस्थ्ने । अस्थ्नः । अस्थ्नोः अस्थ्नाम् । वेङ्योः । अस्थ्नि, अस्थनि । एवं दधिसक्थ्यक्षिशब्दास्तदंतस्यापीष्टाः । प्रियास्थ्ना । अतिदध्ना । वारि । वारिणी । वारीणि । आमि नुट् । वारीणाम् । नपुंसकस्य ऱ्हस्वः । ग्रामणि ।

सुबोधिनी–अन्वास्थ्नांशसादौ । अत्राधिकृतस्य नाम्नोऽस्थ्यादिभिर्विशेषणात्तदंतविधिस्तेनाऽनपुंसकस्याप्यस्थ्याद्यंतस्य नाम्नो नुम् स्यादेषामितोऽकारश्च । शस् आदिर्यस्येत्यतद्गुणसंविज्ञानो बहुव्रीहिस्तेन शसि न अस्थीनीति । अस्थ्नामिति बहुवचनमाद्यर्थं तेनास्थिद-

धिसक्थ्यक्षिशब्दा ग्राह्याः । अल्लोप इत्यनेनोपधाऽकारलोपे अस्थ्ना । वेङ्योरित्युपधाया वा लोपे अस्थ्नि, अस्थनि । तदंते तु प्रियमस्थि यस्य सः प्रियास्थिः तेन प्रियास्थ्ना शुना । दधि अतिक्रांतमतिदधि । तेनातिदध्ना व्यंजनेन । स्त्रियामप्यतिदध्नेत्येव । संनिपातपरिभाषया बहिरंगपरिभाषया चेपोऽप्रवृत्तेः न्वृणामिति वा गुणे हेवारि, हेवारे । टानास्त्रियामिति नाभावे वारिणा । ङयि ङितीत्येत्वे प्राप्ते एत्वौत्वतृवद्भावेत्वान् बाधित्वा नामिनः स्वरे इति नुम् । परेण पूर्वबाधो वेत्याद्युक्तत्वात् । अतिसखिनीत्यत्र ऐसख्युरित्येत्वे प्राप्ते नुम् वारिणीत्यत्र ङेरौडिदित्यौत्वे प्राप्ते नुम् प्रियक्रोष्टूनि इत्यत्र क्रोष्टुशब्दस्येति तृवद्भावे प्राप्ते नुम् । वारिणे । एत्वे प्राप्ते नुम् । आमि प्रायश इत्युक्तत्वात्पूर्वेण परस्य बाधनात् नुडेव । ननु नुम्नुटोः को विशेषः । उच्यते । नामीति दीर्घत्वमिति । वारीणां । हसादौ हरिवत् । ग्रामं नयाति यत् कुलमिति नपुंसकस्येति ह्रस्वे ग्रामणि ॥

तत्त्वदीपिका–अच्चास्थ्नां शसादाविति । शस आदिर्यस्येत्यतद्गुणसंविज्ञानबहुव्रीह्याश्रयणात् टादिगृह्यते । अथैवं टादावित्येव कथं नोक्तमुत्तरसूत्रेऽपि तदनुवृत्त्यैव सिद्धेः टादावित्यस्यैव वक्तुमुचितत्वादिति चेत्सत्यम् वसोर्व उरित्युत्तरसूत्रे शसादावित्यस्योपयोगित्वात् । बहुवचनादेव स्थ्यादिग्रहः अतं चेकारस्यैव नाप्यनुवृत्तेः तपरत्वविपरीतनिर्देशयोस्तु वैयर्थ्यमेव तदन्तेति । तस्मादित्यधिकारान्नामलाभः । तच्चास्थ्यादीनां विशेषणम् । विशेषणेन च तदंतविधिरित्यतस्तदन्तत्वलाभः यत्तु उत्तरार्थमनुवृत्तं नपुंसकग्रहणमस्थ्यादीनां विशेषणं तेन यदृच्छाशब्दानां पुँल्लिंगानां वारणार्थम् । दधि नाम कश्चित्तदनुकरणस्य दधिनेत्येव यथा स्यादित्युक्तं तन्न । अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्त्तव्यः शब्देषु न तदुक्तिष्वित्युक्तेरेव तद्वारणसंभवात् । टादावुक्तपुंस्कं पुंवद्वेति । पुंशब्देन तुल्यं पुंवत् । तेन नुम्ह्रस्वयोरभावे अतिदिश्यते अतिदेशसामर्थ्याद्ध्रस्वोऽपि अन्यथा प्रकृतत्वान्नुम एव ग्रहणं स्यात् । तथा च स्वाश्रयणाभावादि स्यात् ।

**मू०–टादावुक्तपुंस्कम्पुंवद्वा** ॥ उक्तपुंस्कन्नाम्यंतन्नपुंसकलिंगं टादौ स्वरे परे पुंवद्वा भवति । ग्रामण्या, ग्रामणिना । ग्रामणीनां, । ग्रामण्यां । ग्रामणिनि, ग्रामण्यां । प्रधि । प्रध्या, प्रधिना । सुधि , सुधिया, सुधिना । मधु । हे मधो, हे मधु । एवमंब्वादयः । सानु । सानुनी स्नूनि, सानूनि । स्नुना, सानुना । स्नुभ्याम् । प्रियक्रोष्टु । प्रियक्रोष्टुनी प्रियक्रोष्टूनि । प्रियक्रोष्ट्रा, प्रियक्रोष्टुना । प्रियक्रोष्ट्रे, प्रियक्रोष्टवे, प्रियक्रोष्टुने । प्रियक्रोष्टुः, प्रियक्रोष्ट्रोः प्रियक्रोष्टुनः । सुलु सुलुनी । सुलूनि । सुल्वा, सुलुना एवंखलप्वादयः । धातृ । धातृणी । धातॄणि । हे धातः । हेधातृ । एवं ज्ञातृकर्त्रादयः ।

सुबोधिनी–टादावुक्तपुंस्कम्पुंवद्वा । प्रवृत्तिनिमित्तैक्ये उक्तपुंस्कं नाम्यंतं नपुंसकं पुंवद्वा भवति टादौ स्वरे । नपुंसकादित्युक्तपुंस्कमित्यनेन सह प्रथमांतं संबध्यते । पुंवदिति पुंशब्देन तुल्यमित्यर्थः । केन प्रकारेण पुंशब्देन तुल्यं नुम्ह्रस्वयोरभावाद्वारिणेति । तेन नुम्ह्रस्वयोरभावोऽतिदिश्यते । पुंनपुंसके वर्तमानस्य यस्य शब्दस्य प्रवृत्तिनिमित्तं भिद्यते तस्य टादौ स्वरे न पुंवत् । यथा । मधुशब्दो मद्ये नपुंसकः । चैत्रदैत्ययोः पुंल्लिंगः । नात्र पुंवत् । प्रवृत्तिनिमित्तभेदात् । उक्तः पुमान् यस्मिन्नर्थे तद्भाषितपुंस्कं प्रवृत्तिनिमित्तं तदस्यास्तीति उक्तपुंस्कं । अइकौचेत्यप्रत्ययः । उक्तं हि । "शब्दप्रवृत्तेर्निमित्तं यत् क्लीबे तच्च पुंसिवत् ॥ तद्भाभाषितपुंस्कत्वं पटुने पटवे यथा ॥ १ ॥" पुंल्लिंगपक्षे ग्रामणीशब्दो दीर्घांत एव । तता-

ग्वौवेति यः । निय इत्याम् । ग्रामण्याम् । नपुंसकपक्षे ह्रस्वः । ततो नामिनः स्वरे इति नुम् पुनरुक्तं च एक एवेत्यादि । तन्नाम्र उक्तपुंस्कमाचार्येणोच्यते । तत्किं । एक एव यः शब्दः हीति निश्चयेन त्रिषु लिंगेषु वर्तते यः शब्दः त्रिषु लिंगेषु एकमेवार्थमाऽऽख्याति कथयति अर्थशब्देन प्रवृत्तिनिमित्तमुच्यते ॥ १ ॥ प्रकृष्टा धीर्यस्य तत्प्रधि प्रधिनी इत्यत्र पूर्वेणानुमानपरमपि यत्वं बाध्यते । प्रायश इत्युक्तत्वात् । अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरेकमेवेति । उक्तपुंस्कत्वात्पुंवत्पक्षे ग्वौवेति यः । नपुंसकपक्षे नुम् । सुष्ठ धीर्यस्य तत् सुधि । सुधिनी इत्यत्र इयं बाधित्वा प्राग्वन्नुम् । शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुन्नपुंसकयोरेकमेव । उक्तपुंस्कत्वात् पुंवत्पक्षे सुधीशब्दस्य च नेति निषेधादिय् । सुधिया । "मधु मद्ये पुष्परसे ॥ मधुर्वसंते चैत्रे चेति ॥ " पुंनपुंसकयोरेकप्रवृत्तिनिमित्तं नास्त्यत्र । किं तु मद्यत्ववसंतत्वादिरूपं भिन्नं भिन्नमेव उक्तपुंस्कत्वाऽभावान्मधुने । मधुन इत्येव । न तु मधवे मधोरित्यादि । ग्वृणामिति वा गुणे हे मध, हे मधो । सानुशब्दस्य शसादौ पादंदंतेत्यनेन वा स्नुरादेशः । "स्नुः प्रस्थः सानुरस्त्रियाम्" इत्युभयलिंगः सानुशब्दः । स्नूनि । सानूनीत्यादि । प्रियः क्रोष्टा यस्य तत् प्रियक्रोष्टु । टादौ स्वरे पुंवत्पक्षे रत्वं । प्रियक्रोष्ट्रा । टानास्त्रियामिति नाभावे प्रियक्रोष्टुना इति रूपद्वयम् । क्लीबे तु नुमेव । प्रियक्रोष्टुने । एवमन्यत्रापि । आमि नुडेव नित्यत्वात् । सुष्ठु लुनाति तत्सुलु । नपुंसकस्येति ह्रस्वः । शोभनलवनकर्तृत्वं पुंनपुंसकयोरेकमेव । पुंवत्पक्षे ग्वौवेति वः । क्लीबे नुम् । सुल्वा, सुलुना दधाति तत् धातृ धारणकर्तृत्वं पुंनपुंसकयोरेकमेव । पुंवत्पक्षे रत्वं । क्लीबे नुम् । ङसिङसो ऋतोङुरित्युत्वं । धातुः । आमि नुट् । धातॄणां । ङाविति गुणे धातरि । ग्वृणामिति वा गुणे हे धातः ॥

तत्त्वदीपिका—उक्तपुंस्कमिति । उक्तः पुमान्यस्मिन्नर्थे प्रवृत्तिनिमित्तरूपे तदुक्तपुंस्कंप्रवृत्तिनिमित्तं तदस्यास्तीति मत्वर्थीयाकारेण क्लीबं नामोच्यते तेन पीलुर्वृक्षस्तत्फलं पीलु पीलुने नतु पीलवे प्रवृत्तिनिमित्तभेदात् वृक्षे वृक्षत्वव्याप्यजातिः फले तु फलत्वव्याप्यजातिरिति भेदः । उक्तं च । शब्दप्रवृत्तौ निमित्तं यत् क्लीबे तच्च पुंसि चेत् तद् भाषितं पुंस्कत्वं पटुने पटवे यथेति । उक्तः पुमान् येन शब्देनेति वाक्ये तु स्वप्रवृत्तिनिमित्तभेदेपि स्यात् । प्रध्येपि पुंवत्वे ग्वौवेति यत्वं बहुचः श्रेयस्येति तद्बहुश्रेयसी कुलम् । अत्र नपुंसकह्रस्वत्वं न इयसोर्नेति ह्रस्वमात्रनिषेधादिति श्रीपत्यादयः अन्ये तु उपसर्जनह्रस्वएव निषिद्ध्यते नपुंसकह्रस्वत्वं स्यादेव बहुश्रेयसि बहुश्रेयसिनीत्याहुः । प्रद्युनेति माधवमते । मतान्तरे पुंवद्वा प्रद्यवेत्यपि ।

**मू०—ह्रस्वादेशेसन्ध्यक्षराणामिकारोकारौ ॥ अतिरि । अतिराया, अतिरिणा । अतिराये, अतिरिणे । अतिराभ्यां । अतिरिणि । अतिरासु । प्रद्यु प्रद्युना, प्रद्यवा । उपगुना, उपगवा । अतिनु । अतिनुना, अतिनावा ॥ इति स्वरान्ता नपुंसकलिङ्गाः ॥**

सुबोधिनी—ह्रस्वादेशेसंध्यक्षराणामिकारौ। आदिश्यते इत्यादेशः ह्रस्वश्चासावादेशश्च ह्रस्वादेशः निर्धारणे सप्तमी । जातावेकवचनं । आदिश्यमानेषु ह्रस्वेषुमध्ये संध्यक्षराणामिकारोकारौ भवतः । एकारांतस्योदाहरणं इः कामः स्मृतो येन स स्मृतेः । शोभनः स्मृतेर्यस्य तत्सुस्मृति। रायमतिक्रांतं यत् कुलं तदतिरि । अत्यादयः क्रांताद्यर्थे इति तत्पुरुषः । अतिरिणा । इह न पुंवत् । उक्तपुंस्कत्वाभावात् । पुंसि त्वैदंतोस्तीति । एवमग्रेपि एकदेशविकृतस्याऽनन्य-

त्वादैस्भीत्यात्वं । अतिराभ्यां । आमि नुट् । नामिति दीर्घः । अतिरीणां । प्रकृष्टा द्यौर्यस्मि-न् तत् प्रद्यु । प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्यात् प्रद्योशब्द उक्तपुंस्कः स एवेदानीं ह्रस्वत्वे प्रद्युशब्दोपि उक्तपुंस्क एव । एकदेशविकृतस्यानन्यत्वात् अतः पुंवद्भावो भवती त्येके वदंति । माधवमते तु संध्यक्षरांतेषु क्लीबेषु पुंवद्भावो नास्तीति बोध्यं । नावमातिक्रां-तं यत्तदतिनु ॥

॥ इति स्वरांतानपुंसकलिंगाः ॥

लोकेशकरसंज्ञेन श्रीक्षेमकरसूनुना ।
विहितायां हि टीकायां क्लीबलिंगोगमच्छुभः ॥

इतिस्वरान्तनपुंसकलिंगाः ।

---

**मू०—अनडुहश्च ॥ पुंसि पंचसु शौ चानडुह आमागमः ईपि वा ।**

**सुबोधिनी—अनडुहश्च** । अनडुहशब्दस्यामागमः स्यात् । अत्र चतुराम् शौ चेत्यत आम् । शाविति पदद्वयमनुवृत्तं पंचास्विति च । अत्र हि चाकारोऽनुक्तसमुच्चयार्थस्तेन ईकारे नाम् । ईप्याम् । वा ईकारे बह्वनडुही, ईपि अनडुहि । अनड्वाही । पत्न्यादित्वान्नदादित्वा-दीप् । तदंतविधिरत्र । प्रियानड्वान् ॥

**तत्त्वदीपिका—अनडुहश्चेति** । अत्र चतुराम् शौ इति पदद्वयमनुवर्त्तते अत्राहुः अनडुहश्चेत्यत्रादरे-नुवृत्त्यैव लाभात्तदर्थो न चकारः किन्तु योगविभागार्थः तथा चेति सूत्रेऽनडुह इति साविति नुमिति च पदद्वयमनुवर्त्यानडुहः सौ नुमिति व्याख्येयम् अत्रार्थे चतुराम् शौचेत्यतः पृथग्योगकरणं लिंगं । एवं चानडुह इति सूत्रेऽनुक्तसमुच्चयार्थो भिन्नश्चकारोनुवर्त्य इति तत्रेदमवधेयम् । योगविभागानुवृत्तिक्लेशगौरवतः सूत्रस्यैव लघुत्वात् पुनस्तत्र चकारान्तरस्याश्रयणे आश्रितत्यागे वातिगौरवमित्यालोच्योपेक्षितं । यदप्युक्तं नन्वल्प-विषयेननुमा बहुविषय आम् बाध्यतां तथा नुमेवेति चेत्सत्यम् । अप्ययोरादित्यतो मंडूकप्लुत्याआदित्यनुवृत्ते स्वर्णात्परतोनुम्विधानात् कथमनुवृत्तावप्याममोः कृतयोरेव नुम् प्रथमाकारादेव किमिति स्यादिति चेच्छृण एवंसति मिदंत्यादिति परिभाषा बाध्येत यथा नबाध्येतानुवृत्तिश्च सार्थिका भवति तथा कर्त्तव्यं यदि वाऽऽम-मोरकृतयोर्नुम् स्यात् नेदमुभयमनुगृहीते स्यादिति कृतयोरेव तयोर्नुम् भविष्यतीति अत्रापीदं विचार्यम् प्रथमतो नुम्यपि कृते न कापि क्षतिः आमकरण उकारोकारस्यैवान्त्यस्वरत्वात्ततः परस्यैवामो विधानात् असंभवत्वाबाधाच्च बाध्यबाधकभावाभावः ।

**मू०—सावनडुहः ॥ अनडुहस्सौनुम् ।**

**सुबोधिनी—सावनडुहः** । अस्य नुम् स्यात् सौ परे । नुमयम इत्यतो नुमित्यनुवृत्तमप्ये रां नित्यामिति सूत्रान्मंडूकप्लुत्या आदित्यनुवर्तते तेनाऽवर्णात्परोयं नुम् । अतोविशेषवि-हितेनापि नुमाम् न बाध्यते । अमा च नुम् न बाध्यते ॥

**मू०—संयोगान्तस्यलोपः ॥ स्यादौ रसे पदांते च ।**

**सुबोधिनी—संयोगान्तस्यलोपः** । संयोगेति अंतस्येति च च्छेदः । अनुकरणाद्विभक्तेर्वै-कल्पिकत्वादविभक्तिको निर्देशः । नाम्न इति विशेष्यं संयोगेति विशेषणं विशेषणेन तदं-ताविधिः । तेन संयोगांतस्य नाम्नांतस्य लोपो भवति स्यादौ रसे च । पुनः पदांते वर्त-मानो नाम्नो धातोश्च यः संयोगस्तस्यांतस्य लोप इति पदांते यथायमर्थः अचोस्कुन् ।

संयोगांतस्येति किम् । रुत् । संयोगस्य नाम्नो विशेषणत्वादादेर्न त्वट् । अनः शकटं वहतीति विग्रहे अनसि वहेः क्विप् । अनसोडश्चेति क्विप् यजामिति संप्रसारणम् अनुडुह् सि इति स्थिते । आमूनुमौ परत्वात् संयोगांतलोपे कृते सिलोपः । अनड्वान् । वसांरसे इत्यनेन नुमो दत्वं न । नुम्विधिसामर्थ्यात् ॥

तत्त्वदीपिका–संयोगान्तस्य लोप इति । संयोग अंतस्येति छेदः अनुकरणाद्विभक्तेर्वैकल्पिकत्वाद्-विभक्तिको निर्देशः तच्च नाम्नो विशेषणं तस्मात्तदन्तलाभः तेन संयोगांतस्य नाम्नोऽन्त्यस्य लोपो रसे पदान्ते वर्त्तमानो यः संयोग इत्येव न तु नाम्नस्तेन धातोः संयोगांतस्यापि पदान्ते भवति नाम्नो विशेषणत्वादादेर्न स्तः संयोगावन्ते यस्येति विग्रहलाभार्थमन्तग्रहणमन्यथा सोमसुत्स्थानेत्यत्रापि लोपः प्रसज्जेत इति तु प्रत्येकं संयोगसंज्ञेति पक्षे । समुदायसंज्ञापक्षे तु संयोगोऽन्तो यस्येति विग्रहेपि व्यर्थम् विशेषणत्वेनैव तदन्तलाभात् । लोपशोनुवृत्तावपि लोपग्रहणं सन्नच्युत इत्यादौ द्वित्वार्थम् अन्यथा लोपशि पुनर्न संधिरिति निषेधः प्रवर्त्तेत ।

**मू०–सभिन्नस्य रान्न ॥ अनड्वान् अनड्वाहौ । अनड्वाहः ।**

सुबोधिनी–सभिन्नस्य रान्न । रात्परस्य सस्यैव लोपः स्यान्नान्यस्य वर्णस्य । चतुरो वारान् इति चतुः । सुप्रत्ययस्य लोपोत्र । सस्येति किम् ऊर्क् । अमार्ट् ॥

तत्त्वदीपिका–सभिन्नस्येति । रात्परस्य सकारमात्रस्य लोपो न तु सभिन्नवर्णान्तरस्येत्यर्थः । तेन ऊर्क् इत्यादि सिद्धम् ॥

**मू०–धावम् । चतुरनडुहोर्धावमागमो भवति आम् न । हे अनड्वन् ।**

सुबोधिनी–धावम् । चतुरनडुहोरमागमः स्याद्धौ परे । आमोपवादः। चतुर्शब्दात्तु गौणे हे प्रियचत्वः ॥

तत्त्वदीपिका–धावमिति । चतुरनडुहोरनुवृत्तेराह चतुरित्यादि । चतुरस्तु गौणत्वे हे प्रियचत्वः नुम्विधिसामर्थ्याद्धित्वं न ।

**मू०–वसांरसे ॥ वसुस्रंसुध्वंसुभ्रंसुअनडुहान्दत्वम्भवति रसे पदान्ते च । अनडुद्भ्याम् । अनडुत्सु ।**

सुबोधिनी–वसांरसे । बहुवचनमाद्यर्थम् । वसु चात्र प्रत्ययो गृह्यते न धातुर्व्याख्यानात् । उत्कृष्टानुबंधत्वेन वसुकसोः सामान्यग्रहणम् । सौस इत्यतः स इत्यनुवर्त्य षष्ठ्यंतं व्याख्येयम् । तच्च वसोर्विशेषणं न स्रंसादेरव्यभिचारात् । नाप्यनडुहोऽसंभवात् । सांतवस्वंतस्य स्रंसादेश्च नाम्नो अनडुहशब्दस्य दः स्यात् । सांतेति किं विद्वान् । नाम्न इति किं । स्रस्तं, ध्वस्तं । खसे चपा इति तः अनडुत्सु ॥

तत्त्वदीपिका–वसां रस इति । बहुवचनमाद्यर्थं लक्ष्यदर्शनात् । ग्रंथान्तरसंवादाच्च । वसुरत्र प्रत्ययएव न धातुः साहचर्य्यस्य सर्वत्र अनियामकत्वात् । सौ स इत्यतः सइत्यनुवर्त्य तच्च वसोर्विशेषणं कार्यं नान्येषामभिचारासंभवात् ॥ तेन सान्तवस्वन्तस्येति व्याख्येयमतो विद्वानित्यत्र न दत्वं । नाम्नोधिकारात् । स्रस्तमित्यादौ न । स्मीत्यधिकारेपि स्यादिनिरासार्थं रसग्रहणम् । तेन विद्वद्रूप इत्यादिसिद्धिः । रत्वबाधनार्थमनडुहोरस इत्येव न सूत्रितं। विद्वद्भ्यामित्यत्र झभे जबा इत्यनेन स्थानसाम्याद्दत्वम् विद्वत्स्वित्यत्र खसे चपा इति तः। स्रदित्यत्र वावसाने इति तदौ एवं स्थितेपि सकारे रूपासिद्धेर्वसादिग्रहणम् । तत्र परत्वात्प्रतिपदोक्तत्वाच्च स्रोर्विसर्ग इत्यनेन बाधनात् । अन्यथा विसर्जनीयस्य स इति सूत्रवैयर्थ्यप्रसंगात् । वसां किम्। हरिभ्याम् । रसे किम् । स्रसौ ॥ पदांते किं । विदुष्मान् ।

**मू०-दादेर्घः ॥** आद्योच्चारणे दादेर्हकारस्य घत्वम्भवति धातोर्झसे नाम्नश्च रसे पदान्ते च।

सुबोधिनी-दादेर्घः। द् आदिर्यस्य स दादिस्तस्य दादेः। अत्र धातुग्रहणद्वयमनुवर्त्यं तत्रैकमाद्योच्चारणप्रतिपत्त्यर्थम्। आद्योच्चारणे दादेर्द्धातोर्हस्य घः स्यात् झसे पदांते च। दादेर्नाम्नश्च हस्य घो रसे पदांते च। ढस्याऽपवादोयम्। धातोर्यथा। दोग्धि। अधोक्। आद्योच्चारणे किम्। अधोगित्यत्र यथा स्यात्। दामालिहमात्मानमिच्छतीति दामालिह्यति। नाम्नो य इति यप्रत्ययः। ततः क्विपि दामालिट्। अत्र माभूदिति ॥

तत्त्वदीपिका-दादेर्घ इति। द्आदिर्यस्य स दादिस्तस्य धातोर्झस इति तेन द्रुह्यादित्यत्र न। ननु अधोक् दामिलिहामिच्छन् दामलिडित्यत्राव्याप्त्यतिव्याप्ती इतिचेत्सत्यम् धातुग्रहणद्वयमत्रानुवर्त्तते। एकमाद्युच्चारणलाभार्थम्। तेनाद्युच्चारणे दादित्वादधोगित्यत्र घत्वम् तत्र त्वभावान्न घत्वम्। कखगानामन्यतमस्तु दोग्धीत्यसिद्धेन कृतः।

**मू०-आदिजबानांझभान्तस्यझभाश्वस्ध्वोः॥** धातोर्झभांतस्यावयवस्यादौ वर्तमानानां जबानां झभा भवंति सकारे ध्वशब्दे नाम्नश्च रसे पदांते च। धुक्, धुग्। दुहौ। दुहः। धुग्भ्याम्। धुक्षु। आद्योच्चारणे किं। दाम लिह्यतीति दामलिट्, दामलिड् दामलिड्भ्यां। दामलिट्सु, दामलिट्त्सु। अवयवस्य किं। गर्द्दभमाचष्टे गर्द्दभयतीति गर्धप्। गर्दभौ। गर्दब्भ्यां। गर्धप्सु ॥

सुबोधिनी-आदिजबानांझभांतस्यझभाश्वस्ध्वोः। मंडूकप्लुत्या भिदपामित्यतो भि इत्यनुवर्तते पदांते इति च। आदिशब्दस्यावयववाचित्वादवयव्याकांक्षायां धातोर्नाम्नश्चेत्याक्षिप्यते। झभांतस्येति न धातोर्विशेषणं किंत्ववयवस्य झभांतस्य धातोरवयवस्यादौ स्थिता जबा झभाः स्युः सादौ भादौ पदांते च। ध्वेति ध्वेध्वमोः सामान्यग्रहणम्। धातोर्यथा। वक्ष्यते। धुग्ध्वे अधुग्ध्वम्। अधोक्। जबानामिति किं। योत्स्यते। झभांतस्येति किम्। दास्यति। जवानामित्यत्र जबानां झभा इत्यत्र धभा इत्यपेक्षितमाद्ययोरदर्शनात्। अवयवस्येति किं। गर्दभमाचष्टे इति गर्दभयति। नाम्नोञिर्डिदिति ञिप्रत्ययः ततः क्विब्ञिलोपौ। गर्द्धप्। अवयवग्रहणाभावे गकारस्थानेऽत्र घः स्यादित्यर्थः। दुह प्रपूरणे। क्विप्। दादेर्घ इति घत्वे झभांतत्वाद्धः। वावसाने इति जब्चपौ। धुग्, धुक्। झभे जबाइति जब्त्वं धुग्भ्यां। धत्वचपूर्त्वे धुक्षु ॥

तत्त्वदीपिका-आदिजबानां झभान्तस्यझभाश्वस्ध्वोः। अत्र धातोर्झस इति निवृत्तं स्ध्वोर्ग्रहणसामर्थ्यात् आदिजबानामिति झभान्तस्येति न धातोर्विशेषणम् किंत्ववयवस्य। तेन गर्द्दभमाचक्षाणः गर्धबिति सिद्धम्। आद्यो जबा आदेः परा आदावुपदेशावस्थायां जबा इति पक्षत्रयमपि न गर्द्धबित्यत्र गकारेतिव्याप्तिर्न प्रथमः धुगित्यत्राव्याप्तेर्नद्वितीयः किन्तु आदौ धातुसंज्ञाप्रवृत्तिकाले इति स्थिते दामालिडित्यत्र दकारे गर्द्धबित्यत्र गकारे चातिव्याप्तिरिति चेन्न। अन्त्यबाधेऽन्त्यसदेशस्येति परिभाषाश्रयणात्। भिदपामित्यतो मंडूकप्लुत्या भीत्यनुवृत्तेराह। भकारे चेति।

**मू०-होढः।** हकारस्य ढत्वम्भवति धातोर्झसे परे नाम्नश्च रसे पदांते च। लिट्, लिड्। लिहौ। लिहः। लिट्सु, लिट्त्सु।

सुबोधिनी—होढः । धातोर्हस्य ढः स्यात् झसे पदांते च । नाम्नो हस्य ढः स्याद्रसे पदांते च । धातोर्यथा । लेक्ष्यति । अलेट् । लिह आस्वादने क्विप् । सौ परत्वात् ढत्वे सिलोपः। जबत्वचपत्वे । लिट्, लिड् । सुपि ढस्य चपत्वे कृते टनात्सस्य वेति धुट् । धुटः चपत्वेन ततः शसे चपस्य द्वितीयो वेति तस्य थो न । कुक्टुक्वर्जितस्येत्युक्तत्वात् । ष्टुत्वं तु तकारस्य न शंक्यमेव । स्यादीनां सुपित्सस्य नेति निषेधात् । लिट्त्सु । धुडभावेपि शसे चपस्येति टस्य ठो न पूर्ववत् । ष्टुत्वं तु स्यादीनामिति निषिद्धमेव ॥

तत्त्वदीपिका—होढइति । टठडामन्यतमस्तुलेढीत्याद्यसिद्धेर्न कृतः । तथासति झभान्तत्वाभावात्तथोर्द्ध इत्यस्याप्रवृत्तेः ।

**मू०—द्रुहादेर्वा ॥ द्रुहमुहस्नुहस्निहां वा घत्वम् । ध्रुक्, ध्रुग्, ध्रुट्, ध्रुड् । द्रुहौ । द्रुहः । ध्रुग्भ्यां, ध्रुड्भ्यां । ध्रुक्षु, ध्रुट्सु, ध्रुट्त्सु । एवम्मुह्स्नुह्स्निहः । विश्ववाट्, विश्ववाड् ।**

सुबोधिनी—द्रुहादेर्वा । द्रुहमुहस्नुहस्निहां घत्वं वा । द्रुह जिघांसायां । मुहवैचित्त्ये । ष्णुहउद्गिरणे । ष्णिह प्रीतौ । द्रुहेर्दादित्वान्नित्यं प्राप्ते अन्येषामप्राप्ते विभाषेयं । द्रुहादीनां हस्यवः स्यात् धातोर्झसे पदांते च । नाम्नो रसे पदांते च । पक्षे ढः । धातोर्यथा । द्रोढा द्रोग्धा । अदोध्रोट् अदोध्रोक् । विश्वं वहतीति विग्रहे भजां विणिति विण् प्रत्ययः । विश्वं वाहयतीति ण्यंतात् वा विण् प्रत्ययो बोध्यः ।

तत्त्वदीपिका—द्रुहादेर्वेति । ननु द्रुहादेर्गणनिर्दिष्टत्वादस्य श्तिपेति निषेधाद्यङ्लुकि दोध्रुगित्यत्र न प्रवृत्तिरिति चेन्न । तस्यानित्यत्वाभ्युपगमात् ।

**मू०—वाहौशसादौस्वरे ॥ वाहो वकारस्यौ भवति शसादौ स्वरे परे तद्धितयस्वरयोरीपीकारे च । विश्वौहः । विश्वौहा । विश्ववाड्भ्यां । विश्ववाट्सु विश्ववाट्त्सु।**

सुबोधिनी—वाहौशसादौस्वरे । वकाराकारविशिष्टस्य वाशब्दस्येत्यर्थः । तनादिति धुट्चपत्वे । विश्ववाट्त्सु ॥

तत्त्वदीपिका—वाहौ शसादौ स्वरे । वाहो वा औ इति छेदः वाहो वा गृहीतोऽत्र न तु निपातो व्याख्यानात् इत्यभिप्रेत्याह । वाशब्दस्येति । वार्य्यूह इत्यादिप्रयोगास्तूहतेः क्विपि वहस्त्वकारान्ते उपपदे विणोऽसंभवः फणींद्रेणांगीकृतत्वात् ।

**मू०—सहेस्साढि ॥ साढिरूपे सति सहेस्सस्य षो भवति । तुराषाट्, तुराषाड् । तुरासाहौ । तुरासाहः । तुराषाड्भ्यां । तुराषाट्सु । इति हांताः ॥**

सुबोधिनी—सहेःसाढि । षत्वमनुवर्तते । तुरं दैत्यवेगं सहते इति विग्रहे विण् तुरं त्वरितं साहयत्यभिभवत्यरीनिति विग्रहे तु ण्यंतात् क्विप् । सहादित्वात् पूर्वपदस्य दीर्घः । तुराषाट् ।

तत्त्वदीपिका—सहेः साढीति । सहेरिति किं । सह ढेन वर्त्तत इति सढः यस्य नाम्नि ढशब्दोस्ति यथा षण्ढ इति सढस्यापत्यं साढिरित्यत्र मा भूत् ।

**मू०-दिवऔ** ॥ दिवो नाम्न औकारादेशो भवति सौ परे । सुद्यौः । सुदिवौ ।

सुबोधिनी-दिवऔ । समानाद्विर्लोप इत्यतो मंडूकप्लुत्या अधातोरित्यनुवर्तते तेन धातोर्न भवाति । अक्षैर्दीव्यतीति अक्षद्यूरिति क्विबंताद्दिवेर्डिविति डिव् प्रत्ययः । वर्णमात्रविधित्वेन स्थानिवत्त्वाभावाद्धसेप इति सिलोपो न । सुष्ठु द्यौर्यस्मिन् स सुद्यौः ॥

तत्त्वदीपिका-दिव औ । निरनुबंधकग्रहणे सानुबंधकस्य ग्रहणं नेति परिभाषया दिवुक्रीडादावित्यस्य धातोर्न ग्रहणं । तेनाक्षद्यूरित्यादौ परत्वाद्वस्यौत्वे एकदेशविकृतन्यायेन प्राप्तमप्यौत्वं न ।

**मू०-उरसे** ॥ दिव उदादेशो भवति रसे पदान्ते च । सुद्युभ्यां सुद्युषु । इति वांताः ॥ चतुर्शब्दो नित्यं बहुवचनांतः ।

सुबोधिनी-उरसे । अधिकृतस्य नाम्नो दिव्शब्देन विशेषणात्तदंतविधिः । दिवो नाम्न उः स्यात् रसे पदांते च । तदंते विमलद्यु ॥ इति वांताः ॥

तत्त्वदीपिका- उरसे । उः रसे इति छेदः पदान्ते चेति ष्णनोंण इति सूत्रादन्तइत्यनुवृत्तमत्रपदान्तपरतया व्याख्येयामित्याशयः । विपरीतनिर्देशस्तु प्रयोजनान्तरार्थः । तत्त्वग्रे स्फुटीकरिष्यते । वाम्या इति सूत्रं तु व्यर्थमेव द्योशब्दादेव द्यामितिसिद्धेः ।

**मू०-चतुराम्शौच** ॥ चतुर्शब्दस्यामागमो भवति पंचसु शौ च नत्वीति । चत्वारः चतुरः । चतुर्भिः ।

सुबोधिनी-चतुराम्शौच । नाम्नश्चतुर्शब्देन विशेषणात्तदंतविधिः । चकारेण पंचस्विति संबध्यते । चतुरित्यविभक्तिको निर्देशः । तदंते प्रियचत्वाः । चतेरुरित्युर्प्रत्यये चतुर्शब्दः ईमावितीकारे तु न ॥

तत्त्वदीपिका-चतुराम्शौचेति । चतुः आम् शौ चेति छेदः चतुरितिलुप्तषष्ठीकं पदम् । चकारेण पंचस्विति लब्धं नाम्नश्चतुरो विशेषणात्तदन्तलाभः ।

**मू०-रस्संख्यायाः** ॥ रेफांतसंख्यायाः परस्यामो नुट् भवति । णत्वं द्वित्वं च । चतुर्णां । चतुर्षु । प्रियाश्चत्वारःप्रियाणि वा चत्वारि यस्यासौ प्रियचत्वाः । हे प्रियचत्वः । प्रियचत्वारौ । प्रियचत्वारः । प्रियचतुरः । गौणत्वे नुट् न । स्वार्थावच्छिन्नपरार्थावलम्बनं गौणत्वं । प्रियचतुरां । कमलं कमलां वाऽऽचक्षाणः कमल् । कमलौ।कमलः । फल् । फलौ।फल्भ्याम् ॥ इति लांताः ॥

सुबोधिनी-रस्संख्यायाः । नाम्नो रकारेण विशेषणात्तदंतविधिस्तेन नांतग्रहणं । णत्वं । रहाद्यपोद्विरिति द्वित्वं । चतुर्णां । यक्ष्विति सूत्रे रकारपठनान्न विसर्गः । प्रियाश्चत्वारः पुरुषाः प्रियाणि चत्वारि कुलानि वा यस्याः सा स्त्री प्रियचत्वाः । तदंतत्वादाम् । हे प्रियचत्व इत्यत्र धावामित्यम् । गौणत्वे तु नुट् न । गुणत्वे रेफांतसंख्याया आमो नुड् न । अन्यपदार्थवृत्तित्वेन संख्याभिधायित्वाभावात् । प्राधान्ये भवत्येव । परमचतुर्णां । ॥ इति रान्ताः ॥ "कमलं जलपद्मयोरि"ति विश्वः । "कमला श्रीर्हरिप्रिये"त्यमरः । कमलं

कमलां वाऽऽचक्षाण इति नाम्नो ञिर्डीदिति ञिप्रत्ययः ञ्यंतात् क्विपि ञेरिति ञिलोपः कमल् । षत्वं कमल्षु । फलमाचक्षाण इति फल् । तोयमाचक्षाण इत्यादौ तु यवयोर्वसे इति यलोपे तो इति स्यादतो यांतोनोक्तः ॥ इति लांताः ॥

तत्त्वदीपिका—रःसंख्यायाइति । र इति किं त्रिंशतं विंशत्याद्याः सदैकत्व इति नियमेपि संख्यार्थे द्वि-बहुत्वे स्त इत्यनेन संख्यायाद्विबहुत्वयोरपि संभवात् । संख्याया इति किं वाराम् । रेफान्तसंख्याया विहितस्या मोलुडिति व्याख्यानामित्याशयेनाह गौणत्व इति गौणत्वेन वान्यपदार्थवृत्तित्वेन संख्याभिधायित्वाभावात् ड्णः संख्याया इत्येकयोगस्तु न क्तोरेफान्ततोपि जश्शसोर्लुक् स्यात् यदि त्वेकदेशोप्यनुवर्त्तते इत्याश्रीयते तदैक-योगोपि साधुरेव । कमला लक्ष्मीः ।

**मू०—मोनोधातोः । मांतस्य धातोर्म्मस्य नो भवति झसे पदांते च ।**

सुबोधिनी—मोनोधातोः । मांतस्य धातोर्नः स्यात् झसे पदांते च ॥

तत्त्वदीपिका—मोनोधातोरिति नस्य लोपो नेति । नाम्नो नो लोपशधावित्यत्र नाम्न इत्यस्यानुवृ-त्तावपि पुनर्नामग्रहणान्नामसंज्ञाप्रवृत्तिकालेनान्तार्थमित्याशयः ।

**मू०—वमयोश्च ॥ प्रशान् । प्रशामौ । प्रशामः । प्रशान्भ्यां । प्रशान्सु । कः । कौ । के । शेषं सर्ववत् ।**

सुबोधिनी—वमयोश्च । मांतस्य धातोर्नकारादेशः स्यात् वकारे मकारे च परे । षष्ठ्या निर्दिष्टत्वादंत्यस्यादेशः । सि प्रत्यये परत्वान्नकारे कृते सिलोपः । प्रशानित्यत्र नाम्नो नोलोपशिति नलोपो न । नत्वस्यासिद्धत्वात् । यद्वा नाम्नो न इति सूत्रे पूर्वमेवोपपादित त्वात् । शमु उपशमे । क्विप् । ञमांतस्येति दीर्घः प्रशाम्यतीति प्रशान् । वमयोस्तु चक्ष-ण्वहे, चक्षण्महे । पदांते च । अशंशन् । अचंस्कन् । पदांते किं । प्रशामौ । धात्वधिका-रादेव धातोरिति लभ्यमाने पुनर्धातुग्रहणान्नामधातोर्न । अयमिवाचरन् इदाम् । प्रशान्भ्यामि-त्यादौ नश्चेति नकारस्यानुस्वारे विशेषाभावात्सामर्थ्याच्च नानुस्वारः । कायतेर्डिमिति डिम् प्रत्यये निष्पन्नः किम्शब्दः । त्यदादेरित्यत्वे कृते सर्वशब्दवद्रूपम् ॥

**मू०—इदमोयम्पुंसि ॥ इदमः पुंसि सावयं भवति । अयम् ।**

सुबोधिनी—इदमोयंपुंसि । सावित्यनुवर्तते । सौसइत्यतः सिलोपे अयम् । पुंसि किम् इदम् । नन्वत्र लुकि न तन्निमित्तमिति परिभाषया न भविष्यति । सत्यं । तस्या अनित्य-त्वज्ञापनार्थम् पुंसीति । तेन प्रियतिसृ इत्यादिसिद्ध्यति । इंदेः कमिर्नलोपश्चेति कम् प्रत्यये इदम् शब्दः ॥

तत्वदीपिका—इदमोऽयंपुंसीति । इदमः किं यः पुंसीति किम् इदम् न चात्र लुकि न तन्निमित्त-मित्येव भविष्यतीति चेत्सत्यम् । तस्य अनित्यत्वज्ञापनार्थम् तेन हे प्रियतिसृइत्यादिसिद्धम् अयमिति हसेप इति सेर्लोपः ।

**मू०—दस्यमः ॥ त्यदादेर्दकारस्य मत्वम्भवति स्यादौ । इमौ । इमे । त्य-दादेस्सम्बोधनाभावः । इमं । इमौ । इमान् ।**

सुबोधिनी–दस्यमः । त्यदादेर्दस्य मः स्यात्स्यादौ विभक्तौ । स्यादौ किम् । अस्यापत्यमैदमः । अमुमिच्छतीत्यदस्याति । ननु द्वावित्यत्र कस्मान्मत्वं न शृणु । स्यादाविति दस्य विशेषणम् । अर्थवशाद्विभक्तिविपरिणाम इत्युक्तत्वात् स्यादिपरस्य दस्येत्यर्थः । येन नाव्यवधानं तेन व्यवहितेपि उक्तत्वादकारव्यवधाने सति न च द्विव्यवधाने । क्वचित् द्वयोरिति निर्देशाद्वा न । त्यदाद्यत्वे मत्वे औत्वे च इमौ । त्यदादेःसंबोधनं नास्तीत्युत्सर्गः । प्रचुरप्रयोगादर्शनमेवात्र मूलं भाष्ये तु हे स इत्युक्तम् ॥

**तत्त्वदीपिका–दस्य म** इति । ननु द्वावित्यत्रकिमुनमत्वमिति चेन्न । दोम इति वक्तव्ये अकारोच्चारणमकारपरस्यैव दस्य मत्वार्थे । अत्राहुः अतएव त्यदिति त्यदादेर्न चात्र त्यदाद्यत्वं बाधकम् परत्वान्मत्वप्रसंगात् अत्वावकाशोद्वौ मत्वान् इमौ स इत्यत्रोभयप्रसंगे परत्वान्मत्वं न चात्वविधौ त्यदादिग्रहणं व्यर्थम् इदमादेरिति वक्तुं युक्तम् उत्तरत्रचरितार्थत्वादिति अत्रेदं वक्तव्यं स इत्यादौ कृतेपि मत्वे पश्चात्त्यदाद्यत्वेन रूपसिद्धेरनिवार्यत्वात् । नच मत्वविधिसामर्थ्यादेवात्वंनेति वाच्यम् मत्वविधेरिमावित्यादौ चरितार्थत्वेन ज्ञापनायोगात् पर्जन्यवल्लक्षणप्रवृत्तेरिष्टत्वाच्च सनपुंसकमित्यादिनिर्देशाच्चेति । त्यदादेः संबोधनाभाव इति । औत्सर्गिकश्चायम् हे स इतिभाष्यप्रयोगात् अभावस्तु प्रचुरप्रयोगे संबोधनाभाव इत्येवंपरतया व्याख्येयः । यत्त्वाहुः "इदमस्तु संनिकृष्टेसमीपतरवर्त्तिचैतदोरूपम् । अदसस्तुविप्रकृष्टेतदितिपरोक्षेविजानीयादि"तिवचनादेवंविधस्यार्थस्याभिमुखीकरणानर्हत्वादितितदापाततः सन्निकृष्टादिशब्दानामिव इदमादीनामपि संबोध्यसमर्प्यकत्वे बाधकाभावात् । विप्रकृष्टस्यापि बुद्ध्या सन्निधापितस्य बहुशः संबोधनदर्शनाच्च । तथा भट्टिः " हापितः क्वासि हे सुभ्रु बह्वेवं विललाप सः । "

**मू०–अनटौसोः ॥** इदमोऽनादेशो भवति टौसोः परयोः । अनेन ।

सुबोधिनी–अनटौसोः । इदमोयामित्यत इदम इत्यनुवर्तते टेनेतीनादेशे । अनेन ॥

**तत्त्वदीपिका–अनटौसोरिति** । अनपीतितु लाघवेपि प्रतिपत्तिगौरवादुपेक्षितं । तथाहि टा इत्याकारमारभ्य सुपः पकारेण प्रत्याहाराश्रयणे इतरेतराविभक्तावन्याविधानात्परिशेषाट्टौसोरेव लाभः आपोपि स्यादाविति विशेषणेन वारणम् इत्यादि प्रतिपत्तिगौरवम् तस्माद्यथान्यासमेव ।

**मू०–स्भ्यः ॥** सकारे भकारे च परे इदमोऽकारो भवति कृत्स्नस्य । अद्भिः । आभ्याम् ।

सुबोधिनी–स्भ्यः । स् च भ् च अनयोः समाहारः स्भ् तस्मिन् स्भि सकारभकारादौ स्यादौ इदम्शब्दस्य अः स्यात् । स्भाशिति सुवचं यतः सर्वस्य स्यात् । अद्भीत्यात्वे आभ्याम् ॥

**तत्त्वदीपिका–स्भ्य** इति । स् च भ् चानयोस्समाहारः स्भ् तस्मिन् स्भि अ इति छेदः । यस्मिन्विधिस्तदादौ वर्णग्रहणे इति स्यादिर्भादिग्रहः । ननु अः षष्ठीनिर्दिष्टस्येत्यन्तस्य भविष्यति । तस्यानित्यत्वात् स्भाशित्यस्यैव सुवचत्वात् ।

**मू०–भिस्भिस् ॥** इदमदसोर्भिस् भिसेव भवति न भकारस्याकारः । एभिः । अस्मै । अस्मात् । अस्य । अनयोः । एषाम् । अस्मिन् । एषु ।

सुबोधिनी–भिस्भिस् । इदमोऽदसश्च भिस् भिसेव भवति । भिसो भिस्विधानं भ्य इत्य बाधनार्थम् । ऐस्मीत्यैत्वे एभिः । अदसस्तु अमीभिः ॥

तत्त्वदीपिका- भिस्भिसिति । फलं किमित्याह नभकारस्योति न्हस्वो वेत्यनुवर्त्य तस्य व्यवस्थितत्वादिह न इमकेन इमकाभ्याम् इमकैः ।

**मू०-इदमेतदोरन्वादेशेद्वितीयाटौस्वेनद्वा ॥ एनम् । एनौ । एनान् एनेन । एनयोः । किंचित्कार्य्यं विधातुमुपात्तस्य कार्य्यान्तरं विधातुं पुनरुपादानमन्वादेशः । यथाऽनेन व्याकरणमधीतम् एनं छंदोऽध्यापय । नोपधायाः । नाम्नोनोलोपशधौ । राजा । राजानौ । राजानः । हेराजन् । अल्लोपस्स्वरे-म्वयुक्ताच्छसादौ श्रुत्वम् ।**

सुबोधिनी-इदमेतदोरन्वादेशेद्वितीयाटौस्स्वेनद्वावक्तव्यः ।।द्वितीयायां टौसोश्च परतोऽन्वादेशे इदमेतदोरेनदादेशो वा स्यात् । अन्वादेशमाह । किंचित्कार्यं विधातुमुपात्तस्य गृहीतस्य शब्दस्य कार्य्यांतरं विधातुं बोधयितुं पुनरुपादानं ग्रहणं सोन्वादेश उच्यते । "ईषदर्थे क्रियायोगे मर्य्यादाभिविधौ च यः ॥ एतमातं ङितं विद्यात्" इत्यत्र तु ईषदर्थादयो न विधीयंते किंत्वनूद्यंते इति नात्रैनदादेशः । एवं" नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापय' इत्यत्रापि भीरुत्वस्यानुवाद्यत्वं बोध्यम् । यथा । अनेन पुरुषेण व्याकरणमधीतं पठितम् एनं पुरुषं त्वं छंदोऽध्यापय पाठय ॥ इति मांताः ॥ राजते इति राजा । कनूयुवृषितक्षिराजिधान्विद्युप्रतिदिव इति कन् प्रत्ययः । परत्वान्नोपधाया इत्युपधादीर्घः । हसेप इति सिलोपः । ततो नाम्नो नोलोपशिति नलोपः । शासितु अल्लोपः स्वरे इत्यल्लोपे कृते श्रुत्वम् ॥

तत्त्वदीपिका-व्यवस्थितत्वादपरमिह फलमित्याह । इदमेतदोरिति । किंचित्कार्यं विधातुमिति । कर्तुं अपूर्वं बोधयितुमित्यर्थः । उपात्तस्य गृहीतस्येत्यर्थः । कार्यान्तरं अन्यत्कार्यमित्यर्थः । पुनरुपादानं ग्रहणमित्यर्थः। ईषदर्थे क्रियायोगे इति श्लोके तु ईषदर्थादयो न विधीयन्ते किन्तु अनूद्यंते । तेन एनादेशो न। एतेन नक्तं भीरुरयं त्वमेव तदिमं राधे गृहं प्रापयेत्यपि व्याख्यातम् भीरुत्वस्यानुवाद्यत्वेन विवक्षितत्वात् । नतु विधेयत्वेन यज्वन इति वांतसंयोगत्वान्नलोपः । आत्मन इति मान्तसंयोगोऽत्र य्वोर्विहस इति ।

**मू०-जञोर्ज्ञः ॥ जकारञकारयोर्योगे ज्ञो भवति । राज्ञः । राज्ञा।राजभ्याम् । नलोपाशि न विभक्तिकार्य्यं । पञ्चस्विति ज्ञापकात् । राजभिः । वेङ्योः राज्ञि, राजनि । राज्ञोः । राजसु । एवं वृषादयः । यज्वनः । यज्वना । आत्मनः । आत्मना । प्रतिदिवानौ । अल्लोपे कृते ।**

सुबोधिनी-जञोर्ज्ञः । उभयोर्योगे ज्ञ इत्यक्षरं भवति । राज्ञः।नस्य लोपशि न विभक्तिकार्यं । पंचस्विति ज्ञापकात् । अतो राजभ्यामित्यत्राद्भीत्यात्वं राजभिरित्यत्र भ्य इत्यत्वं राजभ्य इत्यत्रेस्मीत्यैत्वं च न । वेङ्योरिति चोपधालोपे राज्ञि, राजनि । वृषा इन्द्रः कन्नंतः इष्टवानिति यज्वा । क्विप्वनिपुड्डा इति वनिपप्रत्ययः अम्वयुक्तादियुक्तत्वान्नोपधालोपः । यज्वनः । अततीत्यात्मा । अततेर्मनिण् इति मनिण्प्रत्ययः । अम्वयुक्तादित्युक्तत्वान्नोपधालोपः । आत्मनः । सुष्टु धर्म्मो यस्यासौ सुधर्मा । धर्मादित्यन् अम्वयुक्तादित्युक्तत्वान्नोपधालोपः । सुधर्मणः । प्रतिदीव्यतीति प्रतिदिवा । कन्नंतः शासि अल्लोपः स्वरे इत्यल्लोपे कृते ॥

**मू०—र्व्वोर्विंहसे ॥** धातोरिदुतोर्दीर्घो भवति । रेफवकारयोर्हसपरयोः प्रतिदीव्नः । प्रतिदीव्ना । प्रतिदिवभ्याम् ॥

**सुबोधिनी—**र्व्वोर्विंहसे । र्च व्च अनयोः समाहारो र्व् तस्मिन् र्वि । रेफवकारयोः परतः पदांते च धातोरिकारोकारयोर्दीर्घः स्यात् । कीदृशयोः । हसः परो ययोस्तौ हसपरौ तयोर्हसपरयोः । प्रतिदीव्नः । नाम्नो न इति नलोपे । प्रतिदिव्भ्याम् ॥

**तत्त्वदीपिका—**र्व्वो र्वि हस इति छेदः इश्च उश्च यू तयोः र्व्वोः र्च व्च एतयोः समाहारः र्व् तस्मिन् र्वि हस इति रेफवकारयोर्विशेषणमित्याशयेनाह। हसपरयोरिति ।

**मू०—श्वादेः ॥** श्वादेर्व उत्वम्प्राप्नोति शसादौ स्वरे ईपीकारे च । शुनः । शुना । श्वभ्यां । यूनः । यूना । युवभ्यां । मघवा । मघवानौ । मघवानः । मघोनः । मघोना ।

**सुबोधिनी—**श्वादेः । श्वयुवमघोनां व उः स्यात् शसादौ स्वरे ईपि प्रत्यये ईमावितीकारे च । प्रातिपदिकग्रहणे लिंगाभिधायिस्त्रीप्रत्ययविशिष्टस्यापि ग्रहणमिति परिभाषा विभक्तिनिमित्ते कार्ये न प्रवर्तते । अतो युवतीः पश्येत्यादौ नोत्वम् । अकारसहितस्य वस्योत्वं । श्वा कुक्कुरः । युवा तरुणः । युवन्शब्दे वस्योत्वे कृते दीर्घत्वम् । यूनः । मघवा इन्द्रः । वस्योत्वे ओत्वे च कृते मघोनः ॥

**तत्त्वदीपिका—**श्वादेरिति । ननु युवतीः पश्येत्यत्र कथं नोत्वं नामग्रहणे लिंगाभिधायकप्रत्ययविशिष्टस्य ग्रहणमितिपरिभाषाश्रयणादिति चेत्सत्यम् विभक्तिनिमित्तेकार्यें लिंगविशिष्टग्रहणं नेति निषेधात् ॥ सस्वरस्थवस्योवम् अल्लोपेपि सिद्धे ङौ विकल्पात् ।

**मू०—अर्व्वणस्त्रसावनञः ॥** नञारहितस्यार्व्वन्नन्तस्य तृ इत्यन्तादेशः स्यान्न तु सौ ।

**सुबोधिनी—**अर्वणस्त्रसावनञः । ननु ऋधातोर्विप्रत्यये गुणे च अरिति रूपं तस्माद्वतुप्रत्यये अर्वतावित्यादि सेत्स्यति । ऋधातोरेव वनिप्प्रत्यये त्वनर्वेति सेत्स्यति । रूढिशब्दश्चायं । "वाजिवाहार्वगंधर्वहयसैंधवसप्तयः" इत्यमरोक्तत्वात् तश्चार्थोपि न भिद्यते । किमनेन सूत्रेणेति चेत् उच्यते । नांततांतयोःसर्वत्र प्रयोगे प्राप्ते सौपरे नञ्युपपदे च नांतस्य प्रयोगोऽन्यत्र तु तांतस्य प्रयोगो भवतीति व्यवस्थार्थं सूत्रम् ॥

**तत्त्वदीपिका—** अवर्णस्त्रसावनञ इति । ऋधातोर्विचि गुणे च अरिति रूपं तस्मान्मतौ अर्वन्ताविति रूढिशब्दश्चायं ' वाजिवाहार्वगंधर्वहयसैंधवसप्तय'इत्यमरकोशात् । तथा च श्रीहर्षः "वाहैरलुप्यत सहस्रदगर्वं ' इति प्रायुङ्क्त ।

**मू०—त्रितोनुम् ॥** उकारानुबन्धस्य ऋकारानुबन्धस्य च नुमागमो भवति पुंसि पंचसु । अर्व्वन्तौ । अर्व्वन्तः । अर्व्वन्तम् । अर्व्वन्तौ । अर्व्वतः । अर्व्वता । अर्वद्भ्याम् । अनञः किम् । अनर्वाणौ । असौ किम् । अर्व्वा ।

**सुबोधिनी**–व्रितोनुम् । उश्च आच वरौ वराविंतौ यस्य स व्रित् तस्य व्रितः । उदितः ऋदितश्च नुम् स्यात् । सोनःपुंस इत्यतो मंडूकप्लुत्या पुंस इत्यनुवर्तते । तेन पुंसि पंचास्वित्यर्थः । धातोर्नलोपिनोंऽचतेरेव । अंचेर्दीर्घश्चेत्यतोंऽचेरित्यपकृष्यते । तत्रैव वांचेरिति विभज्य पंच-स्विति नुमिति चानुवर्तते । अंचेरिति निर्देशात् नलोपिनो ग्रहणम् । धातोश्चेद्व्रित्कार्यं तर्हि अंचतेरेवेति नियमार्थमिदं तेन स्रंसादीनामीव्नुमौन । ऋदित्त्वान्नुम् । अर्वंतौ । नञ्तत्पुरुषे तु न अर्वा अनर्वा । यज्ववत् ॥

**तत्त्वदीपिका**–व्रितोनुमिति । उश्च आ च वरौ तौ इतौ यस्य स व्रित् तस्य व्रितः । अत्राधातोरेव अंच-तेर्नुम्विधानात् अन्यथा व्रित्त्वादेवाचन्तेरासिद्धे नुम्विधानं व्यर्थम् अतः सिद्धे सति पुनर्नुम्विधानं व्यर्थम् । धातोश्चेद् व्रित्कार्यं तर्ह्यंचतेरेव तेन स्रदित्यादौ न ।

**मू०–इतोऽत्पंचसु ॥** पथिन्मथिन्ऋभुक्षिन्शब्दानामिकारस्याकारादेशो भवति पुंसि पंचसु शौ च ।

**सुबोधिनी**–इतोत्पंचसु । पथांटेरित्यतः पथामित्यनुवृत्तम् । पथ्यादेरितोऽत् स्यात् पुंसि पंचसु शौ च । शौ सुपंथानि । पुंसि किं । सुपथी । पतस्थश्चेति चादिन्प्रत्ययः । पथिन् । संमन्थतेः किन्प्रत्यये मथिन् शब्दः । "ऋभुक्षाःस्वर्गवज्रयोः" । ततोऽस्त्यर्थे इन्प्रत्यये ऋभुक्षिन् ॥

**तत्त्वदीपिका**–इतोत्पंचसु । पथांटेरित्यतः पथामित्यनुवृत्तेर्बहुवचननिर्देशात्तत्रैव पथ्यादिलाभः । अत्रा-द्वचनं तु चिंत्यम् । इत आपंचस्वित्येव सुवचनम् । तथा च आसाविति सूत्रमपि न कर्त्तव्यं भवति तपरकरणं तु दीर्घनिवृत्त्यर्थं तथाच पंथानमिच्छतीति वाक्ये पथीनतीति ततः क्विपि पत इत्याकारलोपः एकदेशविकृत-स्यानन्यत्वादासावित्यत्वम् नुट्पंथाः । इतोत्पंचस्वित्यत्वं नभवति इत्परत्वात् य्वोवेति बाधित्वा नित्यत्वात्थो-नुट् ततः संयोगपूर्वत्वादिय् । पंथियौ । शसादौ । पथः पथांटेःपथाभ्यामादौ पथिभ्यामित्यादौ एवं चाद्वचनमा साविंतिसूत्रं च सार्थकं भवति । अन्ये तु पथी पथ्यौ ऋभुक्षीः ऋभुक्षियावित्यादिउदाजन्हुः गौणत्वादात्त्वादि नेति एकदेशविकृतन्यायोपि मुख्ये चरितार्थत्वान्न अन्यथा सर्वमिच्छन्सर्वइत्यत्राप्यकः स्यात् तपरत्वं तु मुखसुखार्थमित्याहुः । तत्र केचित् पदकार्यें गौणमुख्यन्यायो न नामकार्यें अन्यथा गां वाहीकं पश्येत्यादावात्वं न स्यात् अकस्तु सर्वादिपाठाभावान्न । तपरस्यापि सार्थक्यमेव अन्यथा इरादित्येवावक्ष्यत् तपरे तु पथामिति निर्देशेन नान्तप्रकृत्यनुकरणान्नान्तानामेव पथ्यादीनामात्वादिप्रकृतेनान्तत्वाभावान्नेति न चैकदेशविकृतन्याय एवमपि दुर्वार इति वाच्यं । नान्तत्वाविवक्षासामर्थ्यादेव प्रथमं नुटि तद्बाधनात् एवं च पथा इत्यत्रापि नांत-त्वविवक्षासामर्थ्यादेव नुट् तत आत्वम् । अन्यथा नित्यत्वाद्विशेषविहितत्वाच्च पूर्वमात्वे ऽनान्तत्वान्थादेशो न स्यात् ।

**मू०–थोनुट् ॥** पथिमथेस्थस्य नुट् स्यात् पुंसि पंचसु शौच ।

**सुबोधिनी**–थोनुट् । पथ्यादेस्थस्य नुट् स्यात् पुंसि पंचसु शौ च । थस्येति किम् । ऋभुक्षाः । पुंसि किम् । सुपथि ।

**तत्त्वदीपिका**– थोनुडिति । अत्रद्वयोरेवानुवृत्तिः । तृतीयेप्यस्यासंभवात् । ननुथस्यनुडिति सूत्र्यताम् थस्येतिनिर्देशादकारोपि तथा च किमिति सूत्रेणेति चेत्सत्यम् । ऋभुक्षा इति न सिध्येत् ।

**मू०–आसौ ।** पथिमथिऋभुक्षां टेरात्वम्भवति सौ । पंथाः । पन्थानौ । पंथानः । हे पंथाः । पंथानम् ।

सुबोधिनी– आसौ । पथां टेरिति पदद्वयमनुवर्तते । पथ्यादेष्टेरात्स्यात् सिप्रत्यये सौ किं । पथिभ्याम् ॥

तत्त्वदीपिका–आसाविति । अत्र पथांटेरिति पदद्वयमप्यनुवर्तते इत्यत आह । टेरात्वमिति । अत्राहुः । पथ्यादीनामन्तस्यात्वं भवति । अन्त्यस्येति षष्ठीनिर्दिष्टस्येति परिभाषालभ्यते इति अत्र साक्षादनुवृत्तं टेरित्युक्त्वा परिभाषालब्धस्यांतस्येत्यस्यानुकरणे गौरवात् । आआ इति प्रश्लेषादनुनासिकस्यापि स्थाने विहितानुनासिकः । ननु किमर्थमात्वम् इतोदित्यत्वेनोपधाया इति दीर्घत्वे सौ रसेन लोपशि पश्चाद्विसर्गे पंथा इति रूपसिद्धेरिति चेन्न धौ न लोपशो भावे हे पंथा इति न सिद्ध्येत् । राजेत्यत्रानिष्टापत्तेश्च असावित्येव तु न कृतनकारमात्रस्यात्वे सवर्णदीर्घत्वेन सिद्धेपि लि ? इति चेन्न अपथिशब्दस्य पंथा इत्यसिद्धेः टेरनुवृत्तौ तु मुख्येपि रूपासिद्धेश्च स्त्रियामिति सुपथीति असावित्यात्वं थोनुडिति लिङ्गविशिष्टपरिभाषया प्राप्तमपि विभक्तौ लिंगाविशिष्टाग्रहणामिति निषेधान्न भवति ।

**मू०–पथांटेः । पथिमथिऋभुक्षां टेर्लोपो भवति शसादौ स्वरे ईपीकारे च । पथः । पथा । पथिषु । एवम्मंथाः । ऋभुक्षाः । स्त्रियां नांतत्वादीप् सुपथी । सुमथी । अनृभुक्षी । सेना । क्लीबे शोभनः पंथाः यस्मिन् वने तत्सुपथि वनम् ।**

सुबोधिनी–पथांटेः । पथ्यादेष्टेर्लोपः स्यात् शसादौ स्वरे ईपीकारे च । पथामिति बहुवचनमाद्यर्थं । स्त्रियां न्नण इतीप् । ततष्टिलोपः । सुष्ठु पंथाः यस्याः सा सुपथी रथ्या । ऋक्पूरित्यऽप्रत्ययो न । न पूजने इति निषेधात् । कप्रत्ययस्तु समासांतविधेरनित्यत्वान्न । सुष्ठु मंथाः यस्यां सा सुमथी नगरी । न विद्यते ऋभुक्षाः इंद्रो यस्यां सा अनृभुक्षी सेना । क्लीबे सुष्ठु पंथाः यस्मिन् तत् सुपथि । आत्वं त्वत्र न लुकि न तन्निमित्तामिति निषेधात् ॥

**मू०–धौनपुंसकानान्नस्यलोपोवा । हेसुपथिन्, हेसुपथि । सुपथी । सुपंथानि ।**

सुबोधिनी– धौनपुंसकानांनस्यलोपोवा । हे सुपथि इत्यत्र नलोपस्यासिद्धत्वाद् ग्वृणामिति गुणो न । द्विवचने पथामिति टिलोपः सुपथी । शौत्वत्वे नुटि च दीर्घत्वं सुपंथानि । किंच पंथानमात्मन इच्छतीति पथीयाति । ततः क्विप् । यत इत्यल्लोपः । यवयोरिति यलोपः । एकदेशविकृतस्याऽनन्यत्वादासावित्यात्वं थोनुडिति नुट् । पंथाः । अत्वं तु न । इत इति तपरकरणात् । ग्वोर्धातोरितीय् । पथियौ । एवं ऋभुक्षियौ ॥

**मू०–इनांशौसौ । इन् हन् पूषन् अर्य्यमन् इत्येतेषां शौ सौ चाधौ परे उपधाया दीर्घो भवति नान्यत्र । दंडी । हे दंडिन् । दंडिनौ । दंडिनः । एवं कलिन् हलिन् यशस्विन् वाग्मिन् प्रभृतयः । वृत्रहा । वृत्रहणौ । वृत्रहणः ।**

सुबोधिनी–इनांशौसौ । बहुवचनमाद्यर्थं । अर्थवत्परिभाषम् अनित्यत्वादर्थवतो अनर्थकस्यापीनोत्र ग्रहणम् । उपधाया इत्यनुवर्तते । अधाविति च नोपधायाइत्यनेनैव सिद्धे नियमार्थमिदम् । तदाह । इनादीनामुपधायाः शावेव दीर्घः स्यान्नान्यत्रेति । उपधादीर्घस्यैवायं नियमः तेन वृत्रहेवाचरतीति वृत्रहायते । कर्तुर्यङ् । इत्यत्र ये इति दीर्घोभवत्येव । वृत्रहणीत्यत्र अमस्य क्ङिति झसे इति यो दीर्घः सोपि नियमेन व्यावर्त्यते । उपधादीर्घमात्रापेक्षया नियमविधानादिति । साविति तु विध्यर्थम् । पूर्वेण नियमात् । सावप्राप्तेर्योग-

विभागाभिप्रायेणैव शौसाविति निर्देशोस्ति । अन्यथा शिस्योरित्येवावक्ष्यत् । ननु पंथा इवाचरतीति पथीनाति । क्विप् । इत्यादौ अमांतस्येत्युपधादीर्घो न प्राप्नोति । पथ्यादीनामिन्नंतत्वात् । इन्नादीनां शौ सावेवेत्युपधादीर्घस्य नियमादिति चेत् उच्यते । यत्र इनामिति सूत्रं प्रवर्तते तत्रैवायं नियमः । यथा दंडीवाचरतीति दंडीनाति । क्विप् वृत्रहणाति । पूषणाति । अर्यमणाति इति । दंडोस्यास्तीति दंडी । मांतोपधादितीन् । शौ बहवो दंडिनः संति येषां तानि बहुदंडीनि । मुसलमस्यास्तीति मुसली । हलमस्यास्तीति हली " रेवतीरमणो रामः कामपालो हलायुधः " इत्यमरः । यशोऽस्यास्तीति यशस्वी । विन् । वागस्यास्तीति वाग्मी । ग्मिन् । वृत्रं हतवानिति वृत्रहा । क्विबंतः । " वासवोवृत्रहावृषे " त्यमरः । अवकुप्वंतरेपीति णत्वं वृत्रहणौ ॥

तत्त्वदीपिका–इनांशौसाविति । बहुवचनादिनादिलाभः इनिन्समुदायेऽनिनोपि इनमारोप्यते छत्रिणो यांतीतिवत् अर्थवत्परिभाषायाअनित्यत्वादनर्थकस्यापीनोग्रहणं साविति ग्रहणात्तदंतं गृह्यते पूषार्यम्णोः केवलयोः पुंस्त्वात् शेरभावात् नोपधाया इति सिद्धः विधिरारभ्यमाणो नियमाय तेन इन्नादीनामुपधाया दीर्घः शावेव नान्यत्रेति नियमः नियमश्चोपधादीर्घस्यैव नान्यस्य तेन दंडीयति दंडीभूत इत्यादौ भवत्येव दीर्घः येच्चाविति त्रोपधाग्रहणाभावात् । ननु पंथा इवाचरन् पथीनतीत्यत्रापि अमान्तस्येत्युपधादीर्घोपि कथं पथ्यादीनामिन्नंतत्वादितिचेत्सत्यं । यत्र इनांशौसाविति सूत्रप्रवृत्तिस्तत्रैवायं नियमः पथ्यादिषु तु इतोदित्यादेः प्रवृत्तिसंभवान्न नियमः ।

**मू०–हनोघ्ने॥** हनो हकारस्य घो भवत्यव्यवधाने नकारे ञिति णिति च परे ।

**सुबोधिनी**–हनोघ्ने । हनः घ्ने इति च्छेदः आदिस्वरस्येत्यतो ञ्णितीत्यनुवृत्तं । ञिति णिति प्रत्यये नकारे च परे हंतेर्हस्य घः स्यात् ।

तत्त्वदीपिका–हनोघ्नेइति । हनः घ्ने इति छेदः आदिस्वरस्येत्यतो ञ्णितीत्यनुवर्त्तते ।

**मू०–घसंयोगेणत्वन्न ॥** वृत्रघ्नः । वृत्रघ्ना । वृत्रहभ्याम् । एवं पूषन् अर्यमन् । संख्याशब्दाः पंचन्प्रभृतयो बहुवचनांतास्त्रिषु सरूपाः ।

**सुबोधिनी**–अल्लोपः स्वरे इत्यल्लोपे घत्वेच कृते । अवकुप्वंतरे इति णत्वे प्राप्ते आह ॥ घसंयोगे णत्वं न । घकारात्परस्य णत्वं न भवति । वृत्रघ्नः । वृत्रघ्ना । पूषा सूर्यः । अर्यमा रविः ॥

तत्त्वदीपिका–घ्नेइत्यत्र तन्त्रादिना घ्नइत्यत्र नस्यादेशो नेति व्याख्यानमपीत्याशयेनाह । घसंयोगे णत्वं नेति ।

**मू०–जश्शसोर्लुक् ॥** षकारनकारांतसंख्यायाः परयोर्जश्शसोर्लुक् । पंच २। पंचभिः पंचभ्यः २ ।

**सुबोधिनी**–जश्शसोर्लुक् । संख्याया इति ष्ण इति चानुवर्तते । संख्यायां किम् । विप्रुषः । पामानः । ष्ण इति किम् । चत्वारः शतानि सहस्राणीत्यत्र संनिपातपरिभाषया जश्शसोर्लुग् न । तथा हि । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य । संनिपतनं संनिपातः आनंतर्यं सन्निपातो लक्षणं कारणं यस्य स संनिपातलक्षणो विधिस्तद्विघातस्य कारणवि-

घातस्यानिमित्तं न प्रयोजकः । यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोधं न करोतीति परिभाषार्थः शिमाश्रित्य प्रवृत्तो नुम् शेर्विघातको न ॥

तत्त्वदीपिका–जश्शसोर्लुगिति । संख्यायाइति चानुवर्त्तते ननु शतानि सहस्राणीत्यादौ कथं न लुगिति चेत्सत्यं । सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति परिभाषया तन्निषेधात् । सन्निपतनं सन्निपातः आनंतर्य्यं लक्षणं कारणं यस्य सः संनिपातलक्षणो विधिः तद्विघातस्य अनिमित्तं न प्रयोजकः यमुपजीव्य यो विधिः प्रवृत्तः स तस्योपजीव्यस्य विरोधं न करोतीत्यर्थः । शिमाश्रित्य प्रवृत्तोनुम् शेर्विघातको न भवति । लोप इत्यनुवृत्तावपि लुग्ग्रहणं षष्ठीनिर्दिष्टस्येति परिभाषां ज्ञापयति लुकस्तु प्रत्ययादर्शनत्वेन सर्वलोपाभावे दर्शनासंभवात्सर्वलोप एव नान्त्यस्य लोपापवादो लुक्शब्दादेशस्तु न भवति नवपमित्यादिनिर्देशात् नहि लुक्शब्दोऽत्र श्रूयते क्विपः कित्त्वेन प्रत्ययादर्शनेपि प्रत्ययाश्रितं कार्य्यं भवतीति पंचेत्यत्र लुक्यपि नोपधाया इति दीर्घो न । नवपमिति लिंगेनैव लुकि सति तन्निमित्तं कार्य्यं न भवतीति ज्ञायते एतदर्थमेव भेदेन व्यवहारः । अन्यथा लुक्लोपयोरन्यतरेणैव सर्वत्र व्यवहरेत । अथ लुक्ग्रहणं विनैव रूपसिद्धौ ज्ञापकं स्यात् असति तस्मिन्ननन्तरस्येति न्यायेनायङादिरेव प्रसज्येतेति चेत्सत्यं । नवपामिति निर्देशेनैव तद्वारणसंभवात् ।

**मू०–ष्णः ॥ षकारनकारांतसंख्यायाः परस्यामो नुडागमो भवति । पंचानां । परमपंचानां । गौणत्वे न लुङ्नुटौ । प्रियपंचा । प्रियपंचानौ । प्रियपंचानः । प्रियपंचः । प्रियपंचा । एवं सप्तन्नवन्दशन्प्रभृतयः ।**

सुबोधिनी–ष्णः । ष् च न् चानयोः समाहारः ष्ण् तस्मात् ष्णः । संख्याया इत्यनुवर्तते ष्ण इति तस्या विशेषणं विशेषणेन तदंतविधिः । संख्याया इति किं त्विषां । यज्वनां । ष्ण इति किं । त्रिंशतां । पंचाशतां । नलोपे नोपधाया इति दीर्घे च पंचानाम् । प्राधान्ये परमाश्च ते पंच च परमपंच तेषां । गौणत्वे न लुङ्नुटौ । गौणे ष्णांतसंख्यायाः जश्शसोर्लुक् नामि तु नुट् न । संख्यावाचित्वाभावात् । प्रियाः पंच यस्य स प्रियपंचा । आमि प्रियपञ्चाम् । नकारद्वयमध्यश्चकारः ॥

तत्त्वदीपिका– ष्णइति । ष्च न्च अनयोः समाहारः ष्ण् तस्मात् ष्णः । अत्र संख्याया इत्यनुवर्त्तते ष्ण इति तद्विशेषणं ततस्तदंतलाभः इत्याशयेनाह । षकारान्तेत्यादि । नस्यष्टुत्वनिर्देशे विशेषणं तस्य संख्यावाचिनो भावान्नान्तमेव गृह्यते।संख्याया इति किं । त्विषां। ष्ण इति किं त्रिंशतां। गौणत्वेनेति संख्यावाचित्वाभावादित्यर्थः ।

**मू०–अष्टनोडौ ॥ अष्टन्शब्दात्परयोर्जश्शसोर्वा डौ भवति । अष्टौ । अष्ट । अष्ट ।**

सुबोधिनी–अष्टनोडौ । अष्टन इत्येकवचनं तु त्रेरितिवत् । अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिंत्या । जश्शसोरित्यनुवर्तते । वास्विवति वाशब्द उभयत्र संबध्यते काकाक्षिगोलकन्यायेनेति । ननु षष्ठीनिर्दिष्टत्वादंतस्य डौ भवति नचानेकवर्णत्वात्सर्वादेशः स्यात् । नानुबंधकृतमनेकवर्णत्वमित्युक्तत्वात् । उच्यते । डित्त्वसामर्थ्यान्नोक्तदोषः । तथाहि । अंत्यादेशे सति जसि अष्टनाविति शसि अष्टाविति प्राप्नोति तर्ह्यंतरेण डित्त्वंसिद्धमतो डित्करणसामर्थ्यात् सर्वादेशः लुकोपवादोयमिति सर्वादेशः इति वा । डौशिति सुवचं । डौत्वं हि लुग्नुटाविव प्राधान्ये एव भवति । ननु गौणत्वे सप्त्यष्टभ्यांतुटूचेत्यनेन सप्तन्अष्टन्शब्दौ निष्पन्नौ ॥

तत्त्वदीपिका-अष्टनोडाविति । एकवचनं तु त्रेरितिवत् । सौत्रत्वादल्लोपोपि न । अल्लोपः स्वरे इत्यस्याप्रवृत्तिश्चिन्त्येति कैश्चिदुक्तम् । अत्र अष्टाभ्यऔशिति सूत्रव्याख्यावसरे अन्यथा अष्टन इत्येव ब्रूयात् इतिभाष्यकारोक्त्यापि चिन्तया अपसारणीयत्वात् वास्विति वाशब्दःकाकाक्षिन्यायेनोभयत्रान्वेति । संख्याया इत्यनुवृत्तेर्नेह प्रियाष्ट्नः अनुबंधैरनेकवर्णत्वस्यासंभवादन्त्यस्यादेशोस्तीति न शंकनीयम् । षष्ठीनिर्दिष्टस्येति परिभाषायां अनित्यत्वात् ।

**मू०-वासु ॥** अष्टनस्सकारभकारादिषु विभक्तिषु वात्वंभवति । अष्टाभिः, अष्टभिः । अष्टाभ्यः, अष्टभ्यः २ । अष्टानां । प्रिया अष्टौ यस्यासौ प्रियाष्टा । प्रियाष्टानौ । प्रियाष्टानः, प्रियाष्ट्नः । प्रियाष्ट्ना । प्रियाष्टाभ्यां । "प्रियाष्ट्नो राजवत्सर्वं हाहावच्चापरं हसे" । सुगण् । सुगणौ । सुगणः । सुगणं । सुगणौ सुगणः । सुगणट्सु । भुत्, भुद् । बुधौ । बुधः । भुद्भ्यां । भुत्सु । राक्, राग् । रावौ रावः । राग्भ्यां । राक्षु । सुककुप् सुककुब् सुककुभौ । सुककुभः । सुककुभं । सुककुप्सु ।

सुबोधिनी-वासु । भीत्यपकृष्यते तेन स्यादयो विशेष्यंते । वा आ आसु इति छेदः । सकारभकारादौ स्यादौ परे अष्टन आत्वं वा भवतीति फलितोर्थः । इत आरभ्य संख्याया इति निवृत्तम् व्याख्यानात् । तेन गौणत्वेपि स्यादात्वम् । स्यादाविति किम् । अष्टभार्यः । अष्टसेवकः । भीति किं । प्रियाष्टानौ । प्राधान्ये परमाष्टौ । गौणत्वे प्रिया अष्टौ यस्य स प्रियाष्टा । आत्वाभावे राजवत् । शसि अल्लोपः स्वरे इत्यकारलोपे कृते ष्टुभिःष्टुरिति णत्वंप्राप्तमसिद्धंबहिरंगमंतरंगे इति परिभाषया न । शस्निमित्तकत्वेन बहिरंगस्याल्लोपस्यासिद्धत्वात् । पूर्वपूर्वमंतरंगमिति स्वीकारात् । आत्वपक्षे प्रथमैकवचने प्रियाष्टाः हाहाशब्दवत् । प्रियाष्टन् शब्दस्याऽऽत्वाभावपक्षे सर्वं रूपं राजवत् । आत्वपक्षे तु हसादावपरं रूपं हाहावत् ॥ ॥ इतिनांताः ॥ ॥ सुष्ठु गणयतीति सुगण् । गणयतेर्विण्प्रत्ययः । ङसेङ्णोरिति टुकि सुगण्ट्सु । शसे चपस्येति द्वितीये सुगणट्सु । टनादिति धुटि सुगणट्त्सु । क्विप्प्रत्यये तु सुगाण् । ञमस्य क्ङिति इति दीर्घे कर्तव्ये अल्लोपञिलोपयोः स्थानिवद्भावो न शंक्यः । दीर्घविधौ तन्निषेधात् ॥ ॥ इतिणान्ताः ॥ ॥ बुध्यतेः क्विप् । आदिजबानामिति भः जबत्वचपत्वे । भुत्, भुद् । जबत्वे भुद्भ्याम् । चपत्वे । भुत्सु ॥ ॥ इतिधांताः ॥ रावृसामर्थ्ये रावते इति राक् । क्विंतः ॥ ॥ इतिवांताः ॥ सुष्ठु ककुप् यस्मिन् स सुककुप् । "दिशस्तु ककुभः काष्ठा" इत्यमरः ॥ ॥ इतिभांताः ॥

तत्त्वदीपिका-वास्विति । वा आ आसु इति छेदः इत आरभ्य संख्याया इति निवृत्तं व्याख्यानात् । तेन गौणत्वेप्यात्वम् । अत्र स्भीत्युत्तरसूत्रात् स्भीत्यपकृष्यते इत्यभिप्रेत्याह सकारेत्यादि । प्रियाष्ट्नइति । ष्टुत्वंन असिद्धं बहिरंगमन्तरंग इति परिभाषया अल्लोपस्यासिद्धत्वात् ।

**मू०-युजेः पंचसुनुम्नसमासेइतिच ।**

सुबोधिनी-युजेः पंचसुनुम्नसमासेइतिच । युजिर् योगे इत्यस्य धातोः पंचसु स्यादिषु नुम् स्यान्न तु समासे । युजेरिति धातुपाठपठितेकारविशिष्टस्य ग्रहणं न तु निर्देशे य इक् तस्य । तेनेह नुम् न । युज्यते समाधत्ते इति युक् । युजसमाधौ दैवादिक आत्मनेपदी ॥

तत्त्वदीपिका-युजेः पंचास्विति । समासे इति न संबंधः युंजोकुले इह न ।

**मू०-दिशाम्** ॥ दिश्दृश्स्पृश्दधृष्ऋत्विज्क्रुंच्युंज्स्रज्अंच्उष्णिहादीनां कुत्वंस्यादौ रसे पदान्ते च। संयोगान्तस्य लोपः। युङ्। युञ्जौ। युञ्जः। युञ्जम्। युञ्जौ। युजः। युजा। युग्भ्याम्। समासे तु। सुयुक्।

सुबोधिनी-दिशाम्। बहुवचनमाद्यर्थं तेन दिश् १ दृश् २ स्पृश् ३ दधृष् ऋत्विज् ५ क्रुंच् ६ युंज् ७ स्रज् ८ अंचु ९ उष्णिहो १० गृह्यंते। दिश् दृश् स्पृश् दधृष् ऋत्विज् स्रजां षत्वे प्राप्ते क्रुञ्च् युज् अंचामप्राप्ते उष्णिहो ढत्वे प्राप्ते अयं कुत्वविधिः। कुरित्यनुवर्तते चोः कुरित्यतः युनक्तीति सिलोपे संयोगांतलोपे च नस्य कुत्वेनानुनासिको ङकारः। युङ्। नश्चापदांते इति नुमोनुस्वारे परसवर्णः। तस्यासिद्धत्वाच्चोः कुरिति कुत्वं न। युञ्जौ। समासे तु सुष्ठु युनक्तीति क्विप्। अत्रन नुम्॥

तत्त्वदीपिका-दिशामिति। बहुवचनमाद्यर्थम्। अत्ररसग्रहणाद्दिक्पाशेत्यादावपि। युंजाविति। नकारस्य कुत्वंतु न यमस्यासिद्धत्वात्।

**मू०-चोःकुः।** चवर्गस्य कवर्गो भवति धातोर्झसे नाम्नश्च रसे पदान्ते च। समाध्यर्थस्य नुम्न। युक् खन्। खंजौ। खन्भ्याम्। खन्सु। छशषराजादेः षः समाट् सम्राड्। सम्राजौ। सम्राजः। देवट् देवड्। देवेजौ। देवेजः। परिमृट् परिमृड्। परिमृजौ। परिमृजः। विश्वसृट् विश्वसृड्। विश्वसृजौ।

सुबोधिनी-चोःकुः। रसे किम्। त्वचौ। नाम्नः किम्। वाच्मि। पदांते किम्। वाचि। धातोर्झसे यथा। वक्ता। झसे किं वाच्मि। कुत्वे सुयुक्। समाध्यर्थस्य युजेर्नुम्न। युक्। खंजतीति। खजिगतिवैकल्ये क्विबंतः। संयोगांतलोपे खन्। संराजते इति षत्वे जवत्वचपत्वे च सम्राट्। देवान् यजतीति क्विपि यजादित्वात्संप्रसारणे एत्वे च देवेट्। विश्वं सृजतीति विश्वसृट् क्विन्तः। दिशामिति कुत्वं न सृजितिसूत्रे रज्जुसृड्भ्यामितिभाष्यप्रयोगात्। यद्वा सृजियज्योः कुत्वापवादः षत्वविधिरेव। स्रक्ऋत्विक्शब्दयोस्तु दिशामित्यनेन कुत्वमेव। परिमार्ष्टीति परिमृट्॥

तत्त्वदीपिका-चोः कुरिति। अत्र तदन्तग्रहणं तेन चवर्गान्तस्येति व्याख्येयम्। एवंचासिद्धत्वानुसरणेन युञ्जावित्यादौ कुत्वाभाव इति समानमपि नाश्रयणीयम्। ञकारस्यान्तेऽभावात् जकारसत्त्वेपि तस्य रसपरत्वाभावात्। समाध्यर्थस्येति। युजेरिति धातुपाठपठितेकारविशिष्टस्यानुकरणं नत्विकानिर्देश इत्याशयः। युगिति। युज्यतेसमाधत्तेइतियुक्। युजसमाधौ दैवादिकः आत्मनेपदी। खन् इति खंजतीति खन्। खजि गतिवैकल्ये संयोगांतस्येति यलोपः देवेडिति देवं यजतीति क्विपि संप्रसारणे रूपम्।

**मू०-विश्वस्यवसुराटोर्दीर्घः** ॥ विश्वावसुः। विश्वाराट्। विश्वराजौ। विश्वाराड्भ्याम्। विश्वाराट्सु, विश्वाराट्त्सु ॥

सुबोधिनी-विश्वस्यवसुराटोर्दीर्घः। विश्वशब्दस्य दीर्घः स्यात् वसुशब्दे राट्शब्दे च परे। विश्वं वसु द्रव्यं यस्य स विश्वावसुः। राडिति डशब्दस्य स्वरूपोपलक्षणमविवक्षितं षत्वं। विश्वस्मिन् राजते इति विश्वाराट्॥

तत्त्वदीपिका-विश्वस्यवसुराटोरिति। षत्वमविवक्षितं षत्वविषयोपलक्षकं। विश्वावसुरिति विश्वं वसु यस्येति विग्रहः।

**मू०—स्कोराद्योश्च ॥** संयोगाद्योस्सकारककारयोर्लोपो भवति धातोर्झसे नाम्नश्च रसे पदांते च । भृट् भृड् भृज्जौ । भृज्जः । वृक्षवृट् वृक्षवृड् । वृक्षवृश्चौ । विभ्राट् विभ्राड् विभ्राजौ विभ्राड्भ्याम् । विभ्राट्सु । ऋत्विक् ऋत्विग् । ऋत्विजौ । ऋत्विक्षु । ऊर्क् ऊर्ग् ऊर्ज्जौ । ऊर्क्षु ।

सुबोधिनी—स्कोराद्योश्च । आदिशब्दस्याऽवयववाचित्वेन संबंधित्वादवयव्याकांक्षायां संयोगेति संबध्यते । संयोगशब्दस्यापीह समुदायवाचित्वादवयवाऽर्थकत्वेनाऽवयव्याकांक्षायां नाम्नो धातोश्चेति संबध्यते । संयोगांतलोपापवादः । झसे त्वपूर्वो विधिः । झसे भ्रष्टा । पदांते अवाभ्रट् । आद्योः किं । धक्ष्यति नंक्ष्यति । भृज्जतीति क्विप् । ग्रहामिति संप्रसारणं । सौपरत्वात् षत्वे स्कोरिति सलोपे च सिलोपः भृट् । सस्य चुत्वेन शः । शस्य झबेजबा इति जः भृज्जौ । वृक्षं वृश्चतीति क्विपि ग्रहामिति संप्रसारणं छशषेति षत्वं स्कोरिति सलोपः जबत्वचपत्वे वृक्षवृट्, वृक्षवृड्, सुपि टनादिति धुट् ततश्च षत्वं । वृक्षवृट्त्सु । चांतेषु वक्तुमुचितः । विशेषेण भ्राजते इति विभ्राट् । षत्वविधौ राजिसाहचर्य्यात् भ्राजृदीप्ताविति फणादिरेव गृह्यते । यस्तु राजृ भ्राजृ दीप्ताविति तस्य कुत्वमेव । विभ्राक् विभ्राग् । विभ्राग्भ्यामित्यादि । ऋतौ यजतीति ऋतावुपपदे यजेः क्विप् । यजादित्वात्संप्रसारणं । कुत्वम् । ऋत्विक् । ऊर्ज बलप्राणनयोः । अस्माच्चुरादिञ्यंतात् क्विपि ञिलोपः । ऊर्ज्जयतीति ! संभिन्नस्येति नियमात् न संयोगांतलोपः । ऊर्क् ॥ इतिजांताः ॥

तत्त्वदीपिका—स्कोराद्योश्चेति । स् च क् चेति स्कौ तयोः स्कोः आदिशब्दस्यावयविनि साकांक्षितत्वेन संयोगेन संबंधः । संयोगशब्दोपि नामधातुभ्यां संबध्यते ॥ अत्ररसे झसे पदांते इति पदत्रयमपि संयोगस्यैव विशेषणं । न तु नामधातोः । स्कोरिति द्विवचननिर्देशात्स्कुन्धातोः स्वरूपस्य वा न ग्रहणम् । ऋत्विगिति । ऋतौ यजते इति वावाक्ये ऋतावुपपदे यजतेः क्विपि संप्रसारणे च रूपम् ऊर्क् इति । ऊर्जबलप्राणनयाः चुरादिञ्यन्तात्क्विपि ञलोपे च रूपम् ।

**मू०—तः॥** त्यदादेस्तस्य सत्वं भवति सौपरे । स्यः त्यौ त्ये । सः । तौ । ते । परमसः । संज्ञायां गौणत्वे चात्वसत्वं न । त्यत् त्यद् त्यदौ । अतित्यत् अतित्यद् । अतित्यदौ । यः । यौ । ये । एषः । एतौ । एते ॥ अन्वादेशे एनं एनौ एनान् एनयोः । अग्निमत् अग्निमद् । अग्निमथौ । अग्निमद्भ्याम् । अग्निमत्सु । प्रत्यञ्चतीति क्विपि कृते ॥

सुबोधिनी—तः । त्यदादेरित्यतः त्यदादेरिति सौस इत्यतः स इति साविति चानुवृत्तम् । त्यदादेः किम् । तातः । प्राधान्ये परमसः । संज्ञायां गौणत्वे चात्वसत्वे न । अत्वसत्वयोः सर्वाद्यंतर्गणकार्यत्वादत्वं च संज्ञायां गौणे च न प्रवर्तते । संज्ञायां त्यत् । त्यदौ । गौणे त्यमतिक्रांतोऽतित्यद् । इदमेतदोरित्यन्वादेशे एनदादेशः । एनमित्यादि । इति दांताः । अग्निं मंथतीति क्विपि नोलोप इति नलोपः । अग्निमत् ॥ इति थांताः ॥ प्रत्यंचतीत्यत्रांचेः क्विपि कृते ॥

तत्त्वदीपिका—त इति । त्यदादेर्येरित्यतस्त्यदादेरिति सौस इत्यतः स इति सौ इति च पदद्वयमनुवर्तत इत्याशयेनाह त्यदादेरित्यादि त्यदादेः किं तातः । तः इति किं यः । सौ इति किं तौ । ननु त्वमित्यत्र सत्वाले

स्सत्यं । कुतो नेति चेतकारोच्चारणसामर्थ्यात् । अथातित्वमित्यत्र गौणत्वे तयोश्चरितार्थत्वमिति चेदोम् शसि-परत्वाभावात् सावेति वक्तव्ये सिनेति गुरुकरणं वस्नसोरिव विभागसंमोहार्थम् ।

**मू०–नोलोपः ॥** धातोर्हसान्तस्योपधाभूतस्य नकारस्य लोपः क्ङिति परे ।

सुबोधिनी–नोलोपः । हसांतस्येति किम् । नीयते । उपधाभूतस्येति किम् । हन्यते ॥

**मू०–पूजार्थाञ्चतेर्न ॥** निरुपपदात् कुंचेः क्विपि क्रुङ् । क्रुञ्चौ । क्रुङ्भ्याम् । क्रुङ्क्षु क्रुङ्षु क्रुङ्ख्षु ।

सुबोधिनी–पूजार्थाचतेर्न । पूजार्थवाचिनोऽचतेरुपधाभूतस्य नस्य लोपो न भवति किति ङिति च निरुपपदात् क्रुंचेः क्विपि न । निर्गत उपपदेभ्यः निरुपपदस्तस्मात् । उपपदरहितस्य क्रुंचेरुपधाभूतस्य नस्य लोपो न भवति क्विपि । क्रुंचकौटिल्याल्पीभावयोः ॥

तत्त्वदीपिका–निरुपपदादिति निर्गत उपपदेभ्यः निरुपपदं तस्मात् । क्रुंचेः क्विपि परे तस्यैव नलोपो नेत्यर्थः ।

**मू०–अंचेः पुंसि पंचसु नुम् ॥** दिशाम् । प्रत्यङ् । प्रत्यञ्चौ । प्रत्यञ्चः । प्रत्यञ्चम् । प्रत्यञ्चौ ।

सुबोधिनी–अंचेः पंचसु नुम् । गत्यर्थस्यांचतेर्नुमागमः स्यात् पुंसि पंचसु । नलोपे पुनर्नुमि कृते प्रत्यन् च् सि इति स्थिते संयोगांतलोपे च नुमो नकारस्य दिशामिति कुत्वेन ङकारः । प्रत्यङ् । अनुस्वारसवर्णौ । प्रत्यञ्चौ ॥

तत्त्वदीपिका–अंचोरिति । इकारानिर्देशस्तथासति कित्त्वान्नलोपे अंचेरित्यत्र स्यात् किंनूच्चारणार्थ इकारः प्रत्यङ्ङिति प्रत्यंचतीति क्विपि नोलोप इति नलोपे सौ नुमि कृते प्रथमं संयोगांतलोपः न तु श्चुत्वं । अकृतव्यूहपारिभाषया श्चुत्वाप्रवृत्तेर्नित्यत्वात्संयोगांत एव तथा चलोपे नस्यैव ङकारपंचमत्वेन साम्यात्प्रथमं चुत्वे खान्नित्यसिद्ध्यापत्तेश्च ।

**मू०–अचेर्दीर्घश्च ॥** नलोप्यंचतेरकारस्य लोपः पूर्वस्य च दीर्घः शसादौ स्वरे परे तद्धितयस्वरयोरीकारे च । प्रतीचः । प्रतीचा । प्रत्यग्भ्याम् । प्रत्यक्षु । तिर्य्यङ् । तिर्य्यञ्चौ । तिर्य्यञ्चः ॥

सुबोधिनी–अचेर्दीर्घश्च । लुप्तनकारस्यांचतेरतो लोपो भवति ईपि ईकारे च प्रतीची । तद्धितयस्वरयोः प्रतीच्यः । प्रतीचीनः । अचेरिति नायमिक् प्रत्ययः । किंतूच्चारणार्थोऽयमिकारः । नलोपिनिर्देशोज्ञापकः । इकः कित्त्वान्नलोपे कृतेऽचेरित्यस्योक्तार्थे ज्ञापनात् । ननु पूर्वस्येति कस्माल्लब्धम् । उच्यते । दीर्घश्रुत्योपस्थितःस्वर एवात्र स्थानी शसादौ स्वरे इति लोपदीर्घयोर्निमित्तम् । सप्तमीनिर्देशात् पूर्वस्याऽव्यवहितस्य स्वरस्य दीर्घे प्राप्ते येन नाव्यवधानं तेन व्यवहितेऽपीति वचनप्रामाण्यात् चकारेण व्यवहितस्याप्यत्र दीर्घः । अंचेरिति लोपस्य विषयेऽतरंगोपीयमिति यकारो न अकृतव्यूहा इति परिभाषया । प्रतीचः । तिरोऽचतीति सहादेरिति तिरसस्तिरिः तिर्यङ् ॥

तत्त्वदीपिका–अंचेर्दीर्घश्चेति । लुप्तनकारनिर्देशात्पूजार्थसंग्रहइत्याशयेनाह । नलोपिनइत्यादि । अंचेरिति पाठे तु ज्ञापनासंभवः इकः कित्त्वेन सर्वथैव नलोपात् उच्चारणार्थ इकार इत्याद्याश्रयणे तु भवत्यपि पूर्वस्य

चेति शब्दाविति परसप्तम्यानिमित्तत्वेन पूर्वलाभः । न च चकारे व्यवधाने नेति वाच्यं। येन नाव्यवधानं तेन व्यवहितेपि वचनप्रामाण्यात् चकारैकवर्णव्यवधानेपि भवत्येव । अकृतव्यूहपरिभाषया पूर्वं न यत्नम् ।

मू०—तिरश्चादयः ॥ तिरश्चादयो निपात्यन्ते शसादौ स्वरे तद्धितयस्वरयोरीपीकारे च । तिरश्चा । तिर्यग्भ्याम् । तिर्यक्षु । उदीचः । उदग्भ्याम् । उदक्षु । पितरमञ्चतीति पित्र्यङ् । पित्र्यञ्चौ ।

सुबोधिनी—तिरश्चादयः । सिद्धरूपनिर्देशो निपातनम् । एते निपात्यंते ईपि ईकारे च । तिरश्ची । तद्धितस्य स्वरे यकारे च । तिरश्चीनः । उदीच्यः । तिरश्चादिरितिसूत्रणीयम् । आदिशब्दादुदीच इति । बहुवचनं तु व्यर्थम् । तृतीयस्याभावात् । पद्मादयः षोडशादेशाः न तु पृथक् शब्दा इति पक्षाश्रयणे तु वचनस्य सार्थक्यं बोध्यम् । उदंचतीति उदङ् ॥

तत्त्वदीपिका—तिरश्चादय इति । ननु मास्तु निपातनम् अंचतौ सहादेः सादिरिति सूत्रेण तिर्यादेशः स तु अल्लोपे निमित्ताभावे नैमित्तिकाभावादेव रूपसिद्धेरिति चेत्सत्यम् । अश्चतेर्निमित्तत्वेन अल्लोपेप्येकदेशविकृतन्यायेन तत्सत्त्वान्निमित्ताभावत्वाभावात् । तिरश्चादिरिति तु युक्तं तिरश्च उदीच इति शब्दद्वये प्रवृत्तिदर्शनात् तृतीयस्यादर्शनात् बहुवचनं व्यर्थमिति वृद्धाः ।

मू०—ऋतोदीर्घोन ॥ पितृचः । पित्रग्भ्याम् । पित्रग्भिः । पित्रक्षु सध्र्यङ् । सध्रीचः । सम्यङ् । समीचः । प्राङ् । प्राचः । पूजायान्तु प्रत्यञ्चः प्रत्यञ्चौ । प्रत्यङ्भ्याम् । प्रत्यंक्षु, प्रत्यङ्षु, प्रत्यङ्ख्षु, । उदश्चा उदङ्भ्याम् । तिर्यश्चः । तिर्यङ्भ्याम् । सम्यञ्चः । सध्र्यञ्चः । प्राञ्चः प्राञ्चा । सहादेस्सादिः । अमुमंचतीति अमुमुयङ् अमुमुईचः । अमुमुयग्भ्याम् । अदमुयङ् । अदद्र्यङ् । पूजायां तु अमुमुयंचः अमुमुयङ्भ्याम् अदमुयंचः । अदद्र्यंचः । मरुत् मरुद्भ्याम् । त्रितोनुम । न्सम्महतोऽधौ दीर्घश्शौच महान् । महान्तौ । महान्तः । हेमहान् ।

सुबोधिनी—ऋतो दीर्घोन । ऋकारस्य दीर्घो न भवति । लुप्ताकारनकारेंचतौ परेपि । ऋचः । सहांचतीति सहादेरिति सहस्य सध्रिः । सध्र्यङ् । समंचतीति सहादेरिति समः समिः । सम्यङ् । प्रकर्षेणांचतीति प्राङ् । पूजार्थस्यांचतेस्तु प्रत्यंचति पूजयतीति क्विपि पूजार्थांचतेरिति नलोपाभावः अत एव नुम् न । प्रत्यङ् । शसि नलोपाभावादकारलोपो न प्रत्यंचः । सुपि प्रत्यंच् सु इति स्थिते दिशामिति कुत्वात् प्राक् संयोगांतस्येति च लोपे नस्य कुत्वेन ङकारे च कृते शसे ङ्णोरिति कुक् षत्वं । प्रत्यङ्क्षु । शसे चपस्येति पक्षे खकारः । प्रत्यङ्ख्षु । कुगभावे प्रत्यङ्षु । एवं पूजार्थे तिर्यङ्ङादयः । विष्वग्देवयोश्चटेरद्र्यंचतावप्रत्यये । चाददसोग्रहणम् । अनयोरदसश्च टेरद्र्यादेशः स्यात् वप्रत्ययांतेंचतौ परे । अमुमंचतीति विग्रहे अदस अंच इति स्थिते अद्द्र्यादेशे अदद्रिअचइति । यत्वम् । अदसोसेर्दादुदोमः । असेरिति इकार उच्चारणार्थः । असकारांतस्यादसो दात्परस्य उदूतौ भवतः दस्य मश्च । उइति ह्रस्वदीर्घयोः समाहारः । ह्रस्वव्यंजनयोर्ह्रस्वो दीर्घस्य च दीर्घो भवति । असांतेयति किम् । अमुमात्मन इच्छति अदस्यति । दात्परस्येति किम् । अमुया इत्यत्रांतस्य यस्य माभूत् । दकाराकारयोर्दकाररकायोश्च मुत्वे अमुमुयङ् शसि अचेरित्यतोलोपे दीर्घे

च अमुमुईचः । मुत्वस्यासिद्धत्वान्न वत्वम् । अंत्यबाधेंत्यसदेशस्येति परिभाषां वदतां मते परस्य दकाररकारस्यैव मुत्वम् । अदस इति स्थाने षष्ठी । एवं हि षष्ठीनिर्दिष्टस्येति परिभाषोपतिष्ठते । अदसो योंत्यः स दात्परो यः सोदसोंत्यः एवमंत्यबाधेऽत्यसमीपस्य भवतीति दकाररकारयोर्मुत्वे अदमुयङ् । अः अकारः सेः सकारस्य स्थाने यस्य स असिरिति व्याख्याने त्यदाद्यत्वविषये एवमुत्वं नान्यत्रेति । पक्षे उभयत्र मुत्वं न । अदद्र्यङ् । वार्तिककृतोक्तं च । "अदसोद्रेः पृथङ्मुत्वं केचिदिच्छंति लत्ववत् ॥ केचिदंत्यसदेशस्य नेत्येकेसेर्हि दृश्यते ॥ १ ॥" अदसोदकाराकारयोरद्र्यादेर्दकाररकारयोश्च पृथङ्मुत्वं केचिदाचार्या इच्छंति लत्ववत् । यङतस्य चलीक्लृप्यते इत्यस्योभयोः कृपोरोलइत्यनेन यथा लत्वं तथेत्यर्थः । अंत्यसदेशस्य दकाररकारस्य मुत्वं केचिदिच्छंति । अः अकारः सेः सकारस्य स्थाने यस्य सोऽसिस्तस्यासेस्त्यदाद्यत्वविशिष्टस्यादसो हि मुत्वं दृश्यते इति केचिद्वदन्ति तन्मते उभयोर्मुत्वं न । त्यदाद्यत्वाभावात् । एवं चामुद्र्यङ् इति केषांचिदुदाहरणं तद्भाष्येऽनुक्तत्वादुपेक्ष्यमिति भावः ॥ इति चांताः ॥ मरुतौ पवनाऽमरौ इत्यमरः । महपूजायां मह्यते पूज्यते इति महान् ॥ कर्मणितृप्रत्ययः ऋदित्वान्नुम् न्सम्महत इति दीर्घः । सिलोपे संयोगांतलोपे च महान् ॥

तत्वदीपिका–ऋतइति । एतद्बीजं तु दीर्घग्रहणात् संज्ञापूर्वको विधिरनित्य इति ऋतो न दीर्घः । अमुमुयङिति अमुमंचतीति वाक्ये क्विपि अदस् अम् अंच क्विप् इति स्थिते कपोरित्यालोपे वेरिति वलोपे समासप्रत्यययोरिति अम्लोपे नामसंज्ञायां स्यादौ अदस् अंच सि इति स्थिते । अद्र्यादेशमुत्वे नलोपे नुमागमे सिलोपे नस्य ङत्वे न रूपसिद्धिः । अदमुयङ् अदद्र यङ् । इतिविकल्पास्त्वित्थम् उभयत्र मुत्वंलत्ववत् तथा चलीक्लृप्यते इत्यत्र लत्वादस्य म इत्यत्र अंत्यस्यदस्योति व्याख्यानेंऽत्यबाधेऽन्त्यस्य देशस्येति परिभाषामाश्रित्य परस्यैव मत्वं तत्रैवोक्तम् । केचित्तु दोम इति वक्तव्ये दस्येति सस्वरदकारोक्तिर्ज्ञापयति । त्यदाद्यत्वविषय एव मत्वं प्रकृते तदभावान्नेति । उक्तं च । अदसोद्रेः पृथक् मुत्वं केचिदिच्छंति लत्ववत् । केचिदन्त्यसदेशस्य नेत्येकेसेर्हि दृश्यते । अमुमुईचइति । संज्ञापूर्वस्य विधेरनित्यत्वान्नवत्वम् । यद्वा मुत्वस्यासिद्धत्वात् ॥

**मू०–द्विरुक्तानांजक्षादीनांचशतुर्नुम्नशौवा ॥ ददत् । एवं जक्षत् । जाग्रत् । दरिद्रत् । चकासत् । शासत् ।**

सुबोधिनी–द्विरुक्तानांजक्षादीनांचशतुर्नुम्नशौवा । द्विरुक्तधातुभ्यो जक्षादिभ्यश्च परस्य शतुर्नुम् न स्यात् शौ परे तु वा । ददातीति दाञः शतृप्रत्यये अप्लुहादेरित्यपो लुक् द्वित्वंच ह्रस्व इति पूर्वस्य ह्रस्वः । दादेरित्यालोपः । ददत् । एवं जक्षतीति जक्षत् । जागर्तीति जाग्रत् । दरिद्रतीति दरिद्रत् दरिद्रातेरित्यालोपः । चकास्तीति चकासत् । शास्तीति शासत् ॥

तत्त्वदीपिका–द्विरुक्तानामिति । आगमशास्त्रस्यानित्यत्वादिति भावः ।

**मू०–अत्वसोस्सौ ॥ अत्वन्तस्य धातुभिन्नासन्तस्य चोपधाया दीर्घो भवति सावधौ । भवान् । भवन्तौ । भवन्तः । हेभवन् । चन्द्रमाः । चन्द्रमसौ । अधात्वसन्तस्य किम् । चीवराणि वस्तेऽसौ चीवरवः । शत्रन्तस्य तु अत्वन्तत्वाभावान्न दीर्घः । भवन् । भवन्तौ । पचन् । दीव्यन् । धीमान् । हे धीमन् । धीमन्तौ । मघवान् । मघवन्तौ । मघवद्भ्यां । गुप्, गुब् । गुपौ । गुपः । गुब्भ्याम् । तादृक् । तादृशौ । तादृशः । तादृक्षु । एवं यादृगादयः ।**

सुबोधिनी—अत्वसोः सौ । अतुश्च अस् च तौ अत्वसौ तयोः । नोपधाया इत्यत उपधाया इत्यनुवर्तते । अतुरिति मतुवतुक्तवत्वादीनामवयवो गृह्यते केवलस्य प्रत्ययस्याभावात् । असत्वर्थवाननर्थकोपि अतुइत्युकारानुबन्धस्यानुकरणाच्छत्रंतस्य दीर्घो न। अत्वंतस्य धातोर्दीर्घः गोमंतमिच्छति गोमानिवाचरति वा इति इच्छार्थयांतात् आचारक्विबंताद्वा कर्तरि क्विप् ततो अल्लोपयलोपौ । गोमान् । अधातोरित्यनुवर्त्य असंते योज्यं तेनासंतस्य नाम्न उपधाया दीर्घोऽधौ सौ । अतएव चानर्थकस्याप्यसो ग्रहणम् । भातेर्डवतुरिति डवतुप्रत्ययांतो भवच्छब्दः । नित्यमपिनुमं बाधित्वा वचनसामर्थ्यादादौ दीर्घः ततो नुम् । भवान् । शसादौ महद्वत् । असंतस्तु चंद्रमसशब्दः । धात्वसंतस्योपधाया दीर्घो न। यथा। वस् आच्छादने क्विप् चीवरवः । भवतीति शतृप्रत्यांतस्याऽतुइत्युकारानुबंधत्वाभावाद्दीर्घो न । त्रितोनुमिति नुम् । भवन् । एवं पचतीति पचन् । दीव्यतीति दीव्यन् । अत्वंतस्याधातोर्यथा । धीरस्त्यस्येति धीमान् । अस्त्यर्थे मतुरिति मतुः । मघशब्दाद्वतुप्रत्यये मघवच्छब्दः । उपधादीर्घादि प्राग्वत् । हविर्जक्षिति निःशको मखेषु मघवानसाविति भट्टिः । वत्वंतत्वाभावे महेर्हस्य घो युगागमः कन्प्रत्ययश्चेत्येतत्रितये निपातनात्कृते मघवन्शब्दः। श्वादेरित्यत्रोक्त एव । ॥ इति तांताः ॥ गोपायतीति गुप् क्विबंतः । अयादयोऽनपीति वैकल्पिकत्वादिहायप्रत्ययाभावः । आयप्रत्ययपक्षे तु यत इत्यल्लोपे यलोपे च गोपा इति रूपं बोध्यम् ॥ इतिपांताः ॥ तमिवपश्यतीति हशेष्टक्सकाविति चकारात्क्विप् । आ सर्वादेरित्यात्वम् । दिशामिति कुत्वं तादृक् ।

तत्त्वदीपिका—अत्वसोः साविति । अतुश्च अस् च अत्वसौ तयोः । अतुरत्र प्रत्ययावयवः केवलस्यासंभवात् असतुवन्निरर्थकोपि । अतुग्रहणसामर्थ्यात्प्रथमं दीर्घः पश्चान्नुम् । अन्यथा तुग्रहणं व्यर्थं स्यात् । अत्वंतस्य धातोरपि । गोमन्तमिच्छन् गोमानित्यत्र यथा अधातोरित्यनुवृत्तं तु अनंतरत्वादस् इत्यनेनान्वेति इत्यभिप्रेत्याह अधात्वसन्तस्येति । धातुभिन्नासन्तस्येत्यर्थः ।

**मू०—नशेः ॥ को वा पदान्ते स्यादौ झसे च । नक्, नट्, नड् । नशौ । नशः । नग्भ्याम्, नड्भ्याम् । नक्षु, नट्सु । विट्, विड् । विशौ । विशः । स्पृक्, स्पृग्, स्पृशौ । स्पृशः । घृतस्पृक्, । उदकपूर्वस्य न कुत्वम् । उदकस्पृट् । उदकस्पृड्, उदकस्पृशौ । दधृक्, दधृग्, दधृषौ । दधृक्षु । रत्नमुट्, रत्नमुड् रत्नमुषौ । रत्नमुड्भ्यां । षष्शब्दो नित्यंबहुवचनांतस्त्रिषु सरूपः । जश्शसोर्लुक् । षट्, षड् ।**

सुबोधिनी—नशेः । नशेः कवर्गांतादेशो वा स्यात् स्यादौ झसे पदांते च । नश अदर्शने । क्विप् षत्वम् । जबत्वचपत्वे । नट्, नड् । कत्वे तु नक्, नग् । विश् प्रवेशने क्विप् । षत्वं जबत्वचपत्वे विट् विड् । घृतं घृतेन वा स्पृशतीति घृतस्पृक् । उदकपूर्वस्य न कुत्वं उदकपूर्वस्य स्पृशेस्तु दिशामिति कुत्वं न । उदकं स्पृशतीति षत्वं न । उदकस्पृट् ॥ इति शांताः ॥ ञिधृषा प्रागल्भ्ये । अस्मात् क्विप् द्वित्वम् । निपातनात् दिशामिति कुत्वम् । धृष्णोतीति दधृक् । मुष स्तेये । रत्नानि मुष्णातीति रत्नमुट् । जश्शसोरिति जश्शसोर्लुक् डत्वम् जबत्वचपत्वे । षट्, षड् । डत्वे षड्भिः । आमि ष्ण इति नुटि कृते षस्य डत्वं नस्य च ष्टुत्वम् ॥

**मू०—ड्णः ॥** डकारस्य णो भवति नामि परे षण्णाम् षट्सु षट्त्सु । परमषट् परमषड् । परमषण्णाम् । गौणत्वे तु प्रियषट् प्रियषषः प्रियषषाम् ।

सुबोधिनी—ड्णः । डकारस्य चपेष्वंतर्भूतत्वादपदांतत्वाच्च ञमेञमावेत्यस्याऽप्राप्तौ सत्यामारंभः । आगमा यद्गुणीभूता इति परिभाषया नुटःप्रत्ययावयवत्वात् प्रत्ययञमे इत्यनेन ञमत्वस्वीकारे व्यर्थमिदम् । नादिति धुटि षट्त्सु । तदंतेप्ययं विधिर्वांछितः । परमाश्च ते षट् च परमषट् तेषां परमषण्णां । षडर्थप्राधान्ये एव लुग्नुटौ न तु गौणत्वे । प्रियाः प्रियाणि वा षट् येषां ते प्रियषषः तेषां प्रियषषाम् ॥

तत्त्वदीपिका— ड्ण इति । ड्ण इति छेदः षशब्दस्य डत्वेप्रथमैकवचनमित्याशयेनाह । ष इति । संख्याया इत्यनुवृत्तेः षष्ठीनिर्दिष्टत्वादन्त्यस्यैव नाद्यस्येति भावः । संख्यायाः किं । सजुषाम् ।

**मू०—दोषांरः ॥** दोषादीनां रो भवति रसे पदान्ते च । दोषौ । शसादौवा दोषन् । दोष्णः । दोर्भ्याम् दोषभ्याम् ।

सुबोधिनी—दोषांरः । जबचपविसर्गाणामपवादः । बहुवचनमाद्यर्थम् । दाम्यतीतिदोः । दमेर्डोसिति डोस्प्रत्यये डित्वाट्टिलोपः । " भुजबाहूप्रवेष्टोदोरित्यमरः " पाददंतेति वा दोषन्नादेशः शसादौ अल्लोपइत्युपधालोपः णत्वं दोष्णः ।

तत्त्वदीपिका—दोषामिति । बहुवचनमाद्यर्थं । व्युत्पत्तिपक्षे ओसिसुप्रत्ययांतानां स्रोर्विसर्ग इति विसर्गेणैव सिद्धिस्तथापि सजुष्शब्दस्य परत्वदीर्घार्थम् तुसमिसोस्तुरत्वे दीर्घार्थं सूत्रकरणम् ।

**मू०—विसर्गनुम्स्थानिकानुस्वारव्यवधानेऽपि॥** क्लिलात्परस्य सस्य षः । दोःषु दोष्षु दोषसु । ध्वोर्विहसे । पिपठीः । पिपठिषौ । पिपठीर्भ्याम् । पिपठीःषु । विविट्, विविड् । विविक्षौ । विविक्षः । तट्, तड् । तक्षौ । तक्षः । गोरट् । गोरड् गोरक्षौ गोरक्षः । तक्षिरक्ष्योस्संयोगान्तलोपइत्येके । तक्, तग् । गोरक्, गोरग् ॥

सुबोधिनी—विसर्गनुम्स्थानिकानुस्वारव्यवधानेपि क्लिलात्परस्य सस्य षः । क्लिलादिति पंचमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनम् ।एतद्व्यवधानेपि आभ्यां परस्य षः स्यात् । सुपि रत्वविसर्गयोः कृतयोः शसे वेति विकल्पात् पक्षे सकारस्तस्य षत्वं सुपः सस्य तु ष्टुत्वं । दोष्षु । विसर्गपक्षे विसर्गनुमिति षत्वं दोःषु । नाम्नो न इति नलोपे दोष्सु । नुम्स्थानिकाऽनुस्वारेति व्याख्यानान्नेह सुहिन्सु । पुंसु । पिपठिषतेः क्विपि यत इत्यल्लोपे कृत्तद्धितेति स्याद्युत्पत्तौ पिपठिष् सि इति स्थिते परत्वाद्रेफे कृते सिलोपे च दीर्घः । पिपठीः। विश् प्रवेशने । अस्मात्सः नानिटिस इति गुणाभावः द्वित्वादिविवक्षिते क्विप् स्कोरिति कलोपः जबत्वचपत्वे विविट्, विविड् । तक्षतनूकरणे । अस्मात् क्विप् स्कोरिति कलोपे । तट्, तड् । गोरक्षतीति क्विप् । स्कोरिति कलोपे गोरट् । तक्षिरक्ष्योः संयोगान्तलोपइत्येके । स्कोरिति कलोपो न । किंतु संयोगांतलोप इत्यर्थः ।

तत्त्वदीपिका—पिपठीरिति । पठितुमिच्छति पिपठिषति पिपठिषतीति क्विपि रत्वेदीर्घे च पिपठीरिति ।

**मू०—कलोपकुत्वमसिद्धम्॥** पिपग्, पिपक् । पिपक्षौ । पिपक्षः । पिपक्षु।

एवं विवक् । दिधक् । सुपीः । सुपिसौ । सुपीःषु । एवं सुतूः । विद्वान् । विद्वांसौ विद्वांसः । हे विद्वन् ।

सुबोधिनी—कलोपे कुत्वमसिद्धम् । स्कोरिति कलोपे कर्तव्ये चोःकुरिति कुत्वस्यासिद्धत्वं वक्तव्यम् । अन्यथा स्कोरिति कलोपः स्यादित्यर्थः । पक्तुमिच्छतीति पिपक् संयोगांतलोपः । वक्तुमिच्छतीति विवक् । दह भस्मीकरणे दादेरिति घः । आदिजबानामिति धः । दग्धुमिच्छतीति दिधक् । ॥ इति शांताः ॥ । पिस गतौ । सुतू पेसतीति सुपीः । तुस खंडने । सुष्ठु तोसतीति सुतूः क्विंतः । वेत्तीति विदेर्वावसुरिति शतृस्थानेवसुः अदादित्वादपो लुक् । अपित्तादिर्ङिदिति ङित्त्वान्नोपधागुणः । उदित्वान्नुम् । न्सम्महतं इतिदीर्घः । संयोगांतलोपस्यासिद्धत्वान्नलोपो न । विद्वान् ॥

मू०—वसोर्व्वउः ॥ वसोर्व्वकारस्य उत्वम्भवति शसादौ स्वरे तद्धितयस्वरमतुष्वापीकारे च । विदुषः । विद्वद्भ्याम् । विद्वत्सु । सेदिवान् । वस्योत्वे इडभावः सेदुषः । सेदिवद्भ्याम् । ऊषिवान् । ऊषुषः । ऊषिवद्भ्याम् । शुश्रुवान् । नुधातोः शुश्रुवुषः । शुश्रुवद्भ्याम् । महच्छब्दसाहचर्य्याद्धातोर्न्स गृह्यते । नेह । सुहिन् । सुहिन्सौ । सुहिन्भ्याम् । सुहिन्सु । ध्वत् । ध्वसौ । ध्वसांस्से । ध्वद्भ्याम् । एवं स्रत् ।

सुबोधिनी—वसोर्वउः । अच्चास्थ्नामित्यतः शसादाविति वादीपोरित्यतः ईईपोरिति चानुवर्तते तद्धितयस्वरमतुष्विति च व्याख्यानात् । वसुक्वसोर्वकार उकारः स्यात् । तद्धिते । वैदुषः । अण् । वैदुष्याम् । यण् । मतौ विदुष्मान् । ईईपोर्विदुषी । सस्वरस्यवस्योत्वं । यवराणामितिपृथक्निर्देशात् । वसामिति दत्वं विद्वद्भ्याम् । ससादेति सदः क्वसुः द्विश्चेति द्वित्वं पूर्वस्येति हसादिःशेषः लोपः पचामित्येत्वपूर्वलोपौ । द्वित्वे सत्येकस्वरादितीट् । उदित्त्वान्नुम् । न्समहत इति दीर्घः । सेदिवान् । वस्योत्वे इडभावः । निमित्ताभावे नैमित्तिकस्याप्यभाव इत्युक्तत्वात् । वकाराभावे इडभावः । एवमुवासेति । यजामिति संप्रसारणं णबादौ पूर्वस्येति पूर्वस्य संप्रसारणं दीर्घत्वं षसादेरिति षः ऊषिवान् । शुश्रावेति शुश्रुवान् । नुधातोरित्युव् शुश्रुवुषः । सुष्ठु हिनस्तीति न्सम्महतइति सूत्रे महत्साचर्याद्धातोर्न्सतस्य न दीर्घः अधातोरित्यनुवृत्तेर्वा । ततश्च संयोगांतलोपस्यासिद्धत्वान्नोपधादीर्घः । सुहिन् । टनादिति वा धुट् सुहिन्त्सु । ध्वंसते इति ध्वत् । स्रंसुध्वंसुअवस्रंसने ध्वंसुगतौच । आभ्यां क्विप् नोलोप इति न । लोपः वसामिति दत्वं ध्वद्भ्याम् ॥

तत्त्वदीपिका—वसोर्व उरिति । अत्र वसुक्वसोः सामान्यग्रहणम् । एकानुबंधग्रहणे द्व्यनुबंधकस्य ग्रहणं नेति परिभाषा तु नेहाश्रीयते । उकारसहितस्य विधानात् । तथाहि विदेर्वसुरिति सूत्रेण शतुर्वसुरादेशो विधीयते तत्र स्थानिनः शतुः ऋत्वादेव त्रित्कार्यं सिद्धे पुनरादेशे उदित्करणं व्यर्थमिति ज्ञापयति । वसुग्रहणेन क्वसोरपि ग्रहणं यथास्यादिति । अल्लोप इति सूत्राच्छसादाविति लभ्यते तत्रादिशब्दः प्रकारे तेन णादिग्रहेपीत्याह । तद्धितेत्यादि ।

मू०—पुंसोऽसुङ् ॥ पुंसोऽसुङादेशः पुंसि पंचसु शौच । पुमान् । पुमांसौ पुमांसः । हेपुमन् । पुंसः । पुंभ्याम् । पुंसु । वेधाः । वेधसौ । हेवेधः । वेधोभ्याम् ।

सुबोधिनी–पुंसोऽसुङ् । सोनःपुंस इत्यतो मंडूकप्लुत्या पुंस इत्यनुवर्तते । न्सम्महत इत्यतः सिंहावलोकितन्यायेन शावित्यपकृष्यते पुंलिंगस्य पुमश्शब्दस्याऽसुङ्स्यात् पंचसु । ङित्वादंतादेशः । पतेर्डुमसुरित्यौणादिकडुमसुप्रत्ययस्योदित्वात् तेनैव नुम्सिद्धेः असुङ उकार उच्चारणार्थः । शौ प्रियपुमांसि । अधावित्युक्तत्वात् न्सम्महत इति दीर्घः । हेपुमन् । सुपि संयोगांतलोपे मोनुस्वारः नुम्स्थानिकाऽनुस्वारव्यवधानेपीत्युक्तत्वान्न षत्वम् । पुंसु । विधाञो वेधचेत्यसुप्रत्ययः । अत्वसोरिति दीर्घः । वेधाः । विश्वसृट् ॥

तत्त्वदीपिका–पुंसोऽसुङिति । अत्र न्सम्महत इति सूत्रात्सिंहावलोकितेन शौचेत्यपकृष्यते । सोनः पुंस इत्यतो मंडूकप्लुत्या पुंस इत्यनुवर्तते ॥ उकारस्तूच्चारणार्थः पुंसोडुमसुन्निति प्रत्यये ङित्वेन नुम् सिद्धेः पुंसः पुमांसितिसिद्धेऽसुङ्करणमन्यतोऽपिविधानार्थम् । तेन जराशब्दे सिद्धम् । पुंस्विति संयोगांतलोपे मोनुस्वारः नुम्विसर्गेति न षत्वं । नुम्स्थानिकानुस्वारस्यैव ग्रहणात् ।

**सू०–उशनसाम् ॥ उशनस्पुरुदंशस्अनेहसां सेर्डा । उशना; उशनसौ । उशनसः । उशनसोधौनान्तताअदन्तताचावाच्या ॥ हेउशनन्, हेउशन, हेउशनः उशनोभ्याम् । उशनस्सु ।**

सुबोधिनी–उशनसां । बहुवचनमाद्यर्थं । सेर्डाधिरित्यनुवर्तते । "उशनाभार्गवःकविरित्यमरः" । धौनांतत्वे सांतत्वे च रूपत्रयं भवति । उक्तं च संबोधनइत्यादि । सांतं । सस्य नकारादेशे नांतं सस्य लोपेऽदंतं इगंते इदंतं उदंते ऋदंते च क्लीबे धौ गुणमिति । पुरुबहुदंशतीति पुरुदंशा इंद्रः । नञिहनएहचेत्यसुप्रत्यये अनेहाः कालः ॥

तत्त्वदीपिका–उशनसामिति । बहुवचनमाद्यर्थम् । अत्राहुः । उशनेत्यत्र संज्ञापूर्वकत्वान्नोपधाया इति दीर्घो नेति । अत्रेदमवधेयम् । इयं शंका टिलोपे कृतेऽकृते वा । नाद्यः । तत्र नान्तत्वाभावात्सांतस्यैव दर्शनात् द्वितीयेपि नान्तस्य नाम्न इति व्याख्यानात् । तत्र नित्यमिति संबंधात् नित्यं नाम्न इति लाभात् प्रकृते तदभावादेव नेति विचारः ।

**सू०–सौसः ॥ अदसो दस्य ससौ ।**

सुबोधिनी–सौसः । मत्वापवादः ॥

तत्त्वदीपिका–सौ स इति । अत्र त्यदादेष्टेरिति सूत्रात्त्यदादेरित्यस्यानुवृत्तेर्विवरणे त्यदादेर्दस्येत्येवोचितं नत्वदस इति । यदि तु त्यदादेरदस इतिव्याख्यायते तदा न दोषः । त्यदादेः किं । वन्दः नन्दः । दस्य किं । यः । सौ किं । अमूनि । स इत्यकारसहितत्वान्नाभ्यासस्य ।

**सू०–सेरौः ॥ अदसस्सेरौर्भवति । असौ । दस्यमः ।**

सुबोधिनी–सेरौः । अदसः परस्य सेरौः स्यात् । असौ । अत्र वा शब्दमनुवर्त्य व्यवस्थितविकल्प आश्रयणीयस्तेन अकसाहितस्यादसः सेरौत्वमौत्वाभावे सात्परस्य उत्वं च वक्तव्यम् । असुकौ असुक इति । स्त्रियां असुकौ । औत्वाभावे असुका असुक इति । अमुकी इति च प्रयोगो असाधुरेव । अथ कथमसुकगोत्रस्याऽमुकशर्मण इति अपभ्रंश एवायमिति प्रांचः । अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये एव प्रयुज्यते इत्यन्ये ॥

तत्त्वदीपिका–सेरौरिति । ननु स्त्रियामकारान्तस्यासकाविति कथम् । काप्यत इतीत्वेन भवितव्यमिति चेत्सत्यं । डरौडिदित्यतो डिदित्यनुवृत्तेर्डित्वाट्टिलोपे रूपसिद्धेः । अथ वेत्यनुवृत्तेस्तस्य व्यवस्थितत्वाश्रयणात् साकाददसः सेरौत्वंना । औत्वाभावे सावुत्वं च । असुकः । तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात् साक-

स्यापि त्यदादिकार्यम् । कथममुकगोत्रस्य अमुकगोत्र इति चेत् अपभ्रंश एवायमिति दीक्षिताः । रामाश्रमास्तु अमुकशब्दोऽव्युत्पन्नं नाम वृत्तिविषये प्रयुज्यते ॥ केवलस्य तु अदकस्शब्दस्यैव प्रयोगः अमुक इत्येकवचने तु यदि शिष्टप्रयोगस्तदा साधुर्नो चेत् असाधुरेवामुकशब्दस्य तु वृत्तिविषये प्रयोगाभ्युपगमो युक्त एवेति । यद्यपि सामान्येऽकः स्यादित्यकच्चेति व्युत्पादितस्तथा तत्तस्यप्रयोगः समास एव न स्वतंत्रस्येत्याहुः। तत्रेदमवधेयम् । इत्थं हि महानिबंधानामृषिवाक्यानां च गतौ सत्यां नाप्रामाण्यमापादनीयमिति स्वोक्त्यैव शिष्टप्रयोगनिश्चये पुनर्यदि विशिष्टप्रयोग इत्यादिसंशयोक्तिर्विरुद्धेति ।

मू०–मादू ॥ अदसोमात्परस्य उश्च ऊश्च भवति । अमू जलि ।

सुबोधिनी–मादू । उश्च ऊश्चानयोः समाहार ऊ । संज्ञापूर्वकत्वान्न ह्रस्वः ॥

तत्त्वदीपिका–मादू इति । मात् उऊइति छेदः समाहारे ह्रस्वत्वापत्तेः।यद्वास्तु समाहारः ह्रस्वत्वस्य तु संज्ञापूर्वकत्वात् अनित्यत्वात् । अत्राहुः । मादिति पंचमीनिर्देशात्परः स्थानी लभ्यते स च हसः स्वरश्च मात्परस्य हसस्यासंभवात्स्वर एव गृह्यत इति । अत्रेदमवधेयम् । अमुमुयङ्ङित्यत्र मात्परस्य रेफरूपहसस्योत्वदर्शनात् । हसस्यासंभवात्स्वर एव गृह्यत इत्युक्तिर्निर्मूला । तथा चोक्तं दीक्षितैः । ह्रस्वव्यंजनयोर्ह्रस्वः दीर्घस्य तु दीर्घइति । व्यंजनस्यासंभवे कथमिदं संगच्छते इति ।

मू०–एरीबहुत्वे ॥ अदस एकारस्येर्भवति बहुत्वे सति । अमी । अमुम् । अमू । अमून् । अमुना । अमूभ्याम् । अमीभिः । अमुष्मै । अमुष्मात् । अमुष्य । अमुयोः । अमीषाम् । अमुष्मिन् । अमुयोः । अमीषु ।

॥ इति हसांताः पुंलिंगाः ॥

सुबोधिनी–एरीबहुत्वे । अदसः किं । ते । एः किम् । अमून् । बहुत्वे किम् । अमुयोः ॥ इति हसांताः पुंलिंगाः ।

तत्वदीपिका–एरीबहुत्व इति । बहुत्वेकिं । अमुयोः ।

श्रीरामकरपौत्रेण लोकेशकरशर्म्मणा ।
कृतायामिह टीकायां पुंलिंगोगाद्धसांतकः ॥
इति हसान्तपुंलिंगविवरणम् ॥

मू०–नहोधः ॥ नहो हस्य धो भवति धातोर्झसे परे नाम्नश्च रसे पदान्ते च । उपानत्, उपानद् । उपानद्भ्यां । उपानत्सु । उष्णिक्, उष्णिग् । उष्णिहौ । उष्णिहः । उष्णिग्भ्याम् । उष्णिक्षु । द्यौः । दिवौ । द्युभ्यां । द्युषु । गीः । गिरौ । गीर्भ्याम् । गीर्षु । एवं पुर् धुरादयः । चतस्रः । प्रियचत्वाः । प्रियचत्वारौ । प्रियचत्वारः । हे प्रियचत्वाः ।

सुबोधिनी–नहोधः । ढस्यापवादः । होढ इत्यतो हस्येत्येनुवर्तते । उपपूर्वान्नहेः क्विप् नहिवृतीति पूर्वपदस्य दीर्घः । उपनह्यते इति उपानत् । उत्पूर्वात् ष्णिहप्रीतावित्यस्मात् क्विप् । निपातनादलोपषत्वे दिशामिति हस्य घः । जबत्वचपत्वे । उष्णिक्, उष्णिग् । दिवऔ इत्यौत्वे द्यौः । उरसे इत्युत्वे द्युभ्याम् । गॄनिगरणेऽस्मात् गृशब्दे इत्यस्माद्वा । क्विप् ॠतइतीर् य्वोर्विहसे इति दीर्घः । गीः । एवं पॄपालनपूरणयोः पोरुरित्युर् । पूः । धुर्वीहिंसायाम् । क्विपि वयोरिति वलोपः । धूः । त्रिचतुरोरिति चतस्रादेशः । न तिसृचतस्रोरिति न दीर्घः । चत-

सृणाम् । प्रियाश्चत्वारोयस्याः सेति यदा स्त्रियां मुख्याविदयुक्तत्वान्न चतस्रादेशः । चतुरामित्याम् । प्रियचत्वाः । धावामित्यम् । हे प्रियचत्वः ॥

तत्त्वदीपिका—नहोध इति । तथदानामन्यतमस्तु नोक्तः नद्ध इत्यसिद्धेः । उपानादिति उपपूर्वान्नहेः क्विपि नाहिवृतीत्यादिना पूर्वस्यात्वम् । अत्रेदं विभाव्यं । सुष्ठु अनड्वानस्यामिति बहुव्रीहौ स्वनड्वानित्येव न तु नदादित्वादीपि स्वनड्वाहीति । अनुपसर्जनादिति तन्निषेधात् । उष्णिगीति उत्पूर्वात्स्णिहधातोरितिवयस्मात्क्विपि निपातनादलोपप्पत्ते । गीरिति । गृनिगरणेशब्दे च क्विपि । ऋत इरिति इत्वं र्वोर्विहस इति दीर्घः पूरिति पृपालनपूरणयोरित्युत्वम् ।

**मू०—इयंस्त्रियाम्** ॥ इदमः स्त्रियामियं सौ । इयम् । इमे । इमाः । अनया । आभ्याम् । आभिः । अस्यै । अस्याः । अनयोः । आसाम् अस्याम् । आसु । अन्वादेशे । एनाम् । एने । एनाः । एनया । एनयोः । स्रक् । स्रग् । स्रजौ स्रग्भ्याम् । स्रक्षु । समित्, समिद् । समिधौ । समिधः । समिद्भ्याम् । समित्सु । स्या । त्ये । त्याः । एवं । तद् । यद् एतद् । किं । वाक् । वाचौ । वाग्भ्याम् । वाक्षु । ककुप्, ककुब् । ककुभौ । ककुब्भ्याम् । ककुप्सु । त्वक्, त्वग् । त्वचौ । त्वचः । त्वचम् । त्वग्भ्यां । ऋक्, ऋग् । ऋचौ । ऋचः । ऋचम् । ऋग्भ्याम् । ऋक्षु । अप्शब्दो नित्यं बहुवचनान्तः । आपः । अपः ।

सुबोधिनी—इयंस्त्रियाम् । इदमोयमित्यतः इदम् इत्यनुवर्तते, सौस इत्यतःसाविति च । त्यदाद्यत्वे आप् मत्वं औरितीत्वम् । इमे । अनटौ सोरित्यनादेशः । टौसोरित्येत्वम् । अनया । स्म्यइत्यत्वम् । आभ्याम् । अन्वादेशे इदमेतदोरित्येनत् । शेषं सर्ववत् । सृजेः क्विप् अमागमश्च निपातितः । दिशामिति कुत्वम् । स्रक्, स्रग् । इध्ममेधः समित् स्त्रियामित्यमरः । त्यदाद्यत्वे आप् । त इति सः । स्या । वचः क्विपि वचीति क्विपि परे दीर्घो संप्रसारणं च । चो कुरिति कः । वाक् । आप्नोतेर्ह्रस्वश्चेति ह्रस्वश्चात् क्विप न्सम्महत इति दीर्घः आपः ॥

तत्त्वदीपिका—इयं स्त्रियामिति । अत्रापि स्त्रियामिति ग्रहणं लुकि न तन्निमित्तस्यानित्यत्वे लिंगम् अन्यथा इदमित्यत्र सेरभावादेनाप्राप्तौ स्त्रियां ग्रहणमनर्थकं स्यात् ।

**मू०—भिदपाम्** ॥ अप्शब्दस्य दत्वं भवति भकारादौ विभक्तौ । अद्भिः । अद्भ्यः । अपाम् अप्सु । दिक्, दिग् । दिशौ । दिशः । दिग्भ्याम् । दिक्षु । त्विट्, त्विड् । त्विषौ त्विषः । दृक्, दृग् । दृशौ । दृशः । सह जुषत इति सजूः । सजुषौ । सजुषः । सजूर्भ्याम् । सजूःषु । आशीः । आशिषौ । आशीर्भ्यां । आशीःषु । असौ । अमू । अमू । अमुम् । अमू । अमूः । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमुष्या अमूषाम् । अमुष्याम् । अमूषु ॥ इति हसान्तास्त्रीलिंगाः ॥

सुबोधिनी—भिदपाम् । अपामिति बहुवचनं चिंत्यम् । अष्टनः त्रेरितिवदेकवचनमेव युक्तम् । दिशेः क्विप् । दिशामिति कुत्वं । दिक्, दिग् । त्विष्दीप्तावित्यस्मात् क्विप् । षोड इति डत्वं । त्विट् दृशेः क्विप् । दिशामिति कुत्वं । दृक् । जुषीप्रीतिसेवनयोरित्यस्मात्

क्विप् दोषामिति रः र्वोरितिदीर्घः सजूर्मित्रम् । शसेवेति वासः विसर्गनुमस्थानिकेतिषत्वं सजूःषु । ष्टुत्वं । सजूष्षु । आशासः क्वावित्युपधाइत्वम् घसादेरिति षः आशीः । त्यदाद्यत्वे आप् । सौस इति दस्य सः सेरौरित्यौत्वं । असौ । दस्य म इति मत्वं । औं इतीत्वम् एत्वं मादूइत्यूत्वम् । अमू ।

॥ इति हसान्ताः स्त्रीलिंगाः ॥ ५ ॥

**तत्त्वदीपिका-भिद्पामिति** । भिद् अपां इतिच्छेदः । बहुवचनं चिंत्यं । सुष्ठु आपो यस्मिन्स स्वाप् । स्वद्भ्यामित्यत्रेष्टत्वात् । प्राधान्यद्योतनायेत्यपि न स्ववसस्वतवसमासां वैदिकानां संग्रहार्थमाद्यर्थं बहुवचनमिति माधवः । तन्नेति रामाश्रमः।अत्र लौकिकानामेव प्रतिपाद्यत्वेन वैदिकप्रतिपादनस्यायुक्तत्वात् । अन्यथा अन्येषामपि व्युत्पाद्यत्वमिति न । नहि वैदिकव्युत्पादने यवनभाषायामिवापराधः । यदपि अन्यथेत्यादि तत्रापि देवासः देवेभिः गोनामित्यादीनां व्युत्पादनदर्शनात् कथं न व्युत्पाद्यत्वम् । यदपि लौकिकप्रयोगनिष्पत्तये इति मूलविरोधाच्चेति । तत्रापि न मात्रपदं नवा एवपदं वैदिकव्यवच्छेदकं दृष्टमस्ति । नच लौकिकपदाद्वैदिकनिरास इति वाच्यम् । लौकिकानां बहूनां व्युत्पादनेन तद्ग्रहणस्योचितत्वात् छत्रिणो गच्छंतीतिवत् यदि माधवमतखंडने आग्रह एव । तदा इत्थम् । संज्ञिनिर्देशप्रथममुचितेतिविपरीतनिर्देशादन्यत्रापीति वैदिकानां सिद्धिः । वस्तुतस्तु भ्यपोदिति सूत्रणीयम् । लाघवात् । वैदिकानां तु छंदसि दृष्टानुविधिरिति दिक् । वृद्वत्यनुवृत्तावपि विभक्तिविपरिणामक्लेशनिवृत्त्यर्थग्रहणम् । आशिषाविति । आशासः क्वावुपधायाइतीत्वे घसादेरिति षत्वम् ।

श्रीविद्यानगरस्थायिलोकेशकरशर्म्मणा ।
विहितायां हि टीकायां स्त्रीलिंगेगाद्धसांतकः ।

इति हसांतस्त्रीलिंगविवरणम् ।

**मू०—स्वनडुत्, स्वनडुद् । स्वनडुही । स्वनड्वांहि । पुनस्तद्वत् । शेषंपुंवत् । वाः वारी । वारि । वार्भ्याम् । वार्षु । ऊरसे । विमलद्यु । विमलदिवी । विमलदिवि । किम् । के । कानि । इदम् । इमे । इमानि । अन्वादेशे एनत् । एने । एनानि । ब्रह्म । ब्रह्मणी । ब्रह्माणि । हे ब्रह्मन् हे ब्रह्म । अह्नः ॥ अहन् शब्दस्यसो भवति रसे पदांते च । अहः । अह्नी, अहनी । अहानि । अह्ना । अहोभ्याम् । कर्म्म कर्म्मणी । कर्माणि । एवं चर्म्मन् वर्म्मन् धन्वनादयः । दण्डि । दण्डिनी । दण्डीनि । स्रग्वि । स्रग्विणी । स्रग्वीणि । वाग्मि । वाग्मिनी । वाग्मीनि । बहुवृत्रह । बहुवृत्रघ्नी, बहुवृत्रहणी । बहुवृत्रहाणि । बहुपूष । बहुपूष्णी,बहुपूषणी । बहुपूषाणि । बह्वर्य्यम । बह्वर्य्यम्णी, बह्वर्य्यमणी बह्वर्य्यमाणि । असृक् । असृजी । असृंजि । शसादौ वाऽसन् असानि । अस्ना । असभ्याम् । ऊर्क् । ऊर्जी । ऊर्न्जि ।**

सुबोधिनी-सुष्ठु अनड्वान् यस्मिन् तत् वसामिति दत्वं । स्वनडुत् । शौअनडुहश्चेत्याम् । नुमयम इति नुम् । स्वनड्वांहि । टादौ पुंवद्रूपं यमांतत्वान्न नुम् । वारि । विमला द्यौर्यस्मिन् तद्विमलद्यु । औपरतोंतर्वर्तिनीं विभक्तिमाश्रित्य पूर्वपदस्येवोत्तरखंडस्यापि पदसंज्ञायां प्राप्तायामाह उत्तरपदत्वे चापदादिविधौ प्रत्ययलक्षणं नेति । उत्तरशब्देनोत्तरपदमुच्यते । उत्तरपदस्य पदत्वव्यपदेशे कर्तव्येप्रत्ययलक्षणं न भवतीत्यर्थः । पदादिविधौ तु प्रत्ययलक्षणं भवति । पदत्वाभावादुत्वं न विमलदिवी । लुकि नेति त्यदाद्यत्वं न । किम् ।

एवमिदम् । इदमेतदोरित्येनदादेशे एनत् । वेङ्योरित्यलोपो न । वकारमकारांतसंयोगा-दुत्तरस्य नेति निषेधात् । ब्रह्मणी धौनपुंसकानामिति वा नस्य लोपः । हे ब्रह्मन् हे ब्रह्म । अह्नः नस्य विसर्गविधानं युक्तम् । सस्यापि विसर्गविधानावश्यकत्वात् । तदंतेपीष्टं सत्वं दीर्घाणि अहानि यस्मिन् स दीर्घाहाः निदाघः । दीर्घाहन् सि इत्यत्र हसेप इति सिलोपः । नोपधाया इति दीर्घे च कृते ततः सकारः वेङ्योरिति वाऽल्लोपः । अह्नी अहनी । अल्लोपः स्वरे इत्यल्लोपः अह्ना । भ्यामि सत्वे कृते विसर्गः । हवे इत्युत्वं औत्वं च । अहोभ्यां । दंडोस्यास्तीति मांतोपधादितीन् । नाम्नो न इति नलोपः । दंडि । इनामिति दीर्घः । दांडिनी। स्रगस्यास्तीति विन् स्रग्वि । वागस्यास्तीति ग्मिन् वाग्मि । बहवो वृत्रहणो यस्मिन् तत् नाम्नो न इति नलोपः बहुवृत्रह । वेङ्योरित्युपधालोपे हनोघ इति घः बहुवृत्रघ्नी । अल्लोपाभावे बहुवृत्रहणी । इनामिति दीर्घः । बहुवृत्रहाणि । बहवः पूषाणो यस्मिन् तत् । बहुपुष । बहवोऽर्यम्णो यस्मिन् तत् । बह्वर्य्यम । अस्यतेरौणादिके ऋज् प्रत्यये असृज् चोः कुरिति कुत्वम् । असृक् । पाददंतेत्यसन् । अल्लोपः स्वरे इत्यल्लोपे । अस्ना । ऊर्जतीति ऊर्क् । शौ ऊनूर्जि नरजानां संयोगः बहव ऊर्जोयस्मिन् तत् । बहूर्क् ॥

तत्त्वदीपिका–अह्न इति। स्रोविसर्गे इत्यतो विसर्ग इत्यनुवर्त्तते । कश्चित्तु सस्ताविल्यतः समनुवर्त्य तमे-वव्याचित । तन्नेति रामाश्रमः । सस्यापि विसर्गविधानावश्यकत्वेन विसर्गविधानस्यौचित्यात् । वस्तुतस्तु स-स्यैवाव्यवहितत्वेन तदनुवृत्तेरेवौचित्यं युक्तं । क्षत्यभावात् । दीर्घान्यहानि यस्मिन्निदाघे इतिविग्रहे दीर्घाहन् सि इति स्थिते हसेप इति सिलोपे नोपधाया इति दीर्घे पश्चादह्नइति विसर्गः दीर्घाहाः धौत्वधाविति निषेधाद्दीर्घा-भावे विसर्गएव हे दीर्घाहः ।

**सू०–बहूर्जोनुम्प्रतिषेधः ॥** अन्त्यात्पूर्व्वोवानुम् । बहूर्जि । बहूर्ञ्जि । त्यत् । त्ये । त्यानि । तत् । ते । तानि । यत् । ये । यानि । एतत् । एते एतानि । अन्वादेशे एनत् । एने । एनानि । बेभित् । बेभिदी । बेभिदि ।

सुबोधिनी–बहूर्जोनुम्प्रतिषेधः । अन्त्यात्पूर्वो वा नुम् । बहूर्जशब्दस्य भाष्यमते नुम् । केतदोरित्येनदादेशः । एनत् । बेभिद्यते इति बेभित् । यङंतात् क्विप् ॥

तत्त्वदीपिका–बहूर्जइति । नरजानां संयोगः । सौ न नुमिति । वानुवृत्तेर्व्यवस्थितत्वादिति भावः ।

**सू०–सयङन्तस्यशौनुम्न ॥** चेच्छित् । चेच्छिदी । चेच्छिदि । “गवाक् शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ॥ असन्ध्यवगमाल्लोपैर्नवाधिकशतम्मतम् ॥ स्वमलुप्सु नव षड्भादौ षट्के स्युस्त्रीणि जश्शसोः ॥ चत्वारि शेषे दशके रूपाणीति विभावय ॥ गवाक्, गवाग्, गोअक्, गोअग्, गोक्, गोग्, गवाङ्, गोअङ्, गोङ्, । गोची, गवाश्ची गोअश्ची, गोश्ची । गवाञ्चि, गोअञ्चि, गोञ्चि । गवाक्षु, गोअक्षु गोक्षु, गवाङ्क्षु, गोअङ्क्षु, गोङ्क्षु, गवाङ्ख्षु, गोङ्ख्षु । तिर्य्यक् । तिरश्ची । तिर्य्यश्ची । तिर्य्यङ् । तिर्य्यञ्ची । तिर्य्यञ्चि। यकृत् । यकृती । यकृंति, यकानि । यक्ना, यकृता । यकभ्यां । यकृद्भ्याम् । एवं शकृत् । ददत् । ददती । ददति, ददन्ति । एवं जाग्रदादयः । तुदत् ।

सुबोधिनी–सयङंतस्यशौनुमून । सश्च यङ् च सयङौ सयङावंते यस्य स सयङंतस्तस्य सयङंतस्य नाम्नो नुम् न शौ परे । बेभिदि । चेच्छिद्यते इति चेच्छित् । शौचेच्छिदि । सप्रत्ययांतस्य शौ पिपठिषि । "जायंते नव सौ तथाऽमि च नव भ्याम्भिस्भ्यसां संगमे षट्संख्यानि नवैव सुप्यथ च सि त्रीण्येव तद्वच्छसि ॥ चत्वारीत्यवचत् सु कस्य विबुधाः शब्दस्य रूपाणि तज्जानंतु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोत्रावधिः ॥ १ ॥ राजसभायामिति श्लोकः केनचित् कविनोक्तस्तदा कश्चित्पंडितः श्लोकद्वयेन तमुत्तरमाह । श्लोकः । "गवाक्शब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः ॥ असंध्यगागमाल्लोपैर्नवाधिकशतं मतम् ॥१॥ "व्याख्या । गवाक् शब्दस्य रूपाणि अर्चागतिभेदतः पूजागत्यर्थभेदेन नवाधिकशतं बोध्यानि । "विंशत्याद्याः सदैकत्वे संख्याः संख्येयसंख्ययोः" इत्युक्तत्वादेकत्वं शते । अंचेर्गतौ नस्य लोपः पूजायां तु नेत्याशयः । कीदृशम् । असंध्यगागमाल्लोपैर्मतं गोएवेत्यगागमेन गोवेति प्रकृतिभावाल्लोपाभ्यां वाचार्याणां मननविषयीभूतम् । उक्तसंख्यामाह । प्रत्येकं स्यम्सुप्सु नव रूपाणि स्युः । भादौ षट्के षट् । जश्शसोस्त्रीणि । शेषे दशके प्रत्येकं चत्वारि । इति नवाधिकशतं रूपाणि त्वं विभावय जानीहि । शसेचपस्येति वार्तिकमनाश्रित्योक्तमन्यथा त्रीणि रूपाणि वर्द्धंते इत्यर्थः ॥ ३ ॥ गामंचतीति विग्रहे क्विप् गतौ नलोप इति नलोपः । गोअच् सि इति स्थिते अगागमे चोः कुरिति कुत्वम् । गवाक् १ गवाग् २ प्रकृतिभावे गोअक् ३ गोअग् ४ अल्लोपे गोक् ५ गोग् ६ पूजायां नस्य कुत्वेन ङः गवाङ् ७ प्रकृतिभावे गोअङ् ८ लोपे गोङ् ९ अम्यप्येतानि रूपाणि । औपरतः अचेरित्यल्लोपे गोची १ पूजायां तु गवांची २ गोअंची ३ गोंची४ शौ नुमयम इति नुम् । गतिपूजनयोस्त्रीण्येव सादृश्यात् । गवांचि १ गोअंचि २ गोंचि ३ । टापरतः अचेरित्यल्लोपः । गोचा १ पूजायाम् गवांचा २ गोअंचा ३ गोंचा ४ । भ्यामि गवाग्भ्याम् १ गोअग्भ्यां २ गोग्भ्याम् ३ पूजायां गवाङ्भ्याम् ४ गोअङ्भ्याम् ५ गोङ्भ्याम् ६, भिसि परे गवाग्भिः २ गोअग्भिः गोग्भिः, ३ पूजायां गवाङ्भिः ४ गोअङ्भिः ५ गोङ्भिः ६ । ङे परतः अचेरित्यलोपः । गोचे १ पूजायां गवांचे २ गोअंचे ३ गोंचे ४ । भ्यामि प्राग्वत् । भ्यसि गवाग्भ्यः १ गोअग्भ्यः २ गोग्भ्यः, ३ पूजायां गवाङ्भ्यः ४ गोअङ्भ्यः ५ गोङ्भ्यः ६ । ङसौ गोचः १ पूजायां गवांचः २ गोअंचः ३ गोंचः ४ । भ्यामि भ्यसि च प्राग्वत् । ङस्परतो ङसिवत् । ओसि गोचोः १ पूजायां गवांचोः २ गोअंचोः ३ गोंचोः ४ । आमि गोचाम् १ पूजायाम् गवांचाम् २ गोअंचाम् ३ गोंचाम् ४ ङौ गोचि १ पूजायां गवांचि २ गोअंचि ३ गोंचि ४ । ओसि च गोचोः१पूजायाम् गवांचोः२ गोअंचोः ३ गोंचोः ४ । सुपि गवाक्षु १ गोअक्षु २ गोक्षु ३ । पूजायाम् शसे ङ्णोरिति ङांतानां कुक्पक्षे गवाङ्क्षु ४ गोअङ्क्षु ५ गोङ्क्षु ६ । कुगभावे गवाङ्षु ७ गोऽङ्षु ८ गोअङ्षु ९ । एवं नवाधिकशतं रूपाणि कुक्पक्षे शसेचपस्येति ककारस्य खकारेण त्रयाणामाधिक्यं ज्ञेयम् । अन्यत्र तु कुत्वस्यासिद्धत्वान्न खकारः । एवं द्वादशाधिकम् तिरोंचतीति नो लोप इति नलोपः चोः कुरिति कुः तिर्यक् । सहादित्वात्तिरिः । औपरतः तिरश्चादय इति तिरश्चः । तिरश्ची । शौ नुमयम इति नुम् । तिर्यंचि । पूजायां तिर्यङ् । यकृत्कालखंडं । शकृत् पुरीषं । शसादौ पाददंतेति यकन्शकन्नादेशौ वा । ददिति पुंलिंगे उक्त एव । द्विरुक्तानां जक्षादीनां चेति वा नुम् । ददंति, ददति वा ॥

**तत्त्वदीपिका**–गवाग्शब्दस्येत्यादि । अर्चागतीत्यादि । अर्चा पूजा गतिर्गमनं तयोर्भेदस्तस्मात् । असंध्यगागमाल्लोपैरिति । गौर्वा गोरग्वेति विकल्पद्वयेन रूपत्रयमिति भावः । स्यम्सुप्स्विति प्रत्येकं नवनवेत्यर्थः । भा-

दाविति भकारादौ इत्यर्थः । तथाहि सौगत्यर्थतायामनलोपे असंधौ अगागमेच पर्यायेण रूपत्रयं । तत्रैव वावसान इति कगयोर्विकल्पाद्रूपषट्कं । पूजायां त्वसंध्यादिविकल्पे रूपत्रयमिति संकलनया नव । एवमम्यपि । औङ्ये तु गत्यर्थतायां अचेर्दीर्घ इत्यकारलोपे तन्निमितासंध्यादिरूपद्वयाभावादेकमेव । पूजार्थतायां तु नलोपाभावादल्लोपस्याभावेऽसंध्यादिविकल्पेन रूपत्रयम् । संकलनया प्रत्येकं रूपचतुष्टयम् । एवं टाप्रभृतौ स्वरादौ सर्वत्र प्रत्येकं रूपचतुष्टयम् बोध्यम् । जश्शसोस्तु गत्यर्थतायां नलोपेपि पुनर्नुमाविशेषाभावात् प्रत्येकं त्रीण्येव । भ्यामादौ तु त्रीणि गतौ त्रीण्यचर्यामिति षट् षट् सुपि तु पूजार्थतायां शसङ्णोः कुक्टुकाविति कुग्विकल्पेन षट् । गतौ तु त्रयमेवेति नव । कुक्पक्षे शस्येचयस्येति विकल्पेन यदि खकारस्तदारूपत्रयाधिक्यं भवत्येव वा ।

**सू०—वादीपोऽशतुः ॥** अवर्णांतात्परस्य शतुर्वा नुमीकारे ईपि च तुदती, तुदन्ती । तुदन्ति । भात् । भाती, भान्ती । भांति ।

**सुबोधिनी**—वादीपोः शतुः । आत् ईपोरिति पदच्छेदः आदितिपंचमी न तु तपरत्वम् । ईश्च ईप् च ईपौ तयोरीपोः । शतुरित्यवयवषष्ठी । ननु तुदती इत्यत्र शिति चतुर्वादित्यनेन कृतस्य तुदादेरित्यप्रत्ययस्यादित्यनेनांतरंगत्वाल्लोपे कृतेऽवर्णांतपरत्वाभावान्नुम् न स्यात् । उच्यते । प्रत्ययलक्षणेन तत्परत्वमस्त्येव नचैवं घ्नतीदावपि प्रसंगः । लुकि न तन्निमित्तमित्यनेन प्रत्ययलक्षणप्रतिषेधात् । भातीति भात् । भादीप्तौ शतृप्रत्यये शित्वादप् । अदादित्वादपोलुक् ।

**तत्त्वदीपिका**—वादीपोऽशतुरिति । वा आत् ईपोः शतुरिति छेदः । आदिति पंचमी न तपरत्वम् । ईश्चईपश्चईपौ तयोः ईपोरित्यत्र जवाभावे उत्तरपदस्यान्तर्वर्तिविभक्त्या पदत्वं नेति ज्ञापितं । तेन परमवाचामित्यत्र कुत्वाद्यभावः । अदीपोरादीपोरिति तु न छेदः उत्तरसूत्रेति ग्रहणसामर्थ्यात् । तुदन्तीत्यत्रावर्णस्यादेरित्यनेन लोपे कथमात्परत्वमिति चेत्सत्यम् । प्रत्ययलक्षणत्वेनेति गृहाण । अथ घ्नन्तीत्यत्रातिव्याप्तिरिति चेत् । न । लुकि न तन्निमित्तमिति निषेधात् । अथकथमग्रहणेन सानुबंधकप्रकृत्या यवर्णसामान्यस्य ग्रहणं निरनुबंधकग्रहणे न सानुबंधकस्य । अर्थवद्ग्रहणेनानर्थकस्य । प्रत्ययाप्रत्यययोः प्रत्ययस्यैवेति परिभाषात्रयेण निषेधादितिवाच्यम् । अप्याभ्यां नित्यविधानेनपरिभाषात्रयस्यात्राप्रवृत्तिज्ञापनात् । नह्यन्यथाप्याभ्यामनेन विकल्पः प्राप्तो येन नित्यमित्यर्थवद्भवेत् । ईप् ग्रहणन्तु सानुबन्धकस्य ग्रहणे निरनुबंधकस्य ग्रहणं नेति ज्ञापनार्थम् ।

**सू०—अप्ययोरान्नित्यम् ॥** अप्प्रत्ययप्रत्ययसंबन्धिनोऽवर्णात्परस्य शतुर्नुम् नित्यमीकारे ईपि च । पचत् । पचन्ती । पचंति । दीव्यत् । दीव्यन्ती । दीव्यन्ति । स्वप्, स्वब्, । स्वपी । न्सम्महतइति दीर्घः स्वांपि । दीर्घोनेत्येके स्वंपि । स्वपा । भिदपाम् । स्वद्भ्यां स्वद्भिः । जगत्, । जगती । जगन्ति । महत् । महती । महन्ति । धनुः । धनुषी ॥

**सुबोधिनी**—अप्ययोरान्नित्यम् । वादीपोरित्यत ईपोरित्यनुवृत्तं विकल्पे प्राप्ते नित्यविधानार्थमिदम् । अप् च यश्चाप्यौ तयोरात्परस्य शतुर्नित्यं नुम् भवति । ईईपोः । ननु अप्ययोरित्यत्र चपा अचेइति जबत्वं वक्तुं युक्तम् । उच्यते । ज्ञापनार्थमेवं निर्देशः । प्रत्यये परतः क्वचित्पदत्वं नेति । तेन तडित्वानित्यादि सिद्धम् । पचतीति पचत् । अप्कर्तरीत्यप् । अदेङ्स्यल्लोपः । दीव्यतीति दीव्यत् । दिवादेरितियः । सुष्ठु आपो यस्मिन् सरसि तत् स्वप् । ऋक्पूरित्यप्रत्ययो न । नपूजने इति निषेधात् । शौ नित्यत्वात् नुमः प्राक् दीर्घः । स्वांपि । तदते दीर्घोऽस्य नेत्येके स्वंपि । आर्तिपृत्रपियाजितानिधानिलायिभ्यउसित्यौणादिकः धनेरुस् । धनुः । शौन्सम्महतइतिदीर्घः । विसर्गनुमितिषत्वम् ।

तत्त्वदीपिका—अप्ययोरान्नित्यमिति । अप् च यश्च अप्यौ तयोः । अवरिति वक्तव्ये ड्वेवाकरणं ज्ञापकं पकारं क्वचिदपदांतर्वर्त्तिविभक्त्या पदांतं नेत्यस्य तेन वैदुष्यमित्यत्र वसांरस इति दत्वं न आप्यान्नित्यमिति सुवचम् । आ/दित्यस्यानुवृत्तेः आरंभसामर्थ्यान्नित्यत्वे लब्धेपि अदीपोरादीपोरितिसंदेहनिरासार्थं नित्यग्रहणम्

मू०—न्षपूर्वस्यशौदीर्घः ॥ धनूंषि । हविः । हविषी । हवींषि । पयः । पयसी । पयांसि । तेजः । तेजसी । तेजांसि । वचः । वचसी वचांसि । पिपठीः । पिपठिषी । सयङन्तस्य शौ नुम्न । पिपठिषि । सुपुम् । सुपुंसी । सुपुमांसि । अदः । अमू । अमूनि । शेषं पुंवत् ।

इतिहसांतनपुंसकलिंगाः ।

सुबोधिनी—न्षपूर्वस्यशौदीर्घः । नृसम्महतइत्यस्यैवप्रपंचः । धनूंषि । धनुभ्यामित्र य्वोर्विहसे इति न दीर्घोऽधातुत्वात् । अर्चिशुचिहुसृपीत्यादिनाजुहोतेरिस् हविः । पिपठिषतेः क्विप् य्वोर्विहसे इत्यनेन दीर्घत्वं पिपठीः । सुष्ठु पुमांसो यस्मिन् तत् सुपुम् शौ पुंसोऽसुङित्यसुङ् । नुमयम इति नुम् न्सम्महतइति दीर्घः सुपुमांसि । त्यदाद्यत्वं विभक्तिकार्य्यं मत्वोत्वे अमू । शौ नुमदीर्घौ अमूनि । शेषं पुंवत् ॥ इतिहसांतानपुंसकलिंगाः ॥ ६ ॥

समाप्तेयंषड्लिंगव्याख्या.

तत्त्वदीपिका—सयङन्तस्येति सश्च यङश्चसयङौ तौ अन्तौ यस्य तस्येत्यर्थः । एतन्मूलं त्वनुवर्तितं वाग्रहणस्य व्यवस्थितत्वम् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्म्मणा ।
कृतायामिह टीकायां क्लीबलिंगो हसांतकः ॥ १ ॥

इतिहसान्तनपुंसकलिंगविवरणं समाप्तम् ।

मू०—त्वमहंसिना ॥ सिना सहितयोर्य्युष्मदस्मदोस्त्वमहमित्येतावादेशौ भवतो यथासंख्येन । त्वम् । अहम् ।

सुबोधिनी—त्वमहंसिना । युष्मदस्मदोः स्थाने त्वमहमित्येतौ यथाक्रमं स्तः । सिनेति सहादियोगे तृतीया सिप्रत्ययेन सहितयोरित्यर्थः । ननु त्वमहमोर्हसांतत्वादेव सिलोपे सिद्धे साविति वाच्यं व्यर्थं सिनेति । उच्यते । मांतत्वस्य तथा तकारोच्चारणस्य गौणेऽतित्वमित्यादौ चरितार्थत्वात् । सिलोपात्परत्वात्त्यदादेरित्यत्वं तत आम् स्मावित्यात्वं त इति तकारस्य सत्वं च स्यात् अतः सिनेत्युक्तम् । इह तदंतविधिरपि इष्टोस्ति । परमत्वं । परमाहम् । गौणत्वे तु त्वां मां युवामावां युष्मान् अस्मान् वाऽतिक्रांत इत्यत्रापि अतित्वमत्यहमित्येव । इह युष्मदस्मदोर्नांतर्संख्यावाचिनामलिंगत्वमेव अलिंगे युष्मदस्मदी इयुक्तत्वात् । अतएव त्रिषु लिंगेष्वेषां समानंरूपं । लिंगनिमित्तंविवादिकमनयोर्नालिंगत्वात् । त्वं ब्राह्मणः अहं ब्राह्मणः । त्वं ब्राह्मणी । अहं ब्राह्मणी । त्वं ब्राह्मणकुलम् । अहं ब्राह्मणकुलमिति ।

तत्त्वदीपिका—त्वमहंसिनेति । त्वं अहंसिनेति छेदः । सिनेति सहयोगे तृतीया । त्वमहं साविति तु नोक्तम् । त इति सकारस्य सौ परेऽनिवार्य्यत्वात् । तकारोच्चारणस्य तु नसामर्थ्यम् तस्यातित्वमिति गौणे चरितार्थत्वात् । अत्राहुः । अत्रसावित्युक्तेः स्त्रियां त्यदाद्यत्वे परत्वादाम् सावित्यात्वं बाधित्वा आप्स्यादिति तन्निरासायेति । अत्रेदम्[illegible]यं । युष्मदस्मदोरलिंगत्वात्स्त्रीत्वाभावादेवापोनिवृत्तेस्तन्निवृत्त्यर्थत्वस्य व्यर्थत्वात् ।

अथ लिंगयोगोक्ति युष्मदस्मदोरिति ग्रंथे तर्हि अस्मिन् ग्रंथे युष्मदस्मदोर्नान्तसंख्यावाचिनां चालिंगत्वमेव स्वीकृतमिति स्वोक्त्या विरोधः तयोश्च वाच्यलिंगत्वात्त्रिष्वपि लिंगेषु समानरूपमिति वदता वृत्तिकृतापि महानेव विरोधः चवाच्यलिंगत्वादित्येक पदं। चस्यावाच्यं लिंगमिव लिंगं ययोस्ते तयोर्भावस्तत्त्वादव्ययवद-लिंगत्वादित्याद्यर्थं वर्णयद्भिश्च विरोध एवेत्युपेक्षितम्।

**मू०–युवावौ द्विवचने ॥ द्व्यर्थवाचिनोर्युष्मदस्मदोर्युवावादेशौ भवतो विभक्तौ।**

**सुबोधिनी**–युवावौ द्विवचने। द्वयोरर्थो द्व्यर्थं वक्त इति द्व्यर्थवाचिनौ तयोर्युष्मदस्मदो-र्युवावौ एतः स्यादौ विभक्तौ। त्यदादेरित्यतःस्यादावित्यप्रकृष्यते द्वौ वक्त इति द्विवचने कर्त्तरि युट्। किंच द्विवचने इति प्रत्ययविशेषणे कृतेपि युवावौ सिद्ध्यतः तथापि युवामति-क्रांतान् अतियुवानित्यादौ युवावयोरप्रसंगवारणाय प्रकृत्यर्थविशेषणं कृतम्॥

**तत्त्वदीपिका**–युवावौ द्विवचनेऽइति। इहत्यदादेर्ष्टरित्यतः स्यादावित्यपकृष्यते। वक्तीतिवचनं कर्त्तु-रियुः द्वयोरर्थयोर्द्विवचने प्रथमान्तं तथा च द्विवचने युष्मदस्मदोइति हरदत्तादिमते तयोरित्यध्याहारक्लेशः। कर्मणि युडिति पक्षे द्विवचन इति सप्तम्यन्तं द्वित्वइत्यर्थकं तद्वाचिनोरित्यर्थः। अत्राहुः। द्वित्वे यस्यादिर्विभ-क्तिस्तस्यामित्यर्थः इति। अत्रेदं वक्तव्यम्। एवं सति युवामावां वातिक्रान्तानतियुवानत्यावानित्यत्राव्याप्तिः द्वित्वा-भिधायिस्याद्यभावात्।

**मू०–आमौ ॥ युष्मदस्मद्भ्यां पर औराम् भवति। युवाम् आवाम्।**

**सुबोधिनी**–आमौ। आभ्यामौ आम् स्यात्। अत्र योगविभागाभिप्रायेण विपरीतनिर्देशो बोध्यः। विपरीतनिर्देश इत्येतदर्थं व्याख्यानांतरं क्रियते। अत्र अ अम् औ इतिछेदः। अ इति योगविभागः कर्तव्यः लोपः अन्तः युष्मदस्मदोरिति पदत्रयं चानुवर्तनीयम्। युष्मद-स्मदोरकारांतादेशोऽकारात्परस्याकारस्य लोपश्च स्यादित्येको योगः। युष्मदस्मद्भ्यां पर औकारोऽम् स्यादिति द्वितीयः। औकारस्यामि कृते आम्स्भावित्यात्वं। यद्वा सवर्णदीर्घः नचाम्शसोरिति लोपः अकारोच्चारणसामर्थ्यात् इति लघुभाष्ये। युवां आवां। तदंते परम-युवां। परमावां। गौणत्वे त्यदादेरित्यत्वं न भवति। संज्ञोपसर्जनयोर्नात्वमित्युक्तत्वात्। किं तर्हि आमावित्यत्र योगविभागेनाऽनयोरंतस्याकारोऽतोलोपश्च। औकारस्य अमि कृते आम्-स्भावित्यात्वम्। अतित्वाम् अतिमाम्। अतियुवाम्। अत्यावाम् अतियुष्मां। अत्यस्माम्॥

**तत्त्वदीपिका**–आमाविति। आम् औ इति छेदः। नन्वमेव क्रियतां किं चाम्विधानेनेति चेत् अत्र माधवः। आअम् औ इति छेदः युष्मदस्मदोराकारोन्तादेशः औकारस्याम् भवतीत्यर्थः। एवं युष्मयतेः क्विपि तल्लोपे औकारस्यामिति युष्मामस्मामिति प्राप्नोति युषामसामिति चेष्यते एवं मस्यात्वे रूपसिद्धिरित्याह। अत्ररामाश्रमः। अमात्रविधानेनैवेष्टसिद्धेराकारो व्यर्थ इत्युक्त्या स्वमतमुक्तवान् अ अम् औ इति छेदः। अ इति योगोविभज्यते अत्र लोपः अत् युष्मदस्मदोरित्येतत्सर्वमनुवर्त्तते तथाच युष्मदस्मदोरकारोन्तादेशः स्यात्। तस्य अतः परस्य लोपः स्यात् द्वितीयस्य तु युष्मदस्मद्भ्यां पर औअम् भवति आम्स्भाविति आत्वं सवर्णे दीर्घ इति वा दीर्घत्वम् अम्शसोरस्येति तु न अकारोच्चारणसामर्थ्यादिति अत्रेदमवधेयं। अ इति छित्त्वा योगविभागम् लोपाद्यनुवृत्तिं च कृत्वा युवामावामिति रूपं साध्यं तत्राधिकक्लेशः क्वत्र आम् औ युष्मदस्मद्भ्य-पर औकारोऽम् भवति सति तस्मिन् तयोरकारान्तादेश इति अन्यत्र त्वामस्भावित्यनेनैवात्वम्। एवं चातिप्र-संगशंकापि नेति ममात्र विधाने सुट्प्रसंगोद्भावननिराकरणार्थयत्नक्लेशोपि नेति विभाव्यं सूरिभिः।

**मू०–यूयंवयंजसा ॥ जसा सहितयोर्युष्मदस्मदोर्यूयंवयं भवतः। यूयम्। वयम्।**

सुबोधिनी–यूयंवयंजसा । तदंते परमयूयं । परमवयम् । गौणत्वेऽतियूयम् । अतिवयम् ॥

तत्त्वदीपिका–यूयं वयं जसेति । जसीति तु पूर्वोक्तयुक्तेर्न कृतम् ॥ जसीत्यस्य प्रवृत्तेः ।

**मू०–त्वन्मदेकत्वे ॥ युष्मदस्मदोस्त्वन्मदौ भवत एकत्वे गम्यमाने ।**

सुबोधिनी–त्वन्मदेकत्वे । एकत्वे गम्ये एकस्याभावः एकत्वं तस्मिन् गम्यमाने ज्ञायमाने सति युष्मदस्मदोस्त्वन्मदावादेशौ स्तः । स्यादावित्यत्र न संबध्यते । तेन तव पुत्र इति त्वत्पुत्रः तवापत्यमिति त्वादः त्वं पुत्रो यस्य सः त्वत्पुत्र इत्यादौ विभक्त्यभावेपि त्वन्मदौ भवतः । न चांतर्वर्तिनीं विभक्तिमाश्रित्याप्येतौ स्यातामिति वाच्यम् । युवयोः पुत्र इति युष्मत्पुत्र इत्यादौ युवावयोरपि प्रसंगात् । लुकि न तन्निमित्तानीति निषेधाच्च । दांतादेशावेतौ । तेन त्वादयति । मादयति । त्वदीयम् । मदीयमित्यादि रूपसिद्धिः । सूत्रे वावसाने इति पाक्षिकतकारे कृते अमेऽमावेति अमत्वं क्वचिज्जबस्यापि अमो ज्ञाप्यते तेनेति वा बोध्यम् । सिङेङस्सूक्तवक्ष्यमाणाविधयस्त्वन्मदौ बाधंते परत्वात् । तदंते । परमत्वाम् । परममाम् । गौणत्वे तु अतित्वाम् । अतिमाम् ॥

तत्त्वदीपिका–त्वन्मदेकत्वे । त्वद्मद् एकत्वे इति छेदः । अमेऽमावेत्यत्र वाशब्दस्य व्यवस्थितत्वात्क्वचिज्झसानामपि अमाभवन्तीति अमत्वं तेन त्वादयतीत्यादि सिद्धम् । तव पुत्रस्त्वत्पुत्र इत्यादौ भवत्येव । एकत्वाभिधानस्य निमित्तस्य सत्वात् । अत्राहुः । युवयोः पुत्रः युष्मत्पुत्र इत्यत्र स्याद्यत्वाभावात् कथमिति वाच्यम् । ननु धातोरित्यत्रासंभवात्साद्यकारस्त्यक्तः सोऽग्रेपि न संबध्यते । अत एव त्यदादेष्टेरस्यादावित्यत्र पुनः स्यादिग्रहणम् कृतमिति । अत्रेदं वक्तव्यं त्वन्मदेकत्वे युवावौद्विवचने इत्यनयोर्द्वयोरपि नुधातोस्त्यदादेष्टेरित्येतत्सूत्रद्वयमध्यस्थताविशेषेण कथमेकत्र स्यादिसंबंधोऽपरत्र नेति व्याख्यानं संगच्छते । विनिगमनाविरहात् । किन्तु द्वित्व इति वक्तव्ये द्विवचनग्रहणसामर्थ्यादत्र स्यादियोग इति समाधेयम् ।

**मू०–आम्स्भौ ॥ युष्मदस्मदोष्टेरात्वं भवति अमि सकारे भिसि च परे ।**
**त्वां । मां । युवाम् । आवाम् । त्यदाद्यत्वे शसीति दीर्घः ।**

सुबोधिनी–आम्स्भौ । आ अम् इति छेदः । युष्मदस्मदोष्टेरात्वं स्यादामिसकारे भिसि च । अम् च स् च भिश्च तेषां समाहारोऽम्स्भि तस्मिन् । आगमजस्यानित्यत्वान्न नुमभावः भीत्येकदेशद्वारा समुदायाऽनुकरणम् । अत्र माधव आह टेरिति नानुवर्तनीयम् । प्रयोजनाऽभावात् । षष्ठीनिर्दिष्टत्वादंत्यस्यात्वे सवर्णदीर्घे च । त्वां मामिति रूपसिद्धेः । युष्मदस्मदोर्ण्यंतयोः क्विपि युष्म् अस्मिति रूपम् आभ्यामामि शसि च युषाम् असां युषान् असानित्यंतस्य मकारस्यात्वे सिध्यति । अन्यथा न । सत्यम् । अतियुष्माभ्यामित्यादावात्वं केन भवति गौणत्वे त्यदाद्यत्वाभावात् । उच्यते । आमावित्यत्र योगविभागेनात्वे कृते रूपसिद्धिरिति । तदा युष्मास्मोरपि योगविभागेनात्वे कृते पश्चाट्टेरात्वे चामि शसि च युषाम् असां युषान् असानिति सिद्धत्येव किं माधवोक्त्येति ॥

तत्त्वदीपिका–आम् स्भाविति । आ अम् स्भाविति छेदः । नत्वतियुष्माभ्याम् अतियुष्मान् । अत्रात्वं केन गौणत्वे त्यदाद्यत्वाभावात् इति चेत्सत्यम् । केचिदामावित्यातियोगविभागेन परत्वादाम्स्भावित्यविभक्तिनिर्देशेन सात्पूर्वः परो वा लुप्तनिर्दिष्टो नकारांतस्तस्मिन्परेप्यात्वम् । अत्र षष्ठीदर्शनादंतादेशः टेरित्यनुवृत्तिस्तु प्रयोजनाभावात् युष्मदस्मदोर्युवामस्मामित्यसिद्धेश्चोपेक्षितम् ।

**मू०–शसोनोवक्तव्यः ॥ युष्मान् अस्मान् । त्वन्मदादेशे कृते ।**

सुबोधिनी–शसोनोवक्तव्यः । सोनः पुंस इत्यत्र सो न इति योगविभागेनाऽयमर्थो लभ्यते इत्यर्थः ॥

**मू०–एटाङ्योः ॥ युष्मदस्मदोष्टेरेत्वम्भवति टाङ्योः । त्वया । मया । युवाभ्याम् । आवाभ्याम् । युष्माभिः । अस्माभिः ।**

सुबोधिनी–एटाङ्योः । अत्र टेरित्यनुवृत्तम् अनयोष्टेरेत्वं स्यात् टाश्च ङिश्चटाङी तयोःपरतः। इदंतत्वात् ङेः पूर्वनिपाते प्राप्ते तस्यानित्यत्वज्ञापनार्थं परनिपातः । किंच परत्वात्त्यदादेरित्यत्वे प्राप्तेपि आदौ एटाङ्योरित्येवप्रवृत्तिरेव न्याय्या । कृताकृतप्रसंगित्वेन तस्य नित्यत्वात् । टेरेत्वे कृते । अयादेशे च त्वया मयेति । अत्र हि युष्मदस्मदोर्न्त्यतयोः क्विपि युष्म् अस्म् इति । टाङिओस्सु परतः युष्मा । अस्मा । युष्मि । अस्मि । युष्मोः । अस्मोरिति रूपाणि तत्सिद्ध्यर्थं व्याख्यानांतरं क्रियते । अत्रैकारात् परो यवयोर्वसे हकारे चेत्यनेन लुप्तो यकारो ज्ञातव्यः । तेनायमर्थः । अदंतयोरनयोरत्वं हसंतयोर्यत्वं च न भवति । एटाङ्योरिति टाङीओसां लुप्तसप्तमीको निर्देशः । एषु परत इति ॥

तत्त्वदीपिका–एटाङ्योरिति । अत्र टेरित्यनुवर्त्तते । अन्त्यविधौ रूपासिद्धेः । नित्यत्वात्प्रतिपदोक्तत्वाच्चादावेत्वप्रसक्तेस्त्यदाद्यत्वाभावात् । अत्राहुः । ननु युष्मदस्मदोर्न्यन्तयोः क्विपि युष्म् आ अस्म् आ इति स्थिते टेरेत्वे कृते यया अया इति प्राप्नोति युष्मा अस्मा इति चेष्यते सत्यम् । एकारोप्यनेनं विधीयते। लक्ष्यानुसाराच्च व्यवस्था । अत एव त्वं हसस्य परत्वं यवयोर्वसेलोप इत्यनेनैव ज्ञापितवचनेन लुप्तोत्र य इति अत्रेदंतत्वम् । अत्रापि टेरनुवृत्तिर्न कर्त्तव्या षष्ठ्यंतादेश एव सत्त्व त्यदाद्यत्वे कृते एव परत्वं नित्यत्वन्तु समानमुभयोरपि ।तथा च युष्मदस्मदोर्मस्यैत्वे अयादेशे य्वोर्लोपश्चेत्यत्र वा इत्यस्य व्यवस्थितत्वात् । य्वोः संबंधिनोऽवर्णस्य क्वचिल्लोप इत्यलोपे रूपसिद्धिः । एवं युष्मास्मेति सिद्ध्यर्थम् । ज्ञापितवचनेन लुप्तयकारनिर्देशक्लेशो नोचितः ।किंच अत एत्वं हसस्य पत्वमिति व्याख्याने एकस्मिन्नेव प्रयोगे दस्य यत्वं मस्यैत्वं केन वार्य्यम्।त्यदाद्यत्वेनेति केचित् । नित्यत्वात्प्रतिपदोक्तत्वाच्चादावेत्वप्रवृत्तेस्त्यदाद्यत्वाभाव इति स्वोक्त्याविरोधात् । किंच लोपेन वचनं ज्ञाप्यते ज्ञापितेन वचनेन लोप इत्यन्योन्याश्रयोपि । किंच अत एत्वमिति कथं त्यदाद्यत्वाभावे टेरत्वे अदस्शब्दस्यैत्वम् । किंच एत्वं टेर्यत्वमंत्यस्येत्यत्र विनिगमनाविरहः । टाङ्योरित्यत्र टकारङकारौ तु स्पष्टप्रतिपत्तये कृताविति नान्यद्बहुजल्पितम् ।

**मू०–तुभ्यंमह्यंङ्या ॥ ङेसहितयोर्युष्मदस्मदोस्तुभ्यं मह्यमेतौ भवतः । तुभ्यम् । मह्यम् ।**

सुबोधिनी–तुभ्यं मह्यं ङ्या । तदंते परमतुभ्यम् । परममह्यम् । गौणत्वे तु अतितुभ्यम् । अतिमह्यम् ॥

तत्त्वदीपिका–तुभ्यं मह्यं ङ्येति । तृतीया तु पूर्ववत् । अन्यथा त्यदाद्यत्वेङे अगिति स्यात् ।

**मू०–भ्यसश्भ्यम् ॥ युष्मदस्मद्भ्यां परो भ्यस्श्भ्यं भवति शकारो भकारादित्वव्यावृत्त्यर्थः । तेनात्वैत्वे न भवतः । युष्मभ्यम् । अस्मभ्यम् ।**

सुबोधिनी–भ्यसश्भ्यम् । अत्र भ्यस चतुर्थीबहुवचनम् । आभ्यां भ्यसश्भ्यं स्यात् शकारो न सर्वादेशार्थः । भ्यमो गुर्वादेशत्वात् । तर्हि किमर्थः । भकारादित्ववारणार्थः । सति शकारेभकारस्यादित्वाभावात् । भादिनिमित्तमेस्मात्येत्वे अद्भीत्यात्वं च न । आदेर्भाव आदित्वं भकारस्यादित्वं भकारादित्वं भकारादित्वस्यव्यावृत्तिःनिषेधः भकारादित्वव्यावृत्तिः भकारादित्वव्यावृत्तिरर्थः प्रयोजनं यस्य सः ॥

तत्त्वदीपिका– भ्यसश्भ्यामिति ॥ भ्यस् श्भ्यामिति छेदः । नन्वत्र शकारो न श्रवणार्थः युष्मभ्यामित्यत्राश्रुतेः । सर्वादेशार्थोऽपि न भ्यमोऽनेकाक्षरोपदेशत्वादेव तत्सिद्धेरित्याशयेनाह । शकार इत्यादि । आत्वैत्त्वदित्याद्यर्थं कृतस्तद्व्यावृत्त्यनन्तरं नोपादीयते । जलानयनांतरं जलार्थं घटवत् । चतुर्थीबहुवचनमेवात्र भ्यं । पंचम्यास्तु ङसिसाहचर्यात्तस्य तत्रैव ग्रहणात् ।

मू०–ङसिभ्यसोश्तुः ॥ ङसिसाहचर्यात्पंचम्या भ्यस् गृह्यते । त्वत् । मत् । युवाभ्याम् । आवाभ्याम् । युष्मत् । अस्मत् ।

सुबोधिनी–ङसिभ्यसोश्तुः । युष्मदस्मद्भ्यां परयोर्ङसिभ्यसोः श्तुरादेशः स्यात् । शित्वात्सर्वादेशः । उकार उच्चारणार्थः । अत्र ङसिसाहचर्यात्पंचम्या एव भ्यस् गृह्यते । किंच अत्र माधवः । ङ सिभ्यसः अः श्तुरिति पदच्छेदः कर्तव्यः । ततश्च युष्मदस्मद्भ्यां ङसिभ्यसोः श्तुर्भवति युष्मदस्मदोरंत्यस्याकारादेशो भवति तेन ज्यंतयोर्युष्मास्मोर्युषत् असत् । अयमेवाकारो भ्यम् श्भ्यम् सामाकमित्यत्राप्यनुवर्तते तेन युषभ्यं । असभ्यं । युषाकं । असाकमिति सिद्ध्यतीति वदति । आमावित्यत्र योगविभागेनात्वे युषदसदित्यादि सिद्ध्यत्येव किं तत्प्रयासेन ॥

तत्त्वदीपिका–ङसिभ्यसोश्तुरिति । शकारः सर्वादेशार्थः । उकार उच्चारणार्थः । अत्र ङसिभ्यसः अः श्तुरिति छेदादकारोन्तादेशोनयोरिति व्याख्यानात् युष्मास्मोर्युष्मदसादिति सिद्ध्यति ।

मू०–तवममङसा ॥ ङसा सहितयोर्युष्मदस्मदोस्तवममौ भवतः । तव । मम । युवयोः । आवयोः । सुडामः ।

सुबोधिनी–तवममङसा । तदंते परमतव । परममम । गौणत्वे अतितव । अतिमम ॥

तत्त्वदीपिका–तव मम ङसेति । तृतीयापूर्ववत् ।

मू०–सामाकम् ॥ युष्मदस्मद्भ्यां परस्सामाकम्भवति । युष्माकम् । अस्माकं । त्वयि । मयि । युवयोः । आवयोः । युष्मासु । अस्मासु । "समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ॥ समासार्थोऽन्यसंख्यश्चेद्युवावौत्वन्मदापिच ॥ १ ॥ सिजस्ङेङस्सु परत आदेशाः स्युस्सदैवते ॥ त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥ एते परत्वाद्बाधन्ते युवावौ विषये स्वके ॥ त्वन्मदावपि बाधन्ते पूर्ववद्विषये स्वतः ॥ ३ ॥ द्व्येकसंख्यस्समासार्थो बह्वर्थे युष्मदस्मदी ॥ तयोरद्व्येकतार्थत्वाद्युवावौ त्वन्मदौ च न ॥ ४ ॥ " त्वां मां वाऽतिक्रांत इति विग्रहे अतित्वम् । अत्यहम् । गौणत्वे युष्मदस्मदोस्त्यदाद्यत्वं भवति । अतित्वाम् । अतिमाम् । अतियूयं । अतिवयं । अतित्वां अतिमां । त्वन्मदेकत्वे । आम्स्भौ । अतित्वां । अतिमां । अतित्वान् अतिमान् । अतित्वया । अतिमया । अतित्वाभ्यां । अतिमाभ्यां । अतित्वाभिः । अतिमाभिः । अतितुभ्यं । अतिमह्यं । अतित्वाभ्यां । अतिमाभ्यां । अतित्वभ्यं । अतिमभ्यं । अतित्वत् । अतिमत् । अतितव अतिमम । अतित्वयोः । अतिमयोः । अतित्वाकं । अतिमाकं । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु । युवामावां

वाऽतिक्रांत इति विग्रहे । सिजसुङेङस्सु प्राग्वत् । अन्यत्र युवावौ । अतित्वम् अत्यहम् । अतियुवां अत्यावां । अतियूयं । अतिवयं । अतियुवां । अत्यावां । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतितुभ्यं । अतिमह्यं । अतियुवाभ्यां अत्यावाभ्यां । अतियुवभ्यं । अत्यावभ्यं । अतियुवत् । अत्यावत् । अतियुवाभ्यां । अत्यावाभ्यां । अतियुवत् । अत्यावत् । अतितव अतिमम । अतियुवयोः । अत्यावयोः । अतियुवाकं । अत्यावाकं । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । युष्मानस्मान्वाऽतिक्रांत इति विग्रहे अतित्वं । अत्यहं । अतियुष्मां । अत्यस्मां । अतियूयं । अतिवयं । सिजसुङेङस्सु प्राग्वत् । अतियुष्मां । अत्यस्मां । अतियुष्मां । अत्यस्मां । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्यां । अत्यस्माभ्यां । अतियुष्माभिः । अत्यस्माभिः । अतितुभ्यं । अतिमह्यं । अतियुष्मत् । अत्यस्मत् । अतियुष्माभ्यां । अत्यस्माभ्यां । अतियुष्मत् । अत्यस्मत् । अतितव । अतिमम । अतियुष्माकं । अत्यस्माकं । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु ॥

सुबोधिनी—सामाकम् । अत्र तंत्रैकशेषाऽऽवृत्तिभिः सामिति द्वयं बोध्यं । सकृदुच्चरितः शब्दोऽनेकार्थगमको भवतीति तंत्रं । सरूपाणामित्येकशेषः । द्विरुच्चारणमावृत्तिः । एकस्य सुटा सह आम् साम् द्वितीयस्य तु आमासह साम् इत्यर्थः । ततः सुट्सहित आम् केवल आम् च आकं । युष्मदस्मदोरंत्यस्याकारश्च भवतीत्यर्थः ॥ तेनातियुष्माकमत्यस्माकमित्यादि सिद्ध्यतीति लघुभाष्यकर्तुरपि प्रयासो व्यर्थ एव । योगविभागेनात्वे कृते सुडाम इति सुटोपि सर्वादिकार्यत्वाद्गौणेऽप्रवृत्तेः तंत्रादिना सामित्यस्य द्विरुच्चारणात् । केवलस्याप्याम् आकमि च विहिते रूपसिद्धेः । "समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ॥ समासार्थोन्यसंख्यश्चेद्युवावौ त्वन्मदावपि ॥ १ ॥" युवावौ द्विवचने त्वन्मदेकत्वे इति सूत्रद्वये द्विवचनैकत्वशब्दौ प्रकृत्यर्थपरौ न तु प्रत्ययपराविति व्याख्यातं । तत्फलं जातिलिंगव्यक्तिसंख्याकारकात्मकः पंचको नामार्थको इति पक्षाभिप्रायेण दर्शयति । चेद्यदि युष्मच्चास्मच्च युष्मदस्मदी शब्दरूपे । समस्येते इति समस्यमाने समासविषयीक्रियमाणे । द्वौ च एकश्च द्व्येकौ द्व्येकयोर्भावः द्व्येकत्वं वक्त इति द्व्येकत्ववाचिनी स्तः । समासार्थोः विग्रहः । अन्यसंख्योऽन्यस्य पदार्थस्य संख्या यस्मिन्सोन्यसंख्यो युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तो भवतीत्यर्थः । तदा युष्मदस्मदोः स्थाने युवावौ त्वन्मदावप्यादेशौ भवतः । द्विवचनैकत्वयोः प्रत्ययविशेषणत्वे तु न स्यातामित्यव्याप्तिः स्यादिति भावः । १ । सिजसुङेङस्सु परत आदेशाः स्युः सदैव ते ॥ त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ॥ २ ॥ नन्वेवं सिजसुङेङस्स्वपि युष्मदस्मदोर्द्व्यर्थत्वे युवावौ स्यातामेकार्थत्वे तु त्वन्मदावित्याशंकायामाह । एतासु विभक्तिषु परतो युष्मदस्मदोः स्थाने ते आदेशा सदैव स्युः । केते आदेशा इत्यत आह । त्वाहौयूयवयावित्यादि । २ । एते परत्वाद्बाधंते युवावौ विषये स्वके ॥ त्वन्मदावपि बाधेते पूर्ववद्विषये स्वतः ॥ ३ ॥ एते त्वमहं

यूयं वयं तुभ्यं मह्यं तव ममेत्यादेशाः स्वके विषये स्वे आत्मीये स्थाने युवावौ बाधंते । कस्मात्परत्वाद्विप्रतिषेधे परं कार्यमिति न्यायात् । उभयोस्तुल्यबलविरोधे सति सूत्रापेक्षया त्वमादयः परे त एव भवंतीत्यर्थः । एते त्वमादयः स्वतो विषये त्वन्मदावपि बाधंते पूर्ववत् । उक्तन्यायेन । स्वतइत्यत्र सप्तम्यर्थे तस् । ३ । द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी । तयोरद्व्येकतार्थत्वाद्युवावौ त्वन्मदौ न च ॥ ४ ॥ यदा युष्मदस्मदी बह्वर्थे बहूनामर्थो ययोस्ते बह्वर्थे भवतः। समासार्थो विग्रहः। द्वौ च एकश्च द्व्येकौ द्व्येकयोः संख्या यस्मिन् द्व्येकसंख्यो भवति। तदा युष्मदस्मदोः स्थाने युवावौ त्वन्मदावपि न स्तः। तस्मात् तयोर्युष्मदस्मदोः द्वौ च एकश्च द्व्येकौ द्व्येकयोर्भावः द्व्येकता द्व्येकताया अर्थः द्व्येकतार्थः द्व्येकतार्थस्य भावो द्व्येकतार्थत्वं न द्व्येकतार्थत्वमद्व्येचयकतार्थत्वं तस्मात्। द्व्येचकतार्थत्वस्या-ऽभावात्।४। त्वां मां वातिक्रांत इति विग्रहे अपवादो अतित्वं अत्यहं । त्वां मां वाऽतिक्रांताविति विग्रहे उत्सर्गतः त्वन्मदादेशे कृते गौणत्वेपि युष्मदस्मदोस्त्यदाद्यत्वं भवति । आमावित्यत्र योगविभागेन यद्व्याख्यानांतरं कृतं तस्यायं निष्कर्षोस्ति। गौणत्वेप्यनयोस्त्यदाद्यत्वं भवतीत्यर्थः । इत्यनेनात्वे तल्लोपे औविभक्तेरमि च कृते सवर्णदीर्घः । अतित्वां । अतिमां। त्वां मां वाऽतिक्रांत इति विग्रहे अपवादो अतियूयमतिवयं एवमग्रेप्यूह्यम् । १ । अत्वे आमृस्भा-वित्यात्वे च अमृशसोरित्यल्लोपः । अतित्वां । अतिमां। शसि अत्वे कृते अमृशसोरित्य-ल्लोपः शसीति दीर्घः शसोन इति नत्वं । अतित्वान् । अतिमान् ।२। अत्वे कृते एटाङ्योरित्ययादेशे च । अतित्वया । अतिमया । अत्वे अद्धीत्यात्वेच ।अतित्वाभ्यां अतिमाभ्यां । आमृस्भावित्यात्वं अतित्वाभिः । अतिमाभिः । ३ । अपवादो अतितुभ्यम् अतिमह्यम् । अतित्वाभ्यां अतिमाभ्यां। अत्वेऽभ्यम् च अतित्वभ्यम् । अतिमभ्यम् ।४। अत्वेशतृआदेशे च अतित्वद् अतिमत्। अतित्वाभ्यां। अतिमाभ्यां। अतित्वत्। अतिमत्।५। अपवादो अतितव। अतिमम । अत्वे ओसीत्येत्वे च अतित्वयोः । अतिमयोः । अत्वे सुडभावेपि प्रागुक्तरीत्या आकमि च अतित्वाकं । अतिमाकम् । ६ । अत्वे कृते एटाङ्योरित्येत्वे अयादेशः अतित्वयि अतिमयि । अतित्वयोः । अतिमयोः । अत्वे आत्वे च अतित्वासु । अतिमासु । ७ । गुणीभूतयोर्युष्मदस्मदोरेकार्थत्वे उदाहरणान्युक्त्वा संप्रति द्व्यर्थवाचित्वे उदाहरति ।युवामावां वाऽतिक्रांतः अतिक्रांतौ अतिक्रांता वा इति विग्रहे अतित्वम्। अत्यहम् । अतियुवामत्यावाम्। अतियूयमतिवयम्। १। अतियुवां । अत्यावां । अतियुवां । अत्यावां । अतियुवान् । अत्यावान् । २ । अतियुवया । अत्यावया । अतियुवाभ्यां । अत्यावाभ्यां । अतियुवाभिः । अत्यावाभिः । ३ । अतितुभ्यम । अतिमह्यम् अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवभ्यम् अत्यावभ्यम् । ४ । अतियुवत् । अत्यावत् । अतियुवाभ्यां । अत्यावाभ्याम् । अतियुवत् अत्यावत् । ५ । अतितव । अतिमम । अतियुवयोः । अत्यावयोः । अतियुवाकं अत्यावाकम् । ६ । अतियुवयि । अत्यावयि । अतियुवयोः । अत्यावयोः । अतियुवासु । अत्यावासु । ७ । बह्वर्थयोस्तूदाहरति । युष्मानस्मान्वाऽतिक्रांतः अतिक्रांतौ अतिक्रांता वेति विग्रहे अतित्वं । अत्यहं । अतियुष्माम् । अत्यस्माम् । अतियूयम् । अतिवयम् । १ । अतियुष्मां । अत्यस्मां । अतियुष्मान् । अत्यस्मान् । २ । अतियुष्मया । अत्यस्मया। अतियुष्माभ्यां । अत्यस्माभ्यां । अतियुष्माभिः । अत्यस्माभिः ।३। अतितुभ्यं । अतिमह्यं। अतियुष्माभ्याम्। अत्यस्माभ्यां। अतियुष्मभ्यं अत्यस्मभ्यम् ।४। अतियुष्मत् । अत्यस्मत् ।

अतियुष्माभ्यां । अत्यस्माभ्यां । अतियुष्मत् । अत्यस्मत् ।५। अतितव । अतिमम । अतियुवयोः अत्यावयोः । अतियुष्माकं । अत्यस्माकं । ६ । अतियुष्मयि । अत्यस्मयि । अतियुष्मयोः । अत्यस्मयोः । अतियुष्मासु अत्यस्मासु । ७ । पुनर्गौणे रूपांतरं युष्मानस्मान्वा करोतीति । णौ युष्मयति अस्मयति । ततः क्विप् णेरिति णिलोपे कृते युष्म् अस्मिति जातं । स्यादिषु युष्मस्मोरतित्वमहमादय आदेशा भवंति । एकदेशविकृतमनन्यवदित्युक्तत्वात् । त्वं । अहं णौ विभक्त्यादिषु गौणत्वेपि टाङिङोसुविभक्तीर्वर्जयित्वा सर्वत्रात्वे कृते आत्वं युषाम् असां । यूयं वयं । १ । युषां । असां । युषान् । असान् । २ । एटाङ्योरित्यस्य व्याख्यानांतरेणांतस्य यत्वं युष्या । अस्या । युषाभ्यां । असाभ्यां । युषाभिः । असाभिः । ३ । तुभ्यं मह्यं । युषाभ्याम् । असाभ्यां । युषभ्यं । असभ्यं । ४ । युषत् । असत् । युषाभ्यां । असाभ्यां । युषत् । असत् । ५ । तव । मम । अंतस्य यत्वे युष्योः । अस्योः । युषाकं । असाकं । ६ । यत्वे युष्यि । अस्यि । युष्योः । अस्योः । युषासु । असासु ॥

तत्त्वदीपिका—साम्आकमिति । साम आकं इति छेदः । तेन युष्मदस्मद्भ्यां परः साम् आकं भवति अनयोश्चाकारोन्तादेशः। अत्राहुः । नन्वतियुष्माकमित्यादौ गौणत्वात्त्यदाद्यत्वाभावादनवर्णान्तत्वात्सुडभावात्कथं सामितिचेत्सत्यम् । तंत्रादिना सामिति द्वयं बोध्यं एकस्य तु सुटासहाम्सामिति द्वितीयस्य तु आमासहसाम् ततश्च सुट्सहित आम् केवलश्च आकं भवति तयोश्चाकार इत्यर्थो भवतीति । अत्रेदमवधेयं । गौणत्वात्त्यदाद्यत्वाभावादनवर्णान्तत्वात्सुडभावादिति किमर्थं गौणत्वात् सुडभावादित्यस्यैव वक्तुमुचितत्वात् सुटोपि सर्वादिकार्यत्वात् गौणत्वेऽप्रवृत्तेः अन्यथा आकारान्तादेशेनावर्णांतत्वात् तंत्रादिप्रयासोऽनर्थकः संपद्येत । ससुण्निर्देशस्तु आमदेशस्य स्थानिवद्भावेनाम्त्वमाश्रित्य पश्चादपिसुट्स्यादिति तन्निवृत्तये अयमेवात्रग्रंथः स्थानिवद्भावज्ञापकः । त्वन्मदेकत्वे युवावौ द्विवचने इतिसूत्रद्वयेपि एकत्वद्विवचनशब्दौ न प्रत्ययपरौ किंत्वर्थपराविति । फलं दर्शयति स्वार्थद्रव्यकारकलिंगसंख्येत्यादि पंचकं नामार्थ इति पक्षे संज्ञाया अपि नामार्थत्वादिति भावः । त्रिकपक्षे तु द्व्येकार्थवाचिनी इति पाठ्यम् । संख्याया विभक्त्यर्थत्वेपि संख्येयस्य नामत्वानपायात् । अन्यसंख्यश्चेत् युष्मदस्मदर्थगतसंख्येतरसंख्यायुक्तश्चेदित्यर्थः । समस्यमाने युष्मदस्मदी द्व्येकत्ववाचिनी चेत् । समासार्थः अन्यसंख्यश्चेत् तदा युवावौ त्वन्मदावपि भवतइत्यर्थः । तयोरिति युष्मदस्मदोरद्व्येकार्थत्वात् द्वित्वार्थत्वैकार्थत्वाभावादित्यर्थः । संकलितार्थस्त्वयं । यदा वाक्ये युष्मदस्मदोः एकत्वे तदा त्वन्मदादेशौ भवत एव त्वन्मदेकत्वे इति सूत्रे युष्मदस्मदोरेकत्वाभिधानस्योक्तत्वात् । यदावाक्ये युष्मदस्मदोर्द्वित्वे तदा युवावौ भवत एव । युष्मदस्मदोर्द्वित्वाभिधायित्वात् । यदा तु वाक्ये युष्मदस्मदी बह्वर्थे, समासार्थः द्वित्ववाची एकत्ववाची तदायुष्मदस्मदोर्द्वित्वाभावान्न युवावौ न वा त्वन्मदौ ।

**सू०—युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ ॥**

**युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयासहितयोर्यथासंख्येनामी आदेशा भवन्ति । तत्रैकवचनेन सह ते मे । द्विवचनेन वां नौ । बहुवचनेन वस्नसौ ।**

सुबोधिनी—युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयाभिस्तेमेवांनौवस्नसौ । षष्ठी च चतुर्थी च द्वितीया च षष्ठीचतुर्थीद्वितीयास्ताभिः । अल्पस्वरत्वात् षष्ठीत्यस्य पूर्वनिपातः । सहयोगे तृतीया तया साहित्यं बोध्यते । तत् किं साहित्यं । श्रूयमाणविभक्तिकयोरेवादेशा भवंति न लुप्तविभक्तिकयोरिति । तेन समासे युष्माकं पुत्र इति युष्मत्पुत्रो ब्रवीति । अस्माकं पुत्र इत्यस्मत्पुत्रो ब्रवीतीत्यत्र प्रत्ययलक्षणेन षष्ठ्यंतयोर्युष्मदस्मदोर्वस्नसौ न ॥

तत्त्वदीपिका—युष्मदस्मदोःषष्ठीचतुर्थीद्वितीयाभिस्तेमेवान्नौवस्नसौ इति । अत्र व्याख्यानादेकार्थस्यैकार्थाय इति यथाक्रमं । नत्वर्थतो नापि शब्दतः । अर्थतस्त्वेषां नवत्वं आदेशानां त्रयत्वमिति वैषम्यं । शब्द-

तस्तु षष्ठ्यास्तेमे इत्यादिक्रमप्रसंगः स्यात् । द्वितीयास्विति त्यक्त्वा द्वितीयाभिरिति तृतीयोपादानं श्रूयमाणवि-भक्त्या साहित्यलाभार्थं । लुप्तयाप्रत्ययलक्षणेन साहित्यासंभवात् । तेनेति युष्मत्पुत्रो ब्रवीतीत्यादौ न । तृतीया तु सहयोगे । अल्पस्वरत्वात्षष्ठ्याः पूर्वनिपातः तदपेक्षया चतुर्थ्याः ।

**सू०—त्वामौ मा॥** अमासहितयोर्युष्मदस्मदोस्त्वामा एतौ भवतः । "श्रीश-स्त्वावतु मापीह दत्तात्ते मेऽपि शर्म्म सः ॥ स्वामी ते मेऽपि स हरिः पातु वामपि नौ विभुः ॥ १ ॥ सुखं वां नौ ददात्वीशः पतिर्वामपि नौ हरिः ॥ सोऽव्याद्वो नःशिवं वो नो दद्यात्सेव्योऽत्र वस्स नः ॥२॥ " एकवाक्ये युष्म-दस्मदादेशा वक्तव्याः । एकाख्यातं वाक्यं । तेनेह न । ओदनं पच तव भविष्यति । इह तु स्यादेव । शालीनामोदनं ते दास्यामि ।

सुबोधिनी—त्वामामा । तेमयोरपवादोयं । षष्ठीबहुवचनस्याऽऽमोऽत्र ग्रहणं न । व्याख्यानात् । व्याख्यानतो विशेषप्रतिपत्तिर्न हि संदेहादलक्षणमिति भावः । "श्रीशस्त्वावतु मापीह दत्ता-त्ते मेपि शर्म सः ॥ स्वामी ते मेपि स हरिः पातु वामपि नौ विभुः । १ । सुखं वां नौ ददा-त्वीशः पतिर्वामपि नौ हरिः ॥ सोऽव्याद्वो नः शिवं वो नो दद्यात्सेव्योत्र वः स नः ।२। " उ-क्तानादेशान् वचनक्रमेणोदाहरति । द्वितीयैकवचने यथा । श्रिय ईशः श्रीशो हरिरिह ज-गति त्वामपि मामपि अवतु रक्षतात् । चतुर्थ्येकवचने यथा । स हरिस्ते तुभ्यमपि मे मह्य-मपि शर्म सुखं दत्तात् । दानपात्रे चतुर्थी । षष्ठ्येकवचने यथा । स हरिस्ते तव मे ममापि स्वामी वर्तते । स्वाम्यादियोगे इति षष्ठी । सप्तम्याविधानात् । द्वितीयाद्विवचने यथा । विभुर्विष्णुर्वां युवां नावपि आवामपि पातु रक्षतु । चतुर्थीद्विवचनं यथा । ईशः शंभुर्वां युवा-भ्यां नौ आवाभ्यां सुखं ददातु । षष्ठीद्विवचने यथा । हरिर्वां युवयोः नावपि आवयोरपि पा-ति रक्षतीति पतिः । द्वितीयाबहुवचने यथा । स हरिर्वो युष्मान् नोऽस्मानव्यात् रक्षतु । चतुर्थीबहुवचने यथा । स वो युष्मभ्यं नोऽस्मभ्य शिवं कल्याणं दद्यात् । षष्ठीबहुवचने यथा । स हरिर्वो युष्माकं नोऽस्माकमत्र लोके सेवितुमर्हः सेव्यः । ऋहलोर्ण्यदिति कर्मणि ण्यत् । कृत्यानां कर्तरि वेति षष्ठी । एकवाक्ये युष्मदस्मदादेशा वक्तव्याः । एकाख्यातेऽनयोः स्थाने उक्ता आदेशा भवंति । एकमाख्यातं यत्र तदिति बहुव्रीहिः । एकाख्यातं वाक्यमु-च्यते । ननु पश्य मृगो धावति इत्यादावेकवाक्यत्वव्यवहारो न स्यात् । सत्यं । एकाख्या-तमित्यत्राख्यातं विशेष्यसमर्पकं विवक्षितं । ततश्च पश्य मृगो धावतीत्यत्राख्यातद्वये सत्यपि पश्येत्यस्यैव विशेषसमर्पकत्वान्नोक्तदोषः । तथा च वार्तिककारः । आख्यातं साविशेषणं वा-क्यमित्याह । त्वमोदनं पच तव भविष्यति अत्र ते इत्यादेशो न । वाक्यद्वयत्वात् । एकवाक्ये यथा । अहं ते तुभ्यमोदनं दास्यामि ॥

तत्त्वदीपिका—त्वामामाइति । त्वामाअमाइतिच्छेदः । तेमयोरपवादोयं । आमस्तु न ग्रहणं । एकवच-नांतस्थानिनिर्देशात् । श्रीशइत्यादि । अवनकर्मत्वात्कर्मणिद्वितीया त्वामेति । तेमेदानपात्रत्वाच्चतुर्थ्येकवचनं तुभ्यं मह्यमित्यस्य स्थाने स्वाम्यादियोगे षष्ठीति षष्ठ्येकवचनं तेमे तव ममेत्यर्थः । द्विवचनं दर्शयति पातु वाम-पीति युवामावामित्यर्थः । कर्मत्वाद्द्वितीया । सुखमिति वान्नौ युवाभ्यामावाभ्यामित्यर्थः । अत्रापि दानपात्रत्वाच्च-तुर्थी । पतिरिति वान्नौ युवयोरावयोरित्यर्थः । अत्रापि स्वाम्यादियोगे षष्ठीति षष्ठीबहुवचनं दर्शयति । सोव्या-द्वोन इति । वः युष्मान् नः अस्मान् सः हरिः अव्यात् रक्ष्यादित्यर्थः । शिवं वः नः युष्मभ्यमस्मभ्यमित्यर्थः । सेव्योत्र वः स नः युष्माकमस्माकमित्यर्थः । कृत्ययोगेषष्ठी । अनन्वादेश इतियुष्मदस्मदोरिति सूत्रे च्वौ वेत्यतो वेत्यनुवर्त्य तस्य व्यवस्थितत्वमाश्रित्य विकल्पः ॥

**मू०—एतेऽनन्वादेशे वा** ॥ धाता ते तव भक्तोस्ति । अन्वादेशे नित्यं । तस्मै ते नमः ।

**सुबोधिनी**—एतेऽनन्वादेशे वा वक्तव्याः । एते तेमयादय आदेशाः । युष्मदस्मदोः स्थानेऽनन्वादेशेऽर्थे एते आदेशा विकल्पेन भवंति । अन्वादेशे नित्यं । युष्मदस्मदोः स्थानेऽन्वादेशेऽर्थे एते आदेशा नित्यं स्युः । अनन्वादेशेऽर्थे । धाता ब्रह्मा ते भक्तस्तव भक्तोस्तीति वा । अन्वादेशे । तस्मै पूर्वोक्ताय ते तुभ्यं विष्णवे नमोस्तु ॥

**मू०—नादौ** ॥ वाक्यादौ पदादौ च वर्तमानयोर्य्युष्मदस्मदोर्नैते । त्वां पातु । वेदैरशेषैः संवेद्योऽस्मान् कृष्णस्सर्व्वदावतु ।

**सुबोधिनी**—नादौ । वाक्यादौ माभूत् । यथा त्वां पातु । पादादावपि मा भूत् । यथा कृष्णोऽस्मान् सर्वदा सर्वस्मिन् कालेऽवतु पातु । कीदृशः । अशेषैः समस्तैर्वेदैः कृत्वा संवेद्यो ज्ञायमानः । संवेत्तुं योग्यः संवेद्यः । कर्मणि ध्यण् ॥

**तत्त्वदीपिका**—नादाविति । आदित्वं च सत्यन्यस्मिन् तस्मात्पूर्वं नास्तीति वचनात्स्वप्राग्वर्णान्तरशून्यत्वं । सत्यन्यस्मिन्निति विशेषणरहितलक्षणमन्ये वदन्ति । त्वन्मदादीनां तु नायं निषेधः । मध्येपवादाः पूर्वान्विधीन्बाधंते नोत्तरानिति न्यायात् । योगविभागसामर्थ्यादनंतरस्येति न्यायं बाधित्वा त्वामामेत्यस्यैव न निषेधः । अन्यथा त्वामामा नादावित्येकयोगमेवाकरिष्यत् ।

**मू०—विशेष्यपूर्वसंबोधनेतरपूर्वसम्बोधनंचाहित्वाऽन्यस्मात्सम्बोधनात्परयोर्नैते** ॥ देवास्मान् पाहि नृहरे विष्णोस्मान् रक्ष सर्व्वदा । विशेष्यपूर्व्वात्तु । हरे कृपालो नः पाहि सर्व्वदा रक्ष देव नः ।

**सुबोधिनी**—विशेष्यपूर्वसंबोधनेतरपूर्वसंबोधनंचाहित्वान्यस्मात्संबोधनात्परयोर्नैते । संबोधनात्परयोर्युष्मदस्मदोः स्थाने एते आदेशा न भवंति । किं कृत्वा । विशेष्यं पूर्वं यस्य तत् एतादृशं विशेषणात्मकं संबोधनं त्यक्त्वा च पुनः संबोधनादितरत् पदं पूर्वं यस्य तत् एतादृशं संबोधनं त्यक्त्वा । विशेष्यपूर्वात् संबोधनेतरपूर्वाच्च संबोधनात् परयोर्युष्मदस्मदोः स्थाने एते आदेशा भवंतीत्यर्थः । हे देव त्वमस्मान् पाहि रक्षेत्यर्थः । हे नरसिंहावतार हे विष्णो त्वमस्मान् रक्ष पालयेत्यत्र संबोधनात्परस्यास्मानित्यस्य नसादेशो न जातः । विशेष्यपूर्वात्संबोधनात्तु स्युरेव यथा । हे हरे कृपास्यास्ति कृपालुस्तस्य संबोधनं हे कृपालो त्वं नोऽस्मान्पाहि । हरे इति विशेष्यं कृपालो इति विशेषणं । संबोधनेतरपूर्वात्संबोधनात्तु यथा । हे देव त्वं नोऽस्मान् सर्वस्मिन्काले रक्षेत्यत्र देवेति संबोधनस्य सत्त्वेपि ततः प्राचीनं रक्षेत्याश्रित्यादेशः ॥

**तत्त्वदीपिका**— नेति योगविभागादन्यत्रापि नेत्याशयेनाह । **विशेष्यपूर्वमित्यादि** । विशेष्यं पूर्वं यस्मात् तद्विशेष्यपूर्वं संबोधनं संबोधनेतरपूर्वमिति । संबोधनादितरत्संबोधनेतरत्पूर्वं यस्य तद्द्वयमपि हित्वा त्यक्त्वेत्यर्थः ।

**मू०—चादिभिश्च** ॥ च वा ह अह एव एभिर्योगेनैते । आवयोर्य्युवयोश्चेशो हरिर्मामेव रक्षतु ।

सुबोधिनी—चादिभिश्च । चादिगणस्थाः पंचैव चादयो ग्राह्या नत्वधिकाः । लक्ष्यानुरोधात् । सहयोगे तृतीया तया साक्षात्संबंधो गृह्यते नतु परंपरासंबंधः । यत्र युष्मदस्मदर्थगतान्समुच्चयादीन् चादयो द्योतयंति तदा चादिभिः सहार्थद्वारा युष्मदस्मदोः साक्षात्संबंधस्तत्रायं निषेध इत्यर्थः । यथा । आवयोर्द्वयोर्युवयोर्द्वयोश्च समुच्चये हरिरीशः स्वामीत्यर्थः । वा विकल्पे प्रसिद्धो । अह पूजायां । एवावधारणे । परंपरासंबंधे तु स्युरेव । यथा । हरो हरिश्च मे स्वामीत्यत्र चशब्दो हरहरिगतं समुच्चयं वक्ति । हरिहराभ्यां सहास्मदः संबंधो न तु समुच्चयेन । किन्तु परंपरासंबंधोस्ति । लक्षणं तु समुच्चीयमानादर्थांतरसंबंधः परंपरासंबंधः ।

तत्त्वदीपिका—चादिभिरिति । लक्ष्यानुरोधाच्चादिपंचकस्यैव योगे नान्यस्येत्यर्थः । साक्षाद्योग एवायं निषेधः । परंपरासंबंधे तु आदेशाः स्युरेव । हरो हरिश्च मे स्वामी । भक्तइत्यादि अत्र केचित् । येन हेरेस्त्वं भक्तस्तेनैव कारणेनाहमपि भक्त इति योज्यं यदि तेनेत्यनेन भक्तत्वं त्राणे हेतुः निर्दिश्यते तदा सापेक्षत्वविधानत्वमेव तादिमामितिवदन्वादेशो न स्यादिति तन्नेति दीक्षिताः । तथाहि । सापेक्षत्वविधानेऽन्वादेशत्वं नास्तीति तावदसंगतं । आदेशा हि विधिः किंचिद्विधाय पश्चादितरविधिश्चान्वादेशः न तु निरपेक्षत्वगर्भः । अशब्दार्थत्वात् शास्त्रे तथा परिभाषितत्वाच्च । नच प्रयोगदर्शनादेव तथाकल्पत इति वाच्यं तदेनमुल्लंघितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिमित्यादौ सापेक्षत्वेपि एनादेशदर्शनात् नक्तं । भीरुरयं इति तु नाविधिः किंत्वनुवादः अतस्तदिमामिति न विरुध्यते । एवं स्थिते येन त्वं भक्त इति यच्छब्दाध्याहारक्लेशो व्यर्थः । किंतु तेन त्रायत इत्येव संबंधः प्रक्रांतार्थत्वाच्च न यच्छब्दापेक्षेति । तेनेति विद्यमानपदं हरिरिति प्रथमान्तं ततः परस्यादेशः तथा त्रायत इत्यस्मात्परः स इति प्रथमांतं । न त्रायत इति भिन्नवाक्यस्थमिति भ्रमितव्यं । सहरिस्त्वांमां त्रायत इति तंत्रेणानेकसंबंधात् ।

सू०—अचाक्षुषज्ञानार्थधातुभिर्योगेऽन्न ॥ चेतसा त्वां समीक्षते । भक्तस्तव रूपं ध्यायति । चाक्षुषज्ञाने तु भक्तस्त्वा पश्यति चक्षुषा ।

सुबोधिनी—अचाक्षुषज्ञानार्थधातुभिर्योगेऽन्न । अचाक्षुषज्ञानमर्थो येषां ते अचाक्षुषज्ञानार्था अचाक्षुषज्ञानार्थाश्च ते धातवश्च अचाक्षुषज्ञानार्थधातवस्तैर्योगे नैते आदेशा भवंति । यथा स भक्तः चेतसा चित्तसंबंधिध्यानेन त्वां समीक्षते पश्यतीत्यर्थः । परंपरासंबंधेऽपि निषेधः । यथा भक्तस्तव रूपं ध्यायति ॥

सू०—विद्यमानपूर्वात्प्रथमान्तात्परयोरन्वादेशेऽप्येतेवा ॥ भक्तस्त्वमप्यहन्तेन हरिस्त्वां त्रायते स मां । त्वामेति वा ।

सुबोधिनी—विद्यमानपूर्वात्प्रथमांतात्परयोरन्वादेशेप्येतेवा । विद्यमानं पदं पूर्वं यस्य स विद्यमानपूर्वस्तस्मात् प्रथमांतात्परयोर्युष्मदस्मदोरन्वादेशे अर्थेपि वादेशा भवंति । अन्वादेशेनित्यमित्यऽविशेषोक्त्या नित्यत्वे प्राप्ते विकल्पार्थमिदं वचनं । यथा त्वं भक्तोऽहमपि भक्तस्तेन हरिस्त्वां मां त्रायते पालयतीत्यर्थः । अत्र तेनेति पूर्वं विद्यमानं पदं ततो हरिरिति प्रथमांतं ततः परस्य युष्मच्छब्दस्य त्वादेश उत्तरत्र त्रायते इति विद्यमानं परं ततः स इति प्रथमांतं ततः परस्यास्मच्छब्दस्य मादेशो बोध्यः ॥

॥ इति युष्मदस्मन्निरूपणम् ॥

मू०—चादिर्निपातः ॥ च । वा । ह । अह । एव । एवम् । नूनम् । पृथक् । शश्वत् । युगपत् । भूयस् । नह । हन्त । विना । नाना । स्वस्ति । अस्ति । दोषा । नक्तम् । मृषा । मिथ्या । मिथस् । अथ । अथो । अहो । ह्यस् । श्वस् । उच्चैस् । शनैस् । ऋधक् । ऋते । आरात् । दिवा । रात्रौ । सायम् । चिरम् । मनाक् । ईषत् । जोषम् । तूष्णीम् । बहिस् । अवस् । समया । निकषा । अद्धा । इद्धा । वत् । उपधा । सामि । सना । सनत् । सनात् । तिरस् । अन्तरा । अन्तरेण । सहसा । अलम् । वषट् । क्षमा । विहायसा । मुधा । पुरा । मिथो । प्रायस् । मुहुस् । सार्द्धम् । साकम् । नमस् । हिरुक् । धिक् । मा । माङ् । अम् । आम् । नेत् । चेत् । कच्चित् । उञ् । यत् । सत्यम् । जातु । कम् । शम् । ज्योक् । रहसि । अभीक्ष्णम् । अनेहा । आ । आत् । न्वै । द्वै । रै । किम् । यत् । तत् । इति । एव । हम् । हो । स्वर् । अन्तर् । प्रातर् । पुनर् । सनुतर् । यावत् । तावत् स्वाहा । स्वधा । तथाहि । खलु । किल । सुष्ठु । दुष्ठु । आदह ।

सुबोधिनी—चादिर्निपातः । च आदिर्यस्य स चादिः । निश्चयेन पतत्यनेकेष्वर्थेषु द्योतकत्वादिति निपातः । पत्ऌ पतने अस्माज्ज्वलादेर्ण इति णप्रत्ययः । असत्ववाचिनामेव चादीनां निपातसंज्ञा अव्ययसंज्ञा च भवति । स्वरादीनां तु सत्ववाचिनामसत्ववाचिनां चाऽव्ययसंज्ञैव न निपातसंज्ञा । स्वस्ति वाचयति स्वः पश्यति स्वः पततीत्यादौ कर्मादिकारकयोगेन सत्ववाचकत्वं स्वरादीनां ह्यस्त्येव । एकस्वराणां निपातानां संधिर्न भवतीति निपातसंज्ञाफलम् । एकस्वराणां स्वरादीनां तु संधिर्भवत्येव । तेषां निपातसंज्ञाभावात् । चेति समुच्चयान्वाचयेतरेतरयोगसमाहारेषु । "वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये ॥" हेति प्रसिद्धौ । अहेति पूजायां । एवेत्यवधारणे अनवक्लृप्तौ च । एवमित्युक्तपरामर्शे । नूनमिति निश्चये वितर्के च । पृथगिति भिन्नार्थे । शश्वदिति पौनःपुन्ये नित्ये सहार्थे च । युगपदित्येककाले । भूयसिति पुनरर्थे आधिक्ये च । नहेति प्रत्यारंभे । हंतेति हर्षे विषादे अनुकंपायां वाक्यारंभे च । विनेति वर्जने । नानेत्यनेकविनार्थयोः । स्वस्तीति मंगले । अस्तीति सत्तार्थे । दोषेति रात्रौ । वृथेति व्यर्थे । मृषेति वितथे । नक्तमिति रात्रौ । मिथ्येति वितथे । मिथसिति रहःसहार्थयोः । अथेति मंगलानंतराऽऽरंभप्रश्नकात्स्न्याऽधिकारप्रतिज्ञासमुच्चयेषु । अथो इत्यथवत् । अहो इति विकल्पे चेदर्थेपि । ह्यसिति अतीतेऽह्नि । श्वसिति अनागते दिने । उच्चैसिति महति । नीचैसिति अल्पेर्थे । शनैसिति क्रियामांद्ये । ऋधगिति सत्ये वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । ऋतेवर्जने । आरादिति दूरसमीपयोः । दिवेति दिवसे । रात्राविति निशि । सायमिति निशामुखे । चिरमिति बहुकाले । मनाक् ईषत् इमावल्पे । जोषमिति सुखे मौने च । तूष्णीमिति मौने । बहिस् अवस् इमौ बाह्ये । समये समीपे मध्ये च । निकषेति समीपे । अद्धेति स्फुटावधारणयोः तत्वाऽतिशययोरित्यन्ये । इद्धेति प्राकाश्ये । वत् वत्तुल्ये इत्यादिना विहितो यो वत्प्रत्ययः स इह गृह्यते प्रत्ययमात्रस्य संज्ञाप्रयोजनाऽभावात् प्रत्ययांतं ग्रहीतव्यं । यथा । ब्राह्मणवत् । क्षत्रियवत् । उपधेति भेदे सामीत्यर्धजुगुप्सितयोः । सना सनत् सनात् एते त्रयो नित्ये । तिरसिति अंतर्धौ तिर्यगर्थे परिभवे च । अंतरेति मध्ये विनार्थे

च । अंतरेति वर्जने । सहसेति आकस्मिकविमर्शयोः । अलमिति भूषणपर्याप्तिशक्तिवारण-निषेधेषु । वषडिति हविर्दाने । क्षमेति क्षांतौ । विहायसेति वियदर्थे । मुधेति व्यर्थे । पुरेति अविरते चिरातीते भविष्यदासन्ने च । मिथो इति रहस्सहार्थयोः । प्रायसिति बाहुल्ये । मुहुसिति पुनरर्थे । साकं सार्धमेतौ सहार्थे । नमसिति नतौ । हिरुगिति वर्जने । धिगिति निंदाभर्त्सनयोः । मा माङ् एतौ निषेधाशंकयोः । अमिति शैत्येऽल्पे च । आमिति अंगीकारे । नेदिति शंकाप्रतिषेध-विचारसमुच्चयेषु । चेदिति यद्यर्थे । कच्चिदितीष्टप्रश्ने । उञिति संतर्कसंबोधनपूरणेषु । यदीति पक्षांतरे । सत्यमिति प्रश्नप्रतिषेधसत्येषु । जात्विति कदाचिदर्थे । कमिति वारिमूर्द्ध-निंदासुखेषु । शमिति सुखे । ज्योगिति कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे च । रहसीत्ये-कांते । अभीक्ष्णमिति पौनःपुन्ये । अनेहाइति विस्मयविषादशोकजुगुप्सादिषु । आइति भयाश्चर्ययोः । आदिति शंकायां । न्वै विशेषवितर्कयोः । द्वै वितर्के । रेदाने अनादरे च । रेकरोति ददातीत्यर्थः । रेत्वं किंवदसिति । किमिति पृच्छाजुगुप्सेषदर्थातिशयेषु । यदिति यत्कारणे । तादिति हेतौ । इतीति हेतुप्रकारप्रकर्षैवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्ति-प्रकृतवक्ष्यमाणपरामर्शमतेषु । एवेत्युपमायां । हं हो इति विचारे । स्वरिति स्वर्गे परलोके च । अंतरिति मध्ये । प्रातरिति प्रत्यूषे । पुनरित्यप्रथमे विशेषे च । सनुतरित्यंतर्द्धाने । स्वराद्याः पंच स्वरांताः । यावत्तावदेतौ साकल्यावधिमानावधारणेषु । साकल्ये यावत्कार्य्यं तावत्कृतं । अवधौ यावद्गंतव्यं तावत्तिष्ठामि । माने यावद्दत्तं तावद्भुक्तं । अवधारणे यावद-मत्रं तावद्ब्राह्मणानामंत्रयस्वेति । स्वाहेति देवताभ्यो दाने । तथाहीति निदर्शने । खल्विति निषेधवाक्यालंकारनिश्चयेषु । किलेति वार्तायामलीके च । नु वितर्के । ननु इति प्रश्नावधार-णानुज्ञेच्छामंत्रेषु वाक्यारंभादावपि । सुष्ठु प्रशंसायां । दुष्ठु निकृष्टार्थे । आदहेत्युपक्रमहिंसा-कुत्सनेषु ॥

तत्त्वदीपिका—चादिर्निपात इति । च आदिर्यस्य स चादिः आदिशब्दो व्यवस्थावाची । प्रकारार्थ इत्यन्ये तेनानुक्तानामपि संग्रहः । निश्चयेन पतंत्यनेकेष्वर्थेषु द्योतकत्वान्निपाताः । ज्वलादेर्णः । 'निपाताश्चोपस-र्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्' इति केचित् । निपातसंज्ञा तु स्वरा-दीनां संधिनिषेधाभावार्थमिति निष्कर्षः । प्रणम्य पितरं शांतं श्रीमत्क्षेमकराभिधं । अव्ययार्थं प्रकटये पूर्वाचा-र्यैरुदीरितं ॥१। च पुनरादौ । वा विकल्पे । ह स्फुटपादपूरणयोः । हि निश्चये । अहह खेदे । एव अवधारणे । एवमंगीकारे । नूनं निश्चये । पृथग्भिन्नार्थे । अंतरेण वर्जनार्थे । स्वस्ति कल्याणे । अस्ति सत्तायां । दोषा नक्तं रात्रौ । मृषा मिथ्या असत्ये । मिथस् अन्योन्यार्थे । अथ अथो आनन्तर्ये । ह्यः पूर्वदिने । श्वः परदिने । उच्चैस् उच्चे । नीचैस् नीचे । स्वर् स्वर्गे । अन्तर् मध्ये । प्रातः प्रत्यूषे । पुनर् भूयस् पौनःपुन्ये । आहोस्वित् वितर्के । अन्तरा मध्ये । अलं भूषायां । कृतं वारणे । ईषदल्पे । किल खलु वै इति निश्चये । आरात् दूरांतिकयोः । भृशमत्यर्थे । यद्यत्कार-णे । तत्तत्कारणे । शश्वत् सातत्ये । अ संबोधने अधिक्षेपे निषेधे च । आ नयाश्चर्ययोः वाक्यस्मरणयोः । ई भर्त्सने । उऊ दुःखवितर्कयोः । ऋॠ ऌॡ गणस्तोमे । ए संबोधने । ऐ आश्चर्ये । ओ भवत्यर्थे । औ अंगी-कारे । श्रौषट् वौषट् वषडिति हविर्दाने । तत्क्षणे सद्यः । अस्मिन्दिने अद्य । अस्मिन्क्षणे अधुना । इदानीं सांप्रतंसंप्रति त्रयमपि । पूर्वस्मिन्दिने पूर्वेद्युः । अन्यस्मिन्दिने अन्येद्युः । प्र प्रकर्षे निराकारणे । सं सम्यगर्थे । अनु पश्चादर्थे । अव स्थितिज्ञानयोः । निर्निर्गतार्थे । दुर्दुःखे । अभि आभिमुख्ये । वि विशेषार्थे । आङ् समा-नार्थे । नि निधने । अति अतिशये अधि अधिके । अपि संभावनायां । प्रति वीप्सायां । परि वर्जने । उप समीपे । श्रत् श्रद्धायां । अंतर्मध्ये । अधि प्राकट्ये । सु पूजायां । सनुतरित्यन्तर्द्धाने । ऋधगिति सत्ये । वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये । युगपदिति एककाले । मनागितिरीषदर्थे । ईषदित्यल्पे । जोषमिति सुखमौनयोः । तूष्णीमितिमौने । बहिस्इतिबाह्ये । अधसितिबहिरर्थे । समयेत्यन्तिकमध्ययोः । निकषेत्यन्तिके । स्वयमिति

आत्मनेत्यर्थे वृथेतिव्यर्थे । नञितिनिषेधपदर्थविपक्षेषु तदन्यताद्विरुद्धतदभावेष्वपि । हेताविति निमित्तार्थे
इद्धेतिप्राकाश्ये । अद्धेतिस्फुटावधारणयोः । तत्त्वातिशययोरित्येके । सामीत्येतदर्द्धजुगुप्सितयोः । सनेतिनित्ये
ज्योगि-उपधेतिभेदे । सनादितिनित्ये सनदित्यपि । तिरस्इतिअंतर्द्धौतिर्य्यगर्थेवा । अंतरेतिमध्यविनार्थयोः । ज्योगि-
तिकालभूयस्त्वप्रश्नयोः शीघ्रार्थेसंप्रत्यर्थेपि । कमितिवारिमूर्द्धानन्दासुखेषु । शमितिदुःखोपशमे । सहसेत्याक-
स्मिकाविमर्शयोः । नानेत्यनेकविनार्थयोः । स्वस्तीतिपुण्याशीःक्षेममंगलप्रत्यभिवादेषु । स्वाहेतिदेवदाने।स्वधेति
पितृदाने । अलमिति भूषणपर्याप्तिशक्तिवारणनिषेधेषु । अन्यदिति अन्यार्थे । अस्तीति सत्तायां । उपां-
शुइति अप्रकाशोच्चारणरहस्ययोः । क्षमेति क्षांतौ । विहायसेति वियदर्थे । दोषेतिरात्रौ । मृषेति वितथे । मि-
थ्येति व्यर्थार्थे च । पुरेति चिरातीतभविष्यदासन्नेषु । मिथो इति रहःसहार्थयोः । विरहान्योन्यार्थयोरपि ।
प्रायसिति बाहुल्ये । मुहुरिति पुनरर्थे । प्रवाहुकमिति समकालार्थेऊर्द्धेपि । प्रवाहकमिति पाठान्तरं । आर्य-
हलमिति बलात्कारे । आर्येति प्रतिबंधे । हलमिति निषेधविवादार्थयोरिति शाकटायनः । अभीक्ष्णमिति अ-
नारते पुनरर्थे च । साकं सार्द्धमित्येतौ सहार्थौ । नमसिति नतौ । हिरुक्इति वर्जने । धिगिति निंदाभार्सनयोः ।
अथेति मंगलानंतरारंभप्रश्नकार्त्स्न्याधिकारप्रतिज्ञासमुच्चयेषु । अम् शैघ्र्ये अल्पे च । आमित्यंगीकारे । प्रता-
मिति ग्लानौ । प्रशानिति समानार्थे । प्रतानिति विस्तारे । मा इति निषेधे। माङिति निषेधाशंकयोः । चेत्य-
न्वाचयसमाहारेतरेतरसमुच्चयविनियोगतुल्ययोग्यतावधारणहेतुषु । पादपूरणेपि । वेति विकल्पानवक्लृप्त्युपमानद्वंद्व-
समुच्चयेपि । अहेति विनियोगे । प्राचांमते क्रमपूजनयोरपि एवमपि प्रकृतपरामर्शप्रकारार्थोपदेशनिश्चयांगीकारेषु ।
नूनमिति वितर्के निश्चये च । शश्वदितिसर्वकालेपौनःपुन्यनित्यग्रहेष्वपि । यदि ।  प्रश्नवित र्कप्रशंसासु । कच्चि-
दिति भूयोर्थे । प्रमिति वितर्कनिश्चये च प्रशंसायां शंकायां च । नेदिति शंकायां प्रतिषेधविचारसमुच्चयेष्वि-
ति शाकटायनः । चेदिति यद्यर्थे । चिदिति चेदर्थे असाकल्यार्थोपमानासंपत्तिषु । कच्चिदिति अभीष्टप्रश्ने
च । यद्वेति अनवक्लृप्तमर्षगर्हाश्चर्येषु । नेहेति प्रारंभे । हर्येति हर्षानुकंपावाक्यारंभविषादेषु दाननिश्चययोरपि-
माकिमिति निषेधवर्जयोः नकिमित्यौपम्ययोश्च यवत्तावदित्येतौ साकल्यावधिमानावधारणेषु । यत्वरितिशेषवि-
तर्कयोः ईइतिवितर्के रैइति आदरानादरयोः । तुमिति तुंकारे। तथाहिइतिनिदर्शने। पत्विति निषेधवाक्यालंकार-
जिज्ञासानुनयेषु । नियमनिश्चयहेतुविवादेष्वपि । किलइति वार्त्तानुकरणसंभाव्यहेत्वतिरस्कारालीकेषु । तथेति
सादृश्ये समुच्चयाभ्युपगमयोरपि ।

मू०-उपसर्गस्वरविभक्तिप्रतिरूपकाश्च ॥ अवदत्तम् । अहंयुः । हेतौ । स्वयं । उत । नञ् । स्वधा । स्म । अहं । अस्मि । वै । शंवट् । दिष्ट्या । अ । आ । इ । ई । उ । ऊ । ऋ । ॠ । लृ । ॡ । ए । ऐ । ओ औ । पशु । शुकं । यथा । कथा । च । पाट् । प्याट् । अंग । हे । है । भोः । अये । द्य । विषु । रे । अरे । एकपदे । द्राक् । मंक्षु । युत् । आतः । श्रौषट् वौषट् । इत्यादि । तत्रादिर्विभक्त्यर्थे निपात्यते । तस्मिन्निति तत्र । अस्मिन्निति अत्र । यस्मिन्निति यत्र । कस्मिन्निति क्व । कुह । तेन प्रकारेण तथा । सर्व्वथा । कथम् । इत्थं । अस्मादिति इतः । एतस्मादित्येततः । ततः । यतः । सर्वतः । कुतः । बहुतः । सार्व्वविभक्तिकस्तसित्येके । आदितः । मध्यतः । उपरि । अन्ततः । पूर्वस्मिन्निति पुरः । पुरस्तात् । अधः । अध-स्तात् । उपरिष्टात् । परस्मिन्निति परेण । दक्षिणेन दक्षिणा । दक्षिणतः । उत्तरतः । दक्षिणस्यां दिशि दूरे दक्षिणा । दक्षिणाहि । राजाधीनं राजसात् । सर्वं भस्म भस्मसात् । उरी ऊरी उररी विस्तारांगीकारयोः । सद्यादिः काले

समानेऽह्नि सद्यः । अद्य । अधुना । इदानीम् । तस्मिन् काले तदा । यदा । कदा । सर्व्वदा । एकदा । अन्यदा । सपदि । साम्प्रतं । झटिति । तूर्णं । आशु । शीघ्रम् । पूर्व्वेद्युः । परेद्युः । परेद्यवि । ऐषमः । परुत् । परारि । अन्येद्युः । अन्यतरेद्युः । उभयेद्युः । तर्हि । यर्हि । कर्हि । एतर्हि ।

सुबोधिनी—उपसर्गस्वरविभक्तिप्रतिरूपकाश्च । उपसर्गप्रतिरूपको यथा । अवदत्तमिति दोदादिति दद्‌देशः । इह अवस्यानुपसर्गत्वात्स्वरांतो वेति तकारो न भवति । स्वरप्रतिरूपको यथा । अ आ इत्यादि । विभक्तिप्रतिरूपको यथा । अहंयुः । अहमिति सिबंतप्रतिरूपकमहंकारे वर्तते । ऊर्णाहंशुभंभ्योयुरिति युः । यदाऽस्मच्छब्दान्निष्पन्नो योऽहंशब्दस्तस्मात् प्रत्ययः क्रियेत तर्हि समासप्रत्यययोरिति लुकि सति अस्मद्यु इति स्थिते मदाय इत्यत्रेव मदादेशे मद्युरिति स्यादिति भावः । हेताविति निमित्ते । स्वयमित्यात्मनेत्यर्थे । उतेति विकल्पे । नञिति निषेधेपदर्थविपक्षेषु तदन्यताद्विरुद्धतदभावेषु च । स्वधेति पितृभ्यो दाने । स्मेत्यतीते पादपूरणे च । अस्मीत्यहमित्यर्थे । वै पादपूरणे विशेषेपि । शंबडित्यंतःकरणे आभिमुख्ये च । नो निषेधे । दिष्ट्या इत्यानंदे । सद्भजनदर्शनप्रातिलोम्येष्वित्यन्ये । अ इति संबोधनेऽधिक्षेपे निषेधे च । आ इति वाक्यस्मरणयोः । इ इति संबोधनजुगुप्साविस्मयेषु । ई भर्त्सने । उ ऊ दुःखवितर्कयोः । ऋ ॠ ऌ ॡ गानसमूहे । ए संबोधने । ऐ आश्चर्ये । ओ संबोधने । औ अंगीकारे । पशु सम्यगर्थे । शुकं शैघ्र्ये । यथाकथाचेत्यनादरे । पाट् प्याट् अंग है हे भोः अये एते सप्त संबोधने । घेति हिंसाप्रातिलोम्यपादपूरणेषु । विषु इति नानार्थे । रे अरे एतौ नीचामंत्रणे । एकपदे इत्यकस्मादित्यर्थे । द्राक् मंक्षु एतौ शैघ्र्ये । युत् इति कुत्सायां । आत इतीतोपीत्यर्थे । श्रौषट् वौषट् एतौ हविर्दाने । अन्येपि संति तथाहि । कामं स्वाच्छंद्ये । प्रकाममित्यातिशये । सांप्रतमिति न्याये । परमिति किंत्वर्थे । साक्षादिति प्रत्यये । साचीति तिर्यगर्थे । संवादिति वर्षे । अवश्यमिति निश्चये । उषेति रात्रौ । ओमिति अंगीकारे ब्रह्मणि च । भूरिति पृथिव्यां । भुव इत्यंतरिक्षे । कु कुत्सितेपदर्थयोः । अंजसेति तत्त्वशीघ्रार्थयोः । मिथु इति द्वावित्यर्थे । अस्तामिति विनाशे । स्थाने इति युक्ते । बरामिति ईषदुत्कर्षे । सुदीतिशुक्लपक्षे । वदीति कृष्णपक्षे । तुमिति तुंकारे । आहेति उवाचेत्यर्थे । आसेति बभूवेत्यर्थे । आयेति प्रतिबंधे । असीति त्वमित्यर्थवाक्यालंकारयोः । ब्रूहीति प्रेषाऽनुज्ञावसरेषु । वामिति युवामित्यर्थे । चटु चाटु एतौ प्रियवाक्ये । एवमन्येऽप्यूह्याः । तत्रादिर्विभक्त्यर्थे । आदिशब्दः प्रकारे वर्तते । गणाभावात् । विभक्तीनामर्थोऽभिधेयो योऽपादानादिस्तस्मिन्नर्थे तत्रादिर्निपात्यते । तत्र आदिर्यस्य स तत्रादिः । शब्दसमूह इत्यर्थः । तस्मिन्निति तत्र । एतस्मिन्नित्यत्र । यस्मिन्निति यत्र । कस्मिन्निति कुत्र, क्व । तेन प्रकारेण तथा । सर्वेण प्रकारेणेति सर्वथा । केन प्रकारेणेति कथम् । अनेन प्रकारेण एतेन प्रकारेण वेतीत्थं । तस्मात्तस्या वेति ततः । यस्मात् यस्यावेति यतः । कस्मात् कस्या वेति कुतः । सर्वस्मात् सर्वस्या वेति सर्वतः । बहोरिति बहुतः । पूर्वस्मिन् देशे पूर्वस्माद्देशात्पूर्वो वा देशः पुरः पुरस्तात् । अधः, अधस्तात् ऊर्ध्वं, ऊर्ध्वात् ऊर्ध्वो वेति । उपरि, उपरिष्टात् । दक्षिणस्मिन् दक्षिणो वेति दक्षिणेन दक्षिणस्यां दिशि दूरे इति दक्षिणा दक्षिणाहि । उत्तरस्मादुत्तरस्यां वेति उत्तरतः । उत्तरस्यां दिशि दूरे इति उत्तराहि । उत्तराः । सभवानिति ततोभवान् तत्रभवान् । तं भवंतमिति ततोभवंतं तत्रभवंतं । तेन भवतेति ततोभवता

तत्रभवता । तस्मैभवते इति ततोभवते तत्रभवते । तस्माद्भवत इति ततोभवतः तत्रभवतः तस्यभवतः इति ततोभवतः तत्रभवतः । तस्मिन्भवतीति ततोभवति तत्रभवति । सद्यआदिः काले । अत्राप्यादिशब्दः प्रकारे वर्तते । पूर्वदेशकालादिविशिष्टो विभक्त्यर्थो गृहीतः । इह तु कालविशिष्ट एव विभक्त्यर्थो गृह्यते । समानेऽह्नीति समानस्य सादेशः द्यस्प्रत्ययश्च तत्कालेसद्यः । अस्मिन्नहनीति इदमो अशादेशो द्यः प्रत्ययश्च । सांप्रतदिनेऽद्य । अधुना-इदानीमेतौ वर्तमानक्षणार्थे । यस्मिन् काले यदा । कस्मिन् काले कदा । सर्वस्मिन् काले सर्वदा । एकस्मिन् काले एकदा । अन्यस्मिन् काले अन्यदा । सपदि सांप्रतं संप्रति एते त्रयो वर्तमानक्षणार्थे । झटिति तूर्णम् । आशु शीघ्रमेते शैघ्र्ये । पूर्वस्मिन्नहनीति पूर्वेद्युः । परस्मिन्नहनीति परद्यवि । अस्मिन् वर्षे इति एषमः । पूर्वस्मिन् वर्षे परुत् । पूर्वतरे वर्षे परारि । अन्यस्मिन्नहनीति अन्येद्युः । अन्यतरस्मिन्नहनीति अन्यतरेद्युः । उभयस्मिन्नहनीति उभयेद्युः । तस्मिन्काले तर्हि । कस्मिन्काले कर्हि । यस्मिन् काले यर्हि । एतस्मिन्काले एतर्हि ॥

तत्त्वदीपिका—स्मेति अतीते पादपूरणे च । अस्मीति अहमित्यर्थे । आङिति ईषदर्थाभिविधिमर्यादाक्रियायोगेषु । उदिति अप्यर्थे । उञ् इति सतर्कसंबोधनपूरणेषु । आदहेति हिंसोपक्रमकुत्सनेषु आतंकितेकुत्सनविनाशयोः । प्रातिग्रहेपीति शाकटायनः । वेलायां इति कालपरिमाणे । मात्रायामिति अल्पपरिमाणे । यथेति योग्यातावीप्सापदार्थानतिवृत्तिसादृश्येषु । किमिति पृच्छाजुगुप्सयोःईषदर्थातिशययोरपि । यदिति यद्यर्थे । हाहाइति विस्मयविषादशोकजुगुप्सार्तिषु । ह इति विनियोगक्रमपादपूरणेषु । हे है पाट् प्याट् एते संबोधनार्थाः । अहो इति विकल्पे चेदर्थेपि । नन्विति प्रश्नावधारणानुज्ञेच्छामात्रेषु । मन्ये इति वितर्के नाहप्रभावे । उताहोइतिवितर्के । असीतित्वमित्यर्थेवाक्यालंकारयोः । ब्रूहीतिप्रैषानुज्ञावसरेषु । ननुइतिनिषेधे । इतिइतिहेतुप्रकारप्रकर्षैवमर्थव्यवस्थास्वरूपविवक्षानियमसमाप्ति प्रक्रांतवक्ष्यमाणपरामर्शमतेषु । इवेतीषदर्थेपि । मा प्रेक्षावाक्यालंकारेषु । ओमित्यभ्यादानाभ्युपगमसमाध्यर्थेषु । फडिति विनिराकृतौ । यदिपक्षांतरे । होइतिसंबोधने । इहीतितिङन्तप्रतिरूपकं गच्छेत्यर्थे । अहेत्यत्रेत्यर्थे । तदितिहेतौ । असाध्वादिति । अहो बत सामितिसर्वतोभावे । किमितिअनर्थकं पादपूरणेवा । आमितिप्रतिवचनावधारणयोः हमितिस्तोमवचने । वामितियुवामित्यर्थे । शुकमिति अतिशये । शुकमितिशैत्ये । आनुकामितितर्के । न हिकमिति निषेधे । सत्यमिति प्रश्नप्रतिषेधसत्येषु ऋतमिति सत्यार्थे । नोचेन्नचेदिति निषेधे । जातुविति कदाचिदर्थे । कथमिति प्रकारप्रश्ने कुतइति प्रश्ननिह्नवयोः कुत्रेति देशप्रश्ने । अनु अवेति उपसर्गप्रतिरूपकौ । अनु अव इत्येतयोरर्थे । हा हैहे एते त्रयोपि शोभार्थाः । शंबडिति अंतःकरणे आभिमुख्येपि । व इति पादपूरणे हिंसाप्रातिलोम्येषु । दिष्ट्येत्यानंदे सद्भजनदर्शनप्रातिलोम्येष्वित्येके पश्चिति सम्यगर्थे । हसेति आनुषगिति आनुपूर्वे । अंगेति संबोधने । द्राक्स्रागिति झटित्यर्थे । अरे इति नीचसंबोधने । चटु चाटु इति प्रियवाक्ये । हुमित्यनिच्छाभयभर्त्सनकोपेषु । सुष्ठु इति प्रशंसायां । पुरसित्यग्रे पूर्वदेशे पूर्वकालयोश्च । आश्विदिति क्षिप्रे । नहीति विशेषे । रहसीति एकांते । एषामर्थानांनिपाताद्योतकानतुवाचकाः पदांतरविनाप्रयोगात् । किं च वाचकत्वे घटस्यसमुच्चय इतिवत् घटस्य च इत्यपि स्यात् । अपि शोभनः समुच्चयेतिवत् शोभनं च इत्यपि स्यात् । द्योतकत्वेत्वस्य पदार्थैकदेशत्वान्न तत्र विशेषणान्वयः । अथ कथं घटश्चेत्यादौ समुच्चयादिबोध इति चेत्सत्यं । घटवल्लक्षणयैव समुच्चितघटबोधसंभवात् विजय इत्यादौ विशिष्टजये धातोरितिचेदितिदिक् । तत्रादिविभक्त्यर्थे इति । आदिशब्दः प्रकारार्थः गणाभावात् । विभक्तीनामर्थोऽभिधेयस्तस्मिन् तत्रादिर्निपात्यन्ते । तत्रेति अत्र त्रप्रत्ययष्टेरत्वं निपात्यते । तत इति । अत्र तसप्रत्ययष्टेरत्वं बहुत इति अत्र ईकारलोपः तेन प्रकारेण तथेति तस्मिन् काले तदेति कालप्रकारयोर्विभक्त्यर्थत्वाभावेपि । सदोणादयः । प्रादेश्चतथेति सूत्रस्थसदातथेतिकालप्रकारयोरुपलक्षणं सद्यआदिरिति । तत्राप्यादिशब्दः प्रकारे सर्वत्र देशकालादिविशिष्टो विभक्त्यर्थो गृहीत इह तु कालविशिष्टस्विभक्त्यर्थो गृह्यते । अद्येति । अस्मिन्नहनीत्यर्थः । इदमस्माद्यप्रत्ययश्च । पुरः पुरस्तादिति पूर्वस्मिन्देशे पूर्वस्माद्देशात् पूर्वो वा देश इत्यर्थः । उपरीति ऊर्ध्वमित्यर्थः ।

मू०—प्रादिरुपसर्गः ॥ प्र । परा । अप । सम् । अनु । अव । निस् । निर् । दुस् । दुर् । अभि । वि । अधि । अति । सु । उद् । नि । प्रति । अपि । परि । उप । आङ् । श्रत् । अन्तर् । आविर् ॥

सुबोधिनी—प्रादिरुपसर्गः । प्र आदिर्यस्य स प्रादिः । तद्गुणसंविज्ञानोऽयं बहुव्रीहिः । प्रकर्षइति लिंगात् । उप समीपे सृज्यते उच्चार्यते क्रियावाचकस्य शब्दस्येत्युपसर्गः । कर्मणि घञ् । अन्वर्थसंज्ञाबलात् क्रियासंबद्धः इति लभ्यते । तदुक्तं । यत्क्रियायुक्ताः प्रादयस्तं प्रत्येवोपसर्गसंज्ञेति । उपसर्गा हि अर्थविशेषस्य द्योतका न तु वाचकाः । प्रादिकर्मणि दीर्घेशभृशसंभवतृप्तिषु । वियोगशुद्धिशक्तीच्छाशांतिपूजाग्रदर्शने ॥ १ ॥ आदिकर्मणि प्रारंभकर्मणि यथा । प्रयातः । दीर्घे यथा प्रबला मूषिकाः। ईशेयथा । प्रभुः। भृशार्थे यथा । प्रवदंति। संभवे यथा । हिमवतो गंगा प्रभवति । तृप्तौ यथा । प्रभुक्तमन्नं । वियोगे यथा प्रोषितः । शुद्धे यथा । प्रसन्नमुदकं । शक्तौ यथा । प्रशक्तः । इच्छायां यथा । प्रार्थयते कन्यां । शांतौ यथा । प्रशान्तोऽग्निः । पूजायां यथा । प्रांजलिः स्थितः । अग्रे यथा । प्रवालं । दर्शने यथा । प्रलोकयति ॥ १ ॥ वधेगतौ दर्शने च विक्रमेभिमुखे भृशे ॥ अधीनमोक्षणप्रातिलोम्यकेषु परा मतः ॥ २ ॥ वधे यथा । पराहतः । गतौ यथा । परागतः । दर्शने यथा । परादृष्टः । विक्रमे यथा । पराक्रांतः । अभिमुखे यथा । परावृतः । भृशे यथा । पराजितः । अधीने यथा। पराधीनः । मोक्षणे यथा । पराकृतस्त्यक्त इत्यर्थः । प्रातिलोम्ये यथा । पराङ्मुखः ॥ २ ॥ अपो वियोगे विकृतौ विपरीते निदर्शने । आनंदे वर्जने चौरे चारणे समुदाहृतः ॥ ३ ॥ वियोगे यथा । अपयाति । विकृतौ यथा । अपकृतवान् । विपरीते यथा । अपशब्दः । निदर्शने यथा। अपदिशति । आनंदे यथा। अपहसति । वर्ज्जने यथा । अपवनात् दृष्टो देवः चौर्ये यथा । अपहरति । चारणे यथा । अपसरति ॥ ३ ॥ संयोगैक्ये च प्रभवे सत्यप्रत्यक्षसिद्धिषु ॥ भूषाश्लेषस्वीकरणक्रोधाभिमुखवाचि सम् ॥ ४ ॥ संयोगे यथा । संगतः पुत्रेण। ऐक्ये यथा । संवदंति सख्यः । प्रभवे यथा । काष्ठेऽग्निः संभवति । सत्ये यथा । गां संजानाति । प्रत्यक्षे यथा । संपश्यते । सिद्धौ यथा । संसिद्धिः । भूषायां यथा संस्कृता कन्या । आश्लेषे यथा । संधत्ते । स्वीकारे यथा । संगृह्णाति । क्रोधे यथा संक्रुद्धः । अभिमुखे यथा संयाति ॥ ४ ॥ वेदाधिष्ठानसामीप्यपश्चाद्भावानुबंधने ॥ साम्याभिमुखहीनेषु विसर्गे लक्षणे त्वनु ॥ ५ ॥ वेदे यथा । अनुवाकमधीते । अधिष्ठाने यथा । अनुष्ठानं देशः । सामीप्ये यथा । अनुमेघं वर्षति । पश्चाद्यथा । अनुरथं । भावानुबंधने यथा । अनुशयः । । साम्ये यथा । अनुकृतिः । अभिमुखे यथा । अनुवत्सो मातरं धावति । हीने यथा । अन्वर्जुनं योद्धारः । विसर्गे यथा। अनुज्ञातः । लक्षणे यथा । अनुवनमसतां गतिः ॥ ५ ॥ ज्ञानावलंबशुद्धीषदर्थे व्याप्तिपराभवे ॥ अवो ज्ञेयो वियोगे च लोकयोगानुसारतः ॥ ६ ॥ ज्ञाने यथा अवगतोर्थः । अवलंबे यथा । अवलंब्य यष्टिं गच्छति । शुद्धौ यथा । अवदातः । ईषदर्थे यथा अवलंब्यते । व्याप्तौ यथा । अवकीर्णम् । पराभवे यथा । अवगणयति । वियोगे यथा। अवयातः ॥ ६ ॥ निर्वियोगात्ययादेशातिक्रमे लाभनिश्चिते ॥ दुरीषदर्थे कृच्छ्रेर्थे कुत्सासंपत्तिसंकटे ॥ ७ ॥ वियोगे यथा । निःसंगो ब्रवीति । अत्यये यथा । निर्मेघं । आदेशे यथा निर्दिष्टं । अतिक्रमे यथा । निःष्क्रांतः । लाभे यथा । निर्दिष्टः । निश्चिते यथा । निश्चितं ।

दुरीषदर्थे यथा । दुर्गतिः । कृच्छ्रार्थे यथा । दुर्जीवः । कुत्से यथा । दुर्बलः । असंपत्तौ यथा । दुर्गतः । संकटे यथा । दुर्दिनम् ॥ ७ ॥ नानावियोगातिशये भृशमोहेशवाङ्मृधे ॥ पैशुन्यास्मरणे भूषेषदर्थानाभिमुख्यके ॥ ८ ॥ अनवस्थामुख्यशौर्य्यदर्शने विरुदाहृतः । आङिच्छाभयवाक्येषदर्थाश्लेषादिकर्म्मणि ॥ ९ ॥ नानावियोगे यथा । विमुक्तः । अतिशये यथा । विकीर्णः । भृशे यथा । वितटा नद्यो महत्य इत्यर्थः । मोहे यथा । विमनस्कः । ईशे यथा । विभुः । वाङ्मृधे यथा । विवदंते । पैशुन्ये यथा । विगायति । अस्मरणे यथा । विस्मृतः । भूषायां यथा । विभूषितः । ईषदर्थे यथा । विलोपितः । अनाभिमुख्यके यथा । विमुखः ॥ ८ ॥ अनवस्थायां यथा । विभ्रांतः । मुख्येयथा । विशिष्टः । शौर्ये यथा । विक्रांतः । दर्शने यथा । विलोकयति ॥ आङ्इच्छायां यथा । आकांक्षति । भये यथा । आबिभेति । वाक्ये यथा । आजानाति । ईषदर्थे यथा । आताम्रनखः । आश्लेषे यथा । आलिंगति । आदिकर्मणि यथा । आरभते ॥ ९ ॥ बंधनेऽभिविधौ शाठ्यकृच्छ्रसामीप्यसंश्रये । अभिमंत्रनिवृत्त्याशादानानुभवविस्मये ॥ १० ॥ प्रतिष्ठादेशमर्यादास्पर्द्धामुख्योर्ध्वकर्मणि । निराश्रयेऽधोऽभृशादेशनित्यकौशलबंधने ॥ ११ ॥ बंधने यथा । कवचमाबंधति । अभिविधौ यथा । आकुमारं यशः । शाठ्ये यथा । आचरति कपटेन । कृच्छ्रे यथा आहतः । सामीप्ये यथा । आसन्ना वयं । संश्रये यथा । आवसथः । अभिमंत्रे यथा । आमंत्रणं । निवृत्तौ यथा । आधावति । आशायां यथा । आशास्ते । आदाने यथा । आदत्ते । अनुभवे यथा । आशीलं । विस्मये यथा । आएवं किल तत् ॥ १० ॥ प्रतिष्ठायां यथा । आस्पदं । आदेशे यथा । आदिष्टः । मर्यादायां यथा । आमुक्तेर्दुःखं । स्पर्द्धायां यथा । आह्वयते मल्लं मल्लः । मुख्ये यथा । आगच्छति । ऊर्ध्वकर्मणि यथा । आरोहति पर्वतं ॥ निराशित्वे यथा । निकरोति मणीनां । अधो यथा । निपतति । अभृशेयथा निगृहीतः । आदेशे यथा । निदर्शितं । नित्ये यथा । निविशते । कौशल्ये यथा । निपुणः । बंधने यथा । निबद्धः ॥ ११ ॥ अंतर्भावे समीपे निर् दर्शनोपरमाश्रये । अधिरध्ययनैश्वर्यवशित्वस्मरणाधिके ॥ १५ ॥ अंतर्भावे यथा निपीतमुदकं सिकताभिः । समीपे यथा । निकृष्टः । दर्शने यथा । निदर्शनं । उपरमे यथा । निवृत्तः पणतः । आश्रये यथा । निलयः । अधि अध्ययने यथा । उपाध्यायादधीते । ऐश्वर्ये यथा । अधिपतिः । वशित्वे यथा । अधीनः । स्मरणे यथा । मातुरध्येति । अधिके यथा । अधिकृतम् ॥ १२ ॥ अपिः संभवगर्हाशीर्मृतिभूषासमुच्चये । विक्रमातिक्रमाऽबुद्धभृशार्थोतिशयेष्वतिः ॥ १३ ॥ संभवे यथा अपिप्रयोजनमस्ति । गर्हायां यथा । अपिपापिनः । आशिषि यथा । भद्रमपि । मृतौ यथा । मरणमपि । भूषायां यथा । अपिनह्यति हरं । समुच्चये यथा । तदपि विक्रामति । अतिविक्रमे यथा । अतिरथः । अतिक्रमे यथा । अतिक्रामति । अबुद्धे यथा । अतिगहनं । भृशार्थे यथा । अतिततं । अतिशये यथा । अतिमनुते ॥ १३ ॥ प्रशंसानुमते पूजाभृशकृच्छ्रशुभेषु सुः । उत्प्राबल्यवियोगोर्ध्वकर्मलाभप्रकाशने ॥ १४ ॥ प्रशंसायां यथा । सुरूपः । अनुमते यथा । सुकृतं । पूजायां यथा । सुसाधुः । भृशेयथा सुतप्तः । कृच्छ्रे यथा सुदुष्करं । शुभे यथा । सुगंधः ॥ उत् प्राबल्ये यथा । उद्बलः । वियोगे यथा उद्गच्छति । ऊर्ध्वकर्मणि यथा । उत्तिष्ठति शयनात् । लाभे यथा । उत्पन्नं । प्रकाशने यथा । उच्चरति ॥ १४ ॥ आश्चर्ये मोक्षणेऽभावे चलप्राधान्यशक्तिषु । अभिपूजाभृशार्थेच्छाव्याधिसाम्याभिमुख्यके ॥ १५ ॥ आश्चर्ये यथा । उत्सुकः । मोक्षणे

यथा । उद्गतोऽश्वः । अभावे यथा । उत्पथः । चले यथा । उत्कः । प्राधान्ये यथा । उद्दिष्टः। शक्तौ यथा । उत्सहः ॥ अभिपूजायां यथा । अभिवंदते देवं । भृशे यथा । अभियुक्तः । इच्छायां यथा । अभिलिप्सते।व्याधौ यथा । अभिस्यंदो व्याधिः । साम्ये यथा । अभिजातः आभिमुख्यके यथा । अभिमुखम्॥१५॥सारूप्यवचनाहारस्वाध्यायेषु निरूपितः॥ सादृश्या-दानहिंसांगीकृतौप्रतिनिधौक्वचित् ॥ १६ ॥ सारूप्ये यथा । अभिरूपः । वचने यथा अभिधानम् । आहारे यथा । अभ्यवहरति । स्वाध्याये यथा । अभ्यस्यति ॥ प्रति सादृश्ये यथा।देवदत्तस्यप्रति । आदाने यथा । प्रतिगृह्णाति । हिंसायां यथा । प्रतिहंति । अंगीकृतौ यथा । प्रतिज्ञातम् प्रतिनिधौ यथा । अभिमन्युरर्जुनतः प्रति ॥ १६ ॥ व्याध्याभिमुख्ययो-र्व्याप्तौवारणेप्रतिरुच्यते ॥ परिः समंततोभावव्याधिदोषकथासुच ॥ १७ ॥ व्याधौ यथा । प्रतिशापः । आभिमुख्ये यथा । प्रतिसूर्यं गच्छति । व्याप्तौ यथा । प्रतिकीर्णपांसुभिः । वारणे यथा प्रतिषिद्धः ॥ परिः समंततोभावे यथा।परितः। परिव्याप्तौ यथा।परिगतोऽग्निर्मार्गम् । दोषकथासु यथा । परिवादः ॥१७॥ भूषाश्लेषे पूजने च वर्जने वसने शुभे । उप सामीप्यसा-मर्थ्यव्याप्तावधिकृतौ मृतौ ॥ १८ ॥ भूषायां यथा । परिकरोति कन्याम् । आश्लेषे यथा । परिष्वजते । पूजने यथा । परिचरति गुरुम् । वर्जने यथा । परिवनेभ्यो वृष्टो देवः । वसने यथा । परिधत्तेवासः । अशुभेयथा । परिदेवनम् ॥ उप सामीप्ये यथा । उपकुंभम् । सामर्थ्ये यथा । उपकरोति मित्रेभ्यः । व्याप्तौ यथा । उपकीर्णः पांशुभिराचार्यः । अधिकृतौ यथा । उपदिशति शिष्येभ्यः । मृतौ यथा । उपरतः ॥ १८ ॥ दोषदानक्रियावीप्सारंभाध्ययनपूजने। कृष्णाचार्यैः कृता श्लोका उपसर्गार्थसंग्रहे ॥ १९ ॥ दोषे यथा । उपघातः । दाने यथा । उपहरत्यर्थं देवदत्ताय । क्रियायां यथा।उपचारः। वीप्सायां यथा । देवं देवमुपचरति । आरंभे यथा । उपक्रमते भोक्तुम् । अध्ययने यथा । उपाध्यायादधीते । पूजने यथा । उपचितः पिता पुत्रेण ॥ १९ ॥ निस् निश्चयादौ । दुस् दुःखादौ । श्रत् श्रद्धादौ । अंतर् मध्यादौ। आविर् प्राकट्यादौ ॥

**तत्त्वदीपिका–प्रादिरुपसर्ग इति** । प्र आदिर्यस्येति स प्रादिरिति तद्गुणसंविज्ञानो बहुव्रीहिः नात-द्गुणसंविज्ञानः प्रकर्ष इति लिंगात् । अन्यथा प्रइत्यस्य धातोः प्राक् पाठो न स्यात् । उप समीपे सृज्यत उ-च्चार्य्यते । क्रियावाचकस्येत्युपसर्गः सृजेः कर्मणिघञ् । अन्वर्थसंज्ञायां च क्रियायोग इति लभ्यते । तदुक्तं । यत्क्रियायुक्ताः प्रादयस्तंप्रत्येवोपसर्गसंज्ञेति यस्यधातोर्वाच्याक्रियायत्क्रियातयायुक्ताः । तंधातुम् अर्थं वाप्रति उपसर्गाणां द्योतकत्वमेव नवाचकत्वं । तदुक्तम् । उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते इति । उपसर्गेण द्योतकेन हेतुना अन्यः धातुपाठपठिताद्भिन्नः प्रतीयते धातुनैव वा ।

**मू०–प्राग्धातोः ॥ उपसर्गा धातोः प्राक् प्रयोक्तव्याः ।**

**सुबोधिनी–प्राग्धातोः** । वेदादौ विपरीतप्रयोगदर्शनात् व्याकरणं लोकेऽपि विपरीतप्रयोगो माभूदिति नियमार्थमिदम् ॥

**तत्त्वदीपिका–प्राग्धातोरिति** । संज्ञानियम एवायम् । धातोः प्राक् प्रयुज्यमाना एव प्रादय उपसर्ग-संज्ञा नान्येइत्यर्थः । तेन सुपुरुष इत्यादावधातोः प्राक् प्रयोगेपि न क्षतिः । अत्र धातोरिति ग्रहणात् कर्तुं प्रेक्षते प्रचिकीर्षतीत्यादौ नानिष्टता । अन्यथा यत्क्रियायुक्ताः प्रादयस्ततः प्रागिति सुवाच्येच्छया प्रशब्दस्य योग इति तस्यैव प्राक् प्रशब्दः प्रयुज्येत । वस्तुतस्तु यत्क्रियेत्यस्ययस्य धातोर्वाच्याक्रियेति व्याख्यानात्केवल-स्य तस्य धातुत्वाभावात् सांतस्यैव धातुत्वात् ।

**मू०–तदव्ययम् ॥ चादिअव्ययसंज्ञं भवति । न तु शब्दनिर्देशे ।**

सुबोधिनी–तदव्ययम् । प्रादि चादि उपर्यादि तत्रादि सद्यआदि परामर्शार्थं तद्ग्रहणम्।अत्र नाम्न इत्यनुवृत्त्य प्रथमया विपरिणम्य विशेष्यमभ्युपेयम् । चादिस्वरादीनि तु विशेषणानि विशेषणे हि तदंतविधिस्तेन परमोच्चैः परमस्वरित्यादावव्ययसंज्ञा भवत्येव । उच्चैरतिक्रांतोऽत्युच्चैः । अत्युच्चैः सौ । अतिस्वः । अतिस्वरौ । अतिस्वर इत्यादि । गौणे तु नाव्ययसंज्ञा । मुख्याऽमुख्ययोरिति न्यायात् ॥

तत्त्वदीपिका–तदव्ययमिति । तच्छब्देन प्रादिचादिउपर्यादितत्रादिग्रहणम् अन्यथानंतरत्वात् सद्यआदय एव गृह्येरन् ।

**सू०–क्त्वाद्यन्तश्च** ॥ क्त्वा क्यप् तुम् णम् धा च्वि शस् वत् कृत्वस् सु आम् इत्याद्यन्तमव्ययसंज्ञं भवति ।

सुबोधिनी–क्त्वाद्यंतंच । पूर्वकाले क्त्वेति क्त्वा । समासे क्यबिति क्यप् । तुम् तदर्थायां भविष्यतीति तुम् । पौनःपुन्ये णम् पदं द्विश्चेतिणम् । संख्यायाः प्रकारे धेति धा । अभूततद्भावे कृभ्वस्तियोगे नाम्नश्च्विरिति च्विः । बह्वल्पार्थात्कारकाच्छस् इति शस् । वत्तुल्ये इति वत् । क्रियाया आवृत्तौ कृत्वसिति कृत्वस् । द्वित्रिचतुर्भ्यः सुरिति सुः । किमोऽव्ययादाख्याताच्च तरतमयोराम् वक्तव्यः । अद्रव्यप्रकर्षे इत्याम् ।

**सू०–अव्ययाद्विभक्तेर्लुक्** ॥ सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपश्चैव हसान्तानां यथा वाचा निशा दिशा ॥ वगाहः । अवगाहः । पिधानम् । अपिधानम् ॥ ॥ इत्यव्ययानि ॥

सुबोधिनी–अव्ययाद्विभक्तेर्लुक् । अव्ययाद्विहिताया विभक्तेर्लुक् स्यात् । विभजनं विभक्तिर्विभागः । यद्वा विभज्यते बोध्यते कर्तृकर्माद्यर्थोऽनयेति विभक्तिः स्यादित्याद्योरेवेति योगरूढिः । सदृशं त्रिषु लिंगेषु सर्वासु च विभक्तिषु ॥ वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥ आथर्वणप्रणवविद्यागतश्रुतिरियम् । यत् शब्दरूपं नव्येति न व्ययं प्राप्नोति तदव्ययं त्वया ज्ञेयम् । कीदृशं तत् । त्रिषु लिंगेषु सदृशमेकप्रकारं । पुनः कीदृशं सर्वासु विभक्तिषु सदृशं च । पुनः कीदृशं । सर्वेषु वचनेषु सदृशं ॥ १ ॥ वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः ॥ आपं चैव हसांतानां यथा वाचा निशा दिशा ॥ १ ॥ भागुरिराचार्योऽवाप्योरुपसर्गयोरल्लोपं वष्टि वांछतीत्यर्थः । च पुनः हसांतानां शब्दानामापं वष्टि । अल्लोपे यथा । वगाहः । अवगाहः । पिधानम् । अपिधानम्।अपिना साहचर्य्यादादिरेवाकारो लुप्यते । नांत्य इति भावः । ॥ इत्यव्ययानि ॥

तत्त्वदीपिका–सदृशमिति । श्रुतिलिङ्गसंख्याकारकभावपरायथावाचेतिपरिगणनमिदमित्येके । अन्ये तु उदाहरणमात्रमित्याहुः । वगाह इति आदिरेवाकारो लुप्यते नांत्यः अपिना साहचर्यात् ।

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा ।
कृतायामिहटीकायामव्ययव्याकृतिर्गता ॥ इत्यव्ययानि ।

मू०—आबतस्स्त्रियाम् ॥ अकारान्तान्नाम्नः स्त्रियां वर्तमानादाप् प्रत्ययो भवति । सर्व्वा । माया ।

सुबोधिनी—आबतः स्त्रियाम् । अत इति तपरग्रहणं । तेनाधिकृतस्य नाम्नो विशेषणात्तदंतविधेः स्त्रियामिति प्रकृत्यर्थविशेषणं । स्त्रियां वर्तमानाददंतान्नाम्न आप् स्यात् । पित्वं स्वरार्थम् । स्त्र्यादिकं लिंगत्रयं तु पारिभाषिकमेव लिंगानुशासनादिभ्यो निर्णेयं । माया । शठता । विद्या वा ॥

तत्त्वदीपिका—आबतःस्त्रियामिति । आप् अतः स्त्रियामिति छेदः अत इति तपरकरणादुच्चक्तेर्ग्रहणम् । नतु स्वरूपस्य नापि आंगगादित्यादौ अतशब्दांतस्य तुमतदर्थायामिति निर्देशात् नापि ङसेरादेशस्याच्छब्दस्य स्त्रियां वृत्त्यभावात् । अधिकृतस्य नाम्नो विशेषणात्तदंतविधिः स्त्रियामिति प्रकृतिविशेषणमित्यभिप्रेत्याह । स्त्रियां वर्त्तमानादिति ।

मू०—अजादेश्च ॥ अजा । एडका । अश्वा । चटका । मूषिका । बाला । वत्सा । होढा । मन्दा । विलाता । संफला । भस्त्रफला । अजिनफला । शणफला । पिण्डफला । सत्पुष्पा । प्राक्पुष्पा । प्रत्यक्पुष्पा । कांडपुष्पा । प्रांतपुष्पा । एकपुष्पा । शूद्रा । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा । कनिष्ठा । मध्यमेति पुंयोगेपि । त्रिफला । अमूला । कोकिला जातावपि इत्यादि ।

सुबोधिनी—अजादेश्च । अजशब्द आदिर्यस्येति बहुव्रीहिः । अजादेर्गणादाप् स्यात् तस्य स्त्रीत्वे द्योत्ये । अजा । एडका । अश्वा । चटका । मूषिका । शूद्रा । अमूला । संफला । भस्त्रफला । अजिनफला । शणफला । प्रत्यक्फला । पिंडला । सत्पुष्पा । प्राक्पुष्पा । कांडपुष्पा । प्रांतपुष्पा । एकपुष्पा । क्रुञ्चा । उष्णिहा । देवविशा । इत्यादिषु । जातेरयोपधादितीप्प्राप्तः बालावत्साहोढामन्दाविलातेत्यादिषु अनंत्यवयोवाचिन इतीप् प्राप्तः ज्येष्ठाकनिष्ठामध्यमाकोकिलेत्यादिषु पुंयोगे चेतीप् प्राप्तः त्रिफलात्यनीकेत्यादौ समाहारेऽत ईबितीप् प्राप्तः सईबजादेरित्येन बाध्यते । अजादेःस्त्रीत्वाऽभावात् पंचानामजानां समाहारइति पंचाजी अत्राप् न । अत्राहि समासार्थं समाहारनिष्ठं स्त्रीत्वं न त्वजादिनिष्ठं । चटकेत्यत्र काप्यत इति इकारो न क्षिपकादीनां नेति निषेधात् मुषेर्दीर्घश्चेतिकिक्प्रत्ययेसति इकारमध्यो मूषिकशब्दः । होढेति भिल्लस्त्री । मंदेत्यप्रौढा स्त्री । विलातेति नवयौवना स्त्री । संफलेत्यादय एकपुष्पांता ओषधिविशेषाः । भस्त्रेव फलानि यस्या इति विग्रहः । कुक्कुट्यादिषु पाठात्पुंवद्भावः । शूद्रेति जातावेवाप् महत्पूर्वात् शूद्रशब्दात्तु ईबेव । महाशूद्री । ' आभीरी तु महाशूद्री जातिपुंयोगयोः समे' त्यमरः । पुंयोगे त्वीबेव शूद्री । क्रुंचेत्यादि त्रयोमी हसांता इत्येके । भाष्ये तु क्रुंचानालभेत उष्णिहककुभावित्यादिप्रयोगमुदाहृत्यादंतता अपि स्वीकृता । पचाद्यप्रत्ययेन नाम्युपधात्क इति कप्रत्येन च रूपसिद्धेः । उष्णिहेति छंदोजातिः । देवविशेति देवानां प्रजा । पुंयोगेऽपि यदा ज्येष्ठादयः प्रथमजातादौ वर्तंते तदा अदंतत्वादेवाप् । यदा ज्येष्ठस्य स्त्रीति पुंयोगविवक्षा तदाप्याप् भवतीति सूचयितुमपिशब्दः । कोकिलस्य स्त्री कोकिला जातिवाचकादप्यजादेरेवाब्भवति नतु जातेरितीप् । तेन जातावपि कोकिलेत्येव । नञ्पूर्वान्मूलशब्दाज्जातावप्याप् । अमूलेत्योषधिजातिः । अनञ्पूर्वात्तु शतमूलीत्येव ॥

तत्त्वदीपिका—अजादेश्चेति । ईब्बाधनार्थमिदम् । अजादौ जातिलक्षण ईप् प्राप्तः । बालेति वयसि प्रथमे इतीप् प्राप्तः पुंयोगेपीति । यदि ज्येष्ठादयः प्रथमजात्यादौ वर्त्तंते तदादंतत्वादेवाप् यदा ज्येष्ठस्य स्त्रीति पुंयोगो विवक्ष्यते तदापि आप्भवतीति सूचयितुमपिशब्दः एतद्बीजं तु अतःस्त्रियामाबिति सूत्रणीये विपरीतनिर्देशा-द्विकल्पादिलाभः ॥

**मू०—पादोवाईप् ॥ द्विपदी । द्विपाद् ।**

सुबोधिनी—पादोवाईप् । कृतसमासांतात्पादशब्दादीप् वा स्यात् । द्वौ पादौ यस्याः सा इति बहुव्रीहौ संख्यासुव्याघ्रादिपूर्वस्येति पादशब्दस्यांतलोपः । द्विपाद् । ईपि तु शसादौ स्वरे तद्धितयस्वरयोरिति पद् द्विपदी छंदोजातिः ॥

**मू०—आवृचि ॥ ऋचि वाच्यायां सत्यां पादंतादाप् स्यात् । द्विपदा ऋक् ।**

सुबोधिनी—आवृचि । ऋचि वाच्यायां तु द्विपदा । एकपदा ऋक् इत्येव भवति ।

**मू०—काप्यतः ॥ कापि परे पूर्वस्याकारस्येकारो भवति । कारिका । पाचि-का ।पाठिका । अतःकिं । नौका । तपरःकिं । राका ।**

सुबोधिनी—काप्यतः । कापि इ अत इति छेदः । ककारेण सहितः आप् काप् त-स्मिन् । प्रत्ययस्यैव को गृह्यते आपा साहचर्यात् । स्त्रियां वर्तमानस्य नाम्नोऽतःस्थाने इकारो भवति कापि परे करोतेस्तृवृणाविति वुण् णित्त्वाद् वृद्धिः । कारिका । एवं पचतेः पाचिका । अतःकिं । नौका । नौशब्दात्स्वार्थे कः प्रत्ययः । ककाराभावे तु शक्नोतीति शका । पचा-द्यः प्रत्ययः । तपरः किं राका । मामकनरकयोरतइः ककारस्य प्रत्ययत्वाभावादप्राप्तौ वचनं । ममेयं मामिका । अणीनयोरिति ममकादेशः । णित्त्वाद्वृद्धिः अजादित्वादाप् । नरा-नृकायतीति कैशब्दे अस्मात् आतोड इति डप्रत्ययः । आप् इत्वं च । नरिका ॥

तत्त्वदीपिका—काप्यत इति । कापि इ अत इति छेदः कसहितआप् काप् तस्मिन् अत्र कप्रत्यय एव गृह्यते आपा साहचर्यात् तेन शक्नोतीति शकेत्यत्र न अतइकापीति वक्तव्ये विपरीतनिर्देशादन्यदपि भवति तेन क्वचित्प्रत्ययस्थे केपि न क्वचिदप्रत्ययस्थेपि भवति नरान्कायति नरिकेति । मामिकेत्यत्र एवं स्थिते साहचर्यं न सर्वत्र नियामकमित्युक्ते गौरवप्रस्तत्वादुपेक्षितं स्त्रियामित्यत्रानुवर्त्तते । स्त्रियां वर्त्तमानस्य नाम्नोऽ-त ईर्भवतीति व्याख्येयं तेन कारकामाप्नोति कारकायतइत्यत्र नेत्वम् । अतः किं मातृका क्षिपकेति । एतद्बीजं तु उक्तमेव क्वचिद्वेति अत्रापि विपरीतनिर्देश एव मूलम् ।

**मू०—क्षिपकादीनांन ॥ क्षिपका । ध्रुवका । कन्यका । चटका । यका । सका । उपत्यका । अधित्यका ।**

सुबोधिनी—क्षिपकादीनां न । एषामत इकारो न कापि । क्षिपेर्नाम्युपधात् क इति कः । ध्रुवस्थैर्ये इत्यस्मादपि कः । अथवा ध्रुगतिस्थैर्ययोरस्मात्पचाद्यः प्रत्ययः कुटादित्वात् ङि-त्वेन गुणाभावे नुधातोरित्युव् । क्षिपा एव क्षिपका शस्त्रविशेषः । ध्रुवा एव ध्रुवका भाजनं । चटभेदनेऽस्मात्पचाद्यः । चटका । सर्वत्राऽपि अज्ञातादौ के पुनरपि च ह्स्वो वेति ह्स्वः । या एव यका । सा एव सका । आभ्यामाख्याताव्ययसर्वादेरित्यकः । उपाधिभ्यामासन्नारूढ-द्वयोरित्यकः उपत्यका । अधित्यका । "उपत्यकाद्रेरासन्नाभूमिरूर्ध्वमधित्यके" त्यमरः ॥

**मू०–तारकाज्योतिषि ॥ अन्यत्र तारिका ।**

सुबोधिनी–तारकाज्योतिषि । तरतेर्वुण् अकादेशो वृद्धिश्च । ज्योतिर्नक्षत्रं नेत्रकनीनिका च तयोरर्थे तारका । अन्यत्र तु तारिका ।

**मू०–वर्णकातांतवे ॥ वर्णिकान्या ।**

सुबोधिनी–वर्णकातांतवे । तंतूनां विकारस्तांतवं तस्मिन् । वर्णका प्रावारविशेषः । वर्णवर्णक्रियाविस्तारगुणवचनेष्विति चौरादिकाद्वुण् । ग्रंथविशेषस्य व्याख्यात्री स्तोत्रकर्त्री वर्णिका ।

**मू०–वर्तकाशकुनौप्राचाम् ॥ उदीचां तु वर्तिका ।**

सुबोधिनी–वर्तकेति । वर्तयतीति वर्तिका वुण्प्रत्ययः । शकुनाविव वाच्येऽयं विकल्पः अन्यस्मिन्नर्थे तु नित्यमित्वं । प्राचां पूर्वाचार्याणां मते इतोऽभावः । उदीचामाधुनिकानां मते इत्वमित्यर्थः ।

**मू०–अष्टकाश्राद्धे ॥ अष्टिकान्या ।**

सुबोधिनी–अश्नंति ब्राह्मणा यस्यां साष्टका । इष्यशिभ्यां तकइति तकः अष्टौ परिमाणमस्या इत्यष्टिका ॥

**मू०–क्वचिद्वा ॥ सूतका । सूतिका । पुत्रका । पुत्रिका । वृंदारका । वृंदारिका । आर्यका । आर्यिका । चटकका । चटकिका । निर्भस्त्रका । निर्भस्त्रिका । एषका । एषिका । अजका । आजिका । ज्ञका । ज्ञिका । द्वके । द्विके । निःस्वका निःस्विका ।**

सुबोधिनी–क्वचिद्वा । वा अ इति छेदः । क्वचित् पूर्वस्याकारो वा भवति कापि परे । पुत्री एवेति ऱ्हस्वो वेति ऱ्हस्वे कृते पुत्रिका । पक्षे पूर्वस्य ईपोऽकारः पुत्रकेति । सूतशब्दात् स्वार्थे कः । सूता एव सूतिका सूतका । वृंदमस्यास्तीति शृंगवृंदाभ्यामारकः । वृंदारिका । वृंदारका । देवतावाची वृंदारकशब्दः पुँल्लिंग एव अन्यत्र त्रिलिंगः । तथा च त्रिषूत्तरेत्युपक्रम्य "वृंदारकौ रूपिमुख्यावि"त्यमरः । आर्या एव आर्यका । पक्षे इत्वम् आर्यिका । चटका एव चटकका । चटकिका । निष्क्रांता भस्त्राया इति निर्भस्त्रा । पंचमीतत्पुरुषः । निर्भस्त्रा एवेति निर्भस्त्रका । निर्भस्त्रिका । एषा एव एषका । एषिका । अकः । अजा एव अजका । अजिका । ज्ञा एव ज्ञका । ज्ञिका । द्वे एव द्वके । द्विके । आख्यातात्व्ययसर्वादेरित्यकः । निर्गता स्वात् या सा निःस्वा निःस्वा एवेति निःस्वका । निःस्विका । स्वार्थे कः ।

**मू०–ऱ्हस्वोवा ॥ कापि परे तरादौ च पूर्वस्य ऱ्हस्वो वा । गंगाका । गंगका । गंगिका । नदिका । नदीका । श्रेयसितरा । श्रेयसीतरा । वाग्रहणादेव संध्यक्षराणां न । गोका । नौका ।**

सुबोधिनी–ऱ्हस्वोवा । कापि तरादौ प्रत्यये च परे स्त्रियां विहितस्य अस्य ऱ्हस्वोऽत इश्च वा स्यात् वाशब्दो व्यवस्थार्थस्तेन तरादाविति लब्धम् गंगा एव गंगका । ऱ्हस्वाभावे

गंगाका । काप्यत इतीत्वे गंगिका । ह्रस्वा नदीति नदिका । नदीका स्वार्थे कः । अतिशयेन श्रेयसीति श्रेयसितरा । श्रेयसीतरा । तरमेयस्विष्ठाः प्रकर्षे इति तरप्रत्ययः । स्त्रियां विहितस्य किं । लक्ष्मीतरा चमूतरा ॥

तत्त्वदीपिका—ह्रस्वोवेति । वा आ इति छेदः स्त्रियामित्यनुवर्त्तते स्त्रियां वर्त्तमानान्नाम्नः परस्याकारस्य ह्रस्व इश्च वा भवतीत्यर्थः वा इत्यस्य व्यवस्थितत्वं बोध्यं तेन तरादावपि नदीतर इत्यत्र तु प्रत्ययाप्रत्ययोः प्रत्ययस्यैव ग्रहणम् इति परिभाषाबलान्न ह्रस्वत्वं क्वचिदीपो नित्यं ह्रस्वः ब्राह्मणितरा कप्रत्यये समानस्य ह्रस्वः आर्यका कालिका जंबुका टाडकाइति कृतेन केन कल्याणपंचमीकः आपो वा बहुविद्याकः बहुविद्यकः । एवं चैतदर्थलाभाय वाशब्दस्य व्यवस्थितत्वाश्रयणेऽवश्यं कर्त्तव्ये अवेतिहित्वा ह्रस्वग्रहणं वाक्यांतरलाभाय वाक्यांतरं चेदं । नाम्नः परस्य स्त्रियां विहितस्य स्वरस्य ह्रस्वो वा स्यात् स्त्रीलिंगेपरेतश्च स्त्रीलिंगं लक्ष्यानुसारात् तरादिकमेव गृह्यते इत्यादि व्याख्यानं गौरवग्रस्तत्वादुपेक्षितं । किंच अवेति सूत्रिते नदिकेत्यादि न सिध्येत् । यस्य लोप इश्च अश्च यं तस्य स्वरो यकारश्च तद्धितस्यैव प्रकरणात् अदे आतो दुइति लिंगादंत्यादिकृत्स्वरो न अंत्यादिति लिंगाच्च वकारस्य न ग्रहणम् अत एव न दीर्घयोरेव । एलोप इति तु न सूत्रितं तंत्रादिना यकारलोपार्थं तेन गार्गी तैषं पौषं कानीन इत्यादिसिद्धम् । जात्याश्रयणाद्दीर्घयोरपि ईप्यन इति ईपि परे अनोऽकारस्य लोप इत्यर्थः । एतन्मूलं तु नोवेत्यत्र वाइत्यस्य व्यवस्थितत्वाश्रयणम् ॥

**मू०—न्रणईप् । दंडिनी दंतिनी । मघोनी । शुनी । पौस्नी । स्त्रैणी । चौरी । हर्त्री । कर्त्री ।**

सुबोधिनी—न्रणईप् । नृच आच अणूच एषां समाहारो न्रण् तस्मान्न्रणः । अणिति प्रत्ययो नाम्नीति विशेषणात्तदंतविधिः । न च प्रत्ययविधौ प्रतिषेधः शंक्यः । स्त्रीप्रत्ययेषु तदंतविधिस्वीकारात् । नांतात् ऋदंतात् अण्णंताच्च स्त्रियामीप् स्यात् । दंडोस्या अस्तीति दंडिनी । मांतोपधाद्धात्विनावितीन् । मघोनी । शुनी । श्वादेरिति वस्योत्वं । कर्त्री करोतेस्तृवृणाविति तृप्रत्ययः ॥

**मू०—यस्यलोपः ॥ इवर्णावर्णयोर्लोपो भवति । तद्धितस्य स्वरे यकारे ईपि च । औपगवी । ऐंद्री । ईप्यनोलोपः राज्ञी । द्विदाम्नी ।**

सुबोधिनी—यस्य लोपः । इश्च अश्च यं तस्य यस्य लोपःस्यात्तद्धितयस्वरयोरीपि च । यथा गार्ग्यः । काव्यम् । वासिष्ठः । मौनम् । उपगोरपत्यं स्त्री औपगवी । अपत्यणित्यण् । इंद्रो देवता अस्या इति ऐंद्री दिक् । देवतेदमर्थे इत्यण् । ईप्यनोलोपः अन्नंतस्योपधाकारस्य लोपःस्यादीपि । राज्ञः स्त्री राज्ञी । द्वे दाम्नी यस्याः सा द्विदाम्नी ॥

**मू०—षृव्रितः ॥ षकारटकारउकारऋकारानुबंधात्स्त्रियामीप् प्रत्ययो भवति। वराकी । ट कुरुचरी । ऊरुद्वयसी । ऊरुदघ्नी । ऊरुमात्री । इत्वरी । उ । गोमती । विदुषी । ऋ पचंती । दीव्यंती । तुदती । तुदंती । प्राची । प्राञ्ची । प्रतीची । प्रत्यञ्ची । उदीची । उदञ्ची । तिरश्ची । तिर्यञ्ची । स्तनंधयी ।**

सुबोधिनी—षृव्रितः । षृच टृच उश्च आचेति षृव्रः षृव्रः इतो यस्य स षृव्रित् तस्मात् षृव्रितः । वृञ् वरणे । रप्रत्ययांतात् स्त्रियामीप् स्यात् । वृणातेः षाकाकण इति षाकप्रत्ययः । यस्येत्यलोपः । वराकी । कुरुचरी । कुरुषु चरतीति । अधिकरणोपपदाच्चरतेरटा-

विति टः । गोशब्दात् अस्त्यर्थे इति मतुः । गावः संति यस्याः सा गोमती । विदेर्वावसुरिति वसुप्रत्ययः । वसोर्व उरित्युत्वं । विदुषी । पचेः शतृशानौ तिप्तेवदिति शतृप्रत्ययः अप्कर्तरीत्यप् । पचंती । दिवेः शतृप्रत्यये दिवादेर्य इति यप्रत्ययः । दीव्यंती । अप्ययोरान्नित्यमिति नुम् । तुदेः शतृप्रत्यये तुदादेर इत्यप्रत्ययः । तुदंती । वादीपोः शतुरिति वा नुम् ॥

तत्त्वदीपिका–घृन्नित इति। घृ च ट् च उश्च आचेति द्वंद्वस्ते इतो यस्य सघृन्नित् तस्मात् घृन्नितः षिदंताद्विदंतादुदंताद्दंताद्दंतान्नान्नस्त्रियामीपृइत्यर्थः । वराकीति वरणशीलेति विग्रहे वृञ्धातोः षाकोकण इति षाक प्रत्ययः। गुण इति गुणः । कुरुषु चरतीति विग्रहे चरगतावित्यतोटाविति टप्रत्ययः । गौणत्वे तु नेप् बहुवराका बहुकुरुचरा विदुषीति । उदंतादृदंतात्तु गौणत्वेपि प्रियविदुषी प्रियपचंती गौणमुख्यन्यायस्यानित्यत्वात् । ध्वदित्यादौ तु धातोश्चेत् त्रित्कार्यं तर्ह्येतरेव इति नियमेन प्राप्तिर्बाधिता ।

**मू०–मन्नंतान्नेप् ॥ सीमा । सीमानौ । दामा । दामानौ ।**

सुबोधिनी–मन्नंतान्नेप् । मन्नंतान्नाम्न ईप् न भवति । सीमा । दामा । राजवत् ॥

तत्त्वदीपिका–मन्नंतादिति । एतन्मूलं तु आबतःस्त्रियामिति सूत्रे विपरीतनिर्देश एव । एवमुत्तरत्रापि ।

**मू०–अन्नंताद्बहुव्रीहेर्न ॥ सीमा । सीमे । सीमाः । दामा । दामे । दामाः । बहुयज्वा । बहुयज्वे ।**

सुबोधिनी–अन्नंताद्बहुव्रीहेर्न । नांतत्वात्प्राप्त ईप् स न भवति । बहवो यज्वानो यस्यां सा बहुयज्वा नगरी । डाब् वा । मन्नंतान्नाम्नोन्नंताद्बहुव्रीहेश्च डाब् वा स्यात् । डित्वाट्टिलोपः । सीमा । दामा । बहुयज्वा । गंगावत् । सीमसीमे स्त्रियामुभे इत्यमरः ॥

**मू०–उपधालोपिनोबहुव्रीहेर्वेप् ॥ बहुराज्ञी । बहुराजा ।**

सुबोधिनी–उपधालोपिनो बहुव्रीहेर्वेप् । अन्नंताद्बहुव्रीहेरुपधालोपिनो वेप् स्यात् । बहवो राजानो यस्यां सा बहुराज्ञी । ईप्यन इत्यल्लोपः । ईबभावे डाप् । पक्षे डाबीपोरभावः ।

**मू०–नदादेः । स्त्रियामीप् । नदी । गौरी । सरसी । सखी । अशिश्वी । अनड्वाही । अनडुही । इत्यादि ।**

सुबोधिनी–नदादेः । नद आदिर्यस्य स नदादिस्तस्मान्नदादेर्गणात् स्त्रियामीप् स्यात् । अनुपसर्जनादेवायं गौणमुख्यन्यायात् । नद इत्यव्यक्तं शब्दं करोतीति पचाद्यप्रत्ययः । यस्येत्यलोपः । नदी । गौणे तु नदीमतिक्रांता स्त्री अतिनदा । सुपर्णशब्दादपत्यर्थे एण्यण्प्रत्ययः । आदिस्वरे वृद्धिश्च । सुपर्णाया अपत्यं स्त्री सौपर्णेयी । ऊरुः प्रमाणं यस्याः सा ऊरुद्वयसी नदी । यस्येत्यलोपः । प्रमाणे द्वयसट् दघ्नट् मात्रट् इति द्वयसडादिः । अक्षैर्दीव्यति येति इकप्रत्ययः । आक्षिकी । इण्नश्जीसर्तिभ्यः क्वरबिति क्वरप् । एति परपुरुषं तच्छीला इत्वरी असती । क्वरब्द्वयसडाद्यंतोदाहरणचतुष्टयं घृन्नित इत्यत्र वक्तुमुचितम् । क्वचित्तु तथैव पाठस्तत्र न दोषः । चुराशीलमस्या इति चौरी । अञ्प्रत्ययांतः स्त्रीपुंसाभ्यामिति नञ्स्नञौ । स्त्रियां भवा स्त्रैणी । पुंसि भवा पौंस्नी । शक्तिः प्रहरणमस्या इति शाक्तीकी । शक्तियष्ट्योरीकणितीकण् । गर्गस्यापत्यमिति गर्गादेरिति ण्यः । गार्ग्यः । स्त्र्यपत्ये तु

नदादित्वादीप् । यस्येत्यलोपः । हसात्तद्धितयस्येति यलोपे गार्गी । पक्षे गार्ग्यायणीति ण्यंताद्गार्ग्यशब्दात्स्त्रियां तदादित्वादीप् स्वार्थे । लोहितस्यापत्यं स्त्री लोहितायनी । लोहितादिर्गर्गाद्यंतर्गणः । ण्यंताल्लौहित्यशब्दात् स्त्रियामायनण् । कतस्यापत्यं स्त्रीति ण्यंतांतात् कात्यशब्दात् स्त्रियामायनण् । आसुरस्यापत्यं स्त्रीति अणंतादासुरशब्दात्स्त्रिया-मायनण् ।

तत्त्वदीपिका-नदादेरिति । नद आदिर्यस्य स नदादिर्गणः तस्मात् । नदडादयो यद्यपि टितो निपातिता-स्तथापि इहाटित एव बोध्याः । स्वरार्थत्वं तु इहानुपयुक्तमेवं वैदिकानामप्रतिपाद्यत्वात् । अतइत्यनुवृत्तं यथासं-भवं विशेषणीयम् । अन्यथा सखीत्यादि न सिध्येत् । यदि तु पत्न्यादित्वमेषां तदानुवृत्तविशेषणत्वे न संकोचः । नदमिच्छंति कुर्वंति वा नदीर्नदित्यत्रातिव्याप्तिवारणायात इत्यनुवृत्तिश्चावश्यमभ्युपेया एकदेशविकृतन्यायेन द-शब्दत्वात् प्राप्तिः एवं वराकमिच्छंती कुर्वंती वा वराकीर्वराक् इत्यत्रापि नेप् अनुवृत्तेस्तत्रापि सत्वात् ।

**मू०-अनंत्यवयोवाचिनोऽदंतात्स्त्रियामीप् ॥ कुमारी । किशोरी । वधूटी । चिरंटी । तरुणी । तलुनी । अदंतात्किं । शिशुः ।**

सुबोधिनी-अनंत्यवयोवाचिनोऽदंतात्स्त्रियामीप् । कालकृताशरीराऽवस्थावयः । वयांसि चत्वारि त्रीणि च संति । यथा ।'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम् ॥ तृतीये न त-पस्तप्तं चतुर्थे किं करिष्यति ॥ पिता रक्षति कौमारे भर्ता रक्षति यौवने ॥ पुत्रस्तु स्थविरी-भावे न स्त्री स्वातंत्र्यमर्हति ॥' उपचयापचयलक्षणे द्वे वयसी इत्यन्ये । वधूटचिरंटतरुणतलु-नशब्दा यौवनवाचिनः । कुमारस्तु प्रथमवयोवाची अल्पवयाः । अश्वा किशोरी ।

तत्त्वदीपिका-कुमारीति प्रथमवयोवाची एकशब्दः नतु रूढत्वप्रयुक्तः । वृद्धकुमारीति तु गौणप्रयोगः । तरुणीशालेत्यपि मुख्यार्थे उत्पादितस्य गौर्वाहीक इतिवद्गौणत्वेपि संभवात् ।

**मू०-ऊधोंतस्यबहुव्रीहेर्नङ्स्त्रियाम् ॥ कुंडोध्नी । द्व्यूध्नी । अत्यूध्नी ।**

सुबोधिनी-ऊधोंतस्य बहुव्रीहेर्नङ्स्त्रियाम् । अकार उच्चारणार्थः । बहुव्रीहिग्रहणेनैव तदंतलाभादंतग्रहणं स्पष्टप्रतिपत्त्यर्थम् । त्रणईबिति प्राप्तस्येपो निषेधोऽनेन प्रतिषिध्यते । यथा । डापूर्वेति वैकल्पिको डाप् । उपधालोपिनो बहुव्रीहेर्वेति वैकल्पिक ईप् । अन्नंताद्बहुव्री-हेर्नेति निषेधश्च । कुंडमिव ऊधो यस्याः सा । ईप्यनोऽल्लोप इत्यल्लोपे कुंडोध्नी । द्वे ऊधसी यस्याः सा द्व्यूध्नी । अतिशयितमूधो यस्याः सा अत्यूध्नी । स्त्रियामिति किं । कुंडोधो धेनुकं । बहुव्रीहेरिति किं । प्राप्तं ऊधः प्राप्तोधाः । द्वितीयातत्पुरुषः ॥

**मू०-वयोवाचिनो हायनस्येप् ॥ संख्यादेर्बहुव्रीहेर्वयोवाचिहायनांता-दीप् स्यात् । आपि प्राप्ते वचनं । संख्यादेर्बहुव्रीहेर्दामांताच्च डाबीपोर्विकल्पेन प्राप्तयोर्वचनं । द्विदाम्नी ॥ त्रिचतुर्भ्यांहायनस्य णत्वं । त्रिहायणी । चतुर्हायणी ।**

सुबोधिनी-त्रिचतुर्भ्यां हायनस्य णत्वम् । आभ्यां परस्य वयोवाचकस्य णत्वं वाच्यं । त्रयो हायना यस्याः सा त्रिहायणी । चत्वारो हायना यस्याः सा चतुर्हायणी बाला । हायनोब्द-शरत्समा इत्यमरः ॥

**मू०—इन्द्रादेरानीप्** ॥ स्त्रियां पुंयोगे । इन्द्राणी । वरुणानी । भवानी । शर्वाणी । रुद्राणी । मृडानी ।

सुबोधिनी—इंद्रादेरानीप् । इंद्र आदिर्यस्य स इंद्रादिस्तस्मादिंद्रादेर्गणात् स्त्रियामानीप् स्यात् । पुंयोगे इत्यपकृष्यते । पित्करणसामर्थ्याद्धस्वेप इत्यत्रानीपोपि ग्रहणं भवति । ननु ह्रस्वादिरेवानीबस्तु किमनेन दीर्घोच्चारणेन । अत्राहुः । ब्राह्माणीति सिद्ध्यर्थं दीर्घग्रहणं ब्रह्मन्शब्दादानीपि कृते नोवेति टिलोपे ब्रह्माणीति । अन्ये त्वाहुः । ब्रह्माणमानयति जीवयतीत्यनप्राणने ण्यंतादस्मात्कार्येऽणित्यण् प्रत्ययः । ञणईबितीपि च कृते ब्रह्माणीति सिद्ध्यत्येव । माधवस्तु इंद्रं करोति इंद्रयति । इन्द्रेति नाम्नो णिर्डित्करणे इति ण्यंतात् क्विपि तस्य इन्द्रः स्त्री इन्द्री । इंद्राणीति दीर्घपाठाद्भवति तन्न । क्विबंतस्य क्रियाशब्दत्वेन पुंशब्दत्वाभावात् । किंच इन्द्रमिच्छतीति इंद्रीयति । नाम्नो य ईचास्येति यप्रत्ययांतात् क्विपि कृते इन्द्रीः । स्त्री इन्द्राणीत्यतिव्याप्तेश्च । वस्तुतस्तु ह्रस्वादिपाठेऽपि हानिर्न । इन्द्रस्य स्त्री इन्द्राणी वरुणस्य स्त्री वरुणानी । भवशर्वमृडरुद्राः पर्यायशब्दाः ॥

**तत्त्वदीपिका—इन्द्रादेरानीबिति** । अत्र पुंयोगे च इत्यतः पुंयोग इत्यनुकृष्यते । दीर्घोच्चारणं तु क्वचिदतद्धितेपि यस्य लोप इति ज्ञापनार्थम् अन्यथा अनीपि लोपे एवं न स्यात् आकारोच्चारणस्य तु न सामर्थ्यं धर्मादनिचि सुधर्मेत्यादावपि तत्सामर्थ्याल्लोपाभावप्रसंगात् इन्द्रं करोति इन्द्रयति ततःक्विपि इंद्रं तस्य इन्द्रः स्त्री इन्द्रं कुर्वन् इंद्रियः स्त्रीत्यादौ अत इत्यनुवृत्तेरनंतादेव न ब्रह्माणीति ब्रह्माणमानयति जीवयतीति विग्रहे अनप्राणन इत्यंतो ण्यंतात्कर्मण्यणि अण्णन्तत्वात् ञणईपि णत्वेच सिध्यति । सूत्रंतु इन्द्रस्य स्त्रीति वाक्ये इन्द्रीत्यनिष्टरूपवारणायेति बोध्यम् । इन्द्रादेरानन्वेति तु न सूत्रितं आगमलिंगाभावेन सर्वादेशप्रसंगात् । अनुगपि न कृतः अल्लोपः स्वर इति लोपप्रसंगात् । अकारोच्चारणस्य तु प्रकृत्यकारकारणार्थत्वेन चरितार्थत्वान्न सामर्थ्यं । सर्वशब्दे च । अत्राहुः आनुक् सुवचं मात्रालाघवादिति । अत्रेदं वक्तव्यं मात्रालाघवेपि प्रक्रियागौरवस्य सत्त्वेन तुल्यत्वात्तथाहि आनुकि सवर्णे दीर्घः सह ञणईबिति सूत्रद्वयं आनीपितु दीर्घसूत्रमेकमेवेति लाघवम् ।

**मू०—आचार्यादणत्वम्** ॥ आचार्यानी ।

सुबोधिनी—आचार्यादणत्वम् । आचार्यशब्दात्परस्यानीपो नस्य णत्वं न स्यात् । आचार्यस्य स्त्री आचार्यानी । पुंयोगाभावे आचार्या स्वयं व्याख्यात्री ॥

**मू०—हिमारण्ययोर्महत्त्वे** ॥ महद्धिमं हिमानी । महदरण्यमरण्यानी ।

सुबोधिनी—हिमारण्ययोर्महत्त्वे । महत्त्वयोगे आभ्यामानीप् स्त्रीत्वं च विधीयते । महद्धिमं हिमानी । हिमानी हिमसंहतिरित्यमरः । महदरण्यमरण्यानी । महारण्यमरण्यानीत्यमरः

**तत्त्वदीपिका—महत्त्वे** इति । लक्षणया महत्त्वम् नदीर्घत्वामीति भावः । तदंतश्च स्त्रियामिति वक्तव्यं अन्यथाधौ ह्रस्वः स्त्रियांय्वोरित्यादेः प्रवृत्तिर्नस्यात् स्त्रियां भावात् ॥

**मू०—यवाद्दोषे** ॥ दुष्टो यवो यवानी ।

सुबोधिनी—यवाद्दोषे । यवादानीप् स्त्रीत्वं च दोषेर्थे । दुष्टो यवो यवानी । यवत्वजात्यभावे तदाकारानुकृतिर्दोषः । यवाकारानुकृतिमज्जात्यंतरमेवानेनाभिधीयते ॥

**तत्त्वदीपिका—यवाद्दोष** इति । यवानीति जात्यंतरमेवानेन विधीयते । अयमेव चास्य दोषः । यदि तु यवत्वजातेरभावेपि तदाकारानुकृतिः ।

**मू०–यवनाल्लिप्याम् ॥** यवनानां लिपिर्यवनानी ।

सुबोधिनी–यवनाल्लिप्याम् । यवनशब्दादानीप् लिप्यर्थे । स च स्त्रीलिंग एव । देवतेदमर्थे इत्यणोबाधक आनीप् विधीयते । यवनानां लिपिर्यवनानी । लिखिताक्षरविन्यासो लिपिः ॥

**मू०–मातुलोपाध्यायाभ्यां वा ॥** मातुलानी मातुली । उपाध्यायानी, उपाध्यायी ।

सुबोधिनी–मातुलोपाध्यायाभ्यां वा। आभ्यामानीप् वा स्यात् । पक्षे पुंयोगे चेतीप् । मातुर्भ्राता मातुलस्तस्य स्त्री मातुलानी । मातुली। उपाध्यायस्य स्त्री उपाध्यायानी। उपाध्यायी॥

**मू०–अर्य्यक्षत्रियोपाध्यायेभ्योवा स्वार्थे ।** अर्य्याणी । अर्य्या । क्षत्रियाणी । क्षत्रिया । उपाध्यायानी । उपाध्याया ।

सुबोधिनी–अर्यक्षत्रियोपाध्यायेभ्यो वा स्वार्थे । आभ्यां स्वार्थे आनीब् वा स्यात् । पक्षे आप् । अर्याणी । अर्या । स्वामिनी वैश्या वेत्यर्थः । अर्यःस्वामिवैश्ययोरित्यर्थद्वयेऽपि निपातनात् । क्षत्रियाणी । क्षत्रिया । क्षत्रियजातीया स्त्रीत्यर्थः । पुंयोगे तु अर्यी । क्षत्रियी । या तु स्वयमेवाध्यापिका तत्र वा ङीप् वाच्यः । पक्षे आप् उपाध्यायी । उपाध्याया । उपेत्यस्या अधीयते इत्यपादाने स्त्रियां घञ् । उपाध्यायाप्युपाध्यायीत्यमरः ॥

तत्त्वदीपिका–अर्य्याणीति । स्वामिनी वैश्या पुंयोगे सतीत्यर्थः ।

**मू०–पुंयोगेच ॥** अदंतात्स्त्रियामीप् । शूद्री । गणकी ।

सुबोधिनी–पुंयोगे च । इह पुमिति षष्ठ्यंतं सांकेतिकं पृथक्पदं । तच्चावर्त्यते । द्विरुच्चारणमावृत्तिः । पुंसः पुंस इति । योगे इति भावे निमित्ते वा सप्तमी । अधिकारान्नामेति लभ्यते । यत् पुंसो नाम पुंवाचकशब्दोऽदंतः । पुंसो योगे स्त्रियां वर्तते तत ईप् स्यात् । योगः संबंधः । स चेह दंपतिरूप एवेति नाग्रहः । किंतु जन्यजनकभावोपि गृह्यते । तेन केकयस्य क्षत्रियस्य पुत्री कैकयीत्यादिसिद्धं । यथाचभट्टिः "प्राक्कैकयीतो भरतस्ततोभूत्"इति। कत्यादित्वात्केकयदुहिता कैकेयीत्यपि । तथा प्रागुक्तः । "कैकेयि कामाः फलितास्तवेति " कालिदासः । पुंयोगे किं देवता । अयं हि संज्ञाशब्दः स्वभावात् स्त्रियां वर्त्तते । न तु पुंवाचकशब्दयोगे । अतः किं । भानोः स्त्री भानुः ॥

तत्त्वदीपिका–गणकीति । गणकस्य स्त्रीत्यर्थः । स्त्रियां वृत्तिस्तु साहचर्यात् तस्येयमिति संबंधात् । तद्धितस्त्वभेदविवक्षातो न। यदि भेदविवक्षा तदा गणकेत्यपि भवत्येव । पुंयोगश्च न दाम्पत्यरूप एव किं तु जन्यजनकभावलक्षणेपि । तेन केकयीत्यपि ।

**मू०–पालकांतान्न ॥** गोपालिका । अश्वपालिका ।

सुबोधिनी–पालकांतान्न । पुंयोगे ईब् न स्यात् । गोपालकस्य स्त्री गोपालिका ।

तत्त्वदीपिका–पालकान्तान्नेति । चकारस्य व्यवस्थितवार्थत्वादित्यर्थः ।

**मू०–सूर्याद्देवतायां चाप् ॥** सूर्यस्य स्त्री देवता सूर्या । अन्या सूरी ।

सुबोधिनी—सूर्याद्देवतायां चाप् । सूर्यशब्दात् पुंयोगे आप् स्यात् । देवतार्थे ङीपोपवादः । देवतायां किं । सूर्यस्य स्त्री सूरी मानुषी । कुंतीत्यर्थः । सूर्यागस्त्ययोरिति यलोपः ॥

तत्त्वदीपिका—सूरीति । सूर्यागस्त्ययोरीपि ईपि चेति यलोपः ।

**मू०—जातेरयोपधात् ॥** जातिवाचिनोयकारोपधादकरान्तात्स्त्रियामीप्प्रत्ययो भवति । महिषी । हंसी । योपधात्तु । क्षत्रिया । वैश्या ।

सुबोधिनी—जातेरयोपधात् । जातिवाचकाद्य उपधा यस्य स योपधः न योपधः अयोपधस्तस्मादयोपधात् अदंतात्स्त्रियामीप् स्यात् । जातिलक्षणमाह । आकृतिग्रहणा जातिर्लिंगानां च न सर्वभाक् ॥ सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह ॥ १ ॥ आकृतिग्रहणं यस्याः सा आकृतिग्रहणा जातिरुच्यते । आकृतिः संस्थानं । गृह्यतेऽनेनेति ग्रहणं । करणे युट् । अवयवसंनिवेशविशेषव्यंग्येत्यर्थः । यथा तटी । तटादेः सर्वलिंगत्वेऽपि आकृतिग्रहणत्वाज्जातित्वं भवति । अनेन लक्षणेन गोत्रत्वादिजातिर्लक्षिता । ब्राह्मणत्वादिजातिस्तु न लक्षिता । ब्राह्मणक्षत्रियादीनां ह्यवयवसंस्थानस्य सदृशत्वात् । ब्राह्मणादिष्वव्याप्तिवारणाय लक्षणांतरमाह । चकारोभिन्नक्रमार्थः । या सकृदाख्यातनिर्ग्राह्या सा जातिरुच्यते । सकृदेकवारमाख्यातोपदिष्टा सती निर्ग्राह्या निश्चेतुं शक्या सा जातिरित्यर्थः । कीदृशी सा । लिंगानां न सर्वभाक् । लिंगानामिति कर्मणि षष्ठी । सर्वाणि भजतीति सर्वभाक् । या सर्वाणि लिंगानि न भजतीत्यर्थः । सर्वशब्दस्य लिंगापेक्षत्वेऽपि गमकत्वात् भजो विण्प्रत्ययः समासश्च । असर्वलिंगत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यंतरे कथनं विनाऽपि सुग्रहा जातिरिति लक्षणांतरं । यथा वृषली । एकस्यां हि व्यक्तौ वृषलत्वे कथिते तदपत्यतत्सहोदरादौ कथनं विनाऽपि वृषलत्वस्य सुग्रहः । सकृदित्यादि किं । देवदत्ता । यस्यां हि व्यक्तौ देवदत्तत्वं कथ्यते तत्समकालमन्या देवदत्तव्यक्तिरप्रसिद्धेति न देवदत्तत्वं जातिः उक्तलक्षणद्वयरहितत्वात् । तृतीयलक्षणमाह । चरणैः सह गोत्रं जातिरुच्यते । चरणशब्देन शाखाध्येतार उच्यंते । गोत्रशब्देनापत्यमुच्यते । अपत्यप्रत्ययांतः शाखाध्येतृवाचकशब्दो जातिवाचक इत्यर्थः । गोत्रस्यानाकृतिग्रहणत्वात्सर्वलिंगत्वाच्च पृथगुपादानं । चरणशब्दस्त्वध्ययनक्रियासंबंधेन प्रवृत्तत्वात् क्रियाशब्दा एव जातिशब्दा इति चरणग्रहणं कृतं । आकृतिग्रहणा यथा । महिषी । हंसी । असर्वलिंगा यथा । ब्राह्मणी । वृषली । गोत्रलक्षणा यथा । औपगवी पैतृष्वसेयी । अण्णंतमीपं परत्वादयं बाधते इति भावः । चरणलक्षणा यथा । कठेन प्रोक्तमधीयाना कठी । कारकादित्यण् प्रत्ययस्तस्य लुक् च । अत इति किं तित्तिरिः गौः ॥

तत्त्वदीपिका—जातेरयोपधादिति । जातिलक्षणमुच्यते आकृतिग्रहणाजातिर्लिंगानां च न सर्वभाक् । सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैस्सह । आकृतिग्रहणा जातिः आकृतिः संस्थानं ग्रहणं यस्याः सा आकृतिग्रहणा । अवयवसन्निवेशविशेषव्यंग्येत्यर्थः । अनेनगोत्वजातिर्लक्षिता । ब्राह्मणत्वादिजातिस्तु ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वात् अतो लक्षणांतरं लिंगानां चेत्यादि । सर्वाणि लिंगानि न भजतीत्ययमर्थो विवक्षितः सर्वशब्दस्य लिंगापेक्षत्वेपि भजोविण्प्रत्ययः । समासश्च बोधकत्वात् । लिंगानामिति कर्मणि षष्ठी सर्वं लिंगं न भजतीत्यर्थः । सकृदिति असर्वलिंगत्वे सत्येकस्यां व्यक्तौ कथनाद्व्यक्त्यंतरे कथनं विनापि सुग्रहा जातिरिति लक्षणांतरम् । अक्षरार्थस्तु एकस्मिन्पिंडे सकृदेकवारमाख्याता अयं गौरित्युपदिष्टा पिंडांतरेषु निर्ग्राह्या निश्चेतुं शक्येत्यर्थः । अप्राप्तप्रापणं चेदं न तु पूर्वलक्षणसंकोचकं तेन तटादेर्जातित्वं । देवतादौ तु उपदेशाभावान्न लक्षणसमन्वयः । येषु सर्वेषु लिंगेष्वाचार्याः जातिवाचित्वमुपदिशांति तेष्वेव वदंतीत्यर्थः । गोत्रं च चरणैः सहेति गोत्रशब्दे-

नापत्यमुच्यते चरणशब्देन शाखाध्यायिन उच्यंते तेनापत्यप्रत्ययांतः शाखाध्येतृवाची शब्दो जातिवाचक इत्यर्थः। कुक्कुटी शूकरीति प्रथमस्योदाहरणं । ब्राह्मणी वृषलीति द्वितीयस्य । गार्गी पैतृष्वसेयीति । तृतीयस्य । कठी वराकीति चतुर्थस्य । गवयेत्यादिनोक्तस्यानित्यत्वादिति भावः ।

**सू०–कचिन्न ॥ बलाका ।**

सुबोधिनी–कचिन्न । यः शब्दो जातिवाची अयोपधः स्त्रियां नियतश्च ततो नेप् भवतीर्थः । बलाका बिसकंठिकेत्यमरः ॥

**सू०–गवयहयमुकयमनुष्यमत्स्यानामनिषेधः ॥ गवयी । हयी । मुकयी । हसात्तद्धितयस्येपि लोपः । मनुषी ।**

सुबोधिनी–गवयहयमुकयमनुष्यमत्स्यानामनिषेधः । योपधेभ्योप्येभ्य ईप् स्यात् । हसात्तद्धितयस्येपि लोपः । हसात्परस्य तद्धितयकारस्य लोपः स्यादीपि । यस्येत्यलोपः । मनुषी ।

तत्त्वदीपिका–गवयहेयति । हसात्तद्धितेत्यादि एतद्बीजं तु यस्यलोपसूत्रव्याख्यानावसरेणचोक्तम् ।

**सू०–ईपिमत्स्यस्ययलोपः ॥ मत्सी ।**

सुबोधिनी–ईपिमत्स्यस्ययलोपः । मत्स्यशब्दस्य यकारस्य लोपः स्यादीपि । यस्येत्यलोपः । मत्सी ।

**सू०–सूर्यागस्त्ययोरीयेईपिच ॥ सूरी । अगस्ती ।**

सुबोधिनी–सूर्यागस्त्ययोरीये ईपि च । अनयोर्यकारस्य लोपः स्यात् ईयप्रत्यये ईप्प्रत्यये च । सूरीयः । सूरी । अगस्तीयः । अगस्ती ॥

**सू०–तिष्यपुष्ययोर्नक्षत्राणि यलोपः ॥ तैषी । पौषी ।**

सुबोधिनी–तिष्यपुष्ययोर्नक्षत्राणियलोपः । अनयोर्यकारस्य लोपः स्यात् । नक्षत्रसंबंधी योऽण् स नक्षत्राण् । नक्षत्रेण युक्तः काल इत्यण् नक्षत्रेभवइत्यण् च तस्मिन् परतः। तिष्येण युक्तः कालस्तैषः । पुष्येण युक्तः कालः पौषः । तथा तिष्ये भवस्तैषः । पुष्ये भवः पौषः । स्त्रियां त्रण ईविंतीप् यस्येत्यलोपः । तैषी । पौषी ।

**सू०–जानपदादिभ्योऽर्थविशेषेईप् ॥ जानपदी वृत्तिश्चेत् । अन्या जानपदी । कुंडी अमत्रं चेत् । कुंडान्या । गोणी आवपनं चेत् । गोणान्या । स्थली अकृत्रिमा चेत् । स्थलान्या । भाजी श्राणा चेत् । भाजान्या । नागी स्थूला चेत् । नागान्या । काली वर्णश्चेत् । कालान्या । नीली ओषधिप्राणिनोः । नीलान्या । संज्ञायां वा । नीला, नीली । कुशी अयोविकारे । कुशान्या । कामुकी मैथुनेच्छायां । कामुकान्या । कबरी केशविन्यासे । कबरान्या ।**

सुबोधिनी–पाणिनिसूत्रम् । जानपदकुंडगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु । एभ्य एकादशभ्य एष्वर्थेष्वीप् स्यात् । जनपददेशे भवा जानपदी । भवार्थे अण् वर्तते । अन्येति ।

वृत्तिर्जीविका चेद्यदि अन्याप्येवं जानपदी । वृत्त्यभावे । आद्युदात्त इति स्वरे भेदः । "अस्त्री-कमंडलुः कुंडीत्यमरः" । अमत्रे पात्रं । कुंडी । स्त्रीविषयत्वाभावादप्राप्त ईप् विधीयते । अन्या कुंडा । कुडिदाहे । अस्माद्गुरोर्हसादित्यङ्प्रत्यये रूपं । यस्तु 'अमृते जारजः कुंड' इति मनुष्यजातिवाची कुंडशब्दस्ततो जातिलक्षण ईप् भवत्येव । ओप्यते निक्षिप्यते धान्यं यस्मिन् तदावपनं गोणी । आङ्पूर्वाद्वपेरधिकरणे युट् । अन्या गोणेति यथेच्छंनाम । अकृत्रिमा पुरुषेणासंस्कृता भूमिः स्थली । पुरुषकृता तु स्थला । पुष्टा चेत् नागी । अन्या नागा । वर्णयुक्ता चेत् काली । अन्या काला । अनाच्छादनं चेन्नीली ओषधिविशेषः । प्राणिनितु नीली गौः । आच्छादने तु नीला शाटी । अयसो लोहस्य विकारः अयोविकारः फाल इति प्रसिद्धः तत्र कुशी । अन्या कुशा । वेदे औदुंबरं शंकुं कुशा इति व्यवहरंति । वल्गावक्षेपणीकुशेति हैमकोशे । मैथुनेच्छायां सुरतवांछायां कामुकी । धनादिकं कामयितुं शीलं यस्याः सा कामुका । षाकोकण् इत्युकण् । केशविन्यासे केशरचनायां कबरी । अन्या कबरा । चित्रेत्यर्थः ।

तत्त्वदीपिका–जानपदेत्यादि । पुंयोगेत्यत्र चकारस्य व्यवस्थितत्वाश्रयणादिति भावः । आवपनइति आउप्यते निक्षिप्यते धान्यं यस्मिंस्तत्तस्मिन् । गोणान्या यादृच्छिके नाम । अकृत्रिमायामिति असंस्कृताया-मित्यर्थः । श्राणेति पक्वेत्यर्थः । अयोविकार इति फाल इत्यर्थः । कुशा औदुंबराः शंकवः ।

**मू०–शोणाद्वा ॥ शोणी । शोणा ।**

सुबोधिनी–शोणाद्वा । शोणशब्दाद्वा ईप् स्यात् । शोणः कोकनदच्छविरित्यमरः ।

**मू०–बहुव्रीहेर्जातिपूर्वात्क्तांतात् ॥ ऊरुभिन्नी ।**

सुबोधिनी–बहुव्रीहेर्जातिपूर्वात् क्तांतात् । जातिवाचिपूर्वपदात् क्तांताददंताद्बहुव्रीहेः स्त्रियामीप् । भिन्नावूरू यस्या इति बहुव्रीहौ भिन्नशब्दस्य बहुव्रीहौ विशेषणसप्तम्यंतक्तांता-नामिति पूर्वनिपाते प्राप्ते क्वचिन्नेति परनिपातः ।

तत्त्वदीपिका–बहुव्रीहेरिति । एतद्बीजं तु चकार एव ।

**मू०–जातांतान्न ॥ दंतजाता ।**

सुबोधिनी–जातांतान्न । जातशब्दांताद्बहुव्रीहेर्जातिवाचिपूर्वपदादीप् न । दंता जाता यस्याः सा दंतजाता ।

**मू०–अस्वांगपूर्वपदाद्वा ॥ सुरापीती सुरापीता ।**

सुबोधिनी–अस्वांगपूर्वपदाद्वा । अस्वांगवाचिपूर्वपदात् क्तांताददंताद्बहुव्रीहेः स्त्रियां वेप् स्यात् । पीता सुरा यया सा सुरापीता । क्वचिन्नेति क्तांतस्य परनिपातः । बहुव्रीहेर्जाति-पूर्वपदादित्यनेन नित्ये प्राप्ते विकल्पार्थमेतत् ।

तत्त्वदीपिका– सुरापीतीति । नाम्नः कृतेति व्युत्पत्तेः प्रागेव समासे सिबंतेन समासे तु सुरापीतेत्या-दिकमेव ।

**मू०–पाणिगृहीतीभार्यायां ॥ अन्या पाणिगृहीता ।**

सुबोधिनी–पाणिगृहीतीभार्यायां । यस्याः पाणिरग्निसाक्षिको गृह्यते तस्यां वाच्यायां पाणिगृहीतशब्दादीप् स्यात् । अन्येति । कौतुकादिना पाणिर्गृहीतो यस्या दास्यादेः सा पाणिगृहीता ।

**मू०–क्रीतांतात्करणादेः ॥** वस्त्रक्रीती । क्वचिन्न धनक्रीता ॥

सुबोधिनी–क्रीतांतात्करणादेः । आदिशब्दो ह्यवयववचनः करणमादिरवयवो यस्य तस्मात् करणादेरेकपदादित्यर्थः । क्रीतांतादुदंतात् करणादेः स्त्रियामीप् स्यात् । वस्त्रेण क्रीतेति वस्त्रक्रीती । करणादेरिति किं । गवा क्रीता, अश्वेन क्रीता ।

**मू०–क्तांतादल्पत्वे ॥** अभ्रलिप्ती द्यौः । अल्पत्वे किम् । चंदनलिप्तान्या मूर्तिः ।

सुबोधिनी–क्तांतादल्पत्वे । करणादेः क्तांतादुदंतात्स्त्रियामीप् स्यादल्पत्वे द्योत्ये । अल्पैरभ्रैर्लिप्तेति अभ्रलिप्ती ।

**मू०–स्वांगाद्वा ॥** स्वांगवाचिनोऽदंतादसंयोगोपधादुपसर्जनाद्वा स्त्रियामीप् । सुमुखी । सुमुखा । सुकेशी । सुकेशा । संयोगोपधात्तु । सुगुल्फा ।

सुबोधिनी–स्वांगाद्वा । स्वांगवाचकादकारांतादसंयोगोपधाद्गौणाद्वा स्त्रियामीप् स्यात् । यथा । सुष्ठु मुखं यस्याः सा सुमुखी । सुष्ठु केशाः यस्याः सा सुकेशी । पक्षे आबत इत्याप् । असंयोगोपधात्किं । सुष्ठु गुल्फौ यस्याः सा सुगुल्फा । उपसर्जनात्किं । शोभना शिखेति सुशिखा । शीङोह्रस्वश्चेति खप्रत्ययः आबत इत्याप् । किंच यद्यत्र स्वं अंगं स्वांगं गृह्यते तदा सुमुखाशालेत्यत्रापीप् स्यात् । मुखस्य शालांगत्वात् सुकेशी रथ्येत्यत्र चेप् न स्यात् । केशानां रथ्यांगत्वाभावात् अतोव्याप्त्यतिव्याप्तिपरिहारार्थमाह । तत्स्वांगं त्रिधा । तथा च । "अद्रवन्मूर्तिमत्स्वांगंप्राणिस्थमविकारजम् ॥ अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथायुतम् ॥ १ ॥" सुष्ठु स्वेदो यस्याः सा तत्स्वांगमुच्यते । कीदृशं । अद्रवत् । द्रवतीति द्रवद् न द्रवददद्रवद् । सुष्ठु स्वेदो यस्याः सा सुस्वेदा द्रवत्वादत्र स्वांगं न । पुनः कीदृशं । मूर्तिमत् । स्पर्शवद्द्रव्यपरिमाणं मूर्तिः । मूर्तिर्यस्यास्तीति तन्मूर्तिमत् । सुष्ठु ज्ञानं यस्याः सा सुज्ञाना अमूर्तत्वात् । अत्र स्वांगं न । पुनः कीदृशं । प्राणिस्थं । मुखनासिकांतःसंचारी वायुः प्राणः । प्राणो यस्यास्तीति प्राणी । प्राणिनि तिष्ठतीति तत्प्राणिस्थं । सुष्ठु मुखं यस्याः सा सुमुखा शाला । अप्राणिस्थत्वादत्र स्वांगं न । पुनःकीदृशं । अविकारजं । वातपित्तकफानां विकृतिर्विकारः विकाराज्जातं विकारजं नाविकारजं अविकारजं । सुष्ठु शोफो यस्याः सा सुशोफा । शोफस्तु श्वयथुः शोथः पुमानित्यमरः । विकारजत्वादत्र स्वांगं न । यदि प्राणिस्थं स्वांगं तर्हि रथ्यादिगतानां केशादीनां स्वांगत्वं न स्यात् । सुकेशी रथ्या इति न सिद्ध्यत्यतो द्वितीयं लक्षणमाह । च पुनः अतत्स्थं तत्र दृष्टं स्वांगमुच्यते । कदाचित्तत्र प्राणिनि दृष्टं तं प्रति तस्मिन्प्राणिनि तिष्ठतीति तत्स्थं अतत्स्थं अप्राणिस्थमित्यर्थः । अप्राणिस्थस्यापि केशादेः पूर्वं प्राणिनि दृष्टत्वात् स्वांगं । एवमपि प्रतिमादिगतस्तनमुखादीनां स्वांगत्वं न प्राप्नोति । अप्राणिन्यदृष्टत्वात् । सुस्तनी प्रतिमेति न सिध्यत्यतस्तृतीयलक्षणमाह । तेन चेत्तत् तथायुतं अतत्स्थमित्यनुषज्यते । एतादृशं तदप्राणिस्थं मुखादि स्वागमुच्यते । कीदृशं चेद्यादि तेन प्राण्यंगेन मुखादिना सह तथा युतं

प्राणिवद्युतं सहितं यथा प्राणियुतं तद्वत्प्राणिनि युतं भवतीत्यर्थः । सुष्ठु स्तनौ यस्याः सा सुस्तनी प्रतिमा । प्राणिसदृशे प्रातिमादौ प्राणिनि इवेति प्राणिवत् स्तनादेः स्थितत्वात् स्वांगमस्ति ॥

तत्त्वदीपिका—स्वांगाद्धेति । स्वमंगं स्वांगमित्युक्तौ सुमुखा शालेत्यत्रातिव्याप्तिः मुखस्य शालावयवत्वात् । दीर्घकेशी रथ्येत्यत्राव्याप्तिश्च केशानां रथ्यांगत्वाभावादतस्तत्परिहाराय स्वांगलक्षणमुच्यते । अद्रवन्मूर्तिमत्स्वांगं प्राणिस्थमविकारजम् । अतत्स्थं तत्र दृष्टं च तेन चेत्तत्तथायुतं । प्राणिस्थं स्वांगं प्राणिनि तिष्ठतीति प्राणिस्थं एतेन श्लक्ष्णमुखा शालेत्यत्र न भवति अप्राणिस्थत्वात् । द्रवतीति द्रवत् ततोन्यत् अद्रवत् एवं च सुस्वेदात्र न भवति द्रवत्वात् । मूर्तिमदिति असर्वगतद्रव्यपरिमाणं मूर्तिः। असर्वगतानि यानि द्रव्याणि तेषां यत्परिमाणं ह्रस्वत्वादि सा मूर्तिः स्पर्शनद्रव्यपरिमाणमूर्तिरित्यन्ये । सा यस्यास्तीति तन्मूर्तिमत् एवं च बहुज्ञानात्र न भवति अमूर्त्तत्वात् । अविकारजमिति विकारे वातादिवैषम्यं ततो यज्जायते तन्न भवतीत्यविकारजम् एवं सुशोफात्र न भवति । अतत्स्थमिति सांप्रतमपि कदाचित्प्राणिनि दृष्टं चेत्तदपि स्वांगं भवत्येवेत्यर्थः । तथा च दीर्घकेशी रथ्येत्यत्र भवत्येव। इदानीं प्राणिस्थस्यापि पूर्वं प्राणिनि दृष्टत्वात् । तेन चेदिति अतत्स्थमित्यनुषज्यते। अप्राणिस्थमपि मुखादि स्वांगं तेन चेत् मुखादिना तत् अप्राणिद्रव्यं तथायुतं भवति यथा प्राणिद्रव्यमित्यर्थः। एवं दीर्घमुखी प्रतिमेति भवति प्राणिवत् प्राणिसदृशेपि स्थितत्वात् ।

**मू०—नासिकोदरौष्ठजंघादन्तकर्णशृंगाद्वा ॥ तुंगनासिकी । तुंगनासिका । मंदोदरी । मंदोदरा । बिंबोष्ठी । बिंबोष्ठा । एवं सुजंघी । सुदंती। सुकर्णी । सुशृंगी ।**

सुबोधिनी—नासिकोदरौष्ठजंघादंतकर्णशृंगाद्वा । एभ्यो वेप् स्यात् । नासिकोदरयोर्नक्रोडादिबहुस्वरादिति ओष्ठादीनां पंचानां तु संयोगोपधाच्चेति निषेधे प्राप्ते वचनं । तुंगा नासिका यस्याः सा तुंगनासिकी । मंदमुदरं यस्याः सा मंदोदरी । बिंबवत् ओष्ठौ यस्याः सा बिंबोष्ठी । सुष्ठु जंघौ यस्याः सा सुजंघी । पक्षे आप् सुजंघेति ।

तत्त्वदीपिका—नासिकेत्यादि । वाग्रहणादेतत्सर्वं । नासिकोदरयोर्बहुस्वरादप्राप्तिः ओष्ठादीनां तु संयोगोपधत्वादप्राप्तिः ।

**मू०—अंगगात्रकंठपुच्छाच्च ॥ स्वंगी । सुगात्री । सुकंठी । सुपुच्छी । पक्षे स्वंगेत्यादि ।**

सुबोधिनी—अंगगात्रकंठपुच्छाच्च । एभ्यो वेप् स्यात् । असंयोगोपधादिति निषेधे प्राप्ते वचनं । सुष्ठु अंगं यस्याः सा स्वंगी । सुष्ठु गात्रं यस्याः सा सुगात्री । सुष्ठु कंठो यस्याः सा सुकंठी । सुष्ठु पुच्छं यस्याः सा सुपुच्छी । पक्षे आप् ॥

**मू०—कबरमणिविषशरेभ्यःपरात्पुच्छान्नित्यं ॥ कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ।**

सुबोधिनी—कबरमणिविषशरेभ्यः परात्पुच्छान्नित्यं ईप् स्यात् । कबरं चित्रं पुच्छं यस्याः सा कबरपुच्छी । मणिः पुच्छे यस्याः सा मणिपुच्छी । शरः पुच्छे यस्याः सा शरपुच्छी । विषं पुच्छे यस्याः सा विषपुच्छी ॥

**मू०–उपमानात्पक्षपुच्छाभ्यां ॥ श्येनपक्षी । श्येनपुच्छी ।**

सुबोधिनी–उपमानात् पक्षपुच्छाभ्यां । उपमानात्परभ्यां पक्षपुच्छाभ्यां नित्यमीप् । श्येनवत् पक्षौ यस्याः सा श्येनपक्षी । श्येनइव पुच्छं यस्याः सा श्येनपुच्छी ॥

**मू०–नक्रोडादिबहुस्वरात् ॥ कल्याणक्रोडा । सुजघना ।**

सुबोधिनी–नक्रोडादिबहुस्वरात् । क्रोडादेर्बहुस्वराच्च स्वांगान्नेप् स्यात् ॥ अश्वानामुरः क्रोडा । सुष्ठु जघनं यस्याः सा सुजघना ॥

तत्त्वदीपिका–कल्याणक्रोडेति । अश्वानामुरः क्रोडा स्त्रीलिंगोयमिति हरदत्तादयः । तत्रान्यार्थत्वेन ह्रस्वत्वेऽदन्तात्वादीपः प्राप्तिः । अमरस्तु न ना क्रोडं भुजांतरमित्याह । रत्नमणिस्तु पुंस्त्वमाह । गणे च क्रोडेति प्रातिपदिकमात्रं पाठ्यते ननु आबंतमिति गणरत्नमहोदधिकारः एवं । चाविशेषाल्लिंगत्रयेपि उदाहरणं बोध्यम् । माधवस्तु तुदादिगणे कुड निमज्जने इतिधातावाह क्रोडः वक्ष क्रोडा अश्वानामुरः अयं स्वभावतो विशेषविषयः। क्रोडादिषु आबंतस्यैव पाठात्। भुजांतरमात्रवचनस्य क्रोडशब्दस्य बहुव्रीहौ स्वांगलक्षणईपूविकल्पो भवत्येव कल्याणक्रोडी । कल्याणक्रोडादिराकृतिगणः ।

**मू०–सहनञ्विद्यमानपूर्वान्न ॥ सकेशा । अकेशा । विद्यमाननासिका ।**

सुबोधिनी–सहनञ्विद्यमानपूर्वान्न। सहेत्यादित्रिकपूर्वात्स्वांगान्नेप् स्यात्। सह केशैः वर्तते या सकेशा । सहादेरिति सहस्य सः । अविद्यमानाः केशाः यस्याः सा अकेशा । ना इति नञोऽकारादेशः । विद्यमाना नासिका यस्याःसा विद्यमाननासिका । स्वांगाद्वेत्यस्य नासिकोदरौष्ठेत्यस्य बाधकोऽयं परत्वात् ॥

**मू०–नखमुखात्संज्ञायाम् ॥ शूर्पणखा । गौरमुखा संज्ञायां किं । ताम्रमुखी कन्या ।**

सुबोधिनी–नखमुखात्संज्ञायां । आभ्यामीप् न स्यात् संज्ञार्थे । शूर्पणखा रावणस्य स्वसुर्नाम । यदा शूर्पवन्नखानि यस्याः सा इति योगमात्रं विवक्ष्यते न तु संज्ञा तदा ईप् स्यादेव णत्वाभावश्च । गौरमुखेति कस्याश्चित् संज्ञा ॥ असंज्ञायां तु ताम्रवन्मुखं यस्याः सा ताम्रमुखी ॥

**मू०–वौर्गुणात् ॥ उदंताद्गुणवचिनो वा स्त्रियामीप् स्यात् । पट्वी । पटुः । बह्वी । बहुः ।**

सुबोधिनी–वौर्गुणात् । वा ओरिति छेदः । गुणशब्दोत्र गुणवत्परो न तु गुणमात्रवाचिपरो गुणमात्रवाचकानां स्त्रीलिंगाभावात् गुणे शुक्लादयः पुंसीत्युक्तत्वात् । उदंतादिति किं । शुचिः । गुणात्किं । आखुः । महाभाष्ये गुणलक्षणं 'सत्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ॥ आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥ १ ॥' स गुण उच्यते । यः सत्वे द्रव्ये निविशते द्रव्यमुपैतीत्यर्थः । ननु द्रव्ये द्रव्यत्वं तत्रातिव्याप्तिरतआह । यो पृथक्द्रव्यादपैति अपगच्छति द्रव्यं जहातीत्यर्थः । यथा पीततायां जातायां नीलता फलादपैति नैवं द्रव्यत्वं द्रव्यादपैति । ननु गोषु गोत्वं तदश्वादेश्चापैति तत्रातिव्याप्तिरत आह । यः पृथक्जातिषु दृश्यते द्रव्यांतरेष्ववलोक्यते यथाऽभ्रे दृष्टा नीलता तृणादिष्वपि दृश्यते न तथा गोत्वं पृ-

थग्जातिषु दृश्यते । एवं तर्हि द्रव्ये क्रिया वर्तते सा द्रव्यादपैति प्रथक्जातिषु दृश्यते चेति तत्राऽतिव्याप्तिरत आह । य आधेय उत्पाद्यः च पुनः योऽक्रियाजोऽनुत्पाद्य इत्यर्थः । उत्पाद्यो यथा । घटादेः पाकजो रूपादिः । अनुत्पाद्यो यथा । आकाशादेर्महत्त्वादिः । क्रिया तु सर्वाप्युत्पाद्यैव । नानुत्पाद्यायाः क्रियाया द्वैध्याभावाद्गुणत्वाभावः । एवं तर्हि द्रव्यस्य गुणत्वं प्राप्नोति । तथाहि । अवयविद्रव्यं ह्यवयवद्रव्येषु निविशते संयोगविनाशादवयवद्रव्यादपि पृथग्जातिषु हस्तपादादिषु दृश्यते । द्रव्यमुत्पाद्याऽनुत्पाद्यभेदेन द्विविधं तत्र निरवयवस्यात्मपरमाण्वादेरनुत्पाद्यत्वं नित्यत्वात् । अवयविद्रव्यस्य घटादेस्तूत्पाद्यत्वमस्त्यनित्यत्वादत आह । योऽसत्त्वप्रकृतिरद्रव्यस्वभावो द्रव्याद्भिन्न इत्यर्थः ॥

तत्त्वदीपिका–वौर्गुणादिति । वा ओः गुणादिति छेदः । औरिति तु न औः प्रत्यय इति व्याख्यानं न कार्यिणः प्रागनुद्देशात् सतो हि कार्यिणः कार्येण भाव्यमिति औरित्यपि उवर्णांतस्यैव ग्रहणं न त्वोकारांतस्य गुणस्य तदभावात् केवलस्यापि उमात्रस्यागुणस्याभावात् । गुणशब्दोपि न स्वरूपपरः तस्यानुदन्तत्वात् गुणमात्रवाचिपरोपि न तस्य स्त्रियामप्रवृत्तेः । गुणे शुक्लादयः पुंसीति वचनात् । गुणलक्षणन्तु उपैत्यन्यंजहात्यन्यं दृष्टो द्रव्यांतरेष्वपि । वाचकः सर्वलिंगानां द्रव्यादन्यो गुणः स्मृत इति ।

**मू०–खरुसंयोगोपधान्न ॥ खरुः । पांडुः ।**

**सुबोधिनी**–खरुसंयोगोपधान्न । खरुशब्दात् संयोगोपधगुणवाचिनः शब्दाच्च नेप् स्यात् । खरुः पतिंवरा कन्या । पाणिग्रहणोत्कंठावतीत्यर्थः ॥

तत्त्वदीपिका–खरुसंयोगेत्यादि । वाशब्दादेतत् । खरुः पतिंवरा कन्या । तत्र पाणिग्रहणोत्कंठाभिधायित्वाद्गुणवचनत्वम् ।

**मू०–कृदिकारादक्त्यर्थात् ॥ रात्री । रात्रिः । शकटी । शकटिः । अक्त्यर्थात् किं । भूतिः । अजननिः ।**

**सुबोधिनी**–कृदिकारादक्त्यर्थात् । क्त्यादिभिन्नात्कृत्संबंधिन इकारात् स्त्रियां वेप् स्यात् । आजी संग्रामः । धूली रजः । अक्त्यर्थात् किं । भूतिः । क्तिरिति स्त्रियां भावेऽर्थे क्तिः । आक्रोशे नञ्यनिरिति जनेरनिप्रत्ययः । न जायते इत्यजननिः ॥

**मू०–पद्धत्यादिभ्योवा ॥ पद्धती । पद्धतिः ।**

**सुबोधिनी**–पद्धत्यादिभ्योवा । स्त्रियामेभ्यो वेप् स्यात् । पद्भ्यां हन्यते इति पद्धतिर्मार्गः क्तिप्रत्ययांतत्वादप्राप्ते विध्यर्थं । पद्धतिशब्दो गणे पठ्यते । पद्धतिषष्टिविकटविशालकल्याणपुराणचंडकृपाणअहनित्यादयः ॥

**मू०–ऐचमन्वादेः ॥ मनुपूतक्रतुवृषाकप्यग्निकुसितकुसिदानामै आदेश ईप् च स्त्रियां पुंयोगे । पूतक्रतायी । कुसितायी । कुसिदायी । वृषाकपायी । अग्नायी ।**

**सुबोधिनी**–ऐचमन्वादेः । मनुरादिरस्य स मन्वादिस्तस्मान्मन्वादेः । आदिशब्दः प्रकारे । स्त्रियां मन्वादेरीप् स्यात् पुंयोगे एषामंतस्यैकारादेशश्च । पूतः क्रतुर्यस्य येन वा पूतक्रतुः पूतक्रतोः स्त्री पूतक्रतायी । पुंयोगे किं । पूतक्रतुः स्त्री । यया तु क्रतवः पूताः स्यात् पूत-

क्रतुर्यस्य सेत्यमरः । अग्नेः स्त्री अग्नायी । स्वाहा च हुतभुक्प्रियेत्यमरः । वर्षति कामानिति वृषः नाम्युपधात्कइति कः आकंपयति पापानीत्याकपिः । अत्रांतर्भावितञिप्रत्ययार्थोऽस्ति इखखि इति इप्रत्ययः । इदित इति न नुम् । आगमजमनित्यमित्युक्तत्वात् । वृषश्चासौ आकपिश्च वृषाकपिर्वृषाकपेः स्त्री वृषाकपायी । हरविष्णू वृषाकपीइत्यमरः । वृषाकपायी श्रीगौर्यौ इति च ॥

तत्त्वदीपिका—वृच्चमन्वादेरिति । मनुरादिर्यस्य स मन्वादिः आदिशब्दः प्रकारे तेन वृषाकप्यग्निकुसितकुसिदा गृहीताः । पूतक्रतायीति पूतः क्रतुर्येन स पूतक्रतुः तस्य स्त्रीत्यर्थः । वृषाकपायीति वर्षति कामानिति वृषः नाम्युपधात्कः आकंपयति पापानिति आकपिः अन्तर्भावितण्यन्तः । इखखीति इः । यत्त्वागमजमनित्यमिति तन्न इप्रत्यये खित्वाभावादेन नुमोप्राप्तेरागमजत्वेनानित्यत्वाश्रयस्य व्यर्थत्वात् । वृषश्चासावाकपिश्च वृषाकपिस्तस्य स्त्रीत्यर्थः । हरविष्णूवृषाकपी वृषाकपायीश्रीगौर्यौ । पुंयोगोक्ते । पूताः क्रतवो यया सा उरेव ।

सू०-मनोरैऔवा ॥ मनावी । मनायी । मनुः ।

सुबोधिनी—मनोरैऔवा । मनुशब्दस्यौकारादेशः ऐकारादेशश्च वा ङीपि । मनोः स्त्री मनावी । मनायी । मनुः । ईवभावः ॥

सू०—पत्न्यादयोनिपात्याः ॥ पत्नी । सपत्नी । एकपत्नी । वीरपत्नी ।

सुबोधिनी—पत्न्यादयो निपात्याः । पत्नी आदिर्येषां ते पत्न्यादयः । आदिशब्दः प्रकारे । पतिशब्दांतस्य नांतत्वं निपात्यते । ऋणईवितीप् पत्नी । समानः पतिर्यस्याः सा सपत्नी । सहादेरिति समानस्य सभावः । एकः पतिर्यस्याः सा एकपत्नी । वीरः पतिर्यस्याः सा वीरपत्नी । सखिशब्दशिशुशब्दाभ्यामीप् निपात्यते । सखी । न विद्यते शिशुर्यस्याःसा अशिश्वी । अशिश्वी तु शिशुं विनेत्यमरः । अनडुहः स्त्रियामीप् निपात्यते । अनडुहश्चेति वाम् अनड्वाही । अनडुही । प्रागादिशब्दादीक् निपात्यते । गतौ । प्राची पूर्वा दिक् । नोलोप इति लोपः । पूजायां तु प्राञ्ची । पूजार्थाञ्चतेर्नेति न लोपाभावः । गतौ अञ्चेरदीर्घश्चेत्यकारलोपः । पूर्वदीर्घे प्रतीची पश्चिमा दिक् । पूजायां प्रत्यंची । उदीची उत्तरा दिक् । तिरश्चादय इति उदीचादेशः । अवाची । दक्षिणा दिक् । प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिणपश्चिमाः ॥ उत्तरादिगुदीची स्यादित्यमरः ॥

तत्त्वदीपिका—पत्न्यादयइति । नत्वं निपात्यते ईप् तु नांतत्वादेव ।

सू०—क्वचिद्वा ॥ दृढपत्नी । दृढपतिः । वृषलपत्नी । वृषलपतिः । एता । एनी । हरिता । हरिणी । रोहिता । रोहिणी । श्येता । श्येनी । असिता । असिक्नी । पलिता । पलिक्नी । इत्यादि ।

सुबोधिनी—क्वचिद्वा । क्वचिद्वा निपातनं भवति । दृढः पतिर्यस्याः सा दृढपत्नी । दृढपतिः । वृषलः शूद्रः पतिर्यस्याः सा वृषलपत्नी । वृषलपतिः । एतच्छब्दात् स्त्रियामीप् तकारस्य नकारादेशश्च वा निपात्यते । एनी । एता । कर्बुरेत्यर्थः । “ चित्रं किर्मीरकल्माषशबलैताश्चकर्बुरे” इत्यमरः । हरिणी । हरिद्वर्णेत्यर्थः । रोहिणी । रोहिता । रक्तेत्यर्थः । श्येनी । श्येता । श्वेतेत्यर्थः । असितपलितशब्दयोरीप् तकारस्य क्नादेशश्च वा निपात्यते । असिता । असिक्नी । कृष्णेत्यर्थः । पलिता । पलिक्नी । वृद्धेत्यर्थः ॥

तत्त्वदीपिका– क्वचिदेवेति । पुंयोगेत्यतश्चकारानुवृत्तेरितिभावः ।

**मू०–इतोमनुष्यजातेरीप् ॥** दाक्षी । अवंती । कुंती ।

सुबोधिनी–इतोमनुष्यजातेरीप् । मनुष्यजातिवाचिन इकारांतात् स्त्रियामीप् स्यात् । दक्षस्यापत्यं दाक्षिः अत इञितीञ् । अत्र गोत्रलक्षणा जातिः । अवंतेरपत्यं स्त्री कुंतेरपत्यं स्त्री स्त्रियामवंतिकुंतीत्यपत्यप्रत्ययस्यलुक् । अत्रापि गोत्रलक्षणा जातिः ।

**मू०–उतऊः ॥** उदंतादयोपधान्मनुष्यजातिवाचिनः स्त्रियामूः प्रत्ययः । कुरूः । अयोपधात्किं । अध्वर्युः स्त्री ।

सुबोधिनी–उतऊः । कुरोरपत्यं स्त्री कुरूः । स्त्रियामवंतिकुंतिकुर्विंत्यपत्यप्रत्ययस्य लुक् । अत्रापि गोत्रलक्षणा जातिः । अयोपधात्किम् । अध्वर्युर्ब्राह्मणी । शाखाध्येत्री शाखाध्यायिवंशोद्भवा वेत्यर्थः। अत्र चरणलक्षणा जातिः। अध्वरं यातीति विग्रहे मृगय्वादयश्चेत्यौणादिकेन सूत्रेण याधातोः कुप्रत्यये अध्वरशब्दस्यांत्यलोपश्च ॥

तत्त्वदीपिका– उतऊरिति । अत्राहुः ओरित्यनुवर्तमाने उत इति किमर्थम् । न च वाच्यमूदंतान्मा भूदिति । वधूरित्यादौ सत्यसति विशेषाभावादतस्तदनुवृत्तौ तत्संबंधस्य गुणशब्दस्याप्यनुवृत्तिः स्यादिति पुनरुक्तमिति माधवस्तन्न । खलप्वं यवल्वमिति विशेषणसत्त्वात् । अत्रेदमवधेयं। मनुष्यजातिवाचिन उदंतादूप्रत्ययस्य विधानेन खलप्वादिशब्दानां क्रियावाचकत्वे जातिवाचित्वाभावादेवाप्राप्तौ विशेषणस्यासंभवात् । अथात्र मनुजातिर्न विवक्षितेति वाच्यं न ऊङुत इति सूत्रविवरणे उदंतान्मनुष्यजातिवाचिन इति दीक्षितादिभिः सर्वैरेवोक्तत्वात् ।

**मू०–पङ्गोश्च ॥** पङ्गूः ।

सुबोधिनी–पंगोश्च । पंगुशब्दो गुणवाची तस्मात् स्त्रियामूः स्यात् ॥

**मू०–श्वशुरस्योकाराकारलोपऊश्च ॥** श्वश्रूः ।

सुबोधिनी–श्वशुरस्योकाराकारलोपऊश्च । श्वशुरशब्दात् स्त्रियामूः स्यात् उकाराकारयोर्लोपश्च । संनिहितत्वादंतस्यैवालोपो नत्वादेः । पुंयोगे चेतीङ्निवारणार्थमिदम् ॥

तत्त्वदीपिका–श्वशुरस्येत्यादि । एतन्मूलं तु दीर्घकरणमेवान्यथा उदंतत्वात्सवर्णदीर्घेणापि सिद्धेरुकरणं वृथा स्यात् पुंयोगलक्षण ईपिप्राप्ते ऊः तत्संयोगेन च विधीयमानोऽलोपः सन्निहितत्वादंतस्यैवाकारस्य न त्वादेः ।

**मू०–ऊरूत्तरपदादौपम्ये ॥** उपमानवाचिपूर्वपदादुरूत्तरपदादूः । करभोरूः ।

सुबोधिनी–ऊरूत्तरपदादौपम्ये । उपमानवाचिपूर्वपदादुरूत्तरपदादूः । उपमीयतेऽनेन तदुपमानम् अधिकगुणविशिष्टमित्यर्थः । करभवत् ऊरू यस्याः सा करभोरूः । मणिबंधादाकनिष्ठं करस्य करभो बहिरित्यमरः ॥

तत्त्वदीपिका– उपमानवाचिपूर्वपदादिति । धात्रीकराभ्यांकरभोपमोरुरित्यत्र तु न करभशब्दस्योपमानवाचित्वेपि पूर्वपदत्वाभावात् ।

**मू०-संहितशफलक्षणवामसहितसहादेरनौपम्येऽपि ॥** संहितोरूः । शफोरूः । लक्षणोरूः । वामोरूः । सहितोरूः सहोरूः ।

**सुबोधिनी**-संहितशफलक्षणवामसहितसहादेरनौपम्येपि । संहितादिपूर्वपदादुरूत्तरपदान्नाम्नः स्त्रियामूः स्यात् । उपमीयते अनयेत्युपमा तस्या भाव औपम्यं न औपम्यम् अनौपम्यं तस्मिन् । संहितौ मिलितौ ऊरू यस्याः सा संहितोरूः । शफाविव ऊरू यस्याः सा शफोरूः । शफं क्लीबे खुरः पुमानित्यमरेण क्लीबत्वमुक्तं तथाऽपि कोशांतरे पुंस्त्वं । शफःखुरे गवादीनां मूले विटपिनामपीति हेमचंद्रः । लक्षणमस्त्यस्मिन् स लक्षणः अस्त्यर्थे अप्रत्ययः । लक्षणौ ऊरू यस्याः सा लक्षणोरूः । वामौ सुंदरौ ऊरू यस्याः सा वामोरूः । हितेन सह सहितौ । सहितौ ऊरू यस्याः सा सहितोरूः।सहेते इति सहौ ऊरू यस्याः सा सहोरूः॥

**तत्त्वदीपिका**-शफोरूरिति । शफौ खुरौ ताविव संश्लिष्टत्वादुपचारः । यद्यपि शफं क्लीबे खुरः पुमानित्यमरस्तथापि शफशब्दस्य पुंस्त्वमपि बहुसंमतम् । शफः खुरे गवादीनां मूले विटपिनामपि इति हेमचंद्रकोशाच्च ।

**मू०-नृनरयोर्वृद्धिश्च ॥** नारी ।

**सुबोधिनी**-नृनरयोर्वृद्धिश्च । नृशब्दात् ऋणईबिति ईपिप्राप्ते नरशब्दात् जातिलक्षणे ईपि प्राप्ते वृद्ध्यर्थं वचनं । नुर्नरस्य वा स्त्री नारी ।

**तत्त्वदीपिका**-नृनरयोरिति। ईप्शब्दात् ऋणईबित्यनने नरशब्दात्तु जातिलक्षण एव। ननु नरशब्दोऽन्त्याकारस्य षष्ठीनिर्दिष्टत्वात् वृद्धिरस्त्विति वाच्यं न चांत्यवृद्धिर्विफला लोपं बाधित्वा प्रवृत्तेः । उच्यते नरस्य अः नरः हलादित्वाल्लोपः ना च नरश्च नृनरौ तयोरित्यर्थः । प्रक्षेपसामर्थ्यान्नान्त्याकारो गृह्यते ।

**मू०-यूनस्तिः ॥** युवन्शब्दात् स्त्रियान्तिः । युवतिः । इति स्त्रीप्रत्ययाः॥

**सुबोधिनी**-यूनस्तिः । ऋणईबित्यस्याऽपवादः । नाम्नो न इति सूत्रे केचित् स्यादौ रसेइत्यनुवर्तयंति तन्मते युवन्शब्दात्तिप्रत्यये नलोपः कथं स्यात् स्यादीनां रसस्य यत्वाभावात् । उच्यते । त् इः इति च्छेदः कर्तव्यः । युवन्शब्दात्स्त्रियामिप्रत्ययो यूनोंत्यस्य तादेशश्चेति । कथं तर्हि युवतीकरनिर्मथितमिति प्रयोगः । यौति मिश्रीकरोति पत्या सहेति यौतेः शत्रंतात् ऋन्नितः इति ईपि कृते बोध्यः । अत्रापि अनुपसर्जनादिति वक्तव्यं । गौणे तु बहवो युवानो यस्यां बहुयुवा पूः । स्त्रीप्रत्ययांतेभ्यः शब्देभ्यः प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमिति परिभाषया स्याद्युत्पत्तिर्बोध्या ॥

॥ इति स्त्रीप्रत्ययाः ॥

**तत्त्वदीपिका**- यूनस्तिरिति । वसांरस इत्यतो रसइत्यनुवृत्तेरस्यादावपि रसे न लोपः । यद्वात इइति च्छित्त्वा युवन्शब्दस्य तादेश इश्च प्रत्ययः स्त्रियामित्यर्थो वाच्यः । युवतीति तु यौतेः शत्रंतादीपि बोध्यम् ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा ॥
कृतायामिह टीकायां स्त्रीप्रत्ययविचारणम् ॥ १ ॥

॥ इति स्त्रीप्रत्ययविवरणम् ॥

## अथ कारकप्रकरणम् ॥

**मू०–लिंगार्थेप्रथमा ॥** नामार्थमात्रे लिंगमात्राधिक्ये च प्रथमाविभक्तिः । नियतोपस्थितिको नामार्थः । उच्चैः । नीचैः । कृष्णः । श्रीः।ज्ञानं । द्रोणः । खारी । आढकं । एकः। द्वौ । बहवः । अलिंगा नियतलिंगाश्च नामार्थमात्र इत्यस्योदाहरणम्। अनियतलिंगास्तु लिंगामात्राधिका इत्यस्य।तटः। तटी।तटम्।

सुबोधिनी-अथ कारकप्रकरणम्। स्यादयः प्रत्यया नाम्नो विहितास्तेषामर्थविशेषे व्यवस्थां दर्शयितुमारभते । लिंगार्थे प्रथमा । लिंगं च अर्थश्चानयोः समाहारो लिंगार्थं तस्मिन् लिंगार्थे । अर्थे । प्रथमेत्युक्तौ कस्यार्थे इत्याकांक्षायां यस्मान्नाम्नः स्यादिर्विभक्तिर्विहिता तस्य नाम्नोऽर्थे एवेति नामार्थमात्रम्। मात्रं कात्स्न्र्येऽवधारणे इत्यमरः। तत्र प्रथमाविभक्तिर्भवति ।-स को नामार्थः । नियतोपस्थितिकः । नियतोपस्थितिर्यस्य स नियतोपस्थितिकः। यस्मिन् नाम्नि उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स नियतोपस्थितिको नामार्थः । स एव शक्य इत्युच्यते । अनियतलिंगग्रहणार्थं लिंगमिति । लिंगे लिंगमात्राधिक्येऽपि प्रथमा । यद्यपि लिंगमात्र इत्येवाक्षरार्थस्तथाऽपि नामार्थं विना लिंगादिप्रतीतेरसंभवादाधिक्यइत्युक्तम्। प्रथमादयः सप्तम्यंताः प्राचां संज्ञास्ताभिरिहापि व्यवहारः । ननु सिंहो माणवक इत्यादौ प्रथमा न स्यात् । उच्यते । शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्तौ सत्यां पश्चात्पदांतरसमभिहारो लक्ष्यार्थबोधोऽस्तीति । ननु वीरः पुरुष इत्यादौ प्रथमा न स्यात् । वीरोऽभिन्नः पुरुष इत्यभेदसंसर्गस्याधिकस्य भानात् । उच्यते । अत्र पदसंस्कारपक्षाभ्युपगमोऽस्ति । ततोंतरंगत्वात् प्रथमप्रवृत्तपदसंस्कारेण प्रथमारूपे कृते पश्चाद्बहिरंगत्वात् अभेदसंसर्गो वाक्यार्थः कर्तव्य इति। नास्ति लिंगं येषां ते अलिंगाः । नियतं निश्चितं लिंगं येषां ते नियतलिंगाइति । उभयेषां नामार्थमात्रे उदाहरणं यथा । उच्चैरिह । पदत्वाद्विसर्गसिद्धिः । किं चास्य प्रथमान्तत्वात् संग्राम उच्चैस्तव संग्राम उच्चैस्ते इति । विद्यमानपूर्वादितिसूत्रेण ते मे आदेशयोर्विकल्पसिद्धिरपि फलम् । कृष्णः । अयं नीलद्रव्येऽनियतलिंगस्तथाऽपि वासुदेवे नियतलिंगः । ज्ञायते तत् ज्ञानम्। भावे युट् । खारी द्रोण आढकमित्यत्रापि नामार्थे एव प्रथमा। परिमाणार्थस्य नियतज्ञानात् । द्रोणो व्रीहिरित्यत्र तु द्रोणपरिच्छिन्नोऽभिन्नो व्रीहिरित्यभेदान्वयः । नामार्थयोरभेदान्वयस्य व्युत्पन्नत्वात् । ननु एको द्वौ बहव इत्यत्र नाम्नैव संख्याया अभिधानात् प्रथमा न स्यात् । उच्यते। न केवला प्रकृतिः प्रयोक्तव्या नाऽपि केवलः प्रत्यय इति नियमात् प्रथमोत्पत्तिर्बोध्या । अनियतं लिंगं येषां ते अनियतलिंगास्तेषामनियतलिंगमेवेति लिंगमात्रम् । अधिकस्य भाव आधिक्यं ।लिंगमात्रस्य आधिक्यं लिंगमात्राधिक्यं तस्मिन् उदाहरणं बोध्यं । किंच भाष्यकारमते पंचकः प्रातिपदिकार्थः स्वार्थद्रव्यलिंगसंख्याकारकाणि इति । यथा दधि मध्वित्यादौ विनाऽपि विभक्तिं प्रातिपदिकादेव तावतामर्थानां प्रतीतेः । कैय्यटमते आदितश्चतुष्कं प्रातिपदिकार्थः । वृत्तिकारमते आदितस्त्रिकं प्रातिपदिकार्थः । संख्य.कर्मादयस्तु विभक्त्यर्था इति । आदितो द्विकं प्रातिपदिकार्थइत्यन्ये । लिंगमात्रादिवाच्यमित्युक्तत्वात् । तत्र स्वार्थो विशेषणं द्रव्यं विशेष्यं द्रव्यगुणक्रियासन्निधाने द्रव्यवाचकस्यैव प्राधान्यमित्युक्तत्वाल्लिंगं स्त्रीत्वादि । संख्या एकत्वादि । कारकं कर्मादि ।

**तत्त्वदीपिका**–लिंगार्थे प्रथमेति । लिंगं च अर्थश्च लिंगार्थं तस्मिन् लिंगार्थे। लिंगे अर्थे च प्रथमेत्यर्थः॥ कस्यार्थे इत्याकांक्षायां यस्मात्स्यादिविभक्तिस्तस्यार्थे स्यादयश्चनाम्नो विधीयन्ते अतो नामार्थे इति लब्धमेव । नामार्थमाह । नियतोपस्थितिकइति । नियताउपस्थितिर्यस्य सः। यस्मान्नाम्नो योर्थो नियमेन भासते स तस्यार्थः नियतत्वलाभश्च । आमंत्रणइति सूत्रारंभात् । नामार्थ एव द्विविधं तं दर्शयति अलिंगा इत्यादि । नालिंगा संख्या इत्यर्थः । प्रथमे उदाहरणमव्ययम् । द्वितीये उदाहरणं कृष्ण इत्यादि । यद्यपि नीलरूपवत्परोयमानियतलिंगस्तथापि वासुदेवे भगवति नियतलिंगमेवेति भावात् कृष्णादौ लिंगमेव नामार्थस्तस्य नियमेन भावात् तदादौ तु लिंगं नामार्थव्यतिरेके नास्तीति लिंगमात्राधिक्ये नामार्थे प्रथमाविधानात् । कारकसंबंधयोस्तु नाम्नोनियतमानाभावान्न तयोराधिक्ये प्रथमा । यदि त्वर्थशब्दो वृत्तिपरः वृत्तिस्तु शक्तिर्लक्षणा । गौणी तु लक्षणान्तर्भूता पृथग्वास्तु। त्रिकं च नामार्थ इत्याश्रीयते तदा लिंगे इत्यपि मास्तु । लक्ष्याणां विचित्रत्वेऽपि न क्षतिः॥ नियमांशत्यागात् । शक्यं लक्ष्यं गौणं च पुंलिंगम् स्त्रीलिंगम् नपुंसकलिंगम् च लक्ष्यमिति वैचित्र्यम् । शक्य एवेति नियमस्य पुंस्त्वादिना लिंगस्य वाच्यतेति नियमस्य च त्यागात् । लिंगत्वेनैव लिंगस्य वाच्यताभ्युपगमात् । खारीत्यादि परिमाणमपि नामार्थ एव नियमेन लाभात् । एक इत्यादि संख्यास्तु नाम्नैवाभिधानात्तदभिधायिका प्रथमा न इति चेत्सत्यं । न केवला प्रकृतिः प्रयोक्तव्येति नियमात् । अन्यप्रयोगेष्वेषोन्वयः स्यादिति अनुवादकप्रयोगस्यैव न्याय्यत्वात् । ननु कृष्ण इत्यादावस्तीत्यध्याहारेणान्योक्ते प्रथमेत्यनेनैव सिद्धे किमेतेनेति चेत्सत्यम्। अध्याहारे गौरवात्। शुक्लोयं न पीत इत्यादौ स विशेषणवाक्येऽध्याहारस्यानावश्यकत्वाच्च। ननु तस्मात्सिऔजसिति सूत्रेणैव विभक्तिविधानात्किं कारकप्रकरणेनेति चेत्सत्यम् । सिद्धे सत्यारंभो नियमार्थः । स च द्विविधः विभक्तिनियमोर्थनियमश्च । आद्ये नामार्थ एव प्रथमा । कार्य एव द्वितीया । कारण एव तृतीयेत्यादि । अत्र पक्षेऽव्ययेभ्यो न प्राप्तिः । द्वितीये तु नामार्थे प्रथमैव कार्येद्वितीयैवेत्यादि अत्र पक्षेऽव्ययेभ्योपि भवंति ।

**मू०–आमंत्रणेच ॥ आभिमुखीकरणे प्रथमा । हेदेव । हेदेवौ । हेदेवाः ।**

**सुबोधिनी**–आमंत्रणेच । संबोधनाऽधिक्येऽप्राप्तौ वचनम्। आमंत्र्यते प्रसन्नः क्रियते अनेनेति करणे युट् । अनभिमुखोऽभिमुखः क्रियते अनेनेत्यभिमुखीकरणमनुकूलकरणं । तत्र प्रथमा भवति । देव मां पाहीति वाक्ये देवसंबंधिसंबोधनविषयो मत्कर्मकरक्षणाक्रियेति बोधः 'संबोधनपदं यच्च तत्क्रियायां विशेषणम् ' इत्युक्तत्वादिह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति ।

**तत्त्वदीपिका**–आमंत्रणेति । आमंत्रणमभिमुखीकरणमनुकूलकरणमिति यावत् । आमंत्र्यते प्रसन्नः क्रियतेऽनेनेति साधने युट् । इह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणमिति सिद्धांतः । संबोधनपदं यच्च तत् क्रियायाः विशेषणमित्युक्तत्वात् । एवं देव मां पाहीति वाक्यस्य देवसंबंधिसंबोधनविषयकमत्कर्मकं रक्षणमर्थः ।

**मू०–भोस्भगोस्अघोस्भवद्भगवदघवतांवानिपात्याधौ ॥ भो हरे । भगो नमस्ते । अघो याहि । इति प्रथमा ।**

**सुबोधिनी**–भोस्भगोस्अघोस्भवद्भगवदघवतांवानिपात्याधौ । धिविषये एषां स्थाने एते निपात्यंते वा । हे भोः । हे भवन् । हे पूज्येत्यर्थः । हे भगोः । हे भगवन् । हे ज्ञानिन्नित्यर्थः । हे अघोः । हे अघवन् । हे पापिष्ठेत्यर्थः । भोसइत्यनेन विसर्गलोपः । भो हरे । इति प्रथमा ॥

**तत्त्वदीपिका**– भोस्भगोस्इत्यादि । योग्यताबलाद्भवदादयः स्थानिन आक्षिप्यंते । इति प्रथमा ।

**मू०-शेषाःकार्यैकर्तृसाधनयोर्दानपात्रेविश्लेषावधौसंबंधाधारभावयोः ॥** द्वितीयाद्या विभक्तय एष्वर्थेषु भवंति । कार्ये कर्मकारके द्वितीया । कटं करोति कारूकी रूपं पश्यति चाक्षुषः ॥ राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥

सुबोधिनी–शेषाःकार्यैकर्तृसाधनयोर्दानपात्रेविश्लेषावधौसंबंधाधारभावयोः । शिष्यंते इतिशेषाः । कर्मणि घञ् प्रत्ययः । प्रथमायाः शेषाः अन्याः षड्विभक्तयस्ताः । कार्यादिषु षट्सु यथाक्रमं प्रवर्तंत इत्यर्थः । कार्ये द्वितीया क्रियते । कर्त्रा स्वक्रियया निष्पाद्यते यत् कार्यम् । धातूपात्तफलायेत्यर्थः । तस्मिन्ननुक्ते कार्ये कर्मणि द्वितीया स्यात् । उक्ते कर्मणि तु प्रथमैव । उक्तं त्वाख्यातकृत्तद्धितसमासनिपातैर्भवति । आख्यातोक्ते हरिः सेव्यते । कृदुक्ते लक्ष्म्या सेवितो हरिः । तद्धितोक्ते शतेन क्रीतः शत्यः । कारकात्क्रियायुक्ते इति शेषः । समासोक्ते प्राप्त आनंदो यं स प्राप्तानंदः । निपातोक्ते विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमिति ॥ कटं करोति कारूको रूपं पश्यति चाक्षुषः ॥ राज्यं प्राप्नोति धर्मिष्ठः सोमं सुनोति सोमपाः ॥ १ ॥ अत्र सर्वत्राख्यातेनानुक्ते कर्मणि द्वितीया । कारूकः पुमान् कटं करोति कटनिष्ठोत्पत्त्यनुकूला एककर्तृका वर्तमाना करोतिक्रियेति शाब्दबोधः । चक्षुषा पश्यतीति चाक्षुषः पुमान् । कारकादित्यन् । रूपं पश्यति । रूपनिष्ठसाक्षात्कारोत्पत्त्यनुकूला एककर्तृका वर्तमाना दृशिक्रिया । धर्मोऽस्त्यस्येति धर्मी अस्त्यर्थे इन् अतिशयेन धर्मीति इष्ठप्रत्ययः धर्मिष्ठः पुमान् । राज्ञः कर्मेति राज्यं प्राप्नोति । राज्यनिष्ठोत्पत्त्यनुकूला एककर्तृका वर्तमाना प्राप्नोतीति क्रिया । सोमं पिबतीति सोमपाः पुरुषः । सोमममृतवल्लीं सुनोति खंडयतीत्यर्थः । सोमनिष्ठखंडनोत्पत्त्यनुकूला एककर्तृका वर्तमाना सुनोतिक्रियेति । क्रियाप्रधानमाख्यातमिति सिद्धांतात् क्रियाविशेष्यकः शाब्दबोधः कर्तव्यः । यास्कोप्याह । भावप्रधानमाख्यातं सत्वप्रधानानि नामानीति । पश्य मृगोधावतीत्यादौ तु मृगकर्तृकगमनं दृशिक्रियां कर्म प्रधानं तु दृशिक्रियैव । उक्तं च । सुबंतं हि यथाऽनेकं तिङंतस्य विशेषणम् ॥ तथा तिङतमप्याहुस्तिङंतस्य विशेषणमिति ॥ १ ॥ ननु उक्ते कर्मणि प्रथमेत्युक्तं तेन पक्वमोदनं भुंक्ते इत्यत्र द्वितीया न स्यात् कृत्प्रत्ययेन कर्मण उक्तत्वात् । उच्यते । इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती तत्रप्रधानीभूतभुजिक्रियानिरूपितामनुक्तां शक्तिमादाय द्वितीयोत्पत्तिर्भवतीति । उक्तं च हरिणा । "प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् । शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥ १ ॥ प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ॥ यदा गुणे तदा तद्वदनुक्ताऽपि प्रतीयते ॥ २ ॥ "अत एव पक्वोदनो भुज्यते देवदत्तेनेत्यत्र भुजिप्रत्ययेन उक्ते कर्मणि प्रथमैव भवति । पचेरप्राधान्यात् ॥ अथ प्रसंगात्पाणिनिसूत्राणि लिख्यंते ॥ अकथितं च । अपादानादिविशेषैरनुक्तं कारकं कर्मसंज्ञं स्यात् । "दुह्याच् पच् दंड् रुधि प्रच्छि चि ब्रू शासु जि मथ् मुषाम् ॥ कर्मयुक् स्यादकथितं तथा स्यान्नीहकृष्वहाम् ॥ १ ॥" दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म ज्ञेयम् । कर्मणा युज्यते इति कर्मयुक् । किंवतम् । मुख्यकर्म्मणा सह क्रियया बध्यमानमपादानादिविशेषैरकथितं यत्कारकं तत्कर्मसंज्ञकं भवतीत्यर्थः । एतेन दुहादीनां द्विकर्मकत्वमुक्तम् । दुह प्रपूरणे । गां दोग्धि पयः सइत्यत्र पयःकर्मकं गोसंबंधि दोहनमर्थः । पयोत्र मुख्यं कर्म । धातूपात्तफलाश्रयत्वात् । गोस्तु पयसो निमित्ततामात्रेणोपात्ता

नत्वत्राधिभावेनेत्यपादानसंज्ञाया अप्रवृत्तेरनेन कर्मसंज्ञा । विवक्षायां त्वपादानादिसंज्ञा भवंत्येव । विवक्षातः कारकविभक्तयो नाना भवंतीति शाब्दिका इत्युक्तत्वात् । गोदोग्धि पयः स इति । टुयाचृ याच्ञायाम् । बलिं याचते वसुधां हरिः । अत्र प्रार्थनार्थस्य याचतेर्वसुधा मुख्यं कर्म तेन कर्मणा युक्तो बलिः तस्यापादानत्वाविवक्षायामनेन कर्मसंज्ञा ॥ अपादानविवक्षायां तु बलेर्याचते वसुधामिति । अविनीतं विनयं याचते सः अविनीतं विनयायाऽनुनयतीत्यर्थः । अविनीतमिति मुख्यं कर्म विनयस्य तादर्थ्याविवक्षायामनेन कर्मसंज्ञा ॥ विवक्षायां तु अविनीतं विनयाय याचते । डुपचष् पाके । तंडुलानोदनं पचति सः । ओदनं निर्वर्तयतीत्यर्थः । ओदनमिति मुख्यं कर्म । करणत्वाविवक्षायां तंडुलानित्यत्रानेन कर्मसंज्ञाविवक्षायां तु तंडुलैरोदनं पचतीति । दंड दंडग्रहणे चुरादिः । गर्गान् शतं दंडयति सः । शतमिति मुख्यं कर्म्म । गर्गानित्यत्रत्वपादानत्वाविवक्षायामनेन कर्म्मसंज्ञा । विवक्षायां तु गर्गेभ्यः शतं दंडयतीति । रुधिर् आवरणे । व्रजमवरुणद्धि गां सः । गामिति मुख्यं कर्म्म व्रजमित्यत्र त्वधिकरणत्वाविवक्षायामनेन कर्म्मसंज्ञा ॥ विवक्षायां तु व्रजेऽवरुणद्धि गामिति । प्रच्छ ज्ञीप्सायाम् । माणवकं पंथानं पृच्छति सः । पंथानमिति मुख्यं कर्म तादर्थ्याविवक्षायां तु माणवकमित्यत्रानेन कर्म्मसंज्ञा । विवक्षायां तु माणवकाय पंथानं पृच्छति । चिञ् चयने । वृक्षमवचिनोति फलानि सः । फलानीति मुख्यं कर्म्म वृक्षमित्यत्रापादानत्वविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु वृक्षादवचिनोति फलानीति । ब्रूञ् व्यक्तायां वाचि । शासु अनुशिष्टौ माणवकं धर्म्मं ब्रूते सः । धर्ममिति मुख्यं कर्म्म माणवकमित्यत्र तु तादर्थ्याविवक्षायामनेन कर्म्मसंज्ञा । विवक्षायां तु माणवकाय धर्म्मं ब्रूते शास्तीति वा । जि जये । शतंजयति देवदत्तं सः । शतमिति मुख्यं कर्म देवदत्तमित्यत्र त्वपादानत्वाऽविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु शतं जयति देवदत्तात्सः । मंथ विलोडने । सुधां क्षीरनिधिं मथ्नाति हरिः । सुधामिति मुख्यं कर्म्म क्षीरनिधिमित्यत्राधिकरणत्वाविवक्षायामनेन कर्म्मसंज्ञा । विवक्षायां तु सुधां क्षीरनिधौ मथ्नाति । मुष स्तेये देवदत्तं शतं मुष्णाति । शतमिति मुख्यं कर्म्म देवदत्तमित्यत्रापादानत्वाविवक्षायामनेन कर्म्मसंज्ञा । विवक्षायां तु देवदत्ताच्छतं मुष्णाति सः । णीञ् प्रापणे । हृञ् हरणे । कृष् विलेखने । वह प्रापणे । ग्राममजां नयति सः । एवं हरतीत्यादि । अजामिति मुख्यं कर्म्म ग्राममित्यत्र त्वधिकरणत्वाविवक्षायामनेन कर्मसंज्ञा । विवक्षायां तु ग्रामेऽजां नयति हरति कर्षति वहति वेति । एतदर्थका धातवोऽन्येपि संज्ञेयाः । माणवकं धर्म्मं भाषते अभिधत्ते वक्तीत्यादि । अकर्मकधातुभिर्योगे देशः कालो भावो गंतव्योऽध्वा च कर्मसंज्ञक इति वाच्यम् । कुरून् स्वपिति । मासमास्ते । गोदोहमास्ते । क्रोशमास्ते । गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्त्ता सणौ । गत्याद्यर्थानां शब्दकर्म्मकाणामकर्मकाणां च धातूनामणौ यः कर्ता स णौ कर्म स्यात् । प्रत्यवसानं भक्षणं । शब्दः कर्म कारकं येषां ते शब्दकर्मकाः । अनुत्पन्ने ञिप्रत्यये शुद्धधातुवाच्यां क्रियां प्रति यः कर्ता स ञिप्रत्ययांतः धातुवाच्यां क्रियां प्रति कर्मसंज्ञः स्यादित्यर्थः । यथा "शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयत् । आशयच्चामृतं देवान् वेदमध्यापयद्विधिम् ॥ १ ॥ आसयत्सलिले पृथ्वीं यः स मे श्रीहरिर्गतिः ॥" गत्यर्थे यथा । शत्रवः स्वर्गमगच्छन् । तान् शत्रून् श्रीहरिः स्वर्गमगमयदिति । गमेरञिप्रत्ययांतावस्थायां शत्रवः कर्तारस्ते ञ्यंतावस्थायां कर्माभवन् ॥

स्वर्गकर्मकं शत्रुनिष्ठं यद्गमनम् तदनुकूलो हरिकर्तृकश्चिरातीतो व्यापारः । बुद्ध्यर्थो यथा । स्वे स्वकीयाः । वेदार्थमविदुस्तान् स्वान् श्रीहरिर्वेदार्थमवेदयत् । विदेरण्यंतावस्थायां स्वे कर्तारस्ते ण्यंतावस्थायां कर्माऽभवन् । देवा अमृतमाश्नन् तान् देवान् श्रीहरिरमृतमाशयत् । अशेरण्यंतावस्थायां देवाः कर्तारस्ते ण्यंतावस्थायां कर्माभवन् । विधिर्वेदमध्यैत तं ब्रह्माणं श्रीहरिर्वेदमध्यापयदपाठयदित्यर्थः । अण्यंतावस्थायां विधिः कर्ता स ण्यंतावस्थायां कर्माभवत् । पृथ्वी सलिले जले आस्त । तां पृथ्वीं श्रीहरिः सलिले आसयत् स्थापयतिस्म । आसेरण्यंतावस्थायां पृथ्वी कर्त्री सा ण्यंतावस्थायां कर्माभवत् । स श्रीहरिर्मे मम गतिः स्यादित्यन्वयः ॥ इति द्वितीया ॥

तत्त्वदीपिका— शेषाःकार्येइत्यादि । शिष्यंत इति शेषाः कर्मणि घञ् । उक्तायाः प्रथमायाः अन्याः षड्विभक्तयः शेषाः द्वितीयाद्या इति यावत् । कार्यादियोऽर्थाश्च षड्भिःपदैर्निर्दिष्टास्तेषां यथाक्रमं प्रवृत्तिः तत्र प्रथमानिर्दिष्टमाह । कार्येइति । क्रियते कर्त्ता प्रवर्त्तते यष्टा स्वव्यापारणे यागं स्वर्गं च साधयति । तदाश्रये च द्वितीया तत्संबंधात् द्वितीयावाच्यस्त्वाश्रय एव न तु फलं तस्य धातुनैव लाभात् । अनन्यलभ्यस्य शब्दार्थत्वात् । वाच्यतावच्छेदकत्वाश्रयत्वमतएव नाश्रयत्वं वाच्यम् । आश्रयत्वस्य वाच्यतावच्छेदकत्वे गौरवात् । तच्च कर्म द्विविधम् । ईप्सितमनीप्सितं च तत्रेप्सितं त्रिविविधं । निर्वर्त्यं विकार्यं प्राप्यं च । अनीप्सितं तु चतुर्विधम् । औदासीन्येन प्राप्यं द्वेष्यं संज्ञान्तरैरनाख्यातं अन्यपूर्वकं चेति । तत्र निर्वर्त्यं यथापूर्वमनुत्पन्नमेवोत्पद्यते । सदवस्थात्वात्प्रकटीभवति । ततः विकार्यं तु द्विविधं । प्रकृत्युच्छेदसंभूतं गुणांतरोत्पत्त्यावा । कटं करोतीत्यादि । कटं पूर्वमसंतमुत्पादयतीत्यर्थः । रूपं पश्यतीति प्राप्यं । चाक्षुषइति । प्रशस्तचक्षुरस्यास्तीति चाक्षुषः प्रशंसायां मत्वर्थीयोऽण् । राज्यं प्राप्नोतीति संस्कार्यं पृथगिच्छतीतिसंस्कार्यं । कर्म । सोमं सुनोतीति गुणांतरोत्पत्त्याविकार्यं । अन्यदप्युदाह्रियते । प्रकृत्युच्छेदसंभूतविकार्यं यथा प्रकृतेः प्रकृतिभूतस्यात्मनः उच्छेदसंभूतं तद्यथा काष्ठं भस्म करोति । औदासीन्यं तु तृणं स्पृशति । द्वेष्यं तु विषं भुंक्ते । संज्ञांतरैरनाख्यातं यथा गां दोग्धि पयः । अन्यपूर्वकं यथा । क्रूरमभिक्रुध्यति । अक्षानुदीव्यति । ईप्सितानीप्सितयोः शाब्दबोधस्त्वेक एव । ईप्सितत्वादेस्तत्र मानाभावात् । कटंकरोतीति कारूक इत्यस्य कटनिष्ठोत्पत्त्यनुकूल एककारूकाभिन्नाश्रयको वर्तमानो व्यापारः । विषंभुंक्ते इत्यत्रगलादधोदेशसंयोगस्यानुकूल एकाश्रयक व्यापारः । इत्यादावीप्सितानीप्सतयोरभानादेकरूपएव शाब्दबोधः । एवं च कर्मशब्दस्य यौगिकत्वादेवासिद्धे कर्मसंज्ञाविधायकानि नानासूत्राणि न कृतानि । कर्मणि द्वितीयेत्यस्य फलनिरूपिताश्रये सर्वत्र द्वितीयायाः सिद्धत्वात् । असत्कार्यवादे तु निर्वर्त्यस्य कर्मकारकत्वात्प्राप्तिः । तस्यासत्त्वादेव फलाश्रयत्वानुपपत्तेः क्रियाजनकत्वाभावात्कारकत्वानुपपत्तेश्च । क्रियां कुर्वत् हि कारकमिति सिद्धांतत्वात् । इति द्वितीया ।

**मू०–कर्तरिकरणेचतृतीया ॥ भिन्नश्शरेण रामेण रावणो लोकरावणः ॥ कराग्रेण विदीर्णोऽपि वानरैर्युध्यते पुनः ॥**

सुबोधिनी–कर्तरिकरणेचतृतीया । क्रियां करोति स कर्ता धातूपात्तव्यापाराश्रय इत्यर्थः । उक्तं च । "धातुनोक्तक्रिये नित्यं कारके कर्तृतेष्यते" इति व्यापाराश्रयः कर्तेत्युक्तम् । व्यापारो धातुवाच्य आश्रयस्तृतीयावाच्योऽनन्यलभ्यत्वात् । स त्रिविधः । स्वतंत्रः प्रयोजकः कर्मकर्ता चेति । क्रियासाध्यतेनेनेति साधनं क्रियासिद्ध्युपकारकमित्यर्थः । तदेवकरणं अत्र तृतीयाया । व्यापार आश्रयश्च पृथग्वाच्यौ तत्र सर्वत्र प्रकृत्यर्थ आश्रये अभेदेन संसर्गेण विशेषणं व्यापारस्तु भावनायां विशेषणं भवति । उक्तं च "क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनंतरम् ॥ विवक्ष्यते यदा यत्र तत्तत्र करणं स्मृतम् ॥१॥" तत्रानुक्ते कर्तरि करणे च

तृतीया विभक्तिर्भवति । रामेण कर्त्रा शरेण करणेन रावणो भिन्नः । कीदृशः । लोकान् रावयतीति लोकरावणः । भिदेः कर्म्मणि क्तः । यद्यपि क्रियां प्रति कारकाणां विशेषणतैव तथापि कृदुक्तानां कारकाणां विशेष्यतैव ज्ञेया । सत्त्वप्रधानानि नामानीत्युक्तत्वात् । रामनिष्ठो यो व्यापारो धनुराकर्षणादिस्तत्प्रेरितो यो बाणस्तदभिन्नाश्रयको यो व्यापारः शरीरभेदनादिस्तत्साध्यः प्राणवियोगाश्रयो रावण इत्यर्थः । रावणं हंति, रावणो हन्यते इत्यत्र तु क्रियाविशेष्यकः शाब्दबोधः । भावप्रधानमाख्यातमित्युक्तत्वात् । रावणनिष्ठो यः प्राणवियोगः शरभिन्नाश्रयशरीरभेदनादिव्यापारसाध्यसाधनानुकूलो रामनिष्ठधनुराकर्षणादिव्यापार इत्यर्थः । अनुक्ते कर्तरि किं । हरिः करोति पाचकः । कर्तरि वुण् । तद्धितोक्ते शाब्दिकः इकः प्रत्ययः । समासोक्ते कृतं विश्वं येन स कृतविश्वः । अनुक्ते करणे किम् । जीवंत्यनेनेति जीवनः । करणे युट् प्रत्ययः ॥ इति तृतीया ॥

**तत्त्वदीपिका—कर्त्तरिकरणेचेति** । क्रियां करोतीति । कर्त्ता धातूपात्तव्यापाराश्रयः। यदा यदीयो व्यापारो धातुनोपादीयते तदा स कर्ता । काष्ठानि पचंति । आविक्लित्तेः सम्यक् ज्वलंतीत्यर्थः । अग्निः पचति। सम्यक् पाचयतीत्यर्थः । स्थालीं पचति । स्वस्मिन्समवेशयतीत्यर्थः । तत्र व्यापारस्य धातुनैव लाभादाश्रयमात्रं तृतीयावाच्यम् । अनन्यलभ्यस्य शब्दार्थत्वात् । स च त्रिविधः स्वतंत्रः प्रयोजकः कर्मकर्त्ता चेति । तद्यथा । मया हरिः सेव्यते। कार्यते हरिणा । गमयति कृष्णं गोकुलं । मदभिन्नाश्रयको हरिकर्मकसेवानुकूलव्यापारः हर्यभिन्नाश्रयकमुत्पादनानुकूलो व्यापारः । गोकुलकर्मकगमनानुकूलकृष्णाश्रयकव्यापारानुकूलो व्यापार इति शब्दबोधः।क्रियासाध्यतेनेति साधनंक्रियासिद्ध्युपकारकम् । तदेव करणं व्यापारवत्कारककरणमविलंबेन क्रियोत्पादनं वा तत्र तृतीया तस्याश्च व्यापार आश्रयश्च पृथक् पृथक् वाच्यो भिन्नः शरेणेत्यादि । एकरामाश्रयको यो व्यापारस्तत्प्रेरितो यः शरस्तदभिन्नाश्रयको यो व्यापारः संयोगभेदनादिः।तत्साध्यो यः प्राणवियोगस्तदाश्रयो रावणः इत्यर्थः । इति तृतीया ।

**मू०—दानपात्रेच्चतुर्थी** ॥ वेदविदे गोंददाति ।

**सुबोधिनी**—दानपात्रेचतुर्थी । दीयते इति तद्दानं कर्मणि युट्! दानस्यपात्रं दानपात्रं दानयोग्यमित्यर्थः । योग्यभाजनयोः पात्रमित्यमरः । अस्य संप्रदानसंज्ञा । सम्यक् प्रदीयतेस्मै तत्संप्रदानं अपुनर्ग्रहणाय स्वत्वनिवृत्तिपूर्वकं यत् परस्वत्वोपपादनं तद्दानं अतएव रजकस्य वस्त्रं ददातीत्यादौ न चतुर्थी रजकस्येति संबंधे । ननु श्रोत्रियाय कन्यां ददातीत्यादौ चतुर्थी न स्यात् । स्वत्वत्यागाऽभावात् । उच्यते । स्वस्य भावः स्वत्वं आत्मत्वं आत्मीयत्वं ज्ञातित्वं धनत्वं च आत्मत्वात्मीयत्वयोस्त्यागो नास्तीति ज्ञातित्वस्य त्यागोस्ति परगोत्रप्रवेशाद्धनत्वस्य च त्यागः। अतोऽत्र परस्वत्वस्यापादानरूपं मुख्यं दानं तत्र दानपात्रे अनुक्ते संप्रदाने कारके चतुर्थी स्यात्। वेदं वेत्तीति वेदवित्तस्मै वेदविदे चैत्रो गां ददाति । अत्र चतुर्थ्यार्उद्देश्योर्थः। वेदविदुद्देश्यकगोनिष्ठस्वत्वत्यागानुकूल एककर्तृको वर्तमानो व्यापारः। अनुक्ते किम् । दानीयो विप्रः। दीयतेऽस्मै इतिदानीयो विप्रः। बाहुलकात्संप्रदाने अनीयप्रत्ययः।

**तत्त्वदीपिका**—दानपात्रे चतुर्थीति । दीयते इति दानं । कर्मणि युट् । दानस्य पात्रं योग्यमित्यर्थः । योग्यभाजनयोः पात्रमित्यमरः । वेदविदे गां ददाति । वेदविदुद्देश्यकगोनिष्ठो यः स्वत्वत्यागस्तदनुकूल एकाश्रयको वर्त्तमानव्यापार इत्यर्थः । तथा च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादानम् दानम् । खंडिकोपाध्यायस्तस्मै चपेटां ददातीत्यादौ तु उद्देशत्वाच्चतुर्थी श्रोत्रियाय कन्यां ददातीत्यत्र त्वात्मतात्मीयतयोरत्यागेपि परगोत्रत्वेन ज्ञातित्वस्यैव त्यागादिति वृद्धाः । परस्वत्वरूपस्य दानस्य च सत्वात् । स्वस्यभावः स्वत्वं स्वशब्दस्यार्थचतुष्टये आत्मात्मीयज्ञातिधनरूपे वृत्तेः ।

**मू०–क्रियायायमाप्नोतितत्रापिचतुर्थी** ॥ पत्ये शेते ।

**सुबोधिनी**–क्रियायायमाप्नोतितत्रापिचतुर्थी । क्रियया कर्ता यमाप्नोति संबंधादभिप्रैति तत्र चतुर्थी स्यात् । पत्ये शेते । शयनक्रियया पतिमभिप्रैति तदाभिमुख्येन शेते इत्यर्थः । राज्ञे करं ददाति । दानक्रियया राजानमभिप्रैति तदाभिमुख्येन ददातीत्यर्थः ॥ इति चतुर्थी ॥

**तत्त्वदीपिका**–पत्येशेतइति । पत्युद्देश्यकशयनानुकूल एकाश्रयको व्यापारः । इति चतुर्थी ।

**मू०–विश्लेषावधौपंचमी** ॥ विश्लेषो विभागस्तस्यावधौ पञ्चमी । हिमवतोऽवतरति गङ्गा । धावतोऽश्वात्पतत् ।

**सुबोधिनी**–विश्लेषावधौपंचमी । श्लेषणं श्लेषः संयोगः विगतो विरुद्धोवा श्लेषो विश्लेषः विश्लेषो विभागः । अवधीयते एकरूपतया ज्ञायते सोऽवधिः । विश्लेषस्याऽवधिर्विश्लेषावधिस्तस्मिन् विश्लेषावधौ । अस्याऽपादानसंज्ञा । उक्तं च हरिणा । अपाये यदुदासीनं चलं वा यदि वाचलम् । ध्रुवमेवातदावेशात्तदपादानमुच्यते " । अपाये विश्लेषे साध्ये सति ध्रुवमवधिभूतं कारकमतदावेशात् विश्लेषजनकक्रियाऽनावेशादपादानमुच्यते । कीदृशं । चलमचलमुदासीनं वेत्यर्थः । तत्रानुक्ते अपादानकारके पंचमी स्यात् । अत्र प्रकृत्यर्थः पंचम्यर्थेऽवधावभेदेन संसर्गेण विशेषणं प्रत्ययार्थोऽवधिस्तु क्रियायां विशेषणं भवति कारकाणां क्रिययैव संबंधात् । हिमवतः पर्वताद्गंगाऽवतरति । अत्रावतरणविशिष्टाया गंगाया विश्लेषावधिभूतो हिमवान् । हिमवदभिन्नावधिकनिःसारणानुकूलो गंगाभिन्नाश्रयको वर्तमानो व्यापारः । धावतोऽश्वाच्चैत्रः पतति । पतनक्रियाविशिष्टस्य चैत्रस्य विश्लेषावधिरश्वः । शीघ्रगत्यनुकूलव्यापाराश्रयोऽश्वस्तदभिन्नावधिकं चैत्रनिष्ठं पतनमित्यर्थः । अनुक्तेकिम् । उपाध्यायो विप्रः । उपसमीपेऽधीतेऽस्मादित्यपादाने घञ् । इति पंचमी ॥

**तत्त्वदीपिका**–विश्लेषेति । श्लेषणं श्लेषः संयोगः विगतः श्लेषो विश्लेषः । फलितार्थमाह । विभाग इति । अवधाविति । अवधीयते एकरूपतया ज्ञायते सोवधिः प्रकृतधातूपात्तागत्यनादिष्टे सति तज्जन्यविभागाश्रयः । हिमवत इति । हिमवदभिन्नावधिकनिस्सरणपूर्वकावतारणानुकूलगंगाभिन्नाश्रयको वर्तमानो व्यापारः । धावत इति । शीघ्रगत्यनुकूलो यो व्यापारस्तदाश्रयोऽश्वस्तदवधिकोऽधोदेशसंयोगानुकूल एकाश्रयकोऽतीतो व्यापारः । इह क्रियाविशिष्टस्याप्यश्वस्य प्रकृतधातूपात्तक्रियांप्रत्यवधित्वं न विरुध्यते । तथा परस्परान्मेषावपसरत इत्यत्र सृधातुना गतिद्वयस्याप्युपादानादेकमेषनिष्ठां गतिं प्रत्यपरस्य विश्लेषावधित्वमस्त्येव । मेषावधिको यः पूर्वदेशसंयोगस्तदनुकूलो मेषाभिन्नाश्रयको वर्तमानो व्यापारः । पर्वतात्पतितोऽश्वात्पतति चैत्रः । पर्वताभिन्नाश्रयावधिकोऽधोदेशसंयोगानुकूलो यो व्यापारस्तदाश्रयोऽश्वस्तदवधिको अधोदेशसंयोगानुकूल एकचैत्राभिन्नाश्रयको वर्तमानो व्यापारः । विश्लेषश्च क्वचिन्मानसोऽपि क्वचिदध्याहृतक्रियापेक्षयापि अधर्म्माज्जुगुप्सते स्वार्थाद्भ्रियत इत्यादौ मानसाधर्मविश्लेषाध्याहृतनिस्सरणक्रियापेक्षया विश्लेषयोरवधित्वस्य सत्त्वात् । इति पंचमी ।

**मू०–सम्बन्धेषष्ठी** ॥ राज्ञः पुरुषः ।

**सुबोधिनी**–संबंधे षष्ठी । विशेष्यविशेषणविश्लिष्टिः संबंधः । आह च एतौ संबंधौ इति प्रतीतिजनकः संबंधः समानार्थो न । नियतज्ञाऽभावात् । स संबंधो द्विविधः । क्रियाकारकसंबंधो द्रव्यगुणसंबंधश्चेति । क्रियाकारकसंबंधोपि द्विविधः । विशेषः सामान्यं चेति । तत्र विशेषे कर्मत्वादिरूपे संबंधेविहिताऽपवादभूता द्वितीयादयो विभक्तयः । सामान्यसंबंधे तु

षष्ठी । उक्तं च । संबंधः कारकेभ्योन्यः क्रियाकारकपूर्वकः ॥ श्रुतायामश्रुतायां च क्रियायां सोभिधीयते ॥ नटस्य शृणोति माषाणामश्नाति नटसंबंधिश्रवणानुकूल एककर्तृको व्यापारः । माषसंबंधिभोजनानुकूल एककर्तृको व्यापारः । विशेषाविवक्षायां तु नटेन गीतं शृणोति माषानश्नातीति । द्रव्यगुणसंबंधो यथा । राज्ञः पुरुषः । अत्र सेव्यसेवकरूपः । राज्ञः पुत्रः अत्र पितापुत्ररूपः । तंतूनां पटः । अवयवावयविरूपः । पटस्य रूपं । गुणगुणिरूपः । माषाणां राशिः । समूहसमूहिरूपः । कुरूणां राजा । पाल्यपालकरूपः । चैत्रस्य वाहनं । वाह्यवाहकरूपः । शब्दस्यार्थः । अत्र बोध्यबोधकरूपः । अग्नेर्धूमः । अत्र व्याप्यव्यापकरूपः । पटस्याभावः । अत्र प्रतियोग्यनुयोगिरूपः । उपगोरपत्यम् । अत्रापत्यापत्यवद्रूपः । कुशूलस्यान्नमत्राधाराधेयरूप इत्यादि । ननु संबंधस्योभयनिष्ठत्वात् कस्मात्षष्ठी । उच्यते । विशेषणात्षष्ठी भवति । उक्तं च " भेद्यभेदकयोः श्लिष्टः संबंधोन्योन्यमीक्ष्यते ॥ द्विष्ठो यद्यपि संबंधः षष्ठ्युत्पत्तिस्तु भेदकात् ॥ " भेद्यभेदकयोः स्वरूपं यथा । " परार्थे स्वार्थनिक्षेपादप्रधानं विशेषणं ॥ विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनात् ॥ " ननु शुक्लः पट इत्यत्रापि विशेषणे षष्ठी स्यात् । मैवं वद । विशेषणस्याभेदविवक्षातो न षष्ठी । विशेषणस्य भेदविवक्षायां तु षष्ठी भवत्येव । उक्तं च । "नाम्नो द्विधैव संबंधः सर्ववाक्येष्ववास्थितः॥ सामानाधिकरण्येन षष्ठ्या वापि क्वचिद्भवेत् ॥ " अत्र प्रकृत्यर्थः प्रत्ययार्थे संबंधे विशेषणं प्रत्ययार्थः । संबंधस्तु पुरुषे विशेषणं भवति । राज्ञः पुरुषः । राजनिरूपितसेवकत्वसंबंधवान्पुरुषः । ॥ इति षष्ठी ॥

तत्त्वदीपिका-संबंधे षष्ठीति । एतौ संबंधाविति प्रतीतिजनकः संबंधस्तत्र षष्ठीत्यर्थः । सच द्विविधः क्रियाकारकसंबंधद्रव्यगुणसंबंधभेदात् । आद्यो द्विविधः । सामान्यम् विशेषश्च । विशेषः कर्मत्वादिरूपस्तत्र द्वितीयादिरपवादः सामान्ये षष्ठी । तद्यथा । नटस्य शृणोति नटसंबंधिश्रवणानुकूलो वर्तमानो व्यापारः । विशेषे तु नटेन गीतं शृणोति नटभिन्नाश्रयको यो व्यापारस्तत्साध्यगीताभिन्नाश्रयं यत् ज्ञानतादि तदनुकूल एकभिन्नाश्रयो वर्तमानो व्यापारः । अन्त्यं दर्शयति । राज्ञ इति । राजसंबंधवान् पुरुष इत्यर्थः । संबंधश्चात्र सेव्यसेवकरूपः । एवमन्यत्राप्यूह्यम् । नन्वत्र संबंधस्योभयनिष्ठत्वात्कथं षष्ठी एकस्मात्कुतो वेति चेत्सत्यम् विशेषणस्याप्रधानत्वेन ततः षष्ठी राज्ञः पुरुष इत्यत्र प्रकृत्यर्थो विशेषणम् पुरुषस्तु नामार्थमात्रनिष्ठ एव प्रतिपाद्यते न विशेषणत्वेन । यदा तु विशेषणत्वेन विवक्षितस्तदा षष्ठी भवत्येव । पुरुषस्य राजेति । तथा परार्थे स्वार्थनिक्षेपादप्रधानम् विशेषणम् । विशेष्यं तु प्रधानं स्यात्स्वार्थस्यैव प्रकाशनादिति । शुक्लः पट इत्यत्र तु अभेदविवक्षणान्नषष्ठी । भेदविवक्षायामेव षष्ठीति विधानात् । राहोः शिर इत्यत्र तु सतोप्यभेदस्याविवक्षा । यथानुदरा कन्येति भेदवतो वस्तुनः असतोप्यभेदस्य विवक्षा यथा समुद्रः कुंडिका । जलाधिक्यात्कुंडिकायां समुद्रत्वम् अगस्त्यपेक्षया समुद्रस्यापि कुंडिकात्वम् । इति षष्ठी ।

**सू०-आधारे सप्तमी॥ औपश्लेषिकस्सामीपिकोऽभिव्यापको वैषयिको नैमित्तिक औपचारिकश्चेति षोढा सः । " कटे शेते कुमारोऽसौ वटे गावस्सुशेरते ॥ तिलेषु विद्यते तैलं हृदि ब्रह्मामृतम्परम् ॥ युद्धे संनह्यते धीरोंऽगुल्यग्रे करिणां शतम् । "**

सुबोधिनी-आधारे सप्तमी । आध्रियते क्रिया अस्मिन्नित्याधारः । संज्ञायामकर्तरि चेत्यधिकरणे घञ् । अधिकरणमित्यर्थः । स आधारः षड्विधः अस्येति षोढा । अन्यत्र सिद्धयोराधाराधेययोः प्रादेशिकः संबंध उपश्लेषः । उपउपरि श्लेषः उपश्लेषः उपश्लेषोऽस्यास्ती-

ति उपश्लेषे भव इति वा औपश्लेषिकः अइकौ च मत्वर्थ इतीकः । णितो वेति णित्वाद्वृद्धिः । भवार्थे इको वा । सामीप्यं सांनिध्यं । सामीप्ये भवः सामीप्यमस्यास्तीति वा सामीपिकः । केनेयका इतीकः अइकौचेति वा इकः । अपृथग्भिन्नप्रदेशवर्जितयोर्देशयोराधाराधेययोः । सर्वावयवसंबंधिकः । अभिव्यापकः अभितः सर्वतो व्याप्यते आधेयेनेत्यभिव्यापकः कर्म्मणि घञ् । ततः स्वार्थे कः । अन्यत्र भावो विषयः । विषये भवो वैषयिकः । केनेयेका इति कः । निमित्तं हेतुः । निमित्ते भवो नैमित्तिकः केनेयेका इति कः । निमित्तं फलं तदस्यास्तीति वा अइकौ चेतीकः । अन्यत्र विद्यमानस्य संबंधस्यान्यत्रारोपः उपचारः । उपचारे भवः औपचारिकः केनेयेका इतीकः उपचारोऽस्याऽस्तीति वा । अइकौ चेतीकः । अत्राधिकरणे कारके सप्तमी स्यात् । अत्र सप्तम्या आश्रयोऽर्थः । प्रकृत्यर्थस्त्वभेदेन संसर्गेणाश्रये विशेषणं आश्रयस्तु क्रियायां विशेषणं भवति । कारकाणां क्रिययैवान्वयात् । उक्तं च । " आश्रयोवधिरुद्देश्यः संबंधः शक्तिरेव वा ॥ यथायथं विभक्त्यर्था सिपां कर्मेति वाक्यतः ॥१॥ कर्मणि द्वितीया । कर्तृसाधनयोस्तृतीया । आधारे सप्तमी । नामाश्रयोर्थो निरूप्यभेदाच्चाभेदः । अवधिः पंचम्यर्थः । उद्देश्यः चतुर्थ्यर्थः । संबंधः षष्ठ्यर्थः । शक्तिः प्रथमार्थः । यथासंख्यं षण्णामुदाहरणान्याह । असौ कुमारः कटे शेते । गावो वटे सुशेरते स्वपाति । तैलं तिलेषु विद्यते । हृदि अमृतं सुखरूपं परमुत्तमं निरुपाधिकं ब्रह्म वर्तते । हृदयब्रह्मणोः प्रकाश्यप्रकाशकरूपः संबंधः । धीरः संनह्यते युद्धे कवचबंधनस्य युद्धफलकत्वात्तन्निमित्तं करिणां शतमंगुल्यग्रे वर्तते । करिभूम्योराधाराधेयरूपः संबंधः अंगुल्यग्रे ओरोप्यते ।

तत्त्वदीपिका—आधारे सप्तमीति । आध्रियते क्रिया यस्मिन् इत्याधारः । कर्तृकर्मद्वारा क्रियाधारत्वं न तु साक्षात् । आधारस्य षड्विधत्वमाह । औपश्लेषिक इत्यादि । उप उपरि श्लेषः संयोगः सोऽस्यास्तीति अइकावितीकः णितो वेति णित्वाद्वृद्धिः समीपे भवः सामीपिकः केनेयेका इतीकः । अभितः सर्वतो व्याप्यते आधेयैरिति अभिविपूर्वादाप्नोतेः कर्मणि घञन्तात्स्वार्थे कः अपृथग्देशयोराधाराधेययोः सर्वावयवसंबंधिकः विषयप्रकाशनसामर्थ्यं तदस्यास्तीति पूर्ववत्प्रक्रिया । निमित्तं हेतुस्तत्र भवः फलं वा तदस्यास्तीति वा पूर्ववत् । अन्यत्र विद्यमानस्य संबंधस्यान्यत्रारोप उपचारः । तत्र भवः सोऽस्यास्तीत्यौपचारिकः । निमित्तप्रभेदाच्च षड्विधः कैश्चिदिष्यते इति वचनादस्य पक्षस्यापि प्रामाण्यं । उदाहरणान्याह । कटे शेते कुमारोऽसौ एककटाभिन्नाश्रयको निद्रानुकूल एककुमाराभिन्नाश्रयको वर्त्तमानो व्यापारः । वटे गावः सुशेरते । एकवटाभिन्नाधारकनिद्रानुकूलो बहुगोभिन्नाधारकवर्तमानो व्यापारः । तिलेषु विद्यते तैलं । बहुतिलभिन्नाधारक आत्मधारणानुकूल एकतैलभिन्नाश्रयको वर्तमानो व्यापारः । हृदि ब्रह्मामृतं परं विद्यते इतियोज्यम् हृदयाभिन्नाश्रयक आत्मधारणानुकूलः स्फुरणानुकूलो वा एकब्रह्माभिन्नाश्रयको वर्त्तमानो व्यापारः । अमृतं सुखरूपं मरणशून्यं वा । परमुत्तमं उपाधिशून्यमित्यर्थः । द्वयमपि ब्रह्मविशेषणं । प्रकाश्यतासंबंधे ब्रह्म मनसि वर्त्तते । युद्धे संनह्यते धीरः । युद्धभिन्नाधारकः कवचबंधनानुकूलः एकाधीरभिन्नाश्रयको वर्तमानो व्यापारः । कवचबन्धनस्य युद्धफलकत्वात्तन्निमित्तम् । अंगुल्यग्रे करिणां शतम् । विद्यते इत्यस्यानुषंगः । अंगुल्यग्राभिन्नाश्रयको आत्मधारणानुकूलः करिसंबंधिशताभिन्नाश्रयको वर्तमानो व्यापारः । करिभूम्योराधाराधेयभावोंगुल्यग्रे आरोप्यते । औपश्लेषिकत्वादिकं तु शब्दबोधे न भासते । अन्यपदोच्चारणात्तु भासते गौर्वाहीक इत्यत्रोपसर्जनत्ववत् ।

**मू०—क्रियालक्षणम्भावस्तत्रापिसप्तमी ॥ वर्षति देवे चोरआयातः ।**

सुबोधिनी—क्रियालक्षणंभावस्तत्रापिसप्तमी । भवनं भावः । क्रिया प्रसिद्धैव ग्राह्या व्याख्यानात् । भावोऽस्ति यस्मिन् स भावः मत्वर्थीयोऽप्रत्ययः । प्रसिद्धक्रियावानित्यर्थः । प्रक्रियावांस्तु सापेक्षत्वादप्रसिद्धक्रियावंतं संलक्ष्यैव भवति अत आह । क्रियालक्षणं ।

क्रियायां प्रसिद्धं क्रियाया लक्षणं चिह्नम्। निराश्रयायाः क्रियाया असंभवादाश्रय आक्षिप्यते। अप्रसिद्धक्रियावतो लक्षणमित्यर्थः। लक्षणरूपा प्रसिद्धलक्षणया वा प्रसिद्धैव संभवति प्रसिद्धाया अप्रसिद्धायाः साधनौचित्यात् लक्ष्यलक्षणभावसंबंधे षष्ठ्यां प्राप्तायां सप्तमी विधीयते। अप्रसिद्धक्रियावल्लक्षणे प्रसिद्धक्रियावति कर्तरि कर्म्मणि च सप्तमी स्यादित्यर्थः। कर्तर्युदाहरणमाह। देवे मेघे वर्षति सति चोर आयातः। अत्र देवनिष्ठा प्रसिद्धा क्रिया सा चोरनिष्ठामप्रसिद्धां क्रियां लक्षयति। वर्षतीत्यत्र लक्षणहेत्वोः क्रियाया इति सूत्रेण कर्तरि शतृप्रत्ययः। कर्ता च देवः अतस्तयोः सामानाधिकरण्यात् सप्तमी। कर्मण्युदाहरणमाह। गोषु दुह्यमानासु सतीषु चोरो गतः। दुह्यमानास्वित्यत्र कर्मणि यक् ॥ इति सप्तमी ॥

तत्त्वदीपिका—भावइति। भवनंभावः। क्रियाभावोस्यास्तीति मत्वर्थीयोऽप्रत्ययः। लक्ष्यत इति लक्षणं क्रियायालक्षणं क्रियालक्षणं बोधकमिति यावत्। अप्रसिद्धक्रियाबोधका या प्रसिद्धक्रिया तद्वतः सप्तमीत्यर्थः। वर्षतीत्यादिदेवाभिन्नाश्रयिका या वर्षणक्रिया तयोपलक्षितं भूतं यदागमनं तदाश्रयश्चोर इत्यर्थः इतोन्यार्थे द्वितीयादिसिद्ध्यर्थं शेषा इत्यस्य योगविभागः कार्यः। इति सप्तमी।

**सू०—विनासहनमस्तेनिर्द्धारणस्वाम्यादिभिश्च ॥ एतैर्योगे द्वितीयाद्या विभक्तयः। विनादियोगे द्वितीया। विना पापं सर्वम्फलति। अन्तरेणाक्षिणी किञ्जीवितेन। अन्तरा त्वां मां हरिः। जपमनु प्रावर्षत्। अनुहरिं सुराः। भक्तो हरिमभि। उपहरिं सुराः। नदीमन्ववसिता सेना। अतिदेवान् कृष्णः। अभितो ग्रामम्। सर्वतो नगरम्। धिग् जालमम्। उपर्युपरि पर्वतम्। अध्यधिलोकम्। अध्यधिसुखम्। अधोऽधो ग्रामम्। उभयतः कृष्णम्। एवम्परितस्समयानिकषाहाप्रतिपरियोगेपि।**

सुबोधिनी—अथोपपदविभक्तीराह। विनासहनमस्तेनिर्द्धारणस्वाम्यादिभिश्च। विना च सहश्च नमश्च ऋते च निर्द्धारणं च स्वामी च ते विनासहनमस्तेनिर्द्धारणस्वामिनः। ते आदयो येषां ते विनासहनमस्तेनिर्द्धारणस्वाम्यादयस्तैर्विनासहनमस्तेनिर्द्धारणस्वाम्यादिभिः। द्वंद्वांते श्रूयमाणःशब्दःप्रत्येकं संबध्यते। इत्यादिशब्दः प्रत्येकं योज्यः। शेषा इत्यनुवर्तते। शेषा द्वितीयाद्या विभक्तयो यथाक्रममेषां योगे भवंति। विनादियोगे द्वितीया। पापं विना सर्वं फलति पापस्याऽभावे सर्वं कर्म फलप्रदं भवतीत्यर्थः। अक्षिणी अंतरेण नेत्रयोरभावे चक्षुषी विना इत्यर्थः। अंतरेणेति निपातो मध्यार्थकोपि। यथा "मृणालसूत्रामलमंतरेण स्थितश्चलच्चामरयोर्द्वयं स" इत्यत्र चलच्चामरयोर्द्वयस्य मध्ये स्थित इत्यर्थः। अंतरा त्वां मां तव मम च मध्ये इत्यर्थः। योगे इति किम्। अंतरा त्वां मां हरेर्मूर्तिः। अत्र हरिशब्दान्न द्वितीया। अंतराशब्देनान्वययोगाभावात्। हेतुसहहीनार्थकानुयोगे द्वितीया। यथा जपमनुमेघः प्रावर्षत्। हेतुभूतजपोपलक्षितं वर्षणमित्यर्थः। हेतौ तृतीयाबाधिका द्वितीयात्र। नदीमनु नद्या सह सेना अवसिता। संबद्धेत्यर्थः। षिञ्बंधने अस्मात् क्तः। षष्ठीबाधिका द्वितीयात्र। अनुहरिं सुराः। हरेर्हीना इत्यर्थः। उत्कृष्टादेव द्वितीया नापकृष्टात्। शक्तिस्वभावात्। हीनार्थकोपयोगे द्वितीया। यथा उपहरिं सुराः हरेर्हीना इत्यर्थः। अत्राप्युत्कृष्टादेव द्वितीया नापकृष्टात्। अतिक्रमणपूजार्थकातियोगे द्वितीया। यथा उचितादधिकस्यानुष्ठानमतिक्रमणम्। अतिदेवान् कृष्णः देवानतिक्रांतो देवानां पूज्यश्चेत्यर्थः। अभितो ग्रामं

ग्रामस्य पार्श्वद्वय इत्यर्थः ॥ सर्वतो ग्रामं ग्रामस्य समंतादित्यर्थः । जाल्मं मूर्खं धिक् तस्य निंद्यतेत्यर्थः । उपर्युपरि पर्वतं । पर्वतस्योर्ध्वमित्यर्थः । अध्यधिसुखं सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अधोऽधोग्रामं ग्रामस्याधस्तात् समीपदेशेइत्यर्थः । उभयतः कृष्णं कृष्णस्य पार्श्वद्वये इत्यर्थः । परितः सर्वतइत्यर्थः । समया निकषा निपातौ समीपार्थकौ । विलंघ्य लंकां निकषा हनिष्यतीति माघः । हा मूर्खं । तस्य शोच्यतेत्यर्थः । बुभुक्षितं न प्रतिभाति किंचित् । बुभुक्षितस्य पुरुषस्य किंचित् प्रतिभाति नेत्यर्थः ॥

तत्वदीपिका—कारकविभक्तिं दर्शयित्वोपपदविभक्तिं दर्शयति । विना सहेत्यादि । विनाच सहच नमच ऋतेच निर्द्धारणश्च स्वामी च ते आदयो येषामिति द्वंद्वगर्भो बहुव्रीहिः । द्वंद्वांते श्रूयमाणत्वादादिशब्दः प्रत्येकं संबध्यते । द्वितीयादीनां चात्र यथाक्रममन्वयः । विनादियोग इति । विनापापामिति । पापसंबंधाभावे सर्वकर्मफलप्रदं भवतीत्यर्थः । द्वितीयाद्याउपपदविभक्तयः षष्ठ्यपवादाः । जपमनु इति हेतुभूतजपोपलक्षितमतीतकालमेकाश्रयणम् वर्षणामित्यर्थः । उपहारीमीति । हरेर्हीना इत्यर्थः । षिञ् बंधने क्तः । अतिदेवानिति । देवानां पूज्य इत्यर्थः । अभित इति । उभयत इत्यर्थः । धिगिति निर्भर्त्सननिंदयोः । उपरीति । पर्वतस्योपरिष्टात्समीपदेशे इत्यर्थः । अधीति । सुखस्योपरिष्टात्समीपकाले दुःखमित्यर्थः । अध इति । ग्रामस्याधस्तात्समीपदेश इत्यर्थः ।

**मू०—कालाध्वनोर्नैरन्तर्य्ये ॥ मासमधीते । क्रोशम्पर्वतः । मासङ्गुडधानाः । मासं कल्याणी । क्रोशं कुटिला नदी । नैरन्तर्य्ये किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ।**

सुबोधिनी—कालाध्वनोर्नैरंतर्ये। कालश्च अध्वा च कालाध्वानौ तयोः कालाध्वनोः निर्गतमंतरं यस्मात्तत् निरंतरं निरंतरस्य भावो नैरंतर्यं तस्मिन्नैरंतर्य्ये। क्रियागुणद्रव्यैः सह कालाध्वनो निरंतरसंयोगे कालाध्ववाचकाद्द्वितीया स्यात्॥मासमधीते। निरंतरा मासस्याध्ययनक्रियेत्यर्थः। क्रोशं पर्वतः। निरंतरः क्रोशस्य पर्वत इत्यर्थः। मासं गुडधानाः। निरंतरा मासस्य गुडेन मिश्रा धानाः गुडधानाः। धाना भृष्टयवे स्त्रियामित्यमरः। मासं कल्याणी । निरंतरा मासस्य शोभनगुणवती । क्रोशमधीते । निरंतरा क्रोशस्याध्ययनक्रिया । क्रोशं कुटिला नदी निरंतरा क्रोशस्य वक्रा नदी । लक्षणेत्थंभूताख्यानभागवीप्सार्थकानां प्रतिपर्यनूनां योगे द्वितीया । यथा । लक्षणे । वृक्षं प्रतिपर्यनु वा विद्योतते विद्युत् । लक्ष्यलक्षणभावसंबंधं प्रत्यादयो द्योतयंत्यत्र । इत्थंभूताख्याने । भक्तो विष्णुं प्रति पर्यनु वा । विष्णोर्भक्तश्च विषयविषयिभावसंबंधं प्रत्यादयो द्योतयंत्यत्र । भक्तः कृष्णस्य कंचित्प्रकारं भक्तत्वं प्राप्त इत्यर्थः । भागे । लक्ष्मीः कृष्णं प्रतिपर्यनुवा लक्ष्मीरूपस्य भागस्य कृष्णेन सह स्वस्वामिसंबंधः तं प्रत्यादयो द्योतयंत्यत्र । कृष्णस्य भाग इत्यर्थः । वीप्सायां । वृक्षं प्रतिपर्यनुवा । वृक्षंवृक्षमित्यर्थः। लक्षणेत्थंभूताख्यानवीप्सार्थकस्याभियोगे द्वितीया। यथा लक्षणे। हरिमभिवर्तते मुक्तिः। हरिं लक्षयित्वेत्यर्थः। लक्ष्यलक्षणभावसंबंधोत्र। इत्थंभूताख्याने भक्तो हरिमभि। विषयविषयिभावसंबंधोत्र। हरेः कंचित्प्रकारं भक्तत्वं प्राप्त इत्यर्थः। वीप्सायां। देवमभिनमति। देवंदेवमित्यर्थः। पृथक् नाना दक्षिणेन उत्तरेण इत्यादियोगेपि द्वितीया ॥

तत्त्वदीपिका—कालाध्वनोरिति । कालश्च अध्वा च कालाध्वानौ तयोः । निर्गतमंतरं यस्मात्तन्निरंतरम् तस्य भावः नैरंतर्यं तस्मिन् क्रियागुणद्रव्यैः कालाध्वनोः निरंतरम् संबंधे कालाध्वभ्यां द्वितीया ।

मास इति । निरंतरं माससंबंधी एकाश्रयो अध्ययनानुकूलो व्यापारः । मासं कल्याणीति । अव्यवच्छिन्नमाससंबंधशोभनगुणवती । मासं गुडेति । अव्यवच्छिन्नमाससंबंधी इत्यर्थः ।

**सू०–अधिपूर्वाणांशीङ्स्थासामाधारःकर्म्म । अभिनिपूर्व्वस्य विशेः ।**

सुबोधिनी–अधिपूर्वाणांशीङ्स्थासामाधारःकर्म । शीङ् स्वप्ने । ष्ठा गतिनिवृत्तौ । आस उपवेशने । अधिपूर्वकाणामेषामाधारः कर्मसंज्ञकः स्यादनुक्ते कर्मणि द्वितीयेत्यर्थः । अभिनिपूर्वस्य विशेः द्वंद्वेऽल्पस्वरप्रधानेति नेः पूर्वनिपाते कर्तव्ये विपरीतोच्चारणमीदृशसंघातविवक्षार्थम् । अभिनीत्येतत् संघातपूर्वस्य विशप्रवेशने इत्यस्याधारः कर्मसंज्ञकः स्यात् ॥

तत्त्वदीपिका– अभिनि इति । नेरल्पस्वरत्वेन पूर्वनिपाते कर्त्तव्ये विपरीतोच्चारणमीदृशसमुदायविवक्षार्थं । तेनेह न । निविशते यदि शूकाशिखापदे इति ॥

**सू०–उपान्वध्याङ्पूर्व्वस्यवसः॥ अधिशेते। अधितिष्ठति । अध्यास्ते वा वैकुण्ठं हरिः । अभिनिविशते सन्मार्गम् । उपवसति अधिवसति आवसति वा वैकुण्ठं हरिः ।**

सुबोधिनी–उपान्वध्याङ्पूर्वस्यवसः । उपादिपूर्वस्य वसेराधारः कर्मसंज्ञकः स्यात् । लुग्विकरणाऽलुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायात् । वस निवासे इति भौवादिक एव गृह्यते नतु वस आच्छादने इत्यदादिकः ॥

तत्त्वदीपिका–अधिशेते इत्यादि । अत्र त्रयाणां फलं स्थितिः । अवस्थानजन्यवैकुंठनिष्ठसंयोगानुकूल एकहर्य्यभिन्नाश्रयको वर्त्तमानो व्यापारः । अभिनिविशतइति । अभिनिवेशजन्यः सन्मार्गो भिन्नाश्रयः संबंधस्तदनुकूल एकाभिन्नाश्रयको वर्तमानो व्यापारः उपवसतीत्यादि । वैकुंठाभिन्नाश्रयको वासजन्यो यः संयोगस्तदनुकूल एकहर्य्यभिन्नाश्रयको वर्त्तमानो व्यापारः ।

**सू०–नाभुक्त्यर्थस्य ॥ वने उपवसति । इत्यादि ।**

सुबोधिनी–नाभुक्त्यर्थस्य । भोजननिवृत्तिवाचकस्य वसेराधारः कर्मसंज्ञोन । उपवसति उपवासं करोतीत्यर्थः ॥ ॥ इति द्वितीया ॥

**सू०–सहादियोगेतृतीया ॥ सह शिष्येणागतो गुरुः । एवं साकं सार्द्धं समं योगेऽपि ।**

सुबोधिनी–सहादियोगे तृतीया । सहार्थकशब्दस्य तृतीया विभक्तिर्भवति । गुरुः शिष्येण सहागतः । गुरोरत्रागमनक्रियया शाब्दः संबंधः शिष्यस्य त्वार्थः संबंधः । अत एव शिष्यस्याऽप्राधान्यं । षष्ठ्या बाधिकेयं । ननु संबधे तृतीया संबंधश्चोभयनिष्ठोऽतउभाभ्यां तृतीया स्यात् । मैवं वद । यस्मात्षष्ठी प्राप्ता तस्मादेव तृतीया । षष्ठी चाप्रधानाद्विहिता ततस्तृतीयाप्यप्रधानादेव भवति । उत्सर्गसमानदेशा अपवादा भवंतीत्युक्तत्वात् । सहार्थविवक्षायां विनापि सहार्थयोगे तृतीया भवति । त्वमहंसिनेत्यादिनिर्द्देशात् । एवं साकं सार्द्धं समम् अमा पृथक् विना नाना इत्यादि योगेपि तृतीया ॥

तत्त्वदीपिका–सहादियोग इति । शिष्येण सहेति । गुरौ तु न तृतीया तस्य प्रधानत्वात् । अथाप्रधाने च तृतीयेति चेत् । कथं गुरुणा सहागतः शिष्य इत्यत्र सा। गुरोः प्रधानत्वादितिचेत् सत्यम् । नह्यत्र लौकिकं प्राधान्यं किन्तु शाब्दम् । तच्च शब्दप्रतिपादितक्रियात्वम् । अर्थलब्धक्रियात्वमप्राधान्यम् । तच्च यदा यस्य तदा

तस्यैव प्राधान्याप्राधान्येन । शिष्येण सहागतो गुरुरित्यत्रागमने शिष्यस्यापि कर्तृत्वमन्यथा साहित्यं न स्यात् इति कर्तृसाधनयोरित्येव तृतीया किमनेनेति चेत्सत्यम् । शिष्येण सहागमनं गुरोरित्यत्र शिष्यादपि कर्तृ-कार्य्ययोरिति षष्ठी प्राप्ता । तदपवादार्थमिदमिति गृहाण । सहार्थविवक्षायां सहादिप्रयोगाभावेपि तृतीया सिनेत्यादिनिर्देशात् ।

**मू०—येनाङ्गविकारः ॥** येनांगेन विकृतेनांगिनो विकारो लक्ष्यते ततस्तृती-या । अक्ष्णा काणः । अङ्गविकारः किम् । अक्षि काणमस्य ।

**सुबोधिनी**—येनांगविकारः। अंगमस्यास्तीति सोंगः अस्त्यर्थेऽप्रत्ययः। अंगीत्यर्थः। अंगस्यां-गिनो विकारः अंगविकारः । अक्ष्णा काणः । अक्ष्णः काणत्वविशिष्ट इत्यर्थः ।

**तत्त्वदीपिका**—अंगिन इति । अंगमस्यास्तीति सोऽगी तस्येत्यर्थः ।

**मू०—कश्चित्प्रकारम्प्राप्तस्यलक्षणे ॥** जटाभिस्तापसः ।

**सुबोधिनी**—कश्चित्प्रकारं प्राप्तस्य लक्षणे । सामान्यस्य भेदको विशेषः प्रकारः । लक्ष्यते-ऽनेनेति लक्षणं चिह्नं कंचित्प्रकारं प्राप्तस्य लक्षणे तृतीया स्यात् । जटाभिस्तापसः जटाज्ञा-प्यतापसत्वविशिष्टः । जटाभिर्ज्ञाप्यं यत्तापसत्वं तद्विशिष्टइत्यर्थः । इह जटानां लक्षणत्वं तेन लक्ष्यलक्षणभावः संबंधोऽत्र ॥

**तत्त्वदीपिका**— जटाभिरिति । जटाज्ञाप्यतापसत्वविशिष्ट इत्यर्थः । लक्षणे किं । अस्य जटाः ।

**मू०—प्रकृत्यादिभ्यश्च ॥** प्रकृत्या चारुः । प्रायेण याज्ञिकः । गोत्रेण गार्ग्यः । समेनैति । विषमेणैति । द्विद्रोणेन धान्यं क्रीणाति । सुखेन दुःखेन याति ।

**सुबोधिनी**—प्रकृत्यादिभ्यश्च । प्रकृत्या स्वभावेन चारुरभिरूपः नत्वलंकारादिना । अत्र क्रियाया अश्रवणे कर्तृकरणत्वाभावात्षष्ठी प्राप्ता तद्बाधिका तृतीया । प्रायेण बहुधा यज्ञं करोतीति याज्ञिकः । गोत्रेण गार्ग्यः । गर्गगोत्रमस्येत्यर्थः । प्रातिपदिकार्थे प्रथमा प्राप्ता तद्बा-धिका तृतीयात्र । समेन मार्गेण विषमेण स एति गच्छतीत्यर्थः । समविषमाभ्यां द्वितीया प्राप्ता तद्बाधिका तृतीयात्र । द्वयोर्द्रोणयोः समाहारो द्विद्रोणं क्वचिन्नेति स्त्रीत्वाऽभावः । द्विद्रोण-परिमितधान्यमूल्यवाचको द्विद्रोणशब्दः । द्रोणद्वयस्य द्रव्यस्य धान्यं क्रीणातीत्यर्थः । सुखे-न दुःखेन याति । सुखं दुःखं यातीत्यर्थः ।

**मू०—दिवःकरणम् ॥** कर्म्मसंज्ञं वा स्यात् । अक्षैरक्षान्वा दीव्यति ।

**सुबोधिनी**—दिवःकरणं । दिवः करणस्य कर्मसंज्ञा वा स्यात् । दिवु क्रीडादौ । अस्य करणं वा कर्म भवति । अक्षैः अक्षान् वा दीव्यति । किंच सकर्म्मकत्वादक्षैर्देवयते देव-दत्तो मैत्रेणेत्यत्र गतिबुद्धीत्यनेन ण्यावपि कर्तुः कर्म्मत्वं न ॥

**मू०—तुल्यार्थयोगे ॥** कृष्णेन तुल्यः । रामेण सदृशः ।

**सुबोधिनी**—तुल्यार्थयोगे । तोलनं तुला तुलया संमितस्तुल्यः ण्यप्रत्ययः णितो वेति वृद्ध्यभावः । तुल्यार्थवाचकशब्दयोगे तृतीया वा स्यात् । पक्षे संबंधे षष्ठी तुलोपमाशब्दौ विना । उपमा तुला वा हरेर्नास्तीति । तुल्यः सदृशः समः कृष्णेन कृष्णस्य वा ।

**मू०-फलप्राप्तौकालाध्वनोरत्यन्तसंयोगेतृतीया॥** अह्ना क्रोशेन वाऽनुवाकोऽधीतः । फलप्राप्तौ किम् । मासमधीतो नायातः ।

सुबोधिनी-फलप्राप्तौकालाध्वनोरत्यंतसंयोगेतृतीया । अंतं विराममतिक्रांतोऽत्यंतः अत्यंतश्चासौसंयोगश्चात्यंतसंयोगस्तस्मिन् अत्यंतसंयोगे । निरंतरसंनिकर्षे कालाध्ववाचकाभ्यां तृतीया स्यात् फलप्राप्तौ सत्यां। देवदत्तेनानुवाको ग्रंथविशेषोऽह्ना दिनं यावन्निरंतरं क्रोशेन एकक्रोशं यावन्निरंतरं वाऽधीतकालाध्वनोरिति द्वितीयाबाधिकेयं तृतीया ॥

तत्त्वदीपिका- फलेति । फलप्राप्तौ किम् । मासमधीतो नायातः ।

**मू०-अशिष्टव्यवहारेदाणःप्रयोगेचतुर्थ्यर्थेतृतीया ॥** दास्या संयच्छते कामुकः । धर्मे तु भार्य्यायै संयच्छतीति ।

सुबोधिनी-अशिष्टव्यवहारेदाणःप्रयोगेचतुर्थ्यर्थेतृतीया । निषिद्धाचारेप्रतिपाद्ये दाणः प्रयोग चतुर्थ्यर्थे तृतीया स्यात् । दास्या संयच्छते कामी । धर्मेतु भार्यायै संयच्छति ।

इति तृतीया ॥

**मू०-नमआदियोगेचतुर्थी ॥** नमो नारायणाय । एवं स्वस्तिस्वाहास्वधाऽलंवषड्योगे च ।

सुबोधिनी-नमआदियोगेचतुर्थी । संबंधसामान्ये षष्ठ्यां प्राप्तायां तद्बाधिका चतुर्थी । नारायणाय हरये नमोस्तु । प्रजाभ्यः स्वस्ति कल्याणम् । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमिति समर्थार्थस्य ग्रहणम् । हरिर्दैत्येभ्योऽलं समर्थ इत्यर्थः । इन्द्राय वषट् ॥

तत्त्वदीपिका-नमआदियोगे चतुर्थीति । नमस्करोति देवानित्यादौ तु उपपदविभक्तेरित्याद्युक्तमेव । स्वयंभुवे नमस्कृत्येत्यादौ तु स्वयंभुवमनुकूलयितुमित्यर्थे तुमोऽप्रयुक्तस्य कर्मणि चतुर्थी। एतच्च कार्यायेति सूत्रेण ज्ञापितम् । कार्यं विधातुमित्यर्थात् ।

**मू०-उपपदविभक्तेः कारकविभक्तिर्बलीयसीति॥**नमस्करोतिदेवान्। प्रभ्वादियोगे षष्ठ्यपि । भोजनाय भोजनस्य वा प्रभुस्समर्थः । शक्तः । कृष्णाय कृष्णस्य वा मद्रं भद्रं कुशलं सुखमायुष्यमर्थः प्रयोजनं वा भूयात् ।

सुबोधिनी-ननु नमस्करोति देवानित्यत्र चतुर्थी स्यात् । नमःसंबंधसत्त्वात् । उच्यते । उपपदविभक्तेःकारकविभक्तिर्बलीयसीति । उपपदं निमित्तं यस्याः सा उपपदनिमित्ता सा चासौ विभक्तिश्च उपपदविभक्तिः । शाकपार्थिवादित्वान्मध्यमपदलोपः । क्रियान्वयित्वं कारकत्वम् । कारकनिमित्ता विभक्तिर्बलीयसी बलिष्ठेत्यर्थः । क्रियान्वयित्वाद्देवानित्यत्र द्वितीया । प्रभ्वादियोगे षष्ठ्यपि । प्रभु आयुष्य मद्र भद्र कुशल सुखार्थ हितार्थकाः प्रभ्वादयः । एषां योगे षष्ठीचतुर्थ्यौ भवतः तत्रायुष्यादियोगे आशीर्वादेर्थे एव । आशीर्वादे किं । देवदत्तस्यायुष्यमस्ति ॥

तत्त्वदीपिका- उपपदविभक्तेः कारकविभक्तिर्बलीयसीति । उपसमीपे पदं उपपदं उपपदनिमित्तं यस्याः सा उपपदनिमित्ता सा चासौ विभक्तिश्च उपपदविभक्तिः । शाकपार्थिवादिस्तस्यास्तेन नमस्करोति देवानित्यत्र कर्मणि द्वितीयैव न चतुर्थी ।

मू०—रुच्यर्थधातुभिर्योगेप्रीयमाणे ॥ हरये रोचते भक्तिः ।

सुबोधिनी—रुच्यर्थधातुभिर्योगेप्रीयमाणे । रुचिर्दीप्तावपि दीप्तिस्तत्र न विवक्षिता इत्यत उच्यते अन्यकर्तृकोऽभिलाषो रुचिः। रुचिरर्थो येषां ते रुच्यर्था रुच्यार्थाश्च ते धातवश्च रुच्यर्थधातवस्तेषां योगः रुच्यर्थधातुयोगस्तस्मिन् प्रीयते इति प्रीयमाणः। प्रीञ्तर्पणे अस्मात् कर्मणि शानप्रत्ययः । तस्मिन् प्रीयमाणे चतुर्थी भवति । हरिं प्रीणयतीत्यर्थे कर्मणि द्विती-याप्राप्तौ चतुर्थी । हरिनिष्ठप्रीतेर्भक्तिः कर्त्री । भक्तिरात्मविषयमभिलाषं हरेरुत्पादयतीत्यर्थः। प्रीयमाणेकिं । देवदत्ताय रोचते मोदकः पथि ॥

तत्वदीपिका— हरय इति । अन्यकर्तृकोऽभिलाषोरुचिः हरिनिष्ठप्रतीतेर्भक्तिः कर्त्री हरिंप्रीणयती-त्यर्थः। द्वितीयाप्राप्तौ वचनं । शाब्दबोधस्त्वयम् । हर्य्यभिन्नाश्रयकप्रीत्यनुकूल एकत्वावच्छिन्नो वर्त्तमानो व्यापारः ।

मू०—श्लाघह्नुङ्स्थाशपांप्रयोगेबोधयितुमीप्सि ॥ गोपी कृष्णाय श्लाघते ह्नुते तिष्ठते शपते वा ।

सुबोधिनी—श्लाघह्नुङ्स्थाशपांप्रयोगेबोधयितुमीप्सि । श्लाघृ कत्थने । ह्नुङ् अपनयने । ष्ठा गतिनिवृत्तौ । शप उपालंभे । एषां प्रयोगे बोधयितुं ज्ञापयितुमीप्सि वांछिते चतुर्थी स्यात् । गोपी स्मरात्कंदर्पात् कृष्णाय श्लाघते । कृष्णं स्तौतीत्यर्थः । सर्वत्र कर्मणिद्वितीया-प्राप्तौ चतुर्थी । कृष्णाय ह्नुते सपत्नीभ्यो ह्नुतमर्थं कृष्णं बोधयतीत्यर्थः । कृष्णाय तिष्ठते । स्थित्या स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः।स्वाभिप्रायाविष्करणनिर्णेत्राख्यायामिति तिष्ठतेरात्म-नेपदम् । कृष्णाय शपते । उपालंभेन स्वाभिप्रायं कृष्णं बोधयतीत्यर्थः॥

तत्वदीपिका—श्लाघह्नुङ् इति । श्लाघा स्तुतिः । कृष्णाय श्लाघते कृष्णं स्तौतीत्यर्थः । आत्मानं परं वा कर्मत्वे प्राप्ते वचनं ह्नुत इति सपत्नीभ्यः कृष्णं ह्नुवाना तमेवार्थं कृष्णं बोधयतीत्यर्थः । यस्य कस्यचित् न्हुतिं वा तिष्ठत इति स्थित्या अभिप्रायं बोधयतीत्यर्थः। शाब्दबोधस्तु कृष्णोद्देश्यक आत्मभिन्नाश्रयकश्लाघ्य-न्हादिबोधनानुकूल एकगोप्यभिन्नाश्रयको वर्त्तमानो व्यापारः । स्वाभिप्रायाविष्करणनिर्णेत्राख्यायामित्या-

॥ भक्ताय धारयति मोक्षं हरिः ।

सुबोधिनी—धार[illegible] धृङ् अवस्थाने । ण्यंतः। धारयतेः प्रयोगे उत्तमर्णे चतुर्थी स्यात् । उत्तमर्णो धनस्वामी । अत्रोत्तमर्णो भक्तः। हरिस्त्वधमर्णः । अधमर्णस्तु ग्रा[illegible] इति। भक्तेन पूर्वं भक्तिर्दत्ता तदर्थं हरिर्मोक्षं धारयति । धृङोऽकर्मकत्वात् । गतिबु[illegible] सूत्रेणाण्यंतावस्थायां कर्तुर्ण्यंतावस्थायां कर्मत्वं। अत्र च षष्ठीप्राप्तौ चतुर्थी विधीयते[illegible] र्णेकिं । देवदत्ताय शतं धारयति ग्रामे ॥ [illegible]पंचम्यौ

तत्वदीपिका—धारेरिति । षष्ठीप्राप्तौ वचनं । भक्तायेति । भक्तोद्देश्यकमोक्षकर्म[illegible] एकहर्य्यभिन्नाश्रयको वर्त्तमानो व्यापारः। पुष्पेभ्यः स्पृहयति इति पुष्पोद्देश्यकेच्छानुकूल [illegible] वर्त्तमानो व्यापारः । [illegible]युक्त इत्य- [illegible]याप्राप्तौ पक्षे [illegible]त्यादि ।

मू०—स्पृहयतेरीप्सिते ॥ पुष्पेभ्यस्स्पृहयति ।

सुबोधिनी–दूरांतिकयोगेपष्ठ्यपि । अनयोर्योगे षष्ठी भवति । अपिशब्दाद्दूरांतिकार्थकेभ्यो नामार्थमात्रे द्वितीयातृतीयापंचमीसप्तम्यो भवंतीत्यर्थः । ग्रामस्य दूरं दूरेण दूरात् दूरे वा । अंतिकं अंतिकेन अंतिकात् अंतिके वा ॥ इतिपंचमी ॥

**मू०–निर्द्धारणेषष्ठीसप्तम्यौ ॥ क्रियागुणजातिसंज्ञाभिस्समुदायात्पृथक्क्करणं निर्द्धारणं यतस्ततः षष्ठीसप्तम्यौ । क्रियापराणां क्रियापरेषु वा भगवदाराधकःश्रेष्ठः । गवां गोषु वा कृष्णा सम्पन्नक्षीरा । नृणां नृषु वा ब्राह्मणः श्रेष्ठः। छात्राणां छात्रेषु वा मैत्रः पटुः ।**

सुबोधिनी–निर्धारणेषष्ठीसप्तम्यौ । निर्द्धारणादियोगे षष्ठीसप्तम्यौ । जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्यपृथक्करणं निर्द्धारणं तदस्ति साध्यत्वेनास्येति सनिर्द्धारणः । अइकावित्यप्रत्ययः । श्रेष्ठत्वादिहेतुरित्यर्थः । तथा च निर्द्धारणादियोगे निर्द्धारणाश्रयान्नाम्नः षष्ठीसप्तम्यौ स्तः । यतो निर्धार्यते तत एवेत्यर्थः । ॥ इतिषष्ठी ॥

तत्वदीपिका– क्रियागुणेत्यादि । निर्द्धारणमस्यास्तीति निर्द्धारणः अइकावित्यतः निर्द्धारणे हेतुरितियावत् । तथा च निर्द्धारणादियोगे षष्ठीति सम्यगेव नतुनिर्द्धारणार्थे इति अर्थपरो निर्द्धारणशब्दः । आदिशब्दस्य द्वंद्वात्परत्वेन प्रत्येकं योगस्यानिवार्यत्वात्। किं च निर्द्धारणार्थे षष्ठीत्युक्ते कस्मात्षष्ठीनिर्द्धारणाश्रयान्निर्धारणहेतौ निर्द्धार्यमाणादितीति विनिगमनाभावः । योगे षष्ठीति मते तु हेतुयोगे विधानाद्धेतौ न निर्द्धार्यमाणादपि । स्वानिष्ठत्वेनाभिधानान्न परिशेषान्निर्द्धारणाश्रयादेव। नन्वत्र समूहसमूहिलक्षणे संबंधे एव षष्ठी किमनेनेति चेत्सत्यम् । स्वाम्यादित्वान्निर्द्धारणयोगे सप्तमी विधास्यते। तया बाधा मा भूदित्यतोपि षष्ठीविधानम् ।

**मू०–स्वाम्यादियोगेषष्ठीसप्तम्यौ ॥ गवां गोषु वा स्वामी अधिपतिः ईश्वरः दायादः प्रसूतः प्रतिभूर्वा ।**

सुबोधिनी–स्वाम्यादियोगेषष्ठीसप्तम्यौ । स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैर्योगे षष्ठीसप्तम्यौ स्तः । षष्ठीप्राप्तौ पाक्षिकसप्तम्यर्थं वचनं । दायादौ सुतबांधवावित्यमरः । गोषु प्रसूतः । गाएवानुभवितुं जात इत्यर्थः । प्रतिभूः साक्षी ।

तत्वदीपिका–प्रसूत इति । गा एवानुभवितुं जात इत्यर्थः ।

**मू०–अनादराधिक्येक्रियालक्षणेषष्ठीसप्तम्यौ ॥ रुदति रुदतो वा प्राव्राजीत् ।**

सुबोधिनी–अनादराधिक्येक्रियालक्षणेषष्ठीसप्तम्यौ । केवलभावलक्षणे सप्तम्येव अनादराधिक्ये तु षष्ठीसप्तम्यौ स्तः । रुदति रुदतो वा मैत्रः प्राव्राजीत् रुदंतं पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ।

तत्वदीपिका–रुदतीति । रुदंतम् पुत्रादिकमनादृत्य संन्यस्तवानित्यर्थः ।

**मू०–आयुक्तकुशलाभ्यांयोगेषष्ठीसप्तम्यौतात्पर्ये॥ आयुक्तःकुशलो वा हरिपूजनस्य हरिपूजने वा ।**

सुबोधिनी–आयुक्तकुशलाभ्यांयोगेषष्ठीसप्तम्यौतात्पर्ये । तत्परस्य भावः तात्पर्यं तस्मिन् तात्पर्येऽर्थे आभ्यां योगे षष्ठीसप्तम्यौ स्तः । हरिपूजने हरिपूजनस्य वा आयुक्तो व्यापारित इत्यर्थः । तात्पर्ये किं । आयुक्तो गौः शकटे । ईषद्युक्त इत्यर्थः ।

**मू०–साधुनिपुणाभ्यांपूजायांसप्तमी** ॥ मातरि साधुर्न्निपुणो वा ।

**सुबोधिनी**–साधुनिपुणाभ्यांपूजायांसप्तमी । निपूर्वकपुण शुभे कर्म्मणि अस्मान्नाम्युपधादितिकः। निपुणः। साधुशब्दप्रयोगे तु पूजां विना साध्वसाधुप्रयोगे सप्तमी भवत्येव । पूजायामाभ्यां योगे सप्तमी स्यात् । पूजायां किम् । निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्। अप्रतिपर्यनुयोगे न सप्तमी । साधुर्निपुणो वा मातरं प्रतिपर्यनु वा ।

**मू०–प्रसितोत्सुकाभ्यां योगे तृतीयासप्तम्यौ** ॥ प्रसित उत्सुको वा हरिणा हरौ वा ।

**सुबोधिनी**–प्रसितोत्सुकाभ्यांयोगेतृतीयासप्तम्यौ । तत्परे प्रसितासक्तावित्यमरः । उत्सुकसाहचर्यात्प्रसितस्तत्परार्थक एव गृह्यते तेन प्रकर्षेण सितः शुक्ल इत्यर्थे न ।

**तत्त्वदीपिका**–प्रसित इति । तत्परे प्रसितासक्तावित्यमरः ।

**मू०–साध्वसाधुप्रयोगेसप्तमी** ॥ साधुः कृष्णो मातर्य्यसाधुर्म्मातुले ।

**सुबोधिनी**–साध्वसाधुप्रयोगेसप्तमी । यत्र पूजा न विवक्षिता किंतु तत्त्वकथनं तत्रापि सप्तमी भवति एतदर्थं साधुग्रहणम्। साधुनिपुणाभ्यामितिसूत्रे साधुग्रहणं तु पूजायां विवक्षितायां प्रत्यादियोगे सप्तमीनिवृत्त्यर्थमिति ॥

**मू०–निमित्तात्कर्म्मयोगेसप्तमी** ॥ चर्म्मणि द्वीपिनं हंति दन्तयोर्हंति कुंजरम् ॥ केशेषु चमरीं हंति सीम्नि पुष्कलको हतः ॥

**सुबोधिनी**–निमित्तात्कर्मयोगेसप्तमी । कर्मणोयोगः संबंधः तस्मिन्कर्मयोगे निमित्तात्फलात्सप्तमी स्यात् । निमित्तशब्देन कारणग्रहणे तु जाड्येन बद्ध इत्यादावप्यातिप्रसंगः स्यादित्यर्थः । अत्र हेतुतृतीया तादर्थ्यचतुर्थी च प्राप्ता तन्निवारणार्थमिदं । मैत्रो द्वीपिनं चित्रकं हंति चर्मणि चर्मफलार्थं । चर्मद्वीपिनोः समवायः संबंधः । कुंजरं हंति दंतयोर्दंतफलाय दंतकुंजरयोः समवायः संबंधः। चमरीं गां हंति केशेषु केशफलार्थं। केशचमर्योः समवायः संबंधः । मैत्रेण पुष्कलको गंधमृगो हतः। सीम्नि अंडकोशफलार्थम् । अथवा पुष्कलकः शंकुर्हतो निहितो निखात इत्यर्थः। सीम्नि सीमज्ञापनार्थं । सीमपुष्कलकयोः संयोगः संबंधः । अथ पुष्कलको गंधमृगे क्षपणकीलयोरिति मेदिनी । सीमा घाटस्थितिक्षेत्रेष्वंडकोशेषु च स्त्रियामिति मेदिनी ॥

**तत्त्वदीपिका**–निमित्तादिति । निमित्तमिह फलं । योगः संयोगःसमवायात्मकः । सीम्नीति । सीमांडकोशः । पुष्कलको गंधमृगः । योगविशेषे किम् । वेतनेन धान्यं लुनाति ।

**मू०–क्तस्येन्विषयस्यकर्म्मणि** ॥ अधीती व्याकरणे।

**सुबोधिनी**–क्तस्येन्नंतस्यकर्मणि। इन्नंतस्य क्तस्य कर्मणि सप्तमी स्यात्। द्वितीयाबाधिका सप्तमी । अधीतमनेनेत्यधीतीव्याकरणे । भावे क्तप्रत्ययस्तत इष्टादिभ्य इति कर्तरीनूप्रत्यये कृते पश्चाद्गुणभूतक्रियया संबध्यमानं व्याकरणमनुक्तं कर्म ॥ इति सप्तमी ॥

**तत्त्वदीपिका**–अधीतमनेनेति विग्रहे इष्टादिभ्य इनिरनेनेति इनिः। इति सप्तमी ॥

**मू०–तादर्थ्येचतुर्थी ॥ संयमाय श्रुतंधत्ते नरो धर्म्माय संयमम् ॥ धर्म्मं मोक्षाय मेधावी धनंदानाय भुक्तये ॥**

सुबोधिनी–पुनश्चतुर्थीमाह । तादर्थ्येचतुर्थी । तस्मै कार्य्यायेदं तदर्थं तदर्थस्य भावस्तादर्थ्यं भावेतत्वयण इति यण् । कृत्तद्धितसमासेभ्यः संबंधाभिधानं भावप्रत्ययेनेति सिद्धांतस्ततोयणप्रत्ययेन संबंध उच्यते स च संबंधोऽनेकधा नतु कार्यकारणभाव एव तेन ब्राह्मणाय दधीत्यादौ चतुर्थी सिद्ध्यति । मैत्रः श्रुतं शास्त्रं धत्ते । कस्मै संयमाय । संयमं धत्ते ॥ कस्मै धर्माय । मेधास्ति यस्य स मेधावी बुद्धिमान् धर्मं धत्ते । कस्मै मोक्षाय । धनं धत्ते ॥ कस्मै दानाय । त्यागाय । भुक्तये भोगाय चेति ।

तत्त्वदीपिका–तादर्थ्य इति । तस्मै कार्यायेदं तदर्थं कारणम् तस्य भावस्तादर्थ्यंजनतोपकारकत्वरूपः संबंधो भिधीयते । उपकारकत्वं चानेकधातेन विप्राय मध्वित्यादावपि भवति ।

**मू०–तुमोऽप्रयुक्तस्यकर्म्मणि ॥ फलेभ्यो याति ।**

सुबोधिनी–तुमोऽप्रयुक्तस्यकर्मणि । क्रियावाचकप्रकृतिकमुपपदं यस्य तस्याप्रयुज्यमानस्य तुमन्तस्य कर्मणि चतुर्थी भवति । द्वितीयाबाधिकेयम् । फलेभ्यो याति । फलान्याहर्तुं यातीत्यर्थः । एवं स्वयंभुवे नमस्कृत्य । स्वयंभुवमनुकूलयितुमित्यर्थः ।

तत्त्वदीपिका–फलेभ्यो यातीति । फलान्याहर्तुं यातीत्यर्थः ।

**मू०–क्यबलोपेकर्म्मण्याधारेचपञ्चमी ॥ हर्म्यात्प्रेक्षते । आसनात्प्रेक्षते ॥**

सुबोधिनी–क्यबलोपेकर्म्मण्याधारेपंचमी । क्यबंतस्य गम्यमानार्थत्वात् प्रयोगे कर्म्मणि आधारे च पंचमी स्यात् । क्यब्ग्रहणमिह क्यबर्थपरं तेन क्त्वापि गृह्यते । प्रासादात्प्रेक्षते ॥ प्रासादमारुह्य । आसनात् प्रेक्षते । आसने उपविश्येत्यर्थः । आसने स्थित्वा वा ।

तत्त्वदीपिका–हर्म्यादिति । हर्म्यमारुह्येत्यर्थः ।

**मू०–कर्तृकार्य्ययोरक्तादौकृतिषष्ठी । कर्त्तरि कार्य्ये च षष्ठी क्तादिवर्ज्जिते कृति प्रयुज्यमाने । कृष्णस्य कृतिः । जगतः कर्ता कृष्णः ।**

सुबोधिनी–पुनःषष्ठीमाह । कर्तृकार्ययोरक्तादौ कृति षष्ठी । कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । क्तादीन् विना । कृष्णेन क्रियते इति कृष्णस्य कृतिः । क्तिरिति स्त्रियां भावेर्थे क्तिः । जगत् करोति इति जगतः कर्ता । तृवुणाविति कर्तरि तृप्रत्ययः । कर्तृकार्ययोः किं । शस्त्रेण भेत्ताऽत्र करणे मा भूत् । कृतिकिं । कृतपूर्वीकटमत्र तद्धिते माभूत् ॥ कृतपूर्वमनेनाति कारकादिति कर्तरीनिः ॥

तत्त्वदीपिका–कर्तृकार्य्ययोरिति । क्तादौ तु तृवुणोर्ग्रहणम् न तु तृ इत्यस्य तेनकटस्य कर्त्तेत्यपि । अनंतरस्य विधिर्निषेधो वेति न्यायादयं निषेधः । राज्ञां मतः ।

**मू०–गुणकर्म्मणिवा । नेताश्वस्य ग्रामं ग्रामस्य वा ।**

सुबोधिनी–गुणकर्म्मणिवा । अमुख्यकर्म्मणि षष्ठी स्यात् अक्तादौ कृति । नेताऽश्वस्य ग्रामं ग्रामस्य वा । कर्तरि तृप्रत्ययः । ग्राममिति गौणं कर्म ॥

**मू०–उभयप्राप्तौकृतिकर्तरिषष्ठीन** ॥ आश्चर्य्यो गवां दोहोऽगोपेन । स्त्रीप्रत्यययोरकाकारयोर्योगेनोक्तम् । भेदिका बिभित्सा वा रुद्रस्य जगतः ।

सुबोधिनी–उभयप्राप्तौकृतिकर्तरिषष्ठीन । उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन् स उभयप्राप्तिस्तस्मिन्नुभयप्राप्तौ कृत्प्रत्यये कर्तरि षष्ठी न स्यात् । कर्तृषष्ठीनिषेधकमिदं कर्मणि षष्ठी तु कर्तृकार्ययोरनेनैव । अगोपेन गावो दुह्यंते । दोहः इति भावे घञ् । स्त्रीप्रत्यययोरकाकारयोर्योगे नोक्तं । स्त्रियांक्तिरित्यधिकारे कृतयोरकाकारयोर्योगे कर्तरि कर्म्मणि चोभयत्र षष्ठी स्यात् । कर्तरि षष्ठी नेति पूर्वोक्तं न प्रवर्तते इत्यर्थः । भेदनंभेदिका । धात्वर्थनिर्देशे वुण् वक्तव्य इति वुण् युवोरनाकावित्यकादेशः । स्त्रियामाबतइत्याप् । काप्यत इतीत्वं । भेत्तुमिच्छा बिभित्सा । भिदेः सप्रत्यये नानिटिसे इति न गुणः प्रत्ययांतात् स्त्रियामङित्यङ् तत आप् । रुद्रेण जगत् भिद्यते इति भेदिका रुद्रस्य जगतः । भावे वुण् । रुद्रेण जगत् बिभित्स्यते इति बिभित्सा रुद्रस्य जगतः । भावेङ् ॥

तत्त्वदीपिका–उभयप्राप्ताविति । कर्तृकर्मप्राप्तावित्यर्थः ।

**मू०–शेषेकृतिवा** ॥ शब्दानामनुशासनमाचार्य्येणाचार्य्यस्य वा ।

सुबोधिनी–शेषेकृतिवा । शेषेऽकारभिन्ने कृन्मात्रप्रत्यये उभयप्राप्तौ कर्तरि षष्ठी वा स्यात् । आचार्येण शब्दा अनुशिष्यंतेऽनेनेति शब्दानामनुशासनमाचार्य्येणाचार्यस्य वा । साधनाधारयोरिति करणे ल्युट् ॥

**मू०–वर्तमानाधारार्थक्तस्ययोगेषष्ठी** ॥ राज्ञां मतः बुद्धः पूजितो वा । इदमेषां शयितम् ॥ क्तादौतु कुर्वन् कुर्वाणः । चकृवान् चक्राणः चक्रिर्वा सुखंहरिः । हरिन्दिदृक्षुः । अलंकरिष्णुर्वा । दैत्यान् घातुको हरिः । जगत्स्रष्ट्वा । सुखं कर्त्तुम् । विष्णुना हता दैत्याः । दैत्यान् हतवान् हरिः । ईषत्करः प्रपंचो हरिणा । सोमं पवमानः । आत्मानं मंडयमानः । वेदमधीयन् । कर्त्ता लोकान् ।

सुबोधिनी–वर्तमानाधारार्थक्तस्ययोगेषष्ठी । वर्तमानार्थस्याधिकरणवाचिनश्च क्तस्य योगे कर्तरि षष्ठी स्यात् । अक्तादाविति निषेधस्यापवादोयं विधिः । राज्ञांमतः । ञितामिति मतिबुद्धिपूजार्थेभ्यो वर्तमाने कर्म्मणि क्तः । पूजितो यः सुरासुरैरित्यादौ तु भूतेक्तो बोध्यः इदमेषां शयितमासितं भुक्तं वा । स्थैर्यगतिभक्षणार्थेभ्यः इत्यधिकरणे क्तः । क्तादय उच्यंते कर्तृकर्मणोः षष्ठीबाधकाः । हरिः सुखं कुर्वन् कुर्वाणः । शतृशानौतिपूतेवदिति शतृशानौ चकृवान् चक्राणः । क्वसुकानौ णबेवदिति क्वसुकानौ । आदृतः किर्द्विश्च भूते इति किः । मैत्रो हरिं दिदृक्षुः । सांताआशंसभिक्षिभ्य उरित्युः । अलंकरिष्णुः । इष्णुस्नुक्नु इति शीले इष्णुः । हरिर्दैत्यान् घातुकः । षाकोकणइत्युकण् । कृत्कर्तरीति कर्त्तरिप्रत्यया एते । जगत् सृष्ट्वा । पूर्वकाले क्त्वेति क्त्वा । सुखं कर्तुं । तुमुतदर्थायां भविष्यतीति तुम् । विष्णुना दैत्या हताः । हरिर्दैत्यान्हतवान् क्तक्तवतू इति क्तक्तवतू प्रत्ययौ । हरिणा प्रपंच ईषत्करः । ईषद्दुःसुषुखल्इति खल् । मैत्रः सोमं पवमानः । आत्मानं मंडयमानः । मंडि

भूषायां ताच्छील्यवयोवचनशक्तिष्वानशित्यानश् । मैत्रो वेदमधीयन् । इङ्धार्योरकृच्छ्रिणि कर्तरि शतृ इति शतृप्रत्ययः । हरिर्लोकान् कर्त्ता । शीलेतृन्निति तृन् ॥

**मू०–द्विषश्शतुर्वा ॥ मुरस्य मुरं वा द्विषन् ।**

सुबोधिनी–द्विषःशतुर्वा । द्विष अप्रीतौ इत्यस्मात् द्विषः शतृवेति सूत्रेण विहितो यः शतृप्रत्ययस्तस्य योगे कर्म्मणि वा षष्ठी स्यात् । क्तादित्वान्नित्ये निषेधे प्राप्ते विकल्पार्थमिदम्। अक्तादावित्ययं निषेधस्तु कारकषष्ठ्याएवानंतरस्य विधिर्वा प्रतिषेधो वेति न्यायात्। संबंधे षष्ठी तु स्यादेव। ब्राह्मणस्य कुर्वन्नरकस्य जिष्णुरित्यादि। एवं च आश्चर्यो गवां दोहो अगोपेनेत्यत्र संबंधविवक्षायां कर्तर्यपि षष्ठी भवतीति बोध्यम् ॥

**मू०–भविष्यत्यकस्यभविष्यदाधमर्ण्यार्थस्येनश्चयोगेषष्ठीन॥सतः पालकोऽवतरति । व्रजं गामी । शतं दायी ।**

सुबोधिनी–भविष्यत्यकस्यभविष्यदाधमर्ण्यार्थस्येनश्चयोगेषष्ठीन । तुमर्थे वुण् इति भविष्यत्यर्थेपि वुण् प्रत्ययो भवति । युवोरनाकावित्यकादेशः । तस्य भविष्यदर्थकस्याकस्य योगे कर्मणि षष्ठी न स्यात् । यस्तु कालसामान्ये तृवुणाविति वुणुक्तस्तत्र न निषेधः । यथा । ओदनस्य पाचकः । देशानां दर्शकः । आवश्यकाधमर्ण्ययोर्णिनिरित्यादिना इनिप्रत्ययो भविष्यत्यर्थे आधमर्ण्यर्थे च भवति तस्य योगे च कर्म्मणि षष्ठी न । सत इति शतृप्रत्ययांतं। सज्जनान्पालयिष्यतीति पालकः। भविष्यत्यर्थे वुण् । गमिष्यतीति गामी । भविष्यत्यर्थे णिनिः । ददातीति दायी । अधमर्णो ग्राहकः अधमर्णस्य भाव आधमर्ण्यं तस्मिन्नाधमर्ण्ये णिनिः ॥

**मू०–कृत्यानांकर्त्तरिवाषष्ठी ॥ मया मम सेव्यो हरिः ।**

सुबोधिनी–कृत्यानांकर्तरिवाषष्ठी । कृत्यसंज्ञकप्रत्ययानां योगे कर्तरि षष्ठी वा स्यात् । कर्तृकार्ययोरिति नित्यं प्राप्ते विकल्पार्थमिदं । हरिर्मया मम वा सेव्यः । षेवृ सेवायामस्मात् ऋहलाद्ध्यणिति कर्मणि ध्यण् । कर्तरि किं । माणवकः साम्नां वेदानां गेयः । स्वराद्य इति कर्तरि यप्रत्ययविधानादनुक्तं कर्म । तव्याऽनीयध्यण् य क्यप् एते पंच कृत्यप्रत्ययाः ॥

**मू०–उभयप्राप्तौकृत्येषष्ठीन ॥ नेतव्या व्रजं गावः कृष्णेन ।**

सुबोधिनी–उभयप्राप्तौकृत्येषष्ठीन । कर्तरि कर्मणि च प्राप्तौ सत्यां कृत्यप्रत्यययोगे उभयत्र षष्ठी न स्यात् । उभयप्राप्तौ कृतीति सूत्रेण कर्तरि षष्ठीनिषेधे सिद्धे कर्मणि षष्ठीनिषेधार्थमिदं । गुणकर्मणि वेति सूत्रं उभयप्राप्तिरहितस्थले । नेता ग्रामं ग्रामस्य वाश्वस्येत्यादौ चरितार्थं बोध्यम् ॥

**मू०–दूरनिकटार्थयोगेषष्ठीपंचम्यौ ॥ दूरं निकटं वा ग्रामस्य ग्रामाद्वा । दूरनिकटार्थेभ्योनामार्थमात्रेभ्योद्वितीयातृतीयापंचमीसप्तमी । ग्रामस्य ग्रामाद्वा दूरं दूरेण दूरात् दूरे निकटं वा ।**

सुबोधिनी–दूरनिकटार्थयोगे षष्ठीपंचम्यौ। षष्ठ्यां प्राप्तायां पक्षे पंचम्यर्थं वचनम् ॥

**मू०—द्यूतार्थस्यक्रयविक्रयरूपव्यवहारार्थस्यचदिवःकर्मणिषष्ठी॥** शतस्य दीव्यति ।

सुबोधिनी—द्यूतार्थस्यक्रयविक्रयरूपव्यवहारार्थस्यचादिवः कर्मणिषष्ठी । द्यूतमर्थो यस्य स द्यूतार्थस्तस्य द्यूतार्थस्य । क्रयश्चविक्रयश्चक्रयविक्रयौ क्रयविक्रयौ रूपं यस्य सः क्रयविक्रयरूपः क्रयविक्रयरूपश्चासौ व्यवहारश्च क्रयविक्रयरूपव्यवहारः क्रयविक्रयरूपव्यवहारोऽर्थो यस्य सः क्रयविक्रयरूपव्यवहारार्थस्तस्य क्रयविक्रयरूपव्यवहारार्थस्य च दिव्-धातोः कर्मणि षष्ठी स्यात् ॥ द्यूतार्थेत्यादि किं । ब्राह्मणं दीव्यति । स्तौतीत्यर्थः ॥

**मू०—वोपसर्ग्गस्य ॥** शतस्य शतं वा प्रतिदीव्यति ।

सुबोधिनी—वोपसर्गस्य । उपसर्गपूर्वकस्य दिवः कर्मणि वा षष्ठी स्यात् । पूर्वसूत्रापवादः॥

**मू०—षष्ठी हेतुप्रयोगे ॥** अन्नस्य हेतोर्व्वसति ।

सुबोधिनी—षष्ठी हेतुप्रयोगे । हेतुशब्दप्रयोगे षष्ठी स्यात् । हेतुशब्दे च हेतौ तृतीयायां प्राप्तायामनेन षष्ठी ।

**मू०—सर्वादेर्हेतुप्रयोगेहेतौद्योत्येचतृतीयाषष्ठ्यौ ॥** केन हेतुना वसति । कस्य हेतोः ।

सुबोधिनी—सर्वादेर्हेतुप्रयोगेहेतौद्योत्येचतृतीयाषष्ठ्यौ । सर्वादिगणात्तृतीयाषष्ठ्यौ तेन हेतुशब्दप्रयोगे तु तृतीयाषष्ठ्यौ च ।

**मू०—निमित्तपर्यायप्रयोगेसर्व्वादेस्सर्व्वाविभक्तयोऽसर्व्वादेस्तृतीयादयः ॥** को हेतुः । किम्प्रयोजनम् । कं हेतुं केन हेतुना । ज्ञानेन निमित्तेन हरिस्सेव्यः । ज्ञानाय निमित्ताय ।

सुबोधिनी—निमित्तपर्यायप्रयोगेसर्वादेःसर्वाविभक्तयोऽसर्वादेस्तृतीयादयः । सर्वादेर्निमित्तपर्यायप्रयोगे सर्वा विभक्तयः स्युः । असर्वादेस्तु प्रथमाद्वितीये नस्तः अन्याः स्युः । षष्ठी हेतुप्रयोगे सर्वादेर्हेतुप्रयोगे इति च सूत्रद्वयं गतार्थबोध्यम् ॥

तत्त्वदीपिका—चकारस्यानुक्तसमुच्चयार्थस्यानुवर्तनात् एतत्सर्वार्थलाभः । सर्वाविभक्तय इति । सर्वादेरित्यर्थः ।

**मू०—अन्योक्तेप्रथमा ॥** आख्यातकृत्समासतद्धितनिपातोक्ते कारके सम्बंधे च प्रथमा स्यात् । घटः क्रियते । हरिः करोति । कृष्णः कंसं हतवान् । कृष्णेन कंसो हतः । पचनो ऽग्निः । दानीयो विप्रः । उपाध्यायः । पचनी स्थाली । प्राप्तानन्दः । ऊढरथः । उपहृतपशुः । उद्धृतौदना । पीताम्बरः । वीरपुरुषः । कौंकुमम् । माथुरः । धनवान् । दृषद्वती । विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतमिति । क्रमादमुंनारद इत्यबोधि सः ॥ इतिविभक्त्यर्थाः ॥

सुबोधिनी–अन्योक्तेप्रथमा । कार्ये द्वितीया स्यात् । अन्योक्ते कार्ये तु प्रथमा । कर्तरि तृतीया । अन्योक्ते कर्तरि प्रथमा । करणे तृतीया अन्योक्तिकरणे प्रथमा । संप्रदाने चतुर्थी । अन्योक्ते संप्रदाने प्रथमा । अपादाने पंचमी । अन्योक्त अपादाने प्रथमा । संबंधे षष्ठी । अन्योक्ते संबंधे प्रथमा । अधिकरणे सप्तमी । अन्योक्ते अधिकरणे प्रथमा । आख्यातोक्ते यथा । घटः क्रियते मैत्रेण । आद्रुवीति कर्म्मण्यात् । यक् चतुर्ष्विति यक् । हरिः सुखं करोति । कर्त्तरिपंचेति कर्तरि परस्मैपदं तनादेरुवित्युप् । कृदुक्ते यथा । कृष्णः कंसं हतवान् । क्त-क्तवतू इति कर्तरि क्तवतुः । कृष्णेन कंसो हतः । कर्मणि क्तः पच्यतेऽनेनेति पचनोऽग्निः । साधनाधारयोर्युडिति करणे युट् । दीयतेऽस्मा इति दानीयः । तव्यानीयाविति संप्रदानेऽनीयः । उप समीपे गत्वा ऽधीयते ऽस्मादित्युपाध्यायः । संज्ञायामकर्तरि चेत्यपादाने घञ् । पच्यतेऽस्यामिति पचनी साधनाधारयोरित्यधिकरणे युट् । स्थाली हंडिका । समासोक्ते यथा प्राप्त आनंदो यं स प्राप्तानंदः । ऊढो रथो येन स ऊढरथोऽनड्वान् वृषभः । उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः । उद्धृतमन्नं यस्मात्स उद्धृतान्नः कटाहः । पीतमंबरं यस्य स पीतांबरो हरिः । वीराः पुरुषा यस्मिन् स वीरपुरुषो ग्रामः । तद्धितोक्ते यथा । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । तद्धितेनोक्तं कर्म अण्प्रत्ययः । मथुराया आगतः माथुरः अण् । धनमस्यास्तीति धनवान् । मांतोपधाद्धत्विनो इति वतुः । दृषद् उपलाः संत्यस्यामिति दृषद्वती भूमिः । निपातोक्ते यथा 'विषवृक्षोपि संवर्द्ध्य स्वयं छेत्तुमसांप्रतम्'इत्यत्र संवर्द्ध्येति भावे क्यप् क्यबंतस्य क्रियापदस्य विषवृक्षमि ति द्वितीयांतं कर्म तत्रासाम्प्रतमित्यनेन निपातेनोक्तत्वात् प्रथमा । स्वयमात्मना छेत्तुमसांप्रतं न युज्यते इत्यर्थः । क्रमादमुं नारद इत्यबोधि सः । अबोधीत्यत्र दीपजनबुधेति कर्तरीण् तस्य नारदमिति द्वितीयांतं कर्म तत्र इति निपातयोगात्प्रथमा । उक्तंच "यस्मिन्नर्थे विधीयंते लकारास्तद्धिताः कृतः । समासो वा भवेद्यत्र स उक्तः प्रथमा ततः ॥" इति ॥ इति कारकप्रक्रिया ॥

**तत्त्वदीपिका–अन्योक्ते प्रथमेति**। अन्येन उक्तम् अन्योक्तं तस्मिन्कार्ये इत्यादौ प्रत्येकं संबध्यते प्रत्येकाभिप्रायादेकवचननिर्देशः । कार्ये द्वितीया अन्योक्ते प्रथमा कर्त्तरि तृतीया अन्योक्ते प्रथमेत्यादि। **पचनोऽग्निरिति** । पच्यतेऽनेनेति करणे युट् । दानीय इति दीयतेस्मै इति विग्रहः । उपाध्यायादिति । उपसमीपे गत्वाऽधीयतेऽस्मादित्युपाध्यायः । पच्यतेऽस्यामिति पचनी। प्राप्त आनंदो यं स प्राप्तानंदः । ऊढः रथो येन सः। उपहृतः पशुर्यस्मै सः । उद्धृतः ओदनो यस्याः सा । पीतमंबरं यस्य । वीराः पुरुषा यस्मिन् । कुंकुमेन रक्तं । मथुराया आगतः । धनं विद्यते यस्य । दृषद्विद्यते यस्यास्सा । असांप्रतमिति । असांप्रतमित्यस्यायुज्यत इत्यर्थः । इदानीं द्विकर्मकोदाहरणमुच्यते । दुह्याच्पचदंड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषां । कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम् ॥ दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेव गौणं कर्मेति परिगणनं कर्तव्यमित्यर्थः । एतदर्थका अन्येपि ग्राह्याः । गां दोग्धि पय इत्यादि अत्र । गोगौणत्वं पश्चादपेक्षणात् पयआदिकन्तु मुख्यमादावेवापेक्षणात् । कर्मणि प्रत्ययेन तु दुहादीनां गौणं न्यादीनां तु मुख्यं कर्मोक्तं भवति । गौर्दोह्यते पयः । ग्राममजा नीयते इत्यादि । ण्यन्तानां कर्त्तरि गां दोहयति पयो गोपेन चैत्रः ॥ ण्यंतात्कर्मणि गौर्दोह्यते पयो गोपेन चैत्रेणेत्यादि ।

श्रीविद्यानगरस्थायिलोकेशकरशर्म्मणा ।
कृतायामिहटीकायां विभक्त्यर्थनिरूपणम् ॥
॥ इति विभक्त्यर्थनिरूपणम् ॥

**मू०—समासश्चान्वयेनाम्नाम् ॥** नाम्नामन्वये सति समासो भवति चकारात्कृत्तद्धितधातुसञ्ज्ञाप्रयोजकप्रत्यया अपि ।

**सुबोधिनी**—समासश्चान्वयेनाम्नाम् । नाम्नि च नामानि च नामानि तेषां नाम्नां । यद्यप्यविभक्ति नामेति संकेतितं तथाप्यत्र नाम्नामितिं विभक्त्यंतानामेव ग्रहणम् । समासप्रत्यययोरलुक् क्वचिदित्यादिज्ञापकात् । अत्र विधिरिति शेषः । प्रथमाद्यंतानां पदानां पदयोर्वाऽन्वये सति यो विधिः स समाससंज्ञोभवति । चकारस्त्वनुक्तसमुच्चयार्थः । तेन पदानामन्वये सत्येव कृत्तद्धितधातुसंज्ञाप्रयोजकप्रत्यया अपि भवंति । समानि एकभूतानि पदानि अर्था वाऽऽसते यस्मिन्स समासः । आस उपवेशने अस्मादाधारे घञ् । सममेकमर्थमासयंति दीपयंत्यस्मिन्समुदाये इति वा समासः । अम् दीप्तौ । ण्यंतादस्मात्स्वरादइत्याधारे ऽप्रत्ययः । संश्लिष्टानि एकीभूतानि पदानि अस्यंते उच्चार्यंतेऽस्मिन्निति वा समासः आधारे घञ् । समानं संश्लिष्टानां पदानामेकतामापन्नानामासनमुच्चारणमिति वा समासः । भावे घञ् । समसनं समासो वा संपूर्वादस्यतेर्भावे घञ् । अनेकपदस्य एकपदीभवनमित्यर्थः । समस्यते इति वा समासः । संज्ञायामकर्तरि चेति कर्मणि घञ् । अनु अंतर्मध्ये यंति पदार्था यस्मिन्नर्थे इत्यन्वयः । इणूगतावस्मात् स्वराद् इत्यऽप्रत्ययः । अनु अंतः पदार्थानामयनं गमनमिति वाऽन्वयः एकार्थीभावः । अनु सहान्येन यंति संबंधं लभंते पदानि यस्मिन्निति वान्वयः । स्वराद इत्याधारेऽप्रत्ययः । अनु सहान्येन ईयंते संबन्धम्प्राप्यंते पदान्यस्मिन्निति वान्वयः । सोन्वयो द्विधा । व्यपेक्षालक्षणःएकार्थीभावलक्षणश्चेति । तत्र व्यपेक्षालक्षणे विग्रहवाक्यमेव । एकार्थीभावलक्षणे तु वृत्तिरेव । तत्र स्वार्थपर्यवसायिनां पदानामाकांक्षासंनिधियोग्यत्वेषु सत्सु यः परस्पर संबंधः स व्यपेक्षालक्षणः । विशिष्टकार्यरूपः एकार्थीभावलक्षणः । विशेषेण गृह्यते ज्ञायते वृत्त्यर्थोऽनेनेति विग्रहः । विग्रहस्य वाक्यं विग्रहवाक्यम् । विग्रहवाक्यमपि द्विधा । लौकिकमलौकिकं चेति । प्रयोगार्हं परिनिष्ठितं साधु लौकिकं । यथा । राज्ञः पुरुष इति । व्यपेक्षालक्षणः संबंधो ह्यत्रैव । अपरिनिष्ठितं प्रयोगानर्हमसाधु अलौकिकं । यथा । राजन् ङस् पुरुष सुइति । समाससंज्ञादिकं चास्मिन्नेव प्रवर्तते इति । परार्थाभिधानं वृत्तिः । परः स्वार्थादन्यो योऽर्थः स परार्थः अथवा स्वस्मात् परस्य शब्दस्य योऽर्थः स परार्थः तस्याभिधानं प्रतिपादनं परार्थाभिधानं सा वृत्तिः । कृत्तद्धितसमासैकशेषयङाद्यंतधातुरूपा इति पंचवृत्तयः । वृत्तिरपि द्विधा । जहत्स्वार्थाऽजहत्स्वार्था चेति । जहाति स्वार्थं पदानि यस्यां सा जहत्स्वार्था । उक्तंच । वृत्तौ वर्तिपदानामानर्थक्यं पदे वर्णवदिति । यथा । वृषभ इत्यत्र वृषशब्दः सुकृतादेर्वाचकः भशब्दस्तु नक्षत्राणां वाचकः वृषभपदं तु बलीवर्दे शक्तं । शक्त्यैवयवानामानर्थक्यम् । एवं कवलशब्दे । को वाद्यकादेर्वाचकः वो वरुणवाचकः लः पृथिवीवाचकः कवलपदं ग्रासे शक्तं शक्तौ तेषामानर्थक्यं । तथा राजपुरुषशब्दयोः पृथक्शक्तयोरपि राजसंबंधिनि पुरुषे शक्तिः । तत्र राजपुरुषशब्दयोरानर्थक्यं तदन्याजहत्स्वार्था ॥

**तत्त्वदीपिका**—श्रीचंडिकायै नमः । **समासश्चान्वयेनाम्नामि**ति । समानि एकीभूतानि पदानि अर्था वा आसतेऽस्मिन्समासः आधारे घञ् । अनु अंतर्यंति पदार्था यस्मिन्नर्थे स अन्वयः आधारे स्वरादः । नाम्नामिति बहुवचनाद्द्वयोर्बहूनां च समासः अन्वये व्यपेक्षा परस्परापेक्षेति यावत् । चकारस्यानुक्तसमुच्चयार्थत्वादन्यवृत्तिलाभोपीत्याह । **चकरादिति । धातुसंज्ञाप्रयोजके**ति । धातुसंज्ञां प्रयोजयन्तीति तेषु सत्सु संज्ञा भवतीति भावः । ते च यङादयः तेऽप्यन्वये सत्येव भवंतीति बोध्यम् । यद्यपि नामसंज्ञा विभक्तिरहितस्यैव तथाप्यत्र

सविभक्तिकानामेव समासः । समासप्रत्यययोरिति लुग्विधानात् ज्ञापकात् । अत्राहुः । स्पष्टार्थपदानामिति तु नोक्तं । पचति भवति पश्यति धावतीत्यादावन्वयसत्त्वेन समासप्रसंगात् । सति च तस्मिन् यथेष्टं प्रयोगो न स्यात् इति । अत्रेदं वक्तव्यं । नाम्नामित्युपादानात् आख्यातनिराकरणमिति त्वदभिमतम् । एवं च पर्यभूषत् पचतभृज्जतेत्यादौ कथम् समासः । अथ नाम्नाम् इति योगम् विभज्य कतिपयातिङंतोत्तरपदः समासः स च छंदस्येव । आख्यातस्याख्यातेन क्रियासातत्यादौ च समास इति चेत्तदा तत्रतत्र तेनैव नियमेन विधानात् अन्यत्र प्राप्तिर्वारितैवेति किं तन्निराकरणाय यत्नांतरेणेति । यत्तु । अथार्थवद्विभक्तिविशिष्टानां पदानां समासो निरूप्यते इत्युक्तं प्राचा तत्रार्थवदिति व्यर्थं । विभक्तिविशिष्टत्वेनैव तल्लाभात् । किंच विभक्तिविशिष्टानामित्यपि व्यर्थं । पदग्रहणेनैव तदर्थप्रतीतेः । विभक्त्यंतं पदमित्यन्येन हि विभक्तिविशिष्टस्यैव पदसंज्ञाविधानात् ।

**मू०—पूर्वेऽव्ययेऽव्ययीभावः । अव्यये पूर्वपदे सति योऽन्वयस्सोऽव्ययीभावसञ्ज्ञकस्समासो भवति ।**

**सुबोधिनी**—पूर्वेऽव्ययेऽव्ययीभावः । अव्यये पूर्वपदे सति पदयोर्योन्वय एकार्थीभावलक्षणः सोऽव्ययीभावसंज्ञकः समासोस्ति । पूर्वग्रहणादेवाव्ययस्य पूर्वनिपातोऽव्ययीभावे । अन्यथाऽव्ययेइत्येव सिद्धे किं तेन ।

**तत्त्वदीपिका**—पूर्वेऽव्ययेऽव्ययीभाव इति । पूर्वे इत्यस्य ग्रहणसामर्थ्यादव्ययस्यापूर्वनिरासः । विभक्त्याद्यर्थेषु वर्त्तमान एवाव्यये पूर्वे सतीति बोध्यम् । अन्यथास्तिधन इत्यादावतिव्याप्त्यापत्तेः ।

**मू०—समासप्रत्यययोः ॥ समासे वर्तमानाया विभक्तेः प्रत्यये परे लुग्भवति । नामत्वात्स्यादिः ।**

**सुबोधिनी**—समासप्रत्यययोः । प्रतीयते कर्तृकर्माद्यर्थोऽनेनेति प्रत्ययः । इण् गतावस्मात् स्वराद इत्यप्रत्ययः । अथवा अय गतावस्मात्पचाद्यप्रत्यये प्रत्ययते प्रत्याययत्यर्थमिति प्रत्ययः । अन्तर्भावितण्यर्थः । समासश्च प्रत्ययश्च समासप्रत्ययौ तयोः । भावे सप्तमीयं । समासे सति प्रत्यये च सति वर्तमानायाः स्यादिरूपायाः विभक्तेर्लुक् स्यात् । ततः कृत्तद्धितसमासाश्चेति नामसंज्ञायां स्याद्युत्पत्तिर्भवतीत्यर्थः ॥

**तत्त्वदीपिका**—समासप्रत्यययोरिति । अत्रान्वयाभावेपि निपातानां द्वंद्वः समासः । यद्वा भावे सप्तमीयं । तथाच समासे सतिप्रत्ययेच सतीति बोध्यम् । प्रतीयते कर्त्राद्यनेनेति प्रत्ययः । इण्गतौ स्वरादः । ननूक्तार्थानामप्रयोग इति न्यायेनैव विभक्तेरप्रयोगो भविष्यति चशब्दादेरिव वृत्तौ तदर्थस्यान्तर्भावात् परार्थाभिधानस्यैव वृत्तिपदार्थत्वात्समासस्य च वृत्त्यंतर्भावात् इति किमनेनेति चेत्सत्यम् । राजाश्व इत्यादौ प्रत्ययलक्षणेन पदकार्यार्थं स्वाभाविक्या अपि निवृत्तेः सूत्रेण विधानात् ।

**मू०—सनपुंसकम् ॥ अव्ययीभावो नपुंसकलिङ्गो भवति । नपुंसकस्येति ह्रस्वः ।**

**सुबोधिनी**—सनपुंसकम् । तच्छब्देन संनिहितोऽव्ययीभावः परामृश्यते । स्त्री च पुमांश्च स्त्रीपुंसौ न स्त्रीपुंसाविति नपुंसकं । स्त्रीपुंस्शब्दस्य पुंसकभावः सहादित्वान्निपात्यते । नपुंसकत्वान्नपुंसकस्येति ह्रस्वविधानम् ॥

**तत्त्वदीपिका**—स नपुंसकमिति । तच्छब्दस्य पूर्वपरामर्शित्वादव्ययीभावो गृह्यते । न स्त्री न पुमानिति नपुंसकं स्त्रीपुंसशब्दस्य पुंसकभावो निपातनात्सहादित्वाद्वा । अत्राहुः । सन्निधानाद्वानुवृत्तिलाभे सिद्धे

स्पष्टार्थं सग्रहणमिति ध्येयमिति । अत्रेदमवधेयम् । कार्यिणः पूर्वकथनमग्रिमस्यैव कार्यत्वविज्ञानार्थमव्ययीभावानुवृत्तावपि विपरीतार्थप्रसंगः स्यात् । नपुंसकलिंगमव्ययीभावसंज्ञं स्यात् इति तन्निराकरणाय तच्छब्दस्यावश्यकत्वात् ।

**मू०-अव्ययीभावात् ॥ विभक्तेर्लुक् । अधिस्त्रि ।**

**सुबोधिनी**-अव्ययीभावात् । ननु अनव्ययमव्ययं भवतीत्यव्ययीमितिभावः । अभूततद्भावे इति च्विः ।ज्वलादेर्णइतिभवतेर्णप्रत्ययः । अथवा अनव्ययस्य अव्ययत्वेन भवनमस्मिन्नेकार्थीभावे इति अव्ययीभावः । भावे आधारे वा घञ् । एवमन्वर्थे संज्ञाविज्ञानात् अव्ययादितिलुक्प्राप्तिरस्त्येव किमर्थमेतत् । मैवं । तत्पुरुषादिसंज्ञावदस्या अन्वर्थत्वाभावात् । तत्त्वेतु योगविभागो मास्तु । अव्ययीभावादतोमनत इत्येकयोग एवास्तु लुक् तु अव्ययादित्यनेन सिद्ध एव। अतो योगविभाग एव ज्ञापयत्यत्रान्वर्थसंज्ञा नास्तीति । अस्माद्विभक्तेर्लुक् स्यात् । अथ पाणिनिसूत्रम् । अव्ययंविभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावाऽत्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यांतवचनेषु । विभक्त्यादिष्वर्थेषु विद्यमानमव्ययमन्वये सति सिबंतेन नाम्ना सह समस्यते । विभक्त्यर्थेऽव्यये यथा । स्त्रियामित्यधिस्त्रि । लौकिकविग्रहवाक्यमिदं । सप्तम्यर्थस्य द्योतकोऽधिः । स्त्रीङि अधि इत्यलौकिकंविग्रहवाक्यम् । अत्रनिपातेनोक्तेप्यधिकरणे समासविधानसामर्थ्यात् सप्तमी । अन्यैस्तु स्त्रियमधिकृत्येति व्याख्यातं तदसत् । अधिहरीत्यत्राधिकृत्येत्यर्थस्याऽप्रतीतेः । क्रमादमुं नारदइत्यबोधि स इत्यादौ समासो न । इतिशब्दस्य प्रकृतपरामर्शकत्वेन कर्मत्वमात्राऽनभिधायकत्वात् । एवं च विभक्तिशब्दः सप्तम्यां पर्यवस्यति । समीपार्थेऽव्यये यथा । कुम्भस्य समीपमिति उपकुम्भम् । समया ग्रामं । निकषा लंकाम् । आराद्वनादित्यत्र तु नाव्ययीभावः विनादियोगे द्वितीयेति ऋतेआदियोगे पंचमीति च विधानसामर्थ्यात् ॥

**तत्त्वदीपिका**-अव्ययीभावादिति । विभज्यते विविच्य बोध्यते कर्तृकर्माद्यर्थोनयेति विभक्तिः। योगरूढत्वात्कृष्णादिषु नातिव्याप्तिः। स्यादेः सिप इति वा वक्तुमुचितम्। कुंभकारइत्यत्र तु धातोरेव प्रत्ययविधानान्न स्यादेर्लुक् । अधिस्त्रि इति । स्त्रियामितीति विग्रहः । नित्यसमासोयम् । अस्वपदविग्रहत्वात् । तथा चोक्तम् । अविग्रहो नित्यसमासोऽस्वपदविग्रहो वेति । विग्रहश्च द्विविधः लौकिकोऽलौकिकश्च। परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः।

**मू०-अतोऽमनतः ॥ अदन्तादव्ययीभावाद्विभक्तेरलुक् । तं वर्जयित्वाऽमादेशः । कुंभस्य समीपमुपकुम्भम् ।**

**सुबोधिनी**-अतोऽमनतः । विशेषणत्वात्तदंतविधिः अदन्तादव्ययीभावात् । अनत इति षष्ठी । न अत् अनत् तस्यानतो विभक्तेरमादेशः स्यात् ।

**तत्त्वदीपिका**- अतोऽमनत इति । अत इत्यस्य विशेषणत्वात्तदन्तलाभ इत्याशयेनादन्तादित्युक्तम्। अलुक्क्वचिदित्यतोऽलुगित्यनुवर्तते । तथाच वाक्यभेदेन व्याख्यानं । ननु किं वाक्यभेदेनोभयविधानम् । अमादेशस्यैव लुग्बाधकतास्तु इतिचेन्न । टादावमादेशाभावे लुक् । प्रवृत्तेरनिवार्यत्वापत्तेः। अम्विधानन्तु सर्वादेशार्थम् । अनत इत्येकवचनं त्वव्ययीभावस्यैकवचनांतत्वाभिप्रायेण । सर्ववचनांतत्वपक्षे तु अनत इत्याद्युपलक्षणं वचनत्रयस्यापि ।

**मू०-वाटाङ्चोः ॥ अदंतादव्ययीभावाट्टाङ्योरम्वा । उपकुम्भेन वा कृतम् उपकुम्भम् उपकम्भे वा निधेहि । अनतः किम् उपकुम्भात् । मद्राणां**

समृद्धिस्सुमद्रम् । यवनानां व्यृद्धिर्दुर्य्यवनम् । मक्षिकाणामभावो निर्म्मक्षिकम् । हिमस्यात्ययोऽतिहिमम् । निद्रा सम्प्रति न युज्यते इत्यतिनिद्रम् । हरिशब्दस्य प्रकाश इतिहरि । विष्णोः पश्चादनुविष्णु । रूपस्ययोग्यमनुरूपम् । अर्थमर्थम्प्रति प्रत्यर्थम् । शक्तिमनतिक्रम्य करोति यथाशक्ति । हरेस्सादृश्यं सहरि । सहादेस्सादिरिति सहस्य सः । ज्येष्ठस्यानुपूर्व्येणेत्यनुज्येष्ठम् । चक्रेणयुगपत्सचक्रम् । सदृशस्सख्या ससखि । क्षत्राणां संपत्तिस्सक्षत्रम् । तृणमप्यपरित्यज्य सतृणमत्ति । अग्निग्रन्थपर्य्यन्तमधीते साग्नि ॥

सुबोधिनी–वाटाङ्च्योः । कुत्रचिद्भवति कुत्रचिन्न भवतीयं व्यवस्थितविभाषा । तस्या आश्रयणात् सुमद्रमुन्मत्तगंगमित्यादौ सप्तम्या नित्यमेवाऽम् । समृद्ध्यर्थे यथा ऋद्धेराधिक्यं समृद्धि । मद्राणां देशविशेषणां समृद्धिः सुमद्रम् । उत्तरपदार्थप्राधान्ये तु तत्पुरुषोपि भवति समृद्धा मद्रा इति सुमद्राः । वृद्ध्यर्थे यथा । विगता ऋद्धिर्व्यृद्धि । यवनानां व्यृद्धिरिति दुर्यवनं इह तेषामृद्ध्यभावे समासः । अर्थाभावे यथा । मक्षिकाणामभाव इति निर्मक्षिकं । संसर्गाऽभावेयं समासः । अत्यये यथा हिमस्यात्ययो ध्वंस इति अतिहिमम् । असंप्रत्यर्थे यथा संप्रतीत्यव्ययमिदानीमित्यर्थे युजिक्रियांतर्भावेण नञ्समासः सौत्रो बोध्यः । निद्रा संप्रति न युज्यते इत्यतिनिद्रम् । शब्दप्रादुर्भावे यथा । हरिशब्दस्य प्रकाश इति इतिहरि । षष्ठ्यंतेन हरिशब्देन सह प्रकाशार्थस्येतिशब्दस्य समासः । विष्णोः पश्चादिति अनुविष्णु । पश्चाच्छब्दस्य तु नायमव्ययीभावो भवति । ततः पश्चात् स्रंसते इतिभाष्यप्रयोगात् । सति चात्राव्ययीभावे पश्चाच्छब्दस्य पूर्वनिपातः स्यादित्यर्थः । यथार्थे यथा । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । तत्रानुरूपता योग्यता । रूपस्य योग्यमिति । अनुरूपं । पदार्थानां व्याप्तुमिच्छा वीप्सा । अर्थमर्थंप्रतीति प्रत्यर्थं । समासे वीप्सायाअंतर्भावान्न द्विः । वीप्सार्थकप्रतियोगे द्वितीयाविधानात् वाक्यमपि । पदार्थाऽनतिक्रमः पदार्थानतिवृत्तिः । शक्तिमनतिक्रम्येति यथाशक्ति । हरेः सादृश्यमिति वक्ष्यमाणेन सहादेः सादिरित्यनेन सहस्य सादेशः सहरि । आनुपूर्व्यार्थे यथा । अनुपूर्वस्य भाव इत्यानुपूर्व्यं भावेतत्वयण इति यण् । ज्येष्ठस्यानुपूर्व्येणेति अनुज्येष्ठं । यौगपद्ये यथा । चक्रेणयुगपत्समकालमिति सहादेरित्यनेन सहस्य सः सचक्रं । सादृश्ये यथा । यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येतदर्थं । सदृशः सख्या इति सहादेरित्यनेन सहस्य सः ससखि । संपत्तौ यथा । अनुरूप आत्मभावः संपत्तिः । क्षत्राणां संपत्तिरिति सहादेरित्यनेन सहस्य सः सक्षत्रम् । साकल्ये यथा । तृणमप्यपरित्यज्येति सहादेरिति सहस्य सः सतृणं साकल्येनात्तीत्यर्थः । अन्तवचने यथा । उच्यते तद्वचनम् अंतस्य वचनम् अंतवचनं तस्मिन् । अग्निशब्दो अग्निप्रतिपादकग्रंथेवर्तते अस्वपदविग्रहो नित्यसमासोयम् अग्निग्रंथपर्य्यंतमिति साग्नि अधीते ।

तत्त्वदीपिका–वाटाङ्च्योरिति । अव्ययीभावादिति किं । कृष्णश्रितेन । अदन्तात्किम् । अधिस्त्रि । वेत्यस्यव्यवस्थितत्वाश्रयणात्सुमद्रमुन्मत्तगंगमित्यादौ सप्तम्या नित्यमम्भावः । उपकुंभमिति कुंभस्य समीपेनेत्यर्थः । वृद्धिरिति विगता ऋद्धिः व्यृद्धिः । अत्यय इति । अत्ययो ध्वंसः । निद्रेत्यादि असंप्रत्यर्थेनातिशब्देनाव्ययीभावः । तत्रअसंप्रतीत्यस्य संप्रत्यभाव इत्यर्थः । भुक्तवतोपभोग्यवस्तुनो यो वर्तमानः कालस्तस्यैव निषेधः क्रियतइत्युक्तं केनचित्तत्र । नहि भूतले घटो नास्तीत्यनेन हि भूतलनिषेधः केनचिद्दूरीक्रियते ।

**मू०-यथाऽसादृश्ये ॥** यथाशब्दस्सादृश्येन समस्यते। यथा हरिस्तथा हरः।

सुबोधिनी-यथाऽसादृश्ये । असादृश्ये एव यथा शब्दः समस्यते । सादृश्ये इति यथार्थे इति वा प्राप्तं निषिध्यते । यथा हरिस्तथा हरः । यथाशब्दो हरेरुपमानत्वं द्योतयति ॥

**तत्त्वदीपिका-यथाऽसादृश्य इति।** असादृश्यइति छेदः। यथाशब्दस्याव्ययत्वादेव सिद्धेः सूत्रारंभसामर्थ्यात् योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः। योग्यता अनुरूपता। वीप्सापदार्थानां व्याप्तुमिच्छा। पदार्थानतिवृत्तिः पदार्थानतिक्रमः। उदाहरणानितु पूर्वमेवोक्तानि।

**मू०-अवधारणार्थेयावतिच ॥** अवधारणार्थे यावच्छब्दे प्रयुज्यमाने योऽन्वयस्सोऽव्ययीभावसञ्ज्ञकस्समासो भवति । यावन्तश्श्लोकास्तावन्तोऽच्युतप्रणामा यावच्छ्लोकम् ॥

सुबोधिनी-अवधारणार्थेयावतिच। यावच्छब्दस्याव्ययत्वादेव सिद्धे नियमार्थमिदम्। अवधारणे एव यावदव्ययं समस्यते नाऽन्यस्मिन्नर्थे। "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः। यत्परिमाणं येषां ते यावंतः। एतत् किं। यत्तद्भ्यइति वतुः । यत्तदेतदामित्यात्वं तत्परिमाणं येषांते तावंतः । तद्धितांतेन विग्रहः । समासस्त्वव्ययेनैवास्वपदविग्रहोयं। अवधारणेकिं। यावद्दत्तं तावद् भुक्तं नावधारयामि कियन्मया भुक्तमिति ॥

**तत्वदीपिका-अवधारणार्थे यावति चेति।** निश्चयार्थे यावच्छब्दे इत्यर्थः। यावच्छ्लोकमिति। तद्धितान्तेन विग्रहः समासस्त्वव्ययेनेत्यस्वपदविग्रहोयं। तथाच। यावच्छब्दस्याव्ययत्वादेव सिद्धे नियमार्थमिदमवधारणे एव यावदव्ययं। समस्यते नान्यस्मिन्निति । यावत्तावच्च साकल्येऽवधौमानेऽवधारणे इत्यनेकार्थत्वान्नियम उपपद्यते। अवधारणे किं। यावद्दत्तं तावद्भुक्तं नावधारयामि कियन्मयाभुक्तमिति।

**मू०-क्वचिदनव्ययपूर्वपदेऽप्यव्ययीभावः ॥** उन्मत्ता गङ्गा यस्मिन् देशे इत्युन्मत्तगङ्गम्। शाकस्य लेशः शाकप्रति। अक्षेण विपरीतंवृत्तमक्षपरि। शलाकया विपरीपतं वृत्तं शलाकापरि। एकपरि।

सुबोधिनी-क्वचिदनव्ययपूर्वपदेऽप्यव्ययीभावः । अन्यपदार्थे स्याद्यंतं नदीवाचिभिः सह नित्यं समस्यते संज्ञायाम् । उन्मता गंगा यस्मिन् पुंवद्भावः । तत् उन्मत्तगंगं देशः । बहुव्रीह्यर्थेऽव्ययीभावो नित्यसमासोयं। लेशार्थे प्रतिना सह स्याद्यंतं नित्यं समस्यते। लवलेशकणाणव इत्यमरः । शाकस्य लेश इति शाकप्रति । अक्षशलाकासंख्याः परिणा नित्यं समस्यंते। द्यूतव्यवहारे पराजये एवार्थे। अक्षेण विपरीतं वृत्तमिति अक्षपरि। पूर्वं यथावृत्तं तथा न वृत्तमित्यर्थः। शलाकया विपरीतंवृत्तमिति शलाकापरि । एकेन विपरीतं वृत्तमिति एकपरि। एते नित्यसमासाः ॥

**मू०-क्वचिद्वा ॥** अपविष्णोः, अपविष्णु। परिविष्णोः, परिविष्णु। बहिर्वनात्, बहिर्वनम् । प्राग्वनात्, प्राग्वनम्। आमुक्तेः, आमुक्ति । अभ्यग्निम्, अभ्यग्नि। प्रत्यग्निम् प्रत्यग्नि। वनस्य समीपमुपवनम्। गङ्गामनु अनुगङ्गम्।

तिष्ठन्ति गावो यस्मिन्काले स तिष्ठद्गु । आयतीगवम् । पारे गङ्गायाः पारेगङ्गम् । मध्ये गङ्गायाः, मध्येगङ्गम् । इत्यादयोनिपात्याः । खले यवा यस्मिन् काले खलेयवम् । द्वौ मुनीवंश्यौ द्विमुनि । त्रिमुनि व्याकरणस्य । सप्तगङ्गास्समाहृताः सप्तगङ्गम् । द्वियमुनम् ।

सुबोधिनी—अथ वैकल्पिकाः समासाः कश्चिद्वा । अपपरिबहिरंचूत्तरपदाः पंचम्या सह समस्यंते वा । अपपरी वर्जनार्थकौ ग्राह्यौ । बहिर्योगे तु ऋतेआदित्वात् पंचमी सा सर्वत्र न । करस्यकरभो बहिरित्यमरोक्तेः । अञ्चुधातुरुत्तरपदं यस्य सोंचूत्तरपदः । यथा । प्राग्वनमिति । मर्यादाभिविध्यर्थकाङ् पञ्चम्यंतेन वा समस्यते । आमुक्ति संसारः । आबालं हरिभक्तिः । अभिप्रती अभिमुख्यार्थकौ चिह्नवाचिना सह वा समस्येते । अभ्यग्नि शलभाः पतंति । अत्र लक्ष्यलक्षणभावे विनादित्वात् द्वितीया । दैर्घ्यसमीपार्थकोऽनुश्चिह्नवाचिना षष्ठ्यंतेन सह वा समस्यते । वनस्य समीपमिति अनुवनं अशनिर्गतः । लक्षणभूतस्य वनस्य समीपं गत इत्यर्थः । गंगाया अनु इति अनुगंगं सेना । गंगादैर्घ्यसदृशदैर्घ्योपलक्षितेत्यर्थः । समासाऽभावे गंगामनु । विनादित्वात् द्वितीयैव । समासे तु विध्यर्थत्वात्षष्ठी । तिष्ठंति गावो यस्मिन्काले स तिष्ठद्गु दोहनकालः । गोरिति ह्रस्वः । निपातनाच्छतृप्रत्ययः । आयंत्यो गावो यस्मिन्काले स आयतीगवं संध्या । निपातनाट्टप्रत्ययः गोऽवित्यत्र् पुंवद्भावाभावश्च । खले यवा यस्मिन् काले स खलेयवं । सप्तम्या अलुग् निपातनात् । इह बहुव्रीहिविषये अव्ययीभावः । पारमध्यशब्दौ षष्ठ्यंतेन वा समस्येते एदन्तत्वं चानयोर्निपात्यते । गंगायाः पारमिति पारेगंगं । गंगायामध्यामिति मध्येगङ्गं । पक्षे षष्ठीतत्पुरुषोपि । गंगायाः पारमिति गंगापारमेवं गंगामध्यं । वाक्यमपि गंगायाः पारं । गंगाया मध्यमिति । वंश्यवाचिना सह संख्या वा समस्यते । वंशः संतानः स द्विविधो विद्यया जन्मना च तत्रभवो वंश्यः । द्वौ मुनीवंश्यौ पाणिनिकात्यायनाविति द्विमुनि । त्रयो मुनयो वंश्या इति त्रिमुनि व्याकरणस्येति संबंधे षष्ठी । अन्यपदार्थप्राधान्यविवक्षायान्तु त्रयो मुनयो वंश्या यस्मिन् त्रिमुनि । बहुव्रीहिरेवायं । जन्मना वंश्यो यथा । एकविंशतिर्भारद्वाजवंश्या इति एकविंशतिभारद्वाजं । नदीवाचिना सह संख्या समस्यते । समाहारार्थे । सप्त गंगाः समाहृताः सप्तगंगा इति सप्तगंगम् । द्वे यमुने समाहृते इति पुंवद्वेति पुंवद्भावः द्वियमुनं । द्विगोरपवादोयमव्ययीभावः ।

तत्त्वदीपिका—इत्यादयो निपात्याइति । सहादित्वादितिभावः ।

सू०—टाडकाः ॥ समासे सति ट अ ड क इत्येते प्रत्यया भवन्ति । शरदस्समीपमुपशरदम् । प्रतिविपाशम् ।

सुबोधिनी—अथ समासांतप्रत्ययानाह । समासस्य समासोत्तरपदस्य वा चरमाऽवयवाः समासान्ताइत्यर्थः ॥ टाडकाः । टश्च अश्च डश्च कश्च ते टाडकाः समासे इत्यनुवर्तते टकार ईबर्थः अकारोऽदंतत्वफलकः डष्टिलोपार्थः कः श्रवणार्थः नत्वित्संज्ञकः प्रयोजनाऽभावात् । अव्ययीभावे शरदादिभ्यष्टप्रत्यय एव । शरद् विपाश् अनस् मनस् उपानह् दिव् हिमवत् अनड्डह् दिश् दृश् विश् चेतस् चतुर् त्यद् तद् यद् किम् एते शरदादयः । शरदःसमीपमिति उपशरदं टः । विपाशं प्रतीति प्रतिविपाशं । विनादित्वात् प्रति योगे द्वितीया । विपाशा तु विपाट् स्त्रियामित्यमरः ॥

तत्त्वदीपिका-टाडकाइति। टश्च अश्च डश्च कश्चते टाडकाः समासश्चान्वयइत्यतोनुवृत्तं समास इति सप्तम्या विपरिणम्यत इत्याह समासे चिकीर्षिते नाम्नष्टादयो भवंतीति बोध्यम्। ततो विभक्तिं विधाय टायन्तेन समासः। तेन समासस्यांतावयवष्टादयः ततश्चोपशरदमित्यादावव्ययीभावस्यादन्तत्वाद्विभक्तेरम् सिध्यति। अन्यथा अव्ययीभावात् परत्वेनाकारस्यादन्तत्वाभावान्नाम् सिध्येदिति भावः। टस्त्वीवर्थः। राजगवीत्यादौ।

**मू०-जरायाजरस्॥ उपजरसम्॥ अक्षिप्रति प्रत्यक्षम्। अक्ष्णः परं परोक्षम् परशब्दस्य परस्। परोक्षइति ज्ञापकात्। अन्वक्षम्। उपराजम्। क्लीबेवाऽन्लोपश्च। उपचर्म्मम्, उपचर्म। झसान्ताद्वा। उपसमिधम्, उपसमित्,। नद्यादिभ्यो वा। उपनदम्, उपनदि।**

॥ इत्यव्ययीभावः॥

सुबोधिनी-जरायाजरस्। अव्ययीभावे जराशब्दस्य जरसादेशष्टप्रत्ययश्च। जरायाः समीपमिति उपजरसं टः। प्रतिपरसमनुभ्योऽक्षिशब्दादव्ययीभावे टः। अक्षिप्रतीति प्रत्यक्षं। यस्येतीकारलोपः। अक्ष्णः परविषय इति परोक्षं। परस्य परसादेशे सस्य विसर्गे च कृतेऽतोत्युरित्युत्वं ओत्वे एदोतोत इत्यल्लोपः परोक्षं। अक्ष्णो योग्यम् इति समक्षम्। अक्ष्णः पश्चादिति अन्वक्षम्। अन्नंतादव्ययीभावाट्टः। राज्ञः समीपमिति उपराजं। नोवेति टिलोपः। आत्मनि इति अध्यात्मं। वैकल्पिकं टप्रत्ययमाह। अव्ययीभावे नांतनपुंसकाद्गिरिशब्दात् झभप्रत्याहारांतात् नदीपौर्णमास्या ग्रहायणीभ्यश्च वा टः। चर्मणः समीपमिति उपचर्म्मम्, उपचर्म। गिरेः समीपमिति उपगिरं, उपगिरि। समिधः समीपमिति उपसमिधं, उपसमित्। नद्याः समीपमिति उपनदं। नपुंसकस्येतिह्रस्वे उपनदि। पौर्णमास्याः समीपमिति उपपौर्णमासम्, उपपौर्णमासि। आग्रहायण्याः समीपमिति उपाग्रहायणम्, उपाग्रहायणि॥

इत्यव्ययीभावः॥

**मू०-अमादौतत्पुरुषः॥ द्वितीयाद्यन्ते पूर्वपदे सति योऽन्वयस्स तत्पुरुषसंज्ञस्समासो भवति। ग्रामं प्राप्तो ग्रामप्राप्तः। कृष्णाश्रितः। कूपपतितः। ग्रामगतः। खट्वारूढः। मुहूर्तसुखम्। दुःखातीतः। ग्रामगमी। अन्नबुभुक्षुः। दात्रेण छिन्नदात्रच्छिन्नं। मासेन पूर्वो मासपूर्वः मातृसदृशः। पितृसदृशः। माषोनम्। वाक्कलहः। आचारनिपुणः। गुडमिश्रः। मासावरः। हरित्रातः। नखभिन्नः। दध्नोदनः। गुडधानाः। यूपाय दारु यूपदारु। अर्थस्य विशेष्यलिंगता। द्विजायायंद्विजार्थः सूपः। द्विजार्था शाटी। द्विजार्थं पयः। भूतबलिः। गोहितम्। गोसुखम्। गोरक्षितम्। चोराद्भयम्। चोरभयम्। सुखापेतः। दुःखापोढः। व्याघ्रभीतिः। राज्ञः पुरुषः राजपुरुषः। द्विजयाजकः। देवपूजकः।**

सुबोधिनी-अमादौतत्पुरुषः। अम् आदिर्यस्य सोऽमादिस्तस्मिन्नमादौ प्रत्यये सुप्पर्य्यंते प्रत्ययग्रहणे तदंतग्रहणमिति परिभाषायामाद्यंते द्वितीयाद्यंते पूर्वे इत्यनुवर्तते

पूर्वपदे सति यो नाम्नोऽन्वयः स तत्पुरुषसंज्ञः स्यात् । पूर्वेइत्युक्तत्वात् द्वितीयाद्यंतस्य पूर्वनिपातश्च । श्रितातीतपतितगतात्यस्तप्राप्तापन्नगामिन्बुभुक्षुभिःसह द्वितीयांतं समस्यते श्रितादिष्वापन्नांतेषु । गत्यर्थादकर्मकादिति कर्तरि क्तः । श्र्यादीनांगतिविशेषवाचित्वात् । कृष्णं श्रित इति कृष्णश्रितः । अक्ताविति षष्ठीनिषेधः । कर्म्मणिक्तप्रत्यये तु कृष्णः श्रितो येनेति बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तानामिति श्रितस्यपूर्वनिपाते समासांतकप्रत्यये च श्रितकृष्णक इति । दुःखमतीत इति दुःखातीतः । अतिपूर्वकादिणेः कर्तरि क्तः । पत गतौ चुरादिरदंतोऽस्मात्कर्तरि क्तः। कूपपतितः। ग्रामगतः। तुहिनमत्यस्त इति तुहिनात्यस्तः अत्यासो व्यतिक्रमः । सोपि गतिविशेषएवेति कर्तरि क्तः । सुखप्राप्तः । दुःखापन्नः । ग्रामं गमीति ग्रामगमी । गमेरनिरित्यौणादिको भविष्यत्यकस्योति सुत्रेण षष्ठीनिषेधात्कर्म्मणि द्वितीया। अन्नं बुभुक्षुरिति। सांताशंसभिक्षिभ्य इत्युप्रत्ययः।द्वितीयांतः खट्वाशब्दः कालवाची च क्तांतेन समस्यते खट्वारूढो जाल्मः । नित्यसमासोयं जाल्मोऽसमीक्ष्यकारीस्यादित्यमरः। मासं प्रमित इति मासप्रमितः। माङ्माने कर्तरि क्तः। अत्यंतसंयोगे द्वितीयांतः कालवाची स्यात्तेन समस्यते।मुहूर्तसुखमिति मुहूर्तंसुखं कालाध्वनोरितिद्वितीया। तृतीयांतं तदर्थकृतगुणवचनेन सह समस्यते । गुणमुक्त्वा यो द्रव्यमुक्तवान् स गुणवचनः । कर्तरियुट् । गुणश्चात्र सत्त्वे निविशते इत्यादिलक्षणलक्षितो गृह्यते । छिन्नमस्त्यस्मिन्निति छिन्नं दात्रेण छिन्नमिति दात्रच्छिन्नं करणे तृतीया । छिदिर् द्वैधीकरणे अस्माद्भावे क्तः छिन्नशब्दः क्रियारूपापन्ने गुणे वर्तित्वा पश्चात् छिन्नमस्त्यस्मिन्निति छिन्नमित्यस्त्यर्थे लक्षणया तद्वति द्रव्ये वर्तते इति गुणवचनः । तृतीयांतं पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णावरैः सह समस्यते । तुल्यार्थयोगे इति समसदृशयोगे तृतीया । अन्यैर्योगे तु समासविधानसामर्थ्यात् तृतीया । हेतौ तृतीया वा । माषेण ऊनम् इति माषोनं । माषेण विकलइति माषविकलः। वाचाकलह इति वाक्कलहः । आचारेण निपुण इति आचारनिपुणः । गुडेन मिश्र इति गुडमिश्रः । आचारेण श्लक्ष्ण इत्याचारश्लक्ष्णः । मासेन अवरोऽर्वागिति मासावरः । तृतीयांतं कर्तृकरणकृदंतेन सह बहुलं समस्यते । हरिणा त्रात इति हरित्रातः । कर्मणि क्तः कर्तरितृतीया । नखैर्भिन्न इति नखभिन्नः कर्म्मणिक्तः करणे तृतीया । वातेन छेद्यमिति वातच्छेद्यं तृणं शक्यार्थे यः । काकेन पेयेति काकपेया नदी शक्यार्थे यः । बहुलग्रहणात् क्वचिन्न । दात्रेण लूनवान् । हस्तेन कुर्वन् । संस्कारकद्रव्यवाचकं तृतीयांतमन्नेन सह समस्यते । दध्ना उपसिक्त ओदन इति दध्योदनः । उपसेकक्रियाद्वाराऽन्वयः । "भिस्सा स्त्री भक्तमंधोन्नमोदनोस्त्रीत्यमरः" । गुडेन मिश्रा धानाः गुडधानाः । मिश्रणक्रियाद्वाराऽन्वयः । धाना भ्रष्टयवे स्त्रियामित्यमरः । तदर्थार्थबलिहितसुखरक्षितैः सह चतुर्थ्यंतं समस्यते । यूपाय दारु इति यूपदारु । तादर्थ्ये चतुर्थी । अर्थेन नित्यसमासो विशेष्यलिंगता च । एतद्वार्तिकाभावे तु विकल्पाधिकारात् पक्षेद्विजायार्थ इत्यपिस्यात् । द्वंद्वतत्पुरुषयोः परपदस्यैवेति वक्ष्यमाणेन सर्वत्र पुंलिंगप्रयोगश्च स्यादर्थशब्दस्य पुंलिंगत्वादत इदमुक्तम् । भूतेभ्यो बलिरिति भूतबलिः । गोभ्यो हितमिति गोहितम् । गोभ्यः सुखमिति गोसुखं । गोभ्योरक्षितमिति गोरक्षितं।भयभीतिभीभिरपेतापोढमुक्तपतितापत्रस्तैश्चसहपंचम्यंतं समस्यते चोराद्भयमिति चोरभयम् । एवं वृकभीतः । सिंहभीतिः । राजभीः । सुखादपेत इति सुखापेतः । एवं कल्पनापोढः । चक्रमुक्तः । स्वर्गपतितः । तरंगापत्रस्त इति । राज्ञः पुरुष इति राजपुरुषः । संबंधे षष्ठी । राजन् अम् पुरुष सि इत्यलौकिकविग्रह समासे कृते समा-

सप्रत्ययोरितिविभक्तेर्लुकि अंतर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नाम्नो नोलोपशिति नलोपः। याजकादिभिः सह षष्ठ्यंतं समस्यते । याजकपूजकपरिचारकपरिवेषकस्नातकअध्यापकउत्पादकहोतृपोतृभर्तृनमृगणकयाजदकादयः ॥

तत्त्वदीपिका-अमादौ तत्पुरुषइति । अम् आदिर्यस्य स अमादिःप्रत्ययः सुप्पर्यंतः। पूर्वेऽव्यये इत्यतः पूर्वे इत्यनुवर्त्तते । अम्द्वितीयैकवचनमेव गृह्यते । नत्वमोगत्यादिकर्त्तवाची व्याख्यानात् । तस्यचप्रत्ययत्वात्प्रत्ययग्रहणेच तदंतलाभ इत्याशयेनाह । द्वितीयाद्यंत इति । यत्तु वासुदेवेन अम्आदिर्येषांते अमादय इत्युक्त्वा द्वितीयाद्याः सप्तम्यंता विभक्तयस्तासां चेत्याद्युक्तं तदविचारैः पुंलिंगस्य समासार्थत्वेन स्त्रीलिंगस्य विशेष्यत्वानुचितत्वात् बहुवचनांतविग्रहस्यायुक्तत्वाच्च ।

**मू०-क्वचित्षष्ठीनसमस्यते ॥ नृणां द्विजः । सतां षष्ठः । काकस्य कार्ष्ण्यम् । फलानां सुहितः । इदमेषां शयितम् । अपां स्रष्टा । ओदनस्य पाचकः । भवतश्शायिका ॥**

सुबोधिनी-क्वचित्षष्ठीनसमस्यते । निर्द्धारणे या षष्ठी सा न समस्यते । नृणां द्विज इत्यत्र क्रियागुणजातिसंज्ञाभिरिति षष्ठी । पूरणगुणतृप्त्यर्थैः सह षष्ठ्यंतं न समस्यते । पूरणार्थे सतां षष्ठः । षण्णां संख्यापूरणः षष्ठः । षट्कतिकतिपयचतुर्भ्य इति थट् । गुणार्थे । काकस्य कार्ष्ण्यं । कृष्णस्य भावः कार्ष्ण्यम् । अनित्योऽयं गुणेन निषेधः । संज्ञाप्रमाणमर्थगौरवं बुद्धिमांद्यमित्यादिनिर्देशात् । फलानां सुहितस्तृप्तः । करणे षष्ठी । तृतीयासमासस्तु स्यादेव । अधिकरणवाचिना क्तेन षष्ठी न समस्यते । इदमेषामासितं गतं भुक्तं वा । स्थैर्यगतिभक्षणार्थेभ्य इत्यधिकरणे क्तः। एषामिति कर्तरिषष्ठी। वर्तमानाधारार्थक्तस्येत्यनेन कर्त्रर्थकाभ्यां त्रकाभ्यां सह षष्ठी न समस्यते । अपां स्रष्टा । ओदनस्य पाचकः । तृवुणाविति कर्त्तरि तृवुण्प्रत्ययौ । अपामिति ओदनस्येति कर्तृकार्ययोरित्यनेन कर्म्मणि षष्ठी । कर्तरि षष्ठ्यन्तमकेन सह न समस्यते । भवतः शायिका आधारे वुण् प्रत्ययो भवतीति कर्त्तरि षष्ठी । वर्तमानार्थक्तेन सह षष्ठी न समस्येते । राज्ञां मतो बुद्धः पूजितो वा । राज्ञामिति कर्तरिषष्ठी ॥

**मू०-क्वचिद्माद्यन्तस्यपरत्वम् ॥ रायमतिक्रान्तोऽतिराः । नावमतिक्रान्तोऽतिनौः । पूर्वम्भूतो भूतपूर्वः । कायस्य पूर्वः पूर्वकायः । अपरकायः । अधरकायः । उत्तरकायः । अह्नो मध्यं मध्याह्नः । सायाह्नः । मध्यरात्रः । पश्चिमरात्रः । अर्द्धपिप्पली ।**

सुबोधिनी-क्वचिदमाद्यंतस्यपरत्वम् । तत्पुरुषे क्वचिदमाद्यंतस्य पदस्य परनिपातो भवति। रायमतिक्रान्त इति अतिराः । अत्यादयः क्रान्ताद्यर्थे द्वितीययेति समासः । रैस्भिरित्यनेनाकारः । पूर्वंभूत इति भूतपूर्वः । पूर्वाऽपराधरोत्तरावयवाएकसंख्याऽव्ययविना समस्यंते । कायस्य पूर्वं इति पूर्वकायः । कायस्यापरो देशः अपरकायः । कायस्याधरो देश इति अधरकायः । कायस्योत्तरो देश इति उत्तरकायः । एकदेशः कालवाचिना समस्यते । अह्नो मध्यमिति मध्याह्नः । राजाहःसखिभ्यइति टः नीवित्युपधालोपः । अह्नः पूर्वं इति पूर्वाह्णः। अह्नः सायमिति सायाह्नः । स्यतेर्घञि अवसानवचनः सायशब्दः रात्रेर्मध्यमिति मध्यरात्रः

रात्रेः पश्चिममिति पश्चिमरात्रः । टाडकाइत्यनेनाऽप्रत्ययः । नपुंसकोर्द्धशब्दोवयविना सह समस्यते । पुंस्यर्द्धोऽर्द्धं समेंऽशके इत्यमरः । अर्द्धं पिप्पल्या इति अर्द्धपिप्पली । द्वंद्वतत्पुरुषयोरिति परवल्लिंगत्वात् स्त्रीत्वम् । भाष्ये तु अर्द्धपिप्पलीति कर्मधारये उक्तम् । समुदाये दृष्टा शब्दा अवयवेष्वपि वर्तंते इति न्यायात् ॥

तत्त्वदीपिका—क्वचिदमाद्यंतस्येति । अंते भवोऽन्त्यः स्वरेषु अंत्यः स्वरः स आदिर्यस्य सः अंत्यस्वरादिष्टिरिति ज्ञापकादिति भावः ।

मू०—क्वचिद्वा ॥ द्वितीयं भिक्षायाः द्वितीयभिक्षा, भिक्षाद्वितीयम् । तृतीयभिक्षा, भिक्षातृतीयम् । चतुर्थभिक्षा, भिक्षाचतुर्थम् । तुरीयभिक्षा, भिक्षातुरीयम् । जीविकाप्राप्तः, प्राप्तजीविकः । आपन्नजीविकः जीविकापन्नः ।

सुबोधिनी—क्वचिद्वा । द्वितीयतृतीयचतुर्थतुर्याण्येकदेशिना सह समस्यंते अमाद्यंतस्य परनिपातश्च वा । द्वितीयं भिक्षाया इति द्वितीयभिक्षा, भिक्षाद्वितीयं । तृतीयं भिक्षाया इति तृतीयभिक्षा, भिक्षातृतीयं । चतुर्थं भिक्षाया इति चतुर्थभिक्षा भिक्षाचतुर्थं । तुरीयं भिक्षाया इति तुरीयभिक्षा, भिक्षातुरीयं । द्वितीयांतस्य प्राप्तापन्नयोः परयोर्वा परनिपातः । जीविकां प्राप्त इति जीविकाप्राप्तः प्राप्तजीविकः । अन्यार्थे इति ह्रस्वः । द्विगुप्राप्तापन्नेति वक्ष्यमाणेन परवल्लिंगं न कालवाचकस्य ॥

तत्त्वदीपिका—प्राप्तजीविक इति । तत्पुरुषसंज्ञाविधिसामर्थ्यात्तया व्यवहारोनुमातव्यः स च द्वंद्वतत्पुरुषयोः परपदस्यैव लिंगमित्यादि तस्य च ज्ञापकासिद्धत्वाज्ज्ञापकासिद्धं न सर्वत्रेति वचनादत्र न परस्य लिंगम् ॥

मू०—परिमाणवतासहसमस्यतेअमाद्यंतस्यपरनिपातश्चतत्पुरुषे ॥

सुबोधिनी—परिमाणवतासहसमस्यतेऽमाद्यंतस्यपरनिपातश्चतत्पुरुषे । परिमीयते परिच्छिद्यते येन तत्परिमाणं परिमाणमस्यास्तीति परिमाणवान् तेन । यस्य हि जननादूर्ध्वं मासो जातः स मासजात उच्यते । इह विग्रहे षष्ठीनिर्दिष्टस्य प्राधान्यं द्योतयितुं यस्येत्युक्तं । यद्यपि मासो जातो यस्येति बहुव्रीहिणापि सिध्यति बहुव्रीहौ क्वचिन्नेति क्तांतस्य पूर्वनिपातनिषेधात् तथापि जातवतो मासो यस्येति स मासजातवानित्याद्यर्थमिदम् ।

मू०—समासेक्वचिदैकपद्यंणत्वहेतुः ॥ शराणां वनं शरवणम् । आम्राणां वनमाम्रवणम् । प्लक्षवणम् । शूर्पणखा ।

सुबोधिनी—समासेक्वचिदैकपद्यंणत्वहेतुः । एकपदस्य भाव ऐकपद्यम् । समासे क्वचित् णत्वस्य हेतुरस्ति । शराणां वनमिति शरवणं । प्लक्षाणां वनमिति प्लक्षवणम् । आम्राणां वनमिति आम्रवणं । शूर्पणखा । अत्र संज्ञायां णत्वम् ।

मू०—क्वचिद्वा ॥ माषवापिणौ । माषवापिनौ । व्रीहिवापाणि । व्रीहिवापानि व्रीहिवापेण । व्रीहिवापेन । सुरापाणम् । सुरापानम् । अक्षेषु शौण्डोऽक्षशौण्डः ।

सुबोधिनी—क्वचिद्वा । क्वचित्समासे णत्वं वा भवति । माषान् वारंवारं वपतीति माषवापी । बहुलमाभीक्ष्ण्ये इति णिनिः । व्रीहीन्वपतीति कार्येणित्यण् व्रीहिवापं तानि व्रीहिवापाणि । णत्वाभावे व्रीहिवापानीति । व्रीहीन् वारंवारं वपतीति व्रीहिवापी तस्मै व्रीहिवापिणे । शौंडधूर्त-

कितवव्याडप्रवीणसंवीताधिअन्तर्पटुपण्डितकुशलनिपुणसिद्धशुष्कपक्वबंधैः सह सप्तम्यंतं समस्यते । अक्षेषु शौंडः प्रवीण इति अक्षशौंडः ॥

**मू०–पात्रेसमितादयोनिपात्याः ॥ पात्रे समितः । गेहे नर्दी ।**

सुबोधिनी–पात्रेसमितादयोनिपात्याः । पात्रेसमितादयः शब्दा निंदार्थे निपात्यंते । भोजनसमये एव संगता भवंति नतु कार्य्ये पात्रेसमिताः । सम्पूर्वादिणः क्तः । गेहेनर्दी । नर्द शब्दे अस्माण्णिनिः सप्तम्यालुगत्र । एषां समासांतरे प्रवेशो न भवतीत्यर्थः ॥

तत्त्वदीपिका– पात्रेसमित इति । भोजनसमय एव संगतो नतुकार्यकाल इत्यर्थः । अत्रसतम्य अलुक् ।

**मू०–नञ् ॥ नञ् पूर्वपदे सति योऽन्वयस्सतत्पुरुषसञ्ज्ञस्समासो भवति ।**

सुबोधिनी–नञ् । द्वौ नञौ प्रसज्यपर्युदासार्थकौ । पर्युदासार्थकस्य नञ एकार्थीभावे समासः । व्यपेक्षायां तु वाक्यमेव भवति । प्रसज्यप्रतिषेधार्थस्य तु क्रिययैवान्वयो न नाम्ना । अनन्वयेपि क्वापि नाम्ना समासः । इणतन्यकर्तरीति ज्ञापकात् । कर्तरि न भवतीति तदर्थः । तेनासूर्य्यपश्या राजदारा इत्यादि सिद्धम् । तदन्यतद्विरुद्धतदभावा इति त्रयो नञोर्थाः । "तत्साहश्यमभावश्च तदन्यत्वं तदल्पता ॥ अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः" ॥ १ ॥ इति केचित् । यथा । अब्राह्मणः । अपापं । अनश्वः । अनुदरा कन्या । अपशवः । अधर्मः । नञ्समासोहि अर्थाभावेऽव्ययीभावेनसह विकल्पते । अद्रुतायामसंहितमिति वार्तिकप्रयोगात् ॥

तत्त्वदीपिका– नञीति पर्युदासप्रसज्यार्थत्वेन नञो द्विविधत्वात्पर्युदासार्थस्योत्तरपदेनान्वयात्समासः व्यपेक्षाया वाक्यम् । प्रसज्यार्थस्य तु क्रिययैवान्वयादुत्तरपदेनान्वयाभावान्न समासः । नन्वेवमसूर्यपश्यानि मुखानीत्यादौ कथं समास इतिचेत्सत्यम् । इणतन्यकर्त्तरीत्यत्र हि कर्त्तरीत्यर्थात्प्रसज्यार्थस्य समासदर्शनादनन्वयेपि क्वचित्समासः ।

**मू०–नासमासे ॥ नञो नस्यादेशः । धर्म्मविरुद्धोऽधर्म्मः । ज्ञानविरुद्धमज्ञानम् ।**

सुबोधिनी– नासमासे । न अ इति छेदः । आख्यातांते परेपि नञो ऽदादेशो भवति । निंदार्थे । अपचसि त्वं जाल्म । कुत्सितं पचसीत्यर्थः ॥

तत्त्वदीपिका–नाइति । न अ इति छेदः । अत्र नञीत्यनुवर्त्तते इत्याह । नञ इति ञकारस्यानुबंधत्वादकारस्याकारादेशे प्रयोजनाभावात्सर्वादेशः । नञ्समासस्तु प्रतिपदोक्तोपि नानुवर्त्तते । अविघ्नमित्याद्यव्ययीभावेऽविघ्नइत्यादिबहुव्रीहौ चाव्याप्तेः परिभाषायास्त्वनित्यत्वात् ।

**मू०–अन्स्वरे ॥ समासे नञो नस्याऽन् स्यात्स्वरे । अश्वादन्योऽनश्वः । संशयस्याऽसम्भवोऽसंशयः ।**

सुबोधिनी–अन्स्वरे । अनश्व इत्यत्र ङ्णनोह्रस्वाद्दिति द्वित्वं तु न अनपीति निर्देशात् ॥

तत्त्वदीपिका–अनश्व इति । अनपीत्यादिलिंगात् ङ्णनोह्रस्वादिति द्वित्वंन ।

**मू०-निरनुबन्धकस्यतुनानौ ॥** नाकः । नक्षत्रम् । नक्रः । नासत्यौ । नैकधा ।

सुबोधिनी-निरनुबंधकनस्यतुनानौ। निरनुबंधकनस्य अश्च अनूच आनौ तौ न भवतः। सानुबंधकस्य तु भवत इत्यर्थः । नभ्राण्नपान्नवेदानासत्यानमुचिनकुलनखनपुंसकनक्षत्रनक्रनाकनैकधाशब्देषु नशब्देन समासः । नभ्राजते इति नभ्राट् क्विबंतः । न पातीति नपात् शत्रंतः । न वेत्तीति नवेदाः असुप्रत्ययांतः । सत्सु साधव इति सत्याः ण्यप्रत्ययः न सत्याः असत्याः न असत्याः नासत्याः । न मुंचतीति नमुचिः नाम्युपधात्किरितिकिः । न कुलमस्येति नकुलः । न खं छिद्रमस्येति नखः । न स्त्रीपुंसौ इति नपुंसकः। स्त्रीपुंसयोः पुंसकभावो निपातनात् । नक्षरतीति नक्षत्रं । क्षर संवलने भ्वादिः निवासगत्योस्तुदादिरनयोः क्षत्रमिति निपात्यते । नक्रामतीति नक्रः । डप्रत्ययः । नअकमस्मिन्निति नाकः । नएकधानैकधा । इति तत्पुरुषः ॥

तत्त्वदीपिका - निरनुबंधकनस्येति । निर्गतोऽनुबंधो यस्येतिनिरनुबंधकः । स चासौ नश्चेति स तस्येत्यर्थः । लक्ष्यानुसाराच्च व्यवस्था तस्य समासो नित्यः । इतितत्पुरुषः ।

**मू०-चार्थेद्वन्द्वः ॥** समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः । तत्रेश्वरं गुरुं च भजस्वेति । प्रत्येकमेकक्रियाभिसम्बन्धः समुच्चयः बटो भिक्षामट गां चानयेति क्रमेण क्रियाद्वयसम्बन्धोऽन्वाचयः । मिलितयोरेकत्रान्वयइतरेतरयोगः । संहितस्य समाहारः । तत्राद्ययोर्न समासोस्त्यनन्वयात् ।

सुबोधिनी-चार्थेद्वंद्वः । चस्यार्थश्चार्थः । जातावेकवचनं चार्थाश्चत्वारः। प्रत्येकमेकक्रियाभिसंबंधः समुच्चयः। एकमेकं प्रतीति प्रत्येकं । परस्य निरपेक्षस्याऽनेकस्यैकक्रियायामन्वय इत्यर्थः। त्वमीश्वरं गुरुञ्च भजस्वेत्यत्र भजनक्रियायामी ईश्वरगुरुभ्यां प्रत्येकं संबंधात्समुच्चयः । एकक्रियायामित्युपलक्षणं तेन परस्परनिरपेक्षस्यानेकस्यैकस्मिन् सम्बन्धिन्यन्वयः समुच्चय इत्यर्थः । राज्ञो गजश्चाश्वश्चात्र द्रव्ये द्रव्ययोः समुच्चयः । पटः शुक्लो रक्तश्चात्र द्रव्ये गुणयोः समुच्चयः । रक्तः पटः कम्बलश्चात्र गुणे द्रव्ययोः समुच्चयः । अनेके एकस्मिन्समुच्चीयंते इति समुच्चयः । क्रमेण क्रियाद्वयसंबंधोऽन्वाचयः । परस्परनिरपेक्षस्यानेकस्य क्रियाद्वयेऽन्वयोऽन्वाचयः । यदैकस्य प्राधान्यात् तदनुरोधेन त्वितरदन्वाचीयते तदाऽन्वाचयः । यथा । भिक्षामट गाञ्चानयेत्यत्र भिक्षाटनस्य प्रधानता गवानयनस्य त्वानुषंगिकता । मिलितयोर्मिलितानां एकक्रियान्वय इतरेतरयोगः । परस्परसापेक्षकस्यानेकस्यैकक्रियायामन्वय इतरेतरयोगः । संहतिः समाहारः । परस्परसापेक्षस्यानेकस्य समूहरूपेणान्वयः समाहार इत्यर्थः । चार्थे द्वन्द्वसमासो भवति । द्वौद्वावर्थौ अभिदधात्येकोऽस्मिन्निति द्वंद्वः । बहूनामप्युपलक्षणामिदं । ननु द्वंद्वसञ्ज्ञायाः किं प्रयोजनम् । उच्यते। द्वंद्वतत्पुरुषयोः परपदस्यैव लिंगामिति द्वंद्वेऽल्पस्वरप्रधानेकारोकारान्तानां पूर्वनिपात इति ऋतां द्वंद्वे पूर्वपदस्यात्वमित्यादि च प्रयोजनम् । आद्ययोः समुच्चयान्वाचययोः समासो न। परस्परसाहित्याऽभावात । अन्ययोः समाहारेतरेतरयोगयोः समासोस्ति । परस्परसाहित्यसत्त्वात् । इतरेतरयोगे साहित्यं विशेषणं द्रव्यं विशेष्यं । समाहारे तु साहित्यं प्रधानं द्रव्यं विशेषणं । साहित्यप्रधानत्वादेकवचनम् ॥

**तत्त्वदीपिका**–चार्थेद्वंद्वइति । चस्यार्थश्चार्थः तस्मिन् जातेत्येकवचनं । चार्थानाह समुच्चये इत्यादि । यदा परस्परनिरपेक्षाः पदार्थाः एकस्मिन्संबंधिनि समुच्चीयंते तदा समुच्चयः तत्स्वरूपं निरुपपन्नान्वययोग्य-स्वाभावात्समासाभाव इत्याह । तत्रेति । तेष्वर्थेष्वित्यर्थः । ईश्वरं भजस्व गुरुं च भजस्वेत्येकस्या एव भजन-क्रियाया ईश्वरगुरुभ्यां प्रत्येकं संबंधात्समुच्चयः । यदा त्वेकस्याप्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदन्वा-चयः । तदाह । बटो भिक्षामटेति । अत्र प्रधानं भिक्षाटनं गवानयनं त्वप्रधानम् । अदर्शनाद्गामानयन्नप्यटत्येव भिक्षां भिक्षामटंस्तु न गामानयति । अटन्नपि नान्विष्य गामानयति । मिलितयोरिति । परस्परसापेक्षयोरव-यवप्राधान्येन एकक्रियायामन्वय इत्यर्थः। संहतिरिति । परस्परापेक्षाणामेवावयवभेदातिरोधानेन संहतिरूपे नान्वय इत्यर्थः । तत्राद्ययोरिति । समुच्चयान्वाचययोरित्यर्थः । अनन्वयादिति । अन्वयः परस्परसापेक्षत्वं तदभावा-दित्यर्थः ।

**मू०–द्वन्द्वेऽल्पस्वरप्रधानेकारोकारान्तानाम्पूर्वनिपातः ॥ पटुश्च गुप्तश्च पटुगुप्तौ । अग्निश्च मरुच्च अग्नामरुतौ । भोक्तृभोग्यौ । धवखदिरौ । इन्द्राश्वरथाः । तापसपर्वतौ ।**

**सुबोधिनी**–द्वंद्वेऽल्पस्वरप्रधानेकारोकारांतानांपूर्वनिपातः । द्वंद्वेऽल्पस्वरशब्दस्य पूर्वनि-पातः । यथा धवश्च खदिरश्च धवखदिरौ । समासेनोक्तार्थत्वाच्चशब्दाप्रयोगः ॥

**तत्त्वदीपिका**–पूर्वनिपातनियममाह द्वंद्वइति । अल्पस्वरत्वं समस्यमानपदापेक्षया । पटुश्चेति । समासेनोक्तार्थत्वाच्चशब्दाप्रयोगः । अनेकप्राप्तावेकस्य नियमः । हरिहरगुरवः हरिगुरुहराः ।

**मू०–द्वंद्वेस्वराद्यदंतस्यपूर्वनिपातः ॥ ईशकृष्णौ ।**

**सुबोधिनी**–द्वंद्वेस्वराद्यदन्तस्यचपूर्वनिपातः । स्वर आदिर्यस्य स स्वरादिः अत् अंते यस्य सोऽदन्तः स्वरादिश्चासावदंतश्च स्वराद्यदंतस्तस्य । ईशश्च कृष्णश्च ईशकृष्णौ । बहूनां द्वन्द्वे नियमो न । इन्द्राश्वरथाः अश्वरथेन्द्रा वा । प्रधानस्य पूर्वनिपातो । यथा ताप-सश्च पर्वतश्च तापसपर्वतौ । भोक्ता च भोग्यश्च भोक्तृभोग्यौ । इकारोकारान्तानां पूर्वनिपातो यथा । पटुश्च गुप्तश्च पटुगुप्तौ । अग्निमारुतौ ॥

**तत्त्वदीपिका**–स्वराद्यदंतस्येति । स्वरआदिर्यस्यस स्वरादिः । अत् अंते यस्य सोऽदंतः स चासौ सचेति स तस्येत्यर्थः ।

**मू०–देवताद्वन्द्वेपूर्वपदस्याकारः ॥ इन्द्राबृहस्पती । अग्नाविष्णू ।**

**सुबोधिनी**–देवताद्वंद्वेपूर्वपदस्याकारः । इन्द्रश्च बृहस्पतिश्च इन्द्राबृहस्पती । अग्निश्च विष्णुश्च अग्नाविष्णू ॥

**तत्त्वदीपिका**–पूर्वपदस्याकारइति । यत्तु प्राचा देवताद्वंद्वे पूर्वपदस्य दीर्घ इत्युक्तं । यच्च तद्वासु-देवेन व्याख्यातं देवतावाचकानामन्योऽन्यद्वंद्वसमासे पूर्वपदान्त्यस्वरस्य दीर्घो वक्तव्य इत्यर्थ इति । तत्सर्वम-नाकरत्वादुपेक्षितम् । तथाच पाणिनिः देवताद्वंद्वे च । इहोत्तरपदे परे आनङ् । अग्नाविष्णू । इत्यादावात्वमे-वोक्तवान् ।

**मू०–क्वचिन्न ॥ अग्निवायू ।**

**सुबोधिनी**–क्वचिन्न । देवताद्वंद्वे पूर्वपदस्यात्वं न भवति । क्वचित् अग्निवायू वा श्वग्नी वा ॥

तत्त्वदीपिका–क्वचिन्नेति । ज्ञापकसिद्धंनसर्वत्रेत्युक्तेः ज्ञापितं चैतत् द्वंद्वसंज्ञासामर्थ्यात् । अन्यथा चार्थत्वेनैव व्यवहारः स्यात् ।

**मू०–ईदग्नेस्सोमवरुणयोः ॥**

सुबोधिनी–ईदग्नेःसोमवरुणयोः । आत्वस्यापवादोयम् । देवताद्वंद्वे पूर्वपदस्य अग्नेरीत् स्यात् सोमवरुणयोः परयोः॥

**मू०–अग्न्यादेस्सोमादीनांसस्यषः ॥ अग्नीषोमौ । अग्नीवरुणौ ।**

सुबोधिनी–अग्न्यादेःसोमादीनांसस्यषः । अग्नीषोमौ । आदिशब्दात् अग्निः स्तूयतेऽस्मिन्नित्यधिकरणे क्विप् । अग्निष्टुत् यज्ञविशेषः । अग्नीनां स्तोम इति अग्निष्टोमः । सोमयज्ञस्य संस्था स्वाद्यसंस्था ज्योतिष्टोमः । अयष्टोमः । अंगुलिषंगः भीरुष्ठानमित्यादि । प्राणितूर्यसेनांगानां द्वंद्व एकवत् । प्राणितूर्यसेनानामंगानि प्राणितूर्यसेनांगानि तेषां अंगशब्दः प्रत्येकमन्वेति । द्वंद्वांतेश्रूयमाणत्वात् । प्राण्यंगानां प्राण्यंगैः सह सेनांगानां सेनांगैः सह यो द्वंद्वः स एकवद्भवति । एकेन द्वंद्वे त्वेकवद्भावो न । यथा । मार्दंगिकाश्वारोहौ । प्राण्यंगे । दन्ताश्च ओष्ठौ च दन्तोष्ठं । तूर्यांगे । मृदंगवादनशिल्पमस्येत्यर्थे इकण्प्रत्ययः । णितोवेति वृद्धिः । प्रणुवंति स्तुतिं कुर्वंत्यनेनेति पणवो गायनपटहः । णु स्तुतौ अस्मात्स्वराद इत्यप्रत्ययः । सोपसर्गस्य निपातनाद्रेफलोपे नस्य णत्वे च पणव इति । पणववादनशिल्पमस्येतीकण्प्रत्ययः मार्दंगिकश्च पाणविकश्च मार्दंगिकपाणविकम् । सेनांगे । रथेन चरंतीति रथिकाः । चरतीत्यर्थे इकः । रथिकाश्च अश्वारोहाश्च तेषां समाहारो रथिकाश्वारोहम् । ननु समाहारस्यैकत्वादेकत्वेसिद्धे किमर्थमिदम् । उच्यते । प्राण्यंगादिभिः समाहार एव यथास्यादिति नियमार्थमिति । प्राणिवर्जजातिवाचिनां क्षुद्रजंतूनां च द्वंद्व एकवत् । धानाश्च शष्कुल्यश्च तासां समाहारो धानाशष्कुलि । प्राणिनां तु विट्शूद्राः । द्रव्यजातिरेवात्र ग्राह्या । तेनरूपरसावित्यादौ न । यूकाश्च लिक्षाश्च यूकालिक्षम् । विभाषावृक्षमृगतृणधान्यव्यंजनपशुशकुन्यश्ववडवपूर्वापराधरोत्तराणाम् । वृक्षादिसप्तानां भेदकानां पर्यायाणामश्ववडवेत्यादीनां त्रयाणां च द्वंद्व एकवद्वा । भूताश्च अशोकाश्च तेषां समाहारो भूताशोकम्, भूताशोकाः । रुरवश्च पृषताश्च तेषां समाहारो रुरुपृषतं, रुरुपृषताः । कुशाश्च काशाश्च तेषां समाहारः कुशकाशं कुशकाशाः । व्रीहयश्च यवाश्च तेषां समाहारो व्रीहियवं, व्रीहियवाः । दधि च घृतं च तयोः समाहारो दधिघृतं, दधिघृते । गावश्च महिषाश्च तेषां समाहारो गोमहिषं, गोमहिषाः । शुकाश्च बकाश्च तेषां समाहारः शुकबकं, शुकबकाः । अश्वश्च वडवा च तयोः समाहारोऽश्ववडवमश्ववडवे । अश्ववडवयोर्द्वंद्वः । पूर्वा च अपरा च तयोः समाहारः पूर्वापरं, पूर्वापरे । अधराच उत्तराच तयोः समाहारोऽधरोत्तरम्, अधरोत्तरे । फलसेनावनस्पतिमृगशकुनिक्षुद्रजंतुधान्यतृणानां बहुप्रकृतिर्द्वंद्व एकवत् । एषां बहुवचनांता प्रकृतिः कारणं यस्य स बहुप्रकृतिर्द्वंद्व एकवद्भवतीति नियम्यते । बदराणि च आमलकानि चेति बदरामलकं । प्राणिवर्जजातीत्यनेन एकवद्भावे प्राप्ते नियमः । रथिकाश्चाश्वारोहाश्चेति रथिकाश्वारोहं । सेनांगत्वान्नित्ये एकवद्भावे प्राप्ते नियमः । प्लक्षाश्च न्यग्रोधाश्चेति प्लक्षन्यग्रोधं । विभाषावृक्षेति वैकल्पिके एकवद्भावे प्राप्ते नियमः । रुरवश्च पृषताश्चेति रुरुपृषतं । शुकाश्च बकाश्चेति शुकबकं । विभाषेति वैकल्पिके एकवद्भावे प्राप्ते नियमः ।

नकुलपर्यंताः । क्षुद्रजंतवः । यूकाश्च लिक्षाश्चेति यूकालिक्षम् । क्षुद्रजंनतूमित्येकवद्भावे प्राप्ते नियमः । व्रीहयश्चयवाश्चेति व्रीहियवं । कुशाश्च काशाश्चेति कुशकाशम् । अत्रापि विभाषेति वैकल्पिके एकवद्भावे प्राप्ते नियमः । द्विप्रकृतौ एकवचनांतयोर्द्वयोः प्रकृतयोर्द्वंद्वे नास्त्येकवद्भाव इत्यर्थः । बदरामलके रथिकाश्वारोहौ प्लक्षन्यग्रोधौ रुरुपृषतौ शुकबकौ यूकालिक्षे व्रीहियवौ कुशकाशाविति । ऋतांद्वंद्वे पूर्वपदस्यात्वमिति वक्ष्यमाणेनात्वं । उद्गातृनप्तृइत्यनाऽऽङ् होतापोतारौ । पंचसु इत्यनेनाङ् मातापितरौ । पुत्रेचेति वक्ष्यमाणेनात्वं पितापुत्रौ । मातरपितरौ निपात्यौ । मातृशब्दस्याऽरङादेशो निपात्यते । उदीचामाचार्याणां मते त्यदादीनि शिष्यंते सर्वैः सहोक्तौ । सर्वैः शब्दैः सहोक्तानि त्यदादीनि शिष्यंतेऽन्यानि पदानि लुप्यानि लुप्यंते द्वंद्वे इत्यर्थः ॥

**मू०–समाहारेएकवद्भावः ॥**

सुबोधिनी–समाहारेएकवद्भावः । एकवद्भवनमित्येकवद्भावः ॥

**मू०–एकत्वेद्विगुद्वन्द्वौ ॥ नपुंसकलिङ्गौ भवतः । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । पदकक्रमकम् । बदरामलकम् । शशकुशपलाशम् ।**

**सुबोधिनी**–एकत्वेद्विगुद्वंद्वौ । एकत्वे वर्तमानौ द्विगुद्वंद्वौ नपुंसकलिंगौ भवतः । एकत्वे किं । पंचकपालाः पुरोडाशाः । परवल्लिंगापवादोयं विधिः । पाणीच पादौच तेषां समाहारः पाणिपादम् । मार्दंगिकश्च पाणविकश्च तयोः समाहारो मार्दंगिकपाणविकम् । रथिकाश्च अश्वारोहाश्च तेषां समाहारो रथिकाश्वारोहं । पदान्यधीते इति पदकः । क्रममधीते इति क्रमकः । .कप्रत्ययः । पदकश्च क्रमकश्च तयोः समाहारः पदकक्रमकं । बदराणि च आमलकानि च तेषां समाहारो बदरामलकं । शशाश्च कुशाश्च पलाशाश्च तेषां समाहारः शशकुशपलाशम् । अथ समासान्तप्रत्ययः । चवर्गान्तात् दषहान्ताच्च टः समाहारे । वाक्त्वचं । वाक्स्रजं । शमीदृषदं । वाक्त्विषं छत्रोपानहं । समाहारे किं । प्रावृट्शरदौ । अहः पूर्वाद्रात्रिशब्दादः समाहारे । अहश्च रात्रिश्च तयोः समाहारोऽहोरात्रः । रात्राह्नाहांता इति पुंस्त्वम् । इतिद्वंद्वः ॥

**मू०–संख्यापूर्वोद्विगुः । तद्धितार्थे ॥ पंचकपालः ॥**

**सुबोधिनी**–संख्यापूर्वोद्विगुः । संख्या पूर्वा यस्य स संख्यापूर्वः समासो द्विगुसंज्ञो भवति। समाससंज्ञाफलं समासप्रत्यययोरिति । द्विगुसंज्ञाफलमेकत्वे द्विगुद्वंद्वाविति । द्वौ गावौ शब्दौ यस्मिन्नित्यन्वर्थसंज्ञाबलात् द्वयोरेव द्विगुसमाहारे द्विगावेकद्भावः । तद्धितार्थे द्विगौ तु नैकवद्भावः । किंतु विशेषनिघ्नता । पंचसु कपालेषु संस्कृतः पुरोडाशः संस्कृतार्थेऽण् । लुग्बहुत्वे क्वचिदित्यत्र क्वचिद्ग्रहणात् द्विगोर्लुगनपत्ये द्विगोर्निमित्तस्याऽनपत्यार्थस्य स्वरादेस्तद्धितस्य लुग्वक्तव्य इत्यर्थो बोध्यः । पंचकपालः ॥

**तत्त्वदीपिका**–संख्यापूर्वोद्विगुरिति । संख्या पूर्वा यस्य सः । संख्याशब्देन च तद्वाचकं पदमुच्यते । तथाच । संख्यावाचकपदयोर्योन्वयः ससमाससंज्ञोद्विगुसंज्ञश्चेत्यर्थः । समाहारेऽतईबित्यस्यवक्ष्यमाणत्वात् । समाहारे एवायमिष्यते तद्धितार्थे च । यत्तूत्तरपदे वेत्युक्त्वा पञ्च गावो धनमस्येति विगृह्य पंचगवधन इति

सिद्धये वासुदेवादिभिः पाणिनीयानुसारेणोत्तरपदविषयत्वमप्यस्योक्तम् । तदिहानुपयोगीत्युपेक्षितम् । तत्र तस्य स्वरार्थत्वात् स्वरस्यात्राव्युत्पादनात् । पंचानां गवां समाहारः पंचगवं टाडकाः इति अः । एतद्धनमस्येति द्विगुगर्भबहुव्रीहिणा गतार्थत्वाच्च । अत्राहुः द्वयोः पुत्रो द्विपुत्रः । द्वौच दशच द्वादश । द्वौपुत्रौ यस्य स द्विपुत्र इत्यादौ परत्वात्तत्पुरुषद्वंद्वबहुव्रीहिसंज्ञाभवंतीति । अत्रेदमवधेयम् । द्विगुसमासस्य समाहारतद्धितार्थयोरेव विधानादत्र तदभावादेवाप्राप्तौ किं परत्वानुधावनक्लेशेनेति विभाव्यं । पंचकपाल इति पंचसु कपालेषु संस्कृतः पंचकपालः पुरोडाशः । एवं चतुरो वेदानधीते चतुर्वेदः । अत्र संस्कृतादिष्वणादिः तस्य लुग्बहुत्वे क्वचिदिति लुक् । यद्वा तद्धितार्थस्य द्विगुनैवोक्तत्वात्तद्धितार्थयोरप्रयोगः ।

**मू०–समाहारेऽतईप्द्विगुः ॥** समाहारेऽर्थे द्विगुस्समासो भवति । ततोकारान्तादीप् प्रत्ययः । दशानां ग्रामाणां समाहारो दशग्रामी । पञ्चाग्नि ।

सुबोधिनी–समाहारेऽतईप्द्विगुः । समाहरणं समाहारः भावे घञ् । समाहारे राशीकरणेऽर्थे द्विगुः समासो भवति । अदंतात् द्विगोः स्त्रियामीप् । दशानां ग्रामाणां समाहारो दशग्रामी । यस्येत्यलोपः । ननु विप्रकीर्णानामेकत्रराशीकरणं समाहारार्थः स च दशानां ग्रामाणां न संभवति । उच्यते । एकक्रियायां समन्वयात् बुद्ध्या राशीकरणस्य संभवात् उदाहरणं । पंच अग्नयः समाहृता इति पंचाग्नि ॥

तत्त्वदीपिका–समाहारेऽतईप्द्विगुरिति । औत्तरार्यं । राशीकरणम् समाहारः ।

**मू०–क्वचिन्न ॥** पञ्चपात्रं । चतुर्युगम् । त्रिभुवनम् । आबन्ताद्वा । पंचखट्वी । पंचखट्वम् ।

सुबोधिनी–क्वचिन्न । क्वचिददंतात् द्विगोरीप् न स्यात् । पंचानां पात्राणां समाहारः पंचपात्रं । चतुर्णां युगानां समाहारः चतुर्युगं । त्रयाणां भुवनानां समाहारः त्रिभुवनं । समासांतानग्रे वक्ष्यामि । ॥ इतिद्विगुः ॥

तत्त्वदीपिका–क्वचिन्नेति । अब वौर्गुणादित्यतोवेत्यस्यानुवृत्तेस्तस्यच व्यवस्थितत्वात् क्वचिन्नेति । दशग्रामीति । ननुविप्रकीर्णानामेकत्रराशीकरणम् समाहारार्थः स च ग्रामाणामसंभवतीति चेत् । न । एकक्रियायां समन्वयाद्बुद्ध्या राशीकरणसंभवात् । एकापूपीत्यत्र तु दरिद्रस्यैकस्मिन्ननेकत्वारोपेणारोपितबहुत्वाश्रये समाहारे द्विगुः । त्रिलोकनाथ इत्यादौ तु त्र्यवयवो लोकास्त्रिलोकस्तन्नाथ इत्येवंप्रकारः । इतिद्विगुः ।

**मू०–बहुव्रीहिरन्यार्थे ॥** अन्यपदार्थे योऽन्वयस्सबहुव्रीहिसंज्ञः ।

सुबोधिनी–बहुव्रीहिरन्यार्थे । बहुव्रीहिरित्यस्य पूर्वोच्चारणसामर्थ्यादन्यपदार्थाऽभावेपि बहुव्रीहिः कुत्रचिद्भवति । तथा । द्वौ वा त्रयो वा द्वित्राः । पंच षट्वा पंचषाः । द्वौ वा दश वा द्विदशाः । त्रयश्च दश वा त्रिदशाः । डप्रत्ययांतानेतानग्रे प्रवक्ष्यामि । पदानां समासविधानादन्यशब्देन पदं गृह्यते । अन्यस्य समस्यमानपदाद्भिन्नस्य पदस्यार्थः अन्यार्थस्तस्मिन् अमादावित्यस्याऽनुवर्तनात् द्वितीयाद्यन्तं विशेषणं कर्तव्यम् । अत्रहि द्वितीयाद्यंतपदेनप्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः कर्मादिभिरभिधीयते । प्रथमान्तेन तु प्रातिपदिकार्थमात्रम् । यद्यपि त्रिकपक्षे संख्याप्रत्ययार्थस्तथा तस्याः प्रकृत्यर्थं प्रति विशेषणत्वान्न प्रकृत्यर्थोपसर्जनकः प्रत्ययार्थः अथमांतस्यास्ति । एवंच द्वितीयांताद्यर्थे इति स्थितम् । तथा परिशेषात् समस्यमानं प्रथमांतमेव लब्धम् । अथाऽप्रथमाविभक्त्यर्थे बहुव्रीहिरिति समानाधिकरणानामितिच फलितम् । अनेकं प्रथमान्तमप्रथमार्थेऽन्यार्थे वर्तमानं समस्यते स बहुव्रीहिः । सम-

स्यमानपदेतरपदार्थे समस्यमानपदानामन्वयो बहुव्रीहिरित्यर्थः । कण्ठेकाल इत्यादिस्तु बहुव्रीहौ विशेषणसप्तम्यन्तक्तान्तानामिति ज्ञापकाद्भवतीत्यर्थः । अतः सद्विधा समानाधिकरणएव व्यधिकरणस्तु कुत्रचित् संभवति । सामानाधिकरण्ये वैयधिकरणस्यान्याय्यत्वमित्युक्तत्वात् । किंच बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत एतदर्थं सूत्रेऽन्यग्रहणं कृतं। द्वितीयाद्यंतमन्यपदार्थं क्रमेणोदाहरति। प्राप्तमुदकं यमिति समासोक्तत्वात् कर्मादौ प्रथमा। प्राप्तोदको ग्रामः । ऊढो रथो येन स ऊढरथोऽनड्वान् । उपहृतः पशुर्यस्मै स उपहृतपशू रुद्रः । उद्धृत ओदनो यस्याः सा उद्धृतौदना स्थाली । पीतमंवरं यस्य स पीतांबरः । वीरः पुरुषोयास्मिन् स वीरपुरुषो ग्राम इति ॥

**तत्त्वदीपिका**—बहुव्रीहिरन्यार्थे इति । अन्यस्य समस्यमानपदाद्भिन्नस्य पदस्यार्थः अन्यार्थस्तस्मिन् । यद्वा अन्यस्याः प्रथमाभिन्नाया विभक्तेरर्थः अन्यार्थस्तस्मिन् । यद्वा तन्त्रादिना उभयमपि । तथा चाप्रथमार्थे बहुव्रीहिः ।

**मू०—बहुव्रीहौविशेषणसप्तम्यंतक्तांतसर्वादिसंख्यानांपूर्वनिपातः ॥**
**बहु धनं यस्य स बहुधनः । अस्तिधनः । लंबकर्णः । कण्ठेकालः । वहेगडुः । कृतकटः । सर्वप्रियः । द्विपुत्रः ।**

**सुबोधिनी**—बहुव्रीहौविशेषणसप्तम्यंतक्तान्तसर्वादिसंख्यानांपूर्वनिपातः । बहुव्रीहौ विशेषणं सप्तम्यंतं क्तांतं च पूर्वं प्रयोज्यं । विशेषणं यथा । बहुधनः । अस्तीति सत्तार्थेऽव्ययम्। अस्ति धनं यस्य सोऽस्तिधनः । लंबौ कर्णौ यस्य स लंबकर्णः । सप्तम्यंतं यथा। कंठेकालः । वहेगडुः । सप्तम्या अलुगत्र । क्तांतं यथा । कृतः कटो येन स कृतकटः । सर्वादिसंख्या च बहुव्रीहौ । सर्वादिगणः संख्या च पूर्वं प्रयोज्या । सर्वः प्रियो यस्य स सर्वप्रियः । द्वौ पुत्रौ यस्य स द्विपुत्रः । त्रिपुत्रः ॥

**तत्त्वदीपिका**—बहुव्रीहिसंज्ञाप्रयोजनं पूर्वनिपातनियममाह । बहुव्रीहौइति । सर्वादिसंख्ययोस्तुसंख्यायाः अन्यः । संख्यायास्त्वल्पीयस्याः । द्वित्राः बहुधनइति अतद्गुणसंविज्ञानोयम् । तस्यान्यपदार्थस्य गुणाः विशेषणानि समस्यमानपदार्थाः कार्यभाक्तेन नसंविज्ञायंतेऽस्मिन्निति तद्गुणसंविज्ञानस्तदन्योऽतद्गुणसंविज्ञानः । अस्तिधन इति अस्तीतितिवंतप्रतिरूपकमव्ययम् । समासे भिन्नां शक्तिं मन्वानानां वैयाकरणानां मतं द्रढयितुं वाक्यसमासयोः शाब्दबोधे भेदः प्रदर्श्यते । तथाहि । प्राप्तमुदकम् यमित्यस्य यत्कर्मकप्राप्तिकर्तृउदकमितिबोधः । प्राप्तोदकः इत्यस्य उदककर्तृप्राप्तिकर्मीभूतो ग्राम इति बोधः । एवं प्राप्तानंदः ऊढरथो येनेत्यस्य यदाश्रयवाहनसाध्यदेशांतरं प्राप्ताश्रयो रथ इति बोधः । ऊढरथ इत्यस्य तु रथकर्मकवाहनाश्रयोऽश्वः । छिन्नो वृक्षो येनेत्यस्य यत्करणकद्वैधीभावाश्रयो वृक्षः छिन्नवृक्ष इत्यस्य वृक्षाश्रयद्वैधीभावानुकूलव्यापाराश्रयः कुठारः । उपहृतः पशुर्यस्मै इत्यस्य यदुद्देश्यक उपहरणाश्रयः पशुरिति । उपहृतपशुरित्यस्यतु पशुकर्मकोपहारोद्देश्यो रुद्रः । एवं दत्तार्घः सूर्यः । उद्धृतमन्नं यस्मादित्यस्य यदवधिकोद्धरणाश्रयोऽन्नमितिबोधः । उद्धृतान्नइत्यस्यान्नकर्मकउद्धरणावधिः कटाहः । पीतमम्बरंयस्येत्यस्य यत्संबंधिपीताभिन्नमंबरमित्यर्थः पीताम्बर इत्यस्य तु पीताभिन्नांबरः स्वामीत्यर्थः । एवं चित्रगुरित्यस्य । वीराः पुरुषा यस्मिन्नित्यस्य यदाधारसत्ताश्रयवीराभिन्नः पुरुषः इति बोधः । वीरपुरुषइत्यस्य तु वीराभिन्नपुरुषसत्ताश्रयो ग्रामं इति ।

**मू०—क्वचिन्न ॥ चन्द्रशेखरः । पद्मनाभः । दन्तजातः । ऊरुभिन्नः ।**

सुबोधिनी–क्वचिन्न । बहुव्रीहौ क्वचिद्विशेषणं सप्तम्यंतं क्तांतानां पूर्वनिपातो न भवति चन्द्रः शेखरे यस्य स चन्द्रशेखरः । पद्मं नाभौ यस्य स पद्मनाभः । टाडकाइत्यनेना-प्रत्ययः । दंता जाता यस्य स दंतजातः । ऊरू भिन्नौ यस्य स ऊरुभिन्नः ॥

तत्त्वदीपिका–क्वचिन्नेति । ज्ञापकसिद्धस्यासार्वत्रिकत्वादिति भावः ।

**मू०–क्वचिद्वा ॥ प्रियगुडः । गुडप्रियः । आहिताग्निः । अग्न्याहितः । अस्युद्यतः । उद्यतासिः ।**

सुबोधिनी–क्वचिद्वा । बहुव्रीहौ क्वचिद्विशेषणं सप्तम्यंतक्तांतानां वा पूर्वनिपातो भवति । प्रियो गुडो यस्य स प्रियगुडः । गुडप्रियो वा । आहितः अग्निर्येन स आहिताग्निः । अग्न्या-हितो वा । असिरुद्यतो येन स उद्यतासिः । अस्युद्यतो वा ॥

**मू०–नञ्दुस्सुभ्यःप्रजामेधयोरसुक् ॥ अप्रजाः । दुर्म्मेधाः । सुप्रजाः ।**

सुबोधिनी–नञ्दुःसुभ्यः प्रजामेधयोरसुक् । नञादिभ्यः पराभ्यां प्रजामेधाभ्यामसुक् प्रत्ययः स्याद्बहुव्रीहौ । न प्रजा यस्य सः नाइत्यनेनादादेशः असुक् प्रत्यये यस्य लोप इत्य-लोपः अत्वसोरितिदीर्घः । अप्रजाः । दुःप्रजाः । सुप्रजाः । अमेधाः । दुर्मेधाः । सुमेधाः । अल्पमेधस इति काशिका ॥

तत्त्वदीपिका–नञ्दुःसुभ्यइति । नञ्दुःसुभ्यः परयोः प्रजामेधाशब्दयोरसुगागमो बहुव्रीहावित्यर्थः । अप्रजा इति न प्रजा यस्येति विग्रहेऽसुकि यस्येत्यलोपे अत्वसोः साविति दीर्घे रूपसिद्धिः । एतच्च प्राचामनु-रोधेन । वस्तुतस्तु प्रजामेधाभ्यामसित्येवं वक्तुमुचितम् । तथा चासुप्रत्यय एव नत्वागमः । एतेन यद्यस्यासु-कउकारानुबंधित्वाद्वितोमिति नुम् प्राप्नोति तथापि वादीपोशतुरित्यतो वानुकर्षणान्नेति वासुदेवोक्तिः प्रत्युक्ता॥

**मू०–धर्म्मादन् ॥ सुधर्म्मा । रूपवती भार्य्या यस्य ।**

सुबोधिनी–धर्मादन् । धर्मशब्दादन्प्रत्ययः स्यात् । द्विपदबहुव्रीहौ । सुष्ठु धर्मो यस्य स सुधर्मा । ननु अकारो व्यर्थः न् प्रत्ययेनैव रूपसिद्धेरिति चेत् । उच्यते । धर्मं करोत्याचष्टे वेति धर्मनाम्नोर्णिङिंत्करणे इति ण्यंतात् क्विपि धर्मीति । परमो धर्म् यस्य एकदेशविकृतस्यानन्यत्वात् अन् स परमधर्मा इत्याद्यर्थमकारोच्चारणं बोध्यम् ॥

तत्त्वदीपिका–धर्मादिति । केवलात्पूर्वपदात्परो यो धर्मशब्दस्तदंताद्बहुव्रीहेरन् प्रत्यय इत्यर्थः । केव-लात्किं । परमः स्वो धर्मो यस्येति त्रिपदे बहुव्रीहौ मा भूत् । यत्तु वासुदेवेनोक्तं । वक्तव्यत्वात्केवलात्पदाद्यः केवलो धर्मशब्दस्तस्मादन्प्रत्ययो वक्तव्यइत्यर्थः । तेनेह न परमः स्वो धर्मः परमः स्वधर्मो वा यस्य स परमस्व-धर्म इत्यत्र । तन्न । आद्ये परमस्व इत्यस्य कर्मधारयेणैकपद्यात्केवलमस्त्येव । अंते धर्मशब्दस्य केवलविशेष-णत्वं व्यर्थं । धर्मशब्दस्य बहुव्रीह्यवयवीभूतपूर्वपदात्परत्वस्याभावात् । उक्तंच दीक्षितैरपि संदिग्धसाध्यधर्मे-त्यादौ तु कर्मधारयपूर्वपदो बहुव्रीहिः । एवं परमस्वधर्मेत्यपि साध्वेवेति ।

**मू०–अन्यार्थे ॥ स्त्रीप्रत्ययान्तस्यान्यार्थे वर्तमानस्य ह्रस्वः ।**

सुबोधिनी–अन्यार्थे । अन्यार्थे गौणत्वे वर्तमानस्य स्त्रीप्रत्ययांतस्य नाम्नो ह्रस्वो भवति स्त्रीप्रत्ययस्येति किम् । अतिलक्ष्मीः । अतिचमूः । गौणत्वे किम् । राजकुमारी । ब्रह्मविद्या । किंच नपुंसकात्स्यमोर्लुगित्यतोलुगित्यनुवर्त्य वाक्यभेदेन व्याख्येयं । तथाहि अन्यतद्धितस्यार्थे वर्तमानं यत् स्त्रीप्रत्ययांतं तदवयवस्य स्त्रीप्रत्ययस्य लुक् स्यात् । यथा पंचभिः पट्वीभिः

क्रीतः पंचपटुः । पंचभिर्ब्राह्मणीभिः क्रीतः पंचब्राह्मणः । पंचभिरिंद्राणीभिः क्रीतः पंचेंद्रः । पंच अग्नाय्यो देवताऽस्येति पंचाग्निः । पंच मनाय्यो देवताऽस्येति पंचमनुः । अत्रहि संख्यापूर्वो द्विगुरित्यनेन तद्धितार्थे द्विगुः ततोऽण् प्रत्ययः । तस्य लुग्बहुत्वे क्वचिदित्यनेन लुक् स तद्धितार्थे गौणस्य स्त्रीप्रत्ययस्यानेन लुक् क्रियते इत्यर्थः । रूपवती भार्या यस्येति लौकिकविग्रहः ।

तत्त्वदीपिका–अन्यार्थे इति । अन्यस्यार्थः अन्यार्थस्तस्मिन् वर्तमानस्येत्यर्थः । अध्याहार्य्ये कारकविभक्तेः क्रियान्वयस्य नियमात् । ह्रस्वो वेत्यतो ह्रस्वानुवृत्तेः स्वरस्येति लभ्यते । त्रिचतुरोः स्त्रियामित्यनुवृत्तं तच्च विहितविशेषणामित्याशयेनाह । स्त्रीप्रत्ययांतस्येत्यादि । अन्यार्थेकिं । राजकुमारी । स्त्रीप्रत्ययांतस्येति किम् । अतिलक्ष्मीः । स्त्रीप्रत्ययांतस्येति समासविशेषणाद्विधेयाफलमित्यादौ न ह्रस्वः । नचात्रान्यार्थत्वमेव कथमिति चेच्छृणु । अन्यार्थवृत्तित्वं हि गौणत्वम् । तच्चात्राप्यस्त्येव अत्रोत्तरपदार्थस्यैव प्राधान्यात्पूर्वपदार्थस्य गौणत्वस्वीकारात् वेत्यस्याप्यनुवृत्तेस्तस्य च व्यवस्थितत्वाश्रयणाद्बहुश्रेयसीत्यादौ न । यत्तु प्राचोक्तं स्त्रीलिंगस्येति यच्च वासुदेवेन व्याख्यातं त्रिचतुरोः स्त्रियामित्यतो विभक्तिविपरिणामेन स्त्रिया इति षष्ठ्यंतमनुवर्तते इति तन्न । अतिलक्ष्मीरित्यादावतिव्याप्तेः ।

**मू०–पुंवद्वा पूर्वस्य ॥ समासे समानाधिकरणे स्त्रीलिंगे परे पूर्वस्योक्तपुंस्कस्य स्त्रीलिङ्गस्य पुंलिंगस्येव रूपम् । रूपवद्भार्य्यः । उक्तपुंस्कस्य किम् । छायाद्वितीयः । गंगाभार्य्यः ।**

सुबोधिनी–पुंवद्वा पूर्वस्य । उक्तः पुमान् येन तदुक्तपुंस्कं तस्योक्तपुंस्कस्य स्त्रीवाचकप्रत्ययांतस्य नाम्नः पुंवाचकस्येव रूपं भवति समानाधिकरणे स्त्रीलिंगे समासस्य चरमावयवे रूढपदमुत्तरपदं तस्मिन्नुत्तरपदे सति । एकविभक्त्यंतानाम् एकार्थे निष्ठत्वं समानाधिकरणत्वं । किंच यद्यत्र उक्तः पुमान् तदुक्तपुंस्कमित्युच्यते । तर्हि कुटीभार्यः द्रोणीभार्य इत्यादावतिप्रसंगः स्यात् । कुटीद्रोणीशब्दाभ्यामर्थांतरे पुंलिंगस्याप्युक्तत्वात् । तथा च " कुटः कोटे शिलाकुट्टे घटे गेहे कुटी सुरा ॥ चित्रगुच्छे कुंभदासी कूटं पूर्द्वारयंत्रयोरि"तिहैमः॥ " द्रोणः पार्थगुरौ काके माने द्रोणी तु नौवृति॥नौभेदे शैलसंधौ चेति हैमः"। उक्तपुंस्कस्येति किं । छायाद्वितीयः । गंगा भार्या यस्य स गंगाभार्यः । अत्रानयोर्नित्यस्त्रीत्वम् । अलौकिकविग्रहे रूपवती सु भार्या सु इति अन्यार्थे इत्यनेन ह्रस्वः पुंवद्वेत्यनेपोनिवृत्तिः ॥

**मू०–ऊप्रत्ययान्तस्यन ॥ वामोरूभार्य्यः ।**

सुबोधिनी–ऊप्रत्ययांतस्यन । उक्तपुंस्कस्य ऊप्रत्ययांतस्य स्त्रीलिंगस्य पुंवद्भावो न भवति समानाधिकरणे स्त्रीलिंगे परे । वामोरूः भार्या यस्य स वामोरूभार्यः । संहितशफलक्षणवामसहितसहादेरित्यूप्रत्ययः ।

**मू०–पूरणार्थप्रत्ययान्तेप्रियादौचन ॥ कल्याणी पंचमी यासां रात्रीणां ताः कल्याणीपंचमा रात्रयः । कल्याणीप्रियः ।**

सुबोधिनी–पूरणार्थप्रत्ययान्तेप्रियादौचन । उक्तपुंस्कस्य स्त्रीलिंगस्य पुंवद्भावो न भवति समानाधिकरणे स्त्रीलिंगे पूरणार्थप्रत्ययांते प्रियादौ च परे अलौकिकविग्रहे कल्याणी सु पंचमी सु इति अन्यार्थे इत्यनेन ह्रस्वः पूरणार्थे पंचादेर्मट् इति मट्प्रत्ययः पूरणार्थप्रत्ययांते इत्यनेन कल्याणी इत्यत्र पुंवद्भावो न । ततः समासांतप्रत्ययः यस्येतीकारलोपे ततः त्रि-

थामाप् कल्याणीपंचमाः प्रिया मनोज्ञा कल्याणी सुभगा दुर्भगा भक्तिः सचिवा स्वसा कांता क्षांता समा चपला दुहिता वामा अबला तनया षोडश प्रियादयः । कल्याणी प्रिया यस्य स कल्याणीप्रियः ॥

तत्त्वदीपिका–पुंवद्धेतिवाशब्दस्य व्यवस्थितत्वाश्रयणादप्रत्ययांतस्य नेत्यादिकं दर्शयति। कल्याणीपंचमा इति ।

**मू०–तरतमचरट्कल्पदेश्यदेशीयरूपपाशादौपुंवत्॥दर्शनीयतरा । दर्शनीयतमा । दर्शनीयचरी । दर्शनीयपाशा ।**

सुबोधिनी–तरतमचरट्कल्पदेश्यदेशीयरूपपाशादौपुंवत् । एषु पदेषु स्त्रियाः पुंवद्भवति । अतिशयेन दर्शनीयेति दर्शनीयतरा । दर्शनीयतमा । तरतमेयस्विष्ठा इति तरतमौ । भूतपूर्वा दर्शनीयेति दर्शनीयचरी । भूतपूर्वे चरडिति चरट् छित्वतइतीप् ॥ ईषन्न्यूना दर्शनीयेति दर्शनीयकल्पा । दर्शनीयदेशीया । ईषदसमाप्तौकल्पदेश्यदेशीया इति कल्पदेशीयौ । प्रशस्ता दर्शनीयेति दर्शनीयरूपा । प्रशंसायां रूप इति रूपः।कुत्सिता दर्शनीयेति दर्शनीयपाशा । कुत्सायां पाश इति पाशः । आदिशब्दात् त्र तस् जातीययथार्थ्यादयो ज्ञेयाः । बह्वीषु बहुत्र बहुतः । पट्वी प्रकारवती पटुजातीया । प्रकारेजातीयइति जातीयप्रत्ययः । बहुधा किंसर्वादिबहुभ्यः प्रकारे धा । अजाभ्यो हिता अजथ्या अजाविभ्यां थ्य इति थ्यप्रत्ययः ।

तत्त्वदीपिका–दर्शनीयतरेति । अतिशयेन दर्शनीयेति विग्रहः ।

**मू०–शसिबह्वल्पार्थस्यपुंवत् ॥ बह्वीभ्यो देहि बहुशः । अल्पशः ।**

सुबोधिनी–शसिबह्वल्पार्थस्यपुंवत् । बह्वल्पार्थस्य स्त्रीप्रत्ययांतस्य पुंवद्भावो भवति । शसि बह्वीभ्य इति बहुशः । अल्पाभ्य इत्यल्पशः । बह्वल्पार्थात्कारकादिति शस् ॥

**मू०–त्वतलोर्गुणवचनस्य ॥ शुक्लाया भावः शुक्लत्वम् शुक्लता ।**

सुबोधिनी–त्वतलोर्गुणवचनस्य । गुणवचनस्य शब्दस्य पुंवद्भावो भवति त्वतलोःपरयोः॥

तत्त्वदीपिका–त्वतलोर्गुणवचनस्येति । गुणवचनस्येति किम् । कर्त्र्या भावः कर्त्रीत्वम् ।

**मू०–कुक्कुट्यादीनामण्डादिषु॥ कुक्कुट्या अण्डं कुक्कुटाण्डम्। मृगपदम् । मृगक्षीरम् । काकशावः ।**

सुबोधिनी–कुक्कुट्यादीनामंडादिषु । कुक्कुट्यादीनां पुंवद्भावो भवत्यंडादिषु परतः । कुक्कुट्या अंडमिति कुक्कुटांडम् । मृग्याः पदमिति मृगपदं।मृग्याः क्षीरमिति मृगक्षीरं ।काक्याः शाव इति काकशावः ॥

**मू०–सर्वादेस्समासादौपुंवत् ॥ दक्षिणस्याः पूर्वस्या अन्तरालं मध्ये या दिक् सा दक्षिणपूर्वा । सर्वा प्रधानमस्येति सर्वमयः । सर्वां करोति सर्वंकरः ।**

सुबोधिनी–सर्वादेःसमासादौपुंवत् । सर्वादेर्गणस्य पुंवद्भावो भवति समासादौ । आदिशब्दात् कृत्तद्धितयङाद्यंतधातुषु च । समासे यथा । दक्षिणस्याः पूर्वस्याश्च दिशोर्मध्ये या दिक् सा दक्षिणपूर्वा । तद्धिते यथा । सर्वा प्रधानमस्येति प्राचुर्यविकारप्राधान्यादिषु मय-

ङिति मयट् । सर्वमयः । कृति यथा । सर्वां करोतीति सर्वकरः । इखखीति खः । खिति-पदस्येति मुम् । यङाद्यंतधातुषु यथा । सर्वामिच्छतीति काम्यश्चेति काम्यप्रत्ययः । सर्व-काम्यः ।

तत्त्वदीपिका-समासादाविति । समासादिवृत्तावित्यर्थः तथा च कृतद्धितसमासैकशेषधातुसंज्ञा प्रयोजकप्रत्ययेष्वित्यर्थः ।

**मू०-यङ्मानिनोःपुंवत् ॥ एनीवाचरति एतायते । दर्शनीयां मन्यते दर्शनीयमानी चैत्रः ।**

सुबोधिनी-यङ्मानिनोःपुंवत् । एतयोः परतः स्त्रीलिंगस्य पुंवद्भवति । एनीवाचरतीति कर्तुर्यङिति यङि ईपो निवृत्तौ तन्निमित्तकस्य नत्वस्यापि निवृत्तिः । ये इति दीर्घः। एतायते। दर्शनीयां मन्यते इति मनेः कर्त्तरि णिनिः । दर्शनीयमानी । प्रातिपदिकग्रहणे लिंगवि-शिष्टस्यापि ग्रहणमिति स्वभिन्नां कांचिद्दर्शनीयां मन्यते या सा दर्शनीयमानिनी इहापि पुंवत् । त्रणईप् ॥

तत्त्वदीपिका-एतायतइति । ईपो निवृत्तौ तन्निमित्तकस्य नत्वस्यापि निवृत्तिः ।

**मू०-अकतद्धिताभ्यांकोपधस्यन ॥ पाचिकाभार्य्यः । रसि-काभार्यः ॥**

सुबोधिनी-अकतद्धिताभ्यांकोपधस्यन । अकतद्धितप्रत्ययाभ्यां कृत्वा कोपधस्य स्त्रीलिंगस्य पुंवद्भावो न भवति । पचतीति तृवुणाविति वुण् युवोरित्यकादेशे आबत इत्याप् काप्यतइतीत्वं । पाचिका भार्या यस्य स पाचिकाभार्य्यः । अन्यार्थे इति ह्रस्वः । रसोऽस्त्यस्या इति अइकौ च मत्वर्थे इतीकः । रसिका भार्या यस्येति रसिका-भार्यः । अन्यार्थेइति ह्रस्वः । एवं मद्रेषु भवा मद्रिका भवार्थे कः । आप् । काप्यतइतीत्वं । मद्रिकेवाचरतीति मद्रिकायते मद्रिकां मन्यते इति मद्रिकामानिनी । अत्र यङ्मानिनोरिति पुंवद्भावे प्राप्ते निषेधः ॥

**मू०-संज्ञापूरणार्थप्रत्यययोर्न ॥ दत्ताभार्य्यः । पंचमीभार्य्यः ।**

सुबोधिनी-संज्ञापूरणार्थप्रत्यययोर्न । अनयोः पुंवद्भावो न भवति । दत्ता भार्या यस्येति दत्तां मन्यते इति स्त्रियां पुंसि च संज्ञाभूतोयं दत्तशब्दो भाषितपुंस्कोस्ति । दत्ताभार्यः । दत्तामानिनी । पंचमी भार्या यस्येति कुत्सिता पंचमीति पंचमीभार्यः । पंचमीपाशा । पंचादे-र्मडिति संख्यापूरणे मट् । पंचमीपाशेत्यत्र तरतमेति प्राप्ते निषेधः ॥

**मू०-वृद्धिहेतोस्तद्धितस्यारक्तविकारार्थस्यन । माथुरीभार्य्यः । अरक्तेकिम्। कषायेण रक्ता कन्था काषायी। काषायी कन्था यस्य स काषाय-कन्थः । विकारेकिम् । हेम्नो विकारो हैमी मुद्रिका यस्येति हैममुद्रिकः ।**

सुबोधिनी-वृद्धिहेतोस्तद्धितस्याऽरक्तविकारार्थस्यन । आदिस्वरस्येति सूत्रेण विहिता या वृद्धिस्तस्या हेतुर्यस्तद्धितोऽरक्तविकारार्थो यस्य सोऽरक्तविकारार्थस्तस्यारक्तविकारा-र्थस्य तद्धितस्य पुंवद्भावनिषेधो न भवति । मथुरायाम्भवामाथुरी भवार्थेऽण् आदिस्वरस्येति

वृद्धिः त्रणइतीप् माथुरी भार्या यस्य स माथुरीभार्यः माथुरीवाचरतीति माथुरीयते । कर्तु-र्यङिति यङ् माथुरीयते इति माथुरीमानिनी । अत्र पुंवद्भावो न । वृद्धिहेतोरितिकिं । मध्ये भवा मध्यमा । मध्यान्मइति भवार्थे मः । मध्यमा भार्या यस्य स मध्यमभार्यः । तद्धित-स्येतिकिं । काण्डं लुनातीति काण्डलावी । कार्येऽणित्यण् कृदयं । कांडलावी भार्या यस्य स कांडलावभार्यः । आदिस्वरस्येति विहिता वृद्धिरिति किं । तत्परिमाणमस्या अस्तीति तावती । एतत्कियत्तद्भ्यइति वतुः । यत्तदेतदामित्याकारः । तावती भार्या यस्य स ताव-द्भार्यः । अरक्तविकारार्थस्येति किं । कषायेण रक्ता काषायी । कारकात् क्रियायुक्ते इति तेन रक्तमित्यर्थेऽण् त्रणइतीप् । काषायकंथः । पुंवद्भावादीपो निवृत्तिः । हेम्नो विकारो हैमी । विकारार्थेऽण् त्रणइतीप् । हैमी मुद्रिका यस्य स हैममुद्रिकः । पुंवद्भावः ॥

तत्त्वदीपिका–वृद्धिहेतोरिति । यस्मिन् तद्धिते आदिस्वरस्य वृद्धिरित्यर्थः ।

**मू०–युटिसतिपुंवत् ॥ वैयाकरणभार्य्यः ।**

सुबोधिनी–युटिसतिपुंवत् । वृद्धिहेतोस्तद्धितस्याऽरक्तविकारार्थस्य स्त्रीप्रत्ययांतस्यपुंव द्भावो भवति युडागमे कृते सति । व्याकरणमधीते वेत्ति वा इत्यर्थे अण् न संधिय्वोरिति युट् पश्चाद्वृद्धिः त्रणइतीप् वैयाकरणी भार्या यस्य स वैयाकरणभार्यः । सुष्ठु अश्वो यस्य स स्वश्वः स्वश्वस्यापत्यं स्त्री ऋठ्वृद्धी सौवश्वी भार्या यस्य स सौवश्वभार्यः ॥

**मू०–स्वाङ्गादीपोऽमानिनिन ॥ सुकेशी भार्य्या यस्य स सुकेशीभार्य्यः । मानिनि तु सुकेशमानिनी ।**

सुबोधिनी–स्वांगादीपोऽमानिनिन । स्वांगात्परस्य ईप्प्रत्ययस्य पुंवद्भावो न भवति । मानिन् शब्दे परे तु पुंवद्भावो भवतीत्यर्थः । सुष्ठुकेशा यस्याः सा स्वांगाद्वेतीप् सुकेशी भार्या यस्य स सुकेशीभार्यः । स्वांगात्किं । पट्वी भार्या यस्य स पटुभार्यः । ईपइतिकिं । नविद्यंते केशा यस्याः सा अकेशा सहनञितिईपोनिषेधः । अकेशा भार्या यस्य स अकेशभार्यः । पुंवद्भावः सुकेशी मन्यते यः स सुकेशमानी स्त्री तु सुकेशमानिनी ॥

**मू०–जातिवाचिनस्त्रीप्रत्ययान्तस्यन ॥ शूद्राभार्य्यः । ब्राह्मणीभा-र्य्यइत्यादि ।**

सुबोधिनी–जातिवाचिनःस्त्रीप्रत्ययांतस्यन । जातिवाचिशब्दात्परस्य स्त्रीप्रत्ययस्य पुंव-द्भावो न भवति । शूद्रा भार्या यस्य स शूद्राभार्यः । अजादेरित्याप् । ब्राह्मणी भार्या यस्य स ब्राह्मणीभार्यः । जातेरितीप् ॥

**मू०–गोः ॥ गोशब्दस्यान्यार्थे वर्तमानस्य ऱ्हस्वो भवति । पंच गावो यस्य स पंचगुः ।**

सुबोधिनी–गोः । अन्यार्थे वर्तमानो यो गोशब्दस्तदंतस्य नाम्नो ऱ्हस्वो भवति । पंच गावो यस्य स पंचगुः पंचभिर्गोभिः क्रीतः स पंचगुः । क्रीतार्थे इकस्य लुक् वा । अन्या-र्थेकिम् । अतिशयितो गौरतिगौः ॥

तत्त्वदीपिका–गोरिति । अन्यार्थे यो गोशब्दस्तदंतस्य नाम्नो ह्रस्व इत्यर्थः । यथाश्रुते तु गोक्षीरमित्यत्रापि गोशब्दस्योत्तरार्थे वर्त्तमानत्वे नान्यार्थत्वाद्ध्रस्वः प्रसज्येत । गोरन्यार्थे इत्येकयोगस्तु न कृतः स्त्रीप्रत्ययस्याग्रहणप्रसंगात् । गोश्चेत्यपि गौरवादेव नोक्तम् ।

**मू०–संख्यासुव्याघ्रादिपूर्वस्यपादशब्दस्यान्तलोपः । सहस्रं पादा यस्य स सहस्रपात् ।**

सुबोधिनी–संख्यासुव्याघ्रादिपूर्वस्यपादशब्दस्यांतलोपः । संख्यासुपूर्वस्यव्याघ्रादिपूर्वस्य च पादस्यांतस्य लोपः स्यात् । बहुव्रीहौ समासांतोयमादेशो ज्ञेयः । अन्यथा समासांतः कः प्रसज्येत । सहस्रं पादा यस्य स सहस्रपात् ॥

**मू०–शसादौस्वरेतद्धितयस्वरयोरीपीकारेचपदादेशः ॥ सहस्रपदः । व्याघ्रपदी कुले । वैयाघ्रपदः । वैयाघ्रपद्यः । द्विपाद् । द्विपादौ । द्विपादः । सुपात् । व्यापात् । टाडकाः । मध्याह्नः । पूर्वाह्णः ॥**

सुबोधिनी–शसादौस्वरेतद्धितयस्वरयोरीपीकारेचपदादेशः । पादशब्दस्य पदादेशः स्यात् शसादौ स्वरे । सहस्रपदः । ईपि द्विपदी पादोवेतीप् । ईकारेव्याघ्रपदी कुले । तद्धितयस्वरे वैयाघ्रपद्यः । ण्ययुटौ । तद्धितस्वरे वैयाघ्रपदः । अण्युटौ । अन्यपदार्थाभावे समानाधिकरणाऽभावे च क्वचिद्बहुव्रीहिर्भवति । यथा । पुत्रेण सह वर्तते यः स सपुत्रः । सहइत्यस्य तृतीयांतेन समासः । संख्येयार्थया संख्यया सहाऽव्ययासन्नादूराधिकसंख्याः समस्यंते स बहुव्रीहिर्भवति । दशानां समीपे ये संति ते उपदशाः । नव एकादश वेत्यर्थः । उपशब्दोहि समीपे समीपिनि च वर्तते । समीपेऽव्ययीभावः । समीपिनि तु बहुव्रीहिर्भवतीति । आसन्ना विंशतेर्ये संति ते आसन्नविंशाः । डप्रत्ययः । विंशतेष्टिलोपो डितीतिलोपः । अदूरास्त्रिंशत इति अदूरत्रिंशाः । अधिकाश्चत्वारिंशत इति अधिकचत्वारिंशाः । द्वौ वा त्रयो वा द्वित्राः । चार्थेऽयं बहुव्रीहिः । द्विरावृत्ता दश द्विदशाः । विंशतिरित्यर्थः । सुप्रत्ययार्थोऽयं बहुव्रीहिः । दिङ्नामान्यंतराले समस्यंते स बहुव्रीहिः । दक्षिणपूर्वा । तेषुगृहीत्वा इदं युद्धं प्रवृत्तमित्यर्थे तेन प्रहत्येदं युद्धं प्रवृत्तमित्यर्थे च सप्तम्यंतयोस्तृतीयांतयोश्च पदयोः समासो भवति क्रियाव्यतिहारे द्योत्ये स बहुव्रीहिः । अत्र पूर्वपदस्य दीर्घः वक्ष्यमाणः समासांत इप्रत्ययः इप्रत्ययांतस्याऽव्ययसंज्ञाच । केशेषु केशेषु गृहीत्वा इदं युद्धं प्रवृत्तमिति केशाकेशि । दंडैश्च दंडैश्च प्रहत्येदं युद्धं प्रवृत्तमिति दंडादंडि । मुष्टिभिर्मुष्टिभिः प्रहत्येदं युद्धं प्रवृत्तमिति मुष्टामुष्टि । बाहुषु बाहुषु गृहीत्वा इदं युद्धं प्रवृत्तमिति वोऽव्ययस्वरे इत्यवादेशः बाहूबाहवि ॥ अथ समासांतप्रत्यया उच्यंते ॥ पूरणार्थप्रत्ययांतं यत् स्त्रीलिंगं तदंतात् प्रमाण्यंताच्च बहुव्रीहेरः । कल्याणीपंचमा रात्रयः । अत्र संख्यापूरणे मट् । पूरणार्थप्रत्ययांते इति पुंवद्भावे निषेधः । स्त्री प्रमाणी यस्य स स्त्रीप्रमाणः नित्यस्त्रीत्वान्न पुंवद्भावः । प्रमाति अनयेति प्रमाणी करणे युट् । प्रधाने कार्यसंप्रत्यय इति न्यायात् प्रधाने पूरणार्थप्रत्ययांतस्त्रीलिंगे एवाप्रत्ययः पुंवद्भावनिषेधश्च । रात्रिःपूरणार्थप्रत्ययवाच्या चेत्युक्तोदाहरणे मुख्या । अन्यत्र तु कल्याणपंचमीकः पक्षः । क एव । नक्षत्रार्थेनेतृशब्दांताद् बहुव्रीहेरः । मृगो मृगशीर्षनक्षत्रं नेता नायको यासां ताः मृगनेत्रा रात्रयः । अंतर्बहिःपूर्वपदाल्लोमन्नंताद्बहुव्रीहेरः । अंतर्लोमः । बहिर्लोमः । नोवेतिटिलोपः । नासिकांताद्बहुव्रीहेरः । स्थूलपूर्वाच्च न । द्रुरिव नासिका यस्येति सह्यादे-

रिति नासिकाया नस् द्रुणसः । खरा नासिका यस्य स खरणसः । उभयत्र संज्ञायामः । असंज्ञायां खुरखराभ्यां नासिकाया वा अप्रत्ययः । खुरणसः । खुरणाः । खरणसः । खरणाः । उपसर्गाच्च नासिकायाम् अः । असंज्ञायाम् । उन्नता नासिका यस्य स उन्नसः । प्रगता नासिका यस्य स प्रणसः । स्थूलपूर्वात्किं । स्थूलनासिकः । सुप्रातसुश्वसुदिवशारिकुक्षिचतुरस्रैणीपदाऽजपदप्रोष्ठपदा अप्रत्ययांता निपात्यंते बहुव्रीहौ । शोभनं प्रातरस्येति सुप्रातः । इनिवृत्तिर्निपातनात् । शोभनं श्वोऽस्येति सुश्वः । म्रनिवृत्तिर्निपातनात् । शोभनं दिवाऽस्येति सुदिवः । शारिरिव कुक्षिरस्येति शारिकुक्षः । चतस्रोऽश्रयोऽस्येति चतुरस्रः । तालव्यशस्य दंत्यः सो निपातनात् । एण्या इव पादा यस्येति एणीपदः । अजपदः । प्रोष्ठपदः । निपातनात्पदादेशः । नञ्दुःसुपूर्वपदाद्धलिसक्थिशक्त्यंताद्बहुव्रीहेरोवा । अहलः, अहलिः । असक्थः, असक्थिः । अशक्तः, अशक्तिः । ईदूदंतस्त्रीलिंगोत्तरपदाच्च बहुव्रीहेः कः । कल्याणी पंचमी रात्रिर्यस्मिन् स कल्याणपंचमीकः पक्षः । बहवः कर्तारो यस्य स बहुकर्तृकः प्रासादः । उरःप्रभृत्यंताद्बहुव्रीहेः कः । व्यूढं विशालमुरो यस्य स व्यूढोरस्कः । प्रियं सर्पिर्यस्य स प्रियसर्पिष्कः । वाचस्पत्यादित्वात् सषौ । इहोरःप्रभृतौ पुमान् अनड्वान् पयः नौःलक्ष्मीरित्याद्येकवचनांतादेव कः । द्विवचनबहुवचनांतेभ्यस्तु वैकल्पिकः को भवतीति विवेकः । यथा । द्विपुमान् । द्विपुंस्कः । नञ्पूर्वादर्थात्को बहुव्रीहौ । अनर्थकः । इन्नंताद्बहुव्रीहेः कः स्त्रियां । बहुदंडिका नगरी । अनुक्तसमासांताद्बहुव्रीहेर्वा कः । महायशस्कः, महायशाः । आबंतस्य वा ह्रस्वः के । बहुमालाकः, बहुमालकः । काभावे बहुमालः । ईयसुप्रत्ययांतोत्तरपदाद्बहुव्रीहेर्न कः । बहवः श्रेयांसोऽस्य स बहुश्रेयान् । अन्यार्थे इति ह्रस्वे प्राप्ते ईयसुप्रत्ययांतस्य स्त्रीलिंगस्य ह्रस्वो न बहुव्रीहौ । बह्व्यः श्रेयस्योऽस्य स बहुश्रेयसी । बहुव्रीहौ किम् । अतिश्रेयसिः । संख्येये बहुव्रीहेर्डो न तु बहुगणाभ्याम् । उपदशाः । बहुगणाभ्यांकिम् । उपबहवः । उपगणाः । स्वांगवाचिसक्थ्यक्ष्यंताद्बहुव्रीहेष्टः । टित्त्वादीप् । दीर्घसक्थिनी यस्य स दीर्घसक्थः । जलजाक्षी । स्वांगवाचीति किम् । दीर्घसक्थिशकटं । स्थूलानि अक्षीणि पर्वाणि यस्याः सा स्थूलाक्षा वेणुयष्टिः । वक्ष्यमाणो डप्रत्ययः । अंगुल्यंताद्बहुव्रीहेष्टो दारुण्यर्थे । पंचांगुलयो यस्य तत्पंचांगुलं दारु । अंगुलिसदृशावयवं धान्यादिविक्षेपकाष्ठम् । बहुव्रीहेरिति किं । द्वे अंगुली प्रमाणमस्या इति द्व्यंगुला यष्टिः । तद्धितार्थे द्विगुः प्रमाणेद्वयसट् दघ्नट् मात्रट् इति मात्रट् तस्य लुक् च । ततः समासांतोऽप्रत्ययः । दारुणि किं । पंचांगुलिर्हस्तः । द्वित्रिपूर्वात् मूर्द्धांताद्बहुव्रीहेष्टः । द्विमूर्द्धः । त्रिमूर्द्धः । नोवेति टिलोपः । सुहरिततृणसोमेभ्यः परात् जंभादन् बहुव्रीहौ । जंभो भक्ष्ये च दंते चेति । शोभनो जंभो यस्य स सुजंभा । हरितजंभा । तृणं जंभो भक्ष्यं यस्य तृणमिवजंभा दंता अस्येति वा तृणजंभा । सोमजंभा । व्याधयोगे दक्षिणेर्मेत्यंन्नंतं निपात्यते बहुव्रीहौ । दक्षिणे ईर्मं व्रणं यस्य स दक्षिणेर्मा मृगः । व्याधेन कृतव्रणइत्यर्थः । क्रियाव्यतिहारे बहुव्रीहेरिः । केशाकेशि । मुशलामुशलि । प्रहरणेर्थे । द्विदंडि द्विमुशलि उभाहस्ति उभयाहस्ति इति इप्रत्ययांता निपात्यंते बहुव्रीहौ । द्वौ दंडौ यस्मिन् प्रहरणे तद्विदंडि । द्विमुशलि । उभाहस्ति । उभयाहस्ति । निपातनाद्वा उभये इति बहुव्रीहिः । ॥ अथ द्विगुतत्पुरुषकर्मधारयसमासांताः ॥ गोंताद्द्विगुतत्पुरुषकर्मधारयाट्टो न तु तद्धितलुकि । पंचगवं । तद्धितलुकि किं । पंचभिर्गोभिः क्रीत इति पंचगुः । क्रीतार्थे इकस्तस्य लुक् च । देवगवी । परमगवी संख्याव्ययादेरंगुल्यंताद्

द्विगुतत्पुरुषकर्मधारयाद: । द्वे अंगुली प्रमाणमस्येति द्व्यंगुलं दारु । प्रमाणेद्वयसडिति मात्रट् तस्य लुक् च । निर्गतमंगुलिभ्य इति निरंगुलम् । एकांगुला । सर्वैकदेशसंख्यातपुण्यसंख्याऽव्ययेभ्यो रात्रेरः द्विगुतत्पुरुषकर्मधारये । सर्वा चासौ रात्रिश्चेति रात्राह्नाहांता इति पुंस्त्वं । सर्वरात्रः । रात्रेः पूर्वमिति पूर्वरात्रः । संख्यातरात्रः । पुण्यरात्रः । द्वयोः रात्र्योः समाहार इति संख्यापूर्वं रात्रमिति क्लीबता द्विरात्रम् । अतिक्रांतो रात्रिमित्यतिरात्रः राजाहःसखिभ्यष्टो द्विगुतत्पुरुषकर्मधारये । कविराजः । उत्तमाहः । रात्राह्नाहांता इति पुंस्त्वं । पुण्याहं पुण्यसुदिनाभ्यामिति क्लीबता । कृष्णसखः । पंचाहं । मुख्यवाचिन उरसष्टः तत्पुरुषे । अश्वानामुरइत्येवेत्यश्वोरसम् । मुख्योऽश्व इत्यर्थः । अनोऽश्माऽयःसरोभ्यष्टो जातिसंज्ञार्थे तत्पुरुषकर्मधारये । उपानसम् । अमृताश्मः । कालायस । मंडूकसरसमितिजातिः । महानसम् । पिंडाश्मः । लोहितायसं । जलसरसमिति संज्ञा । ग्रामकौटाभ्यांतक्ष्णष्टस्तत्पुरुषकर्मधारये । ग्रामस्य तक्षा ग्रामतक्षः । साधारण इत्यर्थः । कुट्यां भवः कौटः स्वतंत्रः कौटश्चासौ तक्षा च कौटतक्षः । अतेः शुनष्टस्तत्पुरुषे । श्वानमतिक्रांतो जवेनेत्यऽतिश्वो-वराहः । अतिश्वी । सेनेत्यर्थः । अप्राणिविषयकोपमानवाचिनः शुनष्टस्तत्पुरुषे । आकृष्य-तेऽनेन खलादिगतं धान्यमित्याकर्षः । काष्ठविशेषः । आकर्षः श्वेवेति आकर्षश्वः । अप्रा-णिविषयकेति किं । वानरः श्वेवेति वानरश्वा । उत्तरमृगपूर्वोपमानात् सक्थ्नष्टस्तत्पुरुषे । उत्तरसक्थं । मृगसक्थं । पूर्वसक्थं । फलकसक्थं । नौशब्दांतात् द्विगोष्टो नतु तद्धित-लुकि । द्विनावं । त्रिनावं । नतुतद्धितलुकीति किं । पंचभिर्नौभिः क्रीत इति पंचनौः । अत्र क्रीतार्थे इकस्तस्य लुक् च । अर्द्धपूर्वान्नावष्टस्तत्पुरुषे । नावोऽर्द्धमित्यर्द्धनावं । क्लीबत्वं लोकात् । खारीशब्दांताद्द्विगोरर्द्धपूर्वात् । खार्यंतात् तत्पुरुषाच्च वा टः । द्विखारं । टाभावे द्विखारि । क्लीबत्वं लोकात् । अर्द्धखारं । द्वंद्वतत्पुरुषयोरितिपरपदलिंगे । अर्द्धखारी । द्विगौ द्वित्रिभ्यामंजलेष्टो वा न तु तद्धितलुकि । द्व्यंजलं, द्व्यंजलि । नतुतद्धितलुकीति किम् । द्वाभ्यामंजलिभ्यां क्रीत इति द्व्यंजलिः । क्रीतार्थे इकस्तस्य लुक् च । ब्रह्मशब्दांतात्तत्पुरुषाट्टो जानपदेर्थे । सुराष्ट्रे ब्रह्मा सुराष्ट्रब्रह्मः । कुमहद्भ्यां ब्रह्मणष्टो वा तत्पुरुषकर्मधारये । कुत्सि-तो ब्रह्मा कुब्रह्मः, कुब्रह्मा । महाब्रह्मः, महाब्रह्मा । ब्राह्मणपर्यायो ब्रह्मन् शब्दः । संख्यांतात्त-त्पुरुषाड्डः । निर्गतानि त्रिंशत इति निस्त्रिंशानि वर्षाणि चैत्रस्य । निर्गतस्त्रिंशतोऽगुलिभ्य इति निस्त्रिंशः खड्गः ॥ इति द्विगुतत्पुरुषकर्मधारयसमासांताः ॥ अथ सकलसमाससाधारणस-मासांताः ॥ ऋक्पूरब्धूःपथामोऽक्षेया धूस्तत्र तु न । ऋचोऽर्द्धमिति अर्द्धर्चः । अर्द्धर्चादय इति पुंस्त्वम् । अनृचबह्वृचशब्दावध्येतर्य्येव । नेह । अनृक् साम । बह्वृक् सूक्तं । वैकल्पिकः कप्रत्ययस्तु भवत्येव । अनृचंबह्वृकमिति । विष्णोः पूरिति विष्णुपुरं । क्लीबत्वं लोकात् । विमलापं सरः । द्व्यंतरुपसर्गेभ्यः कृतसमासांतस्याऽपस्यादेरीः । द्विर्गता आपो यस्मिन्निति द्वीपं । अंतर्गता आपोऽस्मिन्निति अंतरीपं । प्रतिकूला आपोऽस्मिन्निति प्रतीपं । संगता आपो-ऽस्मिन्निति समीपं । कथंतर्हि समापो देवयजनमिति । समा आपो यस्मिन्निति समापः । दे-वाइज्यंतेऽस्मिन्निति देवयजनं यज्ञभूमिरितिज्ञेयं । कृतसमासांतग्रहणान्नेह । स्वप् सरः । पूजनार्थेति निषेधात्समासांताऽभावः । अवर्णांतादुपसर्गात्कृतसमासांतस्यापस्यादेरीर्वा । प्रेपं-परेपं, प्रापं, परापं । अनोः कृतसमासांतस्यापस्यादेरुः । अनुगता आपोऽस्मिन्निति अनूपो देशः । जलप्रायमनूपंस्यादित्यमरः । राजधुरा । अक्षेइति किम् । अक्षधूः धृढधूरक्षः । सखिपथोरम्य-

पर्थोदेशः। प्रत्यन्ववपूर्वाभ्यांसामलोमभ्यामः। प्रतिसामम्। अनुसामम्। अवसामं।प्रतिलोमम्। अनुलोमम्। अवलोमम्। बहुव्रीह्यव्ययीभावप्रादिसमासा अत्र। कृष्णोदक्पांडुसंख्यापूर्वाया भूमेरः। कृष्णभूमः। उदग्भूमः। पांडुभूमः द्विभूमः। त्रिभूमः प्रासादः। बहुव्रीहावेते। संख्यायानदीगोदावरीभ्यामः। पंचनदं। सप्तगोदावरम्। अव्ययीभावे एतौ। नाभेरः। पद्मं नाभावस्येति पद्माकारानाभिरस्येति वा पद्मनाभः। अचक्षुःपर्यायादक्ष्णोऽप्रत्ययः। गवां किरणानामाक्षिरंध्रामिवेति गवाक्षः। ब्रह्महस्तिपल्यराजभ्योवर्चसोऽप्रत्ययः। ब्रह्मवर्चसं। हस्तिवर्चसं। पलं मांसमर्हतीति पल्यो मांसभोजी पल्यवर्चसं। राजवर्चसं।षष्ठीतत्पुरुषोऽत्र। अवसमंधेभ्यस्तमसोऽप्रत्ययः। अव हीनं तम इति अवतमसं। समंतात् तम इति संतमसम्। अंधयतीति अंधम्।अंधदृष्ट्युपघाते चुरादिरस्मात्पचाद्यप्रत्ययः। अंधं गाढं तम इत्यंधतमसं।श्वस्शब्दाद्वसीयःश्रेयोभ्यामः वसुशब्दः प्रशस्तवाची तस्मादीयसुप्रत्यये वसीय इति। श्वस्शब्दस्तु कालवाच्यप्यत्राशीर्विषयताद्योतकोस्ति। श्वोवसीयसं श्वःश्रेयसम्। कर्मधारयोत्र। अन्ववतप्तेभ्यो रहःशब्दादः। रहइत्यनेनाऽप्रकाशमुच्यते अनुगतं रह इत्यनुरहसम्। अवहीनं रह इत्यवरहसम्। अनुगतं रहोस्मिन्नित्यादि बहुव्रीहिर्वा। तप्तं च तद् रहश्चेति तप्तरहसं। परेणानधिगम्यमित्यर्थः। प्रतेरुरस्शब्दादः। उरसि इति प्रत्युरसं। सप्तम्यर्थे अव्ययीभावोयं। अप्रत्ययांतमनुगवं दीर्घत्वे निपात्यते।अनुगवं यानं। गोदैर्घ्यसदृशदैर्घ्योपलक्षितमित्यर्थः। उपसर्गादध्वशब्दादः। प्रगतोऽध्वानमिति प्राध्वो रथः। अचतुरविचतुरसुचतुरत्रिचतुरउपचतुरस्त्रीपुंसधेन्वनडुहऋक्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तंदिवरात्रिंदिवाऽहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषऋग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः। अप्रत्ययांता निपात्यंते।अविद्यमानानि चत्वार्यस्येति अचतुरः। विचतुरः। सुचतुरः। त्रयश्चत्वारोवेति त्रिचतुरः। चतुर्णां समीपे ये संति ते उपचतुराः। एते पंच बहुव्रीहयः। तेन तत्पुरुषे अचत्वारो विचत्वार इत्येवं भवतीतिभावः। स्त्रीपुंसौ धेन्वनडुहौ। ऋक्सामे। वाङ्मनसे। अक्षिणी च भ्रुवौ च अक्षिभ्रुवं प्राण्यंगत्वादेकवद्भावः। दाराश्च गावश्च दारगवम्। ऊरू च अष्ठीवंतौ च ऊर्वष्ठीवं। निपातनाट्टिलोपः। जानूरुपर्वाऽष्ठीवदऽस्त्रियामित्यमरः। सक्थिक्लीबे पुमानूरुः इतिचामरः। पदष्ठीवं। निपातनात् पादस्य पद् प्राण्यंगत्वादेकवदुभयत्र। नक्तं च दिवा च नक्तंदिवं। रात्रौ च दिवा च रात्रिंदिवं। रात्रेर्मांतत्वं निपातनात्। अहनि च दिवा चेति अहर्दिवं। वीप्सायां द्वंद्वो निपात्यते। अहन्यहनीत्यर्थः। एते एकादश द्वंद्वाः। रजः अपि अपरित्यज्यात्ति सरजसं साकल्येऽव्ययीभावोयं। बहुव्रीहौ तु रजसा सह वर्तते इति सरजः पंकजमिति। निश्चितं श्रेय इति निःश्रेयसं तत्पुरुष एवायं। बहुव्रीहौ तु न निश्चितं श्रेयो येनेति निःश्रेयान् पुरुषः। पुरुषस्यायुः पुरुषायुषं। तत्पुरुषोऽयं। द्व्यायुषं। त्र्यायुषं। एतौ द्विगू। ऋग्यजुषं। द्वंद्वोऽयं। जातोक्षः। महोक्षः। वृद्धोक्षः एते त्रयः कर्मधारयाः। शुनः समीपं उपशुनं। टिलोपाऽभावः संप्रसारणं च निपात्यतेव्ययीभावे। गोष्ठे श्वेति गोष्ठश्वः। सप्तमीतत्पुरुषएवायं। षष्ठीतत्पुरुषे तु न गोष्ठश्वा। पूजनार्थे स्वतिपूर्वकान्नाम्नः समासांता न। बहुव्रीहौ भवंति। सुराजा। अतिराजा। पूजनार्थेतिकिं। गामतिक्रांतोऽतिगवः। बहुव्रीहौ किं। सुष्ठु सक्थिनी यस्य सः सुसक्थः। सुष्ठु अक्षिणी यस्य सः स्वक्षः। टप्रत्ययोऽत्र। निंदार्थके किंपूर्वान्नाम्नः समासांता न। कुत्सितो राजा किंराजा किंसखा। किंगौः। निंदार्थकेतिकिं। किंराजः। किंसखः। किंगवः।

नञ्तत्पुरुषात्समासांता न । अराजा । असखा । तत्पुरुषात् किं । न विद्यते धूर्यस्य तत् अधुरं शकटं । नञ्पूर्वपथिशब्दाद्वा समासांतस्तत्पुरुषे । अपथम् , अपंथाः । अपथं तत्पुरुषे क्लीबमिति क्लीबत्वं । तत्पुरुषे किम् । अपथो देशः बहुव्रीहिरत्र । अपथम् । अर्थाभावेऽव्ययीभावोयम् ॥ इति सकलसमाससाधारणाः प्रत्ययाः ॥ अथ प्रकृतमनुसरामः ॥ अह्नो मध्यमिति मध्याह्नः अह्नः पूर्वइति पूर्वाह्णः । कवीनां राजेति कविराजः । कृष्णस्य सखेति कृष्णसखः । राजाहःसखिभ्यष्ट इति टप्रत्ययः ॥

तत्त्वदीपिका–मध्याह्न इति । अह्नोमध्यः इति विग्रहेऽह्न चेदमाद्यंतस्य परत्वामित्यहन्शब्दस्य परनिपातो नोवेत्यनेनोपधालोपे रूपसिद्धिः । रात्राह्नाहाः पुंसीति नियमात्पुंस्त्वम् ।

**मू०–नोवा ॥ नान्तस्य टेर्लोपस्स्वरे यकारे च परे । वाग्रहणात्क्वचिन्न । क्वचिदुपधालोपः । कविराजः । कृष्णसखः । देवगवी । परमगवः । राजपुरम् । एकधुरम् । सर्वधुरम् । वाङ्मनसे । दक्षिणापथः । अहोरात्रः । द्वित्राः । पञ्चषाः । बहुकर्तृकः । बहुलक्ष्मीकः । स्त्रीपुंसौ । ऋक्सामे । महोक्षः । वृद्धोक्षः । द्व्यायुषम् । त्र्यायुषम् । ग्रामतक्षः । फलकसक्थम् । मृगसक्थं । पूर्वसक्थम् । अर्द्धखारम् । अर्द्धनावम् ।**

सुबोधिनी–नोवा । नांतस्य नाम्नष्टेर्लोपस्तद्धिते ये स्वरे च । अत्र समासांतास्तद्धितांतर्भूता ज्ञेयाः । अत्र वेति व्यवस्थार्थम् । तेन क्वचिट्टिलोपः क्वचिदुपधालोपः क्वचिन्नोभयम् । टिलोपो यथा । उडुलोम्नोऽपत्यमिति औडुलोमिः । राज्ञः कर्मेति राज्यं । कविराजः । उपधालोपो यथा । वृत्रघ्नोऽपत्यं वार्त्रघ्नः । तक्ष्णोऽपत्यं ताक्ष्णः । अह्नः पूर्वः पूर्वाह्णः । नोभयं यथा । ब्रह्मणोऽपत्यं ब्राह्मण इत्यादि । देवानां गौर्देवगवी । परमा चासौ गौश्च परमगवी । गोंताद् द्विगुतत्पुरुषकर्मधारयाट्ट इति टः । राजपुरम् । एकधुरं । सर्वधुरः । कर्मधारये पुंवत् । ऋक्पूरब्धूःपथामइत्यप्रत्ययः । वाक् च मनश्च वाङ्मनसम् । अचतुरविचतुरेत्यनेनाप्रत्ययो द्वंद्वे । दक्षिणापथः ऋक्पूरब्धूःपथामइत्यप्रत्ययः । अहश्च रात्रिश्च अहोरात्रः । अहःपूर्वाद्रात्रिशब्दादः समाहारेइत्यप्रत्ययः । रात्राह्नाहांताइतिपुंस्त्वं द्वौवात्रयोवाद्वित्राः । पंचवाषड्वापंचषाः । संख्येयेबहुव्रीहेर्डइति डः । बहुकर्तृकः । बहुलक्ष्मीकः । ईदूदंतस्त्रीलिंगोत्तरपदाददंतोत्तरपदाच्च बहुव्रीहेः कइति कप्रत्ययः । स्त्रीपुंसौ । ऋक्सामे अचतुरविचतुरेत्यनेन द्वंद्वे डप्रत्ययः । महोक्षः । जातोक्षः । वृद्धोक्षः । अचतुरेत्यनेन कर्मधारयेऽप्रत्ययः । पुरुषायुम् । अचतुरविचतुरेत्यनेन तत्पुरुषेऽप्रत्ययः । द्व्यायुषं । त्र्यायुषं । अचतुरेत्यनेन द्विगावप्रत्ययः । ग्रामतक्षः । ग्रामकौटाभ्यांतक्ष्णष्टइति तत्पुरुषे टः । फलकसक्थः । मृगसक्थः । पूर्वसक्थः । उत्तरमृगपूर्वोपमानात्सक्थ्नष्टस्तत्पुरुषेइति टप्रत्ययः । फलकमिव सक्थि अस्येति बहुव्रीहौ तु स्वांगवाचिसक्थ्यक्ष्यंताद्बहुव्रीहेष्टइति टप्रत्ययो बोध्यः । अर्द्धखारं । खारीशब्दांताद्द्विगोरर्धपूर्वात्खार्यंतात्तत्पुरुषाच्च वा टइति टः । अर्द्धनावं । अर्द्धपूर्वान्नावष्टस्तत्पुरुषे इति टः ॥

तत्त्वदीपिका– नोवेति । यस्वरयोरनुवृत्तिः डिति टेरित्यतष्टेरित्यस्य नामत्वाधिकारादेवेत्याशयेनाह । नांतस्येति । नाम्न इति शेषः । वेत्यस्य व्यवस्थितत्वादाह वाग्रहणादिति । पूर्वसक्थमिति सक्थ्नः पूर्वमिति विग्रहः अर्द्धखारमिति खार्या अर्द्धमिति विग्रहः एवमर्द्धनावमित्यपि । इति बहुव्रीहिः ।

**मू०—कर्म्मधारयस्तुल्यार्थे ॥ पदद्वये तुल्यार्थे एकार्थनिष्ठे सति कर्म्म-धारयस्समासो भवति ।**

सुबोधिनी—कर्मधारयस्तुल्यार्थे । समस्यमानयोर्द्वयोः पदयोर्विशेषणविशेष्यधर्मयोर्यत्र परस्परं तुल्यार्थता तत्रैव समासो भवति नान्यत्र । भ्रमरादिसाधारणरूपेण प्रतिपन्नो नीलार्थः उत्पलार्थे नीलोत्पले स्थाप्यते । रक्तादिसाधारणरूपेण प्रतिपन्न उत्पलार्थोऽपि नीलार्थे न नीले स्थाप्यते इति भवति द्वयोस्तुल्यार्थता । पदयोर्द्वयं पदद्वयं तस्मिन् एकस्मिन्नर्थे निष्ठा वृत्तिर्यस्य भिन्नप्रवृत्तिनिमित्तकस्य पदद्वयस्य तदेकार्थं निष्ठं तस्मिन् सति य एकार्थो भावः स कर्मधारयसंज्ञकः समासो भवति । भिन्नार्थानामेक-रूपेणैकत्रान्वयविवक्षायां द्वंद्वः । भिन्नार्थयोर्विशेष्यविशेषणभावेनैकत्रान्वयविवक्षायां कर्म्मधार-यइत्यर्थः । विशेष्यतेऽनेनेति विशेषणं शिषॢ विशेषणे । करणे युट् । भेदकं व्यावर्तकमिति । यत्साधारणाकारेण प्रतिपन्नं बहुप्रकारं वस्तु प्रकारांतरेभ्यो व्यवच्छिद्य एकस्मिन् प्रकारे व्य-वस्थापयति तद्विशेषणं । व्यवस्थाप्यमानं तु विशेष्यं भेद्यं प्रधानमिति । अत्र लौकिकविग्रहे भेदद्योतकश्चशब्दो धर्मभेदद्योतनाय प्रयुज्यते । धर्म्यभेदबोधनाय सर्वादिश्च । द्रव्यगुणक्रि-यासन्निधाने द्रव्यवाचकस्यैव प्राधान्यमित्यतो द्रव्यस्य प्राधान्यात् गुणक्रिययोश्चाप्राधान्याद् गुणद्रव्ययोः क्रियाद्रव्ययोश्च समासेगुणक्रिययोरेव पूर्वनिपातोबोध्यः। यत्र तु गुणशब्दयोः क्रियाशब्दयोर्गुणक्रियाशब्दयोर्वा समासस्तत्रानियमएव । खंजकुब्जः। कुब्जखंजः याचकपा-ठकः । पाठकयाचकः । खंजपाचकः । पाचकखंजः । द्रव्यशब्दयोरुपनिपाते तु न नियमः । शिंशपावृक्षः । इह वृक्षत्वस्यव्यापकत्वात्प्राधान्यं शिंशपात्वस्य तु विपर्ययादप्राधान्यं। इत्येवं सर्वत्र विशेषणस्य पूर्वनिपातो बोध्यः । हसादिरितिनिर्देशाद्विशेष्यस्यापि पूर्वनिपातश्च ।

तत्त्वदीपिका— कर्मधारयस्तुल्यार्थे इति । पदद्वयेति एकार्थनिष्ठेति भिन्ने प्रवृत्तिनिमित्ते सति एकस्मिन्नर्थे निष्ठानिवृत्तिर्यस्येत्यर्थः । भिन्नार्थानामेकरूपेणैकत्रान्वयविवक्षायां द्वंद्वः । विशेषणविशेष्यभावे तु कर्मधारय इति विवेकः । पूर्वनिपाते त्वनियमः । हसादिरिति लिंगात् । तथाहि । आदिश्चासौ हसश्चेति आ-दिहस इति स्यात् । लक्ष्यानुसाराच्च व्यवस्था। विशेष्यतेनेनेति विशेषणं । शिष्लृविशेषणे इत्यतः करणे युट् । यत्साधारणेन प्रतिपन्नं बहुप्रकारं वस्तु प्रकारांतरेभ्यो व्यवच्छिद्य एकस्मिन् प्रकारे व्यवस्थापयति तद्विशेषणम् ।

**मू०—कर्म्मधारयेपूर्वम्पुंवत् ॥ नीलमुत्पलम् नीलोत्पलम् । रक्तलता । पुंस्कोकिलः । ब्राह्मणभार्या । दत्तभार्या । सुकेशभार्य्या । स्नातानुलिप्तः । एकनाथः । सर्वयाज्ञिकाः । जरन्नैयायिकाः । पुराणमीमांसकाः । नवपाठकाः। केवलवैय्याकरणाः ।**

सुबोधिनी—कर्मधारयेपूर्वपुंवत् । स्त्रीलिंगमुक्तपुंस्कं पूर्वपदं पुंवद्भवति । कर्म्मधारये पूर-णार्थप्रत्ययांते प्रियादौ च नेत्यप्राप्तः पुंवद्भावो विधीयते । महती चासौ नवमी चेति पंचा-देरिति मट् पुंवद्भावे कृते सहादेरित्यात्वं महानवमी । महाप्रिया । तथाकृत्तद्धिताभ्यां को-पधस्यनेति १ संज्ञापूरणार्थप्रत्यययोर्नेति २ वृद्धिहेतोस्तद्धितस्याऽरक्तविकारार्थस्यनेति ३ स्वगादीपोऽमानिनीति ४ जातिवाचिनःस्त्रीप्रत्ययांतस्यनेति ५ पंचसूत्र्या प्रतिषिद्धः पुंवद्भावोऽ-प्यत्र विधीयते । क्रमेणोदाहरणानि । यथा । पाचकस्त्री । दत्तभार्या । पंचमभार्या । स्रुघ्नभवा स्रौघ्नी भवार्थेऽण् स्रौघ्नी चासौ भार्याच स्रौघ्नभार्या । सुकेशभार्या । ब्राह्मणभार्या। रक्ता चासौ

लता च रक्तलता । पुमांश्चासौ कोकिलश्च पुंस्कोकिलः । ब्राह्मणी चासौ भार्या च ब्राह्मणभार्या । दत्ता चासौ भार्या च दत्तभार्या । सुकेशी चासौ भार्या च सुकेशभार्या । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । एकश्चासौ नाथश्चैकनाथः । दिक्संख्येइति नियमबाधनार्थमुदाहरणं । यज्ञमधीयते विदंति वा ते याज्ञिकाः । इकप्रत्ययः । सर्वेच ते याज्ञिकाश्च सर्वयाज्ञिकाः । जरंतश्च ते नैयायिकाश्चेति जीर्यतेरत्र भूतेर्थेतृ न्यायमधीयते विदंतिवा ते नैयायिकाः जरन्नयायिकाः । जीर्णनैयायिका इत्यर्थः । युट्वृद्धिश्च । मीमांसामधीयते विदंति वा ते मीमांसकाः । केनैयेका इति कप्रत्यये ह्रस्वत्वं । पुराणाश्च ते मीमांसकाश्च पुराणमीमांसकाः । पठंति ते पाठकाः ण्वुणाविति वुण् नवशब्दः संख्यावाच्यत्र न गृह्यते । दिक्संख्ये इति नियमात् । नवाश्चते पाठकाश्च नवपाठकाः । व्याकरणमधीयते विदंति वा वैयाकरणा अणयुट् वृद्धिश्च । केवलाश्च ते वैयाकरणाश्च केवलवैयाकरणाः ॥ इति कर्मधारयः ॥

तत्त्वदीपिका—नीलमुत्पलमिति । अत्रहि नीलार्थोभ्रमरादिसाधारणरूपेण प्रतिपन्न उत्पलार्थेनोत्पले व्यवस्थाप्यते उत्पलार्थोपि रक्तादिसाधारणरूपेण प्रतिपन्नो नीलार्थेन नीले व्यवस्थाप्यते इति । यत्तु वासुदेवेनोक्तं तुल्यार्थत्वं नाम समानार्थत्वं तच्च प्रायशः पदयोर्दृष्टमिति पदद्वयेत्युक्तं । तेन नीलोज्ज्वलवट इत्यादौ बहुपदेप्यदोप इति । तन्न । बहुपदानां कर्मधारयत्वासंभवात् । अनेकपदत्वे द्वंद्वबहुव्रीह्योरेवेति दीक्षितेनोक्तनियमोप्यत्रानुकूलः । कर्मधारयसंज्ञाविधानानुमितफलन्तु पूर्वपदस्योक्तपुंस्कस्य पुंवद्भावः इत्याशयेनाह । रक्तलतेति । रक्ता चासौ लतेति विग्रहः । अत्र रक्तशब्दस्य गुणवचनत्वेन विशेषणत्वात्पूर्वनिपातः तथा च गुणद्रव्ययोर्गुणस्य क्रियाद्रव्ययोश्च क्रियायाः गुणशब्दक्रियाशब्दयोस्त्वानियमः पूर्वनिपाते इति बोध्यम् । अत्र लौकिकविग्रहे भेदद्योतकश्चशब्दोधर्मभेदद्योतनाय प्रयुज्यते । सर्वादिश्चधर्मभेदबोधनाय प्रयुज्यते । अत्रार्थेचस्थूल.चासौपृषतीचेतिशेषोक्तिरनुकूला । तदभावेएकोऽसहायोच् एकाजितितदुक्तिरेवेति द्वयमपि सम्यगेवेति ।

**सू०—नाम्नश्चकृतासमासः ॥** प्रादेरुपसर्गस्य नाम्नश्च कृदन्तेन सह तत्पुरुषस्समासो भवति । व्याघ्रः । कच्छपः । कुम्भकारः ।

सुबोधिनी—नाम्नश्चकृतासमासः । पुनस्तत्पुरुषमाह । स्याद्यंतस्य नाम्नः कृता कृत्प्रत्ययांतेन सह योऽन्वयः स च पुनः प्रादिः कृता योऽन्वयः स तत्पुरुषसंज्ञःस्यात् । व्याजिघ्रतीतिव्याघ्रः । उपसर्गे आदंतादितिकः । प्रशब्देन प्रादेःसमासः । कच्छेन पिबतीति कच्छपः । नाम्निचेति डः । कच्छेनेतिनाम्नः कृदंतेन समासः । कुंभं करोतीति कुंभकारः । कार्येऽण् इत्यण्प्रत्ययः । इह कुंभ ङस् कारम् इत्यलौकिकं प्रक्रियावाक्यम् । अमिति तु नोक्तं कृद्योगेषष्ठीविधानात् । उपपदस्य कृता समासः ॥

तत्त्वदीपिका—नाम्नश्चेति । प्रादिरुपसर्ग इत्यतो विभक्तिविपरिणामेन प्रादिरित्यनुवर्तते । प्रादेरपिनामत्वेनग्रहणेपि नामाख्यातनिपातोपसर्गेत्यभिन्नत्वेन निर्देशात्पृथगुक्तिः ।

**सू०—शाकपार्थिवादीनाम्मध्यमपदलोपः ॥** शाकप्रियः पार्थिवः शाकपार्थिवः । देवपूजको ब्राह्मणो देवब्राह्मणः ।

सुबोधिनी—शाकपार्थिवादीनांमध्यमपदलोपः । पृथिव्या ईश्वरः पार्थिवः ईश्वरेऽर्थेऽण् । शाकः प्रियो यस्य स शाकप्रिय इत्यस्य पार्थिवशब्देन समासे कृते इति मध्यमपदस्यलोपः शाकपार्थिवः । बहुव्रीहिगर्भः कर्मधारयः । देवानां पूजक इति षष्ठीतत्पुरुषः । तस्य ब्राह्मणशब्देन कर्मधारये पूजक इति मध्यमपदस्य लोपः । देवब्राह्मणः ॥

तत्त्वदीपिका–शाकपार्थिवादीनामिति । मध्यमपदलोप इति पाठे तु पूर्वपदस्यैव द्विपदत्वापेक्षया । अन्यथाकर्मधारस्य त्रिपदत्वासंभवादसंगतम् संपद्येत शाकपार्थिव इति बहुव्रीहिगर्भः कर्मधारयः देवब्राह्मण इति षष्ठीतत्पुरुषगर्भः उत्तरपदलोप इति पाठे पूर्वपदांतर्गतमुत्तरपदम् ग्राह्यम् न तु कर्मधारयस्य पार्थिवत्वादेर्लोपप्रसंगात् ।

**मू०–सहादेस्सादिः ॥ समासे सति सहादेस्सादिरादेशः । सह पुत्रेण सपुत्रः । सहाञ्चतीतिसध्र्यङ् । समञ्चतीति सम्यङ् । तिरोऽञ्चतीति तिर्य्यङ् । विष्वद्र्यङ् । देवद्र्यङ् । लक्ष्मीर्ज्जाया यस्य स लक्ष्मीजानिः । कुत्सितमन्नं कदन्नम् । ईषदुष्णम् । कोष्णम् । कवोष्णम् । कदुष्णम् । द्यौश्च भूमिश्च द्यावाभूमी । जायाच पतिश्च जम्पती दम्पती । मातरपितरौ । कुपुरुषः । कापुरुषः ।**

सुबोधिनी–सहादेःसादिः । अन्नंताः सहादयश्च प्रयोगानुसारेण बोध्याः । बहुव्रीहेरवयवस्य सहस्य सो वा । यथा । पुत्रेण सहेति स सपुत्रः । सहपुत्रो वा । बहुव्रीहिरयं । सहांचतीति सहस्य सध्रिरादेशः क्विबंतेंचतौपरे । सध्र्यङ् । संगतमंचतीति संशब्दस्य समिरादेशः क्विबंतेंचतौपरे । सम्यङ् । तिरोंचतीति तिरःशब्दस्य तिरिरादेशः क्विबंतेंचतौ तिर्यङ् । विष्वगंचतीति विष्वग्देवयोरदसश्चटेरद्रिरादेशः क्विबंतेऽचतौ । विष्वद्र्यङ् । देवानंचतीति देवद्र्यङ् । एते तत्पुरुषा बोध्याः । लक्ष्मीर्जायाऽस्येति जायायाजानिरादेशो बहुव्रीहौ । लक्ष्मीजानिः । कुत्सितमन्नमिति कुशब्दस्य कत् स्वराद्युत्तरपदे तत्पुरुषे । कदन्नं । त्रिवदरथतृणेषुकुशब्दस्यकत् । कुत्सितास्त्रयइति कत्त्रयः कद्वदः कत्तृणं । ईषदर्थे कुशब्दस्य कदादेशः । ईषज्जलं काजलं । कुत्सितः पंथा इति ऋक्पूरित्यप्रत्ययः । संख्याव्ययाभ्यामितिक्विबता कापथं । काक्षः । अक्षशब्देन तत्पुरुषेक्षिशब्देन बहुव्रीहिर्वा समासः । उष्णे परे कुशब्दस्य काकवकदादेशाईषदर्थे । कोष्णं । कवोष्णं । कदुष्णं । द्यौश्च भूमिश्चेति देवताद्वंद्वे दिवः शब्दस्य द्यावा । भूमीपृथिवीशब्दे दिवशब्दस्यद्यावादिवश्च । द्यावापृथिव्यौ । दिवस्पृथिव्यौ । जाया च पतिश्चेति जायाया जं दं वा द्वंद्वे । जंपती । दंपती । जंदंशब्दावव्ययौ दारवचनौ । तयोः पत्या सह द्वंद्वे जंपती । दंपती । इतिचांद्राः । 'दाराः' पुंसिबहुत्वे च दं कलत्रे नपुंसकमित्यमरमाला । पत्न्यां जंदमलिंगत्वे इति नामप्रपंचः । माता च पिता चेति मातुररङ्द्वंद्वे मातरपितरौ । पुरुषे कुशब्दस्यवा च काः । कुपुरुषः, कापुरुषः ।

तत्त्वदीपिका–सहादेःसादिरिति । आदिशब्द उभयत्र प्रकारे प्रकारश्च सादृश्यम् स आदिःसदृशो यस्य । सादृश्यं च अविहितादेशाश्रयत्वेन ग्राह्यम् । सः आदिः सदृशो यस्यवा । सादृश्यं चाविहितादिश्यमानत्वरूपेण ग्राह्यम् । अत्र सहादयः सादयश्चानंताः प्रयोगवशात् ज्ञातव्याः । सम्यङ्किति । सहस्य सध्रिरादेशः समः समिः तिरसस्तिरिरित्यादिसर्वमूह्यम् ।

**मू०–षषउत्वंदतृदशधासूत्तरपदादेष्टुत्वम् ॥ षट्च दशच षोडश । षट् दन्ता यस्य षोडन् । संख्यायाःप्रकारे धा । षट् प्रकाराः षोढा । षड्धा । महान् ईश्वरो महेश्वरः । महादेवः । खरा नासिका यस्य स खरणसः । खरणाः । खुरणसः । खुरणाः । उन्नता नासिका यस्य स उन्नसः । प्रणसः ।**

विगता नासिका यस्य स विग्रः । विख्यः । चतस्रोऽश्रयो यस्य स चतुरस्रः । प्रोष्ठो गौस्तस्येव पादा यस्य स प्रोष्ठपदः। प्रगते जानुनी यस्य स प्रज्ञुः। संज्ञुः ।

सुबोधिनी—षषउत्वंदतृदशधासूत्तरपदादेष्टुत्वं । षट् च दशचेति दतृदशधापरस्यषषउ-त्वंपरस्य ष्टुत्वं च धाप्रत्ययेवा । षोडश । षोढा । षड्धा षट्प्रकारा अस्येति प्रकारेधेति धाप्रत्ययः । षट् दंता अस्येति संख्यासुपूर्वस्यदन्तस्यदतृवयोर्थे । त्रितोनुमिति नुम् । षोडन् । सुदन् । स्त्रियांष्टित्रतइतीप् । सुदती । महाश्वासौ ईश्वरश्चेति महतआकारांतादेशः समानाधिकरणे उत्तरपदे जातीये च । महेश्वरः । महादेवः । समानाधिकरणे किं । महतः सेवा महत्सेवा । महान् प्रकारो महाजातीयः। खरा नासिका यस्येति खुरवन्नासिका यस्येति च नासिकायानस्बहुव्रीहावप्रत्यये । खुरखराभ्यां नासिकाया नस् अप्रत्ययश्च वा । खर-णसः । अप्रत्ययः पुंवद्वेति पुंवत् । अत्वसोः साविति दीर्घे खरणाः। खुरणसः । अप्रत्ययः। खुरणः । उन्नतानासिकास्येति उन्नसः । अप्रत्ययः । प्रगतानासिकायस्येतिप्रणसः । अप्र-त्ययःविर्नासिकायाःग्रख्यौ । विगता नासिकास्येति विग्रः । विख्यः । वेःखुखग्राइति शाक-टायनसूत्राद्विखुर्विख्यो विग्रइति रूपत्रयं च । 'खुरणाः स्यात् खरणसो विग्रो विख्युर्विना-सिकः'इति रभसः । चतस्रोश्रयोस्येति तालव्यस्थाने दंत्यः सो निपात्यते । चतुरस्रः । अप्रत्ययः । प्रोष्ठो गौस्तस्येव पादावस्येति पादस्य पद् निपात्यते । अप्रत्ययः प्रोष्ठपद्ः । प्रसम्भ्यांजानुशब्दस्य ज्ञुश्च वा बहुव्रीहौ । प्रगते जानुनी यस्य प्रज्ञुः । संज्ञुः ।

**मू०—ऊर्ध्वाद्वाज्ञुः ॥ ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ।**

सुबोधिनी—ऊर्ध्वाद्वाज्ञुः । ऊर्ध्वज्ञुः । ऊर्ध्वजानुः ।

**मू०—बहुव्रीहौधनुषोऽनङ् ॥ अधिज्यधन्वा । शार्ङ्गं धनुरस्य शार्ङ्गधन्वा । उद्गन्धिः । सुगंधिः । पूतिगंधिः । सुरभिगंधिः । द्विदन् । चतुर्दन् । अमुम-श्चतीति अमुमुयङ् । अदमुयङ् । अदद्र्यङ् । कौमुदगंध्यायाः पुत्रः कौमु-दगंधीपुत्रः । कौमुदगंधीपतिः । समानं ज्योतिरस्य सज्योतिः । सनाभिः । सनामा । सवयाः । सब्रह्मचारी । सतीर्थ्यः । क्षीरोदः । सुरोदः । लवणोदः । शुद्धोदः । पृषोदरः । वारिवाहको बलाहकः । गूढोत्मा । दक्षिणतीरम् । दक्षिण-तारम् इत्यादि ।**

सुबोधिनी—बहुव्रीहौधनुषोनङ्।धनुरंतस्य बहुव्रीहेरनङ् संज्ञायां च वा।शृंगस्य विकारः शा-र्ङ्गं अण् । शार्ङ्गं धनुरस्येति शार्ङ्गधन्वा। संज्ञायांतुशतधनुः । उत्पूतिसुसुरभिभ्यः । गुणवा-चिनो गंधस्येकारांतादेशो बहुव्रीहौ । उद्गंधिः । पूतिगंधिः । सुगंधिः । सुरभिगंधिः । गुणवा-चिनइति किं । शोभना गंधा द्रव्याण्यस्य सुगंध आपणिकः । अल्पवाचिनो गंधस्येत्वं बहु-व्रीहौ । सूपस्य गंधो लेशो यस्मिन् तत् सूपगंधि भोजनं । घृतगंधि। उपमानाद्गंधस्येकारां-तादेशः। पद्मस्येव गंधोऽस्य पद्मगंधिः।'गंधस्तु सौरभे नृत्ये गंधके गर्वलेशयोः। सएव द्रव्य-वचनो बहुत्वे पुंसि च स्मृतः॥' इति। द्वौ दंतावस्येति संख्यासुपूर्वस्येति दतृ। द्विदन्। चतु-र्दन् । अमुमंचतीति अदस् अच् इति स्थिते । विष्वगिति टेरद्रिः । अदद्रि अच् इत्यत्र यत्वम् अदसोसेर्दादुदोम इत्यनेन दाभ्यां परयोरकाराकारयोरुकारौ दकारयोश्च मकारौ।अमु-

मुयङ् । अन्त्यबाधेऽन्त्यसदेशस्यादेशइति वदतां मते परदकाररकारस्यैव मुत्वं । अदमुयङ्ङित्य-दाद्यत्वे एवमुत्वं नान्यत्रेति पक्षे अदद्रयङ् । कुमुदस्येव गंधो यस्येति उपमानाद्गंधस्येतीका-रादेशइति कुमुदगंधिः । कुमुदगंधेरपत्यं स्त्री कौमुदगंध्या । अपत्येण्यः । कौमुदगंध्यायाः पुत्रइति कौमुदगंध्यायाःपतिरिति । या इत्यस्य स्थाने ईत्वं निपात्यते । कौमुदगंधीपातिः । समानं ज्योतिर्जनपदरात्रिनाभिनामगोत्ररूपस्थानवर्णवयोवचनबंधुतीर्थ्यब्रह्मचारिषु । समानस्य सः।सज्योतिः । सनाभिः । सनामा।सवयाः । ब्रह्म वेदः तदध्ययनार्थं व्रतमपि ब्रह्म।ब्रह्म चरतीति ब्रह्मचारी । व्रतेइति णिनिः । समानः ब्रह्मचारीति सब्रह्मचारी। समाने तीर्थे वसतीति सतीर्थ्यः। वसत्यर्थे ण्यप्रत्ययः । उत्तरपदोदकस्योदः । क्षीरोदः । सुरोदः । लवणोदः । शुद्धोदः । पृषतः उदरमिति तलोपः । पृषोदरं । वारिणो वाहक इति पूर्वपदस्य बः उत्तरपदादेश्च लत्वं बलाहकः । गूढोत्मा अत्राकारस्य स्थाने उत्वं । भवेद्वर्णागमाद्धंसः सिंहो वर्णविपर्ययात् ॥ गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम् ॥ १ ॥ हंतेः पचादित्वादप्रत्यये सगागमात् हंस इति । हिंसे पचादित्वादप्रत्यये हकारसकारयोर्व्यत्ययात् सिंह इति । दिक्शब्देभ्यस्तीरस्य तारो वा । सर्वादेः समासादाविति पुंवत् । दक्षिणतारं । दक्षिणतीरमित्यादि ॥

**मू०–अलुक्क्वचित् ॥** क्वचित्समासे तद्धिते च विभक्तेरलुक् । कृच्छ्रान्मुक्तः । स्तोकान्मुक्तः । दूरान्मुक्तः । निकटान्मुक्तः । अप्सुयोनिः । सरसिजम् । उरसिलोमा । हृदिस्पृक् । कण्ठेकालः । वाचोयुक्तिः । दिशोदण्डः । पश्यतोहरः । खेशयः । ग्रामेवासः । ग्रामेवासी । चोरस्यकुलं । ओजसाकृतम् । सहसाकृतम् । अम्भसाकृतम् । पुंसानुजः । जनुषान्धः । आत्मनापञ्चमः । त्वचिसारः । गविष्ठिरः । युधिष्ठिरः । आत्मनेपदम् । आत्मनेभाषा । मध्येगुरुः । स्तम्बेरमः । कर्णेजपः । पूर्वाह्णेतरे । पूर्वाह्णेतमे । आमुष्यायणः । आमुष्यकुलिका । आमुष्यपुत्रिका । मातृपितृभ्यां स्वसुस्सस्य षः । मातृष्वसा । पितृष्वसा । मातृपितृभ्यांवा । मातुःस्वसा । मातुःष्वसा । पितुस्स्वसा । पितुःष्वसा । होतुरन्तेवासी होतुःपुत्रः । पितुरन्तेवासी । पितुःपुत्रः । देवानांप्रिय इति च मूर्खे । दिवोदासः । शुनश्शेफः । शुनःपुच्छः इत्यादि ।

सुबोधिनी–अलुक्क्वचित् । समासप्रत्यययोरित्यस्यापवादः । कृच्छ्रस्तोकदूरार्थनिकटार्थेभ्यःपंचम्या अलुक् उत्तरपदे । कृच्छ्रान्मुक्तः । 'स्यात्कष्टं कृच्छ्रमाभीलमि'त्यमरः । उत्तरपदे किं । निष्क्रांतः स्तोकादिति निःस्तोकः । द्विवचनबहुवचनांतानां तु समासो नेष्यतेऽनभिधानात् । तेन स्तोकाभ्यां मुक्त इत्यादौ वाक्यमेव । अप्सु योनिरुत्पत्तिर्यस्येति अपः सप्तम्या अलुक् । योनिजचरमतिषु । अप्सुयोनिः । अप्सुजः । अप्सुचरः । अप्सुमतिः । हसांताददंताच्च सप्तम्या अलुक्संज्ञायां । सरसिजम् । अदंतात्तु अरण्येतिलक इत्यादि । स्वांगात्त सप्तम्याअलुग् । अकामेपरे । मूर्द्धमस्तकाभ्यां तु न । उरसिलोमा । अकामेतिकिं । मुखे कामोऽस्यमुखकामः । मूर्द्धमस्तकाभ्यांनेतिकिम् । मूर्द्धशिखः । मस्तकशिखः । हृदयं स्पृशतीति दिव्हृद्भ्यांसप्तम्याअलुक् । हृदिस्पृक् । कर्मणोऽधिकरणत्वविवक्षायां सप्तमी । एवं दिविस्पृक् । कण्ठेकालः । स्वांगात् सप्तम्याअलुगित्यलुक् । वाच्दिक्पश्यद्भ्यः षष्ठ्या अलुग् युक्तिदण्डहरेषु । वाचोयुक्तिः । दिशोदंडः । पश्यतोहरः । पश्यंतमनादृत्यहरतीत्यर्थः । अनादराधिक्यइति-

षष्ठी । अकालकात्सप्तम्या अलुग्वाशयवासवासिषु । खेशयः खशयः । ग्रामेवासः ग्रामवासः । ग्रामेवासी ग्रामवासी । षष्ठ्या अलुगाक्रोशेऽर्थे । चोरस्य कुलम् । आक्रोशे किम् ब्राह्मणकुलं । ओजसंभसंसहस्तमसंजोभ्यस्तृतीयाया अलुक् । ओजसाकृतम् । अंभसाकृतं । तमसाकृतम् । अंजसाकृतम् । आर्जवेनकृतमित्यर्थः । पुंसोऽनुजे जनुषांधे च तृतीयाया अलुक् । यस्याग्रजः पुमान् स पुंसानुजः । जनुषांधः । जात्यंधइत्यर्थः । 'जनुर्जननजन्मानी' त्यमरः । आत्मनस्तृतीयाया अलुक्पूरणार्थप्रत्ययांते परे । आत्मनापंचमः । पूरणार्थे किम् । आत्मकृतं । त्वचिसारः । हसांतादर्दताच्च सप्तम्या अलुक्संज्ञायामित्यलुक् । गोःसप्तम्या अलुक्स्थिरे । गविष्ठिरः । युधिष्ठिरः हसांतादिति सप्तम्या अलुक् । परशब्दादात्मशब्दाच्च चतुर्थ्या अलुक्वैयाकरणाख्यायां । परस्मैपदं । परस्मैभाषा । आत्मनेपदम् । आत्मनेभाषा । तादर्थ्ये चतुर्थ्या अलुगत्रामध्यान्ताभ्यां सप्तम्याः अलुग्गुरौपरे । मध्यगुरुः । अन्तेगुरुः । तत्पुरुषे सप्तम्या अलुक्कृत्प्रत्ययांते बहुलं । स्तंबेरमः । स्तंबे तीरे रमते इति स्तंबेरमो हस्ती । कर्णेजपः । कर्णेजपस्सूचकः । कालवाचकात्सप्तम्या अलुग्वा तरतमकालतनेषु । पूर्वाह्णेतरे पूर्वाह्णतरे । पूर्वाह्णेतमे पूर्वाह्णतमे । पूर्वाह्णेकाले पूर्वाह्णकाले । पूर्वाह्णेतने पूर्वाह्णतने । अदसःषष्ठ्या अलुगायनपुत्रिकाकुलिकासु । अमुष्यापत्यंनडादित्वादायनण् । आमुष्यायणः । अमुष्य पुत्रस्य भावः आमुष्यपुत्रिका । अमुष्य कुलस्य भावः आमुष्यकुलिका । भावार्थेकः । ऋदंतात्षष्ठ्या अलुग्वास्वसृपत्योः मातृपितृभ्यां स्वसुःसस्यषः स्यात्समासे । मातृष्वसा । पितृष्वसा । मातृपितृभ्यां वा । आभ्यां स्वसुः सस्य षो वा स्यात् समासे । मातुःष्वसा मातुःस्वसा । पितुःष्वसा पितुःस्वसा । विद्यासंबंधयोनिसंबंधवाचिनऋदंतात्षष्ठ्या अलुक् । होतुरंतेवासी । होतुःपुत्रः । पितुरंतेवासी । पितुःपुत्रः । देवानांप्रिय इति मूर्खेऽर्थे षष्ठ्या अलुक् । अन्यत्र देवप्रियः । दिवो दासे परे षष्ठ्या अलुक् । दिवोदासः । शुनः षष्ठ्या अलुक् शेफःपुच्छलांगूलेषु । शेफः सकारांतः । 'स्याल्लिंगंचिह्नशेफसो'रित्यमरोक्तेः । शीङ औणादिकेपप्रत्यये पकारांतोपि । शुन इव शेपमस्य स शुनःशेपः । शुन इव पुच्छमस्य स शुनःपुच्छः । शुन इव लांगूलमस्य स शुनोलांगूलः । बहुव्रीहयस्त्रयोप्यमी ऋषिविशेषाणां संज्ञा । इत्यलुक्समासः ॥

तत्त्वदीपिका–अलुक्क्वचिदिति । समासप्रत्ययोरित्यस्यापवादः । कृच्छ्रान्मुक्त इत्यस्य पक्षे सिद्धत्वेपि कृच्छ्रमुक्तमित्यनिष्टापत्तिवारणायेदमावश्यकं । हृदिस्पृगिति हृदयं स्पृशतीति विग्रहः । कर्मणोधिकरणत्वविवक्षायां सप्तमी । आमुष्यकुलिकेति । अमुष्यकुलस्य भावः एवममुष्य पुत्रस्य भाव इत्यपि । देवानांप्रिय इति मूर्खा हि देवानां प्रीतिं जनयन्ति देवपशुत्वात् । शुनःशेप इति । शुन इव शेपमस्येति विग्रहः । एवं पुच्छलांगूलाभ्यामपि बहुव्रीहिः ऋषिविशेषाणामेताः संज्ञाः ।

**मू०-तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहतेषुङ्यन्तस्यानेकस्वरस्य ह्रस्वोभाषितपुंस्कस्य ॥ ब्राह्मणितरा । ब्राह्मणितमा । ब्राह्मणिरूपा । ब्राह्मणिकल्पा । ब्राह्मणिचेली ।**

सुबोधिनी–तरतमरूपकल्पचेलड्ब्रुवगोत्रमतहतेषुङ्यंतस्यानेकस्वरस्य ह्रस्वोभाषितपुंस्कस्य । अतिशयेन ब्राह्मणीति ब्राह्मणितरा ब्राह्मणितमा । तरतमचराडिति पुंवद्भावो न । जातिवाचिनः स्त्रीप्रत्ययांतस्येति निषेधात् । तरतमयास्विष्ठाः प्रकर्षे इति तरतमौ । प्रशस्ता ब्राह्मणीति ब्राह्मणिरूपा । प्रशंसायामिति रूपः । ईषन्न्यूना ब्राह्मणीति ब्राह्मणिकल्पा । ईषदसमाप्तौ कल्पेति कल्पप्रत्ययः । चेलडादीनि वृत्तिविषये समासादौ कुत्सनवाचीनि सन्ति । कुत्सिता

ब्राह्मणी ब्रित इतीप् ब्राह्मणिचेली । उक्तपुंस्कस्येति किं । आमलकीतरा । कुवलीतरा । आमलकीकुवलीशब्दौ वृक्षे नित्यस्त्रीलिंगौ ॥

**मू०-अनीबन्तस्यस्त्रीप्रत्ययान्तस्यैकस्वरस्यवा-ह्रस्वस्तरादौ ॥ ब्रह्मबन्धूतरा, ब्रह्मबंधुतरा । स्त्रीतरा, स्त्रितरा ।**

सुबोधिनी-अनीबंतस्यस्त्रीप्रत्ययांतस्यईबंतस्यैकस्वरस्यवाह्रस्वस्तरादौ । अनीबंतस्य स्त्रीप्रत्ययांतस्य वा ह्रस्वः एकस्वरस्य ईबंतस्य च वा ह्रस्वोभवति तरतमरूपकल्पचेलड्-ब्रुवगोत्रमतहतेषुपरेषु । उतऊरित्यूप्रत्ययः । अतिशयेन ब्रह्मबंधूरिति तरतमेयस्विष्ठा इति तरप्रत्ययः । ब्रह्मबंधूतरा ॥

**मू०-व्रितःपरस्यवा ॥ विदुषितरा, विद्वत्तरा । भवतितरा, भवत्तरा । पचतितरा; पचत्तरा ।**

सुबोधिनी-व्रितःपरस्यवा । उश्च आच तयोः समाहारः वृ । वृ इत् यस्य स व्रित् तस्मात् व्रितः । उकारेत ऋकारेतश्च परस्य ईप्प्रत्ययस्य ह्रस्वो वा भवति तरादौ । विदुषितरा । व्रित इतीप् । वसोर्वउरित्युत्वं । ह्रस्वाभावे तरतमचरडितिपुंवद्भावः । विद्वत्तरा । विदुषीतरेत्यपिकैश्चिदुदाहृतं तन्निर्मूलम् ॥

तत्त्वदीपिका-व्रितः परस्येति । उश्च आच वरौ तावितौ यस्य स तथा तस्मात् ।

**मू०-इष्टकेषीकामालानांचिततूलभारिषु-ह्रस्वः । इष्टकचितम् पक्वेष्टकचितम् । इषीकतूलम् । मुञ्जेषीकतूलम् । मालभारी । उत्पलमालभारी ।**

सुबोधिनी-इष्टकेषीकामालानांचिततूलभारिषु-ह्रस्वः । इष्टकादीनां तदंतानां च ह्रस्वो भवति चितादिषु । इष्टकाभिश्चितमितीष्टकचितं । तदंते पक्वेष्टकचितम् । इषीकानां तूलमिषीकतूलम् मालां बिभर्ति इति मालभारी । कर्तरि णिनिः । हारिष्वितिपाठांतरम् ।

तत्त्वदीपिका-मालभारीति । मालां बिभर्तीतिविग्रहः । ताच्छील्ये णिनिः ।

**मू०-कारेसत्यागदस्यमुम् ॥ सत्यङ्कारः । अगदंकारः ।**

सुबोधिनी-कारेसत्यागदस्यमुम् । सत्यागदयोर्मुम् स्यात् कारे । सत्यंकारः । शपथकरणमित्यर्थः । अगदंकारो वैद्यः ॥

तत्त्वदीपिका-सत्यंकारइति । समयकरणम् । अगदंकारोवैद्यः ।

**मू०-अस्तोश्च ॥ अस्तुंकारः ।**

सुबोधिनी-अस्तोश्च । अस्तु इत्यस्य मुम् स्यात् कारे । अस्तुइत्याख्यातप्रतिरूपकमव्ययम् । अस्तुंकारः । अभ्युपगम इत्यर्थः ॥

तत्त्वदीपिका-अस्तुंकारोऽभ्युपगमः । अस्त्वितितिबंतप्रतिरूपकमव्ययम् ।

**मू०-धेनोर्भव्यायाम् ॥ धेनुम्भव्या ।**

सुबोधिनी-धेनोर्भव्यायाम् । धेनुशब्दस्य मुम् स्यात् भव्यायां परस्यां । धेनुश्चासौ

भव्या चेति विग्रहः । धेनुंभव्या । भविष्यती धेनुरित्यर्थः । निपातनाद्भविष्याति कर्तरि कृत्प्रत्ययः ॥

तत्त्वदीपिका–धेनुंभव्येति । धेनुश्चासौ भव्येति विग्रहः । भविष्यंती धेनुरित्यर्थः ।

**मू०-लोकस्यपृणे ॥ लोकंपृणः ।**

सुबोधिनी–लोकस्यपृणे । लोकस्य मुम् स्यात् पृणे परे । पृणधातुः प्रीणनार्थः । लोकंपृणः । सूर्यः ॥

**मू०–इत्येऽनभ्यासस्य ॥ मुम् । अनभ्यासमित्यः ।**

सुबोधिनी–इत्येऽनभ्यासस्य । अनभ्यासस्य मुम् स्यात् इत्ये परे । अभ्यासं समीपम् अभ्यासभिन्नमनभ्यासम् । एतिस्तु शासिति इणः क्यप् अनभ्यासमित्यः दूरतः परिहर्तव्यइत्यर्थः ॥

तत्त्वदीपिका–अनभ्यासमित्यइति । दूरतः परिहर्त्तव्यः ।

**मू०–भ्राष्ट्राग्न्योरिन्धे ॥ भ्राष्ट्रमिन्धः । अग्निमिन्धः ।**

सुबोधिनी–भ्राष्ट्राग्न्योरिंधे । अनयोर्मुम् स्यादिंधे परे । इंधीदीप्तौ कार्य्येऽणित्यण् । भ्राष्ट्रमिंधः । अग्निमिंधः । नाम्नश्च कृतेति समासः ॥

**मू०–गिलेऽगिलस्य ॥ मुम् । तिमिङ्गिलः ।**

सुबोधिनी–गिलेऽगिलस्य । अगिलस्य गिलभिन्नस्य मुम् भवति गिले परे तिमिंगिलो मत्स्यविशेषः । गिरतेर्मूलविभुजादित्वात्कप्रत्ययः । गिरतेरेफस्यवालत्वमिति लत्वम् ॥

तत्त्वदीपिका–तिमिंगिल इति । मत्स्यविशेषः ।

**मू०–गिलगिलेच ॥ तिमिंगिलगिलः ।**

सुबोधिनी–गिलगिलेच । अगिलस्य मुम् भवति गिलगिले परे । गिलगिलः । तिमीनां गिलगिल इति तिमिंगिलगिलः ।

तत्त्वदीपिका– गिलगिले चेति । गिलं गिलतीति गिलगिलः । तिमीनां गिलगिल स्तिमिंगिलगिलः इति विग्रहः ।

**मू०–उष्णभद्रयोःकरणे ॥ उष्णंकरणम् । भद्रंकरणम् ।**

सुबोधिनी–उष्णभद्रयोः करणे । उष्णभद्रयोर्मुम् स्यात् करणे परे ॥

**मू०–रात्रेःकृतिवा ॥ रात्रिञ्चरः । रात्रिचरः । रात्रिमटः । रात्र्यटः ।**

सुबोधिनी–रात्रेःकृतिवा । रात्रेर्मुम् वा स्यात् कृत्प्रत्ययांते परे । अखिदर्थमिदं सूत्रं। खिति प्रत्यये खितिपरस्येति नित्यमेव मुम् स्यात् । अटाविति टप्रत्ययः । रात्रिंचरः ॥

**मू०–नहिवृत्तिवृषिव्यधिरुचिसहितानिषु॥क्विबन्तेषु पूर्वस्य दीर्घः॥उपानत् । नीवृत् । प्रावृट् । मर्म्मावित् । नीरुक् । अभीरुक् । ऋतीषट् । परीतत् ।**

सुबोधिनी–नहिवृतिवृषिव्यधिरुचिसहितनिषु । क्विबंतेषु पूर्वस्य दीर्घः । क्विबंतेषु परेषु

पूर्वस्योपसर्गकारकस्य दीर्घः स्यात् । णह्बंधने । वृतु वर्तने । वृषु सेचने । व्यध ताडने । रुच दीप्तौ । षह मर्षणे । तनु विस्तारे । उप समीपे नह्यते इति उपानत् । कर्मणि क्विप् । निवर्तते इति नीवृत् । 'नीवृज्जनपदोदेश'इत्यमरः । प्रवर्षतीति प्रावृट् । मर्माणि विध्यतीति मर्मावित् । श्वानं विध्यतीति नाम्नो नोलोपशिति नलोपः । श्वावित् । सहे ग्रहांकितिचेति संप्रसारणं । निरोचते इति नीरुक् । ऋतिं सहत इति ऋतीषट् । 'ऋतिर्जुगुप्साकल्याणगति-स्पर्द्धास्वथोऋतुरि'तिहैमः । परितनोतीति परीतत् । क्विबंतेष्वितिकिं । परिणहनम् । उपसर्गकारकस्येति किं । पटुरुक् । तिग्मरुक् ॥

सू०-मत्वर्थेबहुस्वरस्य ॥ अमरावती ।

सुबोधिनी-मत्वर्थेबहुस्वरस्य । बहुस्वरस्य दीर्घः स्यात् संज्ञायामस्त्यर्थेपरे । अमराः संत्यस्याममरावती । मांतोपधाद्व्रत्विनौ इति वत् । ष्वित इतीप् । संज्ञायामिति किं । बलवती । बहुस्वरस्येति किं । व्रीहिमती ॥

सू०-शरादेश्च ॥ शरावती ।

सुबोधिनी-शरादेश्च । शरादेर्दीर्घः स्यात् अस्त्यर्थे । शराः संत्यस्यामिति शरावती ॥

तत्त्वदीपिका—नहिवृतीति । उपनह्यत इति उपानत् । निवर्तत इति नीवृत् । प्रवर्षतीति प्रावृट् । मर्माणि विध्यतीति मर्मावित् । निरोचते इति नीरुक् । ऋतं सहतेइति ऋतीषट् । परितनोतीति परीतत् ।

सू०-अजिरादेर्न ॥ अजिरावती ।

सुबोधिनी-अजिरादेर्न । अजिरादेर्दीर्घो न भवति अस्त्यर्थे । अजिरमस्त्यस्यां सा अजिरावती । 'अंगणं चत्वराजिरे' इत्यमरः ॥

सू०-उपसर्गस्यघञ्यमनुष्येवादीर्घः ॥ परिपाकः, परीपाकः । परिहासः । परीहासः । अमनुष्येकिम् । निषादः ।

सुबोधिनी-उपसर्गस्यघञ्यमनुष्येवादीर्घः । उपसर्गस्य वा दीर्घः स्यात् घञंते परे नतु मनुष्येऽर्थे। अमनुष्येकिं । निषीदत्यस्मिन्नघमित्यधिकरणे घञ् । निषादःपुलिंदो मनुष्यजातिः॥

सू०-आदेश्चद्वन्द्वे ॥ द्वन्द्वे सति क्वचिदादेर्लोपः । माता च पिता च पितरौ । श्वश्रूश्च श्वशुरश्च श्वशुरौ । दुहिता च पुत्रश्च पुत्रौ । स्वसा च भ्राता च भ्रातरौ ।

सुबोधिनी-आदेश्चद्वन्द्वे । द्वन्द्वविषये भिन्नार्थानां तुल्यार्थानां च नाम्नामंत्योऽवशिष्यते । आदीनां च लोपो भवतीत्यर्थः । रामश्च रामश्च रामौ । घटश्च कुंभश्च कुंभौ । घटश्च कुंभश्च कलशश्च कलशाः। मातृश्वश्रूभ्यां सहोक्तौ पितृश्वशुरौ वा शिष्येते। माता च पिता चेति पितरौ । मातापितरौ वा । "पितुर्दशगुणा माता गौरवेणातिरिच्यते" इति स्मृतेर्मातुः प्रधानत्वात्पूर्वनिपातः । ऋतांद्वंद्वे इति पूर्वस्यात्वं । श्वशुरौ । श्वश्रूश्वशुरौ वा । स्वसृदुहितृभ्यांसहोक्तौ भ्रातृपुत्रौ शिष्येते । दुहिता च पुत्रश्च पुत्रौ । स्वसा च भ्राता च भ्रातरौ ॥

तत्त्वदीपिका–आदेश्च द्वंद्वे इति । द्वंद्वे समासे क्वचिदादिभूतस्य पदस्य लोपः । अत्र यस्य लोप इत्यतो लोपग्रहणमनुवर्त्य व्याख्यानम् । तदुदाहरणम् । पितराविस्यादि इति तु वृद्धाः । नव्यास्त्वेवमाहुः । अत्र नाम्नामित्यनुवृत्तं सदविभक्तिपरं बोध्यं । नतु पदार्थपरम् । द्वंद्वेइत्यप्यर्थपरम् । आदेरित्येकत्वं च गर्वाक्षितम् । सूत्रे लिंगवचनमविवक्षितमित्युत्सर्गात् तुल्यार्थे इत्यनुवृत्य विभक्तिव्यत्ययेन वाक्यभेदेन च व्याख्येयम् । तथाच समानानुपूर्वीकाणांभिन्नार्थानां तुल्यार्थानां भिन्नानुपूर्वीकाणां च नाम्नां मध्ये आदेःआद्यौ आद्यानां चान्त्य आदेशः स्यात् । रामश्च रामश्च रामौ । घटश्च कुंभश्च कुंभौ । घटश्च कुंभश्च कलशश्च कलशाः । पूर्वपदानामन्त्यपदादेशस्तुन कृतः सविभक्तिकस्यादेशे तस्यैव श्रवणप्रसंगात् । द्विवचनबहुवचनयोरभावात् द्वंद्वे कृते इत्यपि न सर्वे सर्वेषामित्यादावीत्वविकल्पसुडभावादेः प्रसंगात् । द्वंद्वार्थश्च सहविवक्षया । सहविवक्षा चेयं । " अनुस्यूते च भेदानामेका प्रज्ञा प्रजायते ॥ यदा सहविवक्षां तामाहुर्द्वंद्वैकशेषयोः" इति ।

**मू०–ऋतांद्वन्द्वे । पूर्वस्यात्वम् । मातापितरौ । होतापोतारौ ॥ नेष्टोद्गातारौ ।**

सुबोधिनी–ऋतांद्वंद्वे । पूर्वपदस्यात्वं । विद्यायोनिसंबंधवाचिनामृदंतानां यो द्वंद्वस्तत्र पूर्वपदस्यात्वं भवति । षष्ठीनिर्दिष्टत्वादंत्यस्यादेशः । द्वयोर्द्वंद्वे एवात्वं । माताच पिताचेति एकशेषाभावे मातापितरौ । पुत्रोत्पादनेऽनयोर्योनिकृतः संबंधोत्र । होता च पोता चेति होतापोतारौ । नेष्टा चोद्गाता च नेष्टोद्गातारौ । इह होत्रादिरूपविद्याकृतः संबंध एकस्मिन् यज्ञ आर्त्विज्यरूपो बोध्यः ॥

तत्त्वदीपिका–ऋतां द्वंद्व इति । विद्यायोनिसंबंधिवाचिनामेव ऋदन्तानामित्यर्थः । तेनेह न । कर्तृभोक्तारौ ।

**मू०–पुत्रेच । पितापुत्रौ । गावश्च गावश्च गाव इमाः । शुक्लश्च शुक्लाच शुक्लश्च शुक्लम् । स च यश्च तौ । यौ वा ।**

सुबोधिनी–पुत्रेच । विद्यायोनिसंबंधवाचिनामृदंतानामात्वं भवति पुत्रे परे । पिता च पुत्रश्च पितापुत्रौ । अनयोर्योनिकृतः संबंधो जन्यजनकभावलक्षणोत्र । ग्राम्यपशुसमूहेष्वतरुणेष्वनेकखुरेषु सहोक्तौ स्त्रीलिंगोऽवशिष्यते । गावश्च गावश्चेति गावः । उभयत्र रूपस्य समानत्वात् । स्त्रीलिंगे शेषस्य फलमाह । इमा इति । ग्रामे भवाः ग्राम्याः । यण् । ग्रामेति किं । रुरव इमे । मृगविशेषा वनचारिण इत्यर्थः । पशुग्रहणं किं । ब्राह्मण्यश्च ब्राह्मणाश्च ब्राह्मणाः । समूहेषु किम् । एतौ गावौ । अतरुणेषु किम् । वत्साइमे । अनेकखुरेषु किम् । अश्वा इमे । अश्वानामेक एव खुर इत्यर्थः । अक्लीबेन सहोक्तौ क्लीबं शिष्यते तच्च वा एकवत् तल्लक्षण एव विशेषश्चेत् । शुक्लः पटः । शुक्ला शाटी । शुक्लं वस्त्रं । तदिदं शुक्लं । तानीमानि शुक्लानि । त्यदादीनां मिथः सहोक्तौ परं पूर्वं च शिष्यते । स च यश्च यौ तौ वा । स्त्रिया सहोक्तौ पुमान् शिष्यते तल्लक्षण एव विशेषश्चेत् । हंसी च हंसश्च हंसौ । इह सर्वत्र एकशेषे कृतेऽनेकाभावात् द्वंद्वसमासो न । तेन शिरसि शिरांसि इत्यादौ प्राण्यंगत्वादेकवद्भावो न । पंथानौ पंथान इत्यादौ समासांतप्रत्ययो न भवति ॥ इत्येकशेषः ॥

तत्त्वदीपिका–गाव इमा इति । ग्राम्यपशुसंघेष्वतरुणेषु स्त्रिया एव एकशेष इत्यर्थः । शुक्लमिति । अक्लीबैः सहोक्तौ क्लीबमेव शिष्यते इत्यर्थः । यौ तौ वेति । त्यदादिषुपरम् विकल्पेनेत्यर्थः ।

**मू०–दिक्संख्येसञ्ज्ञायाम् ॥ दिग्वाचिनस्संख्यावाचिनश्शब्दास्समानाधिकरणेन सञ्ज्ञायामेव समस्यन्ते स कर्म्मधारयस्समासः । दक्षिणाग्निः । सप्तर्षयः । सञ्ज्ञायां किम् । पञ्चफलानि । दिक्संख्ये किम् । शूर्पणखा ।**

सुबोधिनी–दिक्संख्येसंज्ञायां । दिक् च संख्या च दिक्संख्ये दिग्वाचिनः संख्यावाचिनश्च शब्दास्तुल्यार्थेन सह समस्यंते स कर्मधारयः । कर्मधारयस्तुल्यार्थे इत्यनेनैव सिद्धे नियमार्थमिदं । संज्ञायामेवेति । दक्षिणश्चासौ अग्निश्चेति दक्षिणाग्निः । सप्त च ते ऋषयश्च सप्तर्षयः । " दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नय " इत्यमरः ॥

तत्त्वदीपिका– दिक्संख्ये संज्ञायामिति । दिक्संख्ये दिग्वाचिसंख्यावाचिनावित्यर्थः । कर्मधारयस्तुल्यार्थे इत्यनेनैव सिद्धे नियमार्थमिदम् । संज्ञायामेव नान्यत्रेत्यर्थः। दाक्षिणाग्निरिति। दक्षिणदिगवस्थिते वस्तुनि दक्षिणशब्दःअतोदानादेर्व्यावृत्तौ दिगवस्थिते व्यवस्थाप्यते अग्निशब्दोपि चित्रकादेर्व्यावृत्तौ हुताशेव्यवस्थाप्यते । अतो विशेषणविशेष्यभावात्कर्मधारयः । संज्ञायांकिं। पंचफलानि । दिक्संख्येकिं शूर्पणखा । दक्षिणाग्निरित्यादौ वाक्ये संज्ञानवगमान्नित्यसमासत्वम् । अविग्रहस्य नित्यसमासत्वान्न विग्रहो यस्य लोके प्रयुज्यत इति शेषः । अन्यथा दक्षिणाग्निरुन्मत्ता गंगा यस्येति आदिविग्रहस्य सर्वत्र दर्शनादविग्रहत्वासंभव एव स्यात् । अयमत्र संग्रहः । कृत्तद्धितसमासैकशेषसनाद्यन्ता धातुरूपाः पंचवृत्तयः । परार्थाभिधानं वृत्तिः । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विधा लौकिकोऽलौकिकश्च । तल्लक्षणं चोक्तमेव । समासोपि द्विविधः नित्योऽनित्यश्चेति । नित्योपि द्विविधः । अविग्रहोस्वपदविग्रहश्च। न स्वस्य समासस्य पदैर्विग्रहो यत्र सः। समासः षड्विध इति प्रायोवादः । द्विग्वव्ययीभावतत्पुरुषद्वंद्वबहुव्रीहिकर्मधारयभिन्नस्यापि नाम्नश्च कृतेति विधानात् । एतेन नाम्नश्च कृता समास इति सूत्रे समासग्रहणम्।तत्पुरुषपरसमासस्य पूर्वेणैव विधानात्।अमादौ तत्पुरुष इत्यतो मंडूकप्लुत्यानुवृत्तेवेति वासुदेवोक्तिः परास्ता । तथा पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । अन्यपदार्थप्रधानो बहुव्रीहिः । उत्तरपदार्थप्रधानो द्वंद्वः । विशेष्यपूर्वः कर्मधारयः पूर्वपदार्थप्रधानः । विशेषणपूर्वस्तूत्तरपदार्थप्रधानः । द्विगुरन्यपदार्थप्रधान इत्यपि प्राचां प्रवादः प्रायोभिप्रायः सूचयति । उन्मत्तगंगमित्याद्यव्ययीभावे अतिमालादौ तत्पुरुषे द्विन्ना इत्यादिबहुव्रीहौ दंतोष्ठमित्यादिद्वंद्वे चाभावात् । अनेकपदत्वे द्वंद्वबहुव्रीह्योरेव ऐकपद्यमेकविभक्तिकत्वं च समासप्रयोजनं पूर्वनिपातः समासांतप्रत्ययादिश्च प्रयोजनम् ।

**मू–द्वन्द्वतत्पुरुषयोः परपदस्यैवलिङ्गम् । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । अर्द्धपिप्पलीयम् ।**

सुबोधिनी–द्वन्द्वतत्पुरुषयोः परपदस्यैवलिंगम् । इतरेतरयोगद्वंद्वोत्र गृह्यते न समाहारद्वंद्वः । एकत्वे द्विगुद्वंद्वावित्युक्तत्वात् । द्वंद्वतत्पुरुषयोरिति संबंधे षष्ठी एतयोः परपदतुल्यं लिंगं भवति । कुक्कुटश्च मयूरी च कुक्कुटमयूर्यौ इमे इति स्त्रीलिंगनिर्देशः । मयूरी च कुक्कुटश्च मयूरी कुक्कुटौ इमाविति पुंलिंगनिर्देशः । पिप्पल्या अर्द्धमित्यर्धपिपप्ली इयमिति स्त्रीलिंगनिर्देशः ॥

**मू०–द्विगुप्राप्तापन्नालम्पूर्वप्रादिसमासेन । पञ्चकपालः । प्राप्तो जीविकां प्राप्तजीविकः । आपन्नजीविकः । अलं कुमार्य्यै अलंकुमारिः । निष्कौशाम्बिः ।**

सुबोधिनी–द्विगुप्राप्तापन्नालंपूर्वप्रादिसमासेना।द्विगुसमासे प्राप्ताऽपन्नालंपूर्वसमासे प्रादिसमासे च परपदतुल्यं लिंगं न भवति । पंचसु कपालेषु संस्कृतः तद्धितार्थे द्विगुः । संस्कृतार्थेऽण् तस्य लुक् च । तद्धितार्थे द्विगुर्विशेष्यनिघ्नः । पुरो दाश्यते इति दाशृ दाने कर्मणि घञ् । निपातनाद्दस्य डः पुरोडाशः । प्राप्तजीविकः । आपन्नजीविकः । अलंकुमारिः । तत्पुरुषा एते । अन्यार्थे इति ह्रस्वः । प्रादिसमासो यथा । प्रादयो गताद्यर्थे प्रथमया । प्रगत आचार्य्यः प्राचार्यः । दुराचारः पुरुषो दुःपुरुषः । प्रगतः पितामहः प्रपितामह इत्या–

दि । अत्यादयः क्रांताद्यर्थे द्वितीयया । अतिक्रांतो मालामतिमालः । अन्यार्थे इति ह्रस्वः । अभिगतो मुखमभिमुखः । उद्गतो वेलामुद्वेलः । प्रतिगतोऽक्षं प्रत्यक्ष इत्यादि । अवादयः क्रुष्टाद्यर्थे तृतीयया । अवक्रुष्टः कोकिलयाऽवकोकिलः । अन्यार्थे इति ह्रस्वः । परिणद्धो वीरुधा परिवीरुत् । पर्य्यादयो ग्लानाद्यर्थे चतुर्थ्या । परिग्लानोऽध्ययनाय पर्यध्ययनः । गुरुकुलवासादिना परिग्लानोऽध्ययनायेत्यर्थः । निरादयः क्रान्ताद्यर्थे पंचम्या । निष्क्रांतः कौशांब्याः निष्कौशाम्बिः । अन्यार्थे इति ह्रस्वः । उत्क्रांता कुलात् उत्कुला । निर्गतमंगुलिभ्यो निरंगुलम् । अस्वपदविग्रहेण नित्यसमासा एते ।

॥ इतिप्रादिसमासाः ॥

तत्त्वदीपिका–निष्कौशांबिरिति । कौशांब्या निर्गत इति विग्रहः ।

**मू०–अश्ववडवयोर्द्वन्द्वः पूर्ववाल्लिङ्गः ॥ अश्ववडवान् ।**

सुबोधिनी–अश्ववडवयोर्द्वंद्वःपूर्ववाल्लिंगः । सूत्रे द्विवचनमविवक्षितम् । बहुत्वेपि पुँल्लिंगस्य दर्शनात् । अश्वश्च वडवा च अश्ववडवौ । निपातनादापो निवृत्तिः । बहुत्वे पुँल्लिंगं दर्शयति । अश्ववडवान् अश्ववडवैः । विभाषावृक्षेति पक्षे समाहारद्वंद्वेऽश्ववडवं । क्रियाव्ययविशेषणानां क्लीबत्वमेकवचनं च । क्रियाविशेषणानामव्ययविशेषणानां चैकवचनं क्लीबत्वं च भवति ॥

**मू०–रात्राह्नाहान्ताः पुंस्येव ॥ अहोरात्रः । पूर्वरात्रः । पूर्वाह्णः । द्व्यह्नः । पूर्वाहः ।**

सुबोधिनी–रात्राह्नाहांताःपुंस्येव । परवाल्लिंगताऽपवादोप्ययं परत्वात्समाहारनपुंसकतां बाधते । अप्रत्ययांतो रात्रिशब्दष्टप्रत्ययांतोहन्शब्दः । एतदंता द्वंद्वद्विगुतत्पुरुषकर्मधारयाः पुँल्लिंगे एव भवंति । अहश्च रात्रिश्च अह्न इति नस्य सः अहोरात्रः । अहःपूर्वाद्रात्रिशब्दादः समाहारे इत्यः प्रत्ययः । रात्रेः पूर्वभागः पूर्वरात्रः । सर्वैकदेशेत्यप्रत्ययः अह्नः पूर्व इति पूर्वाह्णः । राजाहःसखिभ्यः इति टप्रत्यये नोवेत्युपधालोपः । द्वयोरह्नोस्समाहार इति टः । नोवेति टिलोपः । द्व्यहः ।

**मू०–संख्यापूर्वरात्रंक्लीबम् ॥ द्विरात्रम् । त्रिरात्रम्**

सुबोधिनी–संख्यापूर्वरात्रंक्लीबम् । द्वयो रात्र्योः समाहारः ॥ तिसृणां रात्रीणां समाहार इति । सर्वैकदेशेत्यप्रत्ययः । द्विरात्रम् । त्रिरात्रम् ।

**सू०–अपथन्तत्पुरुषेक्लीबम् ॥ अपथम् ।**

सुबोधिनी–अपथं तत्पुरुषेक्लीबम् । नञ्पूर्वः कृतसमासांतः पथशब्दः क्लीबे स्यात् । न पंथा इत्यपथम् । ऋक्पूरब्धूःपथामित्यप्रत्ययः । तत्पुरुषे इति किम् । अपथो देशः कृतसमासांतनिर्देशात् नेह । अपंथाः । अत्र नञ्पूर्वात्पथिशब्दाद्वा समासांतस्तत्पुरुषे इति विकल्पः ॥

**मू० अर्द्धर्चादयः क्लीबपुंसोः । अर्द्धर्चम् । अर्द्धर्चः । ध्वजम् । ध्वजः । तीर्थम् । तीर्थः । एवं शरीरमण्डपयूपदेहदेशांकुशकलश इत्यादि ।**

सुबोधिनी-प्रसंगादाह । अर्द्धर्चादयः क्लीबपुंसोः । अर्द्धर्चादयः शब्दाः पुंसि क्लीबे च स्युः ॥

**मू०-आबन्तोत्तरपदाद्द्विगोर्वेप् । पञ्चखट्वी । पञ्चखट्वम् ।**

सुबोधिनी-आबंतोत्तरपदाद्द्विगोर्वेप् । आबंतोत्तरपदो द्विगुर्वा स्त्रियाम् । पंचानां खट्वानां समाहारः नपुंसकस्येति ह्रस्वे कृते इदं प्रवर्तते । पंचखट्वम् । स्त्रियां तु समाहारे ऽतइतीप् पंचखट्वी ॥

तत्त्वदीपिका-पंचखट्व इति । पंचानां खट्वानां समाहार इति विग्रहः ।

**अनोनलोपोद्विगोर्वेप् ॥ पञ्चतक्षम् । पञ्चतक्षी ।**

सुबोधिनी-अनो नलोपो द्विगोर्वेप् । अनो नलोपो द्विगुर्वा स्त्रियाम् । इह वाशब्दः स्त्रियामित्यनेन संबध्यते न तु नलोपइत्यनेन । अन्नंतस्य द्विगोर्नित्यं नलोपो भवति अन्नंतो द्विगुः स्त्रियां च वा । पंचानां तक्ष्णां समाहारः पंचतक्षम् । स्त्रियां तु समाहारेऽत इनि ईप् पंचतक्षी ।

**मू०-पुण्यसुदिनाभ्यामह्नःक्लीबता । पुण्याहम् । सुदिनाहम् ।**

सुबोधिनी-पुण्यसुदिनाभ्यामह्नः क्लीबता । आभ्यां परस्याहन्शब्दस्य क्लीबत्वं स्यात् । पुण्यं च तदहश्चेति । राजाहःसखिभ्य इति टः । नोवेति टिलोपः । पुण्याहम् । सुदिनं च तदहश्चेति सुदिनशब्दः प्रशस्तपर्यायः सुदिनाहम् । रात्राह्नाहांताः पुंस्येवेत्यस्यापवादोयम् ।

तत्त्वदीपिका-सुदिनाहमिति । सुदिनशब्दः प्रशस्तपर्यायः सुदिनासु निशासु कार्यमेतत्प्रविचिन्वीत-विशेषतः स्वपं चेत्यादिप्रयोगदर्शनात् ।

**मू०-संख्याव्ययाभ्याम्परस्य पथः क्लीबता ॥ त्रिपथम् । विपथम् ।**

सुबोधिनी-संख्याव्ययाभ्यां परस्य पथस्य क्लीबता । आभ्यां परः कृतसमासांतः पथशब्दः क्लीबमित्यर्थः । त्रयाणां पंथा इति ऋक्पूरब्धूरित्यप्रत्ययः त्रिपथम् । विरूपः पंथाः इति विपथम् । कथं पुंस्त्वं' व्यध्वो दुरध्वो विपथः कदध्वा कापथः समा' इत्यमरे उच्यते । प्रमाद एवायमिति बहवः । वस्तुतस्तु पथगतौ इत्यस्मात्पचाद्यप्रत्यये पथति व्याप्नोतीति व्युत्पादितः पथशब्दः । तथा च त्रिकांडशेषः' वाटः पथश्च मार्गः स्यात्'इति । अनेन समासे पुंस्त्वमुपपन्नम् । कापथ इत्यत्र कादेशस्तु ईषदर्थे बोध्यः । अथ च परवल्लिंगापवादत्वात्तत्पुरुषे एवेदं प्रवर्तते नान्यत्र । विपथा नगरी बहुव्रीहिरयम् । पंथानमतिक्रांता अतिपथा । इहापि न । द्विगुप्राप्तापन्नालमिति परपद-लिंगप्रतिषेधात् इति माधवः ।

तत्त्वदीपिका-त्रिपथंविपथमिति । व्यध्वो दुरध्वो विपथः कदध्वा कापथः समाः इत्यमरे' विपथ-कापथाविति रभसकोशे च पथ गतावित्यामाद्यचाद्ये बोध्यम् । वाटः पथश्च मार्गस्स्यादिति त्रिकांडशेषोप्य-त्रानुकूलः ।

**मू०-सामान्येनपुंसकम् । मृदु पचति । प्रातः कमनीयम् ।**

सुबोधिनी-सामान्ये नपुंसकम् । अनियतलिंगविषयकमिदं तेनादिःपचतीत्यादौ पुंस्त्वमेव । मृदु पचति क्रियाविशेषणत्वात् द्वितीयांतमिदं धातूपात्तक्रियां प्रति हि फलांशः कर्मीभूतः फलसामानाधिकरण्ये द्वितीया ।

तत्त्वदीपिका–मृदु पचतीति । क्रियाविशेषणत्वाद्वितीयांतम् धातूपात्तभावनां प्रति फलांशः कर्मीभूतः तथाच फलसमानाधिकरण्ये द्वितीया । सामान्येनपुंसकमिति त्वानियतलिंगविषयम् तेन आदिः पचतीत्यादौ प्रातरादिरिति पुंस्त्वमेव ।

**मू०–उपज्ञोपक्रमान्तस्तत्पुरुषः क्लीबम्॥ उपज्ञायमानोपक्रम्यमाणयोः प्राथम्यश्चेदाख्यातुमिष्यते । पाणिन्युपज्ञं ग्रन्थः । नन्दोपक्रमं द्रोणः ।**

सुबोधिनी–उपज्ञोपक्रमांतस्तत्पुरुषः क्लीबम् । अनञ् तत्पुरुषाधिकारोयम् उपज्ञांत। उपक्रमांतश्च तत्पुरुषः क्लीबं स्यात् । उपज्ञायते इत्युपज्ञा षिद्भिदामङ् इति कर्म्मण्यङ् उपक्रम्यते इत्युपक्रमः । कर्म्मणिघञ् । मांतस्य सेटो न वृद्धिरिति वृद्ध्यभावः । उपज्ञा च उपक्रमश्च उपज्ञोपक्रमौ अंते यस्य स उपज्ञोपक्रमांतः । उपज्ञाज्ञानमाद्यं स्यात् ज्ञात्वारंभ उपक्रम इत्यमरः । उपज्ञायमानस्योपक्रम्यमाणस्य च प्रथमस्य भावः प्राथम्यं चेद्यदि आख्यातुं वक्तुमिष्यते वांछयते । पाणिनेः इति कर्तरिषष्ठी । नंदस्योपक्रम इति नंदोपक्रमम् ।

**मू०–छायान्तश्चपूर्वपदार्थबाहुल्ये ॥ इक्षूणां छाया इक्षुच्छायम् ॥**

सुबोधिनी–छायांतश्चपूर्वपदार्थबाहुल्ये । छायांतस्तत्पुरुषो नपुंसकं स्यात् । पूर्वं च तत्पदं च पूर्वपदं पूर्वपदस्यार्थः पूर्वपदार्थः । बहुलस्य भावो बाहुल्यं पूर्वपदार्थस्य बाहुल्यं पूर्वपदार्थबाहुल्यं तस्मिन् । सेनासुराच्छायेत्यस्यविकल्पस्यापवादोयम् ॥

तत्त्वदीपिका–इक्षुच्छायमिति । इक्षुच्छायानिषादिन्य इत्यत्राङ्प्रश्लेषो बोध्यः ।

**मू०–राजपर्यायपूर्वो रक्षःपिशाचादिपूर्वश्च सभान्तः क्लीबम् । इनसभम् । ईश्वरसभम् । नेह राजसभा । रक्षस्सभम् । पिशाचसभम् ।**

सुबोधिनी–राजपर्यायपूर्वो रक्षःपिशाचादिपूर्वश्च सभांतः क्लीबम् । राजपर्यायपूर्वः सभांतस्तत्पुरुषोरक्षःपिशाचादिपूर्वः सभांतस्तत्पुरुषश्च नपुंसकं स्यात् । इनेश्वरशब्दौ राजपर्यायौ । इनस्य सभा इनसभम् । ईश्वरस्य सभा ईश्वरसभम् । राजपर्यायपूर्व इति किं । राजसभा । रक्षसः सभा रक्षःसभम् । पिशाचस्य सभा पिशाचसभम् ॥

तत्त्वदीपिका–इनसभमिति । नृपतिसभामगमन्नचेयमानेत्यत्र तु राजविशेषवाचीनृपतिशब्दोबोध्यः ।

**मू०–संघातार्थेसभान्तः ॥ स्त्रीसभम् । स्त्रीसंघात इत्यर्थः ।**

सुबोधिनी–संघातार्थेसभांतः । संघातार्था या सभा तदंतस्तत्पुरुषः क्लीबं स्यात् ॥

**मू०–सेनासुराच्छायाशालानिशान्तोवा॥ब्राह्मणसेनम् । यवसुरम् । कुड्यच्छायम् । गोशालम् । श्वनिशम् । पक्षे ब्राह्मणसेनेत्यादि ॥**

**इतिसमासप्रक्रिया ॥**

सुबोधिनी–सेनासुराच्छायाशालानिशांतोवा । एतदन्तस्तत्पुरुषः क्लीबम् स्याद्वा । श्वनिशम् । कृष्णचतुर्दशी । अनञ्तत्पुरुष इत्यधिकारान्नेह । दृढसेनो राजा । दृढ सेना यस्येति बहुव्रीहिः । असेना अविद्यमाना सेना इति नञ्पूर्वस्तत्पुरुषः । अथशेषमाह । कृत्तद्धितसमासैकशेषयङ्ग्यंतधातुरूपाः पंचवृत्तयः । पंचानां वृत्तिरिति पूर्वाचार्यसंज्ञा । वृत्ति-

लक्षणमाह । परार्थाभिधानं वृत्तिः । परस्य शब्दस्य योऽर्थस्तस्याऽभिधानं शब्दांतरेण यत्र सा वृत्तिः । यथा । राजपुरुष इत्यत्र राजशब्देन वाक्यावस्थायामनुक्तः पुरुषार्थोऽभिधीयते । विग्रहलक्षणमाह । वृत्त्यर्थावबोधकं वाक्यं विग्रहः । स द्विधा । लौकिकोऽलौकिकश्च । परिनिष्ठितत्वात्साधुर्लौकिकः । प्रयोगानर्होऽसाधुरलौकिकः । यथा । राज्ञः पुरुष इति लौकिकविग्रहः । राजन् अस् पुरुष स् इत्यलौकिकविग्रहः । नित्यसमासलक्षणमाह । अविग्रहो नित्यसमासः । लौकिकविग्रहरहितो नित्यसमासो ज्ञेयः । लोके यस्य विग्रहो न प्रयुज्यते इति भावः । अस्वपदविग्रहो वा । समस्यमानयावत्पदैरघटितः अस्वपदविग्रहः । समासः षड्विधइति प्रायो वादः । अव्ययीभावतत्पुरुषद्वंद्वद्विगुबहुव्रीहिकर्मधारयाधिकारबहिर्भूतस्यापि नाम्नश्च कृतेति विधानात् । तद्व्याख्याने तत्पुरुष इत्युक्तिस्तु प्राचामनुरोधेनेति ध्येयम् । पूर्वपदार्थप्रधानोऽव्ययीभावः । उत्तरपदार्थप्रधानस्तत्पुरुषः । उभयपदार्थप्रधानो द्वन्द्वः । संख्यापूर्वान्यपदार्थप्रधानो द्विगुः । अन्यदार्थप्रधानो बहुव्रीहिः । विशेषणपूर्वः कर्मधारयः उत्तरपदार्थप्रधानः । विशेष्यपूर्वस्तु पूर्वपदार्थप्रधानः । न तु सार्वत्रिकः । सूपप्रति उन्मत्तगंगमित्याद्यव्ययीभावे । अतिमालादौ तत्पुरुषे । दंतोष्ठमित्यादौ द्वन्द्वे । द्वित्रा इत्यादौ बहुव्रीहौ चाऽभावात् । अनेकपदत्वं द्वन्द्वबहुव्रीह्योरेव । किंच "सिपां सिपा तिपां नाम्ना धातुनाथ तिपां तिपा ॥ सिबंतेनेति विज्ञेयः समासः षड्विधो बुधैः" ॥१॥ प्रायोभिप्रायः । सिबंतानां सिबन्तेन यथा राजपुरुषः । सिबन्तानां तिपा समासो वेदे एव भवति नान्यत्र । यथा । पर्यभूषत् । सिबन्तानां नाम्ना प्रातिपदिकेन यथा । कुंभकारः । अत्र सिबुत्पत्तेः प्रागेवोपपदसमासः । सिबन्तानां धातुना यथा । क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणामित्यादिनिपातनाद्धातुना वंसततम् समासः । कटप्रूः । अजस्रम् । तिपां तिपा समासो यथा । क्रियासातत्ये आख्यातेन समस्यते । अश्नीतपिबतेत्येवं सततं यत्राभिधीयते सा अश्नीतपिबता । पचतभृज्जता । खादतमोदता । तिपा सिपा यथा । एहीडादयोऽन्यार्थे समस्यंते एहि ईड इति यस्मिन् कर्मणि तत् एहीडम् । कृंत विचक्षण इति यस्यां क्रियायां सा कृंतविचक्षणा । इवेन नित्यसमासो विभक्त्यलोपश्च । जीमूतस्येव ॥ इति सर्वसमासशेषः ॥ जात्याख्यायामेकस्मिन्बहुवचनंवा । ब्राह्मणाः पूज्याः ब्राह्मणः पूज्यः । एकत्वे द्वित्वे चास्मदो बहुवचनं वा । वयं ब्रूमः । अहं ब्रवीमि । आवां ब्रूवो वा । उपमानानि सामान्यवचनैस्समस्यंते । घनश्यामः । इह पूर्वपदं तत्सदृशे लाक्षणिकमिति सूचयितुं लौकिकविग्रहे इवशब्दः प्रयुज्यते । उपमानस्य पूर्वनिपातार्थमिदम् । उपमेयं व्याघ्रादिभिः सामान्याप्रयोगे समस्यते । विशेष्यस्य पूर्वनिपातार्थमिदम् । पुरुषो व्याघ्र इव । शूर इत्यर्थः ॥

॥ इतिसमासप्रक्रिया ॥

श्रीविद्यानगरस्थायिलोकेशकरशर्मणा ।
कृतायामिह टीकायां समासविवृतिर्गता ॥

॥ अथ तद्धितप्रक्रिया ॥

मू०–अपत्येऽण् ॥ नाम्नोऽपत्येऽर्थेऽण् प्रत्ययः ।

**सुबोधिनी**–अथ तद्धितो निरूप्यते ॥ तेभ्यः स्याद्यंतपदेभ्यो हितस्तद्धितः। विभक्त्यंतनाम्न एव तद्धितोत्पत्तिर्भवतीत्यर्थः ॥ अपत्येऽण् । षष्ठ्यंतान्नाम्नोऽण् प्रत्ययो भवति अन्वये सत्यपत्यार्थे । अन्वयस्तु एकार्थीभाव एव वृत्तौ। वाक्ये तु व्यपेक्षालक्षणः। "आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी । आहुर्दुहितरं सर्वेऽपत्यं तोकं तयोः समे" इत्यमरः ॥

**तत्त्वदीपिका**–अपत्येऽणिति। अत्र प्रकरणत्वादादिनाऽपत्यान्वयस्यासंभवात्पारिशेष्याद्वा नामलाभः। नाम्नोऽणित्यतः षष्ठ्यंतस्यैवापत्यवद्भावसंबंधे षष्ठ्या एवोचितत्वात्।

**मू०–आदिस्वरस्यञ्णिति वृद्धिः ॥** स्वराणांमध्ये य आदिस्वरस्तस्य वृद्धिर्ञिति णिति च तद्धिते।

**सुबोधिनी**–आदिस्वरस्यञ्णितिवृद्धिः। स्वरेषु आदिः आदिस्वरः निर्द्धारणार्थसप्तम्या समासः। क्वचिदमाद्यंतस्य परत्वमिति परनिपातः। निर्द्धारणषष्ठ्या तु न समासः। निर्द्धारणे या षष्ठीति निषेधात्। यद्वा वोऽय्यस्वरे इत्यतः स्वरे इत्यनुवर्त्य तच्च जातावेकवचनं निर्द्धारणसप्तम्यंतं तथाच स्वरेषु य आदिस्वरस्तस्य वृद्धिरिति व्याख्याने आदिश्चासौ स्वरश्चेति कर्मधारयः। ञ्च ण्च ञ्णौ तौ इतौ यस्य स ञ्णित् तस्मिन् ञ्णिति। प्रकरणात्तद्धिते इति लभ्यते। इच्छब्दस्तु प्रत्येकं संबध्यते। द्वंद्वांते श्रूयमाणत्वात् ॥

**तत्त्वदीपिका**–आदिस्वरस्य ञ्णिति वृद्धिरिति। अत्र स्वराणां आदिस्वरः। स्वरेषु वा निर्द्धारणार्थया षष्ठ्या सप्तम्या वा समासः। क्वचिदमाद्यंतस्य परत्वस्येदमपि ज्ञापकम्। निर्धारणं च सजातीयापेक्षं तेन स्वर एव गृह्यते नतु हस इति लघुभाष्ये। हस अत्रेदमवधेयम्। निर्द्धारणषष्ठ्या समास इति तावत् व्याहृतं। तथाहि। क्वचित्षष्ठी न समस्यत इत्युक्त्या क्वचित्पदेन ग्रंथान्तरोक्तनिर्द्धारणादिलाभात्। न निर्द्धारण इति पाणिनिसूत्रमेवात्रार्थेनुकूलमिति तस्मात्सप्तम्यंतेन समासः। कर्मधारयो वा। कर्मधारये च यस्वर इत्यतः स्वरे इत्यनुवर्त्य जातावेकवचनं बोध्यम्। तथाच स्वरेषु य आदिस्वरस्तस्य वृद्धिरिति व्याख्येयम्। ञ्च ण् च ञ्णौ ञ्णौ इतौ यस्य स ञ्णित् तस्मिन्। प्रकरणात्तद्धितस्यैव विशेषणम्। अत्र णितीति वा ञितीति वा एकमेव कर्त्तव्यं सर्वत्र णकार एव ञकार एव चानुबंधत्वेन कार्य इत्युक्तिस्तु अनेकस्थलेनुबंधव्यत्यासकरणक्लेशादुपेक्षिता। नन्वादेर्ञ्णिति च वृद्धिरित्येवास्तु किं स्वरग्रहणेनेति चेत्सत्यम्। हसस्य वृद्धिग्रहणेन वारणसंभवेपि यत्रादावेकस्वरःस्यात्तत्रैव वृद्धिर्नत्वादिहसात्परस्य स्वरस्येति शंकानिरासाय स्वरग्रहणस्यावश्यकत्वात्। आदित्वं तु यस्मात्पूर्वं नास्ति तत्त्वमेवमंतत्वमपि यस्मात्परो नास्ति तत्त्वमेव। इत्थं च व्यपदेशिवद्भावो नापेक्ष्यः इति तु सत्यन्यस्मिन्नित्यपि विशेषणमुपादेयं। तदा व्यपदेशिवद्भावेनैकस्वरस्य सिद्धिः।

**मू०–वोऽव्यस्वरे ॥** उवर्णस्यौतश्चाव् तद्धितस्य यकारे स्वरे च उपगोरपत्यमौपगवः। वैदुषः। वासिष्ठः। गौतमः। भार्गवः। आंगिरसः। बैदः। और्वः। वाभ्रव्यः।

**सुबोधिनी**–वोऽव्यस्वरे। उश्च ओश्चानयोः समाहारो वो एकत्वे द्विगुद्वंद्वाविति नपुंसकत्वेपि न ह्रस्वः। अनुकार्यस्वरूपस्पष्टप्रतिपत्त्यर्थत्वात्। यश्च स्वरश्च तयोः समाहारः यस्वरं तस्मिन् यस्वरे तद्धितसंबंधिनि। अत्रौकारस्य स्वरे अवि सिद्धौ यकारार्थं तद्ग्रहणम्। वस्तुतस्तु क्वचिद्यकारेऽपि स्वरकार्यातिदेशादेव सिद्धिरित्योग्रहणं व्यर्थमिति ध्येयम्। गामुपगत इत्युपगुः। नाम्नश्चेति समासः। गोरिति ह्रस्वः। यादवविशेषस्य उद्धवस्य पूर्वजः कश्चित्। उद्धवं प्रकृत्यौपगवविर्जगामेति भागवतात्। उपगोरपत्यमिति अणः प्रयोगे उक्ता-

र्थानामप्रयोग इति न्यायादपत्यशब्दस्याऽप्रयोगः । वाटाङ्च्योरित्यतो वेत्यनुवर्तते तेन पक्षे षष्ठीसमासोपि । उपगवऽपत्यमिति समासस्य वैकल्पिकत्वाद्वाक्यमपि । औपगवः । स्त्रियां तु जातेरितीप् । औपगवी । अन्वये किं । वस्त्रमुपगोरपत्यं चैत्रस्य । विदुषोपत्यं वैदुषः। वासिष्ठस्य ऋषेरपत्यं वासिष्ठः । गौतमस्य ऋषेरपत्यं गौतमः । भृगोर्ऋषेरपत्यं भार्गवः । अंगिरस ऋषेरपत्यम् आंगिरसः । बिदस्यापत्यं बैदः । उर्वस्यापत्यम् और्वः ॥

तत्त्वदीपिका–वोऽव्यस्वरइति । वो अव्यस्वरेइति छेदः । उश्च ओश्च एतयोःसमाहारः वो । एकत्वे द्विगुद्वंद्वावित्यस्यानित्यत्वान्नपुंसकाभावः । नपुंसकत्वं वा ह्रस्वस्यैवानित्यत्वं । यश्च स्वरश्च यस्वरं तस्मिन् । अत्र ओकारस्य स्वरे अवृविधानस्य सिद्धत्वेपि यकारार्थमोग्रहणस्यावश्यकत्वात् तद्ग्रहणं । वस्तुतस्तु क्वचिद्यकारेपि स्वरकार्यातिदेशादेव सिद्धिरित्योकारग्रहणं न कर्तव्यं । यस्वरयोश्च प्रकरणात्तद्धितयोरेव ग्रहणं उपगोरपत्यमिति । गामुपगत उपगुः नाम्नश्चेति समासो गोरिति ह्रस्वः उपगुर्यादवविशेषः उद्धवपूर्वजेषु कश्चन । अणः प्रयोगे उक्तार्थानामप्रयोगः इतिन्यायादपत्यशब्दस्याप्रयोगः मृगापत्ये । मृगत्त्वसत्वान्न तद्वाचिभ्यस्तद्धितः । उपगुत्वं त्वौपगवे नास्तीति भवत्यपत्यप्रत्ययः ।

सू०–ऋउरणि ॥ संख्यासंभद्रपूर्वस्य मातृशब्दस्य ऋत उर्भवत्यणि परे । षाण्मातुरः । साम्मातुरः । भाद्रमातुरः ।

सुबोधिनी–ऋउरणि । सामान्यशब्दस्यापि लक्ष्यानुसारात् विशेषपरत्व बोध्यं । तेन संख्यादिपूर्वस्य मातृशब्दस्य लाभः । षण्णां मातृणामपत्यमिति तद्धितार्थे द्विगुसमासोयं । नतु षण्मातृणामपत्यमिति विग्रहः । दिक्संख्ये संज्ञायामिति नियमेनाऽसंज्ञायां समासाभावात् । तद्धितांतस्य संज्ञात्वेपि समासस्य संज्ञात्वात् आदिस्वरवृद्धिः । षोडइति डत्वं क्वचिज्जबस्यापि जम् इति डस्य णः उर् षाण्मातुरः । द्वयोर्मात्रोरपत्यं द्वैमातुरः । द्वैमात्रेयश्च विनायकः । संमातुरपत्यं साम्मातुरः । भद्रमातुरपत्यं भाद्रमातुरः ॥

तत्त्वदीपिका–ऋउरणीति । मातृशब्दस्येति जननीवाचकस्यैव ग्रहणं व्याख्यानात् । षण्णां मातृणामपत्यमिति संख्यापूर्वो द्विगुरिति तद्धितार्थे द्विगुः । जमेजमावेत्यत्र व्यवस्थितत्वाश्रयणात्क्वचिजबस्यापि डकारस्य जमानां मध्ये सवर्णत्वेन णकारः ।

सू०–शिवादेश्चाण् ॥ शैवः । गाङ्गः ।

सुबोधिनी– शिवादेश्चाण् । शिवादेरण्स्यादपत्येर्थे इञपवादोयम् । शिवस्यापत्यं शैवः । लह्यस्यापत्यं लाह्यः । गंगायाअपत्यं गांगः । पक्षे गांगेयः । एयण् । शिव ककुत्स्थ वेतंड जरत्कारु विपाश् तक्षन् विश्रवण् रवण ऋष्टिषेण विरूपाक्ष इति शिवादिः ॥

तत्त्वदीपिका–शिवादेश्चेति । अत इति योगविभागात् शिवादेरकारांतादप्यण् ।

सू०–अतइञनृषेः ॥ अकारान्तान्नाम्नोऽनृषिशब्दापत्येऽर्थे इञ् दैवदत्तिः । श्रैधरिः । दाशरथिः । पौरन्दरिः ।

सुबोधिनी–अतइञनृषेः । ऋषिवाचकाददंतात्तु अणेव भवति । अनृषिवाचकमदंतं यत्प्रातिपदिकं तत्प्रकृतिकात् षष्ठ्यंतादिञ् स्यादपत्येर्थे । देवदत्तस्यापत्यं दैवदत्तिः । श्रीधरस्यापत्यं श्रैधरिः । दशरथस्यापत्यं दाशरथिः । पुरंदरस्याऽपत्यं पौरंदरिः ॥

तत्त्वदीपिका–अत इञनृषेरिति । अत्रात इति योगविभागः । तेनाकारांतादनृषि वाचकादप्यण् । भैमसेन इत्यादि ।

**मू०—बाह्वादेश्च** ॥ बहोरपत्यम्बाहविः । औडुलोमिः । गार्गिः । वैदिः । नाडिः । कौञ्जिः ।

**सुबोधिनी**— बह्वादेश्च । बह्वादिभ्य इञ्स्यादपत्येर्थे । बाह्वादिराकृतिगणोयं । बाहोरपत्यं बाहविः । उडुनीव लोमानि यस्य स उडुलोमा । " तारकाप्युडुर्वास्त्रियामित्यमरः " । उडूलोम्नोऽपत्यं नोवेति टिलोपः । औडुलोमिः । बहुत्वेत्वस्मादणेव । णितो वेत्यणित्त्वान्न वृद्धिः । उडुलोमाः । गर्गस्यापत्यं गार्गिः । विदस्यापत्यं वैदिः । नडस्यापत्यं नाडिः । कुंजस्यापत्यं कौंजिः । बह्वादिर्यथा । बिद उर्व कश्यप कुशिक भारद्वाज उपमन्यु विश्वानर परस्त्री परसुंच इत्यादि ॥

**तत्त्वदीपिका**—बह्वादेश्चेति । इञ्इति द्वितीययोगविभागादनकारांतादपीञ् सिध्यतीति भावः । तेन सावर्णिरित्यादिसिद्धिः । अकङ्चेति । ङित्वादन्तस्यायमादेशः ।

**मू०—सुधातृव्यासवरुडनिषादचण्डालबिम्बानामकङ्च** ॥ सुधातुरपत्यं सौधातकिः । वैयासकिः । वारुडकिः । नैषादकिः । चाण्डालकिः । बैम्बकिः ।

**सुबोधिनी**— सुधातृव्यासवरुडनिषादचंडालबिंबानामकङ्च । एषामकङादेशः स्यात् इञ्प्रत्ययश्चापत्येर्थे । ङित्वादंत्यस्य स्थानेऽकङ् । सुधातुरपत्यं सौधातकिः । वेदान् व्यसतीति वेदव्यासः कार्य्येणित्यण् । भीमो भीमसेन इतिवदेकदेशस्य ग्रहणं । व्यासस्यापत्यमिति नसंधिष्वोर्युट्चेति वक्ष्यमाणेनेडागमः ततो वृद्धिर्वैयासकिः । वरुडस्यापत्यं वारुडकिः । वरुडादयोजातिविशेषाः । निषादस्यापत्यं नैषादकिः । चंडालस्यापत्यं चांडालकिः । बिंबस्यापत्यं बैंबकिः ॥

**तत्त्वदीपिका**—सौधातकिरिति । सुधातुरपत्यमिति विग्रहः ।

**मू०—ण्यायनणेयण्णीयागर्गनडात्रिस्त्रीपितृष्वस्रादेः** ॥ गर्गादेर्ण्यो नडादेरायनण् अत्र्यादेः स्त्रीप्रत्ययान्ताच्च एयण् पितृष्वस्रादेर्णीयोऽपत्येऽर्थे । गार्ग्यः । वात्स्यः । कात्यः । वातण्ड्यः । आवट्यः । माण्डूक्यः । पौतिमाष्यः । नाडायनः । चारायणः । गार्ग्यायणः । वात्स्यायनः । आमुष्यायणः । आत्रेयः । कापेयः । नैधेयः । गाङ्गेयः । गौवेयः । नाटेयः ।

**सुबोधिनी**—ण्यायनणेयण्णीयागर्गनडात्रिस्त्रीपितृष्वस्रादेः । ण्यश्च आयनण् च एयण् च णीयश्च ते ण्यायनणेयणीयाः । गर्गश्च नडश्च अत्रिस्त्रियौ च पितृष्वसा च एषां समाहारो गर्गनडात्रिस्त्रीपितृष्वसृ गर्गनडात्रिस्त्रीपितृष्वसृ आदिर्यस्य स गर्गनडात्रिस्त्रीपितृष्वस्रादिस्तस्मात् । द्वंद्वांते श्रूयमाण आदिशब्दः प्रत्येकं संबध्यते । स्त्रीशब्देन स्त्रीप्रत्ययस्य ग्रहणान्नादिशब्दप्रयोगः । इह स्वरूपग्रहणं अत्र्यादिषु तस्य तु नेष्टं सुग्रहात् । यथाक्रमं गर्गादिभ्यो ण्योऽपत्येऽर्थे । नडादेरायनणऽपत्येऽर्थे । अत्र्यादेः स्त्रीप्रत्ययांताच्च एयण् अपत्येऽर्थे । पितृष्वस्रादेर्णीयोऽपत्येऽर्थे । इह आयनणेयणोरणंतत्वादीप् । अंतणकारपाठसामर्थ्यादर्थवद्ग्रहण परिभाषाया अनित्यत्वात् । अन्यथा एयणीयवत् णायनेणेयावित्येव ब्रूयादिति । गर्गादिर्यथा । गर्ग वत्स व्याघ्रपाद पुलस्ति बभ्रु मंडु वतंड शकल कण्व अगस्त्य

कुंडिनी याज्ञवल्क्य पराशर जमदग्नि इत्यादि । नडादिर्यथा । कुंज ब्रध्न शंख शकट इत्यादि । अत्र्यादिर्यथा । अत्रि शुभ्र मृकंड अश्वादि नाद विधवा गोधा प्रवाहण पांडु इत्यादि । गर्गादिशब्दास्तदपत्ये लाक्षणिकाः । साक्षादपत्ये इञेव अनन्तरापत्ये गार्गिरित्युक्तत्वात् । गर्गस्यापत्यमितीञोर्थः गार्गेरपत्यं गार्ग्यः । वत्सस्यापत्यं वात्स्यः । कतस्यापत्यं कात्यः । वतंडस्यापत्यं वातंड्यः । अवटस्याऽपत्यमावट्यः । मंडूकस्यापत्यं मांडूक्यः । पूतिमाषस्यापत्यं पौतिमाष्यः । स्त्रियां तु नदादित्वादीप् । हलस्तद्धितस्येपीति यलोपः । गार्गी । वात्सी । नदादित्वात् स्त्रियामायनाणि गार्ग्यायणी । कात्यायनी । वातंडी वातंड्यायनी मांडूक्यायनी । अजादित्वादाप्रत्यये आवट्या । पौतिमाष्या । नडस्यापत्यमितीञोर्थः । नाडेरपत्यं नाडायनः । चरस्यापत्यं चारायणः । ण्यतानामिञंतानां च नडादित्वम् बोध्यं । गार्ग्यस्यापत्यं गार्ग्यायणः । वात्स्यस्याऽपत्यं वात्स्यायनः । दाक्षेरपत्यं दाक्षायणः । अमुष्यापत्यमामुष्यायणः । षष्ठ्याअलुगत्र । अत्रेरपत्यमात्रेयः । कपेरपत्यं कापेयः ॥

**तत्त्वदीपिका–ण्यायनणेयनणीयाइति** । ण्यश्च आयनण् च एयण् च णीयश्च ते । गर्गश्च नडश्च अत्रिश्च स्त्री च पितृष्वसा च एतेषां समाहारस्तदादिर्यस्य स तथा तस्मात् । द्वंद्वात्पर आदिशब्दः प्रत्येकमभिसंबध्यते । स्त्रीशब्देन स्त्रीप्रत्ययग्रहणान्नादिशब्दप्रयोगः । अत्र नव्याः आदिशब्दोत्र प्रकारवाची न तु व्यवस्थार्थः । एतदादिगणस्यात्रादर्शनादित्याहुः । तन्मते गर्गादेर्गणाण्ण्य इत्यादि वासुदेवोक्तिः प्रत्युक्ता । गर्गादिशब्दाश्च तदपत्ये लाक्षणिकाः । तेन गर्गस्यापत्यं गार्ग्यं गार्ग्य इत्यत्र गार्गेरपत्यमित्यर्थो बोध्यः । साक्षादपत्ये तु गार्गिरित्येवेति ।

**मू०–कल्याण्यादेरिनङ्च ॥ काल्याणिनेयः । कौलटिनेयः ।**

**सुबोधिनी**–कल्याण्यादेरिनङ्च । एषामिनङादेशः । स्त्रीप्रत्ययांतत्वाद्ढयण्प्रत्ययः । कल्याणी सुभगा दुर्भगा बंधकी परस्त्री कुलटा इत्यादि । कल्याण्या अपत्यं ङित्वादंत्यस्थाने इनङ् आदिस्वरवृद्धिः यस्येत्यलोपः काल्याणिनेयः । कुलान्यटति भिक्षार्थं हलादेरीषादाविति टेर्लोपः सा कुलटा । सती भिक्षुक्यत्रेनङ्विधौ गृह्यते । या तु व्यभिचारार्थं कुलान्यटति तस्य एरण्प्रत्यये कौलटेरः । एयणि तु कौलटेयः । सतीपक्षे तु इनङ्वा भवति । कौलटिनेयः, कौलटेयः । अथ बांधकिनेयः स्याद्बंधुलश्चासतीसुतः ॥ कौलटेरः कौलटेयो भिक्षुकी तु सती यदि ॥ तदा कौलटिनेयोऽस्याः कौलटेयोपि चात्मज इत्यमरः । सुभगाया अपत्यमिति क्वचिद्द्वयोरिति वक्ष्यमाणेनोभयत्र वृद्धिः इनङ् सौभागिनेयः ॥

**तत्त्वदीपिका–इनङ्चेति** । ङित्वादंत्यादेशः । काल्याणिनेय इति कल्याण्या अपत्यमिति विग्रहः ।

**मू०–गोधादेरारणेरणौ ॥ गौधारः । नाटारः । पाण्डारः । गौधेरः । नाटेरः । पाण्डेरः । पैतृष्वस्रीयः ।**

**सुबोधिनी**–गोधादेरारणेरणौ गोधादेरारणेरणौ प्रत्ययौ स्तः अपत्येऽर्थे । गोधाया अपत्यं गौधारः नट्या अपत्यं नाटारः । यस्येतिलोपः । पंडोः नपुंसकस्यापत्यं पांडारः । एरणि तु गौधेरः । नाटेरः । पितृष्वस्रादेर्णीयः । पितृस्वसेति मातृपितृभ्यां स्वसुरिति षत्वं । पितृष्वसुरपत्यं पैतृष्वस्रीयः । मातृष्वसुरपत्यं मातृष्वस्रीयः ॥

**तत्त्वदीपिका–गोधारइति** । गोधाया अपत्यमिति विग्रहः । पांडार इति । पांडस्यापत्यमिति विग्रहः ।

**मू०—पितृष्वस्रादेरेयणिटिलोपः ॥ पैतृष्वसेयः । मातृष्वसेयः ।**

**सुबोधिनी**—पितृष्वस्रादेरेयणिटिलोपः । पितृष्वस्रादेष्टेर्लोपः स्यादेयणि । अत्र्यादित्वादेयण् । पैतृष्वसेयः ॥

**तत्त्वदीपिका**—पैतृष्वसेय इति । पितृष्वसुरपत्यमिति विग्रहः । पितृष्वस्रादेरित्यत्र कृतषत्वनिर्देशात्समासे क्वचित्पूर्वपदादुत्तरपदस्थस्य सस्य षः । तेन ज्योतिष्टोमइत्यादौ षत्वम् ।

**मू०—पाण्डोड्यण् ॥ पाण्ड्यः ।**

**सुबोधिनी**—पांडोर्ड्यण् । पण्डुशब्दात् ड्यण् स्यादपत्येऽर्थे । णित्करणं पांड्या भार्या इत्यत्र वृद्धिहेतोस्तद्धितस्यारक्तविकारार्थस्येति पुंवद्भावप्रतिषेधार्थम् । पांडोरपत्यं पांड्यः ॥

**मू०—चटकादेरैरण् ॥ चटकस्यापत्यश्चाटकैरः ।**

**सुबोधिनी**—चटकादेरैरण् । चटकाशब्दादैरण् स्यादपत्येऽर्थे । प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणमिति परिभाषया स्त्रिया अपि । चटकस्य चटकाया वाऽपत्यं चाटकैरः ॥

**तत्त्वदीपिका**—चाटकैरइति । चटकस्य चटाकाया वापत्यमिति विग्रहः ।

**मू०—स्त्र्यपत्येलुक् ॥ चटका ।**

**सुबोधिनी**—स्त्र्यपत्येलुक् । चटकादेरणो लुक् स्यात् स्त्र्यपत्ये । चटका । अजादित्वादाप् ॥

**तत्त्वदीपिका**—चटकेति । चटकस्य चटकाया वापत्यं स्त्रीति विग्रहः ।

**मू०—लुग्बहुत्वेक्वचित् ॥ प्रत्ययस्य । गर्गाः । वसिष्ठाः । भृगवः । अङ्गिरसः । वत्साः । कुत्साः । गोतमाः । अत्रयः । बिदाः । अङ्गाः । वंगाः । कलिंगाः । विदेहाः ।**

**सुबोधिनी**—लुग्बहुत्वेक्वचित् । क्वचिदपत्यप्रत्ययस्य लुक् स्यात् तत्कृते बहुत्वे ण्यस्य लुक् । गर्गाः । वत्साः । तत्कृते इति किं । प्रियो गार्ग्यो येषां ते प्रियगार्ग्याः । स्त्रियां तु न । गार्ग्यः स्त्रियः । अणो लुक् । वसिष्ठाः । भृगवः । अंगिरसः । कुत्साः । गोतमाः । बिदाः । उर्वाः । ण्यणो लुक् । अत्रयः । जनपदक्षत्रियवाचिनोऽपत्यप्रत्ययस्य लुक् स्यात् । बहुत्वे अणो लुक् । अङ्गाः । वङ्गाः । कलिङ्गाः । विदेहाः । तद्राजन्यर्थेष्वपत्यप्रत्यया भवंति। इक्ष्वाकूणां राजेति निपातनाट्टिलोपः । ऐक्ष्वाकः । पंचालानां राजा पांचालः । बहुत्वे लुक् । इक्ष्वाकवः । पंचाला इत्यादि । एवमंगानां राजा आंग इत्याद्यपि बोध्यम् ॥

**तत्त्वदीपिका**—लुग्बहुत्वेक्वचिदिति । क्वचिद्ग्रहणाद्ग्रंथान्तरोक्तलक्ष्यानुसारेण लुग्भवतीति बोध्यम् । ग्रंथगौरवभयान्न तत्सर्वमुदाहृतम् ।

**मू०—स्त्रियामवन्तिकुरुशूरसेनादिभ्योऽबहुत्वेऽपि ॥ अवन्ती। कुन्ती। कुरूः । शूरसेनी ।**

**सुबोधिनी**—स्त्रियामवंतिकुन्तिकुरुशूरसेनादिभ्योबहुत्वेपि । एभ्योऽपत्यार्थप्रत्ययस्य लुक् स्यात् स्त्रीप्रत्यये । अवंतेरपत्यं स्त्री अवंती । कुंतेरपत्यं कौंतेयः । स्त्री कुन्ती । इतोमनुष्यजातेरितीप् । कुरोरपत्यंकौरव्यः । स्त्री कुरूः । उत ऊरित्यूप्रत्ययः । शूरसेनस्याऽपत्यं शौरसेनः । स्त्री शूरसेनी । मद्रस्यापत्यं माद्रः । स्त्री माद्री । जातित्वादीप् ॥

तत्त्वदीपिका–अवन्तीति । अवन्तेरपत्यमिति विग्रहः । पुमांस्त्वावन्त्यः । कुंतीति । कुंतेरपत्यमिति विग्रहः । कुरूरिति । कुरोरपत्यं स्त्री कुरूः । उतऊरित्यूः । पुमांस्तु कौरव्यः । शूरसेनस्यापत्यं शूरसेनी पुमान् शौरसेनः ।

**मू०–देवतेदमर्थे ॥ देवतार्थे इदमर्थेचोक्ता वक्ष्यमाणाश्च प्रत्ययाः । इन्द्रो देवतास्य ऐन्द्रम् । सौम्यम् । आग्नेयम् । गृहमेधीयम् । वास्तोष्पतीयम् । अग्नीषोमीयम् । मरुत्वतीयम् ।**

सुबोधिनी–देवतेदमर्थे । देवता च इदम् च अनयोः समाहारो देवतेदं देवतेदं चासौ अर्थश्च देवतेदमर्थस्तस्मिन् देवतेदमर्थे । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता । द्वन्द्वांते श्रूयमाणत्वात्प्रत्येकमर्थशब्दः संबध्यते । देवतार्थे इदमर्थे च उक्ता वक्ष्यमाणाश्च प्रत्ययाः स्युः । अण् इञ् ण्यः । आयनण् एयणीय आरण् रारण् ड्यण् एरण् एते उक्तप्रत्ययाः । इन्द्रो देवता अस्येति ऐंद्रं हविः । अत्र प्रथमांतात्प्रत्ययो देवतास्येति षष्ठ्यर्थे । अन्योक्ते प्रथमेति तद्धितेनोक्ते संबंधे प्रथमा । स्त्रियां तु त्रणईप् । ऐंद्री दिक् । सोमो देवताऽस्येति सौम्यं ण्यः । नदादित्वादीप् । सौमी ऋक् । हसात्तद्धितयस्येपीति यलोपः । अग्निर्देवताऽस्येति आग्नेयं । एयण् । अणंतत्वादीप् । आग्नेयी । गृहमेधशब्दो अदंतः गृहमेधो देवताऽस्येति गृहमेधीयम् । गृहमेध्यम् । वास्तोष्पतिर्देवताऽस्येति वास्तोष्पतीयम् । वास्तोष्पत्यम् । वास्तोष्पतिः सुरपतिरित्यमरः । वास्तोः पतिः वास्तोष्पतिः । वेश्मभूर्वास्तुरस्त्रियामित्यमरः । अग्नीषोमौ देवते अस्येति अग्नीषोमीयम्, अग्नीषोम्यम् । मरुत्वान् देवताऽस्येति मरुत्वतीयं, मरुत्वत्यम् । इन्द्रोमरुत्वान्मघवेत्यमरः ॥

तत्त्वदीपिका–देवतेदमर्थे इति । देवता च इदम् चानयोः समाहारः देवतेदम् । सचासावर्थश्च देवतेदमर्थस्तस्मिन् द्वंद्वांते श्रूयमाणत्वादर्थशब्दस्य प्रत्येकं योग इत्याशयेनाह देवतार्थेत्यादिः । इन्द्रोदेवतास्येति । त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता मंत्रस्तुत्या च । ननु देवतार्थस्यापि इदमर्थत्वाद्देवताग्रहणं व्यर्थमिति चेत्सत्यम् । इदमर्थे इंद्रसंबंधि हविरिति बोधः । देवतार्थे तु इन्द्रदेवतोद्देश्यकं हविरिति विशेषबोधार्थं पृथक् ।

**मू०–अपोनपादपान्नपातोरपोनप्तृअपान्नप्तृआदेशौ ॥ इयेययोः परतः । अपोनप्त्रियम्, अपोनप्त्रीयम्, अपान्नप्त्रियम् । अपान्नप्त्रीयम् ।**

सुबोधिनी–अपोनपादपांनपातोरपोनप्तृअपान्नप्तृआदेशौ । ईयेययोः एतयोः परतः रपोनप्तृ अपांनप्तृ आदेशौ स्तः । अपोनपाद्देवताऽस्येति ॥

तत्त्वदीपिका–अपोनपादपान्नपातोरिति । अत्रादेशे यथासंख्यं न तु प्रत्यये व्याख्यानात् ।

**मू०–प्रावृषएण्यः ॥ प्रावृड्देवताऽस्य प्रावृषेण्यम् । कः प्रजापतिर्देवताऽस्य कायम् ।**

सुबोधिनी–प्रावृषएण्यः । अस्मादेण्यप्रत्ययः स्यात् देवतार्थे । प्रवर्षतीति प्रावृट् । नहिवृतीति दीर्घः । जातेऽर्थे तु इक् । प्रावृषि जातः प्रावृषिकः । प्रावृषेण्यः । स्त्रियां प्रावृट स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियामित्यमरः । कस्येकारांतादेशोऽणि को ब्रह्मा देवताऽस्येति यस्येति लोपात्परत्वादादिवृद्धिः आय् कायं हविः ॥

तत्त्वदीपिका–कायमिति । अत्र यस्य लोपं बाधित्वा परत्वाद्वृद्धिः ।

**मू०—क्वचिद्द्वयोः ॥** पूर्वोत्तरपदाद्योस्स्वरयोः क्वचिद्वृद्धिर्भवति ञ्णिति । आग्निमारुतम् ।

सुबोधिनी—क्वचिद्द्वयोः। द्वयोरिति षष्ठ्यन्तं पदविशेषणम् । अग्नामरुतौ देवते अस्येति अग्नेरिदिति वक्ष्यमाणेनेकारादेशः । उभयत्र वृद्धिः । आग्निमारुतम् । अण् । स्वाम्यर्थवाचकदेवताद्वंद्वे एव पूर्वोत्तरपदादिस्वरवृद्धिविषयकमुदाहरणमेतत् तेनेह न । स्कंदविशाखयोरयमिति स्कांदविशाखः अण् । पार्वतीनंदनः स्कंद इत्यमरः । नेंद्रस्य परस्य उभयत्र प्राप्तौ परस्येंद्रशब्दस्य वृद्धिर्न भवति देवताद्वंद्वे । सोमेन्द्रौ देवते अस्येति सोमेंद्रः पशुः । अण् । परस्येति किम् । इंद्राग्नी देवते अस्येति ऐंद्राग्नोऽण् यस्येतीकारलोपः । दीर्घात्परस्य वरुणस्य वृद्धिर्न भवति देवताद्वन्द्वे । इन्द्रावरुणौ देवते अस्येति देवताद्वन्द्वे पूर्वस्येत्यात्वम् । ऐंद्रावरुणं । मित्रावरुणौ देवते अस्येति मैत्रावरुणम् । अण् । दीर्घात्किम् । अग्नीवरुणौ देवते अस्येति ईदग्नेः सोमवरुणयोरितीत्वम् ॥

तत्त्वदीपिका—क्वचिद्द्वयोरिति । अत्रादिस्वरस्येति संपूर्णसूत्रमनुवर्त्तते । द्वयोरिति षष्ठ्यन्तं पदविशेषणम् । यद्यपि समासेनैकपद्यं तथाप्यंतर्वर्तिन्या विभक्त्या पदद्वयत्वं बोध्यम् । एदोतोत इति ज्ञापितमुत्तरस्यापदत्वं तु ज्ञापकसिद्धं न सर्वत्रेति वचनान्नेहाश्रयणीयम् । आग्निमारुतमिति अग्नीमरुतौ देवते अस्येति विग्रहः ।

**मू०—अग्नेरिद्वृद्धौ ॥** वृद्धिमत्युत्तरपदे अग्नेरिदादेशस्स्यात् । आग्निवारुणम् । सौहार्दम् । सौभागिनेयः । सौभाग्यम् । साक्तुसैन्धवः । आनुशातिकम् । ऐहलौकिकम् । पारलौकिकम् । पौर्वाह्णिकम् ।

सुबोधिनी—अग्नेरिद्वृद्धौ । अग्निशब्दस्येत्स्यात् वृद्धिमत्युत्तरपदे देवताद्वन्द्वे । अलौकिके वाक्ये आत्वमत्वं च बाधित्वा इत् । विष्णौ परे इत्वं न । विष्णुशब्दे परेऽग्निशब्दस्येन्न । आग्नावैष्णवम् । प्रत्ययः । आग्निवारुणम् । उभयत्र वृद्धिः । सुहृदो भावः सौहार्दम् अण् । सुभगाया अपत्यं सौभागिनेयः । ष्यणि न ङौ वृद्धिः । सुभगस्य भावः सौभाग्यं ष्यः सक्तुप्रधानाः सिंधवः सक्तुसिंधवः सक्तुसिंधुषु भवः साक्तुसैंधवः अणवृद्धी । शतेन क्रीतः शातिकः शातिकमनुगतो अनुशातिकः । अनुशातिकस्येदमानुशातिकम् अणवृद्धी । इह लोके भवम् ऐहलौकिकम् । इकः । परलोके भवं पारलौकिकम् ॥

तत्त्वदीपिका—अग्नेरिदिति । वृद्धिमत्युत्तरपदे अग्नेरिदादेशः स्यादित्यर्थः । सौहार्दमिति । सुहृदो भावः । सौभागिनेय इति । सुभगाया अपत्यमित्यर्थः । साक्तुसैंधव इति । सक्तुप्रधाना सिंधवः सक्तुसिंधवस्तेषु भवः । शतेन क्रीतः शतिकः तमनुगतोऽनुशतिकस्तस्येदमानुशातिकम् ।

**मू०—णितोवा ॥** उक्ता वक्ष्यमाणाश्च प्रत्यया णितो वा । स्वस्रीयः । श्वशुरस्यापत्यं श्वाशुर्य्यः । पित्र्यम् । गव्यम् । पयस्यम् । कुल्यम् । तदीयम् । त्वदीयम् । मदीयम् ।

सुबोधिनी—णितोवा । अणादयः कादयश्च णितो वा भवन्ति । अणादीनां णित्त्वे सिद्धे पक्षे निषेधार्थं वचनम् । कादीनामणित्त्वे सिद्धे पक्षे विधानार्थं । स च क्वचिन्नित्यनिषेधः । क्वचिद्वैकल्पिकः । क्वचिदनिषेध एव । स्वसुरपत्यं स्वस्रीयः णीयः । श्वशुरस्यापत्यं य-

स्येत्यलोपः श्वाशुर्यः । पितुरिदमिति क्वचित्स्वरवद्यकारइति स्वरत्वात् रत्वम् । पित्र्यम् ण्यः गोरिदं गव्यं ण्यः स्वरत्वादव् । पयसि भवम् पयस्यम् । कुले भवं कुल्यं ण्यः । तस्येदं तदीयम् । तवेदम् । ममेदम् । त्वन्मदेकत्वे इति त्वद् मद् त्वदीयम् । मदीयम् ॥

तत्त्वदीपिका—णितोवेति । अत्र वेत्यस्य व्यवस्थितत्वात् क्वचिदणितोपि णित्त्वं क्वचित् णितोप्य णित्त्वं क्वचिद्विकल्प इति बोध्यम् । णितो बहुत्वाण्णित इत्युक्तिर्ब्राह्मणग्राम इतिवत् । तेन णितोपि ञित्त्वविकल्पो बोध्यः । पित्र्यमिति पितुरिदमिति विग्रहे क्वचित्स्वरवद्य इति स्वरत्वाद्रत्वम् । एवं गव्यमित्यपि ।

मू०—अन्यस्यदक् ॥ अन्यदीयम् ।

सुबोधिनी—अन्यस्यदक् । अन्यशब्दस्य दगागमो भवति णीये । अषष्ठीतृतीयांतस्यान्यशब्दस्य दगागमो वाच्यः । आशीराशास्थाऽऽस्थितोत्सुकोतिकारकरागणीयेषु परतः । अन्यदाशीः । अन्यदाशा।अन्यदास्था । अन्यदास्थितः । अन्यदुत्सुकः । अन्यत्कारकः । अन्यद्रागः । अषष्ठीतृतीयांतस्येति । किम् । अन्यस्यान्येन वा आशीः अन्याशीः । कारकणीययोरषष्ठीतृतीयांतस्येति निषेधो न वाच्यः अर्थे परे अन्यस्य वा दक् । अन्यदर्थः । अन्यार्थः । अन्यदीयम् ॥

मू०—पितुर्भ्रातरिव्यः ॥ पितृभ्राता पितृव्यः ।

सुबोधिनी—पितुर्भ्रातरिव्यः । पितृशब्दाद्व्यप्रत्ययो भवति भ्रात्रर्थे ॥

मू०—मातुर्भ्रातरिडुलः ॥ मातुलः ।

सुबोधिनी—मातुर्भातरिडुलः । मातृशब्दात् डुल प्रत्ययो भवति भ्रात्रर्थे । डित्त्वाट्टिलोपः ॥

मू०— मातृपितृभ्याम्पितरिमातरिचडामहष् ॥ मातुः पिता मातामहः । मातुर्माता मातामही । पितामही ।

सुबोधिनी—मातृपितृभ्यांपितरिमातरिचडामहष् । आभ्यां महष् प्रत्ययः स्यात् पित्रर्थे मात्रर्थे च । डित्त्वाट्टिलोपः । षित्त्वात्स्त्रियां ङ्विषतइतीप् ॥

तत्त्वदीपिका—मातृपितृभ्यामिति । षित्त्वादीप् ।

मू०—अवेर्दुग्धेसोढदूसमरीसाः ॥ अवेर्दुग्धम् अविसोढम् । अविदूसम् । अविमरीसम् ॥

सुबोधिनी—अवेर्दुग्धेसोढदूसमरीसाः । अविशब्दादेते प्रत्यया भवन्ति दुग्धेऽर्थे । सकारपाठसामर्थ्यान्नषः । अविसोढमिति ॥

मू०—तिलान्निष्फलात्पिञ्जपेजौ ॥ निष्फलस्तिलस्तिलपिञ्जः । तिलपेजः ।

सुबोधिनी—तिलान्निष्फलात्पिञ्जपेजौ । तिलशब्दादेतौ प्रत्ययौ स्तः निष्फलेऽर्थे । तिलपिंजः । तिलपेजः । वंध्यस्तिल इत्यर्थः ॥

**मू०—कारकात्क्रियायुक्ते ॥** कारकादप्येते प्रत्ययाः क्रियायुक्ते कर्तरि कर्म्मणि च । कुंकुमेन रक्तं कौङ्कुमम् । वस्त्रेण परिवृतो वास्त्रो रथः । काम्बलः । द्वैपः । वैयाघ्रः ।

सुबोधिनी—कारकात्क्रियायुक्ते । कारकादणादयः कादयश्च प्रत्ययाः स्युः " कर्त्ता कर्म च करणं संप्रदानं तथैव च ॥ अपादानाधिकरणे इत्याहुः कारकाणि षट् " इत्यत्र कारकशब्दः सर्वस्मिन्नपि क्रियासाधने दृष्टः । स्वार्थिकः कारकः संगीत्यत्र तु कर्तृमात्रे दृष्टस्तस्य कस्मान्न ग्रहणम् । उच्यते । अत्राद्यस्यैव ग्रहः । अन्यथा कर्तुरित्येवावक्ष्यत् । अथ का क्रिया किं च तद्युक्तम् । उच्यते । व्यापारो भावना सैवोत्पादना सैव च क्रियेति । उक्तं च "गुणभूतैरवयवैः समूहः क्रमजन्मनाम् ॥ बुद्ध्या प्रकल्पितो भेदः क्रियेति व्यपदिश्यते॥१॥ इति । स्वभावतो गुणीभूतैरवयवैरवांतरलक्षणैर्युक्तः क्रमजन्मनां क्षणानां समूहः आचार्यैः क्रिया व्यपदिश्यते । कीदृशः संकलनात्मिकया बुद्ध्याऽभेदएकत्वं प्रकल्पितः तद्युक्तमेतया क्रियया युक्तं क्रियाचोत्पत्त्युत्पादनारूपा । उत्पत्तिः फलम् । उत्पादना व्यापारः । व्यापारेण युक्तः कर्ता । फलेन युक्तं कर्म । तस्मिन् क्रियायुक्ते कर्तरि कर्म्मणि च तेन रक्तं रागात् । रज्यते अनेनेति बाहुलकात् करणे घञ् । रागो रंजकद्रव्यम् । तृतीयांताद्रागवाचकात्प्रत्यया रक्तमित्यर्थे । कुंकुमेन रक्तं वस्त्रं कौंकुमम् । रंजनक्रियायाः करणकारकात् कुंकुमादण् तद्युक्तमत्र वस्त्रं कर्मेत्यादि ज्ञेयम् । लाक्षया रक्तं लाक्षिकम् । रोचनया रक्तं रौचनिकम् । इकः । नील्या रक्तम् नीलम् अण् । णितोवेति न वृद्धिः । पीतेन रक्तं पीतकम् । कः । तेन परिवृतो रथः । समन्ताद्वेष्टितः परिवृत उच्यते । तेनेति तृतीयांतादणादयः परिवृतो रथ इत्यर्थे । वास्त्रो रथः अण् । कंबलेन परिवृतो रथः कांबलः अण् । द्वीपिनो विकारो द्वैपं द्वैपेन परिवृतो रथः द्वैपः । व्याघ्रस्य विकारो वैयाघ्रम् । इदृवृद्धी । वैयाघ्रेण परिवृतो वैयाघ्रो रथः ॥

तत्त्वदीपिका—कारकात्क्रियायुक्ते । कारकशब्दो यद्यपि द्व्यर्थः कर्तरि सर्वकारकपरश्च । तथाप्यत्र सर्वकारकार्थ एव गृह्यते । अन्यथा कर्तुरित्येवावक्ष्यत् । क्रिया च धात्वर्थः स च फलव्यापारात्मकः फलव्यापारयोर्द्धातुरित्युक्तत्वात् । ततश्च फलयुक्तं कर्म व्यापारयुक्तः कर्तेत्याशयेनाह क्रियायुक्ते कर्तरीत्यादि । कुंकुमेनरक्तमिति । रंजनक्रियायाः कारणकारकात् कुंकुमादण् तद्युक्तमत्रवस्त्रं कर्मेति । माथुर इत्यत्रागमनक्रियायाः अपादानकारकान्मथुराशब्दादण् तद्युक्तोत्र कर्तेत्यादिकमूह्यम् । कारकादिति किम् । फलानां सुहितः । क्रियायुक्ते किं । काष्ठैः पाकः नात्र पाकादिःक्रियायुक्तः किं तु क्रियैव । क्रियेति किं । गेहे घटः अत्र घटत्वयुक्तो घटः न क्रियायुक्तः । क्रियायामित्युक्ते शब्दं करोति शाब्दिक इत्यादौ प्राधान्येन क्रियाया एव मानं स्यान्नतु कर्त्तुः । यदि कर्तृकार्यग्रहणं मंडूकप्लुत्यानुवर्तते तदा कारकादित्येवास्तु ।

**मू०—पाण्डुकम्बलादिनिः ॥** पाण्डुकम्बलेन संवीतः पाण्डुकम्बली रथः । वसिष्ठेन दृष्टं वासिष्ठं साम । कालेयम् । वररुचिना कृतो वाररुचो ग्रन्थः । मनुना प्रोक्तो मानवो धर्म्मः । मथुराया आगतो माथुरः । ग्रामादागतो ग्राम्यः । धुरं वहतीति धुर्य्यः, धौरेयः । सर्वधुरीणः । एकधुरीणः ।

सुबोधिनी—पांडुकंबलादिनिः । पांडुकंबलशब्दो राजास्तरणपांडुवर्णकंबलस्य वाचकः ।

अस्त्यर्थेनैव सिद्धे वचनमणो निवृत्त्यर्थम् । इकार उच्चारणार्थः । तेन दृष्टं साम । तेनेति तृतीयांतादणादयः दृष्टं सामेत्यर्थे । वासिष्ठं साम अण् । कलिना दृष्टं साम कालेयम् । एयण् । वामदेवेन दृष्टं साम वामदेव्यं ण्यः । उशनसा दृष्टं साम निपातनाद्विलोपो वा । औशनसम् । औशनम् । अण् । तेन कृतो ग्रन्थः । तेनेति तृतीयान्तादणादयः कृतो ग्रंथ इत्यर्थे । वररुचिना कृतो वाररुचो ग्रन्थः । तेन प्रोक्तं । तेनेति तृतीयान्तादणादयः प्रोक्तमित्यर्थे । मनुना प्रोक्तो मानवो धर्मः । अण् । तत आगतः । तत इति पञ्चम्यंतादणादयः आगत इत्यर्थे । माथुरः । अण् । ग्रामण्यः । तद्वहति । तदिति द्वितीयांतादणादयो वहतीत्यर्थे । धुरं वहति धुर्य्यः । ण्यः । णितो वेति न वृद्धिः । र्वोर्विहसे इति दीर्घो न । संज्ञापूर्वकत्वेन तस्यानित्यत्वात् । धौरेयः । एयण् सर्वा चासौ धूश्चेति ऋक्पूरित्यप्रत्ययः । कर्मधारये इति पुंवत् । सर्वधुरा तां वहति यस्येत्यलोपः सर्वधुरीणः ईनः । एका धूश्चेति एकधुरा तां वहति एकधुरीणः ईनः । ऐकधुरः अण् शकटं वहति शाकटो गौः । अण् । हलं वहति हालिकः । इकः । सीरं वहति सैरिकः । इकः । रथं वहति रथ्यः । ण्यः । युगं वहति युग्यः । ण्यः ।

तत्त्वदीपिका–धुर्य इति । संज्ञापूर्वकविधेरनित्यत्वात्क्वाचिन्नदीर्घः । एकधुरीण इति णित्वविकल्पान्न वृद्धिः ।

**मू०–मुखपार्श्वतसोर्लोपईये ॥ मुखतो भवं मुखतीयम् । पार्श्वतीयम् ।**

सुबोधिनी–मुखपार्श्वतसोर्लोपईये । मुखं च पार्श्वं च मुखपार्श्वे मुखपार्श्वयोस्तसौ मुखपार्श्वतसौ तयोः । षष्ठीनिर्दिष्टत्वात्सलोपः । यस्येत्यलोपः । मुखतीयम् । पार्श्वतो भवं पार्श्वतीयम् । णीयः ॥

तत्त्वदीपिका–मुखपार्श्वेति । द्वंद्वांते श्रूयमाणत्वात्तसः प्रत्येकं योगः । मुखतीयमिति षष्ठीनिर्दिष्टस्येति सकारलोपे यस्य लोपे च रूपसिद्धिः ।

**मू०–देवस्वराजजनपराणांकुक्ईये ॥ देवकीयम् । स्वकीयम् । राजकीयम् । जनकीयम् । परकीयम् ।**

सुबोधिनी–देवस्वराजजनपराणांकुक्ईये । एषां कुक् स्यात् णीये । देवस्येदं देवकीयम् । स्वस्येदं स्वकीयम् । राज्ञ इदं राजकीयम् । नाम्नो नो लोपशिति नलोपे कृते पश्चात् कुक् बोध्यः । जनस्येदं जनकीयम् । परस्येदं परकीयम् ॥

तत्त्वदीपिका–देवस्येति । देवकीयमिति देवस्येदमिति वाक्यम् । राजकीयमिति । अत्र नलोपे यत्नः नाम्नो नोलोपशित्यस्य नान्तस्य नाम्न इति व्याख्यानात् । प्रकृते कुकोराजान्त्यावयवत्वान्नांतताभावात् । अतो नोवेत्यत्र वेत्यस्य व्यवस्थिततत्वाश्रयणादत्र नलोपः ।

**मू०–मध्यान्मः ॥ मध्यमः ।**

सुबोधिनी–मध्यान्मः । अस्मान्मः प्रत्ययः स्यात् भवाद्यर्थे । मध्ये भवो मध्यमः ॥

**मू०–हेमन्तस्यवातलोपोऽणि ॥ हैमनम् । हैमन्तम् ।**

सुबोधिनी–हेमंतस्यवातलोपोऽणि । हेमंतादण् स्यात् तस्य लोपश्च वा । हेमंते भवं हैमनं हैमतं च ।

तत्त्वदीपिका–हैमनमिति । हेमंते भवमिति विग्रहः ॥ टिलोपस्तूक्तयुक्तेरेवन ।

**मू०– चिरपरुत्परारिभ्यस्त्नः ॥ चिरत्नम् । परुत्नम् । परारित्नम् ।**

सुबोधिनी–चिरपरुत्परारिभ्यस्त्नः । एभ्यस्त्नप्रत्ययः स्यात् । चिरशब्दोऽदन्तः । परुदित्यव्ययम् । पूर्वस्मिन् वत्सरे परारि पूर्वतरे वत्सरेऽव्ययम् ॥

**मू०–अग्रादिपश्चादन्ताड्डिमः ॥ अग्रिमम् । आदिमम् । पश्चिमम् । अन्तिमम् ।**

सुबोधिनी–अग्रादिपश्चादंताड्डिमः । एभ्यो डिमः प्रत्ययः स्यात् । डित्त्वाट्टिलोपः । अग्रे भवमग्रिमम् । आदौ भवमादिमम् । पश्चाद्भवं पश्चिमम् । अंतेभवमांतिमम् ॥

तत्त्वदीपिका– पश्चिममिति । पश्चाद्भवं डित्त्वादादित्यस्य लोपः ।

**मू०–हेतुमनुष्येभ्योवारूप्यमयटौ ॥ समादागतं समरूप्यम् । सममयम् । समीयम् । देवदत्तमयं देवदत्तरूप्यम् । देवदत्तीयम् ।**

सुबोधिनी–हेतुमनुष्येभ्योवारूप्यमयटौ । हेतुवाचकेभ्यो मनुष्यवाचकेभ्यश्च रूप्यमयटौ वा स्तः । टईवर्थः । आगतमित्यर्थे समात् मार्गादागतं समरूप्यं सममयम् । पक्षे णीयः समीयं । देवदत्तादागतं देवदत्तरूप्यं देवदत्तमयं देवदत्तीयम् । णीयः दैवदत्तः । अण् ॥

तत्त्वदीपिका– हेतुमनुष्येभ्यइति । हेतुमनुष्यवाचिभ्य इत्यर्थः ।

**मू०–छगलिनोणेयिनः ॥ छगलिना प्रोक्तमधीते यः छागलेयिनः ।**

सुबोधिनी–छगलिनोणेयिनः । छगलिन्शब्दात् णेयिनः प्रत्ययः स्यात् प्रोक्तमधीते इत्यर्थे । छगलिना प्रोक्तं शास्त्रमधीयते पठंति ये ते छागलेयिनः । नोवेति टिलोपः ॥

तत्त्वदीपिका–छागलेयिन इति । णित्त्वाद्वृद्धिः ।

**मू०–पाराशर्य्यशिलालिभ्याम्भिक्षुनटसूत्रयोर्णिनिः॥ पाराशर्य्येण प्रोक्तं भिक्षुसूत्रमधीयते पाराशरिणो भिक्षवः । शैलालिनो नटाः ।**

सुबोधिनी–पाराशर्य्यशिलालिभ्यांभिक्षुनटसूत्रयोर्णिनिः । आभ्यां णिनिः स्यात् । इकार उच्चारणार्थः । पाराशर्य्यो व्यासः । अनंतरापत्येपि उपचाराद्गर्गादिभ्यो ण्यः । यस्येत्यलोपे क्वचिद्यलोप इति वक्ष्यमाणेन यलोपः । पाराशरिणः॥शिलालिना प्रोक्तं नटसूत्रमधीतं यैः ते शैलालिनः ॥

तत्त्वदीपिका–पाराशर्य्येति । भिक्षुसूत्रे वाच्ये पाराशर्यशब्दात् नटसूत्रे शिलालिशब्दादणिनिरित्यर्थः पाराशरिण इति । कन्यादित्वाद्यलोपः ।

**मू०– कर्म्मन्दकृशाश्वादिनिः ॥ उक्तविषये । कर्म्मन्दिनः । कृशाश्विनः ।**

सुबोधिनी–कर्मंदकृशाश्वादिनिः । उक्तविषये आभ्यामिनिः स्यात् । कर्मंदेन प्रोक्तं भिक्षुसूत्रमधीयते ये ते कर्म्मंदिनो भिक्षवः । कृशाश्वेन प्रोक्तं नटसूत्रमधीयते ये ते कृशा-

श्विनो नटाः । भिक्षुनटसूत्रयोः किम् । पाराशर्यस्येदं पाराशरं शिलालिन इदं शैलालम् कार्मन्दं । कार्शाश्वम् । अण् ॥

तत्त्वदीपिका—उक्तविषयेइति । भिक्षुनटसूत्रयोरित्यर्थः ।

**मू०—त्रपुजतुनोःषण्विकारे ॥ त्रापुषम् । जातुषम् ।**

सुबोधिनी—त्रपुजतुनोःषण्विकारे । आभ्यां षण् स्याद्विकारे । त्रपुणो विकारः त्रापुषं । जतुनो विकारः । जातुषम् ॥

**मू०—शम्याःष्लञ् ॥ शामीली स्रुक् ।**

सुबोधिनी—शम्याःष्लञ् । शमीशब्दात् ष्लञ् स्यात् । षित्त्वादीप् । शम्या विकारः शामीलं भस्म । ष्त्रिवतइतीप् शामीली ॥

तत्त्वदीपिका—शामीलीति । शम्या विकार इतिविग्रहः । षित्त्वादीप् ।

**मू०—शक्तियष्टचोरीकण्प्रहरणे ॥ शाक्तीकः याष्टीकः ।**

सुबोधिनी—शक्तियष्टचोरीकण्प्रहरणे । आभ्यामीकण् स्यात् । शक्तिः प्रहरणमस्य शाक्तीकः । यष्टिः प्रहरणमस्य याष्टीकः ॥

तत्त्वदीपिका— शाक्तीकइति । शक्तिःप्रहरणमस्येति विग्रहः ।

**मू०—विंशतित्रिंशद्भ्यांडककौवा ॥ विंशकः ।**

सुबोधिनी—विंशतित्रिंशद्भ्यांडककौवा । तेन क्रीतमित्यर्थे आभ्यां डककौ प्रत्ययौ स्तः। असंज्ञायामर्थे डकः ॥

**मू०—विंशतेस्तिलापोडिति ॥ त्रिंशकः । विंशतिकः । त्रिंशत्कः ।**

सुबोधिनी—विंशतेस्तिलोपोडिति । तिशब्दलोपः विंशकः त्रिंशकः । संज्ञायां तु कः । विंशतिकः । त्रिंशत्कः ॥

**मू०—कर्म्मणउकञ् ॥ कर्म्मणे प्रभवति कार्म्मुकम् ।**

सुबोधिनी—कर्मणउकञ् । कर्मशब्दादुकञ् स्यात् तस्मै प्रभवतीत्यर्थे । समर्थः शक्तः प्रभवतीत्युच्यते ॥

**मू०—मनोर्जातावपत्येष्यषणौ ॥ मनोरपत्यम्मनुष्यः । मानुषः जातौ किम् । मानवः ॥**

सुबोधिनी—मनोर्जातावपत्येष्यषणौ । मनुशब्दादेतौ स्तः अपत्यत्वे जातौ वाच्ये । समुदायार्थो जातिः । मनुष्यः । मानुषः । जातिशब्दावेतौ ॥

**मू०— केनेयेकाः ॥ कारकात्क ईन ईय इक इत्येते प्रत्यया भवन्ति कर्त्तरिकर्म्मणि चोक्तवक्ष्यमाणेष्वर्थेषु च । णितोवा । क्रममधीते क्रमकः । पदकः । ग्रामादागतस्तत्र जातो वा ग्रामीणः । सध्रीचीनः । समीचीनः । तिरश्चीनः । कुलस्यापत्यं कुलीनः । महाकुलीनः । आढ्यकुलीनः ।**

सुबोधिनी—केनेयेकाः। कश्च ईन ईयश्च इकश्च ते केनेयेकाः। क्रममधीते क्रमकः। क्रमपदशिक्षामीमांसाः क्रमादयः। एभ्यः कः पूर्वस्य ह्रस्वो निपातनात्। शिक्षकः। मीमांसामधीते मीमांसकः। ग्रामे भवो ग्रामीणः। ईनः। ग्राम्योऽपि ण्यः। सध्र्यङ्ङेव सध्रीचीनः। सम्यङ्ङेव समीचीनः। तिर्यङ्ङेव तिरश्चीनः। सहांचतीति सध्र्यङ्। अंचत्यंतान्नाम्नः स्वार्थे ईनो वा। दिशि न। प्राक् प्राचीनम्। प्रत्यक् प्रतीचीनम्। अवाक् अवाचीनम्। अर्वाक् अर्वाचीनम्। अर्वंतमंचतीति अर्वाक्। निकृष्टप्रतिकृष्टार्वरेफयाप्याऽवमाऽधमाः इत्यमरः। दिशि तु प्राची दिक्। अचेरदीर्घश्चेति अलोपपूर्वदीर्घः। उदीची दिक्। तिरश्चादय इति उदीचा-देशः। कुलस्यापत्यमिति कुलीनः। तदंतादपि। महच्च तत्कुलं चेति सहादेः सादिरिति महाकुलस्यापत्यं महाकुलीनः। आढ्यं च तत् कुलं च आढ्यकुलम्। आढ्यकुलस्यापत्यमाढ्यकुलीनः।

तत्त्वदीपिका—केनेयेकाइति। कश्च ईनश्च इयश्च ईकश्च ते। देवतेदमर्थे इत्यत्र देवतेदमोरितिव-क्तव्येऽर्थग्रहणं स्पष्टार्थमिहानुवर्तते ततश्चोक्तानुक्तलाभइत्याशयेनाह। उक्तेत्यादि। सध्रीचीनइति। सध्र्यङ्ङेवेति विग्रहे स्वार्थेईनः णित्त्वाभावान्न वृद्धिः। एवं सम्यङ्ङेवसमीचीनः। अचेर्लोपोदीर्घश्चेत्यकारलोपे पूर्वस्येकारस्यदीर्घः तस्यापि तद्धिते विधानात्।

**मू०— क्वचिद्यलोपः॥ कन्याया अपत्यं कानीनः। कात्यस्येमे कातीयाः छात्राः। गार्गीयाः। रेवत्या अपत्यं रैवतिकः। पुष्येण युक्ता पौर्णमासी पौषी। तैषी। क्षत्रस्यापत्यं क्षत्रियः। शुक्रो देवतास्य शुक्रियम्। इन्द्रस्य लिङ्गमिंद्रियम्। अक्षैर्दीव्यतीत्याक्षिकः। कुद्दालैः खनति कौद्दालिकः। हलं वहति हालिकः। शब्दं करोति शाब्दिकः। दार्दुरिकः। धर्मश्चरति धार्म्मिकः। आधर्मिकः। पक्षिणो हन्ति पाक्षिकः। शाकुनिकः। तैत्तिरिकः। मात्सिकः। मैनिकः। मार्गिकः। सारङ्गिकः। पुराणमधीते पौराणिकः। ऐतिहासिकः। वैदिकः।**

सुबोधिनी—क्वचिद्यलोपः। क्वचिद्धसात्परस्य यकारस्य लोपः स्यात् तद्धिते स्वरे नत्वाकारे। कन्याया अपत्यमिति एयणोपवाद ईनः यस्येत्यालोपः। ततो यलोपः। णितोवेति णित्त्वाद्वृद्धिः। कानीनो व्यासः कर्णश्च। अविवाहिताया अपत्यमित्यर्थः। कात्यस्येमे गर्गादिण्यांतात् णीये यलोपः कातीयाः। गार्ग्यस्येमे गार्गीयाः यलोपः। नत्वाकारे इति किम्। गार्ग्यायणः। इह न यलोपः। रैवतिकः। णितोवेति णित्त्वाद्वृद्धिः। रेवती अश्वपाली मणिपाली द्वारपालीइत्यादि रेवत्यादयः। नक्षत्रेण युक्तः कालः। तृतीयांतनक्षत्रशब्दात्प्रत्ययात् युक्तः काल इत्यर्थे। पुष्येण युक्तं पौषमहः अण्। स्त्रियां तु त्रणईप्। तिष्यपुष्ययोर्नक्षत्राणीति यलोपः। पौषी। तिष्येण युक्ता तैषी। क्षत्रशब्दाज्जाताविय:। क्षत्रियः। क्षात्रिरन्यः। शुक्रियं हविः। इय इन्द्रस्यात्मनो लिंगं चिह्नमिति इंद्रियम्। तेन दीव्यति खनति जयति जितम्। तेनेति तृतीयांतादिको दीव्यत्यादिष्वर्थेषु। णितोवेति णित्त्वाद्वृद्धिः। अक्षैः पाशकैर्दीव्यत्याक्षिकः। कुद्दालैः खनति कौद्दालिकः। गोदारणं तु कुद्दाल इति हैमः। अक्षैर्जयत्याक्षिकः अक्षैर्जितमाक्षिकम्। हलं सीरं वहति हालिकः। इकः। तेनेति तृतीयांता-

दिकः संस्कृतेऽर्थे । दध्ना संस्कृतं दाधिकम् । मरिचैः संस्कृतं मारिचिकं । शब्दं करोति शाब्दिकः । प्रकृतिप्रत्ययविभागेन शब्दं व्युत्पादयतीत्यर्थः । दर्दुरं करोति दार्दुरिकः । इह दर्दुरशब्दः वाद्यभांडवाची । कुलाल इत्यर्थः । धर्मं चरति धार्मिकः । सद्वृत्त इत्यर्थः । अधर्मं चरत्याधर्मिकः । असद्वृत्त इत्यर्थः । पक्षिणो हंति नोवेति टिलोपः इकः पाक्षिकः । शकुनं हंति शाकुनिकः । तित्तिरिं हंति तैत्तिरिकः । मत्स्यं हंति मात्सिकः । मीनं हंति मैनिकः । मृगं हंति मार्गिकः । सारंगं हंति सारंगिकः । मयूरं हंति मायूरिकः । पुराणमधीते पौराणिकः । इतिहासमधीते वेत्ति वा ऐतिहासिकः । वेदमधीते वेत्ति वा वैदिकः । णितोवेति णित्वाद्वृद्धिः ।

तत्त्वदीपिका—कानीन इति । णित्वाद्वृद्धिः । व्यासः कर्णश्च । शाकुनिक इत्यादीनां शकुनीन् हंतीत्यादिवाक्यम् । ऐतिहासिकइति । इतिहासमधीते ।

**मू०—पील्वादिकर्णादिभ्यः कुणजाहौपाकमूलयोः ॥ पीलूनां पाकः पीलुकुणः । कर्णस्य मूलं कर्णजाहम् ।**

सुबोधिनी—पील्वादिकर्णादिभ्यःकुणजाहौपाकमूलयोः । पील्वादिभ्यः कर्णादिभ्यश्च कुणजाहौ प्रत्ययौ स्तः पाकमूलयोरर्थयोः । पाकः परिणामः मूलमुपक्रमः । पीलु कर्कंधु शमी करीर कुवल बदर खदिर पील्वादयः । कर्ण अक्षि नख मुख केश पाद गुल्फ भ्रू शृंग दंत ओष्ठ पृष्ठ कर्णादयः ॥

तत्त्वदीपिका—पाकमूलयोरिति । यथाक्रममनयोरन्वयइत्याशयेनाह पीलूनां पाक इत्यादि ।

**मू०—पक्षात्तिर्मूले ॥ पक्षस्य मूलं पक्षतिः ।**

सुबोधिनी—पक्षात्तिर्मूले । पक्षशब्दात्तिप्रत्ययः स्यात् मूलेऽर्थे । पक्षतिः प्रतिपत् ॥

**मू०—चञ्चुचणौवित्ते ॥ विद्यया वित्तो विद्याचञ्चुः । विद्याचणः ।**

सुबोधिनी—चञ्चुचणौवित्ते । चंचुचणौ प्रत्ययौ स्तो वित्तेऽर्थे । वित्तोभोग्यप्रतीतयोरिति निपातनात् दस्तस्येति नत्वं न ॥

**मू०—वेःशालशंकटौ ॥ विस्तृतम् । विशालम् ।**

सुबोधिनी—वेःशालशंकटौ । वेः स्वार्थे एतौ स्तः । विस्तृतं विशालं विशंकटं विनञ्भ्यां नानाञौनसह । असहार्थे पृथग्भावे वर्तमानाभ्यां नानाञौ स्तः । विना नाना ।

**मू०—विसम्प्रोदःकटः ॥ विकटम् । संकटम् । प्रकटम् । उत्कटम् ।**

सुबोधिनी—विसंप्रोदःकटः । एभ्यः कटप्रत्ययः स्यात् स्वार्थे । विकटं । विकृतं । संकटं । संहतं । संबाध इत्यर्थः । प्रकटं । प्रज्ञातं । प्रकाशते इत्यर्थः । उत्कटमुद्भूतं । रूढशब्दाश्चैते कथंचिद्व्युत्पाद्यन्ते ॥

**मू०—अलाबूतिलोमाभङ्गाभ्योरजसि ॥ अलाबूनांरजोऽलाबूकटम् । तिलकटम् । उमाकटम् । भंगाकटम् ।**

सुबोधिनी–अलाबूतिलोमाभंगाभ्योरजसि । एभ्योरजस्यभिधेये कटप्रत्ययः स्यात् । रजसो विकारत्वात् विकारार्थे प्रत्ययानामपवादोयम् । अलाबूनां रजः अलाबूकटम् । तिलानां रजः तिलकटम् । उमायाः रजः उमाकटम् । भंगायाः रजः भंगाकटम् ॥

**मू०–गोष्ठादयःस्थानादिषुपशुनामभ्यः ॥ गवां स्थानं गोष्ठम् । अश्वगोष्ठम् ।**

सुबोधिनी–गोष्ठादयःस्थानादिषुपशुनामभ्यः । पशुनामभ्यो गोष्ठादयः प्रत्ययाः स्युः स्थानादिष्वर्थेषु ॥

**मू०–संघातेकटः ॥ अवीनां संघातोऽविकटः ॥**

सुबोधिनी–संघातेकटः । अप्रसृतावयवसमूहः संघातस्तत्र कटप्रत्ययः सामूहिकानामपवादोयम् ॥

**मू०–विस्तारेपटः ॥ अविपटः ।**

सुबोधिनी–विस्तारेपटः । प्रसृतावयवः समूहो विस्तारस्तत्र पटः प्रत्ययः । सामूहिकानामपवादोयम् ॥

**मू०– द्वित्वेगोयुगः ॥ द्वावुष्ट्रौ उष्ट्रगोयुगम् ।**

सुबोधिनी–द्वित्वेगोयुगः । प्रकृत्यर्थस्य द्वित्वे द्योत्ये गोयुगप्रत्ययः स्यात् । उष्ट्रगोयुगम् । द्वयंयुगमित्यादिवत् द्व्यवयवसंघातप्राधान्यादेकवचनमित्यर्थः ॥

**मू०–षट्त्वेषड्गवः ॥ अश्वषड्गवम् ॥**

सुबोधिनी–षट्त्वेषड्गवः । षट्त्वे वाच्ये षड्गवप्रत्ययः स्यात् । अश्वानां षट्त्वं अश्वषड्गवम् । अवयवसंघातस्य प्राधान्यादेकवचनम् ॥

तत्त्वदीपिका–अश्वषड्गवमिति । षट् अश्वा इत्यर्थः ।

**मू०–स्नेहेतैलः ॥ तिलतैलम् । सर्षपतैलम् ।**

सुबोधिनी–स्नेहेतैलः । स्नेहे वाच्ये तैलप्रत्ययः । तिलानां स्नेहः तिलतैलम् । सर्षपाणां स्नेहः सर्षपतैलम् ॥

**मू०–भवनेक्षेत्रेशाकटशाकिनौ ॥ इक्षूणांभवनं क्षेत्रमिक्षुशाकटम् । इक्षुशाकिनम् ।**

सुबोधिनी–भवनेक्षेत्रेशाकटशाकिनौ । भवने क्षेत्रे इत्यर्थे शाकटशाकिनौ प्रत्ययौ भवतः ॥

**मू०– अवात्कुटारकटौ ॥ अवाचीनोऽवकुटारः । अवकटः ।**

सुबोधिनी–अवात्कुटारकटौ । अवशब्दात् कुटारकटौ प्रत्ययौ भवतः । अवाचीने हीनेर्थे अवकुटारावकटशब्दौ वेदे प्रसिद्धौ ॥

**मू०–नासिकायानतेसंज्ञायांटीटनाटभ्रटाअवात् ॥ नासिकाया नमवटीटम् । अवनाटम् । अवभ्रटम् । तद्योगान्नासिकाऽवटीटा पुरुषोऽवटीटः ।**

सुबोधिनी–नासिकायानतेसंज्ञायांटीटनाटभ्रटाअवात् । नासिकासाधनके नमने वर्तमानादवशब्दादेते प्रत्ययाः स्वार्थे संज्ञायां वाच्यायाम् । नतमिति नपुंसके भावे क्तः । नमनं नीचैस्त्वम् । कथं तर्हि नासिकायां पुरुषे चावटीटशब्दप्रयोग इत्यत आह तद्योगादिति ।

**मू०–नेर्बिडबिरीसौ** ॥ निबिडम् । निबिरीसम् ।

सुबोधिनी–नेर्बिडबिरीसौ । उक्तेर्थे निशब्दान्नासिकाया नतेऽभिधेये बिडबिरीसौ प्रत्ययौ स्तः ॥

**मू०–इनपिटकाःप्रत्ययानेश्चिकचिचिकादेशाः** ॥ चिकिनम् । चिपिटम् । चिक्कम् ।

सुबोधिनी–इनपिटकाःप्रत्ययानेश्चिकचिचिकादेशाः । उक्तेर्थे नासिकाया नतेऽभिधेये इनपिटकाः प्रत्ययाः स्युः । निःशब्दस्य चिकचिचिकौ यथाक्रममादेशाश्च ॥

तत्त्वदीपिका–इनपिटकाइति । यथाक्रमं प्रत्ययत्रयमादेशत्रयं बोध्यम् ।

**मू०– क्लिन्नस्यचिल्पिल्चुलोलःप्रत्ययोऽस्यचक्षुषीइत्यर्थे** ॥ क्लिन्ने चक्षुषी अस्य चिल्लः । पिल्लः । चुल्लः ॥

सुबोधिनी–क्लिन्नस्यचिल्पिल्चुलोलःप्रत्ययोऽस्यचक्षुषीइत्यर्थे । अस्य चक्षुषी एतस्मिन्नर्थे क्लिन्नशब्दाल्लप्रत्ययः स्यात् क्लिन्नस्य चिल्पिल्चुलः आदेशाश्च । कथं तर्हि "स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्षिण चाप्यमी" इत्यमरः इति चेत् अत्राहुः । पुरुषे व्युत्पादितानां तदवयवे लक्षणा बोध्यात्र ॥

**मू०–उपाधिभ्यामासन्नारूढयोस्त्यकः** ॥ पर्वतस्यासन्नाभूमिरुपत्यका। आरूढा अधित्यका ।

सुबोधिनी–उपाधिभ्यामासन्नारूढयोस्त्यकः । उपाधिभ्यांत्यकःप्रत्ययः स्यात् । आसन्नं समीपम् । आरूढमुच्चस्थानम् । तत्र संज्ञायाम् । पर्वतस्यासन्नं स्थलमुपत्यका । आरूढस्थलमधित्यका । क्षिपकादित्वात् काप्यत इतीत्वं न ॥

**मू०–कर्म्मणष्ठोघटतेइत्यर्थे** ॥ कर्म्मणि घटते कर्म्मठः ।

सुबोधिनी–कर्मणष्ठोघटतेइत्यर्थे । सप्तम्यंतात् कर्मशब्दाद् ठप्रत्ययः स्यात् घटते चेष्टते इत्यर्थे । नोवोति टिलोपः । कर्मशूरस्तु कर्मठ इत्यमरः ॥

**मू०–साक्षाद्द्रष्टरिसंज्ञायांडिनिः** ॥ साक्षाद्द्रष्टा साक्षी ।

सुबोधिनी–साक्षाद्द्रष्टरिसंज्ञायांडिनिः । द्रष्टर्यर्थे साक्षादित्यव्ययात् डिनिः स्यात् । डित्वाट्टिलोपः संज्ञायामर्थे । इनामितिदीर्घः । साक्षी ॥

**मू०–इष्टादिभ्यइनिरनेनेत्यर्थे** ॥ इष्टमनेन इष्टी । अधीती । हैयङ्गवीनं श्रोत्रियः क्षेत्रियोऽनुपदी इत्यादयो निपात्याः । ह्योगोदोहोद्भवंहैयङ्गवीनम् । छन्दोऽधीते श्रोत्रियः । परक्षेत्रे चिकित्स्यः क्षेत्रियः । अनुपदमन्वेष्टानुपदी ।

सुबोधिनी— इष्टादिभ्यइनिरनेनेत्यर्थे । एभ्य इनिप्रत्ययः स्यात् अनेनेत्यर्थे । अधीतमनेनेति अधीती । हैयंगवीनं श्रोत्रियः क्षेत्रियोऽनुपदी इत्यादयो निपात्याः । दुह्यते इति दोहः क्षीरं ह्योगोदोहस्य विकार इति ह्योगोदोहस्य हियंगुरादेशो विकारार्थे ईनप्रत्ययश्च निपात्यते । णितोवेति णित्वाद्वृद्धिः । वोऽत्र्यस्वरे इत्यत्र हैयंगवीनं नवनीतम् । छांदसः श्रोत्रभावो निपात्यते तदधीते इत्येतस्मिन्नर्थे इयप्रत्ययश्च णितोवेति वृद्धयभावः । श्रोत्रियः । परक्षेत्रशब्दात् सप्तम्यंतात् इय प्रत्ययः परशब्दलोपश्च निपात्यते । क्षेत्रियो व्याधिः शरीरांतरे चिकित्स्यः । अप्रतिकार्य इत्यर्थः । अनुपदशब्दादन्वेष्टरिइन् प्रत्ययो निपात्यते । पदस्य पश्चादनुपदम् ।

**मू०–आख्याताऽव्ययसर्वादिष्टेःप्रागकः ॥** पचतकि । उच्चकैः । नीचकैः सर्वकः । अयकम् । असकौ । त्वकम् । अहकम् ।

सुबोधिनी—आख्याताऽव्ययसर्वादिष्टेःप्रागकः । एषां टेः प्राक् अकप्रत्ययः स्यात् स्वार्थे । अंत्योऽकारउच्चारणार्थः ॥

**मू०–त्यतनौभवाद्यर्थे ॥** त्यतनौ प्रत्ययौ स्तः । अव्ययात् । कुत्रभवः कुत्रत्यः । कुतस्त्यः । अमात्यः । इहत्यः । अव्ययस्यतद्धितयस्वरयोष्टिलोपः । बहिर्भावो बाह्यः । स्वस्स्वर्गस्तत्र भवस्सौवर्गः । पौनःपुन्यम् । पौनःपुनिकः ।

सुबोधिनी—त्यतनौभवाद्यर्थे । एतौ स्तः अमेहक्वतसूत्रेभ्य एव त्यः । अमांतिकसहार्थयोः । अमाभवः अमात्यः ॥

**मू०–दक्षिणापश्चात्पुरसस्त्यण् ॥** दाक्षिणात्यः । पाश्चात्यः । पौरस्त्यः । ऐषमस्त्यम् । ऐषमस्तनम् ।

सुबोधिनी—दक्षिणापश्चात्पुरसस्त्यण् । एभ्यस्त्यण् स्यात् भवाद्यर्थे । दक्षिणेत्यादंतमव्ययम् । दक्षिणाभवः दाक्षिणात्यः । ऐषमोह्यस्श्वसभ्यो वा त्यः । पक्षेतनः । अत्रवर्षे ऐषमः । अतीतेऽह्नि ह्यः । आगामिदिने श्वः ॥

**मू०–श्वसस्तिकण्वा ॥** शौवस्तिकम् । अद्यतनः । ह्यस्तनः । श्वस्तनः । सनातनः । सदातनः । पुरातनः । दोषातनः । सायन्तनः । चिरन्तनः । प्राह्णेतनः ।

सुबोधिनी—श्वसस्तिकण्वा । श्वसऽव्ययात्तिकणपि स्यात् । श्वोभवमिति न संधिष्वोरित्युडागमवृद्धी । शौवस्तिकम् । कालवाचिभ्योऽव्ययेभ्यः सायं चिरं प्राह्णे प्रगे इति चतुर्भ्यश्च तनः स्यात् । दोषेति रात्रौ । दोषाभवः दोषातनः।प्राह्णेतनः । प्रगे प्रातर्भवः प्रगेतनः। सप्तम्या अलुक् उभयत्र । स्यतेर्घञि आतो युगिति युकि कृते सायशब्दोऽकारान्तो दिवसाऽवसाने रूढः । तस्य चिरशब्दोस्यादन्तस्यापि प्रत्ययसंनियोगेन मांतत्वम् । प्राह्णप्रगयोरेदंतत्वं च निपात्यते इति वार्तिककृन्मतम् । भाष्ये तु सायं चिरं च मांतमव्ययं स्वीकृतम् ॥

तत्त्वदीपिका-शौवस्तिकमिति । श्वोभवमिति विग्रहः । द्वारादित्वाद्वकारात्पूर्वमुटिकृते पश्चाद्वृद्धिः । प्राह्णेतनइति एदंतत्वं निपातनात् ।

**मू०-स्वार्थेऽपि ॥** उक्ता वक्ष्यमाणाश्च प्रत्ययास्स्वार्थे स्युः । देवदत्त एव दैवदत्तकः । चोर एव चौरः । वय एव वायसः । रक्ष एव राक्षसः । चत्वारो वर्णाश्चातुर्वर्ण्यम् । समीपमेव सामीप्यम् । चत्वारोवेदाश्चातुर्वैद्यम् । प्रज्ञ एव प्राज्ञः । चातुराश्रम्यम् । त्रैलोक्यम्।अनंत एवानन्त्यम्।अवसथ एवावसथ्यम् । इतिहएव ऐतिह्यम् । भेषजमेव भैषज्यम् ।

सुबोधिनी-स्वार्थेपि । प्रकृत्यर्थेप्यणादयः स्युः । देवदत्त एव दैवदत्तकः । णितोवेति णित्त्वाद्वृद्धिः । चोरएव चौरः । वय एव वायसः । रक्ष एव राक्षसः । अण् । चत्वारश्चते वर्णाश्चतुर्वर्णाः चतुर्वर्णा एव चातुर्वर्ण्यम् । ण्यः । चतुरो वेदानधीते इति तद्धितार्थे द्विगुः । तमधीते इत्यर्थेऽण् तस्यलुक् च चतुर्वेद एव उभयत्र वृद्धिः चातुर्वैद्यः । ण्यः । चत्वारश्च ते वेदाश्च चतुर्वेदाः चतुर्वेदा एव चातुर्वैद्यमिति वा । प्रज्ञ एव प्राज्ञः । अण् । चत्वार आश्रमा एव चातुराश्रम्यम्।ण्यः।त्रयश्च ते लोकाश्च त्रिलोका त्रिलोका एव त्रैलोक्यम् अनंत एव आनन्त्यः । ण्यः । आवसथ एवेति उपसर्गे वसेरथप्रत्ययः आवसथ्यं गृहम् । ण्यः । इतिहेतिनिपातसमुदायः ऐतिह्यम् । ण्यः। भिष्यज्यतेः कंड्वादियगंतात् क्विप्। भिषक् । भिषजामिदं भेषजम् अणि निपातनादेकारः भैषज्यम् ण्यः ॥

तत्त्वदीपिका- स्वार्थेपीति । वय एव वायसमिति । स्वार्थिकाः प्रकृतितो लिंगवचनानि न व्यभिचरंतीत्यस्यौत्सर्गिकत्वाल्लिंगाविपर्ययः ।

**मू०-भागरूपनामभ्योधेयः ।** भाग एव भागधेयम् । नामधेयम् । रूपधेयम्।

सुबोधिनी-भागरूपनामभ्योधेयः । एभ्यो धेयप्रत्ययः स्यात्स्वार्थे । दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिरित्यमरः । आख्याह्वे अभिधानं च नामधेयं च नाम चेत्यमरः ॥

**मू०-देवात्तः ॥** देव एव देवता ।

सुबोधिनी-देवात्तः । देवशब्दात्तप्रत्ययः स्यात् स्वार्थे । तांतं स्त्रियाम् ॥

**मू०-मृदस्तिकः ॥** मृदेव मृत्तिका ।

सुबोधिनी-मृदस्तिकः । मृद्शब्दात्तिकप्रत्ययः स्यात् स्वार्थे ॥

**मू०-सस्नौप्रशंसायाम् ॥** प्रशस्ता मृत् मृत्सा । मृत्स्ना ।

सुबोधिनी-सस्नौप्रशंसायाम् । रूपप्रत्ययस्यापवादो मृदः सस्नौ प्रत्ययौ स्तः प्रशंसायामर्थे । मृन्मृत्तिका प्रशस्ता तु मृत्सा मृत्स्ना च मृत्तिकेत्यमरः ।

**मू०-अणीनयोर्युष्मदस्मदोर्युष्माकास्माकौ ॥**

सुबोधिनी-अणीनयोर्युष्मदस्मदोर्युष्माकास्माकौ । एतयोर्द्वित्वे बहुत्वे च वर्तमानयोर्युष्माकास्माकावादेशौ स्तः अणीनयोः परतः ॥

गीणः । अपूपाय हितोऽपूपीयः, अपूप्यः । आमिक्षीयम् । शंकव्यम् । गव्यम् । हविष्यम् । खल्यम् । यव्यम् ।

सुबोधिनी–हितेच । अणादयः प्रत्यया हितेर्थे च स्युः । सूर्याय हित इति सूर्यागस्त्ययोरीये ईपि चेति यलोपः । सूरीयः । णीयः । आत्मने हितः नोवेत्यस्य टिलोपो न । आत्मनीनः ईनः । विश्वजनाय हितः विश्वजनीनः । कर्मधारयादेवेष्यते । विश्वस्य जनः सर्वसाधारणो वेश्यादिरिति तत्पुरुषे विश्वो जनोऽस्येति बहुव्रीहौ च विश्वजनाय हितं विश्वजनीयं । णीय एव । मातुर्भोगः शरीरं मातृभोगः । मातृभोगाय हितः मातृभोगीणः । णत्वं । भोगः सुखे स्त्र्यादिभृतावहेश्वफणकाययोः इत्यमरेण यद्यप्यहेरित्युक्तं तथापि प्रयोगबाहुल्याभिप्रायं । तच्छक्तिस्तु शरीरमात्रेप्यस्ति इत्याकरः । अपूपेभ्यो हितः अपूप्यं चूर्णं । ण्यः । णितोवेति न वृद्धिः । अपूपीयः । णीयः। आमिक्षायै हितं एयण्णीयौ । आमिक्ष्यम् ।आमिक्षीयं। हविः सान्नाय्यमामिक्षशृतोष्णक्षीरजं दधीति हैमः । आमीयते क्षिप्यते दधि यत्र सा आमिक्षा । शंकवे हितं शंकव्यं । ण्यः । णितोवेति न वृद्धिः । वोऽवित्यव् । गवे हितं गव्यं । हविषे हितं हाविष्यं । खलाय हितं खल्यं । यवेभ्यो हितं यव्यम् ॥

तत्त्वदीपिका–सूरियइति । सूर्यागस्तयोरितीये यलोपः ।

**मू०–शुनोवसउवांचदीर्घः ॥** शुने हितं शून्यं । शुन्यम् ।

सुबोधिनी–शुनोवसउवांचदीर्घः । श्वन्शब्दस्य वकाराकारयोरुत्वं भवति उतश्च वा दीर्घः । नोवेति टिलोपो न भवति वा शब्दस्य व्यवस्थार्थत्वात् । शून्यं । शुन्यम् ।

**मू०–ऊधसोनङ् ॥** ऊधन्यः ।

सुबोधिनी–ऊधसोनङ् । ऊधस्शब्दस्य नङादेशो भवति । ङित्वादंतस्य स्थाने नङ् । अकारउच्चारणार्थः । ऊधसे हितः णितोवेति न वृद्धिः । ऊधन्यः ॥

तत्त्वदीपिका–ऊधसइति । ऊधसे हितः ।

**मू०–अजाविभ्यांथ्यः ॥** अजथ्या । अविथ्या ।

सुबोधिनी–अजाऽविभ्यांथ्यः । आभ्यां थ्यप्रत्ययः स्यात्तद्धितेर्थे । अजेभ्यो अजाभ्यो वा हिता अजथ्या । थ्यप्रत्ययस्य तरादौ पाठात् पुंवद्भावे रूपं तुल्यं । अविभ्यो हिता अविथ्या । सर्वस्मै हितं सार्वम् । अण् । सार्वीयं । णीयः । वृद्धिः ॥

तत्त्वदीपिका–अजथ्येति । अजायै हिता ।

**मू०–अस्त्यर्थेमतुः॥ नाम्नः॥** गावोऽस्यास्मिन्वा सन्ति गोमान् । श्रीर्विद्यतेऽस्य श्रीमान् । विदुष्मान् । गोमती ।

सुबोधिनी–अस्त्यर्थेमतुः । प्रथमांतान्नाम्नो मतुप्रत्ययो भवति अस्यास्तीत्यर्थे अस्मिन्नस्तीत्यर्थे च । उदित्वात्पुंसि ञितोनुमिति नुम् । स्त्रियां च ष्टितइतीप् । क्लीबे शौ नुम् । भूमनिंदाप्रशंसासु नित्ययोगेऽतिशायिनि । संबंधेऽस्तिविवक्षायां भवंति मत्विनादयः ॥ १ ॥ अस्तीत्यस्य विवक्षायां ये मत्वादयः प्रत्यया विधीयंते ते भूमादिषु विषयेषु भवंति । भूमा बहुत्वम् । यथा गावोऽस्यास्मिन्वा संति स गोमान् । निंदायां यथा । ककुदावर्तिनी कन्या ।

तत्त्वदीपिका-वहोरिति । वहोरितिपंचम्यंतम् । ततश्च पंचमीनिर्दिष्टत्वाल्लोप इवर्णस्यैवेत्याशयेने-वर्णस्येत्युक्तम् । पुनर्ग्रहणात् वहोर्भूस्थानित्वम् ।

**मू०-स्तेनाद्योनलोपश्च ॥ स्तेनस्य कर्म्म भावो वा स्तेयम् ।**

सुबोधिनी-स्तेनाद्योनलोपश्च । स्तेनशब्दाद्यप्रत्ययः स्याद्भावे कर्मणि चार्थे नलोपश्च । स्तेन चौर्ये । पचाद्यः । स्तेयं चौर्यम् ॥

**मू०-समूहेऽर्थेऽपि ॥ मयूराणां समूहो मायूरम् । कौशिकम् । क्षैत्रम् । कैदारिकम् । गाणिक्यम् । तद्धितयस्वरयोः पुंवत् । हास्तिकम् । गार्भिणम् । ग्रामता । जनता । बंधुता । पाश्या । वात्या । खल्या । गव्या । वार्द्धकम् । कैदार्य्यम् । कावचिकम् । ब्राह्मण्यम् । वाडव्यम् । माणव्यम् । गजता । सहायता ।**

सुबोधिनी-समूहेऽर्थेपि । समूहेऽर्थेपि अणादयः प्रत्ययाः स्युः । मयूराणां समूहः अण् मायूरं । काकानां समूहः काकं । क्षेत्राणां समूहः क्षैत्रं । केदाराणां समूहः इकः णितो वेति णित्त्वाद्वृद्धिः । कैदारिकं । गणिकानां समूहो यण् । गाणिक्यं । हस्तिनां हस्तिनीनां वा समूहः । इकः । यस्यलोप इति लोपे नोवेति टिलोपः । हास्तिकं । गर्भिणीनां समूहोऽण् यस्यलोप इति लोपः । गार्भिणं । नोवेतिटिलोपाऽभावोऽत्र । ग्रामाणां समूहः । तः । ग्रामता । जनानां समूहो जनता । बंधूनां समूहो बंधुता । पाशानां समूहो यण् । पाश्या । वातानां समूहो वात्या । खलानां समूहः खल्या । णितोवेति न वृद्धिः । गवां समूहो गव्या । वोऽव्ययस्वरे इत्यव् । वृद्धानां समूहः । कः । णितोवेति णित्त्वाद्वृद्धिः । वार्द्धकं । केदाराणां समूहो यण् । कैदार्यं । कवचिनां समूहः इकः । कावचिकं । ब्राह्मणानां समूहो यण् । ब्राह्मण्यं । वडवानां समूहो वाडव्यं । माणवानां समूहो माणव्यं । गजानां समूहः तः । गजता । सहायानां समूहः सहायता ॥

तत्त्वदीपिका-पाश्येति । पाशानां समूह इति विग्रहः । स्त्रीत्वं लोकात् ॥

**मू०-पर्श्वाड्वण् ॥ पर्शूनां समूहः पार्श्वम् । साक्तुकम् । धैनुकम् । रथ्या ।**

सुबोधिनी-पर्श्वाड्वण् । पर्शुशब्दात् ड्वण् प्रत्ययः स्यात् समूहे । डित्त्वाट्टिलोपः । पर्शूनां समूहः पार्श्वम् । सक्तूनां समूहः साक्तुकं । धेनूनां समूहः धैनुकं । रथानां समूहो यण् । णितो वेति न वृद्धिः । रथ्या ॥

तत्त्वदीपिका-पार्श्वमिति । डित्त्वाट्टिलोपः ।

**मू०-खलगोरथेभ्यइनित्रकट्याः॥ खलिनी । गोत्रा । रथकट्या ।**

सुबोधिनी-खलगोरथेभ्यइनित्रकट्याः । खलादिभ्यः क्रमात् एते स्युः । खलानां समूहः । न्नणइतीप् । खलिनी । गवां समूहो गोत्रा । रथानां समूहो रथकट्या ॥

तत्त्वदीपिका-खलगोरथेभ्यइति । यथासंख्यं प्रत्ययाः । खलि नीति खलानां समूहः । एवमन्यत्रापि ।

**मू०-हितेच ॥ सूर्याय हितः सूरीयः । आत्मनीनः । विश्वजनीनः । मातृभो-**

गवत्वमित्यत्र जन्यत्वरूपः संबंधः । राजपुरुषत्वमित्यत्र स्वरूपसंबंधः । तप्रत्ययांतं स्त्रीलिंगम् । त्वप्रत्ययांतं नपुंसकम् । यणंतमुभयत्र । मैत्र्यं मैत्रीत्यादि । ब्राह्मणस्य भावः यस्येत्यऽलोपः ब्राह्मण्यम् । शुक्लाया भावः त्वतलोर्गुणवचनस्येति पुंवद्भावः । शुक्लत्वम् ॥

तत्त्वदीपिका– भावेतत्वयण इति । तश्च त्वश्च यण् च ते । भावशब्दोभिप्रायाद्यनेकार्थोप्यत्र प्रवृत्तिनिमित्तवचन एव गृह्यते नत्वभिप्रायाद्यर्थः । प्रवृत्तिनिमित्तमनभिधानादित्याशयेनाह । शब्दस्येत्यादि । प्रवृत्तेर्निमित्तं तस्मिन् प्रत्यया इत्यर्थः । यणन्तमुभयम् । मैत्र्यम् । मैत्री ।

**मू०–कर्म्मण्यपि ॥ ब्राह्मणस्य कर्म्म ब्राह्मण्यम् । राज्यम् । स्तैन्यम् ।**

सुबोधिनी–कर्मण्यपि । कर्मण्यर्थेपि तत्वयणः प्रत्यया अणादयः स्युः । राज्ञो भावः कर्म वा नोवेति टिलोपः राज्यम् । यण् । स्तेनस्य चौरस्य भावः कर्म्म वा स्तैन्यम् । यण् ॥

तत्त्वदीपिका–कर्मण्यपीति । अत्र क्रियानुवृत्तेः क्रियायामित्यर्थः ।

**मू०–लोहितादेर्डिमन्भावेवा ॥ लोहितिमा । लोहितता । लोहितत्वम् । लौहित्यम् । अणिमा । लघिमा ।**

सुबोधिनी–लोहितादेर्डिमन्भावेवा । लोहितादिर्गणात् डिमन् प्रत्ययस्तादयश्च भावे । लोहितस्य भावः । डित्त्वाट्टिलोपः लोहितिमा । अणोर्भावः अणिमा । लघोर्भावः लघिमा ॥

तत्त्वदीपिका–लोहितिमेति । लोहितस्य भाव इत्यर्थः ।

**मू० भावेऽणपि ॥ लाघवम् । गौरवम् । यौवनम् । शैशवम् । मौनम् । हौत्रम् । औद्गात्रम् । महतो भावो महिमा ।**

सुबोधिनी–भावेऽणपि । अण् प्रत्ययोपि स्यात् भावे । गुरोर्भावो गौरवम् । वोऽव्यस्वरे इत्यव् । यूनो भावः नोवेति टिलोपो न यौवनं । शिशोर्भावः शैशवं । मुनेर्भावः मौनं । होतुर्भावः हौत्रम् । उद्गातुर्भावः औद्गात्रं । महतो भावः टिलोपः महिमा ॥

तत्त्वदीपिका–लाघवमिति । लघोर्भाव इति विग्रहः ।

**मू०–ऋरइमनि ॥ हसादेर्लघोर्ऋकारस्य रेफो भवति इमनि इष्ठेयसोश्च । पृथोर्भावः प्रथिमा । म्रदिमा । क्रशिमा । द्रढिमा । लघोः किम् । कृष्णिमा । हसादेः किम् । ऋजिमा ।**

सुबोधिनी–ऋरइमनि । ऋ इति षष्ठ्यंतं सांकेतिकं । पृथोर्भावः टिलोपः रत्वं प्रथिमा । अणिमा । पार्थवम् । मृदोर्भावः म्रदिमा, मार्दवं । कृशस्य भावः क्रशिमा । दृढस्य भावः द्रढिमा । कृष्णस्य भावः कृष्णिमा । लघोरभावान्न रत्वम् । ऋजोर्भावः ऋजिमा । हसादित्वाभावान्न रत्वम् ॥

तत्त्वदीपिका–ऋरइमनि । प्रयोगानुसरणमेव हसादेर्लघोरिति व्याख्यानमेव शरणम् ।

**मू०– बहोर्लोपोभूचबहोः ॥ बहोःपरेषामिमनादीनामिवर्णस्तस्यलोपो बहोर्भूरादेशश्च । बहोर्भावो भूमा ।**

सुबोधिनी–बहोर्लोपोभूचबहोः । बहुरुदंतः । शेषं सुगमम् ॥

तत्त्वदीपिका—अणीनयोरिति । आदेशे यथासंख्यं नतु प्रत्यये ।

**मू०—एकत्वेतवकममकौ ॥** युवयोर्युष्माकंवायं यौष्माकः । यौष्माकीणः । आवयोरस्माकंवायम् आस्माकः । आस्माकीनः । तवायं तावकः । ममायम्मामकः । तावकीनः । मामकीनः ।

सुबोधिनी—एकत्वेतवकममकौ । एकत्वे वर्तमानयोर्युष्मदस्मदोस्तवकममकावादेशौ स्तः अणीनयोः परतः ॥

**मू०—वत्तुल्ये ॥** सादृश्येऽर्थे वत्प्रत्ययः । चन्द्रेण तुल्यश्चन्द्रवत् । ब्राह्मणवत् । क्षत्रियवत् । मथुरायामिव मथुरावत् । पाटलीपुत्रे इव प्राकारः पाटलीपुत्रवत् । चैत्रस्येव चैत्रवत् मैत्रस्य गृहम् ।

सुबोधिनी—वत्तुल्ये । तुल्यते सादृश्येनोन्मीयते ज्ञायते इति तुलउन्मानेऽस्मात् क्यप् तुल्यम् । यद्वा तोलनं तुला ञेरभावे भिदाद्यङ्‌तुलया संमितं तुल्यं कारकादिति ण्यः णितो वेत्यणित्त्वं । तृतीयांतात् सप्तम्यंतात् षष्ठ्यंताच्च वत्प्रत्ययः स्यात् तुल्ये सादृश्येऽर्थे । ब्राह्मणेन तुल्यं ब्राह्मणवदधीते । तृतीयांतात् तु क्रियातुल्ये एव गुणतुल्ये माभूत् । पुत्रेण तुल्यः स्थूलः । द्रव्यतुल्येपि न । गवा तुल्यो गवयः । सप्तम्यंतात् षष्ठ्यंताच्च क्रियातुल्येपि भवतीत्यर्थः । मथुरावत् पाटलिपुत्रे प्राकारः । मथुरायां यादृशः प्राकारस्तादृशः । पाटलिपुत्रे इत्यर्थः ॥

तत्त्वदीपिका—वत्तुल्ये इति । अत्र क्रियाग्रहणमनुवर्त्तते । तच्च तुल्येन संबध्यते । तेन तुल्यायां क्रियायामित्यर्थो लभ्यते । तोलनं तुला तया संमितमिति विग्रहे कारकादिति ण्यप्रत्यये णितोवेति णित्त्वाभावाद्वृद्ध्यभावः । चतुर्वदित्यादि निर्देशात्क्रियासादृश्याभावेपि षष्ठ्यंतात्सप्तम्यंताच्च भवति इत्याशयेनाहामथुरावदित्यादि । योगविभागान्महानसवादित्यादावक्रियासाम्येपि भवति ।

**मू०—अर्हेऽपि ॥** विधिमर्हति विधिवत् ।

सुबोधिनी—अर्हेपि । अर्हेऽर्थेऽपि द्वितीयांताद्वत् स्यात् क्रियातुल्ये । विधिवत्पूज्यते । विधानं विधिः । अर्हतीति अर्हः । पचाद्यः ॥

**मू०—भावेतत्वयणः ॥** शब्दस्य प्रवृत्तिनिमित्तम्भावस्तत्र वाच्ये एते स्युः । तान्तं स्त्रियाम् । त्वान्तं क्लीबम् । ब्राह्मणता । ब्राह्मणत्वम् । ब्राह्मण्यम् । शुक्लता । शुक्लत्वम् । शौक्ल्यम् । वैदुष्यम् ।

सुबोधिनी—भावेतत्वयणः । तश्च त्वश्च यण् च ते तत्वयणः भावे तत्वयणः प्रत्यया अणादयश्च स्युः । भावशब्दोऽनेकार्थवचनः । अभिप्राये यथा । अयं भावः । पदार्थमात्रे यथा । विचित्रा भावशक्तयः । शृंगारादिषु यथा । स्थायिभावः । संचारिभावः । प्रवृत्तिनिमित्ते धात्वर्थमात्रे च भावः । तेष्वत्र कस्य ग्रहणम् । उच्यते । प्रवृत्तिनिमित्तवचनस्य भावस्यात्र ग्रहणम् । भवति शब्दा अनेनेति व्युत्पत्तेः । अभिप्रायादिवचनस्यात्र अग्रहोऽनभिधानात् । तथाच सिद्धांतकौमुद्यां प्रकृतिजन्यबोधे प्रकारो भाव इति । उक्तं च हरिटीकायाम् । कृत्तद्धितसमासेभ्यः संबंधाभिधानं भावप्रत्ययेनोति । तेन पाचकत्वमित्यत्र कर्तृत्वरूपः संबंधः । औप-

प्रशंसायां यथा । रूपवान् । नित्ययोगे यथा । क्षीरिणः वृक्षाः । अतिशायिनि यथा । उदरिणी कन्या । संबंधः संसर्गः । संयोग इति यावत् । तत्र तथा । दंडी पुरुषः । श्रीरस्ति अस्यास्मिन्वा श्रीमान् । विद्वांसोऽस्यास्मिन्वा संति वसोर्वैडरित्युत्वे षत्वं विदुष्मान् देशः । ह्रिवतइतीप् । गोमती ॥

तत्त्वदीपिका—अस्त्यर्थेमतुरिति । अस्तीत्यत्र लिंगवचने अविवक्षिते । कालस्तु विवक्षितः । तथा चास्तिकर्तृभूतादुक्तान्नाम्नः अर्थे भूमादौ मतुप्रत्ययः अस्तीत्यनेन स्वाम्याधारयोराक्षेपः । एवं च प्रथमांतान्नाम्नोऽस्तिकर्तुरस्यास्मिन्नित्यर्थे मतुरिति पर्यवसितोर्थः । उक्तं च । भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने । संसर्गेस्तिविवक्षायां जायन्ते मत्विनादयः । अत्र दीक्षिताः । अस्तिविवक्षायां ये मतुबादयो विधीयंते ते भूमादिषु विषयेषु भवंतीति वार्तिकार्थः । भूमा बहुत्वम् । तच्चापेक्षा यस्य यावता तस्य तावता बोध्यम् । भूम्नि-गोमान् । निंदायां ककुदावर्तिनी कन्या । प्रशंसायां रूपवान् । क्षीरिणो वृक्षाः । अतिशायने उदरिणी कन्या । दंडी । संसर्गःसंयोगस्तेन संयुक्त एव नतु गृहावस्थितोपि दंडः । एतेन एतदुदाहृत्य अस्त्यर्थोदाहरणं चोक्तमित्युक्तवन्तो वासुदेवादयो निरस्ताः । यद्यपि यद्यस्य तत्तस्मिन्नपि यद्यस्मिन् तत्तस्य भवत्येवेत्युभयनिर्देशोप्यर्थस्तथापि वृक्षवान्पर्वतः पुत्रवांश्चैत्र इत्यत्र पर्वते वृक्षसंबंधस्य चैत्रे पुत्राधारत्वस्य वा सत्त्वादुभयनिर्देशः । असन्निहितपुत्रस्यापिपुत्रवानिति प्रतीतेः सामीपिकाधारत्वस्य विवक्षणादिति ।

**मू०—अइकौच्मत्वर्थे ॥ नाम्नोऽइकस्त्वदन्तात् । अर्शसः । वैजयन्तः । दण्डिकः । धनिकः ।**

सुबोधिनी—अइकौच्मत्वर्थे । प्रत्ययभ्रमनिरासाय संधिरत्र न कृतः । अइकाविति निर्देशेन समासे संहितायामनित्यत्वं ज्ञापितम् । पादान्तानां समानानामृतीत्यनेन सप्तऋषीणामित्यत्र वा संहिता भवति । अर्शोस्यास्मिन्वास्ति अर्शसः । वैजयंती पताकास्यास्मिन्वास्ति वैजयंती । अः । इकप्रत्ययस्तु अकारांतादेव । दण्डोस्यास्मिन्वास्ति दंडिकः । धनमस्याऽस्मिन्वास्ति धनिकः । इकः ॥

तत्त्वदीपिका—अइकाविति । अश्च इकश्च तौ । संध्यभावोऽसंदेहार्थः ।

**मू०—मान्तोपधाद्वत्विनौ ॥ मान्तान्मान्तोपधादवर्णांतादवर्णोपधाच्च वतुरिनस्त्वदन्तात् । किम्वान् । लक्ष्मीवान् । धनवान् । विद्यावान् । यशस्वान् भास्वान् । क्षत्री । दण्डी ।**

सुबोधिनी—मान्तोपधाद्वत्विनौ । मश्च अश्च मौ अन्तश्च उपधा च अन्तोपधे मौअन्तोपधे यस्य तत् मान्तोपधं तस्मान्मान्तोपधात् । प्रथमाद्वत्विनौ प्रत्ययौ भवतः अस्त्यर्थे । इन्प्रत्ययस्तु अकारांतादेव । मतोरपवादोयं विधिः । यथासंख्यं तु न । गुरुकरणात् । तथाहि । म् अंते यस्य तन्मंतं अ उपधा यस्य तत् ओपधं मंतं च ओपधं च अनयोः समाहारो मंतोपधं तस्मान्मांतोपधात् । इत्थं हि स्पष्टं यथासंख्यं लभ्यते । तदऽकरणाद्यथासंख्याऽभावः । वतोरुकारो ह्रितोनुमिति नुमर्थः । ह्रिवतइतीबर्थश्च । किमस्यास्मिन्वास्ति किंवान् । लक्ष्मीरस्यास्मिन्वास्ति लक्ष्मीवान् । धनमस्यास्मिन्वास्ति धनवान् । विद्याऽस्यास्मिन्वास्ति विद्यावान् । यशोस्यास्ति यस्मिन्वास्ति यशस्वान् । भाः अस्यास्मिन्वास्ति भास्वान् । क्षत्रमस्याऽस्मिन् वास्ति क्षत्री । दंडोऽस्याऽस्मिन्वास्ति दण्डी ॥

तत्त्वदीपिका—मांतोपधादिति । मश्च अश्च मौ अंतश्च उपधा च अंतोपधे मौअंतोपधे यस्य तन्मांतोपधं

तस्मात्। यथासंख्यं नाशंकनीयम्। लाघवमुत्सृज्य गौरवस्यात्रादृष्टत्वात्। तथाहि। मंतोपधादित्येवोच्येत। मूअंतं यस्यतन्मंतं अ उपधायस्य तत् ओपधं मंतं च ओपधं च मंतोपधं तस्मात्। औदौतोर्लाघवगौरवयोर्विशेषाभावात्। इत्याशयेनाह मकारांतादित्यादि यशस्वानिति। तान्तमान्तयोर्हसादावस्त्यर्थे अपदान्तता वाच्या अतो न विसर्गः। यस्वरयोस्तु सर्वेषाम्। भवदीय इत्यत्र तु कसादित्वादत्वं बोध्यम्।

**मू०-यवादेर्न्न ॥ यवमान्। भूमिमान्।**

सुबोधिनी-यवादेर्न। यवादेर्गणान्मतुरेव स्यात् वत्विनौ न। यवा अस्यास्मिन् वा संति यवमान्। भूमिरस्यास्मिन्वास्ति भूमिमान्॥

तत्त्वदीपिका-यवादेर्नेति। णितोवित्यस्य व्यवस्थितस्य मंडूकप्लुत्यानुवर्त्तमानात्रेत्यर्थः।

**मू०-तडिदादिभ्यश्च ॥ तडित्वान् विद्युत्वान्। मायी। व्रीही। मायिकः।**

सुबोधिनी-तडिदादिभ्यश्च। एभ्यो वतु इक इन् प्रत्ययाः स्युः अस्त्यर्थे। तडिदस्यास्मिन् वास्ति तडित्वान्। विद्युदस्यास्मिन् वास्ति विद्युत्वान्। मायास्यास्मिन्। वास्ति मायी। इन्। मायिकः। इकः। व्रीहयोऽस्यास्मिन् वा संति व्रीही। इन्। व्रीहिकः। इकः॥

तत्त्वदीपिका-तडित्वानिति। अपदांतत्वान्न दत्वम्।

**मू०-लोमपामपिच्छादिभ्यश्शनेलाः॥ लोमशः। गिरिशः। पामनः। दद्रुणः। अङ्गना।**

सुबोधिनी-लोमपामपिच्छादिभ्यः शनेलाः। लोमादिभ्यः शः। पामादिभ्यो नः। पिच्छादिभ्यः इलः स्यादस्त्यर्थे। लोमान्यस्यास्मिन्वा संति लोमशः। लोमवान् वतुः। गिरिरस्यास्मिन् वास्ति गिरिशः। पामास्यास्मिन्वास्ति पामनः। नाम्नोनोलोपश्धाविति नलोपः। शाकीपललीदद्रूणांह्रस्वत्वं च नप्रत्यये। एषां ह्रस्वः। महच्छाकमितिशाकी। ईप्। तद्वत्शाकिनम्। महत्पलालं पलाली तद्वत् पलालिनम् दूद्रूस्त्वग्रोगविशेषः। दद्रूरस्याऽस्मिन्वास्ति दद्रुणः। णत्वम्। अंगमस्या अस्यां वास्ति अङ्गना।

तत्त्वदीपिका-लोमपामपिच्छादिभ्यः शनेलाइति। यथासंख्यं बोध्यम्।

**मू०-लक्ष्म्याअच्च ॥ लक्ष्मणः।**

सुबोधिनी-लक्ष्म्याअच्च। लक्ष्मीशब्दस्याऽकारोन्तादेशः स्यान्नप्रत्यये लक्ष्मीरस्यास्मिन्वास्ति लक्ष्मणः। णत्वं। विषु साम्येऽव्ययं। विषु अंचतीति विष्वक्। विष्वगस्यास्मिन्वास्ति।

तत्त्वदीपिका-लक्ष्मणइति। लक्ष्मीरस्यास्तीति विग्रहः।

**मू०विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ विषुणः। पिच्छिलः। तुन्दिलः। फेनिलः।**

सुबोधिनी-विष्वगित्युत्तरपदलोपश्चाकृतसंधेः। विष्वक्शब्दस्योत्तरपदस्यलोपः स्यात् संधावकृते सति नप्रत्यये। विषुणः। विषुवदाख्यः कालः। समरात्रिंदिवे काले विषुवद्विषुवं च तदित्यमरः। पिच्छं चिक्कणमस्याऽस्मिन् वास्ति पिच्छिलः। तुन्दमस्याऽस्मिन्वा तुंदिलः। फेनमस्याऽस्मिन्वा फेनिलः। उरसिलः उरस्वान्। पिच्छवान्॥

तत्त्वदीपिका–विषुणइति । विपुणानाना अंचंतीविष्वंचि तान्यस्य संतीति विषुणः विषुणवदाख्य कालः तस्य हि नानागतानि दिनानि संति दिनांतराणां न्यूनाधिकभावस्य तन्मूलकत्वात् । यदि कृतसंधेः स्यात्तदा वलोपे विष्णइति स्यादित्यतआह । अकृतसंधेरिति ।

**मू०–सिध्मादेर्लः ॥ सिध्मलः । चूडालः ।**

सुबोधिनी–सिध्मादेर्लः । सिध्मादेर्गणाल्लप्रत्ययः स्यादस्त्यर्थे पक्षे वतुः । सिध्मवान् । दन्त बल ललाट वत्स अंस फेन धमनि क्षुद्रजंतु उपताप गड्ड मणि विजय निष्पाठ पांशु हनु पार्ष्णि चूडा सिध्मादयः । पार्ष्णिधमन्योर्दीर्घश्च । पार्ष्णीलः । धमनीलः । क्षुद्रजंतुर्यथा । यूकालः । मक्षिकालः । उपतापो रोगः । विपादिकाऽस्यास्ति विपादिकालः । पादस्फोटो विपादिकेत्यमरः । सिध्ममस्यास्मिन्वास्ति सिध्मलः । चूडाऽस्याऽस्मिन्वास्ति चूडालः वातदंतबलललाटानामूङ्च । वातुलः वातूलः । इत्यादि ॥

**मू०–कुमुदनडवेतसेभ्योड्वतुः ॥ कुमुद्वान् । नड्वान् । वेतस्वान् ।**

सुबोधिनी–कुमुदनडवेतसेभ्योड्वतुः । एभ्यो ड्वतुप्रत्ययः स्यादस्त्यर्थे । डित्त्वाट्टिलोपः । कुमुदान्यऽस्यास्मिन्वा सन्ति कुमुद्वान् । नडाअस्याऽस्मिन् वा संति नड्वान् । वेतसा अस्यास्मिन् वा संति वेतस्वान् ॥

**मू०–महिषाड्डमतुः ॥ महिष्मान् देशः ।**

सुबोधिनी–महिषाड्डमतुः । महिषशब्दात् ड्मतुः स्यादस्त्यर्थे । महिषा अस्याऽस्मिन् वा संति महिष्मान् टिलोपः ।

**मू०–नडशादाड्ड्वलः ॥ नड्वलः । शाद्वलः ।**

सुबोधिनी–नडशादाड्ड्वलः । आभ्यां ड्वलप्रत्ययः स्यादस्त्यर्थे । नडाअस्याऽस्मिन्वा सन्ति नड्वलः । डित्त्वाट्टिलोपः । शादोऽस्याऽस्मिन् वास्ति शाद्वलः । शादोजंबालघासयोरित्यमरः ॥

**मू०–शिखायालः ॥ शिखावलः ।**

सुबोधिनी–शिखायावलः । शिखाशब्दाद्वलप्रत्ययः स्यादस्त्यर्थे । शिखाऽस्याऽस्मिन्वास्ति शिखावलः ॥

**मू०–नडादीनामीयेकुक् ॥ नडकीयम् ।**

सुबोधिनी–नडादीनामीयेकुक् । नडादीनां कुगागमो भवति णीयप्रत्यये । नड प्लक्ष बिल्व नेत्र वेत्र वेतस क्रुंचा तक्षन् नडादयः । नडाअस्यास्मिन्वा संति नडकीयम् ।

**मू०– क्रुञ्चाह्रस्वत्वञ्च ॥ क्रुञ्चकीयम् ।**

सुबोधिनी–क्रुंचाह्रस्वत्वंच । क्रुंचाशब्दस्य ह्रस्वो भवति णीये । क्रुंचाऽस्यास्मिन्वा क्रुंचकीयम् । । एवं तक्षकीयम् । निपातनान्नलोपः । बिल्वकीयं । वेत्रकीयम् ॥

**शृङ्गवृन्दाभ्यामारकः ॥ शृङ्गारकः । वृन्दारकः ।**

सुबोधिनी—शृंगवृंदाभ्यामारकः । आभ्यामारकप्रत्ययः स्यादस्त्यर्थे । शृंगमस्याऽस्मिन्वास्ति शृंगारकः । शृंगप्रधानसान्वोश्चेत्यमरः । वृंदमस्याऽस्मिन् वास्ति वृंदारकः । वृंदारकौ रूपिमुख्याविंत्यमरः ॥

मू०—फलबर्हाभ्यामिनः ॥ फलिनः । बर्हिणः । मलादिनः । मलिनः। ईमसश्च ॥ मलीमसः ।

सुबोधिनी—फलबर्हाभ्यामिनः । आभ्यामिनप्रत्ययः स्यादस्त्यर्थे । फलमस्यास्मिन्वास्ति फलिनः । बर्हमस्याऽस्मिन्वास्ति बर्हिणः । णत्वम् ॥

हृदयादालुः ॥ हृदयालुः ।

सुबोधिनी—हृदयादालुः । हृदयशब्दादालुः प्रत्ययः स्यादस्त्यर्थे । हृदयमस्याऽस्मिन्वास्ति हृदयालुः । पक्षे हृदयी । हृदयिकः । हृदयवान् ॥

मू०—शीतोष्णतृप्रेभ्यस्तदसहने ॥ शीतं न सहते शीतालुः । उष्णालुः । तृप्रं दुःखं न सहते तृप्रालुः ।

सुबोधिनी—शीतोष्णतृप्रेभ्यस्तदसहने । एभ्यः आलुप्रत्ययः । स्यात् प्रकृत्यर्थाऽसहनेऽर्थे । शीतं न सहते स शीतालुः । उष्णं न सहते उष्णालुः । तृप्रं दुखं न सहते तृप्रालुः । तृप्रःपुरोडाशः । तृप्रं दुःखमित्यर्थः ॥

मू०—हिमादेलुः ॥ हिमंन सहते हिमेलुः ।

सुबोधिनी—हिमादेलुः । हिमशब्दादेलुप्रत्ययः स्यात्तदसहनेऽर्थे ॥

मू०—बलादूलः ॥ बलन्न सहते बलूलः ।

सुबोधिनी—बलादूलः । बलशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे ॥

मू०—वातात्समूहेच ॥ वातन्न सहते तस्य समूहो वा वातूलः ।

सुबोधिनी—वातात्समूहेच । वातशब्दादूलप्रत्ययः स्यात्तदसहनेऽर्थे समूहेऽर्थे च । बलूलवातूलशब्दावस्त्यर्थे च व्युत्पादितौ ॥

मू०—तःपर्वमरुद्भ्याम् ॥ पर्वतः । मरुत्तः ।

सुबोधिनी—तःपर्वमरुद्भ्याम् । आभ्यां तः प्रत्ययोऽस्त्यर्थे । पर्वाऽस्याऽस्मिन्वास्ति नाम्नो इति नलोपः पर्वतः । मरुदस्यास्मिन्वास्ति मरुत्तः ।

मू०—ऊर्णाहंशुभंभ्योयुः ॥ ऊर्णायुः । अहंयुः । शुभंयुः ।

सुबोधिनी—ऊर्णाहंशुभंभ्योयुः । एभ्यो युप्रत्ययः स्यादस्त्यर्थे । ऊर्णाऽस्यास्मिन् वाऽस्ति ऊर्णायुः । निपातनाद्यस्येत्यालोपो न । अहमिति मांतमव्ययमहंकारे । शुभमिति च शुभे । अहंयुरहंकारवान् । शुभंयुः शुभान्वितः ॥

मू०—स्वादामिन्नैश्वर्ये ॥ स्वमैश्वर्यमस्यास्मिन्वास्ति स्वामी ।

सुबोधिनी–स्वादामिन्नैश्वर्ये। ऐश्वर्ये स्वशब्दादामिन् प्रत्ययः स्यादस्त्यर्थे। ईशिता हि ईश्वरस्तस्य भाव ऐश्वर्यं। ऐश्वर्ये किं। स्ववान्। स्वं द्रव्यमस्यास्मिन्वाऽस्ति।

**मू०–वातातीसारपिशाचानामिनिःकुक्च॥ वातकी। अतीसारकी। पिशाचकी।**

सुबोधिनी–वातातीसारपिशाचानामिनिःकुक्च। एभ्य इनिः प्रत्ययः स्यादस्त्यर्थे। इकार उच्चारणार्थः। एषां कुगागमश्च इनिप्रत्यये। वातोऽस्यास्मिन्वास्ति वातकी। वातकी वातरोगी स्यादित्यमरः। अतीसारोऽस्यास्मिन्वास्ति अतीसारकी। रोगेचायमिनिरिष्यते। नेह। वातवती गुहा। पिशाचोऽस्याऽस्मिन्वास्ति पिशाचकी॥

**मू०–ज्योत्स्नादिभ्योऽण्॥ ज्यौत्स्नः। तामिस्रः। तापसः। सैकतः। शार्करः।**

सुबोधिनी–ज्योत्स्नादिभ्योऽण्। ज्योत्स्नादिभ्योऽण् स्यादस्त्यर्थे। किंच ज्योत्स्नातमिस्रा शृंगिणोर्ज्जस्विन्नूर्ज्जस्वलगोमिन्मलिनमलीमसा अस्त्यर्थे निपात्यंते। ज्योतिरस्या अस्यां वास्ति ज्योत्स्ना चंद्रप्रभा। ज्योतिस्शब्दस्य निपातनादुपधालोपो नप्रत्ययश्च। तमोऽस्याऽस्मिन्वा तमिस्रं। तमस्शब्दस्योपधाया इत्वं रप्रत्ययश्च। शृंगमस्याऽस्मिन्वास्ति शृंगिणः। अत्र इनप्रत्ययो निपातनात्। ऊर्ज्जोऽस्याऽस्मिन्वास्ति ऊर्जस्वी, ऊर्ज्जस्वलः। विन्वलप्रत्ययौ निपातनात्। गौरस्याऽस्मिन् वास्ति गोमी। मिन्प्रत्ययो निपातनात्। मलोऽस्याऽस्मिन्वास्ति मलिनः, मलीमसः। मलशब्दादिनेमसप्रत्ययौ निपातनादिति। ज्योत्स्नास्यास्मिन्वास्तीत्याणि ज्यौत्स्नः शुक्लपक्षः। तमिस्रमस्याऽस्मिन्वास्ति तामिस्रः कृष्णपक्षो नरकविशेषश्च। तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चंद्रिकयान्विता इत्यमरोक्तौ तु तमिस्रेत्यतदर्दतं न त्वण्णंतामिति न विरोधः। तपोऽस्याऽस्मिन्वास्ति तापसः। विन्प्रत्ययोपि। तपस्वी। सिकताऽस्यास्मिन्वास्ति सैकतः। इलप्रत्यये सिकतिलः। वतौ तु सिकतावान्। शर्कराऽस्यास्मिन्वास्ति शार्करः अण्। शार्करिलः इलः। शर्करावान् वतुपक्षे। प्रत्ययलुक् च भवति। सिकता। शर्करा। स्त्री शर्करा शार्करिलः शार्करः शर्करावति॥ देशएवादिमावेवमुन्नेयाः सिकतावति इत्यमरः॥

तत्त्वदीपिका– ज्यौत्स्नइति शुक्लपक्षे। तामिस्रः कृष्णपक्षे नरकविशेषश्च।

**मू०–ऊषशुषिमुष्कमधुखमुखकुञ्जनगपांशुपाण्डुभ्योरः॥ ऊषरः। शुषिरं। मुष्करः। मधुरः। खरः। मुखरः। कुञ्जरः। नगरः। पांशुरः। पाण्डुरः।**

सुबोधिनी–ऊषशुषिमुष्कमधुखमुखकुंजनगपांशुपांडुभ्योरः। एभ्यो रप्रत्ययः स्यादस्त्यर्थे। ऊषोऽस्यास्मिन्वास्ति ऊषरः। स्यादूषः क्षारमृत्तिका। ऊषवानूषरइत्यमरः। शुषिरस्यास्मिन्वास्ति शुषिरः। शुषिश्छिद्रं। वंशादिकं तु शुषिरमित्यमरः। मुष्कोस्यास्मिन्वास्ति मुष्करः। मुष्कोंडम्। मधु माधुर्यमस्यास्मिन्वास्ति मधुरः। खमस्यास्मिन्वास्ति खरः। महत्कंठविवरं खं गर्द्दभे रूढोयं। मुखमस्यास्मिन्वास्ति मुखरः वाचालः। कुंजो हस्तिहनुरस्यास्मिन्वास्ति कुंजरः। नगा वृक्षाः। पर्वताश्च ते अस्यास्मिन्वासंति नगरं। जातिशब्दोयं तेन स्त्रियां जातिलक्ष-

ण ईप् नगरी । पांशूरजोऽस्याऽस्मिन्वाऽस्ति पांशुरः । पांडुरस्याऽस्मिन्वाऽस्ति पांडुरः । हरिणः पांडुरः पांडुरित्यमरः ॥

तत्त्वदीपिका—ऊषशुषि । ऊषा हरिणाः । पांशवः रजांसि । शुषिश्छिद्रं । कुंजो हस्तिहनुः । नगरामिति । नगाः वृक्षाः पर्वताश्च । जातिशब्दत्वान्नगरीत्यपि । पाण्डुर इति । पांडुः शुक्लो वर्णस्तद्वान् ।

मू०—कच्छ्वा-ह्रस्वत्वञ्च ॥ कच्छुरः ।

सुबोधिनी—कच्छ्वाह्रस्वत्वंच । कच्छूशब्दाद्रः स्यादस्त्यर्थे । कच्छू इत्यस्य ह्रस्वश्च । कच्छूरस्याऽस्मिन्दाऽस्ति कच्छुरः । कच्छूरोगविशेषः ॥

तत्त्वदीपिका—कच्छुरइति । कच्छूरोगविशेषस्तद्वान् ।

मू०—द्युद्रुभ्याम्मः ॥ द्युमः । द्रुमः ।

सुबोधिनी—द्युद्रुभ्यांमः । आभ्यां मप्रत्यः स्यादस्त्यर्थे । द्यौरस्याऽस्मिन्वाऽस्ति द्युमः । दिवउरसे इत्युत्वं द्रुः शाखा वृक्षश्च । द्रुरस्याऽस्मिन्वाऽस्ति द्रुमः।पलाशी द्रुद्रुमागमा इत्यमरः॥

तत्त्वदीपिका—द्युद्रुभ्यांम इति । द्यौरस्यास्तीति । दिव उरस इत्युत्वम् । अव्युत्पन्नोपि द्युशब्दो दिनवाच्यस्ति । । द्रुर्वृक्षः सोऽस्यास्तीतिजनकतयेति द्रुमोपि वृक्ष एव ।

मू०—केशादिभ्योवः ॥ केशवः । मणिवः । हिरण्यवः ।

सुबोधिनी—केशादिभ्योवः एभ्यो वः स्यादस्त्यर्थे । केशाअस्याऽस्मिन्वा सन्ति केशवः । केशी इन् । केशिकः इकः । केशवान् वतुः । मणिरस्याऽस्मिन्वाऽस्ति मणिवः । नागविशेषः । हिरण्यमस्याऽस्मिन् वास्ति हिरण्यवो निधिविशेषः ॥

तत्त्वदीपिका—केशव इति । प्रशस्ताः केशाः संत्यस्येति विग्रहः ।

मू०अर्णसोलोपश्च ॥ अर्णवः ।

सुबोधिनी—अर्णसोलोपश्च । अर्णस्शब्दाद्वः स्यादस्त्यर्थे सस्य लोपश्च । अर्णो जलं तद्वानर्णवः । अर्णस्वान् वतुः ॥

तत्त्वदीपिका— अर्णव इति । अर्णांसि जलानि संत्यस्येति ।

मू०—रजःकृष्यासुतिपरिषद्भ्योवलः ॥ रजस्वला ।

सुबोधिनी—रजःकृष्यासुतिपरिषद्भ्योवलः । एभ्यो वलप्रत्ययः स्यादस्त्यर्थे । रजोऽस्य अस्यां वास्ति रजस्वला । रजः स्त्रीकुसुमेऽपि चेत्यमरः ॥

तत्त्वदीपिका—परिषद्वल इति । परितः सीदतीति परिषत् ।

मू०—कृष्यादीनांवलेदीर्घः ॥ कृषीवलः । आसुतीवलः । परिषद्वलः ।

सुबोधिनी—कृष्यादीनांवलेदीर्घः । वलप्रत्यये संज्ञायामेषां दीर्घः स्यात् । कृषिरस्याऽस्मिन्वाऽस्ति कृषीवलः । आसुतिरभिषवः । मद्यसंधानमासुतिरिति हैमः । षुञ् अभिषवे क्तिः । आसुतिरस्याऽस्मिन्वस्ति आसुतीवलः शौंडिकः । परितः सीदतीति परिषत् क्विप् । पर्षदिति पाठांतरम् । परिषदस्याऽस्मिन् वास्ति परिषद्वलः । पर्षद्वलश्च । पर्षद्वलान्महाब्रह्मैराटा नैकटिकाश्रमानितिभट्टिः ॥

**मू०–अन्येभ्योऽपि ॥** भ्रातृवलः । पुत्रवलः । दन्तावलः । बंधुवलः ।

सुबोधिनी–अन्येभ्योऽपि । वलप्रत्ययः स्यादस्त्यर्थे । भ्राताऽस्याऽस्मिन्वास्ति भ्रातृवलः । पुत्रोऽस्याऽस्मिन्वास्ति पुत्रवलः । संज्ञाया अभावान्नेह दीर्घः । दंता अस्याऽस्मिन्वा संति दंतावलो हस्ती । कृष्यादीनामिति दीर्घः ॥

**मू०–तुंडिवलिवटेर्भः ॥** तुंडिभः । वलिभः । वटिभः ॥

सुबोधिनी–तुंडिवलिवटेर्भः । एभ्यो भप्रत्ययः स्यादस्त्यर्थे । वृद्धानाभिस्तुंडिः । तुंडिरस्याऽस्मिन्वास्ति तुंडिभः । वलिरस्याऽस्मिन्वास्ति वलिभः । वटिरस्याऽस्मिन्वास्ति वटिभः । वल्मीकगृहमित्यर्थः । पामादित्वाद्वलिनोऽपि ॥

**मू०–एतत्किमिदंयत्तद्भ्यःपरिमाणेवतुः ॥**

सुबोधिनी–एतत्किमिदंयत्तद्भ्यःपरिमाणे वतुः । एभ्यो वतुप्रत्ययः स्यात् परिमाणेऽर्थे । परिमाणमिह परिच्छेदकमात्रम् ॥

तत्त्वदीपिका–एतत्किमिदंयत्तद्भ्यः परिमाणे वतुरिति । मांतोपधादित्यनेनैव सिद्धे परिमाणार्थे वचनम् ।

**मू०–यत्तदेतदामावतौ ॥** यावान् । तावान् । एतावान् ।

सुबोधिनी–यत्तदेतदामावतौ । वतुप्रत्यये परे एषामाकारांतादेशः स्यात् । यत्परिमाणमस्य यावान् । तत्परिमाणमस्य तावान् । एतत्परिमाणमस्य एतावान् ॥

तत्त्वदीपिका–यत्तदेतदामावताविति । यत्तदेतच्छब्दानां वतुप्रत्यये परे आकारांतादेश इत्यर्थः । यावानिति । यत् परिमाणमस्येति विग्रहः ।

**मू०–किमःकिर्वतोर्वस्ययः ॥** इयान् ॥

सुबोधिनी–किमःकिर्वतोर्वस्ययः । किम्शब्दस्य किरादेशः स्यात् वतुप्रत्यये वस्य यकारश्च । किंपरिमाणमस्य कियान् ॥

**मू०–इदमइश्वतोर्वस्ययः ॥** इयान् ।

सुबोधिनी–इदमइश्वतोर्वस्ययः। इदम्शब्दाद्वतुः स्यात्परिमाणेऽर्थे। इदम्स्थाने इशादेशश्च। शित्वात्सर्वादेशः । वतुप्रत्ययवस्य यकारश्च । इदं परिमाणमस्य ॥

तत्त्वदीपिका–इदम इशिति। शकारः सर्वादेशार्थः ।

**मू०–श्रद्धादेर्लुः ॥** श्रद्धालुः । कृपालुः । दयालुः ।

सुबोधिनी–श्रद्धादेर्लुः । लुप्रत्ययः स्यादस्त्यर्थे । श्रद्धाऽस्याऽस्मिन्वास्ति श्रद्धालुः । कृपाऽस्याऽस्मिन्वा कृपालुः । दयाऽस्याऽस्मिन्वास्ति दयालुः स्पृहिगृहिपतिदयिनिद्रातंद्राश्रद्धाशीङ्भ्य इत्यालुप्रत्ययेनापीष्टसिद्धेरिदं सूत्रं चिंत्यम् ॥

**मू०–औन्नत्येदन्तादुरः ॥** दन्तुरः ।

सुबोधिनी–औन्नत्येदंतादुरः । उन्नते वर्तमानाद्दन्तशब्दादुरप्रत्ययः स्यादस्त्यर्थे । उन्नता दंताःसंत्यस्य दन्तुरः । औन्नत्ये किम् । दन्तवान् ॥

मू०–अस्मायामेधास्रग्भ्योविनिः ॥ तपस्वी । ओजस्वी । वर्चस्वी । तेजस्वी । वचस्वी । मनस्वी । मायावी । मेधावी । स्रग्वी ।

सुबोधिनी–अस्मायामेधास्रग्भ्योविनिः । एभ्यो विन् स्यादस्त्यर्थे पक्षे वतुरपि । तपोऽस्याऽस्मिन्वास्ति तपस्वी । ओजोऽस्याऽस्मिन्वास्ति ओजस्वी । वर्चोऽस्यास्मिन्वास्ति वर्चस्वी । तेजोऽस्यास्मिन्वास्ति तेजस्वी । वचोऽस्याऽस्मिन्वास्ति वचस्वी । मनोऽस्याऽस्मिन्वास्ति मनस्वी । मायाऽस्याऽस्मिन्वास्ति मायी, मायिकः । इनिकौ । मेधाऽस्याऽस्मिन्वास्ति मेधावी । स्रगऽस्याऽस्मिन्वास्तीति चोःकुरित्यनेन सिद्धे परत्वात्प्राप्तं छशेषेति षत्वं निराकृत्य दिशामिति कुत्वं स्रग्वी ॥

तत्त्वदीपिका–अस्मायेति ॥ असः प्रत्ययगहणेन तदंतस्य ग्रहणमिति अस्प्रत्ययांतात् मायादेश्च विनित्यर्थः ।

मू०– आमयस्यदीर्घश्च ॥ आमयावी ।

सुबोधिनी–आमयस्यदीर्घश्च । अस्मादपि विन् स्यादस्त्यर्थे विन्प्रत्ययेऽस्य दीर्घश्च । आमयोऽस्याऽस्मिन्वास्ति आमयावी ॥

मू०–वाचोग्मिनिः ॥ वाग्मी ।

सुबोधिनी–वाचोग्मिनिः । वाच्शब्दात् ग्मिन् प्रत्ययः स्यादस्त्यर्थे । वागस्याऽस्मिन्वास्ति चस्य कुत्वे झभेजवा इति गत्वे वाग्मी गकारद्वयमस्ति ॥

तत्त्वदीपिका–वाचोग्मिनिरिति । गकारोमादित्वव्यावृत्त्यर्थः । तेन गत्वमेव यद्वा ग् मिन् इति छेदः ग् चादेशो मिन् प्रत्ययः ।

मू०–आलाटौकुत्सितभाषिणि ॥ वाचालः । वाचाटः ।

सुबोधिनी–आलाटौकुत्सितभाषिणि । वाच्शब्दादेतौ स्तः कुत्सितबहुभाषकेऽर्थे । कुत्सितं बहु भाषते वाचालः । वाचाटः । यस्तु सम्यग्बहु भाषते स वाग्मीत्येव ॥

तत्त्वदीपिका–कुत्सितेति । कुत्सितमनन्वितं भाषितुं शीलमस्य स तथा तस्मिन्नित्यर्थः । प्रत्ययार्थे वाच्य इत्यर्थः ।

मू०–ईषदसमाप्तौकल्पदेश्यदेशीयाः ॥ ईषदपरिसमाप्तस्सर्वज्ञस्सर्वज्ञकल्पः । पटुदेश्यः । विद्वद्देशीयः । पटुदेशीयः ।

सुबोधिनी–ईषदसमाप्तौकल्पदेश्यदेशीयाः । प्रथमान्तान्नाम्नः आख्यातांताच्चैते स्युरीषदूनेर्थे । ईषदसमाप्तौ ये प्रत्ययास्तेष्वभिधेयवदेव लिंगवचने स्तः । तेन गुडकल्पा द्राक्षा । शर्कराकल्पो गुडइति । ईषदूनः सर्वज्ञः सर्वज्ञकल्पः । ईषदूनः पटुः पटुदेश्यः । ईषदूनो विद्वान् वसौ रसे इति दत्वं विद्वद्देशीयः । ईषदूनं पचति पचतिकल्पम् । क्रियाप्रधानमाख्यामिति क्रियायामौत्सर्गिकमेकवचनं क्लीबत्वं च ॥

तत्त्वदीपिका–ईषदिति । ईषदपरिसमाप्तौः किंचिन्न्यूनत्वे ।

मू०–बहुर्वाऽक्तार्थेसचप्रागेव ॥ ईषदूनः पटुः बहुपटुः ।

सुबोधिनी–बहुर्वाऽक्तार्थेसचप्रागेव । ईषदसमाप्तिविशिष्टेर्थे प्रथमांतान्नाम्नो बहुप्रत्ययः स्यात् सच प्रकृतेः प्रागेव न तु परतः । लिंगसंख्येअपि प्रकृतेरेव न तु तद्विपर्ययः । तेनबहुगुडो द्राक्षा लघु । बहुतृणं नर इत्यादौ न विशेष्यनिघ्नता ॥

तत्त्वदीपिका–बहुर्वा उक्तार्थे स च प्रागेवेति । उक्तार्थे किंचिन्न्यूनत्वेऽर्थे बहुप्रत्ययोविकल्पेन भवति स च बहुप्रत्ययः प्रकृतेः प्रागेव न तु परतः । लिंगसङ्ख्ये अपि प्रकृतेरेव नतु तद्विपर्ययः । तेन बहुगुडो द्राक्षा लघु बहुतृणं नर इत्यादौ न विशेष्यनिघ्नता ।

**मू०–प्रकारेजातीयः ॥** पटुप्रकारः पटुजातीयः ।

सुबोधिनी–प्रकारेजातीयः । प्रकारवति जातीयप्रत्ययः स्यात् । सामान्यस्य भेदकः प्रकारः ॥

**मू०–कुटीशमीशुण्डाभ्योरोह्रस्वत्वे ॥** ह्रस्वा कुटी कुटीरः । शमीरः । शुण्डारः ।

सुबोधिनी–कुटीशमीशुंडाभ्योरोह्रस्वत्वे । एभ्यो रः प्रत्ययो भवति ह्रस्वेऽर्थे । ह्रस्वा कुटीति स्वार्थिकाः प्रकृतिलिंगमातिवर्तते इति पुंलिंगतात्र कुटीरः । ह्रस्वा शमी शमीरः । ह्रस्वा शुंडा शुंडारः ॥

**मू०–कुत्वाडुपः ॥** ह्रस्वा कुतूः कुतुपः ।

सुबोधिनी–कुत्वाडुपः । कुतूशब्दात् डुपप्रत्ययः स्यात् ह्रस्वेऽर्थे । कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमानित्यमरः ॥

तत्त्वदीपिका–कुतुप इति । कुतूः कृत्तेः स्नेहपात्रं ह्रस्वा सा कुतुपः पुमान् ।

**मू०–कासूगोणीभ्यांष्टरः ॥** ह्रस्वा कासूः कासूतरी । गोणीतरी ।

सुबोधिनी–कासूगोणीभ्यांष्टरः । आभ्यां ष्टरप्रत्ययः स्यात् ह्रस्वे । षित्त्वात् ङीव्रत इतीप् । ह्रस्वा कासूः कासूतरी । कासूः आयुधविशेषः । ह्रस्वा गोणी गोणीतरी ॥

तत्त्वदीपिका–कासूरिति । आयुधविशेषः कासूः सा ह्रस्वेत्यर्थः ।

**मू०–वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे ॥** तनुर्वत्सः वत्सतरः । उक्षतरः । अश्वतरी । ऋषभतरः ।

सुबोधिनी–वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे । एभ्यः ष्टरः स्यात् । तनोर्भावस्तनुत्वं न्यूनता । सा च प्रवृत्तिनिमित्तस्यैव प्रत्यासत्तेः । क्वचित्तु तत्सहचरितधर्मांतराणामपि न्यूनता । तत्र वत्सः प्रथमवयाः प्रथमवयसो न्यूनत्वं नाम वयोंतरप्राप्तिः । उक्षा तरुणवयाः । तारुण्यस्य तनुत्वं तृतीयवयःप्राप्तिः । अश्वायामश्वादुत्पन्नोऽश्वः । अश्वत्वं च जातिः । तत्सहचरितस्याऽश्वायामश्वादुत्पन्नत्वधर्मस्य न्यूनत्वमन्यपितृकता । तथा च गर्दभेनाऽश्वायामुत्पादितोऽश्वतरः । तरतमेतिपुंवद्भावः । अश्वतरः । भारस्य वोढा ऋषभस्तस्य तनुत्वं भारोद्वहने मंदशक्तिता । तद्वांस्तु ऋषभतरः । प्रवृत्तिनिमित्ततनुत्वे एवायम् ॥

तत्त्वदीपिका–वत्सतर इति । द्वितीयं वयः प्राप्तः । उक्षतरः ।

**मू०-देवतान्तात्तादर्थ्येयः ॥** अग्निदेवतायै इदमग्निदेवत्यम् ।

सुबोधिनी-देवतांतात्तादर्थ्येयः । तदर्थएवतादर्थ्यं स्वार्थे ष्यः । अग्निश्चासौ देवता च अग्निदेवता तस्यै ॥

**मू०-पादार्घाभ्यांच ॥** पादार्थमुदकंपाद्यम् । अर्घ्यम् ।

सुबोधिनी-पादार्घाभ्यांच । आभ्यां यः स्यात्तादर्थ्ये । पाद्यं पादाय वारिणीत्यमरः । मूल्ये पूजाविधौ चार्घ इत्यमरः । अर्घार्थमुदकमर्घ्यम् ॥

**मू०-नवस्यनूआदेशस्त्नतनईनाःप्रत्ययाःस्वार्थे ॥** नूत्नम् । नूतनम् । नवीनम् ।

सुबोधिनी-नवस्य नू आदेशस्त्नतनईनाःप्रत्ययाःस्वार्थे । नवशब्दात्स्वार्थे एते स्युर्नवस्थाने नूश्च वा । अव् यस्वरे इत्यव् । नवीनम् ॥

तत्त्वदीपिका-नवीनमिति । नवशब्दस्य ईन् प्रत्ययः ऊकारस्य वोव्यस्वर इत्यवादेशः ।

**मू०-पुराणेप्रान्नश्च ॥** प्रणम् । प्रत्नम् । प्रतनम् । प्रीणम् ।

सुबोधिनी-पुराणेप्रान्नश्च । प्रात्पुराणेऽर्थे नप्रत्ययः स्यात् चादुक्ताः त्नतनईनाः ॥

**मू०-अतिथेर्ञ्यः ॥** अतिथय इदमातिथ्यम् ॥

सुबोधिनी-अतिथेर्ञ्यः । आतिथिशब्दात्तादर्थ्ये ञ्यः स्यात् ॥

**मू०-प्रशंसायांरूपः ॥** प्रशस्तो वैयाकरणो वैयाकरणरूपः ।

सुबोधिनी-प्रशंसायांरूपः । प्रथमान्तान्नाम्नः आख्यातांताच्च रूपप्रत्ययः स्यात् । प्रशंसायामर्थे । प्रकृत्यर्थस्यपरिपूर्णतेह प्रशंसा । नतु स्तुतिः । तेनेहापि रूपप्रत्ययः । चोररूपोयं यदक्ष्णोरप्यंजनं हरति । गुप्तवस्तुनोऽपहरणेन चौर्य्यं परिपूर्यते । प्रशस्तं पचति पचतिरूपम् ॥

**मू०-कुत्सायाम्पाशः ॥** कुत्सितो भिषक् भिषक्पाशः ।

सुबोधिनी-कुत्सायांपाशः । प्रथमांतान्नाम्नः पाशप्रत्ययः स्यात् कुत्सायामर्थे ॥

**मू०-भूतपूर्वेचरट् ॥** पूर्वन्दृष्टो दृष्टचरः । दृष्टचरी । आढ्यचरी ।

सुबोधिनी-भूतपूर्वेचरट् । पूर्वं भूतो भूतपूर्वस्तत्र वर्तमानात्प्रथमांताच्चरट् स्यात् । टित्त्वादीप् । भूतपूर्वाऽऽढ्या च आढ्यचरी । तरतमचराडिनि पुंवत् ।

तत्त्वदीपिका-भूतपूर्व इति । पूर्वं भूतः प्राप्तः इति यावत् । टित्वादीप् ।

**मू०-षष्ठ्यारूप्यच ॥**

सुबोधिनी-षष्ठ्यारूप्यच । षष्ठ्यंताद्भूतपूर्वेऽर्थे रूप्यप्रत्ययो वा पक्षे चरट् । कृष्णस्य भूतपूर्वो गौः कृष्णरूप्यः । कृष्णचरः ।

सू०–प्राचुर्यविकारप्राधान्यादिपुमयट् ॥ अन्नं प्रचुरमत्रान्नमयो यज्ञः । मृन्मयो घटः । स्त्रीमयो जाल्मः । अमृतं स्वरूपमस्यामृतमयश्चन्द्रः । आम्रस्य विकारोऽवयवो वा आम्रमयम् । शरमयम् ।

सुबोधिनी–प्राचुर्यविकारप्राधान्यादिपुमयट् । नाम्न एष्वर्थेषु मयट् स्यात् । प्राचुर्य्ये । अन्नमयो यज्ञः । विशेष्यनिघ्नतात्र । विकारे मृदो विकारो । मृन्मयः । मयट्प्रत्ययः । अमे जनस्यापीति नः । प्राधान्ये । स्त्रीप्रधानमस्य स्त्रीमयः । आदिशब्दादन्येष्वप्यर्थेषु मयट् । यथा । अमृतमयोऽत्र स्वरूपे मयट् । आम्रमयमत्र विकारावयवयोर्मयट् । शराणां विकारोऽवयवो वा शरमयम् ॥

तत्त्वदीपिका–प्राचुर्येति । प्रचुरस्य भावः प्राचुर्य्यं बाहुल्यम् । प्राचुर्यं विकारश्च प्राधान्यादिश्च तेषु । जाल्मोऽसमीक्ष्यकारी । अमृतमय इति । आदिपदात्ताद्रूप्येपि ।

सू०–गोःपुरीषे ॥ गोमयम् ।

सुबोधिनी–गोः पुरीषे । गोशब्दान्मयट् स्यात् पुरीषेऽर्थे । गोः पुरीषं गोमयम् । पुरीषे किम् गव्यम् । पयसोण्यः ॥

सू०–नसन्धिय्वोर्युट्च ॥ संधिजयोर्यकारवकारयोस्सम्बन्धिनस्स्वरस्य न वृद्धिः । किन्तु तयोर्युडागमो यस्येट् वस्योट् पश्चाद्वृद्धिः । व्याकरणमधीते वेद वा वैयाकरणः । स्वश्वं वेद सौवश्वः । व्यासस्यापत्यं वैयासकिः ।

सुबोधिनी–नसंधिय्वोर्युट्च । संधानं संधिः नङ्कीति किप्रत्ययः । संधौ जातौ संधिजौ य् च व् च य्वौ, संधिजौ च तौ य्वौ च संधिय्वौ शाकपार्थिवादित्वान्मध्यमपदलोपः । माधवस्तु सन्धेर्य्वाविति षष्ठीतत्पुरुषमाह । इश्च उश्चानयोः समाहारो यु युसहितः ट् युट् द्वंद्वांते श्रूयमाणत्वात् टकारः प्रत्येकं संबध्यते । इट् उट् इत्यर्थः । वैयाकरणः । अण् इट् वृद्धिः । सुष्ठु अश्वः स्वश्वः स्वश्वं वेत्तीति सौवश्वः । अण् उट् वृद्धिः । वैयासकिः । अपत्ये इञ् । सुधातृव्यासेत्यकङ् इड्वृद्धी ।

तत्त्वदीपिका–न संधिय्वोर्युट्चेति । संधाने पूर्वपरयोर्व्यवधानेनोच्चारणं संधिः । नङ्कीइति किः संधौ जातौ संधिजौ । क्विब्वनियडा इति जनेर्डः । यूचवूचय्वौ संधिजौ च तौ य्वौ शाकपार्थिवादिः । इश्च उश्चानयोः समाहारो यु तेन सहितष्ट् युट् । द्वंद्वांते श्रूयमाणत्वात् प्रत्येकं संबंधः इट् उट् इति । सौस्थितिरित्यादिसिद्धये इदुतोरेव न संधिरिति नाशंकनीयम् । युट्करणसामर्थ्यात् । अन्यथा सवर्णदीर्घेण तद्विधाने व्यर्थं स्यात् । नच युड्विधिसामर्थ्यात्सवर्णदीर्घ एव न भविष्यतीति वाच्यम् । नञो वैयर्थ्यप्रसंगात् । युटः षष्ठ्यभावान्न वृद्धिनिषेधः । उत्सर्गसमानदेशा अपवादा भवंतीति न्यायात् । दध्यश्व इत्यादौ न दधिप्रियोऽश्वो दध्यश्वस्तस्यायमिति । चकारात्स्वगतस्वनध्वरस्वंव्यंगव्यडव्यवहारव्यायामप्रभृतीनां न निषेधयुटौ ।

सू०–द्वारादीनाञ्च ॥ द्वारादीनां सम्बन्धिनः स्वरस्य न वृद्धिः किन्तु तयोर्य्युडागमः । द्वारे नियुक्तो दौवारिकः । व्यल्कसस्येदं वैयल्कसम् । सौवरम् । शौवम् । सौवग्रामिकः । नैयग्रोधम् । सौवादुमृदवम् । शौवास्तिकम् ।

सुबोधिनी–द्वारादीनांच । द्वारादीनामसंधिजयोर्यकारवकारयोरपि युट् स्यात् पश्चाद्वृ-

द्धिश्च । यस्य इट् वस्य उट् इत्यर्थः । दौवारिकः । नियुक्तेऽर्थे इकः उट्वृद्धी । वैयल्कसम् ॥ इदमर्थेऽण् इट्वृद्धी । स्वरस्येदं सौवरं उट्वृद्धी । स्वग्रामे भवः सौवग्रामिकः इकः उट्-वृद्धी । न्यग्रोधस्येदं नैयग्रोधं अण् इट्वृद्धी । स्वादु च तत् मृदु च स्वादुमृदु स्वादुमृदुन इदं सौवादुमृदवम् । अण् वोऽव्ययस्वरे इत्यव् उट्वृद्धी । श्वो भवं शौवस्तिकं तिकण् उट्-वृद्धी । श्वापदस्येदं निपातनात्पूर्वपदस्य दीर्घः अण् वा उट्वृद्धी श्वापदं, शौवापदम् ॥

**तत्त्वदीपिका–द्वारादीनां च** । संधिजत्वाभावेपि तौ । वस्तुतस्त्वद्वारित्येव सुवचनम् । अन्तशब्दश्च पदांतपरतया व्याख्येयः । अनंत इत्यादौ तथैव व्याख्यानात् । नुडादिवत्तुडेव तु नागमः व्याख्यानतो विशेषप्रतीतेः । वैयाकरण इति । कारकादित्यण् यकारात्पूर्वमिट् तस्य पश्चाद् वृद्धिः । सौवरमिति । स्वरस्येदम् । शौवमिति । शुन इदम् । सौवग्रामिक इति । स्वग्रामे भवः । सौवादमृदवमिति । स्वादु च तत् मृदु च तस्येदम् । शौवस्तिकमिति । श्वोभवम् । श्वसस्तिकन् ।

**मू०–इतोजातार्थे ॥** लज्जा जातास्य लज्जितः । फलितः । तारकितः ।

**सुबोधिनी–इतोजातार्थे** । प्रथमांतान्नाम्नोऽस्य जातमित्यर्थे इतः प्रत्ययः स्यात् । यस्य लोपः इत्यालोपः । लज्जितः । फलानि जातान्यस्य फलितः । त्रपा जाताऽस्य त्रपितः । तारका जाता अस्य तारकितं नभः । एवं पुष्पितं पुलकितं रोमांचितम् ॥

**तत्त्वदीपिका–इतो जातार्थे इति** । अस्य जातमित्यर्थे इत इत्यर्थः ।

**मू०–तरतमेयस्विष्ठाःप्रकर्षे ॥** अतिशयेन शुक्लः शुक्लतरः । शुक्लतमः ।

**सुबोधिनी–तरतमेयस्विष्ठाः प्रकर्षे** । तरश्च तमश्च ईयसुश्च इष्ठश्च ते तरतमेयस्विष्ठाः । प्रकर्ष इति प्रकृत्यर्थे विशेषणम् । प्रकर्षणं प्रकर्षः । प्रकर्षश्च नाधिक्यं किंत्वऽभिभवो मतः । यद्यपि कृषिः केवलो विलेखने तथापि प्रपूर्वोऽभिभवेर्थे । यद्यपि द्रव्यस्य स्वतः प्रकर्षो न तथापि गुणप्रकर्षात् प्रकर्षो भवति । उक्तं च द्रव्यस्याऽव्यपदेशस्य य उपादीयते गुणः ॥ भेदको व्यपदेशाय तत्प्रकर्षोभिधीयते । धर्मयोगं विना व्यपदेष्टुमशक्यस्य द्रव्यस्य व्यपदेशाय योभेदको गुण उपादीयते प्रत्ययेन तस्य प्रकर्षोभिधीयते । गुण क्रियाजातिसंज्ञाभेदेन चतुष्टयीशब्दानां प्रवृत्तिस्तत्रगुणक्रिययोः प्रवृत्तिनिमित्तयोस्तत्प्रकर्षे प्रत्ययः । जातिशब्देभ्यस्तु जातेः सर्वत्रैकरूपत्वेन प्रकर्षाऽभावात्तत्सहचरितायैवाह । दोहादयो धर्मास्तत्प्रकर्षे प्रत्ययः । संज्ञाशब्देषु प्रकर्षो नास्ति शब्दरूपस्यैव प्रवृत्तिनिमित्तत्वात् । तस्य च सर्वत्र तुल्यत्वात् । गुणशब्दो यथा । यस्य सामान्यतः श्वेतो गुणः स शुक्लः । यस्य तदपेक्षयाधिकः स शुक्लतरः । यस्य ताभ्यामत्यधिकः स शुक्लतमः । यः किंचिज्जानाति स पटुः । ततोऽधिकं जानाति स पटुतरः । ततोप्यधिकं स पटुतमः । क्रियाशब्दो यथा । यो विलंबेन पचति स पाचकः । यस्तु ततः किंचिच्छीघ्रं पचति स पाचकतरः । यस्त्वतिशीघ्रं पचति स पाचकतमः । जातिशब्दो यथा । गौरयं हलं वहति । गोतरोऽयं हलं शकटं च वहति । गोतमोयं तां गोणीं च वहति । इष्ठेयसुप्रत्ययौ गुणवचनादेव संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न तरादयः । संख्या एकादिः । परिमाणं कुडवद्रोणादि । प्रमाणं हस्तवितस्त्यादि । उन्मानं तुलादिः । उक्तं च ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः ॥ आयामस्तु प्रमाणं स्यात्संख्याबाह्यं तु सर्वतः ॥ १ ॥

**तत्त्वदीपिका–तरतमेयस्विष्ठा इति** । तरश्च तमश्च ईयसुश्च इष्ठश्च ते । प्रकर्षणं प्रकर्षः । प्रकर्षश्चात्र नाधिक्यं किंत्वभिभवो मतः । यद्यपि केवलः कृषिर्विलेखनार्थस्तथाप्युपसर्गवशादभिभवार्थोपि । प्रकर्षस्य

सजातीयप्रतियोगिकत्वात्संज्ञाजातिवाचिकयोस्तदभावान्न तरादयः । तथा संख्यापरिमाणप्रमाणोन्मानवाचिभ्यो न । उक्तं च । ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्याबाह्यास्तु सर्वतः। ऊर्ध्वमानं तुलाः । परिमाणं द्रोणादि । प्रमाणं हस्त वितस्त्यादि । संख्या एकद्वावित्यादिः । यद्यपि सामान्येनतरादिविधानं तथापि एकस्य द्वयोश्च प्रकर्षे तरेयसू । बहूनां तमेष्ठाविति विवेकः । याचकादिभ्यस्तु ईयस्विष्ठौ नानभिधानात् ।

**मू०-ईयस्विष्ठौडितौ ॥** अतिशयेन लघुर्लघीयान् । लघिष्ठः ।

सुबोधिनी-ईयस्विष्ठौडितौ । एतौ डित्संज्ञकौ स्तः। अतिशयेन लघु ईयसौ टिलोपे उदित्त्वान्नुम् । न्सम्महत इति दीर्घः । सिलोपसंयोगांतलोपौ । लघीयान् । लघिष्ठः । इष्ठः ॥

**मू०गुर्वादेरिष्ठेमेयस्सुगरादिष्टचलोपश्च ॥** गुरोर्भावो। गरिमा अतिशयेन गुरुर्गरिष्ठः । गरीयान् । प्रियस्य भावः प्रेमा । अतिशयेन प्रियः प्रेष्ठः, प्रेयान् । अतिशयेन स्थूलस्स्थविष्ठः, स्थवीयान् । आतिशयेन प्रशस्यः, श्रेष्ठः, श्रेयान् । दीर्घः द्राघिष्ठः, द्राघीयान् । स्थिरः स्थेष्ठः, स्थेयान् । स्फिरः स्फेष्ठः, स्फेयान् । उरुः वरिष्ठः, वरीयान् । बहुलः बंहिष्ठः, बंहीयान् । वृद्धः वर्षिष्ठः, वर्षीयान् । तृप्रः त्रपिष्ठः, त्रपीयान् । वृन्दारकः वृन्दिष्ठः, वृन्दीयान् । दूरः दविष्ठः, दवीयान् । युवा यविष्ठः, यवीयान् ।

सुबोधिनी-गुर्वादेरिष्ठेमेयस्सुगरादिष्टचलोपश्च । गुरु १ प्रिय २ स्थूल ३ प्रशस्य ४ दीर्घ ५ स्थिर ६ स्फिर ७ गुरु ८ बहुल ९ वृद्ध १० तृप्र ११ वृंदारक १२ दूर १३ युवन्१४ अल्प १५ ह्रस्व १६ क्षिप्र १७ क्षुद्र १८ अंतिक १९ बाढ २० गुर्वादयः । गर् रांतः । प्रअदंतः । स्थोओदन्तः । श्रअदंतः । द्राघ अदंतः । स्थअदंतः । स्फअदंतः । वर् रान्तः बंह अदंतः । वर्ष् षांतः । त्रप् पांतः । वृंद अदन्तः । दो ओदन्तः । यो ओदंतः । अल्प् पांतः । ह्रस् सांतः । क्षेप् पांतः । क्षोद् दांतः । नेद अदंतः । साध अदंतः । एते गरादयः । एषामेकस्वराणां टिलोपो यस्य लोप इत्यलोपश्च न । द्विस्वराणां तु यस्य लोपो इत्यलोपो भवत्येव । गरिमा । इमन् । गरिष्ठः । इष्ठः । गरीयान् । ईयसुः । स्त्रियां तु उगित इतीप् । गरीयसी । प्रेमा । इमन् । प्रेष्ठः । इष्ठः । प्रेयान् ईयसुः । स्थविष्ठः । इष्ठः । स्थवीयान् । ईयसुः । श्रेष्ठः । इष्ठः । श्रेयान् । ईयसुः । द्राघिष्ठः । यस्यलोप इत्यलोपः । इष्ठः । द्राघीयान् ईयसुः । स्थेष्ठः । इष्ठः । स्थीयान् । ईयसुः । आतिशयेन स्फिरः । भूर्यऽदभ्रं पुरुस्फिरमितिहैमः । स्फेष्ठः । इष्ठः । स्फेयान् । ईयसुः । अतिशयेन उरुः वरिष्ठः । इष्ठः । वरीयान् । ईयसुः । आतिशयेन बहुलः यस्येत्यलोपः । बंहिष्ठः । इष्ठः । बंहीयान् । ईयसुः । आतिशयेन वृद्धः वर्षिष्ठः । इष्ठः । वर्षीयान् । ईयसुः । अतिशयेन तृप्रः पुरोडाशः तृप्रं दुःखं त्रपिष्ठः । इष्ठः । त्रपीयान् । ईयसुः । आतिशयेन वृंदारकः । वृंदारकौ रूपिमुख्याविव्यमरः । यस्येत्यलोपः बंहिष्ठः । इष्ठः बंहियान् । ईयसुः । अतिशयेन दूरः दविष्ठः इष्ठः । दवीयान् । ईयसुः । आतिशयेन युवा यविष्ठः । इष्ठः । यवीयान् । ईयसुः ॥

तत्त्वदीपिका-ष्टचलोपश्चेति । टेरलोपष्टचलोपः ईयस्विष्ठयोर्डित्त्वाट्टिलोपे प्राप्ते निषेधः । कल्पादिप्रपंच एवैतानीति बोध्यम् ।

**मू०-युवाल्पयोःकन्वा ॥** कनिष्ठः । कनीयान् । आल्पिष्ठः । अल्पी-

यान् । कनिष्ठः । कनीयान् । ह्रस्वः । ह्रसिष्ठः । ह्रसीयान् । क्षिप्रः क्षेपिष्ठः । क्षेपीयान् । क्षुद्रः । क्षोदीयान् । अन्तिकः । नेदिष्ठः । नेदीयान् । बाढः । साधिष्ठः । साधीयान् ।

सुबोधिनी—युवाल्पयोःकन्वा । एतयोः कनादेशो वा स्यात् इष्ठेयस्वोः परतः । कनिष्ठः । इष्ठः । कनीयान् । ईयसुः । अतिशयेनाल्पः अल्पिष्ठः । इष्ठः । अल्पीयान् । ईयसुः । कनिष्ठः । कनीयान् । अतिशयेन ह्रस्वः ह्रसिष्ठः । इष्ठः । ह्रसीयान् । ईयसुः । अतिशयेन क्षिप्रः । क्षेपिष्ठः । इष्ठः । क्षेपीयान् । ईयसुः । अतिशयेन क्षुद्रः क्षोदिष्ठः । इष्ठः । क्षोदीयान् ईयसुः । आतिशयेनांतिकः यस्येत्यलोपः । नेदिष्ठः । इष्ठः । नेदीयान् । ईयसुः । अतिशयेन बाढः यस्येत्यलोपः । साधिष्ठः । इष्ठः । साधीयान् । ईयसुः ॥

**सू०—वृद्धप्रशस्ययोर्वा ॥**

सुबोधिनी—वृद्धप्रशस्ययोर्वा । ज्या स्यादिष्ठेयस्वोः परतः ॥

**सू०—ईलोपोज्याशब्दादीयसः ॥** ज्याशब्दात्परस्येयस ईकारस्य लोपः । अतिशयेन वृद्धः प्रशस्यो वा ज्यायान् । ज्येष्ठः ।

सुबोधिनी—ईलोपोज्याशब्दादीयसः । ईयसः किम् । ज्येष्ठः । प्रियोरुबहुलगुरुदीर्घाणां लोहितादित्वादिमन् । प्रेमेत्यादि ॥

तत्त्वदीपिका—ईलोपोज्याशब्दादिति । आदेशादित्यर्थः प्रकरणात् ।

**सू०—बहोरिष्ठेर्यिः ॥** बहोरुत्तरस्येकारस्य यिरादेशो भवति ।

सुबोधिनी—बहोरिष्ठेर्यिः । इष्ठेति लुप्तषष्ठीकं पदम् । बहुशब्दादिष्ठप्रत्ययेकारस्य यिः स्यात् ईयसुप्रत्यये परे ईकारस्य लोपश्च ।

तत्त्वदीपिका—बहोरिति । इष्ठस्य इष्ठेति लुप्तषष्ठीकमित्याशयेनाह बहोरुत्तरस्येष्ठस्येकारस्येति ।

**सू०—बहोर्भूश्च ॥** भूयिष्ठः । भूयान् ।

सुबोधिनी—बहोर्भूश्च । बहोः स्थाने भूः स्यादिष्ठेयस्वोः परतः । अतिशयेन बहुः भूयिष्ठः । इष्ठः । भूयान् । ईयसुः ॥

**सू०—विन्मतोर्लुक् ॥**

सुबोधिनी—विन्मतोर्लुक् । विनो मतोश्च लुक् स्यादिष्ठेयस्वोः परतः । मतुग्रहणं वतोरप्युपलक्षणं बोध्यम् । अतिशयेन स्रग्वी स्रजिष्ठः । स्रजीयान् । अतिशयेन त्वग्वान् त्वचिष्ठः । त्वचीयान् ॥

**सू०—किमेऽव्ययादाख्याताच्चतरतमयोराम्वद्रव्यप्रकर्षे ॥** किंतराम् । किन्तमाम् । कुतस्तराम् । कुतस्तमाम् । उच्चैस्तरां गायति । उच्चैस्तमाम् । पचतितराम् । पचतितमाम् । पठतितराम् । पठतितमाम् । द्रव्यप्रकर्षेतु । उच्चैस्तमस्तरुः ।

सुबोधिनी-किमोऽव्ययादाख्याताच्चतरतमयोराम्वद्रव्यप्रकर्षे । किमऽव्ययाख्यातेभ्यः । परौ यौ तरतमौ तदंतेभ्य आमुस्यात् न तु द्रव्यप्रकर्षे । उकार उच्चारणार्थः । निरनुबंधग्रहणेन सानुबंधस्येति परिभाषया नुड्विधौ नास्य ग्रहणम् । अन्यथा पचतितराणामिति स्यात् ॥

तत्त्वदीपिका-किमोऽव्ययादाख्याताच्चतरतमयोराम्वद्रव्यप्रकर्षे इति । आमंतस्य क्त्वार्थतत्वादव्ययत्वं बोध्यम् । तेन पचतितरामित्यादौविभक्तेर्लुक् ।

**मू०-परिमाणेदघ्नट्द्वयसट्मात्रटः ॥** जानुदघ्नम् । शिरोद्वयसम् । पुरुषमात्रम् ।

सुबोधिनी-प्रमाणेदघ्नट्द्वयसट्मात्रटः । प्रथमान्तान्नाम्नः तत्प्रमाणमस्येत्यर्थे एते स्युः । आयामस्तु प्रमाणं स्यादिति नेह गृह्यते किंतु प्रमाणमिह परिच्छेदकमात्रं तत्र मात्रट् । आद्यौतूर्ध्वमान एव भवतः तथैव वृद्धैः स्वीकृतत्वात् । ट्वित इति स्त्रियामीप् । जानु प्रमाणमस्य जानुदघ्नम् । शिरः प्रमाणमस्य शिरोद्वयसम् । पुरुषः प्रमाणमस्य पुरुषमात्रं जलम् ॥

तत्त्वदीपिका-प्रमाणे इति । अत्र च प्रमाणशब्देन परिच्छेदकमात्रं तत्र मात्रट् । द्वयसट्दघ्नटौ तूर्ध्वमान एव नतु तिर्यङ्मानादाविति विवेकः ॥

**मू०-पुरुषहस्तिभ्यामणूच ॥** पौरुषम् । हास्तिनम् ॥

सुबोधिनी-पुरुषहस्तिभ्यामणूच । आभ्यां प्रमाणेर्थेणपि स्यात् ॥

तत्त्वदीपिका- हास्तिनमिति । हस्ती प्रमाणमस्येति विग्रहः । नोवेत्यत्र वेत्यस्य व्यवस्थितत्वाट्टिलोपादि न ।

**मू०-वत्वन्तात्स्वार्थेद्वयसट्मात्रटौ ॥** तावद्वयसम् । तावन्मात्रम् ।

सुबोधिनी-वत्वंतात्स्वार्थेद्वयसट्मात्रटौ । वतुप्रत्ययांतात्प्रकृत्यर्थे एतौ स्तः । तावदेव तावद्वयसम् ॥

तत्त्वदीपिका-तावद्वयसमिति । तावदेवेत्यर्थः ।

**मू०-द्वयोर्बहूनांचैकस्यनिर्द्धारणेकिमादिभ्योडतरडतमौ ॥** भवतोः काण्वः कतरः । भवतां तांत्रिकः कतमः । भवतोर्यतरस्तार्किकः । ततर उद्गृह्णातु ।

सुबोधिनी-द्वयोर्बहूनांचैकस्यनिर्द्धारणेकिमादिभ्योडतरडतमौ । किमूयत्तदेकेभ्यो द्वयोर्मध्येएकस्य निर्द्धारणे डतरः । बहूनां मध्ये एकस्य निर्द्धारणे डतमश्च स्यात् । द्वयोर्बहूनामिति निर्द्धारणे षष्ठी । निर्द्धार्यमाणवाचिभ्य एवैतावभिधानस्वभावात् । कतरः काण्व इति जात्यानिर्द्धारणम् । तंत्रमधीते वेत्ति वा तांत्रिकः कतम इति गुणेन निर्द्धारणम् । तर्कमधीते वेत्ति वा तार्किको यतर इति गुणेन निर्द्धारणम् । ततरस्तर्कमुद्गृह्णातु । कतरोऽध्यापक इति क्रियया निर्द्धारणम् । कतरो देवदत्त इति संज्ञया निर्द्धारणम् । एवं यतमः ततमः । अनयोरेकतरो मैत्रः । एषामेकतमः । पक्षे किंशब्दस्यकः । यच्छब्दस्य यः । तद्शब्दस्य सः ।

आख्याताव्ययेत्यकप्रत्यये तु किमः कः । यकः । सकः । कक इति तु नोक्तमकसहित-स्यापि किमो भाष्ये कादेशविधानात् ॥

तत्त्वदीपिका–द्वयोरित्यादि । द्वयोर्मध्ये एकस्य निर्द्धारणे डतरः । बहूनां मध्ये एकस्य निर्द्धारणे डतम इत्यर्थः । कतर इति । डित्वाट्टिलोपः ।

**मू०– संख्येयविशेषावधारणेद्वेस्तीयः ॥ द्वयोः पूरणे द्वितीयः ।**

सुबोधिनी–संख्येयविशेषावधारणेद्वेस्तीयः । संख्यातुं योग्यः संख्येयः । विशेषणावधार-णं विशेषावधारणम् । संख्येयस्य विशेषावधारणं संख्येयविशेषावधारणं तस्मिन्नर्थे द्विशब्दात्ती-यप्रत्ययः स्यात् । पूरणे इत्यधिकारोयम् ॥

तत्त्वदीपिका– संख्येइति । संख्यातुमर्हं संख्येयम् । तस्य विशेषस्तत्पूरकस्तस्यावधारणे इत्यर्थः ।

**मू०–त्रेस्तृच ॥ तृतीयः ।**

सुबोधिनी–त्रेस्तृच । त्रिशब्दात्तीयःस्यात् त्रेःस्थाने तृचादेशः । त्रयाणां संख्यापूरणः तृतीयः ॥

तत्त्वदीपिका–त्रेस्तृचेति । संप्रसारणमिति विहाय तृ चेत्युक्तिस्तु लाघवाय । वस्तुतस्तु तृचेत्युक्तौ तृ-इत्यस्य प्रत्ययांतरत्वशंकानिराकरणाय तदुक्तिः ।

**मू०–षट्कतिकतिपयचतुर्भ्यस्थट् ॥ षष्ठः । कतिथः । कतिपयथः । चतुर्थः ।**

सुबोधिनी–षट्कतिकतिपयचतुर्भ्यस्थट् । एभ्यस्थट् स्यादुक्तेऽर्थे । षण्णां पूरणः षष्ठः । कतीनां पूरणः कतिथः । कतिपयानां पूरणः कतिपयथः । चतुर्णां पूरणः चतुर्थः । टित्वात् स्त्रियामीप्युष्मदस्मदोःषष्ठीचतुर्थीति निर्द्देशात् षष्ठे षकारस्य जश्त्वं चतुर्थे रेफस्य विसर्गश्च न॥

तत्त्वदीपिका– षष्ठ इति । कत्यादित्वादुत्वाभावः । एवं चतुर्थ इत्यत्रापि विसर्गाभावः ।

**मू०–चतुरोयेयौचस्यचलोपः ॥ तुर्यः । तुरीयः ।**

सुबोधिनी–चतुरोयेयौचस्यचलोपः । चतुरःशब्दात् य ईय एतौ स्तः । चकाराकारयो-र्लोपश्च । चतुर्णां पूरणः तुर्यः । तुरीयः ॥

तत्त्वदीपिका–तुर्य इति । चतुर्णां पूरण इति विग्रहः ।

**मू०–पञ्चादेर्म्मट् ॥ पञ्चमः । सप्तमः ।**

सुबोधिनी–पंचादेर्मट् । पंचप्रभृतिभ्यो मट् स्यात् । पंचानां पूरणः नाम्नो नोलोपशिति नलोपः । पंचमः । सप्तानां पूरणः सप्तमः । अष्टानां पूरणः अष्टमः । नवानां पूरणः नवमः । दशानां पूरणः दशमः । टित्वात् स्त्रियामीप् । दशमी ॥

**मू०–एकादशादेर्डट् ॥ एकादशः । द्वादशः ।**

सुबोधिनी–एकादशादेर्डट् । एकादशशब्दप्रभृतिभ्यो डट् स्यात् डित्वाट्टिलोपः-टित्वा-दीप् । एकश्च दशचेति सहादेरित्यात्वं एकादशानां पूरणः एकादशः । द्वौ च दशचेति द्व्यधिका दशेतिवा ॥

तत्त्वदीपिका-एकादश इति । एकादशादेरिति निर्देशादेकशब्दस्यात्वम् ।

मू०-द्व्यष्टनोरात्वंसंख्यायामुत्तरपदे ॥ द्वादश । अष्टादश ।

सुबोधिनी-द्व्यष्टनोरात्वंसंख्यायामुत्तरपदे । एतयोरात्वं स्यात् । बहुव्रीहौ अशीतिपरे च न । द्वादश । बहुव्रीहौ किं । द्विरावृत्ता दशेति सुप्रत्ययार्थे बहुव्रीहिः । द्विदशः । डप्रत्ययः । अशीतिपरे किं । द्व्यशीतिः । प्राक्शताद्वक्तव्यम् । नेह द्विशतं । द्विसहस्रं । द्वादशानां पूरणः द्वादशः ॥

मू०-त्रेस्त्रयस् ॥ त्रयोदश । चतुर्दशः । पञ्चदशः । षोडशः । सप्तदशः ।

सुबोधिनी-त्रेस्त्रयस् । त्रिशब्दस्य त्रयस् स्यात् । बहुव्रीहौ अशीतिपरे च न । त्रयश्च दशचेति त्रयोदश । बहुव्रीहौ तु त्रिर्दशेति त्रिदशाः सुप्रत्ययार्थे बहुव्रीहिः । अशीतौ तु त्र्यशीतिः । प्राक्शतादित्येव त्रिशतं । त्रिसहस्रं । त्रयोदशानां पूरणः त्रयोदशः । चतुर्दशानां पूरणः चतुर्दशः । पंचदशानां पूरणः पंचदशः । षोडशानां पूरणः षोडशः । सप्तदशानां पूरणः सप्तदशः । अष्टादशानां पूरणः अष्टादशः ।

मू०-विंशत्यादेर्वातमट् ॥ विंशतितमः । एकेन ऊना विंशतिः एकोनविंशतिः । एकोनविंशतेः संख्यापूरक एकोनविंशतितमः ।

सुबोधिनी-विंशत्यादेर्वा तमट् । विंशतिप्रभृतिभ्यो वा तमट् स्यात् । पक्षे एकादशादेरिति डट् । टित्त्वादीप् । डट्प्रत्यये तु एकोनविंशतेः पूरणः ॥

मू०-विंशतस्तिलोपोडिति ॥ एकोन विंशः । त्रिंशत्तमः । त्रिंशः । द्वाभ्यामधिका अशीतिर्द्व्यशीतिः । द्व्यशीतेः संख्यापूरको द्व्यशीतितमः । द्विचत्वारिंशत्तमः । पञ्चाशत्तमः । षष्टेःसङ्ख्यापूरणः षष्टितमः । सप्ततितमः । नवतितमः ।

सुबोधिनी-विंशतेस्तिलोपोडिति । विंशतिशब्दस्य ति इत्यस्य लोपः स्यात् डिति प्रत्यये। एकोनविंशः । तमटि एकोनविंशतितमः । विंशतेः पूरणः विंशतितमः । डति तु विंशः । एकविंशतेः पूरणः एकविंशतितमः । एकविंशः । एवं द्वाविंशतितमः । द्वाविंशः । त्रयोविंशतितमः । त्रयोविंशः । चतुर्विंशतितमः । चतुर्विंशः। पंचविंशतितमः । पंचविंशः । षड्विंशतितमः । षड्विंशः । सप्तविंशतितमः । सप्तविंशः। अष्टाविंशतितमः । अष्टाविंशः। किंच । पंक्तिविंशतित्रिंशच्चत्वारिंशत्पंचाशत्षष्टिसप्तत्यशीतिनवतिशतमेते निपातेन सिद्धाः। एकोनत्रिंशतः पूरणः एकोनत्रिंशत्तमः। एकोनत्रिंशः। त्रिंशतः पूरणः त्रिंशत्तमः। त्रिंशः। एवं एकत्रिंशत्तमः। एकत्रिंशः । द्वात्रिंशत्तमः। द्वात्रिंशः। त्रयस्त्रिंशत्तमः त्रयस्त्रिंशः। चतुस्त्रिंशत्तमः। चतुस्त्रिंशः। पंचत्रिंशत्तमः। पंचत्रिंशः । षट्त्रिंशत्तमः । षट्त्रिंशः । सप्तत्रिंशत्तमः । सप्तत्रिंशः । अष्टात्रिंशत्तमः । अष्टात्रिंशः । एकोनचत्वारिंशत्तमः । एकोनचत्वारिंशः । द्व्यष्टनोरात्वं वा । त्रेस्त्रयश्च वा चत्वारिंशत्प्रभृतौ परे । चत्वारिंशत्तमः । चत्वारिंशः । एकचत्वारिंशत्तमः । एकचत्वारिंशः । एवं सर्वत्र डट्तमटौ । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । त्रिचत्वारिंशत् । त्रयश्चत्वारिंशत् । पंचचत्वारिंशत् । षट्चत्वारिंशत् । सप्तचत्वारिंशत् । अष्टचत्वारिंशत् ।

अष्टाचत्वारिंशत् । एकोनपंचाशत् । पंचाशत् । एकपंचाशत् । द्विपंचाशत् । द्वापंचाशत् । त्रिपंचाशत् । त्रयःपंचाशत् । चतुःपंचाशत् । पंचपंचाशत् । षट्पंचाशत् । सप्तपंचाशत् । अष्टपंचाशत् । अष्टापंचाशत् । एकोनषष्टिः । षष्टिः । एकषष्टिः । द्वाषष्टिः । द्विषष्टिः । त्रिषष्टिः । त्रयःषष्टिः । चतुःषष्टिः । पंचषष्टिः । षट्षष्टिः । सप्तषष्टिः । अष्टषष्टिः । अष्टाषष्टिः एकोनसप्ततिः । सप्ततिः । एकसप्ततिः । द्विसप्ततिः । द्वासप्ततिः । त्रिसप्ततिः । त्रयःसप्ततिः । चतुःसप्ततिः । पंचसप्ततिः । षट्सप्ततिः । सप्तसप्ततिः । अष्टसप्ततिः । अष्टासप्ततिः। एकोननवतिः । नवतिः । एकनवतिः । द्विनवतिः । द्वानवतिः । त्रिनवतिः । त्रयोनवतिः । चतुर्णवतिः । पंचनवतिः । षण्णवतिः । सप्तनवतिः । अष्टनवतिः । अष्टानवतिः । एकोनशतं । शतम् । शतस्य पूरणः शततमः ॥

**सू०-शतादेर्नित्यम् ॥** शततमः ।

सुबोधिनी-शतादेर्नित्यम् । शतप्रभृतिभ्यस्तमडेव स्यात् न डट् । असंख्यादेः षष्टिशब्दाच्च नित्यन्तमट् । षष्टितमः । संख्यादेः षष्टेस्तु डट्तमटौ । एकषष्टः । एकषष्टितमः ।

**सू०-संख्यायाःप्रकारेधा ॥ द्विधा । त्रिधा । चतुर्धा । दशधा ।**

सुबोधिनी-संख्यायाःप्रकारेधा । संख्यावाचिशब्दात्प्रकारेऽर्थे धाप्रत्ययः स्यात । द्वौ प्रकारौ द्विधा । त्रयः प्रकारास्त्रिधा । चतुःप्रकारश्चतुर्द्धा । दशप्रकारा दशधा । क्त्वाद्यंतं चेत्यव्ययत्वाद्विभक्तेर्लुक् ॥

**सू०-द्वित्रिभ्यामेधाधमुञ्‌वा ॥ द्वेधा । त्रेधा । द्वैधम् । त्रैधम् ।**

सुबोधिनी-द्वित्रिभ्यामेधाधमुञ्‌वा । आभ्यामेतौ स्तः प्रकारेऽर्थे पक्षे धा । द्वौ प्रकारौ यस्य लोप इतीकारलोपः । द्वेधा । धमुञ् । उकारउच्चाणार्थः । द्वैधं । द्विधा । त्रयः प्रकाराः त्रेधा । त्रैधं । त्रिधा ॥

**सू०-एकाद्ध्यमुञ्वा ॥ ऐकध्यम् । एकधा ।**

सुबोधिनी-एकात्ध्यमुञ्वा । एकशब्दात् ध्यमुञ् वा स्यात् । उकार उच्चारणार्थः । पक्षे धा । एकः प्रकारः ऐकध्यं । एकधा ।

**सू०-एकादाकिन्नसहाये ॥ एकाकी ।**

सुबोधिनी-एकादाकिन्नसहाये । असहायवाचिन एकशब्दादाकिन् स्यात् । यस्यलोप इत्यलोपः । एकाकी । कप्रत्ययोऽपि एककः ॥

**सू०-क्रियायाआवृत्तौकृत्वसु ॥ पञ्चकृत्वः । सप्तकृत्वः ।**

सुबोधिनी-क्रियायाआवृत्तौकृत्वसु । संख्यावाचिशब्दात् क्रियाया आवृत्तावर्थे कृत्वसु प्रत्ययः स्यात् पौनःपुन्ये गणनमावृत्तिः । पंचवारान् पंचकृत्वः । सप्तवारान् सप्तकृत्वः । क्त्वाद्यंतंचेत्यव्ययत्वाद्विभक्तेर्लुक् । वारशब्दस्य क्रियोत्पत्त्याधारकालवाचित्वात्कालाध्वनोरिति द्वितीया । संख्यायाः किम् । भूरिवारान् भुंक्ते । भूरिशब्दस्य लौकिकसंख्यावाचित्वेपि नेह ग्रहणम् ॥

**मू०–द्वित्रिचतुर्भ्यस्सुः ॥ द्विः । त्रिः । चतुः ।**

सुबोधिनी–द्वित्रिचतुर्भ्यस्सुः । एभ्यः सुप्रत्ययः स्यात् क्रियाया आवृत्तौ गणने । उकार उच्चारणार्थः । कृत्वसोऽपवादोयं द्वौ वारौ । द्विः । त्रीन् वारान् त्रिः । चतुरोवारानितिरात्सस्येति सलोपः चतुः । कत्वार्थतंचेत्यव्ययत्वाद्विभक्तेर्लुक बहोर्वा धाऽऽसन्नकाले । पक्षे कृत्वस् बहुधा । बहुकृत्वो वा दिवसस्य भुंक्ते । आसन्नकाले किं । बहुकृत्वो मासस्यभुंक्ते । दिवसस्येति संबंधे षष्ठी ।

**मू०–एकस्य सकृदादेशश्च ॥ एकवारं सकृत् ।**

सुबोधिनी–एकस्यसकृदादेशश्च । एकशब्दस्य स्थाने सकृदित्यादेशः स्य ।च्चात्सुप्रत्ययः संयोगांतस्येति सुलोपः । गुरुत्वात्सर्वस्यादेशः । एकवारमिति सकृत् ।

**मू०–बह्वल्पार्थात्कारकाच्छस् ॥ बहुशः । अल्पशः ।**

सुबोधिनी–बह्वल्पार्थात्कारकाच्छस् । बहु चाल्पं च बह्वल्पे बह्वल्पेअर्थौ यस्य तद्बह्वल्पार्थं तस्माद्बह्वल्पार्थात् कारकात् शस् स्यात् । बहुभ्य इति बहुशः । अल्पेभ्यइत्यल्पशः । दानपात्रे चतुर्थी । बह्वल्पार्थात् किं । गां ददाति । अर्थग्रहणात्पर्यायेभ्यो विशेषेभ्यश्च शस् । भूरिशो ददाति । त्रिंशः । कारकात्किं । बहूनां स्वामी । अल्पानां स्वामी ॥

तत्त्वदीपिका–कारकादिति । तेन बहूनां स्वामीत्यत्र न ।

**मू०–संख्यैकवचनाभ्यांवीप्सायाम् ॥ द्वौद्वौ इति द्विशो ददाति । प्रस्थशः । माषशः ।**

सुबोधिनी–संख्यैकवचनाभ्यांवीप्सायाम् । संख्यापरिमाणवाचककारकाभ्यां वीप्सायामर्थे शसस्यात् । द्वौ द्वाविति द्विशः । प्रस्थं प्रस्थमिति प्रस्थशः । माषं माषमिति माषशः । संख्यापरिमाणाभ्यां किं । घटंघटं ददाति । वीप्सायां किं । द्वौ ददाति । कारकात्किं । द्वयोर्द्वयोः स्वामी ॥

तत्त्वदीपिका–संख्यैकवचनाभ्यामिति । सख्यां च एकवचनं च संख्यैकवचने ताभ्याम् । प्रस्थश इति । प्रस्थप्रस्थमित्यर्थः । एकवचनग्रहणेन वृत्तावेकार्थता नियता । परिमाणशब्दा एव ग्राह्यास्तेनेह न । घटं घटमिति । घटादयो हि जातिशब्दानैकार्था भवंति । जातियोगस्यैकानेकसाधारणत्वात् । केचित्तु कुंडशो ददातीति प्रयुंजाना जातिशब्देभ्योपि मन्यंते । एकैकश इत्यादिप्रयोगास्तु प्रामादिका एव शस्प्रत्ययेनैव वीप्सावगतेः । स्वार्थिकशसा तु न क्षतिः । अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । सहस्रशः समेतानां परिषत्त्वं नविद्यते । इत्यत्रतुसहस्रं सहस्रं ये समवेतास्तेषामपि परिषत्त्वं नेत्यर्थः ॥ इति समवायक्रियां प्रति सहस्रस्य कर्तृत्ववीप्सास्त्येवेति ।

**मू०–तयडयटौसंख्यायाअवयवे ॥ द्वाववयवौ यस्य द्वितयम् । त्रितयम् । चतुष्टयम् । चतुष्टयी ।**

सुबोधिनी–तयडयटौसंख्यायाअवयवे । अवयवे वर्तमाना या संख्या तद्वाचिनः प्रथमांतात् षष्ठ्यर्थे तयडयटौ स्तः । टकारः । ङित्तइतीबर्थः । द्वितयं । यस्येतीलोपः । द्वयं ।

त्रयोऽवयवा यस्य त्रितयं । त्रयम् । उभाववयवौ यस्य उभयं नित्यमत्रायट् । चत्वारोऽवयवा यस्याः सा रेफस्य विसर्गे च सत्वे ष्टुत्वं । चतुष्टयी ॥

तत्त्वदीपिका-तयडयटाविति । तयट् च अयट् च तयडयटौ । टित्त्वमीबर्थम् । यत्तु प्राचा तयायटा-विति पठितम् । यच्च तद्व्याख्यातृभिर्वासुदेवादिभिरुक्तम् । द्वितयीत्यत्र नदादित्वादीप् । द्वयीत्यत्र तु टित्त्वादिति तत्रैपो द्विहेतुकत्वेन गौरवादुपेक्षितम् । चतुष्टयामिति । चत्वारोऽवयवा अस्येति विग्रहः रेफस्य विसर्गे तस्य सत्वे षत्वे ष्टुत्वाद्रूपसिद्धिः ।

**सू०-स्त्रीपुंसाभ्यान्नञ्स्नञौ ॥ स्त्रियां भवस्स्त्रैणः । पुंसि भवः पौंस्नः ।**

सुबोधिनी-स्त्रीपुंसाभ्यांनञ्स्नञौ । आभ्यामेतौ स्तः भवाद्यर्थे । संयोगांतस्येति सलोपः । स्त्रैणः । पौंस्नः । अथ विभक्तिनामकप्रत्यया उच्यंते । इह वक्ष्यमाणप्रत्ययानां विभक्तिसंज्ञा बोध्या । इदमईश्विभक्तौ इदम एतेतौ स्तो रथयोः । ईशोपवादोयं । एतदोयं एतदो अश् विभक्तौ शित्त्वात्सर्वादेः । एतद् एतेतौ स्तो रथयोः । अशोपवादोयं । सर्वस्य सो दादे । किमः कुः तहयोः पंचम्यर्थे । किंसर्वादिबहुभ्यस्तसृवाऽद्व्यादिभ्यः । द्व्यादिपर्युदासात् किमः पृथग्ग्रहणं । कस्मादिति तसि कुः । कुतः । यस्मादिति तसि त्यदादेरित्यः । यतः । तस्मा-दिति ततः । अस्मादिति तसि इतः । एतस्मादिति तसि अशादेशः अतः । अमुष्मादिति अदसस्तासित्यदाद्यत्वेमत्वे उत्वेच अमुतः । बहोरितिबहुतः । द्व्यादेस्तुद्वाभ्यामित्यादि । सर्वोभयार्थाभ्यां पर्यभिभ्यां तस् । परितः सर्वतइत्यर्थः । अभितः उभयतइत्यर्थः । सप्तम्यर्थे किं । सर्वादिबहुभ्यस्तोद्व्यादिभ्यः । इदमः सप्तम्यर्थेहः । त्रस्यापवादः । इशादेशः । अस्मि-न्निति इह । कस्मिन्निति कुत्र । किमः सप्तम्यर्थे अः । किमः क्व । यस्येत्यलोपः । क्वछंद-सिकिमोहः सप्तम्यर्थे । कुह । एतस्मिन्निति एतदोऽश् । अत्र । पंचमीसप्तमीतर विभक्त्यंतादपि तसादयो दृश्यंते भवादादियोगे एव सभवान् । ततोभवान् तत्रभवान् । तंभवंतं ततोभवंतं । तत्रभवंतम् । इत्यादि । एवं दीर्घायुः । देवानां प्रियः आयुष्मान् । एतैर्योगेपि । सर्वैकान्यार्किंयत्तद्व्यः कालार्थेभ्यः सप्तम्यर्थे दा । सर्वस्मिन् काले इति सादेशो वा । सदा । सर्वदा । एकस्मिन्काले इति एकदा । अन्यस्मिन्काले इति अन्यदा । कस्मिन् काले इति त्यदादेरित्यत्वं । कदा । यस्मिन्काले इति यदा । तस्मिन् काले इति तदा । कालार्थेभ्य इति किं । सर्वत्र देशे । अस्मिन् काले इति कालवाचकादिदमः सप्तम्यर्थे र्हि प्रत्ययः । र्हप्रत्ययस्यापवादोयं । एतादेशः एतर्हि । कालेति किं । इह देशे । कालवाचकादिदमः सप्तम्यर्थेऽधुनादानीं प्रत्ययौ च । इशादेशः यस्य लोप इति लोपः अधुना । इशादेशः । इदानीं । कालवाचकात्तदा सप्तम्यर्थेदानींप्रत्ययश्च । तस्मिन्काले त्यदादेरित्यत्वं तदानीं । किमयत्तदेतद्भ्योऽनद्यतनकालवाचकेभ्यः सप्तम्यर्थे र्हिप्रत्ययो वा कस्मिन् काले इति त्यतादेरित्यत्वं कर्हि । पक्षे दा कदा । यस्मिन् काले यर्हि । यदा । तस्मिन् काले तर्हि । तदा । एतस्मिन्काले एतादेशः । एतर्हि । समानेऽह्नि इति सहादेरित्यनेन समानस्य सः । समानशब्दात् सप्तम्यंतस्याऽहन्शब्दस्यार्थे द्यस् निपात्यते । सद्यः । पूर्वस्मिन् वत्सरे इति पूर्वतरे वत्सरे इति च सहादेरित्यनेन पूर्वपूर्वतरयोः पर इत्यादेशो निपात्यते संवत्सरेऽर्थे पूर्व-पूर्वतरशब्दाभ्यां उत् आरिप्रत्ययौ । यस्येत्यलोपः । परुत् । परारि । अस्मिन् संवत्सरे इति संवत्सरेऽर्थे इदम् शब्दात् समसण् प्रत्ययः । इशादेशः । आदिवृद्धिः । षत्वं ऐषमः । पर-स्मिन्नहनीति परस्मादहनि इत्यर्थे एद्यविप्रत्ययो निपातनात् । परेद्यवि । अस्मिन्नहनीति

इदम्शब्दात् द्यप्रत्ययो निपातनादशादेशश्च । अद्य । पूर्वअन्यअन्यतरइतरअपरअधरउभउत्तरइत्यष्टभ्योऽहनीत्यर्थे एद्युस् प्रत्ययो निपातनात् । यस्येत्यलोपः । पूर्वस्मिन्नहनीति पूर्वेद्युः । अन्यस्मिन्नहनीति अन्येद्युः । अन्यतरस्मिन्नहनीति अन्यतरेद्युः । इतरस्मिन्नहनीति इतरेद्युः । अपरस्मिन्नहनीति अपरेद्युः । अधरस्मिन्नहनीति अधरेद्युः । उभयोरह्नोरिति उभयेद्युः । उभयाद्द्युः प्रत्ययः उभयद्युः । अद्व्यादिभ्यः किं । सर्वादिबहुभ्यः प्रकारेऽर्थेवर्तमानेभ्यः स्वार्थेथाप्रत्ययः । सामान्यस्य भेदको विशेषः प्रकारः । यथा । किमिदमेतद्भ्यः प्रकारेऽर्थे वर्तमानेभ्यः स्वार्थेथम्प्रत्ययः । थाप्रत्ययस्यापवादोयं । केनप्रकारेण त्यदादेरित्यः । कथम् । अनेन प्रकारेण एतेन प्रकारेण वा इदमेतदोरित् इत्थम् । अव्ययत्वाद्विभक्तेर्लुक्सर्वत्र ॥ इति विभक्तिनामकाः प्रत्ययाः ॥ दिक्देशकालवृत्तिभ्योदिशिरूढेभ्यःशब्देभ्यः सप्तमी पंचमी प्रथमाविभक्त्यर्थे स्तात्प्रत्ययः । पूर्वाधरावरेभ्योऽस् प्रत्ययोपि । पुरअधाऽवादेशाश्च । अस्तादसोः परयोः । पूर्वस्यां पूर्वस्याः पूर्वा वा दिक् पुरः । अस्प्रत्ययः । पुरस्तात् । अस्तात्प्रत्ययः । पूर्वशब्दादतस् प्रत्ययः पुरादेशश्च वा । पुरतः । स्यात्पुरः पुरतोग्रत इत्यमरः । पुरतः प्रथमे चाग्रे इति विश्वश्च । अधरस्यां अधरस्याः अधरा वा अधः । अस् । अधस्तात् अस्तात् प्रत्ययः । अवरस्यां अवरस्याः अवरा वा । अवः । अस् । अवस्तात् । अस्तात् । अवरस्यास्तात् परेऽव् वा । अवस्तात् । अवरस्तात् । एवं देशे काले च । दिशिरूढेभ्यः किम् । ऐंद्र्यां वसति । सप्तम्याद्यर्थे किं । पूर्वं ग्रामं गतः । दिगादिवृत्तिभ्यः किं । पूर्वस्मिन् गुरौ वसति । दक्षिणोत्तराभ्यामतस् । अस्तात्प्रत्ययस्यापवादः । दक्षिणस्यां दक्षिणस्याः दक्षिणा वा दिक् दक्षिणतः । उत्तरस्यां उत्तरस्याः उत्तरा वा उत्तरतः । अतस् । पराऽवराभ्यामतस्वा । पक्षेऽस्तात् । परस्यां परस्याः परा वा परतः । अवरस्याम् अवरस्याः अवरा वा अवरतः । अतस् । पक्षेऽस्तात् । परस्तात् । अवरस्तात् । अंचत्यंताद्दिक्शब्दादस्तात्प्रत्ययस्य लुक् । तद्धितलुकिस्त्रीप्रत्ययस्यलुग्वाच्यः । प्राच्यां प्राच्याः प्राची वा दिक् प्राक् । उदक् । एवं देशे काले च । ऊर्ध्वशब्दात्रिरिष्टात्प्रत्ययावस्ताद्विषये । ऊर्ध्वस्योपादेशश्च । उर्ध्वं ऊर्ध्वात् उर्ध्वोवेति । उपरि । उपरिष्टाद्वा । अपरशब्दादातप्रत्ययोऽपरस्यपश्चादेशश्चाऽस्ताद्विषये । अपरस्मिन् अपरस्मात् अपरोवेति । पश्चात् । उत्तराऽधरदक्षिणादात्प्रत्ययोऽस्ताद्विषये । उत्तरात् । अधरात् । दक्षिणात् । अदूरेवर्तमानेभ्य उत्तराधरदक्षिणेभ्य एनप्रत्ययो वा सप्तमीप्रथमाविभक्त्यर्थे । उत्तरस्मिन् उत्तरो वेति उत्तरेण । अधरस्मिन् अधरोवेति अधरेण । दक्षिणस्मिन् दक्षिणोवेति दक्षिणेन । पक्षे उत्तरात् । अधरात् । दक्षिणात् । आत् प्रत्ययः । उत्तरतः अधः अधस्तात् । दक्षिणतः । केचिद्दिक्शब्दमात्रादेनप्रत्ययमाहुः । पूर्वेण ग्रामम् । अपरेण ग्रामं । दाक्षिणाशब्दादाप्रत्ययःसप्तमीप्रथमाविभक्त्यर्थे । दक्षिणस्यां दक्षिणा वेति दक्षिणा । दक्षिणोत्तराभ्यांदूरेऽर्थेआआहिप्रत्ययौ । दक्षिणस्यां दिशि दूरे इति दक्षिणाहि । दक्षिणा । उत्तरस्यां दिशि दूरे इति उत्तराहि । उत्तरा । अव्ययत्वाद्विभक्तेर्लुक् सर्वत्र ॥

तत्त्वदीपिका– पौंस्न इति । संयोगांतस्येति सलोपः ।

इतितद्धिताः ॥

**मू०–वीप्सायाम्पदंद्विः ॥ वृक्षं वृक्षं सिंचति । ग्रामो ग्रामो रमणीयः ।**

सुबोधिनी–अथ सर्वं पदं द्विरुच्चारयेदित्याधिकारोयं । वीप्सायांपदंद्विः । व्याप्तुमिच्छा

वीप्सा । व्याप्तिप्रतिपिपादयिषेति यावत् । व्याप्तिः कात्स्न्यं तच्चाधिकारकं । सर्वे ब्राह्मणा आमंत्रिता इत्यादौ यथा । न हि जगतीतले विद्यमाना ब्राह्मणाःसर्वेपि केनाचिदामंत्रयितुंश- क्यंते इति स्वग्रामस्थस्वजातीयब्राह्मणानां संकोचो यद्यभ्युपेयते तर्ह्यत्रापिसकलवृक्षसेचन- सामर्थ्यं कस्यापि मनुष्यस्य नास्तीति यत्र वाटिकादौ वृक्षसेचनार्थमधिकारस्तद्वाटिकास्थवृ- क्षाणामेवकात्स्न्यं वृक्षं वृक्षं सिंचतीत्यादौ गम्यते इत्यभ्युपेयं । यत्र तु संकोचेकारणं नास्ति तत्राऽसंकोच इष्ट एव । यथा जातो जातो निधनमुपैतीति तस्यां वीप्सायां वाच्यायामेकस्य पदस्य स्थाने द्वे पदे समुदिते युगपदादेशत्वेन विधीयेते इत्यर्थः । वृक्षंवृक्षमित्यत्र प्रत्येक- निष्ठमेकत्वमेव हि प्राति भासतेऽतो न बहुवचनप्रसंगः ।

तत्त्वदीपिका–वीप्सायामिति । व्याप्तुमिच्छावीप्सा व्याप्तिप्रतीपपादयिषेति यावत् । व्याप्तिश्च का- त्स्न्यं । वृक्षंवृक्षं सिंचतीति सेकक्रियायाः सकलवृक्षे अन्वयः । बहुवचनप्रसंगस्तु बहूनां भावेपि बहुत्वसंख्याया अभावादेव न प्रत्येकनिष्ठमेकत्वमेव हि तत्र भासते ।

**मू०–परेर्वर्ज्जनेवाद्वित्वम्** ॥ परिपरि वङ्गेभ्यो वृष्टो देवः । परिवङ्गेभ्यो वृष्टोदेवः । वङ्गान्परिहृत्येत्यर्थः ।

सुबोधिनी–परेर्वर्जनेवाद्वित्वं । वर्ज्जनार्थवाचिनः परेर्वा द्वित्वं स्यात् । परिपरि वंगेभ्य इत्यत्र परियोगे पंचमी । वाग्रहणात्परिहरेः संसार इति ॥

तत्त्वदीपिका–परेर्वर्जन इति । अत्र वाशब्दस्य व्यवस्थितत्वात्समासे न । तेन परित्रिगर्त्तं वृष्टो देव इत्यादौ न ।

**मू०–उपर्य्यध्यधसस्सामीप्येद्विः** ॥ उपर्य्युपरिग्रामम् । ग्रामस्योपरि- ष्टात्समीपदेश इत्यर्थः ।

सुबोधिनी–उपर्यऽध्यऽधसःसामीप्येद्विः । सामीप्यार्थवाचिन एते द्विः स्युः सामीप्यं प्र- त्यासत्तिस्तच्च कालकृतं देशकृतं वा । कालकृतस्य सामीप्यस्योदाहरणमध्यधिसुखमिति । अन्यद्द्वयं देशकृतस्य सामीप्यस्योदाहरणम् ॥

तत्त्वदीपिका–उपरीति । उपरि शिरसो घटं धारयतीत्यत्र तु औत्तराधर्यमत्र विवक्षणेन सामीप्याभा- वान्न द्वित्वम् ।

**मू०–वाक्यादेस्सम्बोधनस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु** ॥ असूयायामुदाहरणम् । सुन्दर सुंदर वृथा ते सौन्दर्य्यम् । देव देव वन्द्यो- ऽसि । कोपे । दुर्विनीत दुर्विनीत इदानीञ्ज्ञास्यसि । कुत्सने । धानुष्क धा- नुष्क वृथा ते धनुः । भर्त्सने । चोर चोर घातयिष्यामि त्वाम् ।

सुबोधिनी–वाक्यादेःसंबोधनस्याऽसूयासम्मातिकोपकुत्सनभर्त्सनेषु । एष्वर्थेषुविद्यमानस्य वाक्यादिस्थितस्य संबोधनस्य द्वित्वं स्यात् । ननु कोपासूयाभ्यां पृथक् कुत्सनभर्त्सनग्रहण- मपार्थकम् । नाऽसूयां विना कुत्सयते नाप्यऽकुपितो भर्त्सयति । इति चेदत्राहुः । गुरवो हि हितैषित्वात्कुपिता अपि भर्त्सनं कुर्वंति । विनाप्यसूयया कुत्सां कुर्वंत्यतः पृथक् तयोर्निर्दे- शः । सम्मतिः पूजा ॥

तत्त्वदीपिका–वाक्यादेरिति । वाक्यादेः संबोधनस्यासूयाद्यर्थेषु द्विरित्यर्थः । गुणेषु दोषारोपोऽसूया ।

**मू०–द्विरुक्तएकशब्दोबहुव्रीहिवत् ॥ तेन विभक्तिलोपपुंवद्भावौ । एकैकमक्षरम् । एकैकयाहुत्या । इह पूर्वभागे पुंवद्भावादवयवे विशेषः । पदविभागोऽवग्रहः । एकैकया इत्यादिविशेषः । एकैकस्मै देहि ।**

सुबोधिनी–द्विरुक्तएकशब्दोबहुव्रीहिवत् । बहुव्रीहौ यत्कार्यमुक्तं तद्द्विरुक्ते एकशब्दे भवतीत्यर्थः । बहुव्रीहिसमासवत्त्वात् समासप्रत्यययोरिति विभक्तिलोपः पुंवद्वेति पुंवद्भावश्च एकएकमित्यत्र द्वयोरपि विभक्तेर्लुकि कृते बहुव्रीहिसमासवद्भावादेव कृत्तद्धितसमासाश्चेत्यनेन । समुदायात्स्याद्युत्पत्तिः । अंतरंगैकसंख्याऽवरुद्धो द्विरुक्तार्थः संख्यांतरे निराकांक्ष एव इत्युक्तत्वादेकवचनमेव । एकैकयेत्यत्रसर्वादेः समासादाविति पूर्वभागे पुंवद्भावः। एकस्मै एकस्मै इत्येकैकस्मै ॥

तत्त्वदीपिका– अवग्रहेति । वैदिकानां पदपाठ इत्यर्थः ।

**मू०–पीडायांद्योत्यायांद्विस्तोबहुव्रीहिवच्च ॥ गतगतः । विरहात्पीड्यमानस्येयमुक्तिः । गतगतः ॥**

सुबोधिनी–पीडायांद्योत्यायांद्विस्तोबहुव्रीहिवच्च । पीडार्थद्योतकं पदं द्विः स्यात् । गतः गत इति बहुव्रीहिवद्भावाद्विभक्तेर्लुग् । गतगतः । गतगतेति पुंवद्वेति पुंद्भावः गतगता ॥

तत्त्वदीपिका–गतगतेति । इह पुंवद्भावः । पूर्वपदस्य बहुव्रीहिवद्भावान्नोत्तरस्येति भावः ।

**मू०–सादृश्येद्योत्येगुणवचनस्यद्विस्तोबहुव्रीहिवच्च ॥ पटुपट्वी । पटुपटुः । पटुसदृशः ईषत्पटुरिति यावत् । गुणोपसर्जनद्रव्यवाचिनः केवलगुणवाचिनश्चेह गृह्यंते । शुक्लशुक्लः । पटः । शुक्लशुक्लं । रूपम् ।**

सुबोधिनी–सादृश्येद्योत्येगुणवचनस्यद्विस्तोबहुव्रीहिवच्च । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं सादृश्यम् । पट्वी पट्वीति पुंवद्वेति पुंवद्भावः । पटुःपटुरिति बहुव्रीहिवद्भावाद्विभक्तेर्लुक् । पटुपटुः । गुणे शुक्लादयः पुंसि गुणिलिंगास्तु तद्वतीत्युक्तत्वात् । यत्र शुक्लादयः शब्दा द्रव्यवाचकास्तत्र गुणा उपसर्जनीभूता एव संति । अतोत्र द्रव्यवाचकशुक्लादिपदस्य गुणवावाचका शुक्लादिपदस्य च ग्रहणम् । शुक्लःशुक्लइति बहुव्रीहिवत्त्वाद्विभक्तेर्लुक् शुक्लशुक्लःपटः। गुणोपसर्जनद्रव्यवाचिन उदाहरणम् । शुक्लं शुक्लमिति समासवत्त्वाद्विभक्तेर्लुक्। शुक्लशुक्लंरूपम् । केवलगुणवाचिन उदाहरणम् ॥

तत्त्वदीपिका–पटुपट्वीइति । बहुव्रीहिवद्भावात्पूर्वभागे सिलोपपुंवद्भावौ । नवं नवं प्रीतिरहो करोतीत्यत्र वीप्सायां द्वित्वम् । अनेकद्वित्वे सिलुक् स्यात्। कथं "भीतभीतइव शीतमयूख"इति भारविः । इवशब्देन सादृश्यस्योक्ततया सादृश्ये द्वित्वायोगात् । सत्यं । भीतेभ्यो भीत इति व्याख्येयम् । तेनातिभीत इति फलितम् । "खिन्नः खिन्नः शिखरिषु पदं न्यस्य गंतासि यत्र क्षीणः क्षीणः परिलघुपयः स्रोतसां चोपभुज्य"इति मेघदूते । एकस्यापि खेदावस्थासु च भेदं प्रकल्प्य वीप्सा बोध्या । "मन्दं मन्दं नुदति" इत्यत्र तु मन्दं स्वतोमन्दगामिनं मन्दं नुदतीत्यन्वयो बोध्यः । क्रियासमभिहारे पौनःपुन्ये भृशार्थे चेत्यर्थः ।

**मू०–अनुक्रमेद्योत्येद्वे ॥ मूले मूले स्थूलो वृक्षः ।**

सुबोधिनी–अनुक्रमेद्योत्येद्वे । अनुक्रमद्योतकं पदं द्विः स्यात् । वीप्साभावादयमारंभः । एकस्यवृक्षादेरेकमेव मुख्यं मूलमग्रं च भवति । इतरेषांभागानामापेक्षिकोऽग्रमूल्यव्यपदेशः । स्थौल्यसौक्ष्म्येअपिनैकरूपे । यथा मूलं स्थूलं यथाऽग्रं सूक्ष्मं यथानेतरे भागा इति वीप्साया असंभवः । मूलेमूलेस्थूलस्तथाऽग्रेऽग्रे सूक्ष्मः ॥

**मू०–सम्भ्रमेणप्रवृत्तावनेकधाप्रयोगः** ॥ सर्प्पः ३ वध्यस्व ३ ।

सुबोधिनी–संभ्रमेणप्रवृत्तावनेकधाप्रयोगः । संबोध्यो हि यावद्भिःशब्दैः प्रयोजनमेति तावंतः प्रयोगा वाच्या इत्यर्थः ॥

**मू०–क्रियासमभिहारेद्वे** ॥ लुनीहि लुनीहि इत्येवायं लुनाति ।

सुबोधिनी–क्रियासमभिहारे द्वे । पौनःपुन्यं भृशार्थश्च क्रियासमभिहारस्तत्र पदे द्विः स्यात् । पौनःपुन्ये यथा आख्यातकृदंतयोरेव । पचतिपचति । भुक्त्वाभुक्त्वा । भृशार्थे यथा । लुनीहिलुनीहीति ॥

**मू०–कर्म्मव्यतिहारेसर्वादेर्द्विर्त्वंसमासवच्चबहुलम्** ॥ बहुलग्रहणादन्तपदयोर्न्नसमासवत् । इतरशब्दस्य नित्यं समासवत् ।

सुबोधिनी–कर्म्मव्यतिहारेसर्वादेर्द्वित्वंसमासवच्चबहुलम् । क्रियाविनिमयेऽर्थे सर्वादिगणस्य द्वित्वं स्यात् । नित्यमेवेदं द्वित्वम् । बाहुलकं तु समासवद्भावस्यैव । तेनान्यपरशब्दयोः समासवद्भावो न । इतरशब्दस्य च नित्यमेव समासवद्भावो भवतीत्यर्थः ॥

तत्त्वदीपिका–कर्मव्यतिहारे इति । क्रियाविनिमये इत्यर्थः ।

**मू०–असमासवद्भावेपूर्वपदस्थायाविभक्तेस्सिरादेशोवाच्यः** ॥ अन्योन्यौ । अन्योन्यान् । अन्योन्येन कृतम् । अन्योन्यस्मै दत्तमित्यादि । अन्योन्येषां पुष्करैरामृशन्तइतिमाघः । एवं परस्परम् । वाचस्पत्यादित्वात्सः । इतरेतरम् । इतरेतरेणेत्यादि ।

सुबोधिनी–असमासवद्भावेपूर्वपदस्थविभक्तेः सिरादेशोवाच्यः । पूर्वपदस्य प्रथमादिविभक्तीनां स्थाने सिरेव भवत्यसमासवद्भावे । अन्यः अन्य इति अन्योन्यः । अन्यौ अन्याविति अन्योन्यौ । अन्ये अन्ये इति अन्योन्ये । अन्यमन्यामिति अन्योन्यमित्यादिषु सर्वत्र पूर्वपदस्य विभक्तेः सिकृते ततो विसर्गः अतोऽत्युरित्युत्वे उओइत्योत्वे एदोतोऽत इत्यलोपे च रूपसिद्धिः । एवं परः पर इति परस्परं । परौ परावित्ति परस्परौ । परे परे इति परस्परे । परं परमिति परस्परमित्यादि । इतरशब्दस्य तु समासवद्भावात् समासप्रत्यययोरिति विभक्तेर्लुक् इतर इतर इति इतरेतरः । इतरौ इतराविति इतरेतरौ । इतरे इतरे इति इतरेतरे । इतरम् इतरमिति इतरेतरमित्यादि ॥

**मू०–स्त्रीनपुंसकयोरुत्तरपदस्थायाविभक्तेराम्भावोवा** ॥ अन्योऽन्याम् । अन्योऽन्यं । परस्परां । परस्परम् । इतरेतराम् । इतरेतरं वा । इमे ब्राह्म-

ण्यौ कुले वा भोजयतः । दलद्वयेऽप्याबभावः । क्लीबेतु विरहस्यमोः समासे सेरलुकूचेति सिद्धम्बाहुलकात्रयम् ॥ समासेसेरलुकूचेत्यस्योदाहरणंतु अन्योऽन्याश्रयः, परस्पराक्षिसादृश्यमित्यादिकं बोध्यम् ॥

**सुबोधिनी**–स्त्रीनपुंसकयोरुत्तरपदस्थायाविभक्तेराम्भावोवा । स्त्रियां क्लीबे चोत्तरपदस्थविभक्तीनामामादेशो वा भवति । स्त्रियां यथा । अन्या अन्येति पूर्वपदस्थविभक्तेः सिः परपदस्थविभक्तेश्चाम् । अन्योन्याम् । आमभावपक्षे अन्योन्यः । बहुलग्रहणात् स्त्रियामित्याप्प्रत्ययाभावो दलद्वये । अन्ये अन्ये इति अन्योन्यम् अन्योन्यौ । अन्या अन्या इति अन्योन्या अन्योन्ये । अन्यामन्यामिति अन्योन्याम् अन्योन्यमित्यादि । एवं परस्परां परस्परः । परस्परां परस्परौ । परस्परां परस्परे । परस्परां परस्परमित्यादि।एवमितरेतराम् इतरेतरः । इतरेतराम् इतरेतरे । इतरेतरौ इतरेतराम् ।इतरेतरे इतरेतराम् । इतरेतरमित्यादि । क्लीबेतु अन्यत्अन्यादिति अन्योन्याम् । अन्योन्यम् । स्यमोः प्रत्यययोः स्थाने श्त्वन्यादेरिति श्त्वादेशाभावो बाहुलकादेव । इमे कर्त्र्यौ इमे कर्तृणी वा । अन्यामन्यामन्यदन्यद्वा भोजनं कारयतः । ननु अन्योन्यं परस्परमित्यादौ केवलपूर्वपदविभक्तीनां स्यादेशविधानस्य चरितार्थत्वमस्ति । अन्योऽन्यसंसक्तमहस्त्रियामामिति । अन्योन्याश्रय इति परस्पराक्षिसादृश्यमिति । अदृष्टपरस्परैरित्यादौ समासप्रत्यययोरित्यनेन पूर्वपदविभक्तीनां स्यादेशस्य कथं लुग् न स्यादिति चेदत्राह । बाहुलकात्समासविषये पूर्वपदविभक्तीनां स्यादेशस्य लुग् न भवतीत्यर्थः ॥

**तत्त्वदीपिका**–दलद्वय इत्यादि । दलद्वये आबभावः आपः अभावः । अन्योन्यं परस्परमित्यत्र दलद्वयेपि आप् प्राप्तः स नेत्यर्थः । अन्योन्यमित्यत्र श्त्वन्यादेस्तु प्राप्तः स नेत्यर्थः । अन्योन्याश्रय इत्यत्र समासे सेर्लुक् नेत्यर्थः ।

**सू०–अकृच्छ्रेप्रियसुखयोर्वाद्वित्वम् ॥** प्रियप्रियेण ददाति प्रियेण वा । सुखसुखेन ददाति सुखेन वा । अतिप्रियमपि वस्त्वनायासेन ददातीत्यर्थः ।

**सुबोधिनी**–अकृच्छ्रेप्रियसुखयोर्वाद्वित्वम् । अनयोर्द्वित्वं समासवच्च वा स्यात् । द्विवचने समासवद्भावात् स्यादिलुकिकृते पुनः कृत्तद्धितसमासाश्चेत्यनेन स्यादिः ।

**सू०–यथास्वेयथायथम् ॥** यथाशब्दस्य द्वित्वं क्लीबत्वं च । भवति यथास्वमिति वीप्सायामव्ययीभावः । यो य आत्मा । यद्यच्चात्मीयं तद्यथास्वम् । यथायथं ज्ञाता । यथास्वभावमित्यर्थः । यथात्मीयमिति वा ।

**सुबोधिनी**–यथास्वेयथायथम् । यथास्वे इति स्वंस्वमिति यथास्वं । वीप्सार्थेऽव्ययीभावः । योयमात्मेत्यादि । स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वो स्त्रियांधने इत्युक्तत्वादात्मात्मीययोरपि स्वशब्दवाच्यत्वमस्ति । आत्मात्मीययोरर्थे विद्यमानस्य यथाशब्दस्य द्वित्वं नपुंसकत्वं च भवति । नपुंसकत्वान्नपुंसकस्येति ह्रस्वः । यथायथं ज्ञातेत्यत्र कर्तृकार्म्मयोरक्तादावित्यनेन कर्म्मणि षष्ठी न । तृन्प्रत्ययस्य क्तादिषु गणनात् । आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च इत्यमरोक्तत्वात् । यथायथं यथास्वभावमर्थः ॥

**मू०—द्वंद्वंरहस्यमर्य्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु ॥** एष्वर्थेषु द्विशब्दस्य द्विर्वचनंपूर्वपदस्याम्भावोत्वञ्चोत्तरपदस्यनपुंसकत्वञ्च निपात्यते । तत्र रहस्यं द्वंद्वशब्दस्य वाच्यम् । इतरे तु विषयभूताः । द्वंद्वम्मंत्रयते रहस्यमित्यर्थः । मर्य्यादा स्थित्यनतिक्रमः । आचतुरं हीमे पशवो द्वन्द्वं मिथुनायंते । माता पुत्रेण मिथुनङ्गच्छति । पौत्रेण प्रपौत्रेणापीति मर्य्यादार्थः । व्युत्क्रमणं पृथगवस्थानम् । द्वन्द्वं व्युत्क्रान्तः । द्विवर्गसंबंधेन पृथगवस्थितः । द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । द्वन्द्वं संकर्षणवासुदेवौ अभिव्यक्तौ । साहचर्य्येणेत्यर्थः । चार्थेद्वन्द्व इति निपातनात्पुंस्त्वमपि ।

सुबोधिनी—द्वन्द्वंरहस्यमर्यादावचनव्युत्क्रमणयज्ञपात्रप्रयोगाभिव्यक्तिषु । एष्वर्थेषु द्विशब्दस्य द्वित्वं समासत्वमेकवद्भावश्च भवति । तथाहि । द्वि औ द्वि औ इति स्थिते समासवद्भावात् विभक्तिलुकि कृते पूर्वपदावयवेकारस्याम्भावः उत्तरपदावयवेकारस्यात्वं क्लीबत्वैकवद्भावौ च निपातनात् । एकवद्भावादतोमित्यमादेशे द्वंद्वमिति । रहसि निर्वृत्तमिति रहस्यं । द्वंद्वं मंत्रयते । द्वौ द्वौ भूत्वा मंत्रयते इत्यर्थः । एतदेव द्विरहस्यं । मर्यादायां यथा । चतुरो मर्यादीकृत्येति आचतुरम् । अव्ययीभावे ट प्रत्ययः । चतुरशब्दोऽत्र चतुर्णां पूरणेऽस्ति आचतुर्थादित्यर्थः । स्त्रीपुंसौ मिथुनं द्वंद्वं युग्मं तु युगलं युगमित्यमरः । मिथुनामिवाचरंतीति मिथुनायंते । यज्ञपात्रे प्रयोगे यथा । पात्राणि द्वंद्वं प्रयुनक्ति । आसादयतीत्यर्थः । संकर्षणः सीरपाणिरित्यमरः । वासुदेवस्त्रिविक्रमइत्यमरश्च । अभिव्यक्तौ तु द्विशब्दस्य स्वार्थे द्वित्वमेकवद्भावादिकं तु पूर्ववदेव ॥

**मू०— शेषानिपात्याःकत्यादयः ॥** का संख्या येषां ते कति । दाविकः । शाशकः । दात्यौहः । दार्घसत्रः । श्रायसः ॥

इतिश्रीरामाश्रमाचार्य्यविरचितायांसिद्धान्तचन्द्रिकायाम्पूर्वार्द्धंसम्पूर्णम् ।

सुबोधिनी—शेषानिपात्याः कत्यादयः । कत्यादयः शब्दा निपात्यंते संख्यापरिमाणे कर्तव्ये । यः प्रश्नस्तत्र वर्तमानात् किम्शब्दाद्वा डतिप्रत्ययः । पक्षेवतुः । कासंख्या येषां ते डतेरिति जसो लुक् । कति । कियंतः । देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसां पंचानां वृद्धौप्रासायामादेः स्वरस्यात्वं निपात्यते ञिति णिति च । देविकायां भवं दाविकं । देविकायां सरय्वां च भवेदाविकसारवावित्यमरः । अण् शिंशपाया विकारः शांशपश्चमसः । अण् । दित्यौह इदं दात्यौहं । वाहोवौं इत्यात्वं निपातनात् । अण् । दीर्घसत्रे भवं दार्घसत्रं । अण् । श्रेयसिभवं श्रायसं । अण् । इति ताद्धितप्रक्रिया ॥

तत्त्वदीपिका—तद्धितप्रत्ययानामनंतत्वात्कात्स्न्येंनाभिधातुमशक्यत्वादनुक्तसिद्ध्यर्थमाह । शेषा- इति । उक्तेभ्योऽन्ये शेषाः । निपातनात्साधवो निपात्याः । किमः संख्यापरिप्रश्ने डतिः । दाविक इति देविकाया भव इति विग्रहः । कारकादित्यण् । एकारस्यात्वं निपात्यते । शांशप इति शिंशपाया विकारः । अत्राप्यादेः स्वरस्यात्वं निपात्यते । दात्यौह इति । दित्यौहोयामिति विग्रहः इदमर्थेऽण् । अत्राप्यादेरात्वं निपात्यते । प्रकृतिस्तु दित्यवाह इति तत्र वाहोवौरिति वा इत्यस्यौत्वं । दीर्घसत्रे भवः दार्घसत्रः । अत्रापि कारकादित्यण् । आदिस्वरस्यात्वं निपात्यते । श्रायस इति । श्रेयसि भव इति विग्रहः । अत्राप्यादिस्वरस्यात्वं निपात्यते ॥

श्रीमत्पावकवर्यभक्तिविनयाविख्यातकीर्तिप्रभा
राजेन्द्रैः परिपूजिताः सुकृतिनः पुंभाववाग्देवता ॥
मंतारो जगतां पतिं गुणगणैर्विभ्राजमानाः सनत्
संवेगादिसुजो जयंतु सततं षट्शास्त्रविद्याविदः ॥ १ ॥

तेषां शिष्यः सदानंदस्तदनुग्रहभूषितः ॥
सिद्धांतचंद्रिकावृत्तिं पूर्वार्द्धेऽचकरीदिमाम् ॥ २ ॥

इतिश्रीसिद्धांतचंद्रिकाव्याख्यायांसदानंदकृतौ पूर्वार्द्धः समाप्तिमगात् ॥

सिद्धान्तचंद्रिकाव्याख्या यात्वियं तत्त्वदीपिका ।
तत्पूर्वार्द्धमभूत्पूर्णं तेन तुष्यतु पार्वती ॥ १ ॥

इति श्रीलोकेशकरविरचितायां तत्त्वदीपिकायां सिद्धान्तचन्द्रिकाव्याख्यायां पूर्वार्द्धं समाप्तम् ॥ शुभमस्तु ॥

श्रीनाथकरपौत्रेण लोकेशकरशर्मणा
कृतायामिहटीकायां तद्धितव्याकृतिर्गता ॥

श्रीचण्डिकायै नमः ॥ श्रीमद्गुरुचरणकमलेभ्योनमः ॥ श्रीसीतारामचन्द्रार्पणमस्तु

शकाब्दाः १८१७ संवत् १९५२




पुस्तक मिलनेका ठिकाना–
खेमराज श्रीकृष्णदास,
"श्रीवेङ्कटेश्वर" छापाखाना, बंबई.

# व्याकरणग्रंथाः ।

| नाम. | की. रु. आ. | ट. म. रु. आ. |
|---|---|---|
| सिद्धांतकौमुदी अष्टाध्यायी, गणपा०, धातुपा० लिंगानुशासनपा०और सूत्रसूचीस० अक्षर मोटा | ४—० | ०—१२ |
| सिद्धांतकौमुदी अतिउत्तम और बारीक टैपमें छप रहीहै | २—० | ०—८ |
| अष्टाध्यायी, गणपाठ, धातुपाठ, लिंगानुशा० | १—० | ०—४ |
| लघुसिद्धांतकौमुदी टिप्पणसहित जिल्द मो० अ० | ०—१२ | ०—२ |
| लघुसिद्धांतकौमुदी टिप्पणस० ग्लेज छोटा | ०—४ | ०—१ |
| सिद्धांतचंद्रिका सुबोधिनीटीका और तत्त्वदीपिकासह संपूर्ण सुंन्दर जिल्द | ४—० | ०—८ |
| सिद्धांतकौमुदी तत्त्वबोधिनीटीकासहित जिल्द काशीका | ७—० | ०—८ |
| सिद्धांतचन्द्रिका उत्तरार्द्ध सुबोधिनी और तत्त्वदीपिकासह | २—० | ०—४ |
| सिद्धांतचंद्रिका सटीक पूर्वार्द्ध सुबोधिनी और तत्त्वदीपिका टीकासहित | २—० | ०—४ |
| तत्त्वबोधीनी कौमुदीके पृष्ठांकसह छपती है पूर्वार्द्ध छपके तैयारहै | ३—० | ०—६ |
| रूपमालाव्याकरणका षड्लिंगविभाग | ०—६ | ०—॥ |
| ,, संधिभागः अव्ययार्थभागः प्रयोगविधिसंग्रहः (कारकसमासतद्धितादिक्) क्रियाकलापः आख्यातचान्द्रिका धातुरूपभेदः श्लोकयोजनिकोपायः | १—४ | ०—२ |
| संधिविभागः | ०—५ | ०—॥ |
| अव्ययविभागः | ०—३ | ०—॥ |
| प्रयोगविधिः | ०—२ | ०—॥ |
| कारकसमासताद्धिकदिक् क्रियाकलापः आख्यातचान्द्रिका धातुरूपभेदः श्लोकयोजनिकोपायः | ०—६ | ०—१ |
| समासकुवलयाकर नियमोंके साथ उदाहरण | ०—४ | ०—॥ |
| सारस्वतसटीक प्रसादटीका | ०—१२ | ०—२ |
| सारस्वतमूल पूर्वार्द्ध जिल्द टाईपका | ०—८ | ०—१ |
| सारस्वत तीनोवृत्ति | ०—१२ | ०—२ |
| सारस्वत चंद्रकीर्त्तिटीकासह परमोत्तम | १—४ | ०—२ |
| ,, ,, तथा रफ कागजका | १—० | ०—२ |
| कारकवादार्थशब्दबोध व्याकरणन्याय | ०—२ | ०—॥ |
| धातुरूपावली लघुधातुपाठसहित | ०—३ | ०—॥ |
| शब्दरूपावली एकाक्षरीकोषसहित | ०—१॥ | ०—॥ |
| समासचक्र | ०—१ | ०—॥ |
| शब्ददीपिका | ०—४ | ०—॥ |
| बालसंस्कृतबोधिनी (नवीन संस्कृतवालेको बहुतही उपयोगी ) | ०—५ | ०—॥ |
| संस्कृतशिक्षामंजरी | ०—१॥ | ०—॥ |
| लिंगबोधव्याकरण भाषाटीका गद्यपद्यमें | ०—२ | ०—॥ |

श्रीः ।

# सिद्धान्तचन्द्रिका ।

## (उत्तरार्द्धम्)

श्रीगणेशाय नमः ।

## मूलम्–

**धातोः ॥ इदमधिक्रियते ।**

### सुबोधिनी–

सार्वीयं सच्चिदानंदं नामंनामं जगत्प्रभुम् ॥
सिद्धांतचंद्रिकाख्यातवृत्तिश्च क्रियतेतराम् ॥ १ ॥

धातोः । अधिकारोयं प्राङ् नाम्नो य इत्यतः । किमर्थो ऽयमधिकारः । उच्यते । ऊरीकरोति । शुक्लीभवति । सहायीस्यादित्यादौ ऊर्यादिच्व्यंतयोर्धातोः प्राक् प्रयोगस्य नियतत्वेन विशिष्टात् प्रत्ययोत्पत्तिर्यथा न स्यात् । अन्यथा अड्द्वित्वयोर्दोषो दुर्वारःस्यादित्यधिकारः ।

### तत्त्वदीपिका–

प्रणम्य श्रीपतिं वाणीं नारायणमनामयम् ।
सिद्धान्तचन्द्रिकाख्यातव्याकृतिरुच्यतेऽधुना ॥ १ ॥

**धातोरिति** । अधिकारोयमित्याह । **इदमिति** । सूत्रमिति विशेष्यं पदं वा नाम्नो य इत्यतः प्रागधिकारो बोध्यः । अधिकारफलन्तु ऊरीकरोति शुक्लीभवतीत्यादौ च्व्यन्तस्य धातोः प्राक्प्रयोगनियमेन तत्सहिताद्धातोः प्रत्ययोत्पत्तिर्यथा न स्यात् । अन्यथाऽड्द्वित्वयोर्दोषो दुर्वारः स्यात् । नच नामव्यावृत्तिरेव फलमिति वाच्यं।ततः विधानेनैव तद्बाधनात् । सिबंततिबन्तव्यावृत्तिरपि न फलं । प्रकृत्यर्थस्याद्रव्यकादेराख्यातार्थकर्तृकर्मणोरनन्वयात् । कारकाणां क्रिययैवान्वयानियमात् । पचतीत्यत्र एकेन क्रिया एकाश्रयिकायां क्रियायां बोधितायामपरेणान्याश्रयाया बोधनस्याशक्यत्वात् । प्रथमस्य समासप्रत्यययोरिति लोपे तु तदर्थस्यानवबोधाच्च । कर्तृद्रव्यादिबोधाकांक्षायां यः घट इत्यादेरन्याय्यत्वात् ।

**मू०–भ्वादिः ॥ क्रियावाची भ्वादिर्धातुसंज्ञकः स्यात् ।**

सुबोधिनी–भ्वादिः । भवनं भूः क्रियासामान्यं । आदत्ते ग्राहयत्यर्थमित्यादिः । अंतर्भावितण्यर्थः । यद्वा । दीयते गृह्यतेऽर्थोऽनेनेति आङ्पूर्वाद्दाञः किप्रत्ययः । शब्दइति यावत् । भुवः क्रियासामान्यस्य आदिर्वाचकः शब्दो धातुसंज्ञो भवति । एवंसति हिरुक् नाना इत्यादावव्यये बभूव बभूवे इत्यादावाख्यातांते चातिव्याप्तिस्तेषामपि क्रियावाचकत्वात् । अतो भ्वादिरित्यावर्त्य भूरादिर्यस्येति बहुव्रीहिर्व्याख्येयः । अत्रादिशब्दो व्यवस्थायां । तेन भूशब्दादारभ्य ये पठितास्ते ग्राह्याः । तेन क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वं । नामधा-

श्रीः ।

# सिद्धान्तचन्द्रिका ।

## ( उत्तरार्द्धम् )

---

श्रीगणेशाय नमः ।

## मूलम्-

धातोः ॥ इदमधिक्रियते ।

### सुबोधिनी-

सार्वीयं सच्चिदानंदं नामंनामं जगत्प्रभुम् ॥
सिद्धांतचंद्रिकाख्यातवृत्तिश्च क्रियतेतराम् ॥ १ ॥

धातोः । अधिकारोयं प्राङ् नाम्नो य इत्यतः । किमर्थो ऽयमधिकारः । उच्यते । ऊरीकरोति । शुक्लीभवति । सहायीस्यादित्यादौ ऊर्यादिच्व्यंतयोर्धातोः प्राक् प्रयोगस्य नियतत्वेन विशिष्टात् प्रत्ययोत्पत्तिर्यथा न स्यात् । अन्यथा अड्द्वित्वयोर्दोषो दुर्वारःस्यादित्यधिकारः ।

### तत्त्वदीपिका-

प्रणम्य श्रीपतिं वाणीं नारायणमनामयम् ।
सिद्धान्तचन्द्रिकाख्यातव्याकृतिरुच्यतेऽधुना ॥ १ ॥

**धातोरिति** । अधिकारोयमित्याह । **इदमिति** । सूत्रमिति विशेष्यं पदं वा नाम्नो य इत्यतः प्रागधिकारो बोध्यः । अधिकारफलन्तु ऊरीकरोति शुक्लीभवतीत्यादौ च्व्यन्तस्य धातोः प्राक्प्रयोगनियमेन तत्सहिताद्धातोः प्रत्ययोत्पत्तिर्यथा न स्यात् । अन्यथाऽड्द्वित्वयोर्दोषो दुर्वारः स्यात् । नच नामव्यावृत्तिरेव फलमिति वाच्यं।ततः विधानेनैव तद्बाधनात् । सिबंततिबन्तव्यावृत्तिरपि न फलं । प्रकृत्यर्थस्याद्व्यकादेराख्यातार्थकर्तृकर्मणोरनन्वयात् । कारकाणां क्रिययैवान्वयनियमात् । पचतीत्यत्र एकेन क्रिया एकाश्रयिकायां क्रियायां बोधितायामपरेणान्याश्रयाया बोधनस्याशक्यत्वात् । प्रथमस्य समासप्रत्यययोरिति लोपे तु तदर्थस्यानवबोधाच्च । कर्तृक्रियादिबोधाकांक्षायां यः घट इत्यादेरन्याय्यत्वात् ।

**मू०-भ्वादिः ॥ क्रियावाची भ्वादिर्धातुसंज्ञकः स्यात् ।**

सुबोधिनी-भ्वादिः । भवनं भूः क्रियासामान्यं । आदत्ते ग्राहयत्यर्थमित्यादिः । अंतर्भावितण्यर्थः । यद्वा । दीयते गृह्यतेऽर्थोऽनेनेति आङ्पूर्वाद्दाञः किप्रत्ययः । शब्दइति यावत् । भुवः क्रियासामान्यस्य आदिर्वाचकः शब्दो धातुसंज्ञो भवति । एवंसति हिरुक् नाना इत्यादावव्यये बभूव बभूवे इत्यादावाख्यातांते चातिव्याप्तिस्तेषामपि क्रियावाचकत्वात् । अतो भ्वादिरित्यावर्त्य भूरादिर्यस्येति बहुव्रीहिर्व्याख्येयः । अत्रादिशब्दो व्यवस्थायां । तेन भूशब्दादारभ्य ये पठितास्ते ग्राह्याः । तेन क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वं । नामधा-

तूनां सधातुरिति वचनाद्धातुत्वं । सौत्रास्तु गणे एव पाठ्याः । का पुनः क्रिया । उच्यते । करोत्यर्थभूता उत्पादनाऽपरपर्याया उत्पत्त्यनुकूलव्यापारसंतानरूपा भावनैव क्रिया । नन्वस्तिभवतिविद्यतिषु क्रियावाचित्वमव्याप्तं । नहि तत्रोत्पादना प्रतीयते । उत्पत्तिर्हि आद्यक्षणसंबंधस्तदनुकूलव्यापारश्चोत्पादना तदनुभवश्चास्त्यादिभ्योनास्त्येव । उच्यते । अस्तीत्यादेः स्वरूपधारणं करोतीत्यर्थः । धारणं चोत्तरकालसंबंधः । क्रियावचनः किं । याः पश्यसीत्यादौ धातुत्वं माभूत् । सति हि तस्मिन्नातो धातोरित्यालोपः ॥

**तत्त्वदीपिका—भ्वादिरिति** । भवनं भूः क्रिया आदीयतेऽर्थोऽनेनेत्यादिः शब्दः आङ्पूर्वाद्दाञः किः । तथाच भूशब्दः क्रियावाचक आदिशब्दः प्रकारवाचक इत्यर्थः । एवं सति हिरुक् वर्जने इत्यव्ययेऽतिव्याप्तिस्तस्यापि वर्जनरूपक्रियावाचकत्वात् । अतो भ्वादिरित्यावर्त्तनीयं । अत्रादिशब्दो व्यवस्थार्थः ॥ तथाच भूशब्दमारभ्य ये पठितास्ते धातुसंज्ञाः । एवं च क्रियावाचकत्वे सति भ्वादिगणपठितत्वं धातुत्वमिति लक्षणं । वादावव्ययेऽतिप्रसंगवारणाय सत्यंतं । तावन्मात्रोपादाने च हिरुगादावतिव्याप्तिः । अत्राहुः क्रियावाचित्वलाभायावृत्तिर्न कर्त्तव्या । नच यादावतिव्याप्तिः । याइत्यस्य लाक्षणिकत्वेनैवाग्रहणात् । यदस्त्यदाद्यत्वम् आपि येति सिद्धेः । वेत्यव्ययस्य धातुत्वेप्यनिष्टादर्शनात् । अथ धातुत्वे विकल्पादावपि गंधनादाविव रूपमापद्येतेति चेत् शृणु । तस्याव्ययत्वेन अव्ययाद्विभक्तिरिति तिबादेर्लुकोऽनिवार्यत्वात् । एवं च सूत्रे विभक्तिग्रहणस्य सार्थक्यं न स्यादेरिति नोक्तं । सर्वादेरुभशब्दस्य तु उभम् उभेइत्यत्र पठितत्वेपि उभकावित्याद्यर्थतया सर्वादिपाठस्योक्तत्वेन धातुत्वबाधनात् ॥ धातुत्वे हि स्याद्यनुत्पत्तेरुभकावित्यस्यासंभवात् ॥ अथ द्योदिवावित्यत्र स्वर्गवाचकस्य धातुत्वं स्यादिति वाच्यं । न तत्रोदितः पाठेनानुदितौ तस्याग्रहणात् । सानुबंधकग्रहणेनाननुबंधकस्येत्युक्तेरिति । का पुनः क्रिया भावनैव वेति गृहाण । तथा हि । अभवतो गमनादेरक्रियमाणतया भवतश्च घटादेः क्रियमाणतया भवत्यर्थकर्तुः करोतिकर्मत्वं । तथा च करोत्यर्थकर्तुर्भवितृप्रयोजकतया भवतेरुत्पत्त्यर्थाप्रयोजकव्यापारे ञिरुत्पद्यमानः करोत्यर्थमवलंबते ।

## मू०—आदनुदात्तङितः ॥ अनुदात्तेतो ङितश्च धातोरात् ।

**सुबोधिनी—आदनुदात्तङितः** । अनुदात्तश्च ङ् च अनुदात्तङौ तावितौ यस्य धातोः सोनुदात्तङित्तस्मात् । द्वंद्वांते श्रूयमाण इच्छब्दः प्रत्येकमभिसंबध्यते । द्वंद्वेऽल्पस्वरेति ङस्य पूर्वनिपातो न । हसांतत्वात् । ण्यायनणित्यादिज्ञापकसिद्धं हि तत् । ज्ञापकासिद्धं न सर्वत्रेति देवतेदमर्थे इत्यादिना च तस्यानित्यत्वाच्च । अनुदात्तेतो ङितश्च धातोरात्मनेपदं भवति । एधते । शेते । अन्यपदार्थत्वेन धातोराश्रयणं किं । अगमत् । आशिश्रियत् । लुङो ङित्त्वेपि धातुत्वाभावादान्न ॥

**तत्त्वदीपिका—आदनुदात्तङितइति** । अनुदात्तश्च ङ् च अनुदात्तङौ ताविती यस्य स तथा तस्मात् । द्वंद्वांते श्रूयमाण इत्शब्दः प्रत्येकमभिसंबध्यते इत्यत आह । **अनुदात्तेतो ङितश्चेत्यादि** । अत्र ङ्इत्यस्यास्वरत्वादल्पस्वरस्येत्यप्रवृत्तेः परनिपातःद्वयोःस्वरान्तयोर्मध्येऽल्पस्वरस्य ग्रहणात् । देवतेदमर्थ इत्यादिना तस्यानित्यत्वाच्च । आतपयोरेव सर्वत्र संज्ञात्वेन दर्शनात् । नामैकदेशेन सर्वनाम लक्ष्यत इति न व्याख्येयम् । अन्यपदार्थत्वेन धातोराश्रयणात् । अगमत् अशिश्रियदित्यत्र लुङो ङित्त्वेपि धातुत्वाभावादान्न । अत्र विधेयस्य पश्चाद्ग्रहणस्य युक्तत्वेपि विपरीतकरणात्क्वचिदन्यत्राप्यात् । तेन को जानीत इत्यादि सिद्धम् ।

## मू०—ञित्स्वरितेत उभे ॥ ञितः स्वरितेतश्च धातोरात्पे स्तः ।

**सुबोधिनी—ञित्स्वरितेतउभे** । ञ् इत यस्य स ञित् । स्वरित इद्यस्य स स्वरितेत् । ञिच्च स्वरितेच्चानयोः समाहारः ञित्स्वरितेत्तस्मात् उभयपदम् । आत्तु संनिहितमेव । पं तु णित्पे इत्यतः परामृश्यते ॥

तत्त्वदीपिका—ञित्स्वरितेत उभे । ञ् इत् यस्य स ञित् स्वरित इत्यस्य स स्वरितेत् । ञिच्च स्वरितेच्चानयोः समाहारो ञित्स्वरितेत् तस्मात् । उभे आत्पे इत्यर्थः । यथासंख्यमत्र न शंकनीयं तस्याज्ञापकसिद्धत्वेनासार्वत्रिकत्वात् । अथात्रानुबंधद्वयं न कर्त्तव्यं । ञितः स्वरितेतस्तु स्वरितेतो वा ञित एव विधेयास्तथा च ञित उभे स्वरितेत उभे इति वा सूत्रणीयमिति चेन्न । डुकृञ् इत्यस्य डुकृञ् इति करणे गौरवत्वात् रुधिर् इत्यत्र रुधिर् इति करणे च स्वरिताञित इति कर्त्तुर्युक्तं लाघवात् । अत्र केचित् अत्र आत्पशब्दाभ्यामवयवाभ्यामात्मनेपदपरस्मैपदसंज्ञे गृह्येते ते चाऽन्वर्थे । तथाहि । आत्मने कर्त्रे फलबोधकं पदमात्मनेपदं । परस्मै कर्त्रे फलबोधकं पदं परस्मैपदं । तेन कर्तृगामिनि आत्मनेपदं परगामिनि फले परस्मैपदमित्याहुस्तन्न । उभेग्रहणस्य वैयर्थ्यापत्तेः । तथा हि ञित्स्वरितेत एतावदेव सूत्रमस्तु । आदिति चानुवर्त्यं । तेन कर्तृगामिनि फले आत् । अन्यत्र परतोऽन्यदिति पदं । किंच करोति कुरुते वा घटमित्यत्र घटनिर्माणफलस्य कुलालादन्यगामित्वस्यासंभवात् । सृष्टिं चकार चक्रे वा ईश्वर इत्यत्र जगन्निर्माणफलस्य ईश्वरे संभवाच्च । यजधातौ तु स्वर्गकामो यजेत होतर्यजेति श्रुतिभ्यां यजमानर्त्विजोरात्पप्रयोगनियमोऽन्यत्र तु यथेष्टं प्रयोक्तव्यम् ।

**मू०—परतोऽन्यत् ॥ उक्तनिमित्तहीनाद्धातोः पम् ।**

सुबोधिनी—परतोन्यत् । परस्मादिति परतः तत्रादिर्विभक्त्यर्थे इति पंचम्यंतात्तस् । परत्वस्य सावधित्वादवध्यपेक्षायामनुदात्तङित इत्यादयः संबध्यंते । अन्यत्वस्यापि सापेक्षत्वादादुभेचेति संबध्यते । अनुदात्तेतो ङितो निविशादेर्ञितः स्वरितेतश्च धातोः परतोऽन्यस्माद्धातोः केवलं पं भवति ॥

तत्त्वदीपिका—परतोऽन्यदिति । परस्मादिति परतः । तत्रादिर्विभक्त्यर्थे इति पंचम्यन्तात्तस् । परत्वस्य सावधित्वात् । अवध्यपेक्षायामनुदात्तङित इत्यादयः संबध्यन्ते अन्यत्वस्यापि सापेक्षत्वादादुभेचेति संबध्यते इत्याशयेनाह । उक्तनिमित्तेत्यादि । उक्तानि निमित्तानि तैर्हीनात् रहितादित्यर्थः । तथा च अनुदात्तेतो ङितो निविशादेः ञितः स्वरितेतश्च धातोरन्यस्मात्पं भवतीत्यर्थः । अनुदात्तेत इत्यादि किं । एधते । प्रवर्त्तते ।

**मू०—नवपम् ॥ तिबादीनामाद्यानि नव वचनानि पं संज्ञानि ।**
**पराण्यात् ॥ पराणि नव वचनानि आत्मनेपदानि स्युः ।**

सुबोधिनी—नवपं, पराण्यात् । प्रत्येकमष्टादशवचनात्मका दशविधा आख्याता उक्तास्तेषां नव नव वचनानां संज्ञानं विधीयते । तिबादीनामाद्यानि नववचनानि पंसंज्ञानि पराणि नवाऽऽत्संज्ञानि । पराणीति परशब्देन नवपमित्यत्राऽऽद्यानीति लभ्यंते ॥

तत्त्वदीपिका—नवपमिति । अत्र पराण्यादित्यत्र परशब्देनाद्यानीति लभ्यते । अत्र पाच्छब्दयोरेव संज्ञात्वं न तु ताभ्यामवयवभूताभ्यामाक्षिप्तयोः परस्मैपदात्मनेपदशब्दयोरवयविनोः । दादेः पे णित्पे आद्भुवीत्यादौ पाच्छब्दयोरेवावृत्तिदर्शनाल्लाघवाच्च । न च परगामिक्रियाफलात्मगामिक्रियाफलरूपान्वर्थलाभो न पाच्छब्दाभ्यामिति वाच्यं ॥ विवक्षयैतल्लाभात् । कमलवनोद्घाटनं कुर्वते ये इत्यत्रात्मगामिफलाभावेप्यदर्शनात् । याजको यजति यजमानो यजेतेत्यत्र परगामित्वात्मगामित्वलाभस्तु शिष्टाचारात् । तस्मादत्र समुदायाक्षेपः ।

**मू०नाम्नि चयुष्मदि चास्मदि च भागैः ॥ तिबाद्येकार्थेषु नामादिषूपपदेष्वेते प्रत्ययास्त्रिभिर्भागैः स्युरात्पयोः । नाम्नि प्रयुज्यमाने चाप्रयुज्यमाने प्रथमः । युष्मदि मध्यमः । अस्मद्युत्तमः ।**

सुबोधिनी—नाम्निचयुष्मदिचास्मदिचभागैः । अत्र पातृशब्दावनुवृत्तौ सप्तम्याविपरिणमयितव्यौ । आद्ब्रुवीत्यादेः कर्मणि कर्तरीति चानुवर्तते । नामादिशब्देन विभक्त्यर्थं गृह्यते । प्रकरणात्तिबादयो दशविधा आख्याता गृह्यंते । नामाद्यर्थे कर्तरि कर्मणि च विहितानां तिबादीनां धातोर्यानि नववचनानि तानि त्रिभिर्भागैर्विभज्य प्रयोक्तव्यानि । यथासंख्येन नामार्थे कर्तरि प्रयुक्तेऽप्रयुक्ते च प्रथमो भागः प्रयोक्तव्यः । स पचति । तौ पचतः । ते पचंति । स पचते । तौ पचेते । ते पचंते । अप्रयुक्ते । पचति । पचतः । पचंति । पचते । पचेते । पचंते । नामार्थे कर्मणि । ओदनः पच्यते । ओदनौ पच्येते । ओदनाः पच्यंते । अप्रयुक्ते । पच्यते । पच्येते । पच्यंते । पं तु कर्मणि नास्ति । युष्मदर्थे कर्तरि त्वं पचसि । युवां पचथः । यूयं पचथ । त्वं पचसे । युवां पचेथे । यूयं पचध्वे । अप्रयुक्ते । पचसि । पचथः । पचथ । पचसे । पचेथे । पचध्वे । युष्मदर्थे कर्मणि प्रयुक्ते । त्वं दुःखी क्रियसे रागैः । युवां दुःखिनौ क्रियेथे । यूयं दुःखिनः क्रियध्वे । अप्रयुक्ते । क्रियसे । क्रियेथे क्रियध्वे । अस्मदर्थे कर्तरि प्रयुक्ते अहं पचामि । आवां पचावः । वयं पचामः । अहं पचे । आवां पचावहे । वयं पचामहे । अप्रयुक्ते । पचामि । पचावः । पचामः । पचे । पचावहे । पचामहे । अस्मदर्थे कर्मणि प्रयुक्ते । विरागैः सुख्यहं क्रिये । आवां क्रियावहे । वयं क्रियामहे । अप्रयुक्ते । क्रिये । क्रियावहे । क्रियामहे । त्वया पच्यते मया पच्यते इत्यत्र युष्मदाद्यर्थे आख्यातस्य विधानाभावान्न मध्यमोत्तमौ । प्रथमातिक्रमणे कारणाभावात्प्रथम एव । नन्विह भवान्पचत्वित्यत्र मध्यमः प्राप्नोति भवद्युष्मच्छब्दयोरेकार्थत्वादिति चेन्न । तयोरर्थभेदात् । अलिंगः संबोधनविषयश्च युष्मदर्थः । भवदर्थस्तु लिंगवान्न च संबोधनैकविषय इति । त्वद्रूपः त्वत्कल्पः त्वत्तरः पचसि । मद्रूपःमत्कल्पः मत्तरः पचामीत्यत्र तरादेर्विशेषणत्वेनाकर्तृत्वात् युष्मदस्मदर्थस्यैव कर्तृत्वात् मध्यमोत्तमौ भवतः । अतित्वं प्रियत्वं पचति । अत्यहं प्रियाहं पचतीत्यत्र पूर्वपदान्यपदार्थयोः प्राधान्येन कर्तृत्वात् युष्मदस्मदर्थयोर्गौणत्वेन कर्तृत्वाभावात् न मध्यमोत्तमौ । एवमत्वं त्वं संपद्यते त्वद्भवतीत्यादावपि च्व्यंते हि संघीभवंति ब्राह्मणा इत्यनुरोधेन प्रकृतेः कर्तृत्वम् । विकृतेः कर्तृत्वे तु संघीभवति ब्राह्मण इति स्यात् । अत्रापि युष्मदस्मदर्थयोः विकृतित्वेनाकर्तृत्वं । तदुक्तं ॥ "यदा च्व्यर्थे विनिर्देश्ये भवतो युष्मदस्मदी ॥ द्वयोरपि तयोर्योगे न धातोर्मध्यमोत्तमौ ॥ १ ॥ प्रकृतेर्विकृतेर्वापि ह्येकदा प्रतिपादने ॥ वाचकः प्रकृतेः संख्यां गृण्हाति विकृतेर्न तु ॥ १ ॥" अत एव मृद्घटो भवति ओदनस्तंडुला भवतीति प्रयुज्यते वादिभिः । सह एकोऽर्थो येषां ते तिबाद्येकार्थास्तेषु तिबादीनां यः कर्त्रादिरित्यर्थः ।स एव कर्त्रादिरर्थो नामादीनामित्यर्थः। तिबाद्येकार्थेष्विति किं । त्वां पश्यति । त्वया क्रियते । तुभ्यं ददाति ॥

**तत्त्वदीपिका—नाम्नि चेति** ॥ अत्राद्ब्रुवीत्यादेः कर्मणीति कर्त्तरीति चानुवर्त्तते । यावच्छब्दावनुवृत्तौ च सप्तम्यां विपरिणम्येते । **तिबाद्येकार्थेष्विति** । तिबादिभिरेकार्थास्तेषु यथासंख्यं दर्शयति नाम्नि प्रयुज्यमानादित्यादिना । ननु भागैरित्युक्ते कथं त्रय एव भागा लभ्यन्ते न चत्वारः पंच वेति चेत्सत्यम् । कपिञ्जलालम्भनन्यायेनेति गृहाण । तथाहि । कपिंजलानालभेतेति वाक्ये कपिंजलानिति बहुवचनेपि एकस्मिन् द्वयोश्च बहुत्वाभावात् । प्रथमबहुत्वस्य त्रिषु लाभात् त्रय एव गृह्यंते न तु पंचादय इति । एवमिहापि बोध्यं । भवान् पचतीत्यत्र तु भवदर्थयोः समर्थत्वाभावान्न मध्यमः । तथाहि । अलिंगः संबोधनविषयश्च युष्मदर्थः भवदर्थस्तु लिंगवान्न च संबोधनैकविषयः । त्वत्तरः पचसि मत्तरः पचामीत्यादौ तरादेर्विशेषणत्वादप्रधानत्वादकर्तृता युष्मदस्म-

दर्थयोरेव प्रधानत्वात्कर्तृत्वेन मध्यमोत्तमावेव । अतित्वं पचतीत्यादौ तु तथात्वाभावान्न तथा । अत्वं त्वं संपद्यते त्वद्भवतीत्यादौ च्व्यन्ते तु संपीभवंति ब्राह्मणा इत्याद्यनुरोधेन प्रकृतेरेव कर्तृत्वं न विकृतेर्युष्मदर्थस्य । उक्तंच । "यदाच्व्यर्थे विनिर्दिश्ये भवतो युष्मदस्मदी । द्वयोरपि तयोर्योगे न धातोर्मध्यमोत्तमौ । प्रकृतेर्विकृतेर्वापि ह्येकदा प्रतिपादने । वाचकः प्रकृतेःसंख्यां गृह्णाति विकृतेर्नतु । " मृद् घटा भवंति । ओदनस्तंडुला भवंतीत्येव ।

**कर्तरि पं च ॥ चादात् । भू सत्तायाम् ।**

सुबोधिनी--कर्तरि पं च। कर्तरि वाच्ये धातोः पं भवति चकारादादपि । पचति आख्यात-प्रत्ययेनोक्तत्वात् कर्तरि वाच्ये प्रथमा । ननु भावकर्मकर्तृष्वाद्विधानात् कथं निर्णयः स्यात् । मैवं । प्रयोगान्निर्णयसंभवात् । आस्ते शेते नर इत्यत्र कर्तरि प्रथमादर्शनात् कर्तर्यात् । शय्यते आस्यते नरेणेत्यत्र कर्तरि तृतीयादर्शनात् भावे आत् । चक्रे करिष्यते वा घटं कुलाल इत्यत्र कर्तर्यात् । चक्रे करिष्यते वा घटः कुलालेनेत्यत्र कर्मण्यात् । कर्मणि प्रथमायाःकर्तरि तृतीयायाश्च दर्शनात् । कुर्वीष्ट कर्तेत्यत्र त्वनिर्णय एव । यथा रामाभ्यामित्यत्राऽनिर्णयः ।

**सू०--वर्तमाने तिपतसअंति सिपथसथ मिपवसमस् तेआतेअंते सेआथेध्वे एवहेमहे ॥** वर्तमानार्थक्रियावृत्तेर्धातोस्तिबादयः प्रत्यया भवंति । एषां संज्ञा लट् ।

**सुबोधिनी**--वर्तमाने तिप्तसअंति सिप्थसथ मिप्वसमस् तेआतेअंते सेआथेध्वे एवहेमहे ॥ व्यापारे इति शेषः । व्यापारः क्रिया सा च धातोर्वाच्या । सा त्रिविधा । अतीताऽनागतवर्तमानभेदात् । तत्र वर्तमानक्रियावृत्तेर्धातोस्तिवादयो भवंति । ते च द्योतकाः । वर्तमानक्रिया धातुनैवोक्तत्वात् । यदि तु सद्यआदिरित्यतः काले इत्यनुवर्तते । वर्तमाने काले वाच्ये तिबादय इति व्याख्यायते तदा तिबादयो वाचका अपि भवंति । कालस्य धातुनाऽभिहितत्वात् । अथ को वर्तमानः । प्रारब्धापरिसमाप्तो वर्तमानः भूरस्तीत्यादौ कथं वर्तमानादिः । प्रारब्धापरिसमाप्तत्वाद्यभावात् । उच्यते । सृष्टिसंहारश्रुतिप्रामाण्यस्वीकर्तॄणां मतेऽत्राप्यस्ति वर्तमानत्वं । कल्पादौ प्रारब्धायाः स्थितेरपरिसमाप्तत्वात् । तस्थुः पर्वता भविष्यति भूरित्यादौ त्वतीतानागतकल्पावादाय भूतभविष्यत्ते बोध्ये । क्रियाफलयोर्वाचको धातुः । कालः संख्या कारकं चाख्यातार्थः । तत्र तिबादित्वेन कालोऽर्थः । तिप्तस्त्वादित्वेन एकत्वद्वित्वबहुत्वरूपाः संख्यार्थाः । आत्वेन भावकर्मणी अर्थः । आत्वेन पत्वेन च कर्तार्थः तत्र फलस्य कर्मण्यन्वयः । फलाश्रयस्य कर्मत्वात् । व्यापारस्य कर्तर्यन्वयो धातूपात्तव्यापाराश्रयस्य कर्तृत्वात् । संख्यायास्तु कर्तरि प्रत्यये कर्तर्यन्वयः । कर्मणि प्रत्यये कर्मण्यन्वयः । कालस्य क्रियायामन्वयः । कर्तृकर्मणी क्रियाविशेषणे । क्रिया तु विशेष्येति शाब्दिकमतं । वर्तमानोऽर्थो यस्याः वर्तमानार्था सा चासौ क्रिया चेति शाकपार्थिवादित्वान्मध्यमपदलोपः । वर्तमानक्रिया सा वृत्तिर्यस्य स तथा । तस्मात् तिबित्यादेः समाहारे ऐकपद्यं । अन्यथा समासे त्वष्टादशपदत्वम् ॥

**तत्त्वदीपिका--वर्त्तमानेइति** । व्यापारे इति शेषः । व्यापारश्च क्रिया । सा च त्रिविधा अतीतानागतवर्त्तमानभेदात् । सा च धातुवाच्या इत्याशयेनाह । **वर्त्तमानार्थेत्यादि** । वर्त्तमानः अर्थो यस्याः सा वर्त्तमानार्था सा च सा चासौ क्रिया चेति सा तत्र वृत्तिर्यस्य स तथा तस्मादित्यर्थः । तिबित्यादेः समाहारे ऐकपद्यम्

अन्यथा त्वष्टादशपदत्वं । तिबादयश्च वर्त्तमानाक्रियायाः द्योतका एव न तु वाचकास्तस्य धातुनैव लाभात् । वर्त्तमानत्वं तु प्रारब्धापरिसमाप्तत्वं । विंशत्यादिवर्षपर्यंतं वेदाध्ययनेपि अधीते इति प्रयोगदर्शनात् । भूतभविष्यद्भिन्नत्वमिति लक्षणं तु न भविष्यद्वर्त्तमानभिन्नत्वं भूतत्वं वर्त्तमानभूतभिन्नत्वं भविष्यत्त्वमित्यपि स्यात्तथा चान्योन्याश्रयदोषः स्यात् । पर्वतास्तिष्ठन्तीत्यत्र तु स्वतोभूताद्यभावेपि कालत्रयवर्तिनां राज्ञां भूतादिभेदभिन्नपालनादिक्रियाभेदाद्भूतादिव्यवहारः । तथाहि नलादिकाले तस्थुः । कल्क्यादिकाले स्थास्यंति । इदानीन्तनराजकाले तिष्ठंति । आत्मास्तीत्यत्रापि शरीराद्युपाध्यतीतत्वादिनाऽतीतत्वादिव्यवहारोस्तीति दिक् ॥

**मू०-अप्कर्तरि ॥ कर्त्रर्थेषु तिबादिषु चतुर्षु दिप्पर्य्यंतेषु परतो धातोरप् स्यात् ।**

**सुबोधिनी**-अप्कर्तरि। कर्तरीति नापोऽभिधेयमाख्यातोक्तत्वात्।किंत्वऽनुवृत्तस्यचतुर्विधस्य विशेषणम्। धातोरप्स्यात् कर्त्रर्थेषु चतुर्षु परतः । अपः पित्त्वमपि तादेर्ङिति ङित्त्वाभावार्थम् । अन्यथा भवत इत्यादौ ङित्त्वाद्गुणो न स्यात् ॥

**तत्त्वदीपिका**-अप्कर्तरीति । कर्त्तरि विहितेषु चतुर्षु तिबादिषु ।

**मू०गुणः ॥ नाम्यंतस्य धातोर्गुणो भवति ।**

**सुबोधिनी**-गुणः । अरेदोनामिन इति नियमान्नामिग्रहणं तस्य धातोर्विशेषणत्वात् तदंतविधिः ।

**तत्त्वदीपिका**-गुणइति । अरेदोनामिन इति नियमान्नामिग्रहणे ह्रस्य च विशेषणत्वादंतलाभ इत्याशयेनाह । नाम्यन्तस्येति ।

**मू०-अपित्तादिर्ङित् ॥ पकारेतं तादिकं च विहाय अन्यप्रत्ययो ङिद्वत्स्यात् ।**

**सुबोधिनी**-अपित्तादिर्ङित् । प् इत् यस्य स पित् त आदिर्यस्य सः तादिः पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः । नञिति समासः । ङित् ङिद्वदित्यर्थः । अत्र पर्युदासबलात् पित्तादिभिन्नप्रत्यय एव गृह्यते न धातुः । ननु सादेः कृतां चानेन ङित्त्वं कुतो नेति चेन्मैव यङ्नङोर्ङित्करणात् ज्ञापकात् । नानिटिसे इति सूत्रारंभाच्च । अतः परिशेषात्तिबादीनां चतुर्विधानामाख्यातानां तद्विकरणानां चानेन ङित्त्वं नान्येषां । तेन बिभरांचकारेत्यादावामो न ङित्त्वम् ॥

**तत्त्वदीपिका**-अपित्तादिरिति । प् इद्यस्य स पित् त आदिर्यस्य स तादिः पिच्च तादिश्च पित्तादी ताभ्यामन्योऽपित्तादिः । नञिति समासः । ङित् ङिद्वादित्यर्थः । पर्युदासात्प्रत्यय एव गृह्यते न तु धातुः । न तु दैप्दाप्भिन्नस्य धातोर्ङित्त्वं । सति ङित्त्वे आत्स्यात् । ङिदित्यपहाय किदिति तु नोक्तं । वक्ता इत्यादौ यजादित्वात्किति संप्रसारणप्रसंगात् । कुरुत इत्यत्र ङित्यदुरित्यस्याप्रसङ्गः । तादीत्यत्रादिग्रहणं तूत्तरार्थं सिसतासीत्यत्रैव नवानां ग्रहणसंभवात् । सिस्योरिति लिंगान्तयोर्ग्रहणार्थमपि न । तशब्देन विग्रहस्तु व्याख्यानानुसारान्न । सादेः कृतां च ङित्त्वं तु न नानिटि से इति सूत्रारंभात् । यङ्नङ्ङित्करणात् ज्ञापकात् अतस्तिबादीनां तद्विकरणानामपि न ङित्त्वं नान्येषाम् । तेन बिभरांचकारेत्यादौ न ङित्त्वम् । यत्तु आदिशब्दादाद्योपि गृह्यते तेन गोपायतीत्यादिसिद्धिरिति वासुदेवेनोक्तं तद्भसात् ।

**मू०-क्ङित्यद्व्युसि ॥ किति ङिति च परे वृद्धिगुणौ न द्विर्वचनहेतुके उसि गुणः स्यात् । इति तासि गुणाप्राप्तौ अनिनिमित्तो गुणः । भवन्नः ।**

सुबोधिनी–क्ङित्यद्वयुसि । क्च ङ्च क्ङौ तावितौ यस्य स तथा तस्मिन् । अद्वयुसीति विशेषणं द्वित्वनिमित्ते उसि न । अजुहवुः ॥

तत्त्वदीपिका–संज्ञाफलमाह क्ङित्यद्वयुसि । क्च ङ्च क्ङौ तावितौ यस्य स तथा तस्मिन् । अद्वयुसि इति विशेषणम् द्विरुक्तधातोर्निमित्तभूतादुसद्वयुस् तस्मात्अन्यस्मिन्नित्यर्थः । अतोऽजुहवुरित्यादौ तादृशस्य उसो भावादत्र गुणः । यत्तु नोक्तमनित्यमित्यनेन अजुहवुरित्यादौ न गुण इति वासुदेवेनोक्तं । तन्न । देः स्वरेऽपि नोपधाया गुण इति सूत्रेणैवात्र गुणनिषेधे सिद्धे तदर्थं नोक्तमनित्यमित्याश्रयणस्य व्यर्थत्वात् ।

**मू०अदे ॥ अतो लोपो भवत्यकारे एकारे च परे । भवंति । भवसि । भवथः । भवथ ।**

सुबोधिनी–अदे । अच्च एचेति पृथक्पदे अविभक्तिके । अत इत्यनुवृत्तम् । अतो लोपे भवति अति एति च परे । भवंति । पचे । अतः किं । ब्रुवंति । ब्रुवे । तपरः किं । यांति । रौ आख्यातप्रकरणे एवायं विधिस्तेन न स्यादावतिव्याप्तिः ॥

तत्त्वदीपिका–अदे इति । अच्च एच अदे लुप्तसप्तमीकम् । अत इति त्वनुवर्त्तते । स्यादावतिव्याप्ति-स्त्वाख्यातप्रकरणत्वान्न ।

**मू०–व्मोरा ॥ वमयोः परयोरत आत्वं स्यात् । भवामि । भवावः । भवा-मः । स भवति । त्वं भवसि । अहं भवामि । युगपत्प्राप्तौ परः । स च त्वं च भवथः । अहं च त्वं च भवावः । अहं च त्वं च स च भवामः ।**

सुबोधिनी–व्मोरा । व्च म्च व्मौ तयोः । अत आत्वं भवति व्मोः । भवामि[1] । भवावः । भवामः । अतः किं । चिनुवः । चिनुमः । आख्यातप्रकरणे एव युगपत्प्राप्तौ परः । स च त्वं च पंडितौ भवथः । अहं च स त्वं च पंडिता भवाम इत्यत्र त्रयाणां नामाद्यर्थानां कर्तृत्वे-नैकदा प्राप्तौ परत्वात् मध्यमोत्तमौ भवतः।उक्तंच । "एकदा चेत् क्रियाकालसंबंधप्रतिपादनं॥ धातोर्नामादिषूक्तेषु यः परः स पुमान् भवेत् ॥ १ ॥" परत्वं चाभिधायकसूत्रापेक्षया न प्रयो-गापेक्षया ग्राह्यं । अस्मदर्थस्यैकत्वेपि समुदायाश्रिता संख्या ग्राह्या । तदुक्तं । " द्वयोर्नाम्नो-र्बहूनां वा यदि वाक्ये समुच्चयः ॥ नामत्रयाश्रिता संख्या कृतिवाच्योर्विशेषणं ॥ १ ॥ " स च त्वं च अहं चाहेति विवक्षायां त्वेकशेषो भवति । संख्या तु समुदायाश्रिता ॥

तत्त्वदीपिका–व्मोराइति । अत्रापि स्यादावपि नातिप्रसंग उक्तयुक्तेः । तेन धनवानित्यादौ नात्वम् समानाधिकरणनामादिसन्निपाते व्यवस्थार्थमाह । युगपदिति । एकदा प्राप्तः परः पुरुषः प्रथमापेक्षया मध्यमः मध्यमापेक्षया उत्तमः पुरुषो भवतीति यावत् ।

**मू०–विधिसंभावनयोः यात् याताम् युस् यास् यातं यात यां याव याम ईत ईयाताम् ईरन् । ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि ॥ विधिः कर्तव्यार्थोपदेशः । संभावनं कल्पनम् । तत्र यादादयः । एषां संज्ञा लिङ् ।**

सुबोधिनी–विधिसंभावनयोः यात् याताम् युस् यास् यातं यात यां याव याम ईत ईयाताम् ईरन् ईथास् ईयाथाम् ईध्वम् ईय ईवहि ईमहि ॥ धातोर्यादादयः प्रत्ययाः स्युः

---

[1] वर्तमाने उत्तमपुरुषैकवचनमेतत् ।

विधिसंभावनयोर्वाच्ययोरित्ययं वाचकतापक्षः। नचात्रपक्षे विध्यादिनाऽर्थेनकर्त्राद्यर्थबाधो विरोधाभावात्। यद्वा विधिसंभावनयोर्वर्तमानाद्धातोर्यादादयः प्रत्ययाः स्युः।विध्याद्यर्थस्य विशेष्यस्य प्रकृत्यर्थविशेषणत्वे द्योतकतापक्षोयं । विपूर्वाद्धिधधातोरंतर्भावितण्यर्थान्नङ्किरिति भावे किः विधविधाने इत्यस्मादंतर्भावितण्यर्थाद्वा किः । विधानं वेधनं वा विधिः । अनुष्ठापनं कारणा प्रवर्तनेति यावत् । सा प्रवर्तना श्रुतिवाक्यनिष्ठा । लौकिकवाक्ये पित्रादिवक्तृनिष्ठा । संपूर्वकाद्भवतेश्चौरादिकाद्वा प्रेरणे स्वार्थे वा ञिः ।भावे युट् ततः स्त्रियामाप् । संभावना कल्पना। ऊहः कर्तव्योर्थस्तस्योपदेशो विधिः ॥

**तत्त्वदीपिका–विधिसंभावनयोरिति** । विधानं विधिः विपूर्वाद्धाधातोर्नङ्कीति किप्रत्ययः । संभाव्यते संभावना । भावे युट् । संपूर्वाद्भवतेश्चौरादिकाद्वा । तयोरर्थमाह विधिरित्यादिना । कर्त्तव्यः करणीयो योऽर्थस्तस्योपदेशः कल्पनसमूहः । तत्रेति । तयोरर्थयोर्वा च्ययोर्द्योत्ययोर्वा यादादयो भवंतीत्यर्थः । पक्षद्वयस्यापि भाष्ये स्वीकृतत्वात् । तत्राद्यपक्षे त्वित्थमुपपत्तिः। विध्यादिनार्थेन कर्त्राद्यर्थे बाधो न जायते । विरोधाभावात् । वर्त्तमानत्वादेरपि तिबादिवाच्यत्वादिविशेषेण कर्त्रादेरपि निरवकाशत्वाच्च । क्रियां प्रति प्रत्ययार्थतया विशेष्यत्वं तु तुल्यमेव । द्वितीयपक्षे त्वेषोपपत्तिः।विधिसंभावनयोर्वर्त्तमानाद्धातोर्यादादयः प्रत्ययाः स्युः । विध्याद्यर्थस्य विशेष्यस्य प्रकृत्यर्थविशेषणत्वे द्योतकतापक्ष आयाति । एवं च विध्यादेः प्रत्ययार्थत्वं नोचितम् । प्रत्ययार्थत्वे कर्त्रादेरन्यत्र सावकाशत्वेन विध्यादिना बाधः स्यात् । ततश्च यादिभिरभिधानं कर्त्रादेर्भज्येत । ततस्तत्प्रयुक्तैकत्वादिव्यवस्थाः प्रथमपुरुषादिव्यवस्थाश्च स्युरिति महदनिष्टं स्यात्। यद्यपि निमंत्रणादयोप्यर्थाः पाणिनीये प्रदर्शितास्तथापि तेषु प्रवर्तना त्वस्यैकत्वान्नात्र भेदविवक्षा । उक्तं च वाक्यपदीये "न्यायव्युत्पादनार्थं वा प्रपंचार्थमथापि वा ॥ विध्यादीनामुपादानं चतुर्णामादितः कृतम् ॥ अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि । तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया॥" इति । प्रवर्तना तु श्रुत्यादिवाक्यकर्त्रीश्वरादिनिष्ठा लौकिके वाक्ये तु पित्रादिवक्तृनिष्ठा । वेदाध्ययनादौ बालानां पित्रादिप्रयुक्तप्रवृत्तिदर्शनादिष्टसाधनत्वं विध्यर्थइति मतं नादर्त्तव्यं स्वप्रवृत्तेरिष्टसाधनत्वस्यानुमीयमानत्वात् । उदाहरणमाह । शिष्यो गुरुशुश्रूषको भवेदिति । एकशिष्याश्रयागुरुनिष्ठप्रीतिजननानुकूला या तद्विषया प्रेरणेति विशेष्यपक्षः। प्रेरणाविषया एकशिष्याश्रया गुर्वाश्रया प्रीतिजननानुकूला क्रियेति विशेषणपक्षः । भवेदसाविति । अत्रैककोटिकसंशयः स्थाणुर्वा पुरुषो वेत्यादौ तु सर्वाः कोटयः समत्वेन भासन्ते । अत्र तु वेदवित्त्वावेदवित्त्वयोर्वेदवित्त्वकोटिरेवाधिका । संशयादयमेव विशेषः संभावनायाम् । ब्राह्मणत्वादिहेतोर्व्यभिचारित्वान्न निश्चयः अवेदविदोपि ब्राह्मणा दृश्यन्ते वेदविदः क्षत्रियाश्च । वेदावाप्त्यनुकूलभावनाश्रय एकोऽपरोक्षार्थस्तदाश्रयात्मधारणानुकूला या भावना तद्विषयाब्राह्मणत्वहेतुका संभावना ब्राह्मणत्वहेतुका या संभावना तद्विषया वेदावाप्त्यनुकूलभावनाश्रयपरोऽक्षैकार्थनिष्ठात्मधारणानुकूला भावनेति वा बोधः । एवं भवेदयं बलवान् क्षत्रियत्वादित्यादि बोध्यम् ।

**मू०–या ॥ अतः परो या इः स्यात् । भवेत् । भवेताम् ।**

**सुबोधिनी**–या । अविभक्तिको निर्देशः । अतः परो या इः स्यात् । अतः किं । युयात् तपरः किं । यायात् ॥

**तत्त्वदीपिका–याइति** । अनुकार्यानुकरणयोरभेदविवक्षयाऽविभक्तिको निर्देशः। आदात्थइरित्यत इरित्यनुवर्त्तते । अन्त्यादेशः षष्ठ्यभावान्न ।

**मू०–युसइट् ॥ अतः परस्य युस इडागमःस्यात् । भवेयुः । भवेः । भवेतं । भवेत ।**

**सुबोधिनी**–युसइट् । अतः परस्य युस इट् स्यात् । टित्त्वादादौ ॥

तत्त्वदीपिका–युसइट् इति। ङित्वादागमः। अन्यथा इरित्यस्यानुवृत्तौ इट्ग्रहणं न कुर्यात्।

**मू०–यामियम्** ॥ अतः परो यामियं स्यात्। भवेयम्। भवेव। भवेम। शिष्यो गुरुशुश्रूषको भवेत्। विधिः। भवेदसौ वेदवित्। ब्राह्मणत्वात्।

सुबोधिनी– यामियम्। अतः किं। युयाम्। तपरः किं। यायाम् ॥

**मू०– आशीःप्रेरणयोः तुप् ताम् अंतु हि तं त आनिप् आवप् आमप् तांम् आताम् अंताम् स्व आथां ध्वम् ऐप् आवहैप् आमहैप्** ॥ अप्राप्तप्रार्थनमाशीः परस्येष्टार्थशंसनं वा प्रेरणं प्रवर्तनं तत्र तुबादयः। एषां संज्ञा लोट्।

सुबोधिनी–आशीःप्रेरणयोःतुप् ताम् अंतु हि तं त आनिप् आवप् आमप् ताम् आताम् अंताम् स्व आथां ध्वम् ऐप् आवहैप् आमहैप् ॥ धातोस्तुबादयःस्युःआशीःप्रेरणयोर्वाच्ययोः। आशीःप्रेरणयोर्वर्त्तमानाद्धातोरिति द्योतकतापक्षः। आशासनमाशीः। आङः शासुइच्छायां ततःक्विप् आत ईत्वं निपातितं षत्वं। प्रपूर्वादीर्गतावित्यस्मात्प्रेरणार्थेऽर्यंताद्भावे युट्। प्रेरणा प्रवर्तना विधिशब्दार्थ एव। आशीश्च प्रेरणा च आशीःप्रेरणे तयोः। आशासनं चाप्राप्तस्यैव संभवतीत्यप्राप्तप्रार्थनमाशीः। सा च स्वस्य परस्य च संभवति परस्येष्टार्थशंसनं वा अशिरिदमप्यप्राप्तविषयमेव। यद्यपि यादादितुबादयो न कालविशेषे विहितास्तथापि भविष्यत्कालोऽत्र गम्यते। अशीतवर्तमानयोर्विध्याद्यसंभवात् ॥

तत्त्वदीपिका– आशीःप्रेरणयोरिति। आशासनमाशीः। आङः शासु इच्छायाम्। अस्मात्संज्ञायाम्–कर्त्तरीत्यनुवर्त्तमाने स्त्रियां क्तिरित्यधिकारे संपदादेः क्विब्वेति क्विप् अस्मादेव निपातनात्क्विपि आतइः शासेरित्यनेनेत्वं तु परस्मैपदिनो ग्रहणान्न। आशिषीति निर्देशात्क्विपःपरस्य धातोः सस्य षः। प्रेर्यत इति प्रेरणा। प्रपूर्वादीर्गतावित्यस्मादंतर्भावितण्यर्थाद्भावे युट्। प्रेरणा विधिरेव। आशीश्च प्रेरणा च आशीःप्रेरणे तयोः। तयोरर्थमाह अप्राप्तेत्यादिना।

**मू०– तुह्योस्तातङ्ङाशिषि वा** ॥ भवतु भवतात्। भवतां। भवंतु।

सुबोधिनी–तुह्योस्तातङ्ङाशिषि वा। तुश्च हिश्च तुही तयोः अनन्यार्थं हि ङित्त्वमंत्यादेशं प्रयोजयति। अत्र तु गुणवृद्धिप्रतिषेधे संप्रसारणे चरितार्थत्वात् ङित्त्वस्य नांत्यादेशता। ब्रूतात्। मृष्टात्। उष्टादित्यादि ॥

तत्त्वदीपिका– तुह्योरित्यादि। तुश्च हिश्च तुही तयोः। अत्र तातङो ङित्वे गुणप्रतिषेधसंप्रसारणाद्यर्थतायां संभवत्प्रयोजनमतो नान्त्यादेशं प्रयोजयति। अनन्यप्रयोजनमेव ङित्त्वमंत्यादेशं प्रयोजयति।

**मू०– अतः** ॥ अतः परस्य हेर्लुक् स्यात्। भव भवतात्। भवतं। भवत। भवानि। भवाव। भवाम। अध्ययनायोद्यतो भव सौम्य। आयुष्मान् भवतु भवान्।

सुबोधिनी–अतः। स्थानिवद्भावेन तातङो हित्वेपि लोपो न। ओर्वा हेरित्यतो वेत्यनुवृत्तस्य व्यवस्थितत्वेन स्वीकारात् ॥

तत्त्वदीपिका— अतइति । अत्र ओर्वा हेरित्यतो वेत्यस्यानुवृत्तेस्तस्य व्यवस्थितत्वाश्रयणात्स्थानिवद्भावेन तातङो ङित्वेपि न लोपः । आयुष्मानिति । अतिशयितायुःप्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणक्रिया या तद्विषया शुभाशंसाविषयभूता दीर्घायुःप्राप्त्यनुकूलैकभवदर्थाश्रयात्मधारणक्रियेति वार्थः । यादादितुबादीनां कालविशेषाकथनेपि भविष्यत्कालो बोध्यः । शब्दं कुर्वाणे नरे विरामशंकायां शब्दं कुर्वित्युक्तावपि भाविशब्दविषयत्वात् विधेर्न वर्त्तमानशब्दविषयता ।

**मू०— अनद्यतनेऽतीते दिप् ताम् अन् सिप् तं त अमिप् व म तन् अताम् अंत थास् आथां ध्वम् ई वहि महि ॥ अतीताया रात्रेर्यामद्वयादर्वाग्यावदागामिन्याः प्रथमं यामद्वयं दिवसः स कालः सोऽद्यतनः । नास्त्यद्यतनो यस्मिन्नतीते तत्र दिवादयः । एषां संज्ञा लङ् । दिसिमीनामिकार उच्चारणार्थः ।**

सुबोधिनी—अनद्यतनेऽतीते दिप् ताम् अन् सिप् तं त अमिप् व म तन् आताम् अंत थास् आथां ध्वम् ई वहि महि ॥ अनद्यतनेऽतीते काले द्योत्ये वाच्ये वा धातोर्दिबादयो भवंति । अस्मिन्नहनीत्यद्यशब्दवाच्यः कियान्काल: । अतीतरात्रेरंतिमं यामद्वयमागामिन्याः प्रथमं यामद्वयं मध्यवर्ती दिवसः स कालोऽद्यशब्दवाच्यः । अद्य भवोऽद्यतनः। त्यतनाविति तनः । अद्यतनकालस्त्रिविधः अतीतोऽनागतो वर्तमानश्च । तत्राद्यतने अतीते भूते सिः । अद्यतने वर्तमाने तिबादिः । अद्यतनेऽनागते लृट् । नास्त्यऽद्यतनो यस्मिन्निति बहुव्रीहिः । यद्वा । अद्यतनादन्योऽनद्यतन इति नञ् इति नञ्तत्पुरुषः अन्स्वरे इत्यन् नाम्नो नोलोपशिति नलोपस्तु न । विधानसामर्थ्यात् । तस्मिन् ह्यस्तने काले दिवादिरर्थादपरोक्षे । परोक्षेणादिविधानात् ।

तत्त्वदीपिका— **अनद्यतने** इति । अस्मिन्नहनीत्यद्य । सद्यआदित्यादिदमः अद्यप्रत्ययश्चाहनीत्यर्थे निपात्यते । तद्धितोक्तत्वात्प्रथमा । अद्यशब्दवाच्यः कियान् काल इत्याह । **अतीताया** इत्यादि । अतीता गता या रात्रिश्चतुर्यामात्मिका तस्या यद्यामद्वयं ततोऽर्वाकमागामिन्या रात्रेः प्रथमं यामद्वयं यावद्भवति तावानष्टयामात्मकः कालोऽद्यशब्दवाच्यः । केचित्तु अरुणोदयादारभ्य अरुणोदयपर्यन्तः कालः । अन्ये तु सूर्योदयादारभ्य सूर्योदयपर्यन्तमित्याहुः । लौकिकानां ह्योऽद्य एव इति तत्रैव व्यवहारदर्शनात् । अद्यभवोऽद्यतनः त्यतनाविति तनः । अद्यतनश्च कालस्त्रिविधः । अतीतवर्तमानानागतभेदात् । अतीते सिः वर्त्तमानेतिबादिः अनागते स्यप् । नास्त्यद्यतनो यस्मिन्निति बहुव्रीहिः । तस्मिन् ह्यस्तने काले दिबादिरर्थादपरोक्षे । नन्वेवं ह्यस्तनइत्येवास्तु अनागतकालशंकापि नेति चेत्सत्यम् । नञोक्तमानित्यमित्यद्यतनेपि परोक्षेऽपरोक्षेणादिविध्यर्थमिदम् । तेन बहु जगद पुरस्तात्तस्य मत्ता किलाहमित्यादिप्रयोगाः सिद्धाः । बहुव्रीहिपक्षेद्यतनेऽद्यतनाभावादद्यतने दिबादिप्रसंगाशंका तु न । अद्यतनेऽव्यापकेऽद्यतनस्य व्याप्यस्य सत्त्वात् ।

**मू०— दिबादावट् ॥ धातोः । अभवत् । अभवताम् । अभवन् । अभवः । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम । ह्योभवत् त्वत्पुत्रः ।**

सुबोधिनी—दिबादावट् । दिबादाविति सप्तमीनिर्देशादबाद्व्यवधानेऽप्राप्तावादावडेव पश्चाद्दिबादिः ॥

तत्त्वदीपिका—**दिबादावडिति** । यद्य पिप्रत्ययाधिकारस्तथापि टित्त्वादागमत्वादागमत्वमस्य । प्रत्ययत्वे धातोः परत्वं स्यात् । परत्वे च प्रयोजनाभावाट्टित्त्वं व्यर्थं स्यात् । धातोरिति षष्ठ्यंतानुवृत्तेरागामित्वं तस्यैव दिबादा-

विति सप्तमीनिर्देशादबादिव्यवधानेऽप्राप्तेरादावडेव पश्चादबादिरिति बोध्यम् । न च वचनसामर्थ्याद्व्यवहितेपि भविष्यतीति वाच्यम् । लुप्तविकरणे चरितार्थत्वात् । न च नित्यत्वादबादिनैवादौ भाव्यमिति वाच्यम् । अन्तरंगत्वादट् । अन्तरंगत्वं चास्य शब्दस्य मात्रापेक्षत्वात् । अबादेस्तु कर्त्राद्यपेक्षत्वाद्बहिरंगत्वम् । द्योऽभवदिति । गतादिनसाधिकरणिका युष्मदन्यपुत्राश्रयात्मधारणानुकूलातीता क्रिया । ( स्यादाविति वतुः । यादादाविति सुवचम् । ) (१)

**मू०–परोक्षे णप् अतुस् उस् थप् अथुस् अ णप् व म ए आते इरे से आथे ध्वे ए वहे महे ॥ धातोः परोक्षेऽतीते काले णबादयः । एषां संज्ञा लिट् ।**

**सुबोधिनी**–परोक्षे णप् अतुस् उस् थप् अथुस् अ णप् व म ए आते इरे से आथे ध्वे ए वहे महे ॥ अनद्यतनातीतपरोक्षार्थक्रियावृत्तेर्धातोर्णबादिरिति द्योतकतापक्षः । अनद्यतनातीतपरोक्षार्थे णबादिरिति वाचकतापक्षः । अक्ष्णः परः परोक्षः टाडका इत्यः । यस्य लोपः । अक्षादिंद्रियात्पर इति वा । क्वचिदमाद्यंतस्य परत्वामिति पंचम्यंतस्य परत्वम् । परशब्दस्याकारस्योकारो निपातनात् ॥

**तत्त्वदीपिका**–परोक्षे इति । अक्ष्णः परः परोक्षः टाडकाइत्यः । अक्षादिंद्रियात्पर इति वा । क्वचिद्माद्यन्तस्य परत्वामिति पंचम्यन्तस्य परत्वम् । अस्मादेव निपातनात्परशब्दस्यौकारः । अनद्यतनातीतपरोक्षार्थवृत्तेर्धातोर्णबादयः । ननु पच्यर्थो विक्लित्यनुकूलो व्यापारसंतानोऽधिश्रयणान्तः क्रियाशब्दवाच्यः तस्य समुदायस्य युगपदुत्पत्त्यभावादाशुविनाशित्वाच्च परोक्षत्वमस्त्येवातो णबादिरस्त्विति वाच्यम् । एकैकव्यापारस्य प्रत्यक्षत्वेन समुदायस्यापि लौकिकानां प्रत्यक्षत्वाभिमानात् यत्र त्वेकोप्यवयवः प्रत्यक्षस्तत्र क्रिया परोक्षा । अनद्यतने किम् । ग्रामान्तरे घटोऽभूत् । अत्र घटभवनपरोक्षमतीतमपि न चिरातीतम् । अतीते किम् । अयं कटं कर्त्ता । अत्र करणस्य भविष्यदनद्यतनत्वेप्यतीतत्वाभावः । परोक्षे किम् । रामो राज्यमचीकरादिति हनुमदुक्तिः ।

**मू०– द्विश्च ॥ उक्तार्थणबादियोगे धातोर्द्विर्वचनम् ।**

**सुबोधिनी**–द्विश्च । णबादीत्यनुवृत्तं सप्तम्या विपरिणम्यते । धातोर्द्विर्वचनं भवति णादौ परे । द्वौ वाराविति द्विः द्वित्रिचतुर्भ्यइति क्रियावृत्तौ सुः । अत्र क्रियावाचकं विना क्रियावृत्तेरसंभवाद्वचनमित्यध्याह्रियते । तच्च कृदंतम् । तदपेक्षया धातोरिति कर्मणि षष्ठी । धातोर्द्विरुच्चारणं कर्तव्ये इत्यर्थः । अनंतरस्येति न्यायेनोक्तणादियोगेनैव द्वित्वं न विदो नवानामिति विहितणादियोगे । अत्र द्विर्वचनं द्विःप्रयोग एव न त्वादेशः । तेन तुतोसेत्यादौ कृतस्य सस्याभावात् षत्वं न ॥

**तत्त्वदीपिका**–द्विश्चेति । द्वौ वाराविति द्वित्रिचतुर्भ्यः सुरिति क्रियावृत्तौ सुः । क्रियावृत्तिश्च क्रियावाचकं विना न संभवतीति वचनपरयोगः अत्र द्विर्वचनं द्विःप्रयोग एव न त्वादशः । तेन तुतोसेत्यादौ कृतस्याभावात्षत्वं न । अनन्तरस्येति न्यायादुक्तणादिरेव गृह्यते न तु विदो नवानामित्यादिविहितोपि । तेन वेदेत्यादौ द्वित्वं न ।

**मू०– सस्वरादिर्द्विरद्विः ॥ अनेकस्वरस्य धातोः सस्वराद्योऽवयवोऽद्विरुक्तो द्विर्भवति ।**

**सुबोधिनी**–सस्वरादिर्द्विरद्विः । अद्विरुक्तः किं । बोभूयिषते ॥

**मू०— णादिःकित् ॥** अपित् णादिः कित् ।

सुबोधिनी—णादिःकित् । अपित्तादिर्ङिदित्यतोऽपिदित्यनुवृत्तं । ण आदिर्यस्याऽष्टादशात्मकस्य समुदायस्य स णादिः कित् । किद्वत्कार्यातिदेशोयम् । ईजतुः । जुहुवतुः ॥

तत्त्वदीपिका—णादिःकिदिति । ण आदिर्यस्य स णादिः । अपित्तादिर्ङिदिति सूत्रादपिदित्यनुवर्तते । नन्वत्र किदिति किमर्थम् । पूर्वसूत्रात् ङिदित्यस्यानुवृत्तेरेव सत्त्वादिति चेत्सत्यम् । ईजतुरित्यादौ संप्रसारणं न सिद्ध्येत् । चक्रतुरित्यादौ ङ्स्युदुरित्युत्वप्रसंगापत्तेश्च । अथ णादिरित्यत्र ज्वलादेर्ण इति विहितःकुतो न गृह्यते इति चेत्सत्यम् । क्यप्किपोः कित्त्वेन तद्ग्रहणस्य सिद्धत्वात् । यत्तु वासुदेवेन ऋसंयोगान्नेत्यनंतरं क्त्वा सेटः किद्वेत्यतोऽनन्तरतो वानुकर्षणात्क्वाचित्संयोगाद्वा कित्त्वम् । तेन ममंथतुः ममथतुरिति रूपद्वयमपि स्वीकृतं तदपाणिनीयत्वादुपेक्षितम् । ममंथतुरित्यस्यैवोचितत्वात् ।

**मू०— आभ्वोर्णादौ ॥** पूर्वस्याकारस्य भूशब्दस्य चाकारो णादौ परे ।

सुबोधिनी—आभ्वोर्णादौ । अश्च भूश्च अभ्वौ तयोःपूर्वस्य हसादिरित्यतः पूर्वस्येत्यनुवृत्तम् ।

तत्त्वदीपिका—आभ्वोर्णादावीति । आ अभ्वोरिति छेदः । अश्च भूश्च अभ्वौ तयोः पूर्वस्य । हसादिरिति सूत्रात् पूर्वस्येत्यनुवर्त्तते । षष्ठीनिर्दिष्टत्वाद्भुवऊकारस्य "नानर्थकेऽलोंत्यविधिरनभ्यासविकारे" इत्यत्र अभ्यासविकारत्वान्नान्त्यस्य निषेधः । यत्तु नो वेत्यतो वेत्यनुवृत्तेर्व्यवस्थया भावकर्मणोर्भुवो नात्वम् । तेन बभूवे सुखमनुबभुवे इत्युक्तं वासुदेवेन । तन्न । बभूवे अनुबभूवेइतिरूपस्यैवन्याय्यत्वात् । तस्यातपत्रंबिभरांबभूवे । विभावरीभिर्बिभरांबभूविरेइत्यादौ च तथा दर्शनात् । यद्यपि भूकारस्य दीर्घाकारकरणं निरर्थकं तथाप्यानर्थेत्याद्यर्थम् ।

**मू०— ह्रस्वः ॥** पूर्वसंबंधिनो दीर्घस्य ह्रस्वः ।

सुबोधिनी—ह्रस्वः । पूर्वस्य स्वरस्य ह्रस्वः स्यात् । बभूवेत्यत्र तु आभ्वोरिति कृतस्य दीर्घस्य ह्रस्व इत्यर्थः ॥

**मू०— झपानां जबचपाः ॥** पूर्वस्य झपानां जबाश्चपाः स्युः । झ ढ ध घ भा नां ज ड द ग बाः । ख फ छ ठ थानां च ट त क पाः स्युः ।

सुबोधिनी—झपानां जबचपाः । वर्ग्यौ वर्ग्येणेति स्थानैक्या आदेशा भवंति ॥

**मू०—भुवो वुक् ॥** भुवो वुगागमो णादौ स्वरे । बभूव । बभूवतुः । बभूवुः ।

सुबोधिनी—भुवो वुक् । कृताकृतप्रसंगित्वेन नित्यत्वात्प्रथमं वुक् ततो वुको धात्ववयवत्वाद्गुणवृद्धी न ।

तत्त्वदीपिका—भुवइति । वुको धात्ववयवत्वाद्गुणवृद्धी न । नच प्रथमं गुणवृद्धिप्रसंग इति वाच्यम् । कृताकृतप्रसंगित्वेन नित्यत्वात्प्रथमं तस्यैव प्रवृत्तेः ।

**मू०— क्रादेर्णादेः ॥** कृ सृ भृ वृ द्रु स्तु श्रु स्रु इत्येतेभ्यः परस्य वसादेर्णादेरिट् न भवति अन्यस्मात् भवतीति नियमादिट् स्यात् । बभूविथ । बभूवथुः । बभूव । बभूव । बभूविव । बभूविम । बालिर्बलवान् बभूव ।

सुबोधिनी—क्रादेर्णादेः । डुकृञ् करणे कृञ् हिंसायामित्युभौ गृह्येते । सृगतौ । भृ भरणे डुभृञ्धारणपोषणयोरित्युभौ । वृङ् सम्भक्तौ वृञ् वरणे इत्युभौ । द्रु गतौ । ष्टुञ् स्तुतौ । श्रु

श्रवणे । द्रु गतौ । एते क्रादयः । कृ सृ भृ इति त्रयाणामनुदात्तत्वान्नैकस्वरादिति प्रकृत्याश्रये इण्निषेधे प्राप्ते वृङ्वृञोस्तूदात्तत्वात् कित इति प्रत्ययाश्रये इण्निषेधे प्राप्ते द्रुस्त्वादीनां चतुर्णां स्वरांतत्वात् स्वरांतादृवतश्चेतीड्विकल्पे प्राप्ते च नियमः ॥

तत्त्वदीपिका—कादेरिति । डुकृञ्करणे । सृगतौ । डुभृञ्धारणपोषणयोः । वृञ्वरणे । द्रुगतौ । स्रुप्रस्रवणे । ष्टुञ्स्तुतौ । एते क्रादयः । नियमादिति । विध्यभावादिडभावे सिद्धे सत्यारंभो नियमाय भवतीति नियमः ।

**मू०— आशिषि यात् यास्तां यासुस् यास् यास्तं यास्त यासं यास्व यास्म सीष्ट सीयास्तां सीरन् सीष्ठास् सीयास्थां सीध्वं सीय सीवहि सीमहि ॥ धातोराशिषि यादादयः । एषां संज्ञा लिङ् ।**

सुबोधिनी—आशिषि यात् यास्तां यासुस् यास् यास्तं यास्त यासं यास्व यास्म सीष्ट सीयास्तां सीरन् सीष्ठास् सीयास्थां सीध्वं सीय सीवहि सीमहि ॥ धातोर्यादादय आशीर्वादे वाच्ये । यद्वा । प्रार्थ्यमानाक्रियावृत्तेर्धातोरिति वा ॥

तत्त्वदीपिका—आशिषीति । स्वस्य परस्य चेष्टार्थस्य शासनमाशीः तस्यां वाच्यायां यादादयः । यद्वा प्रार्थनप्रक्रियावृत्तेर्धातोर्यादादयः ।

**मू०—आशीर्यादादेः पं कित् ॥ भूयात् । भूयास्तां । भूयासुः । भूयाः । भूयास्तं । भूयास्त । भूयासं । भूयास्व । भूयास्म । स श्रीमान् भूयात् ।**

सुबोधिनी—आशीर्यादादेः पं कित् । ननु ङित्त्वेनैव गुणवृद्धिनिषेधः सिद्ध इति चेन्न । इज्यात्सुप्यादित्यादौ संप्रसारणार्थं जागर्यादित्यादौ जागर्तेरिति गुणार्थं च किद्वचनम् ।

तत्त्वदीपिका—स श्रीमानिति । एकतदभिन्नाश्रयाश्रीमदनुकूलाभावनाशंसना । आशंसाविषया भवन क्रिया वेति बोधः ।

**मू०— श्वस्तने ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस् ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ॥ श्वोभाविन्यर्थे तादयः । एषां संज्ञा लुट् ।**

सुबोधिनी—श्वस्तने ता तारौ तारस् तासि तास्थस् तास्थ तास्मि तास्वस् तास्मस् ता तारौ तारस् तासे तासाथे ताध्वे ताहे तास्वहे तास्महे ॥ आगामिनि दिने श्वोऽव्ययं । श्वोभवः श्वस्तनः कालस्तस्मिन्वाच्ये धातोस्तादयः । यद्वा श्वस्तने व्यापारे वर्तमानाद्धातोरिति वा ॥

तत्त्वदीपिका—श्वस्तनेइति । अद्यतनदिनातिरिक्तागामिदिने श्वःशब्दो वर्त्तते । तत्र भवः श्वस्तनः कालस्तस्मिन्वाच्ये धातोस्तादयः ।

**मू०— सिसतासीस्यपामिट् ॥ भविता । भवितारौ । भवितारः । भवितासि । भवितास्थः । भवितास्थ । भवितास्मि । भवितास्वः । भवितास्मः । श्वो भविता राज्यभारः कुमारस्य ।**

सुबोधिनी–सिसतासीस्यपामिट् । धातोरित्यनुवृत्तम् ॥

तत्त्वदीपिका–श्वो भवितेति। चिरागामिदिनाधाराएकराज्यभाराभिन्नाश्रयकागामिकालभाविनीआत्मधारणानुकूला क्रियेत्यर्थः ।

**मू०–त्यादौ भविष्यति स्यप् ॥** धातोर्भविष्यति काले स्यप्प्रत्ययो भवति तिबाद्यष्टादशसु परतः । एषां संज्ञा लृट् । भविष्यति । भविष्यतः । भविष्यंति । भविष्यसि । भविष्यथः । भविष्यथ । भविष्यामि । भविष्यावः । भविष्यामः । कल्की धर्मपालको भविष्यति ॥

सुबोधिनी–त्यादौ भविष्यति स्यप् । तिरादिर्यस्य तास्मिन् भविष्यत्यर्थे वर्तमानाद्धातोः स्यप्प्रत्ययो भवति त्यादौ परे इति भविष्यत्त्वं द्योत्यम् । यद्वा धातोः स्यभविष्यति काले वाच्ये तिबादौ परे । भविष्यतीति शत्रंतात्सप्तमी ॥

तत्त्वदीपिका–त्यादौभविष्यतीति । तिप्आदिर्यस्य स त्यादिस्तस्मिन्स्यब्विशिष्टत्यादिवाच्यं भविष्यत्वमिति द्योतयन्नाह । धातोरित्यादि । शतृशानयोरपि तिसेवदतिदेशात्स्यप् । तेन यक्ष्यन् यक्ष्यमाणः इत्यादिसिद्धम्।

**मू०–स्यप्क्रियातिक्रमे ॥** क्रियाया अतिक्रमे कुतश्चिदनिष्पत्तौ सत्यां स्यप्प्रत्ययो भवति दिबादिषु परतः । एषां संज्ञा लृङ् । यदि सुवृष्टिः सुराज्यं चाभविष्यत् तदा सुभिक्षमभविष्यत् । अभविष्यताम् । अभविष्यन् । अभविष्यः अभविष्यतम् । अभविष्यत । अभविष्यम् । अभविष्याव । अभविष्याम ।

सुबोधिनी–स्यप्क्रियातिक्रमे । क्रियाया अतिक्रमः अनिष्पत्तिः असिद्धिरित्यर्थः।भविष्यतीत्यनुवृत्तम् उत्तरसूत्राद्भूते इति च । भूते भविष्यति चार्थे वर्तमानाद्धातोर्दिबादिर्भवति । क्रियाऽनिष्पत्तौ गम्यायां दिबादौ च परे स्यप् भवति । यद्वा । धातोर्भूते भविष्यति चार्थे वाच्ये दिबादिर्भवति । तस्मिंश्च परे स्यप् क्रियातिक्रमे गम्ये ॥

तत्त्वदीपिका–स्यप्क्रियातिक्रमइति । क्रियायाअतिक्रमःअनिष्पत्तिःअसिद्धिरितियावत् । भूतत्वंभविष्यत्त्वंचानुक्तमपिपरिशेषाल्लब्धम्।यदिसुवृष्टिरिति।सुवृष्ट्याश्रयात्मधारणानुकूलाभूताभविष्यन्तीवायाक्रियातदभावप्रयुक्तासुभिक्षाश्रयात्मधारणानुकूलायाः क्रियायाअसिद्धिः । क्रियातिक्रमेकिम् । सुवृष्टिरभूत् । सुभिक्षमभूत् । सुवृष्टिर्भविष्यतिसुभिक्षंभविष्यति । दिबादौकिम् । कृष्णंनमेच्चेत्सुखंयायात् । कर्त्रादिकमाख्यातवाच्यम्। कालस्तुधातोराख्यातस्यवायस्तुविकरणत्वादनर्थकत्वमेव । एवं त्यादावपि सिरपि । अत्रात्यादौ भविष्यतीत्यतः स्यबनुवृत्तिसंभवे स्यब्ग्रहणं शत्रादावपि विधानार्थम् । तेन करिष्यन् करिष्यमाण इत्यादिसिद्धम् ।

**मू०–भूतेसिः ॥** धातोर्भूतमात्रे काले सिः प्रत्ययो भवति दिबादिषु परतः । एषां संज्ञा लुङ् ।

सुबोधिनी–भूतेसिः । अभूत् इति भूतः । अकर्मकत्वात्कर्तरिक्तः । भूतसामान्याद्वर्तमानाद्धातोर्दिबादिर्भवति । यद्वा । धातोः परः भूतसामान्ये वाच्ये दिबादिर्भवति तस्मिंश्च परे सिप्रत्ययो भवति । सिसहितस्य दिबादेर्भूतसामान्योर्थः । अबादिसहितस्य दिबादेर्भूतसामान्योर्थः । अबादिसहितस्य तु भूतविशेषोऽनद्यतनोऽपरोक्षोर्थः ॥

तत्त्वदीपिका—भूतेसिरिति । अभूदितिभूतः अकर्मकत्वात्कर्त्तरिक्तः । भूतसामान्ये सिरित्याह भूतमात्रे इति । तथा च सिविशिष्टदिबादेर्भूतसामान्यमर्थः अबादिविशिष्टस्य तु भूतविशेषाद्यतनेऽपरोक्षः भूतानद्यतनपरोक्षे णबादिः ।

**मू०—दादेःपे ॥ पे परे अपिद्दाधास्थाइण्भूपिबतिभ्यः परस्य सेर्लोपः ।**

सुबोधिनी—दादेःपे । दा आदिर्यस्य स दादिस्तस्मात्सेर्लोपः पे परे । डुदाञ् दाने । दाण् दाने । दो अवखंडने इत्येतेषां दाशब्देन ग्रहणं । दाप् लवने दैप् शोधने देङ् पालने । एषां तु लक्ष्यानुसारान्न ग्रहणं । डुधाञ् धारणपोषणयोः । ष्ठा गतिनिवृत्तौ । इण गतौ । भू सत्तायां । पा पाने ॥

तत्त्वदीपिका—दादेःपेइति । दाआदिर्यस्य दादिस्तस्य अपिदिति दाप्लवनेदैप्शोधने एतौ विहाय।एतयोस्त्यागस्तु लक्ष्यानुसारेण । डुधाञ् धारणपोषणयोः । ष्ठा गतिनिवृत्तौ इणगतौ भू सत्तायाम् पा पाने एभ्यः सेर्लोपः लोपाद्ध्रस्वादल्लोपोनुवर्त्तते । नोवेत्यतो व्यवस्थितत्वाद्वेतिशादीनांवा । शो तनूकरणे । छोछेदने । षोन्तकर्मणि । घ्रा गंधोपादाने । धेट् पाने एषां सेर्वालोप इत्यर्थः ।

**मू०—शाछासाघ्राधेटांवा ॥**

सुबोधिनी—शाछासाघ्राधेटांवा । एभ्यः सेर्वा लोपः । शो तनूकरणे । छोछेदन । षो अंतकर्माणि । घ्रा गंधोपादाने । धेट् पाने ॥

**मू०—भुवःसिलोपेअयङ्लुकिगुणोन ॥ अभूत् । अभूताम् ।**

सुबोधिनी—भुवःसिलोपेअयङ्लुकिगुणोन । भुवो गुणो न सिलोपे सति । यङि लुकि तु भुवो गुणो भवति सिलोपे । प्रकृतिग्रहणे यङ्लुगंतस्यापि ग्रहणमिति परिभाषया गुणनिषेधे प्राप्ते विधिः । अभूत् । अबोभूत् ॥

तत्त्वदीपिका—भुवइति । नानिटि सेइत्यतो नेत्यनुवृत्तेराह भुव इति । अयङ्लुकीति । यङ्लुकि तु अबोभूदित्यत्र सिलोपेपि गुणो भवत्येव ।

**मू०—भुवःसिलोपेस्वरेवुक्॥अभूवन् । अभूः । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ।**

सुबोधिनी—भुवः सिलोपेस्वरेवुक् । भुवो वुगागमः स्वरे परे सति ॥

**मू०— माङिसिरेव ॥ स्मसहितेदिबादिर्वा ॥**

सुबोधिनी—माङिसिरेव । माङ्शब्दप्रयुज्यमाने धातोर्दिबादिपरः सिरेव भवति सर्वेषामाख्यातानांविषये ॥ स्मसहितेदिबादिर्वा ॥ स्मोत्तरे माङि प्रयुज्यमाने धातोर्दिबादिर्वा । पक्षे भूते सिः । सर्वलकारविषये लङ्लुङावित्यर्थः ॥

तत्त्वदीपिका—माङिसिरिति । मेट इत्यत्र मे इतियोगं विभज्यसिरिति धातुवृत्त्याह माङीति । सिरेव सिसहितो दिबादिरित्यर्थः । स्मयुक्ते माङि तु विकल्पेन दिबादिः केवलः सिसहितश्चपक्षे । न च भूतेसिरित्यनेनैव सिर्विहितः पुनः किमनेनेति चेत्सत्यम् । कालान्तरेपि विधानार्थमेतत् । तेन माङ्योगे सर्वलकारविषये लुङेव भवति ।

**मू०— मेटः॥माङ्योगे अटो लोपः। मा भवान् भूत् । मास्म भूत् । मा स्म भवत् ।**

सुबोधिनी–मेऽटः ॥ लोपइत्यनुवृत्तम् । माशब्दे प्रयुज्यमाने सत्यटो लोपः ॥

तत्त्वदीपिका–मेटइति । मेअट इति छेदः । लोप इत्यनुवर्त्तते । मेकिम् । नाभवत् । अट इति किम् । मा प्रभूत् । अस्य लोपो न ।

**मू०– भूप्रातावात्वान् ॥** भवते ।

सुबोधिनी–भूप्राप्तावात्वान् । आद्विद्यते यस्य स आत्वान् आत्मनेपदीत्यर्थः ॥

तत्त्वदीपिका–भूप्राप्तावात्वानिति । आत् विद्यते यस्येति आत्वान् ।

**मू०– आदाथईः ॥** अतः परस्यात आथश्चात ईः भवति । भवेते । भवंते । भवसे । भवेथे । भवध्वे । भवे । भवावहे । भवामहे । भवेत । भवेयातां । भवेरन् । भवेथाः । भवेयाथां । भवेध्वं । भवेय । भवेवहि । भवेमहि । भवतां । भवेतां । भवंतां । भवस्व । भवेथां । भवध्वं । भवै । भवावहै । भवामहै । अभवत । अभवेताम् । अभवंत । अभवथाः । अभवेथाम् । अभवध्वम् । अभवे । अभवावहि । अभवामहि । बभूवे । बभूवाते । बभूविरे । बभूविषे । बभूवाथे ।

सुबोधिनी–आदाथईः । अत इत्यनुवृत्तं आच्च आच्च आदात् तस्य । आति आताम् आथे आथाम् इत्येतेषां टिं विहायानुकरणं । अतः परस्य आथश्चाकार ईर्भवति । एधेते । एधेथे । एधेताम् एधेथाम् ॥

तत्त्वदीपिका–आदाथ ईरिति । आ आदाथ ईरिति छेदः आच्च आच्च आदात् । तस्य आते आतां । आथे आथाम् । एषां आतोतः परस्य ईर्भवति । आकिम् । अन्त्यस्य मा भूत् । तपरः किम् । गाते । अन्तरंगत्वादयः सवर्णदीर्घे कृते पुनः सवर्णदीर्घः ।

**मू०–नामिनश्चतुर्णांधोढः ॥** नाम्यंताद्धातोः परस्य सीध्वंलुङ्लिटां धस्यढः ।

सुबोधिनी–नामिनश्चतुर्णांधोढः । नामिइति धातोर्विशेषणत्वे तदंतविधिः ॥

**मू०– सेटोहलाद्वा ॥** बभूविढ्वे । बभूविध्वे । बभूवे । बभूविवहे । बभूविमहे । भविषीष्ट । भविषीयास्तां । भविषीरन् । भविषीष्ठाः । भविषीयास्थां । भविषीढ्वं भविषीध्वम् । भविषीय । भविषीवहि । भविषीमहि । भविता । भवितारौ । भवितारः । भवितासे । भवितासाथे । भविताध्वे । भविताहे । भवितास्वहे । भवितास्महे । भविष्यते । भविष्येते । भविष्यंते । भविष्यसे । भविष्येथे । भविष्यध्वे । भविष्ये । भविष्यावहे । भविष्यामहे । अभविष्यत । अभविष्येताम् । अभविष्यंत । अभविष्यथाः । अभविष्येथाम् । अभविष्यध्वम् । अभविष्ये । अभविष्यावहि । अभविष्यामहि । अभविष्ट । अभविषाताम् ।

सुबोधिनी–सेटोहलाद्वा । सेटो हयवरलात्परेषां सीध्वंलुङ्लिटां धस्य वा ढः ॥

**मू०– आतोंतोऽदनतः ॥** आतो अंतोऽद्भवत्यकाराद्युत्तरस्यन । अभविषत । अभविष्ठाः । अभविषाथाम् ॥

सुबोधिनी–आतोन्तोदनतः । अंते अंतु अंतां तेषां वचनानां टि विहाय प्राग्भावस्यानुकरणम् । आदिति तु अंत्यानां संज्ञेत्युक्तं । आत्संबंधिनोऽनकारात् परस्यातो अद्भवति । आतः किं । युवंति । अनत इति किं । एधंते । तपरः किं । गांते ॥

तत्त्वदीपिका–आतोन्तोदनतइति । आतइत्यात्मनेपदस्य नत्वादन्तशंका । अनत इति प्रतिषेधात् । तपरः किम् । गांते । गाअन्ते इतिस्थिते अन्तरंगत्वादयः सवर्णदीर्घे पश्चात् अनत इति पर्युदासो लाघवात् प्रसज्यप्रतिषेधेत्वनन्वितसमासो वाक्यभेदश्चाश्रितः स्यात् ।

**मू०– ध्वेसिर्लोपः ॥ अभविढ्वम् अभविध्वम् । अभविषि । अभविष्वहि । अभविष्महि । चिती संज्ञाने ।**

सुबोधिनी–ध्वेसिर्लोपः । ध्वे प्रत्यये परे सिप्रत्ययस्य लोपः । चिती संज्ञाने । सम्यग् ज्ञानं संज्ञानम् ॥

**मू०– उपधायालघोः ॥ धातोरुपधाया लघोर्नामिनो गुणः । चेतति ।**

सुबोधिनी–उपधाया लघोः । गुण इत्यनुवृत्तं । ह्रस्वं लघु ॥

तत्त्वदीपिका–उपधाया लघोरिति । गुण इत्यनुवृत्तेर्नामिन इति लभ्यते । उपधायाः किम् ।भिनत्ति । लघोः किम् । ऊहते ।

**मू०– पूर्वस्यहसादिःशेषः ॥ पूर्वस्यादिर्हसः शिष्यते अन्ये हसा लुप्यंते । चिचेत । चिचेतिथ ।**

सुबोधिनी–पूर्वस्यहसादिः शेषः । आदिश्चासौ हसश्चेति विशेषणस्याप्यनेन परनिपातो ज्ञाप्यते ।

तत्त्वदीपिका–पूर्वस्य हसादिरिति । हस आदीरिति छेदः । हस इति लुप्तप्रथमान्तम् ।

**मू०– सेः ॥ सिशब्दात्परयोर्दिप्सिपोरीट् ।**

सुबोधिनी–सेः । अस्तेरीट् इत्येतदनुवृत्तम् । अस्तेरिति सेर्विशेषणम् । विद्यमानात् सिप्रत्ययात् परयोर्दिस्योरीडागमः । विद्यमानात्किम् । अदात् । अत्र प्रत्ययलक्षणेन सेः परत्वमस्ति विद्यमानादिति विशेषणान्नेट् ॥

तत्त्वदीपिका–सेरिति । अत्रास्तेरीडिति सूत्रात् पदद्वयमप्यनुवर्त्तते । पूर्वपदन्तु सेर्विशेषणम् । तेन विद्यमानात्सेरिति लब्धम् । अन्यथा अदादित्यत्र प्रत्ययलक्षणेन सिरीट्प्रसंगः स्यात् ।

**मू०–इटईटि ॥ इटः परस्य सेर्लोपः ईटि । अचेतीत् । अचेतिष्टाम् ।**

सुबोधिनी–इटईटि । सेरिति लोप इति चानुवृत्तं । लुङि अचेतिस् ईडिति स्थिते । सेर्लोपः । सिलोपो दीर्घे सिद्धो वक्तव्यः । दीर्घे कर्त्तव्ये सिलोपःसिद्धो वाच्यो नत्वसिद्धः । अचेतीत् । इटः किम् । अहार्षीत् । ईटि किम् । अचेतिष्टाम् ॥

**मू०–स्यादिदः ॥ सेरातो विदश्च परस्यान उस् भवति। अचेतिषुः । च्युतिरासेचने । च्योतति । च्योतेत् । च्योततु च्योततात्। अच्योतत् । चुच्योत । च्युच्यात् । च्योतिता । च्योतिष्यति । अच्योतिष्यत् ।**

सुबोधिनी–स्याविदः । सिश्च आश्च विद् च एषां समाहारः स्याविद् तस्मात् एभ्यः परस्यान उस् स्यात् । अत्राऽप्यस्तेरित्यनुवृत्त्य विद्यमानात् सेःपरस्यान इति व्याख्यानान्नेह। अभूवन् । अदुः । अविदुः । च्युतिर् आसेचने । आसेचनमार्द्रीकरणम् । इरितीरितोवेति विशेषणार्थः ॥

तत्त्वदीपिका–स्याविद इति । सिश्च आश्च विदश्च एतेषां समाहारः स्यावित् तस्मात् । अत्र वाक्यत्रयं बोध्यम् । सेत्याद्यम् तत्र प्रत्ययाप्रत्ययन्यायेन प्रत्ययएवगृह्यते । विकरणव्यवधानेन धातोः परस्यानोऽसंभवात् । अत्राप्यस्तेरित्यनुवर्त्य विद्यमानात्सेरितिव्याख्येयम् । तेनाभूवन्नित्यत्र प्रत्ययलक्षणेन सेः परस्याप्यनोऽविद्यमानत्वान्नोसादेशः । आ इति द्वितीयं वाक्यम् । अत्र सिग्रहणं नानुवर्त्तते । यद्यनुवर्त्तते तर्हि प्रत्ययलक्षणेन आदन्तादेव सेरन । उस्स्यान्नान्यस्मादिति नियमः स्यात् । तथाचानद्यतने न स्यात् । तेन विकल्पः फलितः । अयुः अयान् । विद इति तृतीयम् अत्राप्यनद्यतने विकल्पेन । भूतमात्रे तु सिरित्यनेनैव सिद्धम् । अत्राहुः । अत्र सिविद इति सूत्रणीयम् । तत आत इति सूत्रणीयम् । ततो नवावितित । इत्थं वाकारग्रहणं न कर्त्तव्यम्। इति लाघवम् । एवं कुतो न कृतमिति चिंत्यमिति॥ अत्रेदमवधेयम् । एकमात्रालाघवाय योगत्रिभागस्यानिष्यमाणत्वेनोपेक्षणीयत्वात् । अतो न तथा कृतमिति विभाव्यम् । आसेचने इति ॥ सेचनमार्द्रीकरणम् । आङीषदर्थेऽभिव्याप्तौ च ।

**मू०– इरितोवा ॥ इरितो धातोर्वाङ् प्रत्ययो भवति पे । सेरपवादः । अच्युतत् । अच्योतीत् । श्च्युतिर् क्षरणे । श्च्योतति श्च्योतेत् । श्च्योततु श्च्योततताद्वा । अश्च्योतत् ।**

सुबोधिनी–इरितोवा । इरित् यस्य स तस्मात् इरितो धातोर्वाङ् । भूतमात्रार्थे दिवादौ पे सेरपवादः । लिट्पुषादेरित्यतोऽङ् इत्यनुवृत्तम् ॥

तत्त्वदीपिका-इरितोवेति । इर् इत् यस्य स इरित् तस्मात् । सेरपवाद इति भूतमात्रार्थे दिवादौ पे इत्यपि बोध्यम् । तेन अवेवैकभूतार्थत्वेपि न । रुणद्धीत्यत्र दिवादिपरत्वाभावान्न । न चात्र भूतार्थे ताभावादेवाप्राप्तिरिति वाच्यम् । वर्त्तमानसमीप इत्यनेन भूतेपि तिबादिविधानात् । अरुद्धेत्यत्र यत्वाभावात् ।

**मू०– नशसात्खपाः॥ पूर्वशसात्पराः खपाः शिष्यंते न शसाः । चुश्च्योत । श्च्युत्यात् । श्च्योतिता । श्च्योतिष्यति । अश्च्योतिष्यत् । अश्च्युतत्। अश्च्योतीत् । यकाररहितोप्ययम् । श्चोतति । श्चोतेत् । श्चोततु श्चोततात्। अश्चोतत् । चुश्चोत । श्चुत्यात् । श्चोतिता । श्चोतिष्यति । अश्चोतिष्यत् । अश्चुतत् । अश्चोतीत् । मन्थ विलोडने । मंथति । मंथेत् । मंथतु मन्थताद्वा । अमंथत् । लोप इति नलोपे प्राप्ते ।**

सुबोधिनी–नशसात्खपाः । शस् प्रत्याहारः । मंथ विलोडने क्र्यादावपि ।

तत्त्वदीपिका–नशसादिति । शसःप्रत्याहारः खपानां शेषत्वोक्तेः शसानां निषेध इत्याह । नशसाइति। यकाररहितइति । मधुश्चुतं घृतमिव सुपूतमिति प्रयोगश्चानुकूलः । मंथविलोडने । हिंसासंक्लेशनयोरनपीत्येके ।

**मू०– ऋसंयोगाण्णादिरकित् । ममंथ । ममंथतुः ।**

सुबोधिनी–ऋसंयोगाण्णादिरकिदिति । इह ऋसंयोगान्नेति मूलसूत्रं तत्र णादिः । किदित्यनुवृत्तं ऋश्चसंयोगश्चानयोः समाहारः ऋसंयोगं तस्मात् णादिः किन्न । जजरतुः। यादादौ कित्त्वात् ॥

तत्त्वदीपिका—ऋसंयोगादिति । ऋश्च संयोगश्च ऋसंयोगं तस्मात् । णादिः किदिति पूर्वसूत्रमनुवर्तते कित्त्वाभावात्संप्रसारणाभावोपि कित्त्वाविधानात् ङित्त्वमपि न । अत्र केचित् । अर्ति प्राक्षिप्य आरतुरित्यादिसिद्धमित्याहुः । अन्ये तु ऋ अतुरिति स्थिते रङ्त्वे ऋ अरिति चकृते पूर्वग्रहणेन आभ्यारित्वे आरतुरिति । अत्रादिग्रहणमनुवर्त्य तेनेग द्वितीयवाक्यार्थः । ऋदंतात्संयोगादेर्णादिरकित् । तेन सस्मरतुरित्यादि । अथ कथं सस्मरतुरितिचेत् । नञोक्तस्यानित्यत्वात् । अत्र ऋहसादित्येव सुवचम् । ऋश्च हसश्च ऋहसं तस्मात् । एवं संयोगान्तस्य लोप इत्यत्र हसान्तस्य लोप इत्यस्यैव न्याय्यत्वम् । हसावन्ते यस्येति विग्रहः हस्य वर्गचतुर्थ इति । स्थानेन्तरतम इत्यनेन घोषवत्त्वादिगुणवतो हस्य तादृशो वर्गचतुर्थ एव । एतच्चानधीतं ग्रंथांतरैर्ज्ञेयं ।

मू०– नोलोपः ॥ धातोर्हसांतस्योपधाभूतस्य नकारस्य लोपः किति परे । पूजार्थाञ्चतेर्न । निरुपपदात् कुञ्चेः क्विपि न । मथ्यात् । मंथिता । मंथिष्यति । अमंथिष्यत् । अमंथीत् । कुथि पुथि लुथि मथि हिंसासंक्लेशनयोः ।

सुबोधिनी—नोलोपः । मथ्यात् ॥

मू०– इदितोनुम् ॥ इदितोधातोर्नुम् । कुंथति । कुंथेत् । कुंथतु कुंथताम् द्वा । अकुंथत् ।

सुबोधिनी—इदितोनुम् । इत् इवस्य स इदित् तस्य नुम् स्यात् ॥

मू०–कुहोश्चुः ॥ पूर्वस्य कवर्गहकारयोश्चुत्वं भवति हस्यवर्गचतुर्थः । चुकुंथ ।

सुबोधिनी—कुहोश्चुः । पूर्वस्येत्यनुवृत्तं । कुश्च हच कुहौ तयोःसंवारनादघोषमहाप्राणप्रयत्नस्य हस्य तादृश एव वर्गचतुर्थो भवति ॥

मू०– इदितोनलोपोन ॥ कुंथ्यात् । कुंथिष्यति । अकुंथिष्यत् । अकुंथीत् । चुबि वक्रसंयोगे । चुम्बति । षिध गत्याम् ।

सुबोधिनी—इदितोनलोपोन । इदितोधातोर्नस्य लोपो न भवति । नोलोप इत्यस्यापवादः । षिधगत्यां । अयमूदिदित्येके ॥

तत्त्वदीपिका—इदितो नलोपोनेति। इदं च नोलोप इत्यत्र नोवेत्यतो वेत्यस्यापकृष्टस्य व्यवस्थितत्वाल्लभ्यते । नचेदितोनुम्विधिसामर्थ्यादेव लोपोनेतिवाच्यम् । नंदतीत्यादावकिति तस्य चारितार्थत्वात् । षिधगत्यामिति । काश्यपादिभिरयमूदिदुक्तः । माधवादिभिस्तु वृत्तिस्वरसादनूदिदेव स्वीकृतः ।

मू०– आदेःष्णःस्नः ॥ धात्वाद्योः षकारणकारयोः सकारनकारौ भवतः । सेधति । सेधेत् । सेधतु सेधताद्वा । असेधत् । सिषेध । सिध्यात् । सेधिता ।

सुबोधिनी—आदेःष्णःस्नः । षूच णूच ष्णू तस्य ष्णः सच् नश्च स्नः । धातोः किं । षट् । आदेः किम् । लषति । अणति । षोपदेशानाह । "सेक् सृप् सृ स्तृञ् सृज् स्तृस्त्यान्ये दंत्याजंतसादयः ॥ एकाचः षोपदेशाः ष्वष्क स्विद् स्वद् स्वंज् स्वप् स्मिङः ॥ १ ॥ " दंत्यश्च अच्च दंत्याचौ तौ अंते अव्यवहितौ यस्य स दंत्याजंतः । दंत्याजंतश्चासौ सश्च दंत्याजंतसः दंत्याजंतस आदिर्येषां धातूनां ते दंत्याजंतसादयः । दंत्यांतसादयोऽजंतसादयश्चे-

काचः एकस्वरा धातवः षोपदेशाः । कथंभूताः । सेक्ट गतौ । सृप्लृ गतौ । सृ गतौ । स्तृञ् आच्छादने । सृज् विसर्गे । स्तृञ् आच्छादने । स्त्यै शब्दसंघातयोः एभ्यो अन्ये । उक्तलक्षणस्यातिव्याप्तिं वारयितुमिदं विशेषणं । पुनः कथंभूताः । ष्वष्क गतौ । ञिष्विदा गात्रप्रक्षरणे । ष्वद आस्वादने । ष्वंज परिष्वंगे । ञिष्वप् शये । स्मिङ् ईषद्धसने एतैः सहिताः । एकाचः किम् । सोसूच्यते । चुरादावदंतोयं । दंत्याजंतेति किम् । ष्टुस्कुंदे । दंत्यः केवलदंत्यो न तु दंतोष्ठजोपि । ष्वष्कादीनां पृथग्ग्रहणात् । तेन स्वाद आस्वादने । इत्यस्यासिस्वददित्यादौ षत्वं न । णोपदेशानाह । नर्द नाटिनाथ नाध नंद नक्क नॄ नृतः नर्द शब्दे । नट अवस्यंदने चुरादिः । नटनृत्ताविति घटादिस्तु नेह गृह्यते । नाटीति दीर्घनिर्देशात् । नाथृ नाधृ याच्ञादौ।टुनदि समृद्धौ । नक्क नाशने । नॄ नये । नृती गात्रविक्षेपे । एभ्योऽष्टाभ्यो भिन्ना णोपदेशाः । नाधृ नंद नॄ इति त्रयाणां केचिण्णोपदेशतामाहुः ।

तत्त्वदीपिका–आदेरिति । पृच णृच ण्ण् तस्य । स् नश्च स्नः ।

**मू०– प्रादेश्चतथातौसुनमाम् ॥ प्रादेः परेषां स्वादीनां नमादीनाञ्च धातूनां सकारनकारयोः षकारणकारौ भवतः षत्वणत्वनिमित्ते सति । निषेधति ।**

सुबोधिनी–प्रादेश्चतथातौसुनमां । प्रादिसंबंधिनः क्लिलात् परेषां स्वादीनां सस्य षः नमादीनां नस्य णश्च । षत्वनिमित्तं क्लिलं । णत्वनिमित्तं षकाररेफऋऋवर्णाः । स्वादीनाह । उपसर्गस्थान्निमित्तात् सुनोति स्यति स्तौति स्तोभति स्था सेनय सेध सिच संज स्वञ्जां । प्रतिभिन्नात् सदेश्चाऽन्नादालंबनाविदूर्ययोःस्तंभेश्च व्यवाभ्यां भोजने स्वनश्च परिनिविभ्यः सेव सित सय सिवु सह सुट् स्तु स्वंजादेः स्कभ्नातेश्च सस्य षः षुञ् अभिषवे । षू प्रेरणे । षो अंतकर्मणि । ष्टुञ् स्तुतौ । ष्टुभ स्तंभे । एषां स्तिपानिर्देशाद्यङ्लुकि षत्वं न । तेनाभिसोषवीति अभिसोषोतीत्यादि । ष्ठागतिनिवृत्तौ । सेनयेति ण्यंतो नामधातुः । सेनया अभियातीति अभिषेणयति । षिधु गत्यां । षिच क्षरणे । षंज संगे । ष्वंज परिष्वंगे । स्तंभु इति सौत्रो रोधनार्थः । ष्टभि प्रतिबंधे । इति तु न गृह्यते । लक्षणप्रतिपदोक्तन्यायेन सौत्रो हि नोपध इति प्रतिपदोक्तः । इदित्त्वान्नुमि कृते ष्टभिर्लाक्षणिकस्तेन विस्तंभते इत्यादौ षत्वं न । षद्लृ विशरणादौ । प्रतिभिन्नात्किम् । प्रतिसीदति । आलंबनमाश्रयणम् । अविदूरएवाविदूर्यं सामीप्यं । ण्यः । अवष्टब्धा गौः । निरुद्धा । समीपे आस्ते इत्यर्थः।एतयोः किम् । अवस्तब्धो वृषलः शीतेन । स्वन शब्दे । विष्वणति । सशब्दंभुंक्ते इत्यर्थः । भोजने किम् । विस्वनति वीणा । षेवृ सेवायाम् परिषेवणम् ।षिञ् बंधने । क्तांतः सितः शब्दः । सयशब्दस्तु स्वरादइति पचादेर्वा अप्रत्ययांतो विषयः । षिवु तंतुसंताने । परिषीव्यति । षह मर्षणे । परिषहते । सुडागमः । परिष्करोति । स्तुस्वंजोःपुनर्वचनं सिवादीनामडव्यवायेपीति विकल्पार्थं । स्कंभुरोधने । विष्टभ्नाति एते स्वादयः । णोपदेशा एव नमादय इति ॥

तत्त्वदीपिका–प्रादेश्चतथातौसुनमाम् । यद्यपि क्लिलादित्यस्यैवानन्तरस्येति न्यायेनानुवृत्तिस्तथापि चकारेण ष्कनोंण इत्यनुवर्त्तते।तदेवानुवृत्तौ किं चकारेण तथातावित्यस्य तेन प्रकारेण तौ स्तः । षत्वणत्वनिमित्ते सतीति । षत्वनिमित्तं क्लिलम् । णत्वनिमित्तं षकाररेफऋऋवर्णाः तत्रस्वादयः सप्रत्ययस्यप्प्रत्ययान्त्येषु षुञ् अभिषवे । ष्टुञ् स्तुतौ । स्तुभस्तंभे । षोन्तकर्मणि । षु प्रेरणे । ष्ठा गतिनिवृत्तौ ण्यन्तसेनाशब्दः । षञ्ज संगे ।

ष्वंज परिष्वंगे । षिध गत्याम् । अतिप्रतिपूर्व षदॢ विशरणगत्योः । अपङ्क्त षिच क्षरणे । अवपूर्वष्टंभ निरोधे । व्यवपूर्वकौ भोजनार्थः । स्वन शब्दे । परिनिविपूर्वकः षेवृ सेचनेसुट् प्रत्ययः । अङ्गीतापिवु तन्तु-सन्ताने । अङ्गीतपद मर्षणे ।

सू०– सेधतेर्गतौनपः ॥ गंगां विसेधति ।

सुबोधिनी–सेधतेर्गतौनपः । उपसर्गस्थनिमित्तादृत्यर्थसेधतेः सस्य षत्वं न । स्तिपानिर्दे-शाद्यङ्लुकि गत्यर्थसेधतेः षत्वं निषेधीति ॥

सू०–अड्द्वित्वव्यवधानेपिषः ॥ न्यषेधत् । निषिषेध । षिधू शास्त्रे मांगल्ये च ॥

सुबोधिनी–अड्द्वित्वव्यवधानेपिषः ।सितशब्दात्प्राक्पंचदशानां सुनोत्यादीनामड्व्यवधा-नेपि षत्वम् । अभ्यषुणोत् ! सितशब्दात्प्राग्दशानां स्थादीनां द्वित्वव्यवधानेपि षत्वमित्यर्थः। निषिषध ।षिधूशास्त्रे मांगल्येच । शास्त्रं शासनं । मंगलमेव मांगल्यं ष्यः। मंगलक्रियेत्यर्थः।

तत्त्वदीपिका–अत्रान्तरेपीत्यनुवर्त्तते तेनाड्द्वित्वव्यवहितेपीत्याह । अड्द्वित्वेत्यादि । षिधू शास्त्रे माङ्गल्येच । शास्त्रं शासनं । मांगल्यं मंगलक्रिया ।

सू०–ऊदितोवा ॥ ऊदितो धातोः परस्य वसादेरनपीड्वा ।

सुबोधिनी–ऊदितोवा । ऊत् इद्यस्य स ऊदित् तस्मात् अनपीति षण्णां लेट् लिङ् लुट् लृट् लृङ् लुङां लकाराणामन्येषामपीत्यादिप्रत्ययानाञ्च संज्ञा । अपप्रत्ययविषयताभावात् ॥

तत्त्वदीपिका–ऊदितोवा । ऊत् इद्यस्य स ऊदित् तस्मात् ।

सू०–स्वरतिसूतिसूयतिधूञ्रधनशतृपदृपद्रुहमुहस्नुहस्निहांच । स्वरति सूति सूयति धूञां किद्वसादेर्णादेर्नित्यामिट्स्यात् । सेधति । सेधेत् । सेधतु सेधताद्वा । असेधत् । सिषेध । सिषेधिथ ।

सुबोधिनी–स्वरतिसूतिसूयतिधूञ्रधनशतृपदृपद्रुहमुहस्नुहस्निहांच । एभ्योऽपि परस्य वसादेरनपीड्वा । स्वृ शब्दोपतापयोः । भ्वादिर्गृह्यतेऽत्रविकरणत्वात् । षूङ् प्राणिगर्भविमो-चने । आदादिकोदैवादिकश्च गृह्यते न तु षूङ् प्रेरणे तौदादिकः । धूञ् कंपने स्वादिस्थः क्र्यादिस्थश्च । न तु धू विधूनने । सानुबंधनिर्देशात् । रध हिंसासंराध्योः । णश अदर्शने । तृप प्रीणने । दृप् हर्षमोहनयोः । द्रुह जिघांसायां । मुह वैचित्ये। ष्णुह उद्गिरणे । ष्णिह प्रीतौ । स्वरतिसूतिसूयतिधूञां किद्वसादेर्णादेर्नित्यमिट् । एभ्यः परस्य कितो वसादेर्णादेर्नित्य-मिट् भवति । स्वरत्यादिविकल्पं बाधित्वा किति इतीण्निषेधे प्राप्ते क्रादिनियमादिड्विधिः ॥

तत्त्वदीपिका–वाशब्दस्य व्यवस्थावाचित्वादाह । वरतीत्यादि ।

सू०–तथोऽर्धः ॥ झभांताद्धातोस्तकारथकारयोर्धकारो भवति दधातेर्न । झ-बे जबाः । सिषेद्ध । सेधिता सेद्धा । सेधिष्यति सेत्स्यति । असेधिष्यत् असेत्स्यत् । असेधीत् ।

सुबोधिनी–तथोर्द्धः । तश्च थूच तथौ तयोः आदिजबानामित्यतो झभांतस्येत्यनुवृत्तं पं-

चम्या विपरिणम्यते । झभांतात् किम् । भूतः । दधातेर्न । डुधाञ् धारणादावस्मात् परयो-स्तथोर्द्धो न । धत्तः ॥

**तत्त्वदीपिका**—तथोर्द्ध इति । तश्च थ् च तथौ तयोः । वेत्यनुवृत्तेर्दधातोर्निषेधः यद्वा तथोधः इति पाठः। तत्र तश्च थ् च एतयोः समाहारः तथ् तस्य तथः अध इति दधातेर्नेत्यर्थः । आदिजबानामित्यतो झभानुवृत्तिः ।

**मू०—अनिटोऽनामिवतः** ॥ अनिटोऽनामिवतश्च धातोर्वृद्धिः स्यात्पे परे सौ । असैत्सीत् ।

**सुबोधिनी**—अनिटोऽनामिवतः । द्वयमिदं धातोर्विशेषणं । यद्यपि धातुः सर्वोप्यनिडेव तस्य इड्विधानाभावात् । तथापि न इट् यस्मात् तस्मात्परस्य तादिप्रत्ययस्येति व्याख्येयम् । अ-निटो धातोरुपधाभूतस्य नामिनो वृद्धिर्भवति पे सौ । नाम्यंतस्य तु धातोर्नामिन इति सूत्रे-णैव वृद्धिः । कार्यातिदेशोयम् । नामि विद्यतेऽस्येति नामिवान् तस्य ताडिद्वादित्वाद्वतुः ॥

**तत्त्वदीपिका**—अनिटोऽनामिवत इति । अनिटः नामि वत् इतिच्छेदः । नन्वनिट्त्वं धातुमात्रस्यैव न हि कस्यापि धातोरिड्विधीयते किन्तु प्रत्ययस्यैव । तस्मादनिट् इति व्यर्थमिति चेत्सत्यम् । न इट् यस्मात्प-रस्य प्रत्ययस्येति व्याख्यानात् । तथापीडभावः कस्यप्रत्ययस्य ग्राह्यः तादेरीति गृहाण । णादेस्तु क्राद्यष्टादशाति-रिक्तात्परस्य सेट्त्वात् । अश्च नामी च अनामिनौ तौ स्तोऽस्यानामिवान् तस्य द्वंद्वांते श्रूयमाणस्य वतोः प्रत्येकमन्वय इत्याशयेनाह ।अवतोनामिवत इति । यद्यपि पूर्वेणाकारनामिनोः प्राप्तिस्तथाप्यनुपधाभूताकारस्यो-पधाभूतनामिनश्चाप्राप्तारंभः नन्वत्र मान्तोपधात्वाभावात्कथं वतुरितिचेत्सत्यम् । अन्यतोपि वतुर्भवतीत्यनेनैव ज्ञाप्यते । तेन ताडिद्वानित्यादि सिद्धमिति । अथ तथाप्यनामि न इत्येवास्तु किं वतुना इति चेन्न नञ्समासभ्र-मप्रसंगात् । मत्वर्थीयाद्विरूपो मत्वर्थीयो भवतीत्यनेन ज्ञाप्यते । तेन हस्तिमती शालेत्यादि सिद्धम् । अथानिट इत्येवास्तु स्वरादेरित्यतः स्वरस्यानुवृत्तेस्तस्य च मत्वर्थीयाकारान्तत्वेन ग्रहणात् स्वरवतोऽनिटोधातोः सिर्णित् कार्यकृदित्यर्थलाभात् । यद्वाणित्कार्यं वृद्धिरेव सा च स्वरस्यैवेति स्वरलाभात् । पूर्वेणाप्राप्तस्यैव स्वरस्य भवि-ष्यतीत्यर्थादनुपधाभूताकारस्योपधाभूतनामिनश्च वृद्धिर्भविष्यतीत्यर्थो लभ्य एवेति चेत्सत्यम् । नामिवद्ग्रहणस्यो-त्तरार्थत्वादित्यलं पल्लवितेन ।

**मू०—झसात्** ॥ झसादुत्तरस्य सेर्लोपो झसे । असैद्धाम् । असैत्सुः । असै-त्स्व । असैत्स्म । खद स्थैर्ये हिंसायां च । खदति । खदेत् । खदतु खदता-द्वा । अखदत् ।

**सुबोधिनी**—झसात् । ह्स्वादित्यतो लोपो झसे इत्यनुवृत्तं सेरिति सूत्रं च । झसात्किं । अचेष्ट । झसेकिम् । असैत्सीत् । इट्पक्षे असेधीत् । खद स्थैर्य्ये हिंसायां च । चाद्भक्षणे । स्थिरस्य भावः स्थैर्य्यं ण्यः ॥

**तत्त्वदीपिका**—झसादिति । सेरित्यस्यानुवृत्तिः। लोपोह्स्वादित्यतो लोपस्य । झसात्किं । अचेष्ट । झसे किं । अरौत्सुः । सेः किम् । अरुधतामित्यत्र ङस्य मा भूत् । अत्र लोपो ह्स्वझसात्सेरिति पठितुं युक्तम् ।

**मू०—अतउपधायाः** ॥ धातोरुपधाया अतो वृद्धिः ञ्णिति । चखाद ।

**सुबोधिनी**—अतउपधायाः । आदिस्वरस्येत्यतो ञ्णितीति वृद्धिरिति चानुवृत्तम् । अतः किं । तुतोद । उपधायाः किं । गणयति ॥

**तत्त्वदीपिका**—अतउपधाया इति । आदिस्वरस्येत्यतो ञ्णिति च वृद्धेरनुवृत्तिः । अत्रात इति योगं विभज्यादन्तस्य च धातोर्वृद्धिस्तेन वापय इत्यादि सिद्धमिति पुनरुपधाया इत्यत्र नाम्न इति योजनीयम् । तेन

नाम्न उपधाया वृद्धिरिति व्याख्येयत्वादयतीत्यादौसिद्धिरिति । पुनरुभयोर्मेलनात् । धातोरुपधाया अतो वृद्धिरिति । ञ्णिति किम् । पक्ता । उपधायाः किम् । ततक्ष । धातोः किम् । जगतोयं जागतः । अत्र परत्वादादिवृद्धिं बाधित्वा उपधावृद्धिः प्रसज्येत । गार्ग्यो जगादेत्यादावादिवृद्ध्युपधावृद्ध्योरवकाशः । णित्पे । ण् इद्यस्य स णित् । अणितो णित्करणाण्णिद्वदिति गम्यते । अन्यशब्दोऽन्यत्र प्रयुज्यमानोपि वत्यर्थं गमयति । प्राधान्याच्च कार्यातिदेशोयम् । तथा च । णितो यत्कार्यमत उपधाया इत्यादिना वृद्ध्यादि तदतिदिश्यते । यद्यपि णितां णबादीनामातो णव्डावित्यादिना विहिते अवाद्यपि णित्कार्यं तथापि तन्नातिदिश्यते । कार्यविशेषत्वात् । सामान्यातिदेशोयम् । णविणादयस्तु णिद्विशेषाः यथा ब्राह्मणवदस्मिन् क्षत्रिये वर्तितव्यमित्यत्र यद्विशिष्टे गोतमे च तन्नातिदिश्यते किंतु ब्राह्मणसामान्यस्य । तथात्रापि णिति यत् दृष्टं कार्यं तदतिदिश्यते ।

**सू०– णबुत्तमोवाणित् ॥** चखाद चखद । पूसेर्णित् ।

सुबोधिनी–णबुत्तमोवाणित् । उत्तमपुरुषसंबंधि णब् वा णित् । पूसेरित्यनुकृष्यते पे परे सेर्णिद्भवति । ण् इत् यस्य स णित् अणितं णिदित्याह कार्यातिदेशोयं ॥

**सू०– अतोहसादेर्लघोर्वावृद्धिःसेटिसौ ॥** अखदीत् । अखादीत् । गद व्यक्तायां वाचि । व्यक्ता कोर्थः परिस्फुटवर्णा ।

सुबोधिनी–अतोहसादेर्लघोर्वावृद्धिःसेटिसौ । हसादेर्लघोरकारस्य वा वृद्धिः स्यात् सेटि परस्मैपदे सौ । अतः किम् । अदेवीत् । हसादेः किम् । माअतीत् । लघोः किम् । अगर्दीत् । सेटि किम् । अपाक्षीत् । पे किम् । अयातिष्ट । बदस्थैर्ये । पवर्गीयादिः ॥

तत्त्वदीपिका–अतोहसादेरिति । अत इत्यस्यैव विशेषणद्वयम् । हस आदिर्यस्य स हसादिस्तस्य । हसादेः किं । मा भवानतीत् । लघोः किम् । अनंदीत् । यद्यवकाशादित्यत्र नकारादकारस्य वृद्धिवारणाय येन नाव्यवधानमिति न्यायेनाप्येकवर्णव्यवधानमाश्रियते तदा त्वरक्षीदित्यत्रापि प्रसक्त्यभावाल्लघोरिति न कर्त्तव्यमिति केचित् । एतच्च अत उपाधाया इत्यत्र नोवेत्यतो वानुवृत्त्या लभ्यते । एवमन्यत्रापि वृद्धिनिषेध विकल्पयोरिदमेव मूलमूह्यम् ।

**सू०– प्रादिस्थान्निमित्तान्नेर्नस्यणोगदनदपदपतअपिद्दाधास्था माङ्मेङ्स्यतिहंतियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु ॥**

सुबोधिनी –प्रादिस्थान्निमित्तान्नेर्नस्यणोगदनदपदपतअपिद्दाधास्थामाङ्मेङ्स्यतिहंतियातिवातिद्रातिप्सातिवपतिवहतिशाम्यतिचिनोतिदेग्धिषु । प्रादिषु तिष्ठतीति प्रादिस्थः तस्मात् निमित्तात् षकाररेफऋवर्णरूपात् परस्य नेर्णत्वं गदादिषु परेषु । गद व्यक्तायां वाचि । णद्अव्यक्ते शब्दे । पद गतौ । पत्लृ पतने एषां चतुर्णामपानिर्देशाद्यङ्लुकि णत्वं न । प्रनिजागदीति । प्रनिनानदीति । अपिद्दाधेति चत्वारः । डुदाञ् दाने । प्रणिददाति । दाण् प्रणियच्छति । दो प्रणिद्यति । देङ् प्रणिदयते । धारूपौ द्दौ । धेट् प्रणिधयति । डुधाञ् प्रणिदधाति । ष्ठा गतिनिवृत्तौ । माङ् माने । मेङ् प्रणिदाने । षो अंतकर्म्मणि । हन् हिंसागत्योः । या प्रापणे । वा गतिगंधनयोः । द्रा कुत्सायाम् । प्सा भक्षणे । टुवप् बीजतंतुसंताने । वह प्रापणे । शमु उपशमे । चिञ् चयने । दिह उपचये । स्यत्यादीनामेकादशानांस्तिपानिर्देशाद्यङ्लुकि णत्वं न । प्रनिसासेति । प्रनिजंघनीतीति ॥

तत्त्वदीपिका–प्रादिस्थादिति । प्रादिषु तिष्ठतीति प्रादिस्थम् । तस्मात् निमित्तात् णत्वनिमित्तात् ष-काररेफऋवर्णरूपात् निरुपसर्गस्य नस्य णत्वमित्यर्थः । गदादिषु धातुषुपरेषु । यत्तु एतत्पूर्वस्य नेर्णत्वमित्ये-तावन्मात्रं वासुदेवेनोक्तं तन्न । निर्गच्छतीत्यादावतिव्याप्तिः । विनिगच्छतीत्यत्र च ।

**सू०–अन्यत्राकखादावषांतेआद्योच्चारणेवा ॥** अकखादौ किम् । प्रनिकरोति । प्रनिखादति । अषांते किम् । प्रनिदुख्यति । वेति किम् । प्रणिभवति प्रनिभवति । आद्योच्चारणे किम् । प्रणिचखाद प्रनिचखाद । प्रणिगदति । अ-गदीत् । रद विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद ।

सुबोधिनी–अन्यत्राकखादावषांतेआद्योच्चारणेवा । आदौ भवा आद्याः । आद्यानां पाणिनि-कात्यायनपतंजलीनामुच्चारणमाद्योच्चारणं तस्मिन् । कादिखादिषांतवर्जे गदनदादेरन्यस्मिन् धातौपरे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा । कश्च खश्च कखौ तावादी यस्य स । कखादिः कखादेरन्योऽकखादिस्तस्मिन् । षोऽतो यस्य स षांतस्तस्मादन्योऽषांतस्तस्मिन् अकखादौ किम् । प्रनिचकार । प्रनिचखाद । अषांते किम् । प्रनिपेक्ष्यति । रद विलेखने विलेखनं भेदनम् ॥

तत्त्वदीपिका–अन्यत्रेति । अन्यत्र वा अन्यस्मिन् धातौ परे प्रादिस्थनिमित्तपूर्वकस्य नेर्णत्वं वेत्यर्थः । आद्यु-च्चारणे प्रथमोच्चारणसमये अकखादौ अषान्तेच । कश्च खश्च कखौ तावादीयस्य सकखादिःकखादेरन्योऽकखादि-स्तस्मिन् । षः अन्ते यस्य स षान्तस्तस्मिन् आद्योच्चारणे इत्युभयत्रान्वेति तथा चायमर्थः । आद्युच्चारणेकादि खादिषांतवर्जगदनदादेरन्यस्मिन् धातौ परे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा भवति । प्रणिभवति । प्रनिभवति । अकखादौ किं । प्रनिकरोति । प्रनिखादति । अषांते किं । प्रनिपिनष्टि । विलेखनेइति । विलेखनं भेदनम् ।

**सू०–लोपःपचांकित्येचास्य ॥** पचादीनां किति लिट्यनादेशादीनां पूर्वस्य लोपो भवत्यकारस्य एकहसमध्यस्थस्य चैकारः किति णादौ सेटि-थपि च । रेदतुः । रेदिथ । णद अव्यक्ते शब्दे । प्रणिनेदुः । नेदिथ । अर्द गतौ याचने च । आम्बोर्णादौ ।

( सुबोधिनी– ) लोपःपचांकित्येचास्य । पचामिति बहुवचनेन पचप्रकारा धातवो गृह्यं-ते । यथा पच् धातुरेकहसमध्यस्थाकारवान् । लिटि अनादेशादिश्च तथान्येपि धातवः । अस्य किम् । दिदिवतुः ररासे । अनादेशादीति किम् । चकणतुः । एकशब्दोत्राऽसहायवच-नः । एकौ च तौ हसौ च एकहसौ तयोर्मध्यस्थः एकहसमध्यस्थस्तस्य । एकहसः किम् । तत्सरतुः । त्सर छद्मगतौ ॥ आम्बोर्णादौ ।

तत्त्वदीपिका– लोपः पचामिति । पचामिति बहुवचनेन पचप्रकाराः धातवो गृह्यंते तथा पचधातुरेकहसमध्यस्थाकारवान् लिटिअनादेशादिश्च तथान्योपिधातुरिति । तथा च पप्रच्छतुरित्यत्र एकहसः मध्यस्थत्वाभावान्नेत्वलोपौ । अनादेशादेः किं ॥ चखनतुः । लिडा देशविशेषणात् नेमिथ । सेहे । अस्य किं । दिदिवतुः ।

**सू०– नुगशाम् ॥** अश्नोतेर्ऋकारादेः संयोगान्ताकारादेश्च पूर्वस्य नुग्भवति णादौ । आनर्द । आर्दीत् । नर्द गर्द शब्दे । तर्द हिंसायां । तर्दति । कर्द

कुत्सितेशब्दे । कर्दति । खर्द दंदशूके । खर्दति । क्रदि चेष्टायाम् । क्लिदि परिदेवने । क्लिन्दति । अत सातत्यगमने । आतिथ । खाद्द भक्षणे । अखादीत् । क्रदि आव्हानेरोदने च । अति अदिबंधने । अन्तति । अन्तेत् । अन्ततु । आंतत् । आनंत । आनंद । अंद्यात् । आंदिता । आंदिष्यति । आंदिष्यत् । आंदीत् । टुनदि समृद्धौ । ननन्द । चदि आल्हादने दीप्तौ च । इदितोनुम् । चन्दति । चंदेत् । चंदतु । अचन्दत् । चचंद । चंद्यात् । चंदिता । चंदिष्यति । अचंदिष्यत् । अचंदीत् । शुंध शुद्धौ । शुंधति । शुंधेत् । शुंधतु । अशुंधत् । शुशुंध । शुंध्यात् । शुंधिता । शुंधिष्यति । अशुंधिष्यत् । अशुंधीत् । तक कक्क हसने । तकि कृच्छ्रजीवने । तंकति । ततंक । अतंकीत् । शुक गतौ । शोकति । अशोकीत् । बुक्क भषणे । बुक्कति । कख हसने । कखति । युगि जुगि वर्जने । युंगति । इदि परमैश्वर्य्ये । इंदति ।

सुबोधिनी—नुगशाम् । अशूङ् व्याप्तौ । अशामिति बहुवचनमाद्यर्थं । संयोगोन्तो यस्य स संयोगांतः स्वर आदिर्यस्य स स्वरादिः संयोगांतश्चासौ स्वरादिश्च संयोगांतस्वरादिस्तस्य । अत सातत्यगमने । सततस्य भावः सातत्यं सातत्येन गमनं सातत्यगमनं तस्मिन् । खाद्द भक्षणे । ऋदित्त्वान्नेरित इत्यङ् । काप्यन् । अचखादत् । टुनदि समृद्धौ। टु इति द्वितोथुरित्यत्राथुप्रत्ययार्थः । नंदथुः । इदित्त्वान्नस्य लोपो न नंद्यात् । चदि आल्हादने दीप्तौ च हर्षे तेजसि चेत्यर्थः । क्लिदि परिदेवने । परिदेवनं शोकः । इदि परमैश्वर्ये । ईश्वरस्य भाव ऐश्वर्यं । ण्यः । परा उत्कृष्टा मा लक्ष्मीर्यस्य तत् परमं परमं च तदैश्वर्य्यं च परमैश्वर्य्यं तस्मिन् ।

तत्त्वदीपिका—नुगशामिति । अशामिति बहुवचनेनैतत्सर्वं लब्धमित्याह । ऋकारादेरित्यादि । स्वरादेरिति अत्राटं विना स्वरादित्वं बोध्यम् ।

सू०—स्वरादेः ॥ स्वरादेर्धातोर्द्वितीयोऽडागमो भवति दिबादौ परे । अइए । एऐऐ । ऐन्दत् ।

सुबोधिनी—स्वरादेः। दिबादावडित्यनुवृत्तं स्वर आदिर्यस्य सः स्वरादिस्तस्य आरंभसामर्थ्यात् द्वितीयोडिदित्यर्थः । अटं विना स्वरादित्वमिह विवक्षितमन्यथा दिबादावडित्यग्रे अटिचेति सूत्र्यताम् ॥

तत्वदीपिका—स्वरादेरिति। विधानसामर्थ्यात् । अन्यथा दिवादावडित्यस्याग्रेऽटिचेति सूत्रितेन द्वितीयाटः संभवात् । यत्तु वासुदेवेन आद्योच्चारणे स्वरादिः अन्यथा सर्वस्यैव प्रथमं स्वरादित्वादव्याबृत्तेरित्युक्तं तन्न ॥ औष्ट ऐज्यत इत्यादावप्रसंगात् । द्वितीय इति विधानसामर्थ्यात् प्रथमाबाधेन भवतीत्याशयः । करणसामर्थ्यादेकेन वा धातुकार्यानन्तरं द्वितीयेन कार्यमित्याह । एऐ ऐ इति ।

**सू०—कासादिप्रत्ययादाम्कसृभूपरः ॥ कास् आस् दय अय गुरुनाम्याद्यनेकस्वरेभ्यो णबादौ परे आम् प्रत्ययो भवति । स च कृ अस् भू परः प्रयोक्तव्यः ।**

सुबोधिनी—कासादिप्रत्ययादाम्कसृभूपरः । कासृ शब्दकुत्सायां । आस उपवेशने । दय दाने । अय गतौ । गुरुश्चासौ नामी च गुरुनामी गुरुनामीआदिर्यस्यस गुरुनाम्यादिर्धातुः ।

तत्त्वदीपिका—प्रादिस्थादिति । प्रादिषु तिष्ठतीति प्रादिस्थम् । तस्मात् निमित्तात् णत्वनिमित्तात् ष-काररेफऋवर्णरूपात् निरुपसर्गस्य नस्य णत्वमित्यर्थः । गदादिषु धातुषुपरेषु । यत्तु एतत्पूर्वस्य नेर्णत्वमित्ये-तावन्मात्रं वासुदेवेनोक्तं तन्न । निर्गच्छतीत्यादावतिव्याप्तिः । विनिगच्छतीत्यत्र च ।

**मू०—अन्यत्राकखादावषांतेआद्योच्चारणेवा ॥ अकखादौ किम् । प्रनिकरोति । प्रनिखादति । अषांते किम् । प्रनिदुख्यति । वेति किम् । प्रणिभवति प्रनिभवति । आद्योच्चारणे किम् । प्रणिचखाद प्रनिचखाद । प्रणिगदति । अ-गदीत् । रद विलेखने । रदति । रदेत् । रदतु । अरदत् । रराद ।**

सुबोधिनी—अन्यत्राकखादावषांतेआद्योच्चारणेवा । आदौ भवा आद्याः । आद्यानां पाणिनि-कात्यायनपतंजलीनामुच्चारणमाद्योच्चारणं तस्मिन् । कादिखादिषांतवर्जे गदनदादेरन्यस्मिन् धातौपरे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा । कश्च खश्च कखौ तावादी यस्य स । कखादिः कखादेरन्योऽकखादिस्तस्मिन् । षोऽन्तो यस्य स षांतस्तस्मादन्योऽषांतस्तस्मिन् अकखादौ किम् । प्रनिचकार । प्रनिचखाद । अषांते किम् । प्रनिषक्ष्यति । रद विलेखने विलेखनं भेदनम् ॥

तत्त्वदीपिका—अन्यत्रेति । अन्यत्र वा अन्यस्मिन् धातौ परे प्रादिस्थनिमित्तपूर्वकस्य नेर्णत्वं वेत्यर्थः । आद्यु-च्चारणे प्रथमोच्चारणसमये अकखादौ अषान्तेच । कश्च खश्च कखौ तावादीयस्य सकखादिःकखादेरन्योऽकखादि-स्तस्मिन् । षः अन्ते यस्य स षान्तस्तस्मिन् आद्योच्चारणे इत्युभयत्रान्वेति तथा चायमर्थः । आद्युच्चारणेकादि खादिषांतवर्जगदनदादेरन्यस्मिन् धातौ परे प्रादिस्थान्निमित्तात्परस्य नेर्नस्य णत्वं वा भवति । प्रणिभवति । प्रनिभवति । अकखादौ किं । प्रनिकरोति । प्रनिखादति । अषांते किं । प्रनिपिनष्टि । विलेखनेइति । विलेखनं भेदनम् ।

**मू०—लोपःपचांकित्येचास्य ॥ पचादीनां किति लिट्यनादेशादीनां पूर्वस्य लोपो भवत्यकारस्य एकहसमध्यस्थस्य चैकारः किति णादौ सेटि-थपि च । रेदतुः । रेदिथ । णद अव्यक्ते शब्दे । प्रणिनेदुः । नेदिथ । अर्द गतौ याचने च । आम्वोर्णादौ ।**

( सुबोधिनी— ) लोपःपचांकित्येचास्य । पचामिति बहुवचनेन पचप्रकारा धातवो गृह्यं-ते । यथा पच् धातुरेकहसमध्यस्थाकारवान् । लिटि अनादेशादिश्च तथान्येपि धातवः । अस्य किम् । दिदिवतुः ररासे । अनादेशादीति किम् । चकणतुः । एकशब्दोत्राऽसहायवच-नः । एकौ च तौ हसौ च एकहसौ तयोर्मध्यस्थः एकहसमध्यस्थस्तस्य । एकहसः किम् । तत्सरतुः । त्सर छद्मगतौ ॥ आम्वोर्णादौ ।

तत्वदीपिका— लोपः पचामिति । पचामिति बहुवचनेन पचप्रकाराः धातवो गृह्यंते तथा पचधातुरेकहसमध्यस्थाकारवान् लिटिअनादेशादिश्च तथान्योपिधातुरिति । तथा च पप्रच्छतुरित्यत्र एकहसः मध्यस्थत्वाभावान्नेत्त्वलोपौ । अनादेशादेः किं ॥ चखनतुः । लिडा देशविशेषणात् नेभिथ । सेहे । अस्य किं । दिदिवतुः ।

**मू०— नुगशाम् ॥ अश्नोतेर्ऋकारादेः संयोगान्ताकारादेश्च पूर्वस्य नुग्भवति णादौ । आनर्द । आर्दीत् । नर्द गर्द शब्दे । तर्द हिंसायां । तर्दति । कर्द**

कुत्सितेशब्दे । कर्दति । खर्द दंदशूके । खर्दति । क्रदि चेष्टायाम् । क्लिदि परिदेवने । क्लिन्दति । अत सातत्यगमने । आतिथ । खाद भक्षणे । अखादीत् । क्रदि आव्हानेरोदने च । अति अदिबंधने । अन्तति । अन्तेत् । अन्ततु । आंतत् । आनंत । आनंद । अंद्यात् । अंदिता । अंदिष्यति । आंदिष्यत् । आंदीत् । टुनदि समृद्धौ । ननन्द । चदि आल्हादने दीप्तौ च । इदितोनुम् । चन्दति । चंदेत् । चंदतु । अचन्दत् । चचंद । चंद्यात् । चंदिता । चंदिष्यति । अचंदिष्यत् । अचंदीत् । शुंध शुद्धौ । शुंधति । शुंधेत् । शुंधतु । अशुंधत् । शुशुंध । शुंध्यात् । शुंधिता । शुंधिष्यति । अशुंधिष्यत् । अशुंधीत् । तक्क कक्क हसने । तकि कृच्छ्रजीवने । तंकति । ततंक । अतंकीत् । शुक गतौ । शोकति । अशोकीत् । बुक्क भषणे । बुक्कति । कख हसने । कखति । युगि जुगि वर्जने । युंगति । इदि परमैश्वर्य्ये । इंदति ।

सुबोधिनी—नुगशाम् । अशूङ् व्याप्तौ । अशामिति बहुवचनमाद्यर्थं । संयोगोन्तो यस्य स संयोगांतः स्वर आदिर्यस्य स स्वरादिः संयोगांतश्चासौ स्वरादिश्च संयोगांतस्वरादिस्तस्य । अत सातत्यगमने । सततस्य भावः सातत्यं सातत्येन गमनं सातत्यगमनं तस्मिन् । खादृभक्षणे । ऋदित्त्वान्नेरित इत्यङ् । काप्यन् । अचखादत् । टुनदि समृद्धौ। टु इति ट्वितोथुरित्यत्राथुप्रत्ययार्थः । नंदथुः । इदित्त्वान्नस्य लोपो न नंद्यात् । चदि आल्हादने दीप्तौ च हर्षे तेजसि चेत्यर्थः । क्लिदि परिदेवने । परिदेवनं शोकः । इदि परमैश्वर्ये । ईश्वरस्य भाव ऐश्वर्यं । ण्यः । परा उत्कृष्टा मा लक्ष्मीर्यस्य तत् परमं परमं च तदैश्वर्य्यं च परमैश्वर्य्यं तस्मिन् ।

तत्वदीपिका—नुगशामिति । अशामिति बहुवचनेनैतत्सर्वं लभ्यमित्याह । ऋकारादेरित्यादि । स्वरादेरिति अत्राटं विना स्वरादित्वं बोध्यम् ।

मू०—स्वरादेः ॥ स्वरादेर्धातोर्द्वितीयोऽडागमो भवति दिबादौ परे । अइए । एऐऐ । ऐन्दत् ।

सुबोधिनी—स्वरादेः। दिबादावडित्यनुवृत्तं स्वर आदिर्यस्य सः स्वरादिस्तस्य आरंभसामर्थ्यात् द्वितीयोडिदित्यर्थः । अटं बिना स्वरादित्वमिह विवक्षितमन्यथा दिबादावडित्यग्रे अटिचेति सूत्र्यताम् ॥

तत्वदीपिका—स्वरादेरिति। विधानसामर्थ्यात् । अन्यथा दिबादावडित्यस्याग्रेऽटिचेति सूत्रितेन द्वितीयाटः संभवात् । यत्तु वासुदेवेन आद्योच्चारणे स्वरादिः अन्यथा सर्वस्यैव प्रथमं स्वरादित्वादव्यावृत्तेरित्युक्तं तन्न ॥ औष्ट ऐज्यत इत्यादावप्रसंगात् । द्वितीय इति विधानसामर्थ्यात् प्रथमाबाधेन भवतीत्याशयः । करणसामर्थ्यादेकेन या धातुकार्यानन्तरं द्वितीयेन कार्यमित्याह । एऐ ऐ इति ।

मू०— कासादिप्रत्ययादाम्क्रस्भूपरः ॥ कास् आस् दय अय गुरुनाम्याद्यनेकस्वरेभ्यो णबादौ परे आम् प्रत्ययो भवति । स च कृ अस् भू परः प्रयोक्तव्यः ।

सुबोधिनी—कासादिप्रत्ययादाम्क्रस्भूपरः । कासृ शब्दकुत्सायां । आस उपवेशने । दय दाने । अय गतौ । गुरुश्चासौ नामी च गुरुनामी गुरुनामीआदिर्यस्यस गुरुनाम्यादिर्धातुः ।

प्रत्ययग्रहणमनेकस्वरोपलक्षकम्। एभ्य आम् प्रत्ययः स्यात् कीदृशः कृसृभुवः परे यस्मात्स कृसृभूपर इत्यर्थकथनेन विपर्यासव्यवहितयोर्निवृत्तिः कथिता कथं तर्हि "तं पातयां प्रथममास पपात पश्चात्। प्रभ्रंसयां यो नहुषं चकार" इत्यादि प्रयोगाः । प्रमादत एव । कृसृभुवां क्रियासामान्यवाचित्वादाम्प्रकृतीनां क्रियाविशेषवाचित्वात् तदर्थयोरभेदान्वयो भवति । सामान्यविशेषयोरभेदान्वयो लोकतः सिद्धोऽस्ति । एवं च ईंदांचकार । ईंदांबभूवेत्यादौ एककर्तृकाभूतानद्यतनपरोक्षापरमैश्वर्याभिन्नाक्रियेति तुल्यो बोधः ननु करोतिस्सकर्मकः भवतिस्त्वकर्मकः कथं द्वयोस्तुल्यबोध इति चेदत्राहुः। यदा हि करोतिरुत्पादनार्थकः स्वातंत्र्येण प्रयुज्यते । तदा तस्य नियमेन सकर्मकत्वं भवति । घटंचक्रे राज्यं चकारेत्यादौ । यदा तु क्रियांतरसमानाधिकरणः करोतिः प्रयुज्यते तदा यत्समानाधिकरणः करोतिस्तत्सकर्मकत्वाऽकर्मकत्वाभ्यां कृत्वा स्वयमपि तथा सकर्मकाऽकर्मकभावौ भजते। जुहवांचकारेति । एवंभ्वस्त्योरप्याम्प्रकृतिसमानाधिकरणत्वेन क्वचित्सकर्मकत्वं बोध्यम् । तथा च "तस्याऽतपत्रं बिभरांबभूवेति माघः । तपर्त्तुपूर्त्तावपि मेदसांभरा विभावरीभिर्बिभरांबभूविरे" इति श्रीहर्षश्च इत्यत्र क्रियान्तरसमानाधिकरणाद्भवतेः सकर्मकत्वात् कर्मणि लिट् । एवं चाम्प्रकृत्यर्थगतकारकसंख्यादिविशेषाभिव्यक्तिरनुप्रयोगस्य फलमिति। गुरुनाम्यादि किम् । इयेष। अनेकस्वरेति किम् । अइवाचचारेति औ इत्यत्रप्रत्ययांतत्वेप्यनेकस्वरत्वाभावादाम् न ।

तत्त्वदीपिका—कासादि । गुरुर्योनामी सआदिर्यस्य स गुरुनाम्यादिः । प्रत्ययग्रहणमनेकस्वरोपलक्षकं । तेन अइवाचचार औ इत्यत्र प्रत्ययान्तत्वेप्यनेकस्वरत्वाभावान्नाम् ।

**मू०—विददरिद्राजागृषांवा ॥ रः ॥ पूर्वस्य रवर्णस्याकारः ।**

सुबोधिनी—विददरिद्रागृजाषांवा । एभ्योवाऽऽम् दरिद्राजागर्त्त्योरनेकस्वरत्वान्नित्यप्राप्तौ वेत्त्योषत्योश्चाप्राप्तौ विकल्पः । विद् ज्ञाने। दरिद्रा दुर्गतौ । जागृ निद्राक्षये । उष दाहे। आमो मस्य नेत्वम् । आस्कासोराम्विधानात् ज्ञापकात् ॥ ॥ रः । ऋ अ इति छेदः । पूर्वस्य हसादिःशेष इत्यतः पूर्वस्येत्यनुवृत्तम् ॥

तत्त्वदीपिका— अत्रोदितोवेत्यतो वानुवृत्तेराह । विददरिद्राजागुषां वेति । दरिद्राजागर्त्योरनेकस्वरत्वान्नित्यप्राप्तौ वेत्त्योषत्योश्चाप्राप्तौविकल्पः । रद्गति । ऋ अ इति छेदः पूर्वस्य हसादिः शेषः इत्यतः पूर्वस्येत्यनुवर्त्तते । यत्तु वासुदेवेन णबादौ पूर्वस्येत्यनुवर्त्ततेइत्युक्तंतन्न । र इत्यत्राख्यापादस्थेणबादाविति अस्मात्कत्वादस्यादनुवृत्त्यसंभवात् ।

**मू०— धातोर्नामिनः ॥ नाम्यंतस्यादंतस्य च धातोर्वृद्धिः ञ्णितिपरे ।**

**इंदांचकार । इंदांचक्रतुः । इंदांचक्रुः । इंदांचकर्थ । इंदामास । इन्दामासतुः । इंदामासुः । इंदांबभूव । इंद्यात् । ऐंदीत् । णिदि कुत्सायाम् । इदितोनुम् । प्रपूर्वः । प्रणिन्दति प्रनिन्दति । प्रनिंदेत् । प्रणिन्दतु । प्राणिन्दत् । निनिन्द । निंद्यात् । निन्दिता । निंदिष्यति । अनिन्दिष्यत् । अनिन्दीत् । दाधि पालने । ददंध । उख गतौ । अपूर्कतरि । उपधालघोर्गुणः । ओखति । ओखेत् । ओखतु । औखत् ।**

सुबोधिनी—धातोर्नामिनः । आदिस्वरस्येत्यतो वृद्धिरिति ञ्णितीति चानुवृत्तम् । अत्र हि स्वरस्येति पदमनुवृत्त्य वाक्यभेदेन व्याख्येयं। तेन स्वरांतस्य धातोर्वृद्धिः ञ्णिति। तेन श्वा-

नमाचष्टे शावयात । विद्वांसं विदावयतीत्यादि सिद्धम् । अदंतस्येति अत उपधाया इत्यत्रात् इति योगविभागात्तस्येहाकर्षणाद्वा लब्धं तेन च अंकायतीत्यादि सिद्धम् ॥

तत्त्वदीपिका–धातोर्नामिनइति । आदिस्वरस्येत्यतो वृद्धिरितिञ्णितीतिचानुवर्त्तते । धातोः किम् । आत्रेयः । नात्रादिवृद्धिर्बाधिका नापि यस्यलोपः उभयोरन्यत्रावकाशत्वादत्र परत्वादन्त्यवृद्धिरेव स्यात् तथाहि आदिवृद्धेरवकाश आश्वयुजः इत्यत्र । अन्त्यवृद्धेः निनाय । इहोभयप्रसंगे परत्वादन्त्यवृद्धिः आतो धातोरित्येकम् । अथैवमग्निभुवोपत्यमाग्निभवइत्यत्रान्त्यवृद्धिः प्राप्नोतिभुवोधातुत्वादितिचेत् । शृणु । धातोरित्येवंशब्देन विहितेणिति वृद्धिरिति व्याख्येयं । अत्र तु नाम्नोविहितोऽण् न तु धातोः एवं चाग्निभुवमिच्छतीतिवाक्ये नाम्नो य ईचास्येति यः ततः क्विप् अल्लोपयलोपौ तस्यापत्यमाग्निभव इत्यत्रापि न भवति । नामशब्देनात्राणोविधानात् अथात्रादिस्वरस्येत्यनुवर्त्य स्वरान्तस्य धातोरिति व्याख्येयं । मैवं स्वरसहचरितादिशब्दस्याप्यनुवृत्तिप्रसंगात् दरिद्रानित्यादावतिव्याप्तेः स्वरमात्रानुवृत्तौ तु गणयतीत्यादावंत्यवृद्धेर्दुर्वारत्वात् न चात्र यत इति लोपोबाधकः तस्यानपि सामान्ये विहितत्वेनास्यानपि विशेषे ञ्णिति विहितत्वादपवादत्वात् । ईदामासेति । कसुभूपरइत्यत्र प्रथमग्रहणादस्तेर्भूभावोन । अन्यथा हि कृभूपर इत्येवोच्येत । आमोमस्येत्त्वमासुकासोर्विधानान्न । अन्यथा मित्त्वादंत्यस्वरात्परत्र विधानादासुकासोः सकारात्पूर्वविधाने सवर्णदीर्घत्वे वैलक्षण्याभावात् ।

**मू०– असवर्णेस्वरे पूर्वस्येवर्णोवर्णयोरियुवौ ॥** उवोख । ऊखतुः । ऊखुः । उवोखिथ । औखीत् । लुंच अपनयने । अञ्चु गतिपूजनयोः । अञ्चति । अंचेत् । अंचतु । आंचत् । आनंच । अच्यात् । पूजायाम् अंच्यात् । अंचिता । अंचिष्यति । आंचिष्यत् । आञ्चीत् । आछि आयामे । आंछति । आंछेत् । आंछत् ।

सुबोधिनी–असवर्णेस्वरे पूर्वस्येवर्णोवर्णयोरियुवौ । धातोः पूर्वस्येवर्णोवर्णयोरियुवौ भवतः असवर्णे स्वरे । पूर्वं द्वित्वं पश्चादुकारस्योपधायालघोरिति गुणेकृते पूर्वस्योव् । उवोख । कित्त्वाद्गुणाभावे ऊखतुः । अत्र उ उख् अतुस् इति स्थिते पर्जन्यवल्लक्षणप्रवृत्तिरिति न्यायात् पूर्वस्यह्रस्वस्यापि ह्रस्वे कृते सवर्णदीर्घः ततो ह्रस्व इति पुनर्ह्रस्वो न । लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते इत्युक्तत्वात् । नुगशामिति नुक् । आनञ्च । गतौ नोलोप इति नलोपः । अच्यात् । आछि आयामे । आयामो दैर्घ्यम् ॥

**मू०–आंछेर्नुग्वा ॥** णादौ । आंछ । हुर्छा कौटिल्ये ।

सुबोधिनी–आंछेर्नुग्वा । आंछेः पूर्वस्य नुग् वा । नुगशामिति नित्ये प्राप्तेविकल्पः ॥

**मू०–य्वोर्विहसे ॥** हूर्छति । हूर्छतु । जुहूर्छ । हूर्छ्यात् । हूर्छिता । हूर्छिष्यति । अहूर्छिष्यत् । अहूर्छत् । युच्छ प्रमादे । युच्छति । वज गतौ ।

**शसददवादिगुणभूताकाराणान्नैत्वपूर्वलोपौ ॥**

ववाज । ववजतुः । अवाजीत् । व्रज गतौ । व्रजति । व्रजेत् । व्रजतु । अव्रजत् । वव्राज । व्रज्यात् । व्राजिता । व्रजिष्यति । अव्रजिष्यत् ।

सुबोधिनी–शसददवादिगुणभूताकाराणांनैत्वपूर्वलोपौ । एषामेत्वपूर्वलोपौ न । शसु हिंसायां । दंत्यांतः । दद दाने । वकारो दंतौष्ठ्यः आदौ यस्य स वादिः । गुणशब्देन भूत उत्पादितः गुणभूतः गुणभूतश्चासौ अकारश्च गुणभूताकारः शशरतुरित्यादौ गुणशब्देन क्रि-

यमाणोऽऽ तदवयवोऽ कारः । लुलविथेत्यादौ तु गुणशब्देन क्रियमाणो य ओकारस्तत्स्थानिकस्यावादेशस्यावयवोऽ कारस्तस्यैत्वपूर्वलोपौ न ॥

**तत्त्वदीपिका**—शशद्देति । शश प्लुतागताविति तालव्यान्तस्य ग्रहणमिति कश्चिद्भ्राम तद्भाष्यविरोधादुपेक्ष्यं । गुणभूतेति । गुणो भवतीति गुणशब्देन भावितो योऽकारस्तस्येत्यर्थः । तथा च शशरतुरत्रारि गुणे कृतेऽवयवस्यास्य न । लुलविथेत्यत्र ओकारेगुणे तस्यापि तदवयवस्यास्य न । गुणभूतत्वं शात्परस्यासाधारणं । तेनोक्तप्रयोगद्वयनिर्वाहः एतच्चलोपःपचामिति सूत्रे चकारादधिकारार्थाल्लभ्यते ।

**सू०—वदिव्रज्योःसौनित्यंवृद्धिः ॥** अव्राजीत् । अज गतौ क्षेपणे च । अजति । अजेत् । अजतु । आजत् ।

**सुबोधिनी**—वदिव्रज्योः सौनित्यंवृद्धिः । एतयोर्नित्यं वृद्धिः सौ परे । अतोहसादेरिति विकल्पप्राप्तौ नित्यविधानं ॥

**तत्त्वदीपिका**—वदिव्रज्योरिति । अतोहसादेरिति विकल्पप्राप्तौ नित्यम् ।

**सू०— अजेर्व्चतुर्षुवीवसादौवा ॥** विवाय ।

**सुबोधिनी**—अजेर्व्चतुर्षुवीवसादौवा । अजेर्वीत्यादेशोऽनपि वसादावनपितु वा । गुरुत्वात् सर्वादेशः ॥

**सू०—नुधातोः ॥** विकरणस्य नोर्धातोश्चेवर्णोवर्णयोरियुवौ स्वरे । अनेकस्वरस्यासंयोगपूर्वस्य तु य्वौ ।

**सुबोधिनी**—नुधातोः । य्वोर्धातोरितिसूत्रं य्वौवेतिचानुवृत्तं । क्नुप्रत्ययसंबंधिनो नु इत्यस्य न ग्रहणं । निरनुबंधकग्रहणे न सानुबंधकस्येत्युक्तत्वात् । णुस्तुताविति धातोरपि न कृत्रिमाकृत्रिमयोरकृत्रिमस्यैव ग्रहणमिति परिभाषितत्वात् । परिशेषात् नु इत्यस्य विकरणस्य ग्रहणं । नुप्रत्ययांतस्य धातोश्चेवर्णोवर्णयोरियुवौ । अनेकस्वरस्यासंयोगपूर्वस्य तु नोर्द्धातोश्चेवर्णोवर्णयोर्य्वौ धातोर्विहिते स्वरादौ परे । शक्नुवंति । शिश्रियतुः । ब्रुवंति । असंयोगपूर्वस्यानेकस्वरस्य तु सुन्वंति । निन्यतुः । जुह्वति । अनेकस्वरस्येति किम् । रियति । पियति । रि पि गतौ । रुवंति । नुप्रत्ययांतस्यानेकस्वरत्वाव्यभिचारात् प्रत्युदाहरणं न । धातोर्विहिते इति किं । सुधीश्शौ ॥

**तत्त्वदीपिका**—नुधातोरिति । य्वोर्धातोरिति य्वौवेति च पूर्वसूत्रद्वयमनुवर्तते । अत्र च धातोर्विहिते स्वरादौ परे इति बोध्यं । तेन सुधीशावत्रपदादिस्वरे न स्यादिभ्यःक्नोरपि नग्रहणंनुग्रहणेन । निरनुबंधकग्रहणे न सानुबंधकस्येति परिभाषया विकरणस्यैव नोर्ग्रहणात् । णुस्तुताविति धातोरपि न ग्रहणं कृत्रिमत्वात् ।

**सू०—उवर्णांतेहुन्वोरेवापि ॥** विव्यतुः ।

**सुबोधिनी**—उवर्णान्तेहुन्वोरेवापि । अपि अप्विषये चतुर्षु अनेकस्वरस्याऽसंयोगपूर्वस्य धातोरुवर्णस्य वत्वं न हुन्वोरेव वत्वं चतुर्षु । अनपि तु जुहुवतुः । विव्यतुरित्यत्र य्वोर्विहसे इति दीर्घेन यत्वस्यासिद्धत्वात् ॥

**तत्त्वदीपिका**—उवर्णान्तेहुन्वोरेवापीति । हुदानादनयोः नोर्विकरणस्य अपि अप्विषये इत्यर्थः । तेन जुह्वति चिन्वतीन्यत्रैव नतु बोभुवतीत्यत्रापि एतच्चानुवृत्त्यालभ्यते ।

मू–स्वरान्तादत्वतश्चतादौनित्यानिटस्थपोवेट् ॥ विवयिथ विवेथ आजिथ । विव्यथुः । विव्य । आजिव । आजिम । वीयात् ।

सुबोधिनी–स्वरांतादत्वतश्चतादौनित्यानिटस्थपोवेट् । स्वरांतात्तादौ नित्यानिट आद्योच्चारणेऽत्वतस्तादौ नित्यानिटश्च धातोः परस्य थप इट् वा भवति । अत् विद्यते यस्य स अत्वान् तस्मात् । स्वरांतात् किम् । बिभेदिथ । थपः किम् । पपिव । तादौ नित्यानिटः किम् सस्वर्थ सस्वरिथ । स्वरतिसूतीत्यनेन वेट्कोयम् । आद्योच्चारणे इति किं । चकपिथ । अत्वतः किं बिभेदिथ । तपरः किम् । रराधिथ । तादाविति किम् । जग्रहिथ । वुःसेइत्यनेन सप्रत्ययेऽयं नित्यमनिट् । नित्यानिटः किम् । आनंजिथ । ऊदित्त्वाद्वेट्कोयम् ॥

तत्त्वदीपिका–अत्वत इति । अद्विद्यते यस्य सोऽत्वान् तस्मादित्यर्थः । नित्यानिटः किं । अङ्क्ता । अञ्जिता ।

मू०– नैकस्वरादनुदात्तात् ॥ आद्योच्चारणेऽनुदात्तादेकस्वराद्धातोः परस्य वसादेरिण्न स्यात् ।

सुबोधिनी–नैकस्वरादनुदात्तात् आद्योच्चारणे इत्युभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराच्चेत्यर्थः । तेनाबिभत्सतीत्यत्र सांते अनेकस्वरत्वेपीण्णिषेधो भवत्येव ॥

तत्त्वदीपिका–नैकस्वरादिति । आद्योच्चारणे इति उभयत्रान्वेति । आद्योच्चारणेऽनुदात्तादेकस्वराच्चेत्यर्थः । तेन बिभित्सतीत्यत्र सांताद्वित्वदशायामनेकाल्त्वेपिइण्णिषेधोभवत्येव ।

मू०– अनिट् स्वरान्तो भवतीति दृश्यतामिमांस्तु सेटः प्रवदन्ति तद्विदः । अदन्तमृदन्तमृताश्च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि ॥१॥ गणस्थमूदन्तमुताश्च रुस्नुवौ क्षुवन्तथोर्णोतिमथो युणुक्ष्णवः । इतिस्वरान्ता निपुणैस्समुच्चितास्ततो हसान्तानपिसन्निबोधत ॥ २ ॥ शकिस्तु कान्तेष्वनिडेकइष्यते घसिश्च सान्तेषु वसिः प्रसारणी ॥ रभिश्च भान्तेष्वऽथमैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे ॥ ३ ॥ यमिर्यमान्तेष्वनिडेकइष्यते रमिर्दिवादावपि पठ्यते मानिः ॥ नमिश्चतुर्थो हनिरेव पंचमो गमिस्तु षष्ठः प्रतिषेधवाचिनाम् ॥ ४ ॥ दिहिर्दुहिर्मेहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः । इमेनिटोऽष्टाविह मुक्तसंशया गणेषु ह्रान्ताः प्रविभज्य कीर्तिताः ॥ ५ ॥ दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ॥ लिशिश्च शान्ताननिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् । ६ । राधिस्सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ॥ इमे तु धान्ता दशचाऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥ ७ ॥ शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती हिषिम् ॥ इमान् दशैवोपदिशंत्यनिड्विधौ गणेषु षान्तान् कृषकर्षती तथा ॥ ८ ॥ तपिन्तिपिश्चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ॥ स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पांतान् गणितांस्त्रयोदश ॥ ९ ॥ अर्दिं हर्दिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं

सदिं स्विद्यतिपद्यती खिदिम् । नुदिं तुदिं विद्यति विन्त इत्यपि प्रतीहि दा-
न्तान् दश पञ्च चानिटः ॥ १० ॥ पचिं वचिं विचिरिंचिराञ्जिपृच्छतीन्निजिंसि-
चिं मुचिभजिभञ्जिभृज्जतीन् ॥ त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन् भुजिं
स्वजिं सृजि विजि विद्ध्यनिट्स्वरान् ॥ ११ ॥

सुबोधिनी—अथानुदात्ताः । स्वरांतोधातुरनिट् भवति न इट् यस्मात्सोनिट् इति भवद्भिर्हे श्रयतां ज्ञायतां । तु पुनः स्वरांतेष्विमान् धातून् सेटः प्रवदंति । तान् विदंतीति तद्विदः । तानाह । अदंतं धातुं कथवाक्यप्रबंधे इत्यादि ऋदंतं कॄ विक्षेपे इत्यादिकम् । ऋतां मध्ये वृङ्वृञौ सेटौ । वृङ् संभक्तौ वृञ् वरणे । अथेवर्णेषु इवर्णांतेषु श्रिडीङ् सेट् कथ्यते श्रिञ्च डीङ्चानयोः समाहारः श्रिडीङ् । टुओश्वि इर्गतिवृद्ध्योः । डीङ् विहायसागतौ । पुनस्तेषु शीङ्श्रिञावपि सेटौ कथ्येते । शीङ्स्वप्ने । श्रिञ् सेवायामिति ॥ १ ॥ गणे तिष्ठतीति गण-स्थस्तं गणस्थमुदंतं धातुं भूलूप्रभृति । किंच पुनः उतां उकारांतानां मध्ये रुस्नुवौ सेटौ। रु शब्दे रुङ् गतिरेषणयोरित्युभयं । स्नु प्रस्रवणे । तथा क्षुवं टुक्षुशब्दे । ऊर्णोतिं । उर्णुञ् आच्छादने । अथो युणुक्ष्णवः धातून् सेटः । यु मिश्रणादौ अयं सेट् । युञ् बंधने । क्रैया-दिकस्त्वनिट् । णु स्तुतौ । क्ष्णु तेजने प्रवदंतीत्यनेनान्वयः ! इति असुना प्रकारेण निपुणैः विचक्षणैः स्वरांता धातवः समुच्चिताः एकीकृताः । ततोऽनंतरं हसांतान् धातून्अनिटःसका शात् यूयं निबोधत जानीत । लोटो मध्यमपुरुषस्य बहुवचनम् ॥२॥ अथ हसांतान् धातू-नाह । कांतेषु शकिः एकः अनिट् शक्लृ शक्तौ । शकमर्षणे दैवादिकस्तु सेट् । सांतेषु घासिः घस्लृअदने । अदादेशोघसिश्च । तु पुनः वसिः प्रसारणी । वस निवासे । प्रसारणं संप्रसारणमस्यास्तीति प्रसारणी। एतेन वस् आच्छादने अदादिकः सेट्। तस्य संप्रसारणा-भावात्। भांतेषु रभिः। रभ राभस्ये। अथ मैथुने यभिः यभ मैथुने। ततस्तृतीयो लभिः। अनिट् डुलभष् प्राप्तौ अनिट् इष्यते इत्यन्वयः। इतरे धातवोऽनिटो न ॥ ३ ॥ ञमांतेषु ञमप्रत्या-हारांतेषु धातुषु प्रतिषेधवाचिनामिण्निषेधकानां मध्ये एकः अनिट् यमिः । यम उपरमे । रमिश्च रमु क्रीडायामपि दिवादौ दिवादिगणे यः मनिः विचक्षणैः पठ्यते स मनिःमन ज्ञाने दैवादिकः। मनु अवबोधने तानादिकः सेट्। चतुर्थो नमिः णम् प्रव्हत्वे शब्दे च। पंचमो हनिःहनहिंसागत्योः। ततस्तु षष्ठो गमिः गम्लृगतौ मया इत्यन्वयः ॥ ४ ॥ इहानिट्कारिकायामिमेऽनिटोऽष्टौ धातवो हान्ता मया कीर्तिताः कथिताः ॥ कीदृशाः। मुक्तः संशयो येषु ते मुक्तसंशयाः। किं कृत्वा। गणेषु हांतान् प्रविभज्य भिन्नीकृत्य। ते के। दिहिः दिह उपचये। दुहिः दुह प्रपूरणे। दुहिरिति दुहिर अर्दने भौवादिको न गृह्यते सानु-बंधकत्वात्। आदादिकएवानिडिति प्राञ्चः। मेहतिरोहती। मिह सेचने। रुह बीजजन्मनि प्रादुर्भावे च। वहिःवह प्रापणे। तु पुनः षष्ठो नहिः णह बंधने। दहतिः दह भस्मीकरणे। तथा लिहिः लिह आस्वादने ॥ ५ ॥ पुराणगाः प्राचीनाः विद्वांसः गणपाठेषु शांतान् अनि-ट्कान् दशैव पठंति इतरान् न। तान् कान्। दिशिं दिश अतिसर्ज्जने। दृशिं दृशिर्प्रेक्षणे। दशि दंशने। अथो मृशिं मृश आमर्शने। स्पृशिं स्पृशसंस्पर्शने। रिशिंरुशिं रिश् रुशहिंसायां। अष्टमं क्रोशतिं क्रुश आव्हाने रोदने च। विशिं विश प्रवेशने। लिशिं लिश अल्पीभावे दिवादिस्थो लिश गतौ तुदादिस्थ इत्युभयं ॥ ६ ॥ तथाधांता धातव इमे दशानिटो मताः कथिताः। ते के। रुधिः रुधिर् आवरणे अनो रुध कामे। इति दैवादिक इत्युभयम्। सराधिः

राध संसिद्धौ । युधिबंधिसाधयः । युध संप्रहारे । बंध बंधने । साध संसिद्धौ । क्रुधिक्षुधी । क्रुध कोपे । क्षुध बुभुक्षायां । शुध्यतिबुध्यती । शुध शौचे । बुध अवगमने । दैवादिकौ । बुधिर् बोधने इति बुध अवगमने इत्येतौ भौवादिकौ तु सेटौ । व्यधिः व्यध ताडने । ततः परं सिध्यतिरेव षिधुसंराद्धौ अनिट् । षिधु गत्यां षिधू शास्त्रे मांगल्ये चैतौ भौवादिकौ सेटौ ॥ ७ ॥ गणेषु गणपाठेषु अनिड्विधौ आनिट्प्रकरणे षांतान् इमान् दशैवाऽऽचार्या उपदिशंति तान्कान् । शिषिं शिष्लृ विशेषणे पिषिं पिष्लृ संचूर्णने । शुष्यतिपुष्यती । शुष शोषणे । पुष पुष्टौ । दैवादिकावनिटौ । भौवादिकः सेट् । त्विषिं त्विष दीप्तौ । विषिं विष्लृ व्याप्तौ जौहोत्यादिकः । श्लिषिं श्लिष् आलिंगने । श्लिष दाहे भौवादिकः सेट् । तुष्यतिदुष्यती । तुष तुष्टौ । दुष वैकृत्ये । दैवादिकौ । द्विषिं द्विष अप्रीतौ । तथा कृषिकर्षती कृष विलेखने । भौवादिकतौदादिकौ ॥ ८ ॥ स्वरेण नीचेन अनुदात्तस्वरेण गणितान् पांतान् अनिटः त्रयोदश त्वं प्रतीहि जानीहि । तानाह । तापिं तप संतापे । तप ऐश्वर्ये । दैवादिकः । तप दाहे इति चौरादिकोपि । ञिप्रत्ययाभावपक्षेऽनिट् । तिपिं तिपृ क्षरणे । च पुनः आपिं आप्लृ व्याप्तौ । अथो वपिं डुवप् बीजतंतुसंताने । स्वपिं ञिष्वप् शये । लिपिं लिप उपदेहे । लुपिं लुप्लृ छेदने । तृप्यतिदृप्यती । तृप् प्रीणने । दृप् हर्षमोचनयोः । एतौ दैवादिकावनिटौ । तृप् तृप्तौ । दृप् उत्क्लेशे । एतौ दैवादिकौ सेटौ । तृप तृप्तौ । दृप संदीपने । एतौ चौरादिकौ च सेटौ । सृप्लृ गतौ । शपिं शप आक्रोशे शप् उपालंभे च । छुपिं छुप स्पर्शे । क्षिपिं क्षिप प्रेरणे । दैवादिकस्तौदादिकश्चानिट् ॥ ९ ॥ दांतान् धातून् अनिटःपंचदशत्वं प्रतीहि अवेहि । तानाह । आदिं अद भक्षणे । हदिं हद पुरीषोत्सर्गे । स्कंदिभिदिक्षिदिक्षुदीन् । स्कंदिर् गतिशोषणयोः । भिदिर् विदारणे । छिदिर् द्वैधीकरणे । क्षुदिर् संचूर्णने । शदिं शद्लृ शातने । सदिं षद्लृ विशरणादौ । स्विद्यतिपद्यती । ञिष्विदा गात्रप्रक्षरणे । पद गतौ दैवादिकः । ञिष्विदा स्नेहनमोचनयोः । पद स्थैर्ये भौवादिकः सेट् । खिदिं खिद दैन्ये । खिद परिघाते । रौधादिको दैवादिकस्तौदादिकश्चानिट् । नुदिं नुद प्रेरणे । तुदिं तुद व्यथने । विद्यविनत्तिकावपि । विद सत्तायां दैवादिः । विद विचारणे रौधादिकः । विद ज्ञाने । विद्लृ लाभे । एतौ सेटौ । विद्यविनत्ती एव विद्यविनत्तिकौ स्वार्थे कप्रत्ययः ॥ १० ॥ न विद्यते इट् स्वरो येभ्यस्तेऽनिट्स्वराः तान् धातून् त्वं विद्धि जानीहि । तानाह । पाचिं डुपचष्पाके । पची व्यक्तीकरणे च सेट् । वचिं वच परिभाषणे । ब्रुवो वचिरपि । विचिरिचिरञ्चिरञ्चिपृच्छती । विचिर् पृथग्भावे । रिचिर् विरेचने रिच वियोजनसंपर्चनयोरिति च । रञ्ज रागे । प्रच्छ ज्ञीप्सायाम् । निजिं णिजिर् शौचपोषणयोः । णिजि शुद्धौ आदादिकः सेट् । सिचिं षिच क्षरणे । मुचिभजिभंजिभृज्जतीन् । मुच्लृ मोक्षणे । भज सेवायाम् भंजो आमर्द्दने । भ्रस्ज पाके । त्यजिं त्यज हानौ । यजिं यज देवपूजादौ । युजिरुजिसंजिमज्जतीन् । युजिर् योगे । युज समाधौ इतिच । भाष्यमते युज समाधौ सेट् । रुज रोगे । षंज संगे । टुमस्ज शुद्धौ । भुजिं भुज पालनाऽभ्यवहारयोः । भुजो कौटिल्ये इति च । स्वजिं स्वंज परिष्वंगे । सृजिविजि । समाहारे एकवचनं । सृज विसर्गे । दैवादिकस्तौदादिकश्चानिट् । विजिर् पृथक्भावे । ओविजीभयचलनयोः । तौदादिकस्सेट् । चांताः षट् । छांत एकः । जांताः पंचदश ॥ ११ ॥

तत्त्वदीपिका–अनुदात्तस्वरान्संगृह्णाति । अनिट्स्वरांत इति । न इट् यस्मात् सोनिट् । स्वरोऽन्तो यस्य स स्वरान्तः स्वरान्तो धातुरनिट् भवति इति दृश्यतामित्यन्वयः । इमानिति स्वरान्तेषु इमान् वक्ष्यमाणान्

सेटः प्रवदन्ति । तानाह । **अदंतमिति** । अदन्ता अतीत्यादयः ऋदंताःस्तॄप्रभृतयः । **ऋतामिति** । ऋदंतानां मध्ये वृङ् संभक्तौ । वृञ्वरणे । टुओश्विर्गतिवृद्ध्योः । डीङ् विहायसागतौ । शीङ्स्वप्ने श्रिञ्सेवायाम् । ऊदन्ता भूप्रभृतयः । रुशब्दे । रुङ् गतौ रेषणे च । स्नुप्रस्रवणे । टुक्षुशब्दे । ऊर्णुञ् आच्छादने । नचोर्णोतेर्द्विस्वरत्वात्प्राप्तिरेव न संभवति कारिकायां ग्रहणंकिमर्थमिति वाच्यं । ऊर्णोतेर्नोङिति निषेधादत्र ग्रहणम् एतद्बीजं तु वाच्यम् ऊर्णोतेर्नुवद्भावइत्यादिशेषोक्तिरेवेति दिक् । युमिश्रणामिश्रणयोः णुस्तुतौ । क्ष्णुतेजने । स्वरान्तानुक्त्वेदानीं हसांतान् कांतादिक्रमेणाह । शक्लृशक्तौ एक एव कान्तेषु नान्य इत्यर्थः । खगघङान्ता न सन्त्येव । घस्लृअदने । वसनिवासे । द्वावेव सान्तेषु नान्य इत्यर्थः । अदादेशस्य घसेस्तु स्थान्यनिट्त्वेनैव सिद्धं । रभराभस्ये । यभमैथुने । डुलभष्प्राप्तौ । भांतेषु त्रय एव नापरे इत्यर्थः । यमुउपरमे रमुक्रीडायां । मनज्ञाने । णम प्रह्वत्वे शब्दे च । गम्लृगतौ मांते चत्वार एव । मनज्ञाने दिवादिः । हन हिंसागत्योः नांतेषु द्वावेव । प्रतिषेधवाचिनः अनिटइत्यर्थः । दिहउपचये । दुहप्रपूरणे । मिहसेचने । रुहबीजजन्मनिप्रादुर्भावे च । वहप्रापणे । णहबन्धने । दहभस्मीकरणे । लिहआस्वादने । दह हांतेषु । अष्टावनिटः प्रकीर्तिताः कथिता इत्यर्थः । मुक्तः संशयो येषु ते तथा । गणेषु प्रविभज्य गणविभागेनेत्यर्थः । दिशअतिसर्जने । दृशिर्प्रेक्षणे । दंशदशने । मृशआमर्शने । स्पृशसंस्पर्शे । रिशरुशहिंसायां । क्रुशआह्वाने । विशप्रवेशने । लिशगतौ । लिशअल्पीभावे शान्तेषु दश । रुधिर् आवरणे । अनोरुधकामे । इतिदिवादिश्च । सराधिं राधसंसिद्धावितत्सहितः । युधसंप्रहारे । बंधबंधने । साधसंसिद्धौ । क्रुधक्रोधे । क्षुधबुभुक्षायां। शुधशौचे । बुधअवगमने । दिवादी । व्यधताडने । षिधसंराद्धौ । धांतेष्वेकादशइतरेनेत्यर्थः । शिष्लृविशेषणे । पिष्लृसंचूर्णने । शुषशोषणे । पुषपुष्टौ । दिवादी । त्विषदीप्तौ । विष्लृव्याप्तौ । श्लिषआलिंगने । तुषतुष्टौ । दुषवैकृत्ये । दिवादौ । द्विषअप्रीतौ । कृषिविलेखने । भौवादिकतौदादिकौ । षांतेष्वेकादश । तपसंतापे । तिपृऐश्वर्ये दिवादिः । तपदाहेइत्यपिञ्यभावपक्षे । तिपृक्षरणे । आपॢव्याप्तौ । टुवप् बीजतंतुसंताने । ञिष्वप्शये । लिपउपदेहे । लुपॢच्छेदने ॥ तृपप्रीणने । दृपदर्पविमोचनयोः । दिवादिः सृपॢगतौ स्वरेण नीचेन अनुदात्तेनेत्यर्थः । शपउपालंभे । छुपस्पर्शे क्षिपप्रेरणे । दिवादिस्तुदादिश्च । पांतान्त्रयोदश प्रतीहि जानीहि । अदभक्षणे । हदपुरीषोत्सर्गे । स्कंदिर्गतिशोषणयोः । भिदिर्विदारणे । छिदिर् द्वैधीकरणे । शद्लृशातने । षद्लृविशरणादिषु । ञिष्विदागात्रप्रक्षरणे । पदगतौ । दिवादी । खिददैन्ये खिद्यति खिंदति खिनत्तिश्च । नुद प्रेरणे । तुद व्यथने । विद सत्तायां । विद विचारणे । दांतेषु पंचदश । डुपचष् पाके । पच व्यक्तीकरणे द्वावपि । वच परिभाषणे । ब्रुवो वचिरपि । विचिर् पृथग्भावे । रिचिर् विरेके । रिचवियोजनसंपर्चनयोरिति । रिच क्षरणे । मुचॢ मोचने । चांतेषु षट् । प्रच्छ ज्ञीप्सायां छांतेष्वेकः । त्यज हानौ । णिजिर् शौचपोषणयोः । भजसेवायां । भंजो आमर्दने । भुजपालनाभ्यवहारयोः । भुजोकौटिल्ये । इति च । भ्रस्ज पाके । टुमस्जो शुद्धौ । यज पूजादौ । युजिर् योगे । रुजो भंगे । रंज रागे । विजि पृथक्भावे । ष्वंज परिष्वंगे । षंज संगे । सृज विसर्गे । जांतेषु पंचदश । अनिट्स्वरान् अनुदात्तानित्यर्थः ॥

**मू०-वेत्ता । अवैषीत् । क्षि क्षये । चिक्षयिथ । चिक्षेथ ।**

सुबोधिनी-स्वरांतादात्वतश्चेति वेट् । विवयिथ, विवेथ, आजिथ । विव्यिव । विव्यिम । वीयात् । लुटि वेत्ता, अजिता । वेष्यति, अजिष्यति । अवेष्यत् , आजिष्यत् । धातोर्नामिन इति वृद्धिः । अवैषीत् आजीत् । क्षि क्षये । अकर्मकः । अन्तर्भावितञ्यर्थस्तु सकर्मकः । नुधातोरितीय् । चिक्षियतुः ॥

**मू०-ये । अनपि यकारेपरे पूर्वस्वरस्य दीर्घस्स्यात् । क्षीयात् । अक्षैषीत् । तुम्प हिंसायाम् ।**

सुबोधिनी—ये । अनपियकारेपरे पेसेदीर्घ इत्यतो दीर्घ इति अनपीति चानुवर्त्तते । अनपिये किं । चिनुयात् । संज्ञापूर्वकस्य विधेरनित्यत्वाद्वात्र न दीर्घः । क्षि निवासगत्यो-रिति तौदादिकः॥

तत्त्वदीपिका—ये इति । दीर्घस्तु पेसेदीर्घ इत्यतोऽनुवर्तते । सप्तमीनिर्देशात्पूर्वस्येति लभ्यते । यकारस्तु प्रत्ययस्यैव प्रकरणत्वात् । तेनेयाजेत्यादौ नातिप्रसंगः । वानुवृत्तेर्व्यवस्थया वा ।

मू०—प्रात्तुम्पतेस्सुट्गविकर्तरि ॥ प्रस्तुम्पति गौः । अड्द्वित्वव्यवधानेपि सुट् । प्रास्तुम्पत् । प्रतुस्तुम्प । ओणृ अपनयने । ओणांचकार । वनषण सम्भक्तौ । ववनतुः । अवनीत्, अवानीत् । सेनतुः ।

सुबोधिनी—प्रात्तुम्पतेःसुट्गविकर्तरि । प्रादुपसर्गात् परस्य तुंपतेः सुट् स्यात् गौःकर्त्ता चे-त् । ऋसंयोगादिति लिटः किस्त्वाभावात् नस्य लोपो न । तुतुंपतुः । आशिषि नोलोप इति न लोपः।तुप्यात् । स्तिपानिर्देशात् यङ्लुकि सुट् न । प्रतोतुंपीति । ओणृ अपनयने । अपनयनं दूरीकरणं । वन षण संभक्तौ । वनशब्दे च । संभक्तिर्भजनम् ॥

मू०—जनसनखनामात्वमानिटिसेक्ङिति झसे हे च कौ यादादौ क्ङिति वा । सायात्, सन्यात् । असनीत् असानीत् । चमु अदने ।

सुबोधिनी—जनसनखनामात्वंसेक्ङिति झसे यादादौ क्ङिति वा।जन जनने जुहोत्यादिः । जनी प्रादुर्भावे दिवादिः उभयोर्ग्रहणं । एषामात्वं स्यात् अनिटि सप्रत्यये किति ङिति झसे च यकारादौ क्ङिति वा से परे । सिषासति ॥

मू०—ष्ठिवुक्लम्वाचमांदीर्घोपि ॥ आचामति । आङ्क्रिम् । चमति । वि-चमति । चेमतुः । अचमीत् । ष्ठिवु निरसने ।

सुबोधिनी—ष्ठिवुक्लम्वाचमांदीर्घोपि । एषां दीर्घः स्यात् अप्रत्यये । ष्ठिवु निरसने । निर सनं थूत्करणम् ॥

मू०—नामधातुष्वष्कष्ठिवां सत्वं न ॥ ष्ठीवति ।

सुबोधिनी—नामधातुष्वष्कष्ठिवांसत्वंन । ष्वष्क गतौ । नामधातोरुदाहरणानि षट् दंता अस्येति षोडन् तमाचष्टे नाम्नो ञिर्डितृकरणे इति ञिप्रत्यये टिलोपे च षोडयति षंडमा-चष्टे करोति वा षंडयति । नाम्नोय इति यप्रत्यये । षंडमिच्छतीति षंडीयाति । कटे वर्षा-वरणयोः वर्षोवृष्टिः आवरणमाच्छादनम् ॥

तत्त्वदीपिका—नामधातुष्विति ॥ एतच्च विदोनवानामिति सूत्रस्थवानुवृत्तेर्व्यवस्थया बोध्यं । षण्ड माचष्टे षण्डयतीत्यादौ ।

मू०—ष्ठिवेःपूर्वस्यठस्यथोवा ॥ तिष्ठेव, टिष्ठेव । ष्वोर्विहसे । ष्ठीव्यात् अष्ठे-वीत् । कटे वर्षाऽऽवरणयोः ।

ह्यंतक्षणश्वसृजागृश्व्येदितांसेटिसौ नवृद्धिः ॥ अकटीत् । हय गतौ । अहयीत् । ज्रु रंहसि ।

सुबोधिनी–ह्म्यंतक्षणश्वसजागृश्व्येदितांसेटिसौनवृद्धिः । ह्च म्च य्च ह्म्यः ते अंते येषां ते ह्म्यंताः एत् इत् यस्य स एदित् । ह्म्यंतस्य क्षणादेरेदितश्च वृद्धिर्न सेटि सौ । ग्रह उपादाने अग्रहीत् । टुवमु उद्गिरणे । अवमीत् । हय गतौ । अहयीत् । क्षणु हिंसायाम् । अक्षणीत् । श्वस् प्राणने । अश्वसीत् । जागृ निद्राक्षये । अजागरीत् । टुओश्विइ गतिवृद्ध्योः । अश्वयीत् । सेटि सौ किं । दह भस्मीकरणे । अधाक्षीत् । जु रंहसि । रंहो वेगः ॥

तत्त्वदीपिका–ह्म्यंतेति । ह् च म् य् च ह्म्यः ते अंते येषांते ह्म्यंताः हकारमकारयकारान्ताः इत्यर्थः । क्षणहिंसादौ श्वस प्राणने । जागृ निद्राक्षये । टुओश्वि गतिवृद्ध्योः । एत् इद्येषां ते तथा तेषामित्यर्थः ।

**मू०–नानप्योर्वः ॥** अनपि विषये उवर्णस्य वत्वं न । जुजुवतुः । जुजविथ जुजोथ । अजोषीत् । गुपू रक्षणे ।

सुबोधिनी–नानप्योर्वः । उवर्णान्तस्य धातोर्वत्वं न स्यात् । अनपि परे।गुपू रक्षणे । रक्षणं पालनम् ॥

**मू०–आयः ॥** गुपूधूपविच्छिपणिपनिभ्यस्स्वार्थे आयः प्रत्ययः । अनपि तु वा ।

सुबोधिनी–आयः । गुभ्यः इत्यनुवृत्तं पणिपन्योरनुदात्ते च आयाभावे चरितार्थमात्मनेपदमित्यायान्तान्नाद्भवाति । गुपू रक्षणे । धूप संतापे । विछ गतौ । पणव्यवहारे स्तुतौ च पनच ॥

तत्त्वदीपिका–आय इति । इह गुभ्य इत्यनुवर्त्तते इत्याह । गुपूधूपेत्यादि । स्वार्थे इति । अपरस्यानिर्दिष्टत्वात् स्वार्थ एव लभ्यते ।

**मू०–सधातुः ॥** यङादिप्रत्ययान्तः शब्दो धातुसंज्ञको भवति । गोपायति । गोपायाञ्चकार, जुगोप ।

सुबोधिनी–सधातुः । तच्छब्देन यङादिः परामृश्यते । यङादिना च प्रत्ययग्रहणपरिभाषया तदंतं गृह्यते तेषां केवलानां संज्ञाप्रयोजनाभावाद्वा । " यङ्षकाम्या इयङ् चेति यगायञिञिङस्तथा ॥ आचारे क्विबथो यश्च ज्ञेया दशयङादयः । १ । " प्रत्ययविशिष्टस्य धातुत्वात् तिबादिः ॥

तत्त्वदीपिका–सधातुरिति।तच्छब्दस्य त्यदादित्वेन तेषांच प्रधानपरामर्शित्वेन यङादिर्गृहीतः केवलयङादेश्च संज्ञाप्रयोजनाभावात्तदंतलाभः । अनन्तरोक्तस्य ञेरपि ग्रहणं संग्रहणेन निवार्यते । अन्यथानुवृत्त्यैव तद्ग्रहणे सिद्धे सग्रहणं व्यर्थं स्यात् । आदेशादिविधायकप्रकरणेनविच्छेदाद्व्यवहिततिबादेरपि न ग्रहणमतः परिशेषाद्यङादिरेव गृह्येत इत्याशयेनाह । यङादिप्रत्ययान्त इति ।

**मू०–यतः ॥**यस्यातश्चानपिलोपः । गोपायात् । गुप्यात् । गोपायिता गोपिता गोप्ता । अगोपायीत् अगौप्सीत् ।

सुबोधिनी–यतः । य्च अच्चानयोः समाहारो यत् तस्य । धातोर्विशेषणत्वात्तदंताविधिः । यंतस्य अदंतस्य च लोपः अनपि । अदंतस्य किं । अय पय गतौ । आभ्यां क्विपि यवयोर्वसेहकारोति यलोपेकृते य इत्यलोपो माभूत् । अत् पत् । ऊदित्त्वाद्वेट् । गोपिता । गोप्ता ।

इडभावपक्षे अनिटोनामित्वत इति वृद्धिः । अगोप्सीत् । क्रमु पादविक्षेपे । पादविक्षेपः पाद-विहरणम् ॥

तत्त्वदीपिका—यत इति । यू च अञ्च अनयोः समाहारः यत् तस्य ।

मू०—झसात ॥ अगोताम् । एवं धूप संतापे । तप संतापे । तेपिथ, त-तपूथ । अताप्सीत् । जप जल्प व्यक्तायां वाचि । जेपिथ । जपिता । अ-जापीत् । क्रमु पादविक्षेपे ।

मू०—भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषांयोवाकर्त्रर्थेषुचतुर्षु ।

सुबोधिनी—भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रसित्रुटिलषांयोवाकर्त्रर्थेषुचतुर्षु । प्राप्ताप्राप्तविभाषेयं । अनवस्थानार्थो भ्रमिः क्लमिः त्रसिश्च दिवादयस्तेभ्यो नित्ये प्राप्ते इतरेषामप्राप्तेश्चारंभः । भ्रा-शृ भ्लाशृ दीप्तौ । फणादावेतौ । भ्रमु चलने । भ्वादिर्ज्वलादिश्च । भ्रमु अनवस्थाने । दि-वादिः पुषादिः शमादिः तत्र भ्वादेः भ्रमति, भ्राम्यति । शमादेस्तु शमायदीनातिर्दीर्घे भ्राम्य-ति । इति त्रैरूप्यं । क्लमु ग्लानौ ।त्रसी उद्वेगे । त्रुट च्छेदने । लष कांतौ ॥

मू०—क्रमःपेदीर्घोऽत्वविषये ॥क्राम्यति, क्रामति । अक्रमीत् । यम उप-रमे ।

सुबोधिनी—क्रमः पे दीर्घोऽत्वविषये । क्रमो दीर्घः स्यात् पे चतुर्षु । पेकिं । उपक्रमते । प्रो-पाभ्यामित्यात् । स्नुक्रमोरितिनेट् स्नुक्रमोरुदात्तत्वादिटिसिद्धे नियमार्थोयम् । आभ्यां परस्य परस्मैपदस्यैवेट् स्यान्नातः । स्नु प्रस्रवणे । उपस्नोष्यते जलेन । उपक्रंस्यते । यमु उपरमे । उपरमो निवृत्तिः ॥

मू०—गमांछः ॥ गम यम इषूणां छः स्यादत्वविषये । यच्छति । येमिथ, य-यंथ ।

सुबोधिनी—गमांछः । गम्लृ गतौ । यम उपरमे । इषु इच्छायाम् । बहुवचनमाद्यर्थम् ॥

तत्त्वदीपिका—गमामिति । बहुवचननिर्देशस्य फलमाह । गमादय इत्यादि ।

मू०—यमिरमिनमातांसक्सेरिट्पे ॥ अयंसीत् । अयंसिष्टाम् । णम प्र-ह्वत्वे शब्दे च । नेमिथ । ननंथ । अनंसीत् । ईर्क्ष्य ईर्ष्य ईर्ष्यायाम् । ईर्क्ष्य-ति । ऐर्क्ष्यीत् । ऐर्ष्यीत् । गम्लृ गतौ । गच्छति ।

सुबोधिनी—यामिरमिनमातांसेरिट्पे । एषां सक् स्यात् । एभ्यः । सेरिट् पे परे । अयंसी-त् । अयंसिष्टाम् । व्यरंसीत् । व्यरंसिष्टाम् । अनंसीत् । अनंसिष्टां । पे किम् । उदायत । अरंसाताम् ॥

मू०—गमांस्वरे ॥ गम् हन् जन् खन् घसामुपधायालोपः स्यात्स्वरे क्ङि-ति । नतु ङे । जग्मतुः । जगमिथ, जगंथ ।

सुबोधिनी—गमांस्वरे । गम्लृगतौ हन् हिंसागत्योः खनु अवदारणे घस्लृ अदने एषामुपधाया लोपः स्यात् स्वरादौ क्ङिति प्रत्यये नतु ङे । नोवेत्यतो व्यवस्थितार्थत्वानुव-र्त्तनात् जग्मतुः । जघ्नतुः । चख्नतुः । जक्षतुः । ङेकिं । अगमत् ।

तत्त्वदीपिका—गर्मां स्वरइति । बहुवचनस्य बहूपलक्षकत्वमभिप्रेत्य गणयति । गमहनेत्यादि नोवेत्यतो वानुवृत्तेर्व्यवस्थया क्वचिन्नेत्यभिप्रेत्याह । नतुङेइति । तेन अगमदित्यत्र लोपो न ।

**मू०—हनृतःस्यपः** ॥ हंतेः ऋदंताच्च परस्य स्यप इड्भवति गमेस्तु पे। गमिष्यति ।

सुबोधिनी—हनृतःस्यपः । अनुदात्तत्वादिण्निषेधे प्राप्ते विधिः। हन् च ऋच्चानयोः समाहारो हनृत् तस्मातहनृतः । गमेः परस्मैपदस्यैवेट् नातः । तेन संगस्यते इत्यादौ न ॥

तत्त्वदीपिका—हनृतः । हन् च ऋच्च हनृत् तस्मात् उदितोवेत्यतो वेत्यनुवृत्तेर्व्यवस्थयागमेः परस्मैपदमेवेत्याह । गमेस्त्विति । तेन संगंस्यत इत्यादौ न । हंतेर्ऋदन्ताच्चोभयपदेपि । हनिष्यते । करिष्यते ।

**मू०—लित्पुषादेर्ङः** ॥ लितो धातोः पुषादेश्च ङः प्रत्ययः स्यात्पे । सेरपवादः । अगमत् । म्रुचु म्लुचु गतौ । म्रोचति ।

सुबोधिनी—लित्पुषादेर्ङः । ल् इत् यस्य स लित् पुष् आदिर्यस्य स पुषादिः । लिच्च पुषादिश्चानयोः समाहारो लित्पुषादिः तस्मात् सौत्रत्वात्पुंस्त्वम् । संज्ञापूर्वकविधेरनित्यत्वान्ननुम् । ञेरङ्वृद्धिश्चेत्यतोऽङित्यनुवृत्त्यैव सिद्धे ङइति योगविभागेन तु द्युतादिभ्योऽस्यतिवक्तीति च लब्धम् । पुषादिश्च दिवाद्यंतर्गणो ग्राह्यः लित्साहचर्यात् लितोहि प्रायेणानिट्साहचर्यात् पुषोऽप्यनिड्ग्राह्यः सच्च दिवादिः । भ्वादिः सेट्त्वात् न चुरादिर्ञिना व्यवधानाच्च ॥

तत्त्वदीपिका—लित्पुषादेरिति । ल् इत् यस्य स लित् । पुष् आदिर्यस्य स पुषादिः लिच्च पुषादिश्चानयोः समाहारः लित्पुषादिस्तस्य । नुमोऽनित्यत्वात् क्लीबत्वस्यैव वापुंस्त्वं । ननु ञेरङ्वृद्धिश्चेत्यनन्तरोक्तसूत्रादङनुवृत्तेः किंङग्रहणेनेति चेत्सत्यम् । ङग्रहणं योगविभागेनान्यतोपि विधानार्थम् । तेन द्युतादिभ्योपि अस्यतिवक्तिख्यातिभ्यश्च भवति । अथैकयोगनिर्दिष्टन्यायेनाङिद्वित्वं भवेदिति वाच्यम् । ञेरिति ग्रहणात् । ञ्यंतादेवाङिद्वित्वविधानात् । नत्वन्यस्मात् । अङिलघोर्ह्रस्वउपधाया इतिह्रस्वस्तु लित्पुषादेर्दीर्घोपधत्वाभावादेव न द्वित्वाभावेन पूर्वपदत्वाप्रसंगाच्च ।

**मू०—म्रुचादेर्वाङः** ॥ अम्रुचत्, अम्रोचीत् । अम्लोचीत्, अम्लुचत् । ग्रुच ग्लुच चौर्य्ये । अग्रुचत् अग्रोचीत् । अग्लुचत् अग्लोचीत् । ग्लुंचु गतौ । अग्लुचत् अग्लुंचीत् । ञिफलाविशरणे ।

सुबोधिनी—मृचादेर्वाङः । म्रुचु म्लुचु ग्रुचु ग्लुचु ग्लुंचु इति म्रुचादयः।ञिफलाविशरणे । विशरणमवयवानां विभागः ॥

**मू०—तॄफलभजत्रपाम्** ॥ किति णादौ सेटिथपिचैत्वपूर्वलोपौ । फेलतुः । फेलिथ ।

सुबोधिनी—तॄफलभजत्रपाम् । किति णादौ सेटि थपि चैत्पूर्वलोपौ । तरतेरकारस्य गुणशब्देन भावितत्वात् फलभजोस्तु वैरूप्यसंपादकादेशत्वात् त्रपतेश्च एकहसमध्यस्थत्वाऽभावादप्राप्तेः विधिः । तेरतुः । तेरुः । फेलतुः । फेलुः । भेजतुः । भेजुः । त्रेपे । त्रेपाते ॥

**मू०—लरांतस्य** ॥ लरसमीपाकारस्य सौ नित्यं वृद्धिः । अफालीत् । फल

निष्पत्तौ । फलतुः अफालीत् । चर गतिभक्षणयोः । अचारीत् । स्वृ शब्दोपतापयोः । स्वरति । सस्वार ।

**गुणोर्तिसंयोगाद्योः ॥** सस्वरिथ सस्वर्थ । सस्वारिव । स्वर्यात् । स्वरिष्यति । अस्वरीत् । अस्वारिष्टां । अस्वारीत् । अस्वार्ष्टाम् । अस्वार्षुः । जि जये ।

सुबोधिनी—ल्रांतस्य । ल्रसमीपाकारस्य सौ नित्यं वृद्धिः । अतोहसादेरिति विकल्पस्यापवादः । ल्रांतस्य किं । अलपीत् । अरणीत् । अत्र ल्रसमीपत्वेपिल्रांतत्वाभावान्न नित्यं वृद्धिः । ल्रसमीपाकारस्य किं । श्वल्ल आशुगमने । अस्य अश्वल्लीत् । अत्र समीपत्वेपि अंत्यलसमीपत्वाभावान्न वृद्धिः । जिजये । जयउत्कर्षप्राप्तिः । अकर्मकोऽयम् ॥

तत्त्वदीपिका—ल्रान्तस्येति । ल्रांतस्यकिम् । अलपीत् । अरणीत् । अत्र । ल्रसमीपत्वेपि ल्रान्तत्वाभावान्न । ल्रसमीपाकारस्य किम् । श्वल्ल आशुगमने इत्यस्य अश्वल्लीत् । अत्र ल्रसमीपत्वेपि अन्त्यल्रसमीपत्वाभावान्न । अतो हसादेरिति प्राप्तविकल्पस्यापवादः जि । जय इति । जयउत्कर्षप्राप्तिः ।

**मू०—सपरोक्षयोर्जेर्गिः ॥** जिगाय । जिग्यतुः । जिग्युः । जिगयिथ जिगेथ । जीयात् । अजैषीत् । कृष विलेखने । कर्षति । चकर्ष । चकर्षिथ ।

सुबोधिनी—सपरोक्षयोर्जेर्गिः । जेर्गिः स्यात् सप्रत्यये णबादौ च द्वित्वनिमित्तयोरिति व्याख्येयं । तेन यङ्लुगंतात्सेग्यादेशो न । जेजयांचकारेत्यत्र । कृष् विलेखने । विलेखनमाकर्षणं ॥

तत्त्वदीपिका—सपरोक्षयोरिति । परोक्षशब्देन तदर्थकणबादिग्रहः द्वित्वनिमित्तयोरिति व्याख्येयम् । यथाश्रुतव्याख्याने तु यङ्लुङन्ताज्जेर्ग्यादेशः स्यात् ।

**मू०—रारोऽप्रसेदृशां ॥** दृशसृजकृषमृशस्पृशतृपदृपसृपां झसेऽरो रोभवत्यरो रश्च ।

सुबोधिनी—रारोऽप्रसेदृशां । अश्च आश्च तयोः समाहारः अं तेन सहितो र् अर् तस्य अरः । अरः स्थाने आरः स्थाने च रो भवति तेन द्रक्ष्यति अद्राक्षीदित्युभयत्रापि गुणवृद्धिस्थाने र आदेशः सिध्यति बहुवचनंत्वाद्यर्थम् । दृशिर् प्रेक्षणे । सृज विसर्गे कृष विलेखने । मृश आमर्शने । स्पृश स्पर्शने । तृप प्रीणने । दृप हर्षमोहनयोः । सृप्लृ गतौ ॥

**मू०—कृषादीनांवा ॥** क्रष्टा, कर्ष्टा ।

सुबोधिनी—कृषादीनांवा । कृषादीनां षण्णांतु वाऽरःस्थाने रः ।

**मू०—षढोःकस्से ।** धातोः षढयोःकत्वं स्यात्सेपरे । क्रक्ष्यति, कर्क्ष्यति । अक्राक्षीत्, अकार्क्षीत् ॥

सुबोधिनी—षढोः कस्से । धातोरित्यनुवृत्तम् । सेकिं । क्रष्टा । षढोःकिम् । त्रप्स्यति । धातोः किं । लिट्सु ॥

तत्त्वदीपिका—षढोः कस्सेइति । धातोरिति । अत्र धातुग्रहणद्वयानुवर्त्तनं विधेयम् । तेन धातोरेव

धातोर्नतुनामत्वविशिष्टस्यापि। अतो लिह्य इत्यत्र नातिप्रसंगः। नचात्र क्यस्यबाधकत्वम्। तदपवादकत्वादस्य। न चात्र नामत्वेन धातुत्वमिति भ्रमितव्यम्। तेन तदनपायात्।

मू०–कृषमृषस्पृशमृशतृपदृपांवासिः ॥ हशषांतात्सक् ॥ हांतात् छांतात्षांतान्नाम्युपधादनिटः सक् प्रत्ययः स्याद्दिबादिपरो न तु दृशेः। सेरपवादः। अकृक्षत्। सृप्लृ गतौ। सर्पति। स्रप्ता। सर्प्ता। असृपत्। क्रुश आव्हाने रोदने च। क्रोशति। क्रोष्टा। अक्रुक्षत्। रुषीरिषशिष हिंसायां।

सुबोधिनी–कृषमृषस्पृशमृशतृपदृपांवासिः। एभ्यो वा सिः स्यात् पक्षे। हशषान्तात्सक्। तृपदृब्भ्यां पुष्पादित्वात्तु ङः हशषांतात्सक्। अनिटोनामिवत इत्यनुवृत्तं। हशषांतात्किं। अत्तिप्त। नाम्युपधात्किं। अगाढ। अनिटःकिं। औहिष्ट। दृशेस्तु अद्राक्षीत्। हश्च शश्च षश्च हशषाः ते अंते यस्य स तस्मात्। अत्रांतग्रहणं चिंत्यं। हशषादितिपाठ्यं। तेन च धातोर्विशेषणादंतलाभः॥

तत्त्वदीपिका–हशषान्तात्सगिति। हश्च शश्च षश्च ते अन्ते यस्य स तस्मात्। अत्र चानिटोनामिवत इति पूर्वसूत्रान्नामिवत इत्यनुवर्त्य स च विशेषार्थतया विवक्षणान्नाम्युपधत्वलाभः इत्यभिप्रेत्याह। नाम्युपधादिति। तेन स्तृहेरस्तार्क्ष्यदित्येव रूपमिति बोध्यम् हशषादित्येव युक्तं धातोर्विशेषणत्वेनान्तलाभात्॥

मू०–इषुसहलुभरिषरुषामनपितस्येड्वा ॥ रोषिता रोष्टा। रेषिता रेष्टा। अशिक्षत्। उष गतौ। ओषति। ओषाञ्चकार, उवोष। मिह सेचने।

सुबोधिनी–इषुसहलुभरिषरुषामनपितस्येड्वा। इषु इच्छायां। षह मर्षणे। लुभ गार्ध्ये। रुष रिष हिंसायामेभ्यःपरस्य तकारस्य इड्वा भवति अनति अनपि परे। विदरिद्रेत्याम् उपधायालघोरिति गुणः। ओषांचकार। असवर्णेस्वरे इत्युव्। उवोष। मिह सेचने। सेचनमार्द्रीकरणं॥

मू०–ढिढोलोपोदीर्घश्च ॥ ढेपरे ढस्य लोपः स्याच्चानृतोदीर्घः। मेढा। षढोः कः से ॥ अमिक्षत्। दहभस्मीकरणं। दोहथ। ददग्ध। धक्ष्यति। अधाक्षीत्। झसात्। अदाग्धां। इवि व्याप्तौ। इन्वति। इन्वांचकार। ऐन्वीत्। हिवि दिवि धिवि जिवि प्रीणने। हिन्वति।

सुबोधिनी–ढिढोलोपोदीर्घश्च। अनृतः किं। जर्गृढात्। होढ इति ढत्वं। तथोर्ध इति तस्य धः। ष्टुभिःष्टुः इति ढः। ढलोपे मेढा। हशषांतात् इति सक्। अमिक्षत्। हिवि दिवि धिवि जिवि प्रीणने। प्रीणनं तर्पणं। इदितोनुमिति नुम्। हिन्वति।

तत्त्वदीपिका–ढिढोलोप इति। वान्यत्रेत्यतो वानुवृत्तेर्व्यवस्थयाऽनृतः पूर्वस्येति बोध्यम्। ढ्रोढ्रेलोपो दीर्घश्चेति सुवचम्। एवं च रिलोपो दीर्घश्चेति न सूत्रणीयम्। प्रीणनमिति। प्रीणनं तृप्तिस्तर्प्पणश्च।

मू०–धिन्विकृण्व्योर्वस्यलोपोगुणाभावउप्रत्ययश्चाब्विषये ॥ विकरणस्य नुप्रत्ययस्योप्प्रत्ययस्य च गुणो भवति पिति परे। धिनोति।

सुबोधिनी–धिन्विकृण्व्योर्वस्यलोपोगुणाभावउप्प्रत्ययश्चाब्विषये। आभ्यामुप्प्रत्ययः स्यात्

धातोर्वकारस्य लोपो गुणाभावश्च चतुर्षु । अपोपवादः। धिवि प्रीणने । कृवि हिंसायां । नूप इति गुणे धिनोति ॥

**मू०–ओर्म्वोर्वालोपः ॥** असंयोगपूर्वस्य प्रत्ययोकारस्य लोपो वा वमयोः । धिन्वः धिनुवः । धिन्मः धिनुमः । मिपि तु गुणोबाधकः । धिनोमि ।

सुबोधिनी–ओर्म्वोर्वालोपः । उकारः प्रत्ययावयवः प्रत्ययरूपश्च गृह्यते । ओर्वाहेरित्यतो वेत्वनुवृत्तं तस्यासंयोगपूर्वस्य प्रत्ययस्येत्यर्थः । प्रत्ययोकारस्य किं । युवः । युमः । असंयोगपूर्वस्य किं । शक्नुवः । तक्ष्णुमः । धिनोमीत्यत्र परत्वाद्गुणः ॥

तत्त्वदीपिका–ओर्म्वोर्वालोप इति । ओर्वा हेरित्यतो वेत्यनुवर्त्यव्यवस्थया संयोगपूर्वप्रत्ययोकारलाभः। उकारश्च प्रत्ययस्तदवयवश्च ।

**मू०–ओर्वाहेः ॥** असंयोगपूर्वात्प्रत्ययोकाराद्धेर्लोपो भवति । धिनु । धिनुतात् । कृवि हिंसाकरणगतिषु । कृणोति । कृण्वन्ति । चकृण्व । अक्षू व्याप्तौ । अक्षो वा नुप्रत्ययोऽञ्विषये । अक्ष्णोति । अक्ष्णुवन्ति । अक्षति । आनक्षिथ । आनष्ठ । अक्षिता । अष्टा । अक्षिष्यति । अक्ष्यति । आक्षीत् । आक्षिष्टाम् । आक्षीत् । आष्टाम् । आक्षुः । तक्षू त्वक्षू तनूकरणे ।

सुबोधिनी–ओर्वाहेः । वेति न विकल्पार्थं । किंतु प्रत्ययसंबंधिनोऽसंयोगपूर्वादित्यस्यार्थस्य प्रतिपादनार्थम् । उप्रत्ययरूपः प्रत्ययावयवश्च गृह्यते । प्रत्ययसंबंधिनः किं । युहि- रुहि । असंयोगपूर्वात्किं । शक्नुहि । अक्षू व्याप्तौ । व्याप्तिः कार्त्स्न्यं । अक्षो वा नुप्रत्ययोऽञ्विषये । अक्षेर्नुप्रत्ययो वा स्यात् चतुर्षु । अपोपवादः। क्लादि स्कोरितिकलोपः षढोःकःसे इति कःषत्वं ॥ अक्ष्यति।लुङि ऊदित्त्वाद्वेट् । आक्षीत् । आक्षिष्टाम् । इडभावपक्षे तु माअक्षीत् । झसादिति सिलोपे आष्टाम् आक्षुः ॥

तत्त्वदीपिका–ओर्वाहेरिति । वाशब्दोऽत्र न विकल्पार्थः किंतु व्यवस्थार्थः । तत्फलं तूक्तमेव ।

**मू०तक्षस्तनूकरणेनुर्वाअञ्विषये ॥** तक्ष्णोति तक्षति वा काष्ठान् । ततक्षिथ । ततष्ठ । अतक्षीत् । अतक्षिष्टाम् । अताक्षीत् । अताष्टाम् । तनूकरणे किम् । वाग्भिस्सन्तक्षति । भर्त्सयतीत्यर्थः । णिक्ष चुम्बने । प्रणिक्षति । निक्षति । ग्लै म्लै हर्षक्षये ।

सुबोधिनी–तक्षस्तनूकरणेनुर्वाऽञ्विषये । तनूकरणेऽर्थे तक्षेर्नुप्रत्ययो वा चतुर्षु । अणोपवादः । ग्लै म्लै हर्षक्षये । हर्षक्षयो धातुक्षयः ॥

**मू०–संध्यक्षराणामा ॥** अनपि ।

सुबोधिनी–संध्यक्षराणामा । संध्यक्षरांतानां धातूनामा । अनपि धातोः किं । गोभ्यां नौभ्यां ॥

**मू०–आतोणब्डौ ॥** आदन्ताद्धातोः परो णब्डौ । जग्लौ ।

सुबोधिनी–आतोणब्डौ । आत इति धातोर्विशेषणात्तदंताविधिः । आदंतादाकाररूपाच्च धातोः परोणब् डौ स्यात् । अइवाचचोरेति औ ॥

तत्त्वदीपिका–आतोणब्डाविति । धातोर्विशेषणत्वात्तदन्तलाभ इत्यभिप्रेत्याह । आदन्तादिति । आदन्ताकाररूपाच्चेति बोध्यम् । णाबित्यत्रानुबंधद्वयग्रहणप्रथमपुरुषबहुवचने गाते इत्यादावतिप्रसंगवारणाय ङित्करणम् । आतोयुग्वारणाय णित्वं वा स्थानिवत्त्वात् । तज्ज्ञापकं चात्र उग्रह णमेव नित्यत्वात्प्रथमप्राप्तोपि युक् सावकाशन्यायेन वारितः ।

**मू०– आतोऽनपि ॥** धातोरातो लोपोऽनपि क्ङिति स्वरे इटि च । जग्लतुः । जग्लिथ । जग्लाथ ।

सुबोधिनी–आतोनपि । आत इति योगविभागात् सेटि थपि चेति लब्धम् ॥

तत्त्वदीपिका–आतोऽनपि । आतइति योगविभागात्सेटि थपि चेत्यस्य लाभः । संयोगादेरिति ।

**मू०–संयोगादेरादन्तस्यकितिलिङ्व्येकारोवा ॥** ग्लायात् ग्लेयात् । अग्लासीत् । कै गै रै शब्दे । जगौ ।

सुबोधिनी–संयोगादेरादंतस्य किति लिङ्व्येकारो वा संयोगादेरादंतस्य धातोरेत्वं वा किति लिङि ॥

**मू०–दादेरे ॥** अपिद्दा धा मा गै हाक् पिबति सो स्थामात एकारो भवत्या शीर्य्यादादौ पे । गेयात् । अगासीत् । स्त्यै ष्ट्यै शब्दसंघातयोः । स्त्यायति । तस्त्यौ । स्त्यायात् । स्त्येयात् । अस्त्यासीत् । दैप् शोधने । ददौ । दायात् । अदासीत् । धेट् पाने । दधौ । धेयात् । अधासीत् । सिलोपपक्षे । अधात् अधाताम् ।

सुबोधिनी–दादेरे । इह दारूपास्त्रयः । डुदाञ् दाने । दाण् दाने । दो अवखंडने । न देङ्रक्षणे गृह्यते लिङि कित्त्वासंभवात् । धारूपौ द्वौ । डुधाञ् धारणपोषणयोः । धेट् पाने । दाश्चदाश्चदाश्चदाः । धाश्चधाश्चधौ दाश्च धौच दाधाइति विग्रहः । दाप् लवने । दैप् शोधने। एतौ पित्त्वात् न ग्राह्यौ । मा माने माङ्मेङौ नेह गृह्येते । लिङि कित्त्वासंभवात् । गै शब्दे। गाङ् गताविति तु न गृह्यते । लिङि कित्त्वासंभवात् । ओहाक् त्यागे । पा पाने । षोंतकर्मणि । ष्ठागतिनिवृत्तौ । एषामेत्वं किति लिङि । देयात् । धेयात् । मेयात् । हेयात् । पेयात् । अवसेयात् । स्थेयात् । कितिकिम् । दासीष्ट ॥

तत्त्वदीपिका–दादेरित्यत्रदादेरित्यतो दादेरित्यस्यानुवृत्त्यैव सिद्धेऽत्र दादेरिति ग्रहणसामार्थ्यादेतल्लाभः । यादादौपे इति । एतदप्युक्तयुक्तेर्लभ्यते । ष्टचैस्त्यै इति । अत्र वासुदेवः नामधातुष्वष्कष्टचैष्ठिवां सत्वं नेत्युक्तवान् तद्भाष्यविरुद्धम् । पृथक्पाठस्तुतिष्ठचासति अतिष्ठ्यासदित्यत्र षत्वार्थः ।

**मू०– उस्यालोपः ॥** अधुः ।

सुबोधिनी–उस्यालोपः । आदंतस्य धातोरातो लोप उसि परे ॥

**मू०–धेटोभूतमात्रेदिवादिपरोङोवाद्वित्वञ्च ॥** आतोऽनपि । अदधत् । दृशिर् प्रेक्षणे ।

सुबोधिनी–धेटो भूतमात्रेदिवादिपरोङोवाद्वित्वंच । धेटो ङप्रत्ययो वा स्यात् द्वित्वं च

लुङि सेरपवादः। पक्षे यमिरमिनमातामिति सक्। अयासीत्। शाछेति सिलोपे अयात्। दृशिर् प्रेक्षणे। प्रेक्षणं दर्शनं॥

**मू०–दृशादेः पश्यादिः॥** चतुर्ष्वपि दृश ऋ सृ शद सद पा घ्रा ध्मा म्ना दाण् स्थां पश्य ऋच्छ धौ शीय सीद पिब जिघ्र धम मन यच्छ तिष्ठाः। पश्यति। ददर्श। ददृशतुः।

सुबोधिनी–दृशादेःपश्यादिः। दृशिर् प्रेक्षणे। ऋ गतौ। सृ गतौ। शद्लृ शातने। षद्लृ विशरणादौ। पा पाने। पा रक्षणे इति तु न गृह्यते। लुग्विकरणत्वात्। घ्रा गंधोपादाने। ध्मा शब्दाग्निसंयोगयोः। म्ना अभ्यासे। दाण् दाने। ष्ठा गतिनिवृत्तौ। एषामेकादशानां यथासंख्यमेकादश पश्यादय आदेशा भवंति अप्प्रत्यये परे॥

तत्त्वदीका–दृशादेः पश्यादिरिति। पापाने इत्यस्यैव ग्रहणं न तु पारक्षणे इत्यस्यापि लुग्विकरणाऽलुग्विकरणयोर्लुग्विकरणस्यैव ग्रहणमिति केचित्। तन्न। न्यायेन सिद्धौ साहचर्यस्यागतिकत्वात्।

**मू०–सृजिदृशोःस्थपोवेट्॥** ददर्शिथ दद्रष्ठ। द्रष्टा॥ अद्राक्षीत् अद्राष्टाम्।

सुबोधिनी–सृजिदृशोस्थपोवेट्। ऋादेर्णादेरितिनियमान्नित्ये प्राप्ते विभाषेयम्। लुङि इरितोवेति ङः॥

**मू०–ऋवर्णदृशोर्ङिगुणः॥** अदर्शत्। ऋ गतौ। ऋच्छति। आर्च्छत्।

सुबोधिनी–ऋवर्णदृशोर्ङिगुणः। ऋवर्णांतस्य धातोर्दृशेश्च गुणःस्यात् ङप्रत्यये। ङाभावे अनिटोनामिवत इति वृद्धिः। ततो रारोऽझसेदृशामित्यारोरः अतउपधायाइति पुनर्वृद्धौ अद्राक्षीत्॥

**मू०–गुणोर्तिसंयोगाद्योः॥** अर्तेः संयोगादेर्ऋदन्तस्य च गुणो यकि यङि किति णादावाशीर्य्यादादौ च। आरतुः। आरुः।

सुबोधिनी–गुणोर्तिसंयोगाद्योः। अर्तीतिभ्वादिह्वाद्योर्ग्रहणं। लुकानिर्देशस्तुसौत्रस्तिप्निर्देशो यङ्लुग्निवृत्त्यर्थः। व्याख्यानात् ऋत इति लभ्यते तच्च संयोगादित्वेन विशिष्यते। तेन अर्तेः संयोगादेः ऋदंतस्य च धातोर्गुणः यक्यङोः परयोः कितोलिड्लिङोश्च। संयोगादेरिति किम्। क्रियात्॥

तत्त्वदीपिका–गुणोर्तिसंयोगाद्योरिति। अर्तिश्च संयोगादिश्च तौ तयोः। ऋदन्तस्य चेति अर्तिसाहचर्यादेवैतल्लभ्यते।

**मू०–अत्यर्तिव्ययतीनांथपोनित्यमिट्॥** आरिथ। अर्य्यात्। अर्ता। अरिष्यति। आरिष्यत्।

सुबोधिनी–अत्यर्तिव्ययतीनांथपोनित्यमिट्। अद भक्षणे। ऋ गतौ। व्येञ् संवरणे। स्वरांतादत्वतश्चेति विकल्पे प्राप्ते विधिः॥

**मू०–सर्तिशास्त्यर्तिभ्योङोलुङि॥** सेरपवादः। स्वरादेः। आरत्।

आरताम् । अर्तेर्ह्वादेरिति केचित् । आर्षीत् । आर्ष्टाम् । सृ गतौ । धावति अधावत् । शीघ्रगतावेवायम् । अन्यत्र सरति । ससार । सस्रतुः । ससर्थ । सस्रुव । सस्रुम ।

सुबोधिनी—सर्तिशास्त्यर्तिभ्योङोलुङि । इह लुका निर्देशात् सत्यर्तीजौहोत्यादिकावेव गृह्येते । तेन भ्वाद्योर्नङ् इति केचित् । शासु अनुशिष्टौ । अस्यैव ग्रहणं नतु आङः शासु इच्छायामित्यस्य । परस्मैपदिसर्त्यर्तिभ्यां साहचर्यात् परस्मैपदिनः शासेर्ग्रहणात् ऋादिरिति नेट् । ससर्थ । सस्रुव ॥

तत्त्वदीपिका—शीघ्रगतावेवेति । एतच्च विदो नवानामित्यतो वेत्यस्यानुवृत्तेर्व्यवस्थया बोध्यम् ।

**मू०—यादादौपे ॥** यादादौ धातोः ऋतो रिङ् भवति । ङोव्यवधानार्थस्तेन येइति न दीर्घः । स्रियात् । सर्ता । सरिष्यति । असरत् । असरताम् । स्रु गतौ । स्रवति । अस्रवत् । सुस्राव । सुस्रुवतुः । सुस्रोथ । स्रुयात् । स्रोता ।

सुबोधिनी—यादादौपे । धातोर्ऋतोरिङ् स्यात् किति लिङि ङकारोन्त्यादेशार्थो न किंतु मध्यव्यवधानार्थः ॥

तत्त्वदीपिका—ङोव्यवधानार्थ इति । न त्वन्त्यादेशार्थः । धातोरधिकारात्षष्ठीनिर्दिष्टत्वेनैतल्लाभात् । व्यवधानफलमाह । तेनेति ।

**मू०—श्रिस्रुद्रुभ्योङो धातोश्च द्वित्वं लुङि ॥** सेरपवादः।असुस्रुवत् । द्रु द्रु गतौ । दुद्रविथ दुद्रोथ । द्रोता । अद्रौषीत् । द्रवति । दुद्रोथ । दुद्रुव । अदुद्रुवत् । श्रु श्रवणे ।

सुबोधिनी—श्रिस्रुद्रुभ्योङोधातोश्चद्वित्वंलुङि । एभ्योङप्रत्ययः स्यादेषांद्वित्वं च लुङि । नतु सिः ॥

**श्रुवःशृआदेशोनुप्रत्ययश्चाप्विषये ॥** नृपः । शृणोति । शृणोमि । ओर्म्वोर्वालोपः । शृणुवः शृण्वः । शृणुमः शृण्मः । शृणुयात् । शुश्राव । श्रूयात् । अश्रौषीत् । शद्लृ शातने ।

सुबोधिनी—श्रुवःशृआदेशोनुप्रत्ययश्चाप्विषये । श्रुवो नुप्रत्ययः स्यात् धातोः शृइत्यादेशश्च चतुर्षु । अपोपवादः । शद्लृ शातने । शातनं विशीर्णता ॥

तत्त्वदीपिका—शातन इति । विशीर्णतायामित्यर्थः ।

**मू०—शीयादेशेआत् ॥** शीयते । अशीयत । शशाद । शेदिथ । शशत्थ । शत्ता । अशदत् । षद्लृ विशरणगत्यवसादनेषु । सीदति ।

सुबोधिनी—शीयादेशेआत् । शदेरात्मनेपदं भवति शीयादेशे कृते सति । षद्लृ विशरणगत्यवसादनेषु । विशरणमवयवानां विभागः । अवसादो नाशः ॥

**मू०—सदिस्वंजोर्लिटिपरस्यनषः ॥** निषसाद । सत्ता । सत्स्यति ।

असदत् । पा पाने । पिबति । पपौ । पेयात् । पाता । पास्यति । दादेः पे । अपात् । घ्रा गन्धोपादाने । जिघ्रति । जघ्रौ । घ्रेयात् । घ्रायात् । घ्रास्यति । अघ्रासीत् । अघ्रात् । ध्मा शब्दाग्निसंयोगयोः । धमति । दध्मौ । ध्मेयात् । ध्मायात् । अध्मासीत् । ष्ठा गतिनिवृत्तौ । तिष्ठति । तस्थौ । दादेरे । स्थेयात् । म्ना अभ्यासे । मनति । मम्नौ । म्नायात् । म्नेयात् । अम्नासीत् । दाण् दाने । यच्छति । ददौ । देयात् । अदात् । ह्वृ कौटिल्ये । ह्वरति । जह्वार । गुणोर्तिसंयोगाद्योः । जह्वरतुः ।

सुबोधिनी–सदिस्वंजोर्लिटिपरस्यसस्यनषः । द्वित्वात्परस्यैतयोः सस्य षो न लिटि । अड्द्वित्वव्यवधानेपीति प्राप्तौ निषेधः । लिटीकिं । निषिषत्सति । पिबतीत्यत्र पिबादेशोऽदंतः । अदेइत्यलोपः । अल्लोपस्यासिद्धत्वादुपधायालघोरिति गुणो न । अकारयुक्तोच्चारणसामर्थ्याद्वा । घ्रागंधोपादाने गंधोपादानं गंधग्रहणं । शाच्छासेति वा सिलुक् यमिरमीतीट्सकौ । अघ्रात् । अघ्रासीत् । ध्मा शब्दाग्निसंयोगयोः । शब्दशब्देन तदनुकूलो वायुरिह गृह्यते तेन शंखं धमतीतिवत् मृदंगंधमतीति प्रयोगो न । आग्निसंयोगे सुवर्णं धमति । अग्निना संयुनक्तीत्यर्थः । म्ना अभ्यासे । मनति विद्याम् अभ्यस्यतीत्यर्थः । अदादित्यत्रदादेः पे इति सिलुक् । गुणोर्तीति गुणः । जह्वरतुः ॥

तत्त्वदीपिका–सदिस्वंज्योरिति । लिटिपरेपरस्यसस्येतिशेषः । स्वंजेर्ग्रहणं तु भाष्याननुगुणमपि वृत्त्यादिसंमतत्वात्कृतम् ।

मू०–ऋदन्तात्थपोनेट् ॥ जह्वर्थ । ह्वर्यात् । ह्वर्ता । ह्वरिष्यति । अह्वरिष्यत् । अह्वार्षीत् । स्वृ शब्दोपतापयोः । स्वरति । सस्वरिथ सस्वर्थ । सस्वरिव । स्वरिता स्वर्ता । स्वरिष्यति । अस्वरिष्यत् । अस्वार्षीत् । अस्वरीत् । अस्वार्ष्टाम् । अस्वार्षुः । बुध अवगमने । बोधति बोधिता । रुह बीजजन्मनि प्रादुर्भावे च । रोढा रोक्ष्यति । अरुक्षत् । स्कन्दिर् गतिशोषणयोः । स्कन्दति चस्कन्दिथ । चस्कन्त्थ । स्कद्यात् । स्कंत्ता । स्कंत्स्यति । अस्कांत्सीत् । अस्कदत् । यभमैथुने । यभति । ययाभ । येभतुः । येभुः । येभिथ । ययब्ध । यभ्यात् । यब्धा । अयाप्सीत् । अयाब्धाम् । अयाप्सुः । तॄप्लवनतरणयोः । तरति । ततार । तेरतुः । तेरिथ ।

सुबोधिनी–ऋदंतात् थपोनेट् । ऋदंतात् धातोः परस्य थप इण्न भवति स्वरांतादिति पाक्षिके प्राप्ते निषेधः । इन्नृतइतीट् । ह्वरिष्यति । स्वृ शब्दोपतापयोः । उपतापो रोगः । स्वरतीसूतीतिवेट् । सस्वरिथ । सस्वर्थ । गुणोर्तीति गुणः । स्वर्यात् । लृटि इन्नृतइति नित्यमिट् । स्वरिष्यति । लुङि अस्वारीत् । अस्वारिष्टाम् । इडभावे अस्वार्षीत् । अस्वार्ष्टां । स्वरांतादत्वतइतिवेट् । चस्कंदिथ । चस्कंत्थ । आशिषिनोलोपइति नलोपः । स्कद्यात् । लुङि इरितोवेति वाङः । अस्कदत् । ङाभावे सावनिटो नित्यं वृद्धिः । अनिटोधातोरनुपधाभूतस्यातो वृद्धिः स्यात् सि प्रत्यये । अस्कांत्सीत् । तॄफलेत्येत्वपूर्वलोपौ । तेरतुः ॥

मू०—ऋतइर् ॥ ऋकारस्य इर् भवत्यगुणवृद्धिविषये । तीर्य्यात् ।

सुबोधिनी—ऋतइर् । धातोर्ऋकारस्य इर् भवति गुणवृद्धिनिमित्ताभावे । र्वोरिति दीर्घः। तीर्यात् ॥

मू०—ईटोग्रहाम् ॥ ग्रहादीनामिट ईकारो न तु णादौ ।

सुबोधिनी—ईटोग्रहाम् । ग्रहादेः परस्येटो दीर्घः स्यान्नतु लिटि । ग्रहामिति बहुवचनेन वक्ष्यमाणव्यवस्था ॥

तत्त्वदीपिका—न तु णादावित्यादि । ऊदितोवेत्यतो वानुवृत्तेर्व्यवस्थया लाभः ॥

मू०—वृङ्वृञृदन्तानांवा ॥ तरिता तरीता ।

सुबोधिनी—वृङ्वृञृदंतानांवा । एभ्यः परस्येटो वा दीर्घः नतु लिटि । नतु लिटिकिम् तेरिथ॥

मू०—पेसेरिटोनदीर्घःसीष्टादेश्च ॥ अतारीत् । अतारिष्टाम् । अतारिषुः । दंश दशने ।

सुबोधिनी—पेसेरिटोनदीर्घःसीष्टादेश्च । वृङ्वृञृदंतात्परस्येटो न दीर्घः । पे सौ सीष्टादौ च परे । दंश दशने । दशनं दंष्ट्राव्यापारः । निपातनान्नस्य लोपः ॥

तत्त्वदीपिका—दशन इति । इहैवनिपातनान्नलोपः ।

मू०—अपिरंजदंशसंजस्वंजाम् ॥ एषां नस्य लोपोऽपि । दशति । दष्टा । अदाङ्क्षीत् । षञ्ज संगे । ससञ्जिथ । ससङ्क्थ । व्यषाङ्क्षीत् । कित रोगापनयने संशयेच ।

सुबोधिनी—अपिरंजदंशसंजस्वंजाम् । रंज रागे दंश दशने संचसंगे ष्वंज परिष्वंगे एंषामुपधाभूतस्य नस्य लोपो भवति अप्प्रत्यये । लुङि सावनिट इति वृद्धिः छशषेति षत्वं षढोरिति कत्वं यमांयमस्येति परसवर्णः । अदाङ्क्षीत् । अट्द्वित्वव्यवधानेपीति षत्वम् । व्यषाङ्क्षीत् । कित रोगापनयने संशये च । रोगापनयनं व्याधिप्रतीकारः । संशये प्रायेण विपूर्वः । विचिकित्सातु संशय इत्यमरः ॥

मू०—गुब्भ्यः ॥ गुप्तिज् कित् मान् बध दान् शान्भ्यः स्वार्थे सप्रत्ययो भवति धातोश्च द्वित्वम् । चिकित्सति । चिकित्सांचकार । चिकित्सिता । अचिकित्सीत् । पत्लृ पतने । पपात । पेततुः । पतेर्ङेपुम् ॥ अपप्तत् । भ्रमु चलने । योवा । भ्राम्यति भ्रमति ।

सुबोधिनी—गुब्भ्यः । गुप् गोपने । तिज निशातने । मान पूजायां । बध बंधने । दान आर्जवे । शान तेजने । बहुवचनमाद्यर्थं । गुपेर्निंदायां तिजेः क्षमायां कितेर्व्याधिप्रतीकारे निग्रहे अपनयने नाशने संशये च मानेर्जिज्ञासायां बधेश्चित्तविकारे दानेरार्जवे शानेर्निशानेवाच्ये नित्यं स्वार्थे सप्रत्ययः धातोर्द्वित्वं च । गुपिप्रभृतयः कितभिन्ना अनुदात्तेतः। दानशानौ स्वरितेतौ । अत्र सप्रत्ययस्य सिसतेत्यनेनेण् न भवति । आगमजमनित्यमित्युक्तत्वात् । नानिटिसे इत्युपधाया गुणो न सधातुरिति धातुत्वात्तिबादिः । कितेर्व्याधिप्रती-

कारादावेव सइत्युक्तं तदुदाहरति । चिकित्सति । रोगमपनयतीत्यर्थः । शत्रुंचिकित्सति । निगृण्हातीत्यर्थः । क्षेत्रे तृणानि चिकित्सति । अपनयति नाशयतिवेत्यर्थः । कासादिप्रत्ययादाम्इत्याम् यतइत्यलोपः चिकित्सांचकार । भ्रमु चलने । मंडलाकारेण चलनमेव धात्वर्थो न । किंतु चलनमात्रम् । भ्राशभ्लाशेति वा यः । भ्राम्यति ॥

तत्त्वदीपिका—गुप्भ्यइति । बहुवचनमाद्यर्थमतो गणयति । गुप्तिज इत्यादि । स्वार्थ इति । अन्यार्थानुक्तेरिति भावः । चिकित्सतीति । आगमजस्यानित्यत्वादिडभावस्ततो नानिटि से इति गुणाभावः । भ्रमु इति उदित्वं क्त्वाप्रत्ययेभ्रमित्वाभ्रांत्वेतीड्विकल्पार्थम् ।

मू०—फणराजृभ्राजृभ्राशृभ्लाशृस्यमुस्वनजृषभ्रमुत्रसाम् ॥ एत्वपूर्वलोपौ वा । भ्रेमतुः । बभ्रमतुः । अभ्रमीत् । टुवम् उद्गिरणे । वम एत्वपूर्वलोपौ वेति केचित् । वेमतुः ववमतुः । अवमीत् । फण्गतौ । फेणतुः पफणतुः । अफाणीत् अफणीत् । स्वनस्यमु शब्दे । स्वेनतुः सस्वनतुः । अस्वानीत् अस्वनीत् । स्येमतुः सस्यमतुः । अस्यमीत् । शसु हिंसायाम् । शशसतुः । शशासिथ । तुहिर् दुहिर् उहिर् अर्दने । अतुहत् अतोहीत् । दोहिता । अदुहत् । अदोहीत् । उवोह । ऊहतुः । वस निवासे ।

सुबोधिनी—फणराजृभ्राजृभ्राशृभ्लाशृस्यमुस्वनजृषभ्रमुत्रसां । एत्वपूर्वलोपौ वा । फण् गतौ । राजृ दीप्तौ । टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । स्यमु स्वन शब्दे । जृषृ वयोहानौ । भ्रमु चलने । त्रसी उद्वेगे । एषामेत्वपूर्वलोपौ वा किति लिटि सेटि थपि च । टुवम् उद्गिरणे । केचिदमुमुदितं पठंति । वामनस्तु नोदितम् । गृधातोर्युट् प्रत्यये गुणे कृते तूद्गिरणइति स्यात्ततो निपातनादिरिति सुधाकरः । उद्गिरणं वमनं । वादित्वादेत्वपूर्वलोपौ न । ववमतुः वेमुश्च केचिद्गुधिरमित्यादिप्रयोगा भाष्यविरुद्धाः ॥

तत्त्वदीपिका—अभ्रमीदिति । ह्म्यन्तेत्यादिना न वृद्धिः टुवम उद्गिरण इति । वेमथुरित्यथुप्रत्ययार्थ ट्वित्वं । इहैव निपातनादुद्गिरणे इत्यत्र गुणाभावः । शशसतुरिति । न शसददेति निषेधः । निमित्त इति किलात्परस्येत्यर्थः ॥

मू०—णबादौपूर्वस्य ॥ यजादीनां ग्रहादीनाञ्च पूर्वस्य सम्प्रसारणं णबादौ ।

सुबोधिनी—णबादौ पूर्वस्य । यजामिति ग्रहामिति चानुवृत्तेः । यद्यपि ग्रहिवृश्चिपृच्छतिभृज्जतीनां पूर्वस्य संप्रसारणे कृते विशेषो नास्ति तथापि पर्जन्यवल्लक्षणं प्रवर्त्तते । जग्राह । वव्रश्च । पप्रच्छ । बभ्रज्ज । लिटिकिं । विवक्षति । पिप्रक्षति ॥

मू०—यवराणामिदुदृतः ॥ सस्वरस्य सम्प्रसारणं । दीर्घस्य दीर्घो ह्रस्वस्य ह्रस्वः । उवास ।

सुबोधिनी—यवराणामिदुदृतः । यकारवकाररकाराणां स्थाने इकारोकारऋकारा भवंति । ते संप्रसारणसंज्ञकाः स्युः ॥

मू०— यजांयवराणांय्वृतस्सम्प्रसारणंकिति ॥ यजादीनांसम्प्रसारणं किति । यजिर्वपिर्वहिश्चैव वेञ्व्येञौ ह्वयतिस्वपी । वदिवसी श्वयतिर्वक्तिरेका दशयजादयः ।

सुबोधिनी—यजांयवराणांऽवृतः संप्रसारणंकिति । यजादिधातूनां यकारवकाररकाराणा- मिकारोकारऋकाराः संप्रसारणं भवंति किति प्रत्यये परे । यजिर्वपिर्वहिश्चैववेञ्व्येञ्ह्वेञ्स्व- पवदस्तथा । वसिश्वश्वयतिर्वक्तिरेकादशयजादयः ॥ १ ॥ यज देवपूजादौ । टुवप् बीजतन्तु- संताने । वह प्रापणे । वेञ् तंतुसंताने । व्येञ् संवरणे । ह्वेञ् स्पर्द्धायाम् । ञिष्वप् शये । वद व्यक्तायांवाचि । वस् निवासे । टुओश्विइर्गतिवृद्ध्योः । वच परिभाषणे । एते एकादश धातवो यजादयो ज्ञेयाः ॥

**मू०— घसादेष्षः ॥** घसिशासिवसीनां । सस्य षो निमित्ते सति । ऊषतुः उव- सिथ । उवक्थ । उष्यात् । वस्ता ।

सुबोधिनी—घसादेष्षः । सस्याकृतत्वादप्राप्ते विधिरयम् । घस्लृअदने । शासु अनु- शिष्टौ । वस् निवासे । कित्परस्यैषां सस्य षः स्वरान्तादत्वत इतिवेट् । उवसिथ । उवस्थ ॥

**मू०—सस्तोऽनपि ॥** सस्य तोऽनपि से । वत्स्यति । अवात्सीत् । अवा- त्ताम् । वद्व्यक्तायां वाचि । वदति । उवदिथ । उद्यात् । वदिव्रज्योः सौ नि- त्यवृद्धिः । अवादीत् । टुओश्विइर्गतिवृद्ध्योः ।

सुबोधिनी—सस्तोनपि । धातोः सस्य तोऽनपि सकारे परे । से किं । वस्ता । सस्ये- तिकिं । रप्स्यते । धातोः किं । वेधः । से लुङि णित्पे इति सेर्णित्त्वादतउपधाया इति वृद्धिः । अवात्सीत् । सस्य ते कृते झसादिति सिलोपः । अवात्ताम् । वदिव्रज्योरिति वृद्धिः । अवादी त् । टुओश्विइर् गतिवृद्ध्योः । टुइतीत्संज्ञकः ट्वितोथुरित्येतदर्थः । श्वयथुः । ओरिति ल्वाद्यो- दितश्चैतदर्थः । इरिदिरितो वेतिङप्रत्ययार्थः ॥

**मू०—श्वयतेर्णादौसम्प्रसारणंवा ततो द्वित्वम् ॥** शुशाव । शुशुव- तुः । शुशविथ । शिश्वाय । शिश्वियतुः । शिश्वयिथ । शूयात् । श्वयिता । अश्वयीत् ।

सुबोधिनी—श्वयतेर्णादौसंप्रसारणंवा ततो द्वित्वम् । श्वयतेः पूर्वं संप्रसारणं स्याद्वा पश्चा- द्वित्वं लिटिनुधातोरित्युव् । शुशुवतुः । आशिषि यजामिति संप्रसारणे कृते ये इति दीर्घः । शूयात् । ह्म्यंतेति न वृद्धिः । अश्वयीत् । पक्षे इरितोवेति ङप्रत्यये ॥

**मू०-श्वयतेरितोलोपोङे ॥**अश्वत् ।

सुबोधिनी—श्वयतेरितोलोपोङे । श्वयतेरिकारस्य लोपः स्यात् ङप्रत्यये । अश्वत् ॥

**मू०-श्वयतेर्ङेद्वित्वंवाऽरलोपः ॥** अशिश्वियत् । घस्लृ अदने । व- त्स्यति । घसेत् । जघास । जक्षतुः । जघसिथ । जघस्थ । घस्ता । घसति । अघत्स्यत् । इति पंप्रक्रिया ।

सुबोधिनी—श्वयतेर्ङेद्वित्वंवाऽरलोपः । श्वयतेर्वा द्वित्वं भवति इकारस्य लोपाऽभावश्च ङेपरे। नुधातोरितीय् । अशिश्वियत् ॥ इतिपम् ॥

तत्त्वदीपिका-श्रीविद्यानगरस्थायिलोकेशंकरशर्मणा ॥ कृतायांदीपिकायां हि परस्मैपदपूरणम् ॥

॥ इति पंप्रक्रिया ॥

मू०–एध वृद्धौ । एधते । एधाञ्चक्रे ।

सुबोधिनी–एध वृद्धौ । अकारोऽनुदात्तआत्मनेपदार्थः ॥

तत्त्वदीपिका–एध वृधाविति । अकारोऽनुदात्त आत्मनेपदार्थः ।

मू०–आमोभ्वसोर्नात्कर्तरि ॥ एधामास एधाम्बभूव । ऐधिष्ट । ईक्ष दर्शनाङ्कनयोः । ईक्षाञ्चक्रे । ऐक्षिष्ट । ष्वष्क गतौ । ष्वष्कते । ष्वष्किषीष्ट । अष्वष्किष्ट । वेष्ट वेष्टने । विवेष्टे । चेष्ट चेष्टायाम् । चिचेष्टे । अचेष्टिष्ट । ऋज गतौ स्थैर्य्येच । अर्जते । आनृजे । आर्जिष्ट । ष्वञ्ज । परिष्वङ्गे । स्वजते ।

सुबोधिनी–आमोभ्वसोर्नात्कर्त्तरि । आम्प्रत्ययांतात्परयोर्भ्वसोः कर्तर्यर्थेआत्मनेपदं न भवति । भावकर्मणोस्त्वात्मनेपदमेव । नामधातुष्वष्कष्ठिवामिति सत्त्वाभावः । ष्वष्कते । नानृजे इत्यत्र द्वित्वं हसादिःशेषः रइत्यत्वम् आभ्वोरित्यात्वम् नुगशामितिनुक् । ष्वंज परिष्वंगे परिष्वंग आलिंगनम् । अपि रंजेति न लोपः ॥

तत्त्वदीपिका–नात्कर्त्तरीति । आत् आत्मनेपदम् । कर्त्तरीत्युक्तेर्भावादात्मनेपदमेव।ष्वष्केति।नामधातुष्वष्कष्ठिवामिति सत्वनिषेधः । आनृजे इति । द्वित्वं हसादिः शेषः रइत्यत्वं । आवनोरीत्यात्वं । नुगशामिति नुक् ।

मू०–स्वजतेर्णादेर्वाकित्त्वम् ॥ सदिस्वंज्योर्लिटि परस्य न षः । परिषस्वञ्जे । परिसस्वजे । स्वङ्क्षीष्ट । स्वङ्क्ता । स्वङ्क्ष्यते । अस्वङ्क्त । अस्वङ्क्षाताम् । पर्य्यष्वङ्क्त । पर्य्यस्वङ्क्त । त्रपूष्लज्जायाम् । त्रपते । त्रेपे । ऊदितोवा । त्रपिषीष्ट । त्रप्सीष्ट । अत्रपिष्ट । अत्रप्त । तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे । तेपते । तितिपे । तिप्सीष्ट । अतिप्त । तेपृ । तेपते । तितेपे । तेपिषीष्ट । अतेपिष्ट । ष्टिपृ । स्तेपते । तिष्टिपे । स्तेपिषीष्ट । ष्टेपृ । स्तेपते । तिष्टेपे । स्तेपिषीष्ट । जभिजृभी गात्रविनामे । रधिजभोःस्वरेनुम् । जम्भते । अजम्भिष्ट । जृम्भते । जजृम्भे । ष्टुभ स्तम्भे । विष्टोभते । तुष्टुभे । स्तोभिता । स्तोभिषीष्ट । क्षमूष् सहने । क्षमते । चक्षमे । चक्षमिषे । चक्षंसे । मोनो धातोः । मान्तस्य धातोर्मकास्य नः स्यात् झसेपदान्ते वमयोः परयोः। चक्षमिवहे चक्षण्वहे । चक्षमिमहे चक्षण्महे । अक्षमिष्ट । अक्षंस्त । क्रूयिशब्देच क्रूयते । अक्रूयिष्ट । क्ष्मायी विधूनने। क्ष्मायते । चक्ष्माये । अक्ष्मायिष्ट । स्फायी ओप्यायीवृद्धौ । स्फायते पस्फाये । अस्फायिष्ट । प्यायते ।

सुबोधिनी–स्वजतेर्णादेर्वाकित्त्वम् । स्वजतेः परस्य लिटो वा कित्त्वं भवति । सदिस्वंजोरिति परस्य न षः । परिषस्वजे । झसादिति सिलोपः । अस्वंक्त । तॄफलभजत्रपामित्येत्वपूर्वलोपौ । त्रेपे ।ऊदितोवेतिवेट् । त्रप्सीष्ट । त्रपिषीष्ट । लुङि झसादिति सिलोपः । अत्रप्त । तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे । आद्योऽनिट् । क्षीरस्वामीत्वयं सेडिति बभ्राम । क्रादेर्णादेरिति नित्यामिट् । तितिपिषे । सिस्योः । उपधाभूतस्य नामिनो गुणो नानिटि सिप्रत्यये सीष्टादौच

परे। लुङि झसादीति सिलोपः । अतिप्त । जभि जृभी गात्रविनामे । गात्रस्वेदे इत्यर्थः । ई-दित्वात् आदीदित इतिक्तक्तवत्वोर्नेट् । रधिजभोः स्वरेनुम् । एतयोर्नुमागमः स्यात् स्वरे । धू हिंसायां । ञिप्रत्यये तु रंधयतीत्यत्र ञिनिमित्ता परापि वृद्धिर्नित्येन नुमा बाध्यते। स्वरे किं। रब्धा जब्धा । ष्टुभ स्तंभे । स्तंभो निरोधः । क्षमूष् सहने । षकारः षिद्भिदामङ्इत्यङ्प्रत्ययार्थः । मोनोधातोरिति मस्य नः । अवक्रुप्यंतरेपीति णत्वं । चक्षण्वहे । क्नूयी शब्दे उंदेच । उंदः क्लेदनमार्द्रीभाव इत्यर्थः ॥

तत्त्वदीपिका–परिषस्वजे इति । कित्वान्नलोपः । सदिस्वंज्योरिति परस्य षत्वनिषेधः । त्रप्सीष्टेति । ऊदितोवेति वेट् । चक्षण्महे इति । इडभावपक्षे वमयोश्चेति मस्य नत्वं । क्नूयी शब्दे उंदे चेति । ईदित्वं क्तक्तवत्वोरिडभावार्थम् ।

**मू०–लिड्यङोःप्यायःपी ॥ पिप्ये ।**

सुबोधिनी–लिड्यङोः प्यायः पी । लिटि याङि च प्यायः पी । आदौ परत्वात् पीभावे पश्चात् पीशब्दस्य द्वित्वे कृते नुधातोरिति यः । पिप्ये । याङि पेपीयते ।

तत्त्वदीपिका–पिप्ये इति । आदौपरत्वात्पीभावे पुनः प्रसंगविज्ञानात्पीशब्दस्य द्वित्वम् । ततोऽनेकस्वरपूर्वकत्वाद्यत्वम् ॥

**मू०–दीपजनबुधपूरितायिप्यायिभ्योवाइणूतनिकर्तरि ॥ सेरपवादः ।**

सुबोधिनी–दीपजनबुधपूरितायिप्यायिभ्योवाइणूतनिकर्तरि । दीपी दीप्तौ । जनी प्रादुर्भावे । बुध अवगमने । पूरी आप्यायने । एते दिवादयः । तायृ संतानपालनयोः । ओप्यायी वृद्धौ । एतौ भौवादिकौ । एभ्य इण् प्रत्ययो वा स्यात् कर्त्रर्थे तनि परे । सेरपवादः ॥

तत्त्वदीपिका–दीपजनेति । अत्र पण्डिताः दीपपूरादिभिरात्मनेपदिभिः साहचर्यात् बुधबोधने बुध जनने इति परस्मैपदिनो न ग्रहणम् । तेनाभ्यां कर्मव्यतिहारे आत्मनेपदे तनि न भवति ।

**मू०–लुक् ॥ इणः परस्य तनो लुक् । अप्यायि । अप्यायिष्ट । तायृ संतानपालनयोः । तताये । अतायिष्ट । वल वल्ल संवरणे । वलते । वल्लते । टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । भ्रेजे । बभ्राजे । भ्राश्यते, भ्राशते । भ्रेशे, बभ्राशे । भ्लाश्यते, भ्लाशते । भ्लेशे । बभ्लाशे । तिज निशाने क्षमायाञ्च । गुप्भ्यः तितिक्षते । तितिक्षाञ्चक्रे । गुपू गोपनकुत्सनयोः । जुगुप्सते । मान विचारणे ।**

सुबोधिनी–लुक् । इणूतनीत्यत्र इणिति तनीति चाऽनुवृत्तं । इणिति पंचम्या विपरिणमनीयं तनीति षष्ठ्या च । अप्यायि । तायृसंतानपालनयोः । संतानः प्रबंधः । टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ । दीप्तिस्तेजः । फणिराजृभ्राजृइत्येत्पूर्वलोपौ । भ्रेजे बभ्राजे । भ्राशभ्लाशिति वा यप्रत्ययः । भ्राश्यते । तिज निशाने । निशानं तीक्ष्णीकरणं । गुप्भ्य इति तिजेः क्षमायां सः । तितिक्षते । क्षमां करोतीत्यर्थः । गुपगोपनकुत्सनयोः । गोपनं रक्षणं । गुपेर्निंदायां सः जुगुप्सते । निंदां करोतीत्यर्थः ॥

तत्त्वदीपिका–लुक् । अत्रेणूतन्यकर्त्तरीति पूर्वसूत्रादनुवृत्तं तनीति षष्ठ्या विपरिणमनीयमितिइणिति पंचम्या । तत्रषष्ठीनिर्देशादन्त्यलोपः । आदेरित्यस्यानुवृत्त्या आदेरपिलोप इति सूत्रपाठपक्षे । क्वचित्तु लुगिति

पाठः । तत्र सर्वस्य तनो लुग्भवतीति । अत्रेदं वक्तव्यम् । अत्र तनीति नानुवर्त्यम् इणः परस्य लुक् स्यात् इत्येव व्याख्येयम् । तथाचेणः परस्यान्यस्यासंभवात्तन एव लुग्भविष्यति । न चाकारितरामित्यत्रातिप्रसंगः । तत्रासिद्धत्वेन तनः परत्वात् । निशाने । निशानं तीक्ष्णीकरणम् ।

**मू०—यःसे ॥** पूर्वस्यात इत्से ।

सुबोधिनी—यःसे । इ अः से इति पदच्छेदः । पूर्वस्येत्यनुवृत्तं । तपरः किं पापचिषति । यङंतात्सः ॥

तत्त्वदीपिका—यः से । इ अः से इति छेदः ।

**मू०—मानादीनांपूर्वस्येतोदीर्घः ॥** मीमांसते । बध निन्दायाम् । आदिजबामिति बीभत्सते । पण व्यवहारे स्तुतौ च । पन च । पणायति । स्तुतावेवायः । पणते । पणायाञ्चक्रे । पेणे । एवं पन् । कमु कान्तौ ।

सुबोधिनी—मानादीनां पूर्वस्येतोदीर्घः। एषां पूर्वस्येकारस्य दीर्घः स्यात् । मान विचारणे। बधनिंदायाम् । दान् आर्जवे । शान् तेजने । इत्यादि । मानेर्जिज्ञासायांसः । मीमांसते । जिज्ञासां करोतीत्यर्थः । वध निंदायां । निंदा परापवादः । बधेश्चित्तविकारे सः । आदिजबानामिति भः । खसे चपा इति तः । बीभत्सते । ग्लानिं करोतीत्यर्थः । पण व्यवहारे स्तुतौ च । पन च। क्रयविक्रयरूपो व्यवहारः । पनेति स्तुतावित्यनेन संबध्यते । पृथङ्निर्देशात् पनिसाहचर्यात् पणेरपि स्तुतावेवायप्रत्ययः । स्तुतावनुबंधस्य केवले चरितार्थत्वादायप्रत्ययांतादात्मनेपदं न भवति । पणायति । यतइत्यल्लोपे पणायांचकार । भट्टिस्तु व्यवहारेप्याय-प्रत्ययं कृतवान् । न चोपलेभे वणिजा पणायामिति व्यवहारमित्यर्थः । आयांतादङ्प्रत्यये आप् । कमु कांतौ । कांतिरिच्छा । ञिङाभावे उदित्त्वात् क्त्वायामिड् विकल्पः । कमित्वा कांत्वा । क्तःक्तवत्वोस्तु क्वचिद्विट् इति निषेधात् । कांतः । कांतवान् ॥

तत्त्वदीपिका—पनचेति । व्यवहारे स्तुतावितिचार्थः । पणायतीति । व्यवहारे पणते इत्यत्र चरितार्थ-त्वादनुबंधस्यायप्रत्ययान्तेऽसत्त्वात् ।

**मू०— कमेस्स्वार्थे ञिङनापितुवा ॥** कामयते कामयाञ्चक्रे । चकमे ॥

सुबोधिनी—कमेस्स्वार्थेञिङनपितुवा । कमेर्ञिङ्स्याच्चतुर्षु नित्यमनपिवा धात्वर्थे ॥

**मू०—ञेरङ्द्विश्च ॥** ञ्यन्ताद्धातोः कर्तरि अङ् लुङि । सेरपवादः । धातोश्च द्वित्वम् ।

सुबोधिनी—ञेरङ्द्विश्च । ञेरित्यस्य प्रत्ययत्वात्तदंतलाभः । अपृकर्त्तरीत्यतो मंडूकप्लुत्या कर्त्तरीत्यनुवृत्तं । ङकारोऽङिल्घाविति विशेषणार्थः अङि परे चकारात् ञंतस्य धातोर्द्वित्वम् । तच्च नित्यत्वात् ञिलोपे कृते प्रवर्त्तते । कर्त्तरि किं । अकारयिषातां घटौ कुलालेन

तत्वदीपिका ञेरङ् द्विश्च । ञेरिति। अस्य प्रत्ययत्वात्तदन्तलाभः अपृकर्त्तरीत्यतो मण्डूकप्लुत्या कर्त-रीत्यनुवर्त्तते । कर्तरि किम् अकारयिषातां घटौकुलालेन । अत्राहुः । ङकारोऽङिल्घाविति विशेषणार्थः चकारस्य वा भेदेन व्याख्यानात् । श्रिश्रुद्रुभ्योङः क्वचिद्विकल्पेनेत्यादि । अत्रेदं वक्तव्यम्। अशिश्रियदित्यादौ ङकारस्य गणप्रतिषेधार्थतया दृष्टत्वेनान्यार्थताया अन्याय्यत्वात् । अचूचुरदित्यादौ तु ह्रस्वविधिसामर्थ्यादेव न ।

मू०—ञेः ॥ अनपि ञेर्लोपो नत्विडामन्तात्वाय्येत्न्विष्णुषु ।

सुबोधिनी—ञेः । ञेरिति ञिञिङोः सामान्येन ग्रहणं । इडादिषु प्रत्ययेषु परेषुञेर्लोपोनअन्यत्र । अनपि ञेर्लोपः स्यात् इटि । कामयिता । आमि कामयामास । विशादेरंत इत्यौणादिकेन्ते गंडयन्तः । आलुप्रत्यये स्पृहयालुः । चादेराय्य इत्यौणादिके अय्ये स्पृहयाय्यः इत्नुप्रत्यये औणादिके स्तनयित्नुः । इष्णुप्रत्ययेच्छान्दसिके वीरुधः पारयिष्णवः ॥

तत्वदीपिका—ञेरिति । ञिञिङोः सामान्येन ग्रहणम् न त्विडित्यादिषु । इट्कारयिता । आम् । कारयामास । अन्त मण्डयन्तः औणादिकोन्तः । आलु स्पृहयालुः । स्पृहीत्यादिनोक्त आलुः । आय्यः स्पृहयाय्यः औणादिक आय्यः । इत्नु स्तनयित्नुः औणादिकः । इष्णुःपारयिष्णवः एषु ञेर्लोपो नेत्यर्थः ।

मू०—अङिलघौन्हस्वउपधायाः ॥ अङि सत्युपधायां न्हस्वो भवति पूर्वस्यातो लघुनि धात्वक्षरे इकारः ।

सुबोधिनी—अङिलघौन्हस्वउपधायाः । येन नाव्यवधानं तेन व्यवहितेपीति बचनसामर्थ्यात् धात्वक्षरस्य ककारेण व्यवधानेपि पूर्वस्यातोऽत्रेत्वं । अजजागरदित्यत्र । त्वनेकवर्णव्यवधानत्वान्नेत्वं । उपधायाः । किं । अचकांक्षत् ॥

तत्वदीपिका—अङि लघौ न्हस्व उपाधायाः । धात्वक्षरस्य ककारेण व्यवधानेऽपियेन नाव्यवधानं संभवति । तेन व्यवहितेपीति वचनसामर्थ्याद्भवति । अजजागरदित्यत्र त्वनेकवर्णव्यवधानत्वान्न भवति । नचाचिचक्षणदित्यत्राप्यनेकवर्णव्यवधानत्वान्न भविष्यतीति वाच्यम् । अत्स्मृदत्वरेतीत्वबाधनार्थमत्वेन संयोगव्यवधाने भवतीति ज्ञापितत्वात् । तेनस्वरहससमुदाय एव न भविष्यतीति बोध्यम् ।

मू०—लघोर्दीर्घः ॥ अङि सति पूर्वस्य लघोर्दीर्घो भवति लघुनि धात्वक्षरे परे । अचीकमत् । ञेरभावे ।

सुबोधिनी—लघोर्दीर्घः । अङि लघावित्यतोलघावित्यनुवृत्तं । लघोः किम् । अचिक्षणत् । ञेरभावे ॥

तत्वदीपिका—लघोर्दीर्घः । अत्राङिलघावित्यनुवर्तते इत्याह लघुनीत्यादि । अत्र प्राश्नः । हसादेर्धातोः पूर्वस्य लघोर्दीर्घो भवतिं । तेनारिरदित्यादावप्रसंग इति । वस्तुतस्तु अत्र दीर्घप्राप्तिरेव लघुधात्वक्षरपरत्वाभावात् ।

मू०—कमेरङ्द्वित्वे ॥ अचकमत् । अयगतौ । अयते ।

सुबोधिनी—कमेरङ्द्वित्वे । अञ्यतात्कमेरङ् स्यात् । धातोर्द्वित्वं लुङि सेरपवादः ॥

मू०—अयतौ प्रादे रेफस्य लत्वम् ॥ प्लायते । अयांचक्रे । आयिष्ट । दय दानगतिरक्षणहिंसादानेषु । दयते दयाञ्चक्रे । घटचेष्टायाम् । घटते। जघटे। अघटिष्ट । ईहचेष्टायाम् । ईहाञ्चक्रे । ऊह वितर्के । ऊहाञ्चक्रे । कासृ शब्दकुत्सायाम् । कासाञ्चक्रे । षेवृ सेवने । सिषेवे असेविष्ट । मुङ् प्लुङ् च्युङ् गतौ । अम्रोष्ट । अप्लोष्ट । अच्योष्ट । गाङ् गतौ । गाते । अन्तरङ्गत्वात्सवर्णदीर्घः सह । गाते । गाते । अगे । गावहे । गामहे । जगे । अगास्त । रुङ्

**गतौ भाषणेच । रवते । रुरुवे । अरविष्ट । अनिडयमित्येके । मूङ् बन्धने । मविता । अमविष्ट । पूङ् पवने । अपविष्ट । देङ् त्रैङ् पालने । दयते ।**

सुबोधिनी–अयतौ प्रादेरेफस्य लत्वं । प्रादिस्थरेफस्य लत्वमयतौ । अयताविति रेफस्य विशेषणं नतु प्रादेः । येन नाव्यवधानामिति वचनादेकव्यवधाने लत्वं पलायते । प्रत्यय इत्यादौ त्वनेकव्यवधानान्न । कासादिप्रत्ययादाम् । अयांचक्रे । आशिषि सेटो हलाद्वेति वा ढः । अयिषीध्वम् अयिषीढ्वं । लुङि आयिष्ट । आयिढ्वम् आयिध्वम् । अथ कथमुदयति विततोर्ध्वरश्मिरज्जाविति माघः । अत्र शानप्रत्ययेन भाव्यमिति शंकितुराशयः । उच्यते । अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यं चक्षिङो ङित्करणाज्ज्ञापितं । दयदानगतिरक्षणहिंसादानेषु । हिंसा हननम् । आदानं ग्रहणं । कासादिप्रत्ययादित्याम् । दयांचक्रे । ऊह वितर्के । वितर्को विचारः गाते इत्यत्र पूर्वमपूप्रत्ययेन सह सवर्णे दीर्घे कृते पश्चादादाथ इरिति न आतोंतोदनत इति तु प्रवर्तते एव । ते अंते परतस्तुल्यं रूपमिति भावः । गातेऽत्र आदादिकोयमिति हरदत्तादयः । फले तु न भेदः । रुङ् गतौ रेषणेच । रेषणं हिंसा देङ् त्रैङ् पालने। पालनं रक्षणम् ॥

तत्वदीपिका–अयताविति।अयताविति रेफस्य विशेषणं न तु प्रादेरित्यभिप्रेत्याह। प्रादेरेफस्येति । तेन रेफस्याव्यवधानेनायतौ परे लत्वं नान्यत्र प्रत्ययत इत्यादौ ।तिशब्देन व्यवधानात् । न च प्लायत इत्यत्राप्यकारेण व्यवधानमेवास्तीति वाच्यम् येन नाव्यवधानमिति वचनादेकव्यवधानेपि प्रवृत्तिसंभवात् । अथ निर्दुरोरव्यवधानसंभवः तदर्थंनिर्दुरोरित्येव ब्रूयात् । अन्तरंगत्वादिति गा अ आते इति स्थिते प्रकृत्याश्रयत्वे सवर्णदीर्घे आदाथइरिति न भविष्यतीति भावः । गैरिति । एऐऐइतिवृद्धिरेव । यत्तु कैश्चिदालोपे गे इत्युक्तम् । तद्भ्रमसात् ।

**मू०–देङोणादौदिग्यादेशोद्वित्वाभावश्च ॥ दिग्ये । दासीष्ट ।**

सुबोधिनी–देङोणादोदिग्यादेशोद्वित्वाभावश्च । देङःस्थाने दिगिः स्यात् दिगेर्द्वित्वाभावश्च लिटिनुधातोरिति यत्वं । दिग्ये ॥

**मू०–अपिद्वाधास्थामित्सेर्ङित्त्वमाति ॥ न तु दीङः ।**

सुबोधिनी–अपिद्वाधास्थामित्सेर्ङित्त्वमाति । एभ्यः परस्य सेर्ङित्त्वं भवति । एषामात इश्च आत्मनेपदे लुङि ॥

**मू०–लोपोन्ह्रस्वात् ॥ न्हस्वात्परस्य सेर्लोपो झसे । आदित । अदिषाताम् । त्रायते । तत्रे । अत्रास्त । ष्मिङ्ईषद्धसने । स्मयते । सिष्मिये । स्मेषीष्ट । स्मेता । अस्मेष्ट । डीङ् विहायसागतौ । डयते । डिड्ये । अडयिष्ट । द्युत दीप्तौ । द्योतते ।**

सुबोधिनी–लोपोन्हस्वात् । झसे इति सूत्रमनुवृत्तं । न्हस्वात्किम् । अनैष्टां । झसेकिम् । अकृषाताम् । डीङ् विहायसागतौ । आकाशेन गमने ॥

तत्वदीपिका–लोपोन्हस्वात् । लोपोन्हस्वझसात्सेरित्येव सूत्रयितुमुचितम् । पृथक्करणस्य व्यर्थत्वात् । डीङ् विहायसा गतौ । विहायसा आकाशेनेत्यर्थः । वा तु पुंस्याकाशविहायसी इत्यमरोक्तेः । विहायसामिति त्वपपाठः ।

मू०—द्युतेःपूर्वस्यसम्प्रसारणम् ॥ दिद्युते ।

सुबोधिनी—द्युतेः पूर्वस्यसंप्रसारणम्। द्युतेः पूर्वरूपस्य संप्रसारणं भवति । सस्वरयकारस्य इः ॥

मू०—द्युतादिभ्योलुङिवापम् ॥ पेङः ॥ अद्युतत् । अद्योतिष्ट । श्विता वर्णे । अश्वितत् अश्वेतिष्ट । ञिष्विदा स्नेहनमोचनयोः । अस्विदत् । अस्वेदिष्ट । ञिक्ष्विदा च । अक्ष्विदत् । अक्ष्वेदिष्ट । ञिमिदा स्नेहने । अमिदत् । अमेदिष्ट । रुचदीप्तावभिप्रीतौ च । अरुचत् अरोचिष्ट । घुट परिवर्तने । अघुटत् । अघोटिष्ट । रुठ लुठ लुट प्रतिघाते । अरुठत् । अरोठिष्ट । अलुठत् । अलोठिष्ट । अलुटत् । अलोटिष्ट । शुभ दीप्तौ । अशुभत् । अशोभिष्ट । क्षुभ सञ्चलने । अक्षुभत् । अक्षोभिष्ट । णभ तुभ हिंसायाम् । नेभे । अनभत् अनभिष्ट । स्रंसु ध्वंसु भ्रंसु अवस्रंसने । अस्रसत् अस्रंसिष्ट । ध्वंसु गतौ च । अध्वसत् अध्वंसिष्ट । स्रंभु विश्वासे । अस्रभत् अस्रम्भिष्ट । वृतु वर्तने । वर्तते ।

सुबोधिनी—द्युतादिभ्योलुङिवापम् । द्युतादयः कृपिपर्यंतास्त्रयोविंशतिधातवस्तेभ्यः परस्मैपदं वा भवति पक्षे आत्मनेपदं च लुङि पे। पक्षे लित्पुषादेरिति ङप्रत्ययः। आनिट्कारिकायां स्विद्यातिरिति निर्देशादयं सेट् । स्वेदिता। घुट परिवर्तने । परिवर्त्तनमितस्ततो भ्रमणं।णादिः किदिति किस्वाद्गुणाभावः । जुघुटे । क्षुभ संचलने प्रकृतिविपर्यासो मथनं चाक्षोभते । दैवादिकः क्र्यादिश्च । णभ तुभ हिंसायां । आद्योऽभावेर्थेऽपि । नभंतामन्यकेसमे माभूवन्नन्यकेसर्वे इति निरुक्तं । इमौ दिवादी क्र्यादी च। स्रंसु ध्वंसु भ्रंसु अवस्रंसने । अवस्रंसनमधःपतनम् । परस्मैपदपक्षे ङः । नोलोप इति नलोपः। अस्रसत् । नास्रसत् करिणां ग्रैवमिति रघुकाव्ये । नास्रंसदित्यपपाठ एव। नचैवं लङो रूपं तत्र परस्मैपदासंभवादिति भावः। भ्रसु भ्रंसु अधःपतने इति दैवादिकौ च । ऋजिभृजी भर्जने । भर्जनं जलं विना तंडुलादेः संतापविशेषः । ईदित्त्वादादीदित इति क्तक्तवत्वोर्नेट् । भृक्तः भृक्तवान् ॥

तत्त्वदीपिका—क्षुभ संचलने । संचलनं प्रकृतिविपर्यासो मंथनं च ।

मू०—वृतादिभ्यःस्यसयोर्वापम्पेऽनिट्त्वञ्च ॥ वर्त्स्यति । वर्तिष्यते । अवृतत् । अवर्तिष्ट । वृधु वृद्धौ । वर्त्स्यति । वर्धिष्यते । अवर्त्स्यत् । अवर्धिष्यत । अवृधत् । अवर्धिष्ट । शृधु शब्दकुत्सायाम् । शर्धते । स्यन्दू प्रस्रवणे । स्यन्दते । स्यंत्स्यति । स्यन्दिष्यते स्यंत्स्यते । अस्यदत् अस्यन्दिष्ट अस्यंत्त । कृपू सामर्थ्ये ।

सुबोधिनी—वृतादिभ्यःस्यसयोर्वापंपेनिट्त्वंच । वृतु वृधु शृधु स्यंदू कृपू इति वृतादयः स्यंदिकृप्योरूदिश्वादिड्विकल्पे प्राप्ते इतरेषां नित्यमिटि प्राप्ते निषेधः । वृतादिभ्यः परस्मैपदं वा स्यात् परस्मैपदे इडभावश्च स्यपि सप्रत्यये च। गणकार्यत्वादुभयोर्यङ्लुक्यप्रवृत्तिः। वार्त्तिष्यति। विवर्त्तिषाति। शृधु शब्दकुत्सायाम् । शब्दकुत्सापर्दनं। शर्द्धजहा माषाः । अपानशब्दं त्यजंतीत्यर्थः ॥

मू०—कृपोरोलः॥ कृपो रेफस्य लः । ऋकारस्य लृकारः । कल्पते । चक्लृपे । कल्पिषीष्ट ।

सुबोधिनी—कृपोरोलः । कृप उ इति छेदः । कृपेति लुप्तषष्ठीकं पदमावृत्त्या ऽत्र वाक्यद्वयं बोध्यम् । उः ऋकारस्येत्यर्थः ॥

तत्त्वदीपिका—कृपो रो ल इति । कृप उ रः ल इति छेदः । कृपेति लुप्तषष्ठीकम् । आवृत्त्या वाक्यद्वयसिद्धिरित्याह । ऋकारस्येति तत्फलं तु अक्लृपदित्यादिसिद्धिः । यद्यपि कृप् सामर्थ्ये इति पाठेनैव रूपसिद्धिः सूत्राकरणलाघवं च । कृपणादिसिद्धिस्तु कृप कृपायामित्यस्योणादयो बहुलमिति बहुलग्रहणात्संप्रसारणे । तथापि अचीक्लृपदिति सिद्ध्यर्थस्तथा पाठः । तथा हि ऋलृवर्णयोः सावर्ण्यादुपधाभूतलृकारस्य ऋदादेशे अचीकृपदिति स्यात् । लत्वविधौ लसिद्धम् । कृपेत्यादौ तु कृपेः संप्रसारणं चेत्यादि कृपेर्बोध्यम् ।

मू०—सिस्योः ॥ उपधाया गुणो न सिस्योरनिटोः परतः । क्लृप्सीष्ट । कृपेस्तादौपंवापेऽनिट्त्वंच ॥ कल्प्ता । आति कल्पिता कल्प्ता । कल्प्स्यति । कल्पिष्यते, कल्प्स्यते ।अक्लृपत्, अकल्पिष्ट, अक्लृप्त । एते द्युतादयो वृतादयश्च । व्यथ दुःखसञ्चलनयोः । व्यथते ।

सुबोधिनी—कृपेस्तादौ पं वा पेऽनिट्त्वं च । कृपेः परस्मैपदं वा भवति परस्मैपदे इडभावश्च । लुटि कल्प्ता । कल्पिता । लुङि परस्मैपदे लित्पुषादेरिति ङः । अक्लृपत् । ऊदितोवेति वेट् । अकल्पिष्टाम् इडभावे झसादिति सिलोपे अक्लृप्त । व्यथ दुःखसंचलनयोः । संचलनं प्रकृतिविपर्यासो मथनं च ॥

मू०—व्यथेर्णादौपूर्वस्ययस्यइः ॥ विव्यथे । अव्यथिष्ट । ज्युङ् गतौ । ज्यवते । जुज्युवे । अज्योष्ट । रमु क्रीडायाम् । रमते ।

सुबोधिनी—व्यथेर्णादौपूर्वस्ययस्यइः । व्यथतेः पूर्वरूपस्य यकारस्येत्वं भवति लिटि । पूर्वस्य हसादिः शेषः इत्यस्यापवाद इतस्ततः थस्य हसादिशेषेण निवृत्तिः । विव्यथे । रमु क्रीडायां । माधवस्तूदितमाह । पचाऽऽद्यप्रत्यये आप् । रमा घञि तु रामः ॥

मू०—व्याङ्पर्य्युपेभ्योरमःपम् ॥ विरमति । आरमति । परिरमति । उपरमति । रेमे । अरंसीत् । अरंस्त । लोकृ दर्शने । लुलोके । श्लोकृ संघाते । अश्लोकिष्ट । शकि शंकायाम् । शशंके । अशंकिष्ट । अकिलक्षणे । आनंके । ढौकृ त्रौकृ रघि गतौ डुढौके । तुत्रौके । अत्रौकिष्ट । लघि भोजननिवृत्तौ । ललंघे । अलंघिष्ट । बाधृविलोडने । बाधते । बबाधे । अबाधिष्ट । नाथृ नाधृ याच्ञोपतापैश्वर्य्याशीःषु ।

सुबोधिनी—व्याङ्पर्य्युपेभ्योरमः पम् । एभ्यः परस्माद्रमतेः परस्मैपदं भवति, श्लोकृ संघाते । संघातो ग्रंथः । सचेह ग्रथ्यमानस्य व्यापारो ग्रंथितुर्वा । आद्येऽकर्मकः द्वितीये सकर्मकः । अकि लक्षणे । लक्षणं चिन्हम् । नुगशामिति नुक् । आनंके । बाधृ विलोडने । विलोडनं प्रतिघातः । नाथृ नाधृ याच्ञोपतापैश्वर्य्याशीःषु । याच्ञा भिक्षा । उपतापो रोगः ॥

**मू०–नाथआशिष्येवआत्मनेपदम्** ॥ नाथते । अन्यत्र नाथति । ननाथे । अनाथिष्ट । दध धारणे । देधे । अदधिष्ट । स्कुदि आप्लवने । चुस्कुन्दिष्ट । वदि अभिवादनस्तुत्योः । वंदते । ववन्दे । अवन्दिष्ट । भदि कल्याणे सुखे च । बभन्दे । मदिस्तुतिमोदमदस्वप्नकांतिगतिषु । मंदते । ममंदे । अमंदिष्ट । स्पदिकिंचिच्चलने । पस्पन्दे । मुदहर्षे । मुमुदे । दद दाने । ददेदे । यती प्रयत्ने । येते । ञित्वरा सम्भ्रमे । त्वरते । अत्वरिष्ट । षह मर्षणे । सहते । सेहे । सहिता । इषसहलुभरुषरिषामनपितस्येड्वा ।

सुबोधिनी–नाथआशिष्येवात्मनेपदम् । नाथतेरात् स्यादाशीर्वादेर्थे एवान्यत्र तु पं । स्कुदि आप्रवणे आप्रवणमुत्प्लवनमुद्धरणं च । इदितोनुमिति नुम् । स्कुंदते । वदि अभिवादनस्तुत्योः । अभिवादनं नमस्कारः । मदि स्तुतिमोदमदस्वप्नकांतिगतिषु । मोदः संतोषः । मदो गर्वः । स्वप्नमालस्यं । कांतिः शोभा गतिः प्रसिद्धा । यती प्रयत्ने । प्रयत्न उद्यमः । षह मर्षणे अपराधे सत्यपि कोपाद्यनाविष्करणं ॥

तत्त्वदीपिका–भदि कल्याणे सुखेच्च । कल्याणं मंगलं सुखमात्मगुणं । मदि । मोदो हर्षः । मदो गर्वः । स्वप्न आलस्यम् । ददेदे इति । न शसददेत्येत्वपूर्वलोपाभावः । षह मर्षणे मर्षणं क्षमा । सहिता । इषु सहेति वेट् ।

**मू०–सहिवहोरोदवर्णस्य** ॥ ढलोपे सति । सोढा असोढ । असहिष्ट । गाहृ विलोडने । गाहते । जगाहिषे, जघाक्षे । जगाहिढ्वे, जगाहिध्वे, जघाढ्वे । गाहिषीष्ट, घाक्षीष्ट । गाहिता, गाढा । गाहिष्यते, घाक्ष्यते । अगाहिष्ट, अगाढ । अघाक्षाताम् । अघाढ्वम् । गृहू ग्रहणे । जघृहिषे, जघृक्षे । जगृहिध्वे, जगृढ्वे । गर्हिषीष्ट घृषीष्ट । गर्ढा, गर्हिष्यते, घर्क्ष्यते । अगर्हिष्ट, अघृक्षत ।

सुबोधिनी–सहिवहोरोदवर्णस्य । ढलोपे सहिवहोरवर्णस्यौत्वं भवति ढस्य लोपे सति इषसहेति वेट् । सहिता । इडभावे होढ इति ढत्वं । तथोर्द्धइति धत्वं । ष्टुभिः ष्टुरिति ष्टुत्वं । ढिढोलोप इति ढलोपः । ततोऽनेन ओत्वे सोढा । गाहृ विलोडने । ऊदित्त्वादिड्वा । जगाहिषे । इडभावे तु होढ इति ढत्वम् आदिजबानामितिघः । षढोः कस्से इति कः । कात्परस्य सस्य षत्वं । जघाक्षे । सेटो हलादिति वाढः । जगाहिढ्वे जगाहिध्वे । इडभावेतु आदिजबानामिति घः । ढिढोलोप इति ढलोपः । जघाढ्वे । लुङि अगाहिष्ट । इडभावे तु ढत्वे कृते झसादिति सिलोपः । ततो धत्वष्टुत्वढलोपाः । अगाढ । गृहू ग्रहणे । ऊदितो वेति वेट् । इडभावेहोढइति ढत्वं । आदिजबानामितिघः । षढोरिति कत्वं । षत्वं च । जिघृक्षे । सेटोहलादिति वा ढः । जगृहिढ्वे जगृहिध्वे इडभावे जगृढ्वे । आशिषि गर्हिषीष्ट । सिस्योरिति गुणाभावे घृक्षीष्ट । लुटि गर्हिता गर्ढा । लृटि गर्हिष्यते घर्क्ष्यते लङि अगर्हिष्यत अघर्क्ष्यत। लुङि अगर्हिष्ट इडभावे हशषांतादिति सक् । होढ इति ढत्वम् । आदिजबानामिति घः षढोरिति कः षत्वं च । अघृक्षत ॥

तत्त्वदीपिका–सोढेति इडभावपक्षे ।

मू०—आतिसकोलोपस्स्वरे ॥ अघृक्षाताम् । अघृक्षन्त । अघृक्षध्वम् ।
॥ इत्यात्प्रक्रिया ॥

सुबोधिनी—आतिसकोलोपः स्वरे । स्वरादावात्मनेपदे परे सको लोपः । षष्ठीनिर्दिष्टस्ये-त्यंतलोपः । अघृक्षाताम् । ॥ इत्यात्मनेपदप्रक्रिया ॥

तत्त्वदीपिका—आतिसक इतिषष्ठीनिर्दिष्टत्वादन्त्यस्य । लोकेशंकरसंज्ञेन विद्यानगरवासिना ॥ कृताया मिह टीकायामगादातो निरूपणम् ॥ इत्यात् ।

मू०— राजृ दीप्तौ । रेजतुः रराजतुः ॥ रेजे रराजे । अराजीत् । अराजि-ष्टाम् । अराजिष्ट । खनु खनने । चखान । चख्नतुः । चख्नुः ॥ खायात् । खन्यात् । अखानीत् अखनीत् अखनिष्ट । हृञ् हरणे । जहार । ऋदन्तात्थपो नेट् । जहर्थ । जह्रे । ह्रियात् ।

सुबोधिनी—राजृ दीप्तौ । दीप्तिस्तेजः । फणराजृइत्येत्वपूर्वलोपौ रेजतुः । रराजतुः । खनु खनने । खननमवदारण । उदित्त्वात्क्त्वायां वेट् । खनित्वा, खात्वा । गमांस्वरे इत्युप-धालोपः । चख्नतुः।जनसनखनामित्यात्वं वा । खायात् खन्यात् आतोहसादेरिति वा वृद्धिः अखानीत् अखनीत् हृञ् हरणे हरणं प्रापणं स्वीकारः स्तेयं नाशनं चेति चत्वारोऽर्थाः । भारं हरति प्रापयतीत्यर्थः । अंशं हरति । स्वीकरोतीत्यर्थः ।स्वर्णं हराति चोरयतीत्यर्थः । पापं हरति।नाशयतीत्यर्थः । ऋदंतात्थप इति नेट् । क्रादेर्णादेरितीट् जह्रिव । यादावाविति रिङ् । ह्रियात् ॥

तत्त्वदी०—राजृ । ऋदित्त्वमङ्युक्तोपधाह्रस्वादिनिवृत्त्यर्थम्।हृञ् हरणे हरणं प्रापणं स्वीकारःस्तेयं नाशनं च। ग्रामं हरति । अंशं हरति । स्वर्णं हरति । पापं हरति ।

मू०—उः ॥ ऋवर्णस्य सिस्योरनिटो न गुणः । हृषीष्ट । अहार्षीत् अहृत । दान आर्जवे । गुब्भ्यः । दीदांसति । दीदासाञ्चकार । शान तेजने । शीशा-ञ्चक्रे । गुह संवरणे ।

सुबोधिनी—उः । षष्ठ्येकवचनांतमिदम् । ऋवर्णांतस्य धातोर्गुणो न स्यात् अनिटि सिप्रत्यये सीष्टादौ चाइनृतः स्यप इतीट् । हरिष्यति । लोपोहस्वादिति सिलोपः । अहृत । दान आर्जवे ऋजोर्भाव आर्जवम् तस्मिन्नर्थे अस्मात् गुब्भ्यः इति सः । यः सेइति पूर्वस्ये-त्वं मानादीनामिति पूर्वस्य दीर्घः । दीदांसति । शानतेजने । तेजनं तीक्ष्णीकरणं । शाने-र्निशाने सः । अर्थांतरेत्वननुबंधकौ चौरादिकाविमौ । दानयति शानयाति ॥

तत्त्वदीपिका—उःषष्ठयेकवचनान्तम् । सिस्योरिति भूतेसिः । सीष्टादिः सी तयोर्ङित्त्वादेव गुणाप्राप्तौ नियमार्थमिदम् । ऋवर्णस्यैवानयोः परतो गुणो न । तेन वेवेष्टीत्यादौ भवत्येव विशेषाप्रतिपादकलिंगाभावादृवर्ण-मात्रं गृह्यते न तु ऋगताविति । आरंभसामर्थ्यादुपधाया न । अथ थासिस्योरित्येव सिद्धे किमनेन ।

मू०—गुहेरुपधायाऊद्गुणहेतौस्वरे ॥ जुगूहतुः जुगूहिथ । जुगोढ । जुगुहिषे । जुघुक्षे । जुगुहिध्वे । जुघूढ्वे । गुहिषीष्ट घुक्षीष्ट । गूहिता गोढा । गूहिष्यति घोक्ष्यति ।

सुबोधिनी—गुहेरुपधायाऊद्गुणहेतौस्वरे । गुह ऊपधाया ऊत्स्यात् गुणविधायके स्वरादौ प्रत्यये परे।गूहति । ऊदितोवेतिवेट् । जुगूहिथ । इडभावे होढ इति ढत्वं तथोर्द्ध इति थस्य धः ष्टुत्वं च । जुगोढ । होढ इति ढत्वम् आदिजबानामितिघःषढोरिति कः षत्वं च। जुघुक्षे सेटो हलादिति वा ढः । जुगुहिढ्वे जुगुहिध्वे इडभावे होढ इति ढत्वम् । आदिजबानामिति घत्वं झुभिः झुरिति ढः ढिढोलोप इति ढलोपदीर्घौ । जुघुढ्वे । लुङि अगूहीत्।इडभावे हशषांतादिति सक् । आदिजबानामिति घः । अघुक्षत् । आति अगूहिष्टाइडभावे तु सक् ॥

**मू०—दुहदिहलिहगुहूभ्यस्सकोलुग्वावकारतवर्गयोराति ॥** अगूढ, अघुक्षत । अघुक्षाताम् । अघुक्षन्त । अगूढाः अघुक्षथाः । अघुक्षाताम् । अगूढ्वम्, अघुक्षध्वम् । अघुक्षावहि, अगुह्वहि । अघुक्षामहि । अगूहिष्ट । अघुक्षत्, अगूहीत् । भज सेवायाम् । भेजिथ बभक्थ । भेजे । भक्षीष्ट । अभाक्षीत् । अभक्त । श्रिञ् सेवायाम् । शिश्रियतुः । शिश्रिये । श्रीयात् । श्रयिषीष्ट । श्रयिता । अशिश्रियत् । अशिश्रियत । त्विषदीप्तौ । तित्विषे । तित्विक्षीष्ट । त्वेष्टा । त्वेक्ष्यते । अत्विक्षत् । स्पश बाधनस्पर्श-नयोः । पस्पाश । पस्पशे । अस्पशीत् । अस्पशिष्ट । अस्पाशीत् । लष कान्तौ । लष्यति । लषति । लष्यते । लषते। लषिता। रञ्ज रागे । रजति । ररंजिथ, ररङ्क्थ । ररञ्जे । रज्यात् । रङ्क्षीष्ट । अराङ्क्षीत् । अरङ्क्त । भृञ् भरणे । भरति बभर्थ । बभृव बभृद्वे । भर्ता । धृञ् धारणे । दधर्थ दध्रिध्वे, दध्रिढ्वे । अधार्षीत् अधृत । णीञ् प्रापणे । निनयिथ निनेथ । निन्ये अनैषीत् । अनेष्ट । टु याचृ याच्ञायाम् । याचति । ययाचे । अयाचीत् अ-याचिष्ट । यजदेवपूजासंगतिकरणदानेपु । इयजिथ, इयष्ठ । अयाक्षीत् । अ-यष्ट अयड्ढम् । डुवप् बीजतन्तुसंताने । उवपिथ, उवप्थ । ऊपे । उप्यात् । व-प्सीष्ट।अवाप्सीत्।अवाप्ताम्।अवप्त । वह प्रापणे । वहति । उवहिथ । उवोढ । ऊहे । उह्यात् । वक्षीष्ट वोढा । अवाक्षीत्। अवोढाम् । अवोढ। अवक्षाताम् । वेञ् तन्तुसन्ताने ।

सुबोधिनी—दुहदिहलिहगुहूभ्यः सकोलुग्वावकारतवर्गयोराति।लोपइत्यनुवर्तमाने लुग्ग्रहणं सर्वलोपार्थम् । दुह प्रपूरणे । दिह उपचये। लिह आस्वादने।गुहू संवरणे । एभ्यः सको लुग्वा आत्मनेपदस्थवकारे तवर्गे च परे।अदुग्ध , अघुक्षत। अदिग्ध अधिक्षत। अलीढ, अलिक्षते-त्यादि।ढत्वधत्वष्टुत्वढलोपदीर्घाः।अगूढ, पक्षे अघुक्षत। आति सकोलोपइत्यल्लोपे अघुक्षाताम् अघुक्षत । तृफलभजेत्येत्वपूर्वलोपौ।भेजतुः। स्वरांतादत्वत इति वेट् । भेजिथ । बभक्थ । कुत्वषत्वे भक्ष्यति । झसादिति सिलोपः । अभक्त । श्रिश्रुद्रुभ्योडइतिडो द्वित्वंच । अशि-श्रियत्, अशिश्रियत । त्विष दीप्तौ । दीप्तिस्तेजः । हशषांतादिति सक् कत्वषत्वे । अत्वि-क्षत् । आतिसकोलोप इत्यल्लोपे । अत्विक्षाताम् । स्पश बाधनस्पर्शनयोः स्पर्शनं ग्रंथनम् । लष कान्तौ कांतिरिच्छा । भ्राशभ्लाशेति वा यः।लष्यति लषति । लोपःपचामित्येत्वपूर्वलोपौ ।

लेषतुः आपरंजेति नलोपः । रजति । कुत्वषत्वे अराङ्क्षीत् । सावनिटोनित्यामिति वृद्धिः । अरंक्त । स्याविद इत्यनेन उस् । अरांक्षुः क्रादेर्णादेरितीण् न । बभर्थ । आशिषि यादादाविति रिङ् । भ्रियात् । उरिति न गुणः । भृषीष्ट । ऌटि हनृतःस्यपइट् । भरिष्यति । लोपोऽन्हस्वादिति सिलोपः । अभृत । यज देवपूजासंगतिकरणदानेषु । देवपूजात्विह देवतोद्देशेन विधिबोधितद्रव्यत्यागः । संगतिकरणं मैत्रीकरणम् । णवादौपूर्वस्येति पूर्वस्य संप्रसारणम् । अत उपधाया इतिवृद्धिः । इयाज । यजामिति संप्रसारणम् । ईजतुः । छशषेति षः । षढोरिति कः । यक्षीष्ट । लुङि । अयाक्षीत् । अयष्ट । ध्वेचेति सलोपः अयड्ढ्वम् । डुवप बीजसंताने बीजसंतानं क्षेत्रे विकरणं गर्भाधानं च । अयं छेदनेपि । केशान् वपति । ड्वितस्त्रिममिति त्रिमम् प्रत्ययः । उप्त्रिमं । वहतेर्लिङि होढ इति ढः षढोरिति कत्वं । वक्षीष्ट । लुटि ढत्वं तथोर्द्धे इति धत्वं ष्टुत्वं ढिढोलोप इति ढलोपः सहिवहोरोदित्योत्वं च। वोढा लुङि पूर्ववृद्धिस्ततो ढत्वे कृते झसादिति सिलोपः । ढत्वष्टुत्वढलोपाः ओत्वंच । अवोढाम्। ध्वेचेति सलोपः । अवोढ्वम् ॥

तत्त्वदीपिका–डुवप् बीजसंताने । बीजसंतानं क्षेत्रे विस्तारणं गर्भाधानं च । केशान्वपतीति प्रयोगाच्छे दनेपि । त्रिममर्थं ड्वित्त्वं तेनोप्त्रि-मिति सिध्यति ।

**मू०–वेञोणादौनसम्प्रसारणम् ॥ ववौ ववे ॥**

सुबोधिनी–वेञोणादौनसंप्रसारणं । वेञः संप्रसारणं न स्यात् लिटि । णादौ किम् । उतः । उतवान् । संध्यक्षराणामित्यात्वम् । आतोणबूडौ इति णपो डौत्वं । ववौ ॥

**मू०–वेञोवावय्णादौ ॥ उवाय ॥**

सुबोधिनी–वेञोवावयणादौ । वेञो वय् वास्याल्लिटि । अतउपधायाइति वृद्धिः । उवाय॥

**मू०–ग्रहांङितिच ॥ग्रहिज्यावयिव्यधिवष्टिवृश्चतिपृच्छतिविचतिभृज्जतीनांसंम्प्रसारणम् किति ङितिच ॥ वयोयस्यनेत्वम् । ऊयतुः । ऊयुः । ऊवयिथ । ऊये ।**

सुबोधिनी–ग्रहांङितिच । यजामित्यतः कितीति संप्रसारणमिति चानुवृत्तम् । एषां किति ङिति च संप्रसारणं स्यात् । ग्रह उपादाने । ज्या वयोहानौ । वेञ् तंतुसंताने । व्यध ताडने। वश कांतौ । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । व्यच व्याजी करणे । भ्रस्ज पाके।ङिति। गृण्हाति । जिनाति । किति । गृहीतः । जीनः । ङिति वयेरुदाहरणं न किति तु यजामिति संप्रसारणंसिद्धं । यजादिषु वेञः पाठात् । अतएव णबादाविति पूर्वसंप्रसारणमपि सिद्धम् । वेञो णादाविति संप्रसारणनिषेधस्तु वयो यस्येति निषेधारंभान्न प्रवर्त्तते । तस्मात् ग्रहिज्यादिषु वयिग्रहणं स्पष्टार्थम् । वयो यस्य नेत्वम् ग्रहामिति यकारस्य संप्रसारणे प्राप्ते निषेधः लिटि वयो यस्य संप्रसारणं नेत्यर्थः । वयेस्तादावभावात् थपि नित्यमिट् । उवयिथ । स्थानिवद्भावेन ञित्त्वादात्मनेपदम् । ऊये॥

**मू०– वयोयस्याकितिलिटिवोवा ॥** ऊवतुः । ऊवे । ऊयात् । वासीष्ट । अवासीत् । अवास्त । व्येञ् संवरणे ।

सुबोधिनी-वयोयस्यकितिलिटिवोवा। वयो यकारस्य वत्वं वा भवति किति लिटि । ऊवे वयादेशाभावे । ववे । आशिषि संप्रसारणे कृते । ऊयात् । संध्यक्षराणामित्यात्वे। वासीष्ट॥

**मू०– व्येञोलिटिनात्वम् ॥** विव्याय । विव्ययिथ । वीयात् । व्यासीष्ट । अव्यासीत् । अव्यास्त । ह्वेञ् स्पर्द्धायां शब्दे च । द्विरुक्तस्य हूयतेस्सम्प्रसारणम् । जुहाव जुहविथ जुहोथ । जुहुवे । हूयात् । ह्वासीष्ट ।

सुबोधिनी–व्येञोलिटिनात्वम् । व्येञ आत्वं न भवति लिटि । संध्यक्षराणामित्यस्यापवादः । लिटिकिम् । व्याता । व्यास्यति । व्येणप् इति स्थिते परत्वात् हसादिःशेषं बाधित्वा यस्य संप्रसारणम् । यजादीनांग्रहादीनामित्युभयेषांग्रहणसामर्थ्याच्च धातोर्नामिन इति वृद्धिः। विव्याय । नुधातोरिति यः । विव्यतुः । अत्यर्तिव्ययतीनामिति नित्यमिट् । विव्ययिथ । यमिरमिनमातामितीट्सकौ । अव्यासीत् ।अव्यासिष्टां ह्वेञ् स्पर्द्धायां । शब्देच । शब्दे इति सामान्योक्तावापिसंबोधनरूपः शब्द एवात्र गृह्यते । तथाच माघे ॥ यांतोऽन्यतः प्लुतकृतस्वरमाशुदूरादुद्वाहुना जुहुविरे मुहुरात्मवर्ग्याः । इति कर्माणि प्रयोगः । द्विरुक्तस्य हूयतेः संप्रसारणम् । ह्वेञः पूर्वं द्वित्वं तेन उभयत्र संप्रसारणं स्यात् ॥

**मू०– लिपिसिचिह्वयतीनांङोलुङिवाआति ॥** अह्वत् । अह्वास्त । अहूत । डुपचष् पाके । पचति । पेचिथ । पपक्थ । पेचे । अपाक्षीत् । अपाक्ताम् । अपाक्षुः । षच समवाये । सेचे । असाचीत् । असचिष्ट । शप आक्रोशे । शेपे । शप्ता । अशाप्सीत् । अशप्त । हिक्क अव्यक्ते शब्दे । जिहिक्क । अहिक्कीत् । अंचु गतौ याचने च । आनंचे आञ्चीत् । रेट्ट परिभाषणे । रिरेटे । अरेटीत् । चते चदे याचने च । चेते अचेतीत् । चेदे । अचेदीत् । अचेदिष्ट । प्रोथृ पर्य्याप्तौ । पुप्रोथ । पुप्रोथे । अप्रोथीत् । अप्रोथिष्ट । मिदृ मेदृ मेधाहिंसनयोः । मिमिदे । अमेदीत् अमेदिष्ट । मिमेदे । अमेदीत् अमेदिष्ट । मेधृ संगमेच । मिमेधे मेधिता । णिदृ णेदृ कुत्सासन्निकर्षणयोः ॥ निनेदे । नेदिता । शृधु मृधु क्लेदने । शर्द्धति । शशर्द्ध । शशृधतुः । शशृधे । मर्द्धति । ममृधे । अमर्द्धीत् अमर्द्धिष्ट । बुधिर् बोधे । बोधति बोधते । अबोधीत् । अबुधत् अबोधिष्ट । उबुन्दिर् निशामने । बुन्दति । बुबुन्दे । अबुदत् । अबुन्दीत् । अबुन्दिष्ट । वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु । वेणति वेणते । विवेण । अवेणीत् । अवेणिष्ट । नान्तोप्ययम् । वेनति । चीवृ आदानसंवरणयोः । चीवति । चिचीव चिचीवे अचीवीत् । अचीविष्ट । चायृ पूजानिशामनयोः । चायति । चचाय चचाये । अचायीत् अचायिष्ट । व्यय गतौ । व्ययति । वव्याय । वव्यये । अव्ययीत् । अव्ययिष्ट । दाशृ दाने । दाशति । ददाश ददाशे । अदाशीत् अदाशिष्ट । भ्रेशृ भ्लेशृ गतौ । भ्रेशति । भेषृ भ्लेषृ गतौ भये च । भेषति । बिभेषे बिभेष । बिभ्लेष ।

अभेषीत् । अभेषिष्ट । अस गतिदीप्त्यादानेषु । असति । आस आसे । आसीत् । आसिष्ट । अयं षान्तोऽपि । अषति । चष भक्षणे । चचाष । चेषतुः । चेषे । अचषीत् । अचषिष्ट । छष हिंसायाम् । छषति छषते । चच्छाष चच्छषे । अच्छाषीत् । अच्छषिष्ट । झष आदानसंवरणयोः । झषति । जझाष जझषे । अझाषीत् अझषीत् अझषिष्ट । भ्रक्ष भ्लक्ष अदने । बभ्रक्षे । अभ्रक्षीत् अभ्रक्षिष्ट । दासृ दाने । दासते, ददासे । माहृ माने । ममाह । ममाहिषे अमाहीत् अमाहिष्ट ॥ ॥ इत्युभयपदप्रक्रिया ॥

सुबोधिनी—लिपिसिचिह्वयतीनांङोलुङिवाआति । एभ्यो ङप्रत्ययो नित्यं स्यात्परस्मैपदे लुङि । आत्मनेपदेलुङि तु वा । लिप उपदेहे । षिच क्षरणे । आलिपत् । असिचत् । आतोऽनपीत्यालोपः । अव्हत् । षच समवाये । समवायः संबंधः । शप आक्रोशे आक्रोशो विरुद्धाऽनुध्यानम् । अंचुगतौ याचने च । नुगशामिति नुक् । आनंचे । नोलोप इति नलोपः । अच्यात् । अयमिदिदिति मते तु इदितो नलोपो नेति निषेधात् । अंच्यात् । रेटृपरिभाषणे । "यःसनिंदउपालंभस्तत्रस्यात्परिभाषणमि"त्यमरः । ऋदित्त्वात् नेरित इत्युपधाया ऱ्हस्वो न । अरिरेटत् । प्रोथृ पर्य्याप्तौ । पर्य्याप्तिःसमाप्तिः । मिहृ मेहृ मेधाहिंसनयोः । थांताविमाविति स्वामी । धांताविति न्यासः । मेधृ संगमे च । चात्पूर्वोक्तेर्थे । प्रजायै गृहमेधिनामित्यत्र गृहैर्दारैर्मेधंते संगच्छंते इतिविग्रहः णिनूप्रत्ययांतः । णिदृ णेदृ कुत्सासंनिकर्षयोः । संनिकर्षः संबंधः । शृधु मृधु उंदने । उंदनं क्लेदनम् । आर्द्रीभाव इत्यर्थः । उदित्त्वात् क्त्वायां वेट् । शर्द्धित्वा शृद्धा । बुधिर् बोधने । बुध्यतेरेवानिट्कारिकासु पाठादयं सेट् । इरितोवेति वाङः । अबुधत् । अबोधीत् । दीपजनेतीण् तु न । पूर्वोत्तरसाहचर्येण दैवादिकस्यैव सूत्रे ग्रहणात् । उबुंदिर् निशामने । निशामनं चाक्षुषं ज्ञानमित्यर्थः । वेणृ गति ज्ञान चिंता निशामन वादित्र ग्रहणेषु । गत्यादयःपदार्थाः । वाद्यभांडस्य वादनार्थं ग्रहणं वादित्रग्रहणम् । वेणिः वेणी वेणुरित्यादिरूपाण्यस्यैव धातोः । चीवृ आदानादौ । चीवते औणादिके रप्रत्यये चीवरं वस्त्रं । ह्ययंतेति न वृद्धिः । अव्ययीत् । भेषृञ्‌ भये च । चाद्गतौ ।

॥ इत्युभयपदप्रक्रिया ॥

तत्त्वदीपिका—शप आक्रोशे । आक्रोशो विरुद्धानुध्यानम् । अचदीदितिएदित्त्वान्न वृद्धिः । प्रोथृ इत्यादीनामृदित्त्वमङ्युक्ताभावार्थम् । अबोधीदिति । दीपजनइत्यात्मनेपदिभिः साहचर्य्यात्तथाभूतस्यैव ग्रहणात् । उबुंदिर् । उदित्त्वाद्वेट् । बुंदित्वा । बुत्त्वा । निशामनं चाक्षुषंज्ञानं । वेणृ । वाद्यभाण्डस्य वादनापादनं वादित्रग्रहणम् ।

मू०— ऋत जुगुप्सायां कृपायाञ्च ।

सुबोधिनी—ऋत जगुप्सायांच कृपायांच । "अर्त्तनं च ऋतीया च घृणीया च घृणार्थकाः" इति । "जुगुप्सा करुणे घृणे" इति चामरः ॥

मू०—ऋतेरीयङ्स्वार्थेऽनपितुवा ॥ ऋतीयते । ऋतीयेत । ऋतीयताम् । आर्तीयत । ऋतीयाञ्चक्रे । ऋतीयिषीष्ट । ऋतीयिता । ऋतीयिष्यते । आ-

र्तीयिष्यत् । आनर्त । अर्त्यात् । अर्तिता । अर्तिष्यति । आर्तिष्यत् । आर्तीत् । आर्तीयिष्ट । ॥ इतिभ्वादिप्रक्रिया ॥

सुबोधिनी–ऋतेरीयङ्स्वार्थेऽनपितुवा । ऋतिः सौत्रस्तस्मादीयङ् स्यात् स्वार्थे अनपि तु वा । स धातुरिति धातुत्वम् आदनुदात्ताङित इत्यात्मनेपदम् । ऋतीयते । इयङभावे । परतोयदिति परस्मैपदं । नुगशामिति नुक् । आनर्त ॥

तत्त्वदीपिका–रामाश्रमेण विहिता या हि सिद्धांतचंद्रिका । तट्टीकायामगादेतद्रम्यं भ्वादिनिरूपणम् ।

॥ इतिभ्वादिप्रक्रिया ॥

मू०– अदभक्षणे । अदादेर्लुक् ॥ अदादेः परस्यापोलुक् । अत्ति । अत्तः । अदंति । अत्सि । अत्थः । अत्थ । अद्मि । अद्वः । अद्यात् ।

सुबोधिनी–अद भक्षणे । भक्षणं खादनम् ॥ अदादेर्लुक् । अप्कर्त्तरीत्यतः अबित्यनुवृत्तं तच्च षष्ठ्या विपरिणम्यते । अद आदिर्यस्य सोऽदादिस्तस्माददादेः ॥

तत्त्वदीपिका–अदादेर्लुक् । अदआदिर्यस्य सोऽदादिस्तस्मात् । अप्कर्त्तरीत्यतोनुवृत्तमबितिषष्ठ्याविपरिणम्यते । चतुर्थीति तु न तत्रापोऽभावात् । तद्गुणसंविज्ञानबहुव्रीहिरदेरप्यपोलुक् ।

मू०– झसाद्धिर्हेः ॥ झसाद्धकाराच्च परस्य हेर्द्धिर्भवति । अद्धि । अत्तात् । अत्तम् । अत्त ।

सुबोधिनी–झसाद्धिर्हेः । झसात् हु धिः हेरिति पदच्छेदः । हस्यहोझभा इति धत्वे झबेजबा इतिदत्वे हसात्परस्य झसस्येति दलोपः । अत्तादित्यत्र स्थानिवद्भावेन तातङो ह्त्वेपि सकृद्गताविति न्यायेन धिरादेशो न ॥

तत्त्वदीपिका–झसाद्धिर्हेः । झसात् हु धिः हेरिति छेदः । हस्य होझभाइति धत्वे झबे जबा इति दत्वे हसात्परस्य झबस्येति लोपेन सिद्धः । इह लुप्तपंचमीकपदमित्यभिप्रेत्याह । हकाराच्चेति ।

मू०– अदादेर्दिप्सिपोरट् ॥ अदादेश्च परयोर्दिप्सिपोरडागमः । आदत् । आदः ।

सुबोधिनी–अदादेर्दिप्सिपोरट् । अदःपरयोर्दिप्सिपोरडागमः स्यात् ॥

मू०– सिसयोरदेर्घस्लृलिटितुवा ॥ जघास । गमांस्वरे । घसादेरिति षः । जक्षतु । जघसिथ । जक्षथुः । जक्ष । आद । आदतुः । आदुः । आदिथ । अत्ता । लृदित्त्वात् ङः । अघसत् । प्साभक्षणे । प्साति । प्सायात् । प्सातु । अप्सात् ।

सुबोधिनी–सिसयोरदेर्घस्लृलिटितुवा । अदो घस्लृ इत्यादेशः स्यात् सिप्रत्यये सप्रत्यये च लिटि तु वा । सप्रत्यये जिघत्साति । जघास । गमामित्युपधालोपः । खसे चपा इति घस्य कः । घसादेरिति षत्वं कत्वं च । जक्षतुः । घसस्तादावभावात् थपिनित्यामिट् । जघसिथ । पक्षे अत्यर्त्तिव्ययतीनामिति नित्यामिट् । आदिथ ॥

**मू०- आदंताद्द्विषोलङोऽनउस्वा ॥** अप्सुः अप्सान् । पप्सौ।आतोऽनपि पप्सुः । प्सायात् प्सेयात् । अप्सासीत् । मा माने माति । अमात् । अमुः अमान् । ममौ । मेयात् । अमासीत् । या प्रापणे । याति । ययौ । अयासीत् । वा गतिगन्धनयोः । वाति । रादाने । राति । ला दानग्रहणयोः । लाति । ललौ । अलासीत् । श्रापाके । श्राति । श्रायात् श्रेयात् । दा लवने । दाति । ददौ । दायात् अदासीत् । ख्या प्रकथने । ख्याति चख्यौ ।

सुबोधिनी-आदंताद्द्विषोलङोऽनउस्वा । आदंताद्धातोर्द्विषश्च परस्यानो वा उस् स्यात् । उस्यालोपाइत्यालोपः । अप्सुः । लिटि आतोणल्डावित्यौ पप्सौ ।संयोगादेरादंतस्येत्येकारोवा। प्सेयात् प्सायात् । यमिरमिनमातामितीट्सकौ । अप्सासीत् । मा माने । अकर्मकः । " तनौ ममुस्तत्र न कैटभद्विषः" इति माघे ॥ उपसर्गवशेनार्थांतरे सकर्मकः । " उदरं परिमाति मुष्टिना " इति नैषधे । या प्रापणे । प्रापणमिह गतिः । रा दाने । ला आदाने । आदानं ग्रहणं । द्वावपि दाने इति चंद्रः । ख्या प्रकथने । चतुर्थ्येवास्य प्रयोग इति भाष्यम् ॥

तत्त्वदीपिका-आदन्तादिति । अत्र स्थानिवद्भावेन तातङो द्वित्वेपि सकृद्गताविति न्यायेन न धिरादेशः ।

**मू०-अस्यतिवक्तिख्यातिभ्योङोलुङि ॥** सेरपवादः । अख्यत् । द्रा कुत्सायाम् । द्राति । द्रेयात् । द्रायात् । आद्रासीत् । पा रक्षणे । पाति । पपौ। पायात् । अपासीत् । भा दीप्तौ । भाति । बभौ । ष्णा शौचे । स्नाति । स्नायात् । वश कान्तौ । वष्टिउष्टः । उशन्ति । वक्षिउष्ठः । उष्ठ । वश्मि । उश्वः । उश्मः । उश्यात् । वष्टु । उष्टात् । उष्टाम् । उशन्तु । उड्ढि । उष्टम् । उष्ट । वशानि । वशाव । वशाम

सुबोधिनी-अस्यतिवक्तिख्यातिभ्योङोलुङि । असु क्षेपणे । ब्रुवोवचिः । वच परिभाषणे इत्युभयोर्ग्रहणं । एभ्यो ङप्रत्ययः स्यात् लुङि।सेरपवादः।वश कांतौ कांतिरिच्छा । छशषेति षत्वम् । वष्टि । ग्रहामिति संप्रसारणम् । उष्टः । वष्टु । उष्टात् । उष्टां । उशंतु । ह्रौ संप्रसारणम् । छशषेति षत्वम्।झसाद्धिर्हैरिति धिः । षोड इति डत्वं । ष्टुभिः ष्टुरिति ढत्वं । उड्ढि ॥

**मू०- दिस्योर्हसात् ॥** हसात्परयोर्दिप्सिपोर्लोपः । अवट् , अवड् । औष्टाम् । औशन् । अवट् अवड् । औष्टम् । औष्ट । औश्व । औश्म । उवाश । ऊशतुः । उवशिथ । उश्यात् । वशिता । अवाशीत् । अवशीत् । हन हिंसागत्योः । हन्ति ।

सुबोधिनी-दिस्योर्हसात् । दिप्सहचरितस्य सेर्ग्रहणान्नेह । अस्ति । ननु संयोगांतलोपेनैव गतार्थमिदं । सत्यं । सभिन्नस्य राज्ञेति सूत्रमनेन ज्ञाप्यते । तेन अबिभर्भवानित्यादौ संयोगांतलोपाभावादस्यारंभः । अवट् । औष्टाम् । औशन् । उवाश । ऊशतुः । उश्यात् । वशिता । वशिष्यति । अवाशिष्यत् । अतोहसादेरिति वा वृद्धिः । अवाशीत् अवशीत् ॥

तत्त्वदीपिका–दिस्योर्हसात् । दिश्व सिश्व दिसी तयोः अत्र दिसाहचर्य्याल्लिङ एव सिप् गृह्यते नत्वन्यः । तेनात्सीदित्यादौ नातिप्रसंगः । संयोगांतलोपेनैव सिद्धे सभिन्नस्य राङ्गेति ज्ञापयितुमस्यारंभः सिग्रहणं तत्तरार्थम् । ननु अरोदीदरोदादित्यत्रातिप्रसंगः यदागमास्तद्गुणीभूतास्तग्रहणेनगृह्यंत इति न्यायादितिचेन्न । तेन विभक्तिप्रत्ययत्वयोरेव ग्रहणान्न तु दित्वसित्वयोः ।

**मू०–लोपस्त्वनुदात्ततनाम् ॥** अनुदात्तानां ञमान्तानान्तनादीनां वनतेश्व यमस्य लोपो भवति झसे क्ङिति हकारे च । हतः । घ्नन्ति । हन्यात् । हन्तु । हतात् । हताम् । घ्नन्तु ।

सुबोधिनी–लोपस्त्वनुदात्ततनां । यमि रमि नमि गमि हनि मन्यतयोऽनुदात्ताः षट् । तनु क्षणु क्षिणु ऋणु तृणु घृणु वनु मनु इति तनोत्यादयो नव । अनुदात्तेति लुप्तषष्ठीकं पदं । तुशब्देन ञमांतानां ग्रहणं । वन संभक्तौ । वनति । इह हवन्त्योर्नेडिति इण्निषेधात् किति झसे नस्य लोपः । झसे किं । गम्यते । क्ङितीति किं । गता । गमांस्वरेइत्युपधालोपः हनोघ्ने इतिघः । घ्नंति ॥

तत्त्वदीपिका–लोपस्त्वनुदात्ततनाम् । यमिरमिनमिगमिहनिमन्यतयोनुदात्ताः । तनुक्षणुक्षिणुऋणुतृणुघृणुवनुमनुतनोत्यादयः । अनुदात्तेति लुप्तषष्ठीकं पृथक्पदम् । तुशब्दोपरलाभार्थ इत्याह । ञमान्तानामितिः। लुप्तषष्ठीनिर्दिष्टन्यायेनान्त्यलोप इत्याशयेनाह। ञमस्येति । अन्यथा जम्यादिष्वन्त्यस्यापि ञमस्य संभवाल्लोप स्यात् ।

**मू०– जह्येधिशाधि ॥** हन्तेर्जहिरस्तेरेधिः शास्तेः शाधिर्निपात्यते हिविषये । जहि । हनानि । अहन् । अहताम् । अघ्नन् ।

सुबोधिनी–जह्येधिशाधि । हिसहितानां हनाऽसशासीनां यथासंख्यमेते स्युः ॥

**मू०–पूर्वाद्धन्तेर्हस्यघः ॥** जघान । जघ्नतुः । जघ्नुः । जघनिथ, जघन्थ ।

सुबोधिनी–पूर्वाद्धन्तेर्हस्यघः । द्वित्वे सति पूर्वरूपात् परस्य हंतेर्हस्यघत्वं भवति । जघनिथ।

**मू०– हनोलुङ्लिङोर्वधोलुङ्यातिवा ॥** वध्यात् । हनिष्यति ।

सुबोधिनी–हनोलुङ्लिङोर्वधोलुङ्यातिवा । लुङलिङोः परतो हंतेर्वधः स्यात् । आत्मने पदे लुङि तु वा । वध्यात् । ह्नृत इतीट् । हनिष्यति ॥

तत्त्वदीपिका–हन्तेरिति । लुङि साहचर्य्यादनविषय एव लिङ् गृह्यते तेन विधौनातिप्रसंगः । यत्तु विधानातिप्रसंगवारणाय क्किदिति लिङोविशेषणमुपन्यस्तं तद्भ्रमसात् । वृध्यिकाभियेति न्यायेन कर्मणि पक्षे वधिषांष्टत्यत्रातिव्याप्तेरनिवारणात् ।

**मू०– जनिवध्योर्नवृद्धिः ॥** अवधीत् । यु मिश्रणे अमिश्रणे च ।

सुबोधिनी–जनिवध्योर्नवृद्धिः । अनयोर्वृद्धिर्न भवति । जन जनने जनी प्रादुर्भावे च । वध हिंसायां । वधादेशोऽदंतः । तेनाद्योच्चारणेनेकस्वरत्वात् नैकस्वरादितीण्निषेधो न प्रवर्त्तते । यत इत्यल्लोपः । अवधीत् ॥

**मू०– ओरौ ॥** उकारस्याऽद्विरुक्तस्यौकारो भवत्यवादौ पिति । यौति । युतः । युवन्ति । यौषि । यौमि । युवः । युयात् । यौतु । युहि । अयौत् ।

अयौः । युयाव । युयविथ । यूयात् । यविता । अयावीत् । तु गतिवृद्धिहिंसासु ।

सुबोधिनी-ओरौ। अद्विरुक्तस्य धातोरुत औ स्यात् पिति तकारसकारदकारादौ लुग्विषये । उतःकिम् । एति एषि । लुकि किं । सुनोति । पिति किं । रुतः । अद्विरुक्तस्य किं । योयोति । नुधातोरित्युव् युवंति । ये दीर्घः स्यात् यूयात् । धातोर्नामिन इति वृद्धिः । अयावीत् । तु इति सौत्रो धातुः गतिवृद्धिहिंसासु । अयं च लुग्विकरण इति ।वरामः ॥

तत्त्वदीपिका-ओरौ इति । विदो नवानामित्यतो वेत्यनुवर्त्य व्यवस्थयाद्विरुक्तस्येति बोध्यम् । तेन जुहोतीत्यादौ नातिप्रसंगः ।

**मू०- तुरुस्तुभ्योऽद्विरुक्तेभ्योहसादीनांचतुर्णामीड्वा** ॥ तौति, तवीति । तुतः, तुवीतः । तुवन्ति । तौषि, तवीषि । तुथः, तुवीथः । तुथ, तुवीथ । तौमि, तवीमि । तुयात्, तुवीयात् । तौतु, तवीतु । तुवीतात्, तुवीताद्, तुतात्, तुताद् । तुहि, तुवीहि । अतौत्, अतवीत् । तुताव । तोता । तोष्यति। अतौषीत् । रुशब्दे । रौति, रवीति । रुरविथ । अरावीत् । णुस्तुतौ । नौति । नुतः । नुनाव । नुनविथ । अनावीत् । टुक्षु शब्दे । क्षौति । क्षुयात् । क्षौतु । अक्षौत् । चुक्षविथ । क्षविता । अक्षावीत् । क्ष्णु तेजने । क्ष्णोति । चुक्ष्णविथ । अक्ष्णावीत् । ष्णु प्रस्रवणे । स्नौति । सुष्णविथ । अस्नावीत् । द्युअभिगमने । द्यौति । दुद्यविथ, दुद्योथ । अद्योषीत् । षु प्रसवैश्वर्य्ययोः । सौति । सुषाव । सुषविथ, सुषोथ । असौषीत् । कु शब्दे । कौति । चुकविथ, चुकोथ । अकौषीत् । वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु । वेति । वीतः । वियन्ति । वेषि । वेतु । वीहि । अवेत् । अवियन् । विवयिथ, विवेथ । अवैषीत् । एति । ईतः ईयात् । ऐत् । ऐयन् । आयम् । अयांचकार । एता । ऐषीत् । इण गतौ । एति इतः ।

सुबोधिनी-तुरुस्तुभ्योऽद्विरुक्तेभ्योहसादीनांचतुर्णामीड्वा । अद्विरुक्तेभ्यः एभ्यः परेषां हसादिचतुर्णामीडागमो वा भवति । क्ष्णु तेजने तेजनं तीक्ष्णीकरणं ष्णु प्रस्रवणे प्रस्रवणमुत्कंठा । षु प्रसवैश्वर्ययोः । प्रसवोऽभ्यनुज्ञानं । वी गतिव्याप्तिप्रजनकांत्यसनखादनेषु । प्रजनोगर्भग्रहणम् । असनं क्षेपणं । अडागमात्प्राग् नुधातोरितीय् अवियन् । नित्यत्वादडागमे कृते सत्यनेकस्वरत्वाच्च इति केचित् अन्यन् अत्र ईकारोपि धात्वंतरं प्रक्षिप्यते । तथा च प्रयुंजते । नहि तरणिरुदीतिदिक्पराधीनवृत्तिरिति । व्याख्यातं च मनोरमायां । कर्मव्यतिहारेआत् । नच गतिहिंसार्थत्वात्निषेधः शंक्यः । उत्पूर्वस्याविर्भावार्थत्वादिति । इण् गतौ ॥

तत्त्वदीपिका-तुरुस्तुभ्यइति। यत्तु प्राचा तुरुणुस्तुभ्य इत्युक्तं यच्च वासुदेवेन व्याख्यातं। यु मिश्रणे । रुशब्दे । णुस्तुतौ ष्टुञ् स्तुतौ । एभ्यः पितिस्मिईकारो वक्तव्य इतितत्सर्वम्भ्रामादिकम् । णुणुतयोरत्राग्रहणस्य सर्वसंमतत्वात् । पितिस्मीति निमित्तोपादानमप्ययुक्तम् । रुवीत इत्यादावव्याप्तेः ॥

मू०-इणः क्ङितिस्वरेयः ॥ यन्ति । एषि । इयात् । एतु । यन्तु । इ-हि । आयम् । ऐव । ऐम । इयाय ।

सुबोधिनी-इणःक्ङितिस्वरेयः । इणो यत्वं भवति किति ङिति च स्वरे । यंति । लिटि द्वित्वे वृद्धौ च कृतायाम् असवर्णेस्वरे इतीय् इयाय ॥

मू०-इणःकितिणादौपूर्वस्यदीर्घः ॥ ईयतुः । ईयुः । इययिथ, इयेथ । ईयात् । एता । दादेःपे । इणःसिलोपे गा । अगात् । अगाताम् । अगुः । इक् स्मरणे । इङिकावध्युपसर्गतोनव्यभिचरतः । अध्येति । अधीतः । अ-धियन्ति । अध्यैत्, अध्यैद् ।

सुबोधिनी-इणः कितिणादौपूर्वस्यदीर्घः । इणःपूर्वरूपस्य दीर्घो भवति किति लिटि । आशिषिये इति दीर्घः । ईयात् । इक् स्मरणे । ककर इइइण्वदिक इति विशेषणार्थः । अय-मधिपूर्वः । तथाच भट्टिः । ससीतयोराघवयोरधीयन् । स्मरन्नित्यर्थः। राघवयोरित्यत्र कर्मणि षष्ठी । इङिकाविति । इङिकावध्युपसर्गं विना प्रयोगं नार्हत इत्यर्थः ॥

मू०-इण्वदिकः ॥ अधीयाय । अधीयतु । अधीययिथ, अधीयेथ । अधी-यिव । अधीयात् । अध्येता । अध्यगात् । विद् ज्ञाने । वेत्ति । वित्तः । वि-दन्ति । वेत्सि । वित्थः । वित्थ । वेद्मि ।

सुबोधिनी-इण्वदिकः । इणो यत् कार्यमुक्तं तदिकोपि भवति । कार्यातिदेशोयम् । विद् ज्ञाने । ज्ञप्तिर्ज्ञानं ॥

मू०-विदोनवानान्त्यादीनांणबादिर्नवकोवा ॥ विदःपरेषांत्यादीनां नवानां णबादिर्नवको वा । वेद । विदतुः । विदुः । वेत्थ । विदथुः । विद । वेद । विद्व । विद्यात् । वेत्तु । विद्धि ।

सुबोधिनी-विदोनवानांत्यादीनांणबादिर्नवकोवा । वर्तमानार्थकणादियोगे धातोर्द्वित्वं न उक्तार्थणादियोगे इत्युक्तत्वात् । झसादिति धिः । विद्धि ॥

तत्त्वदीपिका-वेदेति । अनन्तरस्येति न्यायादुक्तार्थणादियोग एव द्वित्वं नान्यत्र ।

मू०- वेत्तेर्लोट्याम्गुणाभावः करोत्यनुप्रयोगश्चवा ॥

सुबोधिनी-वेत्तेर्लोट्यामगुणाभावःकरोत्यनुप्रयोगश्चवा । वेत्तेराम् प्रत्ययो गुणनिषेधः क-रोतेरनुप्रयोगश्च वा स्याल्लोटि ॥

मू०- तनादेरुप् ॥ विदांकरोतु ।

सुबोधिनी-तनादेरुप् । तन आदिर्यस्य स तनादिस्तस्मात्तनादेरुप् प्रत्ययः स्यात् क-र्तरि चतुर्षु । नूप इति गुणे कृते विदांकरोतु ।

मू०- ङित्यदुः ॥ कृञोऽतउत् ङिति । विदांकुरुतात् । विदांकुर्वन्तु । अवेत्, अवेद् । स्याविदः । अविदुः ।

सुबोधिनी–ङित्यदुः । क्रुञोये इत्यतः क्रुञ्इत्यनुवृत्तम् ।लङिदिस्योरिति दिप्सिपोर्लोपः स्यात् । अवेत् । आदंतविदेत्यन उस् वा । अविदुः ।

तत्त्वदीपिका–ङित्यदुः । ङिति अत् उरीतिछेदः । क्रुञो ये इत्यतः क्रुञ्इत्यनुवर्त्तते । विदांकुरुतादित्यत्र तपरत्वादुप्रत्ययनिमित्तो गुणो न कुर्वीत्यत्र तु संज्ञापूर्वकत्वेनानित्यत्वात् य्वोर्विहस इति दीर्घो न । तपरः किम् । अकार्थ ॥ तपरकरणं सुखमुखोच्चारणार्थमिति वासुदेवः । तन्न । ङित्यउरिति पाठेपि सुखोच्चारस्याव्याहतत्वात् ।

**मू०– द:सः ॥** पदान्ते दस्य सोवा सिपि । अवेः । अवेद् । अवेत् ।

सुबोधिनी–द:सः । पदांते धातोर्दस्य सो वास्यात् । सिपि किम् । अवेदू । पदांते किम् । वेत्सि ।

तत्त्वदीपिका–द:सः । अत्र रोरात्रिष्वित्यतो मंडूकप्लुत्या रइत्यनुवर्त्तते । अजर्घा इत्यादिसिद्ध्यर्थम् स इति त्वव्यवहितमपि न दोषादिकल्पने च गौरवम् । यदि दोषादिकल्पनं व्यवहितानुवृत्त्या गौरवं समानं तदा सानुवृत्तिरप्यस्तु ।

**मू०– आमिविदेर्नगुणः ॥** विदाञ्चकार । अवेदीत् । अस भुवि ।अस्ति ।

सुबोधिनी–आमिविदेर्नगुणः । वेत्तेर्गुणो न स्यात् आमि । विदर्दरिद्रेत्याम् । विदांचकार । अस भुवि सत्तायामित्यर्थः ॥

**मू०– नमसोऽस्य ॥** प्रत्ययस्यनमोऽस्तेश्चाकारस्य लोपो ङिति । स्तः । संति ।

सुबोधिनी–नमसोस्य । नम् च अस् चानयोः समाहारो नमस् तस्य । नमिति प्रत्ययो गृह्यते प्रतिपदोक्तत्वात् न धातुः लाक्षणिकत्वात् । तस्य हि आदेःष्णः स्नइति कृते नमिति-रूपम् । अस्तेरीडित्यतोस्तेरित्यनुवृत्त्याऽस्तेरित्यस्ययोऽस्तस्येतिव्याख्यानात् । असप्रत्ययस्य असूदीप्तौ असु क्षेपणे इत्यादीनांच ग्रहणं न भवति । ङित्यदुरित्यतो ङितीति ओर्वमोरित्य-तोलोप इति चानुवृत्तम् ॥

तत्त्वदीपिका–नमसोस्य । नम् च अस् चानयोः समाहारः नमस् तस्य । नमधातोरादेःष्णः स्न इति सूत्रेण नत्वकरणाल्लाक्षणिकेनाग्रहात् । अस्तेरिडित्यतोस्तेरित्यनुवृत्तेरस्तेरीति रूपस्य प्रकृतिभूतोयोऽस्तस्येति व्याख्येयम् । तेनास् प्रत्ययः अस दीप्तौ असु क्षेपणे इत्यादीनां न ग्रहणम् । यत्तु वासुदेवेन असाधातुना साहचर्यान्नमपि धातुरेव गृह्यतां इत्युक्तम् तन्न । अस प्रत्ययस्यापि संभवेन धातोर्ग्रहणमिति निर्णया-भावात् ।

**मू०–सिसः ॥** अस्तेस्सस्य लोपो भवति सादौ । असि । स्थः । स्थ । अस्मि । स्वः । स्मः । स्यात् । अस्तु । स्तात् । सन्तु । जह्येधिशाधि । एधि । असानि ।

सुबोधिनी–सिसः । नमसोस्येत्यतोऽसग्रहणमप्यनुवृत्तं जह्येधीति एध्यादेशः । एधि ।

तत्त्वदीपिका–सिसः । अत्र नमःसकारासंभवादस एवानुवृत्तिः ।

**मू०– अस्तेरीट् ॥** विद्यमानादस्तेः रुदादेश्च परयोर्दिप्सिपोरीट् । आसी-त् । आस्ताम् । आसीः । आसम् ।

सुबोधिनी-अस्तेरिट् । दिस्योर्हसादित्यतोदिस्योरित्यनुवृत्तम् अस्तेरिति तु तन्त्रादिना षा-ष्ठ्यन्तं तेन विद्यमानादस्तेरिति लभ्यते । विद्यमानात्किम् । अस्तेर्भूरित्यादेशेऽभूदित्यादौ मा-भूत् । स्थानिवद्भावेन नमसोरत्येत्यत्र ओर्भेर्वेरित्यतो वानुवृत्त्या व्यवस्थयाल्लोपाभावे स्वरा-दित्वात् द्वितीयोऽट् । आस्ताम् ।

तत्त्वदीपिका-अस्तेरिट् । अनादुत्तदेरिति सूत्रात् धादेरित्येकदेशोऽनुवर्तते नत्वादेरिति । क्वचिदेकदे-शोनुवर्ततइति स्वीकारात् । अस्तेरित्यस्य तन्त्रादिना विद्यमानादिति । तेन भ्वादेशे अभूदित्यादौ नातिप्रसंगः । आस्तामिति । अत्र ओर्भेर्वेरित्यतो वानुवृत्त्या व्यवस्थया लोपाभावेद्वितीयोऽट् । उपदेशस्वरादिति तु न । अना-दित्यत्रातिव्याप्तेः ।

मू०- अस्तेरनपिभूः ॥ बभूव । इत्यादिसिद्धम् । मृजू शुद्धौ ।

सुबोधिनी-अस्तेरनपिभूः । अस्तेर्भूरादेशः स्याद्चतुर्षु । मृजू शुद्धौ । अयं न पित् । भिदादिपाठसामर्थ्यात् ।

मू०- मृजेर्वृद्धिः ॥ क्ङिति स्वरे वा । मार्ष्टि । मृष्टः । मृजन्ति, मार्जन्ति । मार्क्षि । मृज्यात् । मार्ष्टु । मृड्ढि । मार्जानि । अमार्ट् , अमार्ड् । ममार्ज । ममृजतुः, ममार्जतुः । ममार्जिथ । ममार्ष्ठ । मृज्यात् । मार्जिता, मार्ष्टा । अ-मार्जीत् । वच परिभाषणे । वक्ति । नहिवचिरन्तिपरः । वक्षि । वक्थः । वच्मि । वच्यात् । वक्तु । वग्धि । अवक्, अवग् । उवाच । ऊचतुः । उवचिथ । उ-वक्थ । उच्यात् । वक्ता । वक्ष्यति । अवक्ष्यत् । अस्यतिवक्तीति ङः ।

सुबोधिनी-मृजेर्वृद्धिः । गुणापवादः । अक्ङिति प्रत्यये परे मृजेर्वृद्धिर्भवति क्ङिति स्वरे वेष्यते । छशषेति षत्वम् । मार्ष्टि । झसादिति हेर्धिः । छशषेति षत्वं ष्टुत्वं झबजबा इति षस्य डः स्थानैकत्वात् मृड्ढि । दिस्योरिति दिप्सिपोर्लोपः । अमार्ट् । अमार्ड् । लुङि इडभावे षत्वकत्वे अमार्क्षीत् । झसादिति सिलोपः । अमार्ष्टाम् । स्यादिदइत्यनेन उस् । अमार्क्षुः । वच परिभाषणे । अयमंतिपरो न प्रयुज्यते इत्येके । बहुवचनपरो न प्रयुज्यते इत्यपरे । झसादिति हेर्धिः । चोःकुरिति कः । झबेजबा इति गः । वग्धि । दिस्योरिति दिप्सिपो-र्लोपः । अवक् । णबादौ । पूर्वस्येति संप्रसारणं अतउपधाया इति वृद्धिः । उवाच । अस्य तिवक्तिख्यातिभ्य इतिङः ।

तत्त्वदीपिका-नहिवचिरिति । बहुवचनपरइत्येके अंतिमात्रपरइत्यन्ये ।

मू०-वचेरुम् ॥ अवोचत् । अवोचताम् । अवोचन् । रुदिर् अश्रुविमोचने ।

सुबोधिनी-वचेरुम् । वचेरुमागमः स्यात् ङप्रत्यये । अवोचत् । रुदिर् अश्रुविमोचने । अश्रुविमोचनं रोदनम् ॥

मू०-रुदादेश्चतुर्णांहसादेः ॥ रुदादेः परस्य तिबादिचतुर्णांमध्ये हकार-वसादेः प्रत्ययस्येट् । रोदिति । रुदितः । रुदन्ति । रोदिषि । रुदिथः । रुदिथ । रुद्यात् । रोदितु । रुदिहि ।

सुबोधिनी–रुदादेश्चतुर्णां हलादेः । रुच स्वश्च हलौ तौ आदी यस्य स हलादिस्तस्य । रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षितिश्चेति विज्ञेयो रुदादिः पंचको गणः। हलादेः किं । रुदंति । चतुर्णां किं । स्वप्ता । हौ परस्मादिटि कृते विरदेशो न । रुदिहि ।

**मू०–रुदाद्दिर्दिस्योरीडटौ ॥** अरोदीत् । अरोदत् । अरुदिताम् । अरुद-न् । इरितो वा । अरुदत् । ञिष्वप् शये । स्वपिति । स्वप्यात् । स्वपितु । अ-स्वपीत् । अस्वपत् । सुष्वाप । स्वप्ता । अस्वाप्सीत् । श्वस् प्राणने । श्वसिति । श्वस्यात् । श्वसितु । अश्वसत् । अश्वसीत् । शश्वास । अन प्राणने । अनिति ।

सुबोधिनी–रुदादेर्दिस्योरीडटौ । रुदादेः परयोर्दिप्सिपोरीडटावागमौ भवतः।लुङिइरिति वाङः । अरुदत् । णमाद्यौ पूर्वस्येति संप्रसारणं । सुषुपतुः । अतउपधाया इति वृद्धौ। अस्वाप्सीत् । ह्यंतेति न वृद्धिः । अश्वसीत् ॥

तत्त्वदीपिका–रुदादेरिति । रुचवसश्वहलौ तौ आदी यस्य स तथा तस्य । रोदितिः स्वपितिश्चैव श्वसितिः प्राणितिस्तथा । जक्षितिश्चेतिविज्ञेयो रुदादिः पंचको गणः॥१॥अरुदत् । आरोदीदाते । अरुदादेरङि-त्यङ् । अस्तेरीडितिपक्षेईट् ।

**मू०–प्रादेरकादनितेर्नस्यणत्वम् ॥** प्राणिति । प्राणिहि । आनीत् । आनत् । आन । आनतुः । अन्यात् । अनिता । आनीत् । जक्ष भक्षहसन-योः । जक्षिति । जक्षितः ।

सुबोधिनी–प्रादेरकादनितेर्नस्यणत्वं । प्रादिस्थरकारात्परस्यानेर्नस्यणत्वंस्यात् ।

**मू०–जक्षादेरन्तोऽदनडस् ॥** जक्षजागृदरिद्राशास्चकास्भ्यः परस्या-न्तोऽत्।जक्षति । जक्ष्या । जक्षितु । जक्षिहि । अजक्षीत् । अजक्षत् । जक्षिता ॥ ॥ इतिरुदादयः ॥ जागृ निद्राक्षये । जागर्ति । जागृतः । जाग्रति । जागृया-त् । जागर्तु । अजागः।अजागृताम् ।

सुबोधिनी–जक्षादेरंतोऽदनडस् । जक्षप्रभृतयः सप्त । उक्तं च । "जक्ष जागृ दरिद्राति चकास्ति शास्तयस्तथा ॥ दीधीङ्वेवीङ च विज्ञेयो जक्षादिः सप्तको गणः ॥ १ ॥" दि-स्योरिति दिप्सिपोर्लोपः । अजागः ।

**मू०–डसिगुणः ॥** अजागरुः । जजागार ।

सुबोधिनी–डसि गुणः । नामन्तस्य धातोर्गुणः स्यादनादेशे डसि परे। विदांरेद्वेतिवाऽम्। जागरांचकार ॥

**मू०–जागर्तेर्वीण्णब्रूङिद्धिन्नेषुगुणः॥** जजागरतुः।जजागरुः।जजागरिथ । जागराञ्चकार । जागर्यात् । जागरिता । जागरिष्यति । अजागरिष्यत् । अजागरीत् । दरिद्रा दुर्गतौ । दरिद्राति ।

सुबोधिनी–जागर्त्तेर्वीण्णल्ङिङ्द्भिन्नेषुगुणः । जागर्त्तेर्विइणूणल्ङिद्भिन्नप्रत्ययगुणः स्यात् । वि इणूणल्ङिद्भ्योऽन्यस्मिन् वृद्धिविषये प्रतिषेधविषये च । विशब्देन वादि प्रत्ययो गृह्यते । इकारस्तु उच्चारणार्थः।क्वसुप्रत्यये जजागृवान् । जजागृवांसौ इति। इणि अजागारि । णपि जजागार । ङिति जागृतः । वृद्धिविषये वुणि जागरकः। घञि जागरः । ञि प्रत्यये । जागरयति।नचैतेषु गुणेकृतेप्यतउपधाया इति वृद्धिस्स्यादिति वाच्यम्।गुणविधेरिणूणप्रतिषेधस्य चानर्थक्यापत्तेः । लुङि जागृ इसु ईदित्यत्र रत्वं प्राप्तं तद्गुणो बाधते । तांणित्प इति सेर्णित्वाद्धातोर्नामिन इति वृद्धिर्बाधते । तां जागर्तेरिति गुणो बाधते । तत्र गुणे कृते अतोहसादेरिति विकल्पं बाधित्वा ल्रांतस्येति वृद्धिः प्राप्ता ह्यंतेतिसूत्रेण निषिध्यते । अजागरीत् । दरिद्रा दुर्गतौ ॥

**मू०–दरिद्रातेरिदालोपश्चाङिति** ॥ दरिद्रातेरातो लोपो ङितिस्वरे । इकारश्च ङिति हसे।दरिद्रितः । दरिद्राति। दरिद्रियात् । दरिद्रातु । अदरिद्रात् । अदरिद्रिताम् । अदरिद्रुः ।

सुबोधिनी–दरिद्रातेरिदालोपश्चाङिति । हसे इति स्वरे इति चानुवृत्तम् ॥

तत्त्वदीपिका–अदरिद्रुरिति । जक्षादेरित्यनेन उस् दरिद्रातेरिदालोपइत्यनेन परत्वादालोपआदन्तत्वाभावादादन्तद्विष इत्यादिलक्षणविकल्पाप्रवृत्तिः ।

**मू०–दरिद्रातेरनप्यालोपःसौवाणव्वुणनिट्सयुट्सुन** ॥ ददरिद्रौ । ददरिद्रतुः । दरिद्राञ्चकार । दरिद्र्यात् । दरिद्रिता । अदरिद्रीत्।अदरिद्रिष्टाम् । अदरिद्रासीत् । शासुअनुशिष्टौ । शास्ति ।

सुबोधिनी–दरिद्रातेरनप्यालोपः सौवाणव्वुणऽनिट्सयुट्सुन । दरिद्रातेरातोलोपः स्यात् अचतुर्षु सिप्रत्यये तु वा णबादिषु परेषु न वुणि । दरिद्रायकः । अनिटि सप्रत्यये दिदरिद्रासति । युटि दरिद्राणः । लुङि आलोपाभावे यमिरमीतीट्सकौ । अदरिद्रासीत् । अदरिद्रासिष्टां । शासु अनुशिष्टौ । अनुशिष्टिरनुशासनम् ।

**मू०–शासेरिः** ॥ शासेरातो हसेक्ङिति ङे च इद्भवति । घसादेःषः । शिष्टः । शासति । शास्सि । शिष्टः । शिष्ट । शास्मि । शिष्यात् । शास्तु । जझेर्धिशाधि । शाधि ॥ **दिपिधातोः** ॥ सस्य तः स्याद्दिपि । अशाद् । अशात् । अशिष्टाम् । अशासुः ॥ **सिपिवाधातोः** ॥ सस्यवा तः स्यात्सिपि। अशाः । अशाद् अशात् । अशाः । शशास । शिष्यात् । शासिता । अशासिष्यत् । अशिषत् । चकासृदीप्तौ।चकास्ति।चकास्तः। चकासति।झसाद्धेर्हिः। **धेसलोपः** ॥ चकाधि । अचकात् । अचकासुः । अचकाः । अचकात्, अचकाद् । चकासाञ्चकार । अचकासीत् ॥ इतिपरस्मैपदम् ॥

सुबोधिनी–शासेरिः । शास उपधाया इत स्यात ङप्रत्यये हसादौ क्ङिति च । ङस्यानुवर्त्तनात् आङः शासु इच्छायामित्यस्य तु न ग्रहणम्।आर्ति सार्ति साहचर्य्यात्परस्मैपादिन एव शासेर्ङविधानात् । तेन पेएवेत्वं । नेह । आशास्ते । अन्ये तु व्यतिशिष्टे । व्यतिशिड्ढ्वे ।

इत्यात्मनेपदेपि इत्वं स्वीकुर्वीति । हौ जहोधिशाधीति शाधिरादेशः । शाधि । सर्तिशास्तीति ङः । आशिषत् । चकासृ दीप्तौ । दीप्तिस्तेजः । जक्षादरित्यंतोऽत् । चकासति । धेचसलोपः । धातोः सकारस्य लोपः स्यात् धकारे परे । दिस्योरिति दिपसिपोर्लोपः । दिपि सस्योतितः । अचकात् । सिपि तु वा तः । अचकाः । अचकात् । कासादित्याम् । चकासांचकार । इति परस्मैपदम् ।

तत्त्वदीपिका-शास्तेरिः । ङे चेति । ङानुवृत्तेराङः शासु इच्छायामित्यस्य नेत्वम् । अतिसाहचर्यात्परस्मैपदिन एव शास्तेर्ङविधानात् । भाष्यसंमतमाह । धेस्सलोपइति ॥ कृतायामिहटीकायां लोकेशंकरशर्म्मणा । अगाददादिमध्यस्थपरस्मैपदसाधनम् ।

मू०— चक्षिङ् व्यक्तायांवाचि । स्कोराद्योश्च । चष्टे । चक्षाते । आतोऽन्तोदनतः । चक्षते । चक्षे । चक्षाथे । चड्ढे । चक्षे । चक्ष्वहे । चक्ष्महे । चक्षीत । चष्टाम् । अचष्ट ।

सुबोधिनी—दीधीङ् दीप्तिदेवनयोः । देवनं शोकः । वेवीङ् वेतिनातुल्ये । वीगतीत्यनेन तुल्येऽर्थे वर्त्तत इत्यर्थः । छांदसाविमौ । अत एव न व्याख्यातौ ॥ चक्षिङ् व्यक्तायांवाचि । अयं दर्शनेपि । इकारोऽनुदात्तः इदितोनुमिति नुम् तुन । अंतेदित इति व्याख्यानात् । ङकारस्तु अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति ज्ञापनार्थः स्कोरिति कलोपः । ष्टुत्वं चष्टे । आतोन्तोदनत इत्यत् । चक्षते । मध्यमे तु स्कोरिति कलोपः । षढोरिति कः । षत्वं चक्षे । कलोपे ष्टुत्वे झषेजशा इति डः । चड्ढ्वे । लङि अचष्ट ।

तत्त्वदीपिका—चक्षिङ् अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमिति ज्ञापनार्थो ङकारः । तेनानुक्तमप्यूहति पंडितो जन इत्यादिसिद्धम् । इदित् इतिनुम् तु नभवतिअन्तेदिति व्याख्यानात् । अकारस्तुवक्तुमुचितः ।

मू०—चक्षिङोनपिख्याञ्क्शाञौणादौतुवा ॥ चख्यौ चख्यतुः । चख्ये । चख्याते । चक्शौ । चक्शे । चचक्षे । ख्येयात् । ख्यायात् । ख्यासीत् । क्शायात् । क्शेयात् । अख्यत् । अख्यत । अक्शास्त । ईर् गतौ कम्पने च । ईर्ते । ईराते । ईर्ताम् । ईराताम् । ऐर्त । ईराञ्चक्रे । ईर्षिष्ट । ऐरिष्ट । आङःशासु इच्छायाम् । आशास्ते । आशशासे । आशासिष्ट । कसिगतिशासनयोः । कंस्ते । कंसाते । अयमनिदिदित्येके । कस्ते । तालव्यान्तोऽप्यनिदित् । कष्टे । कशाते । कक्षे । कड्ढ्वे । अकशिष्ट । णिसि चुम्बने । निंस्ते । निंसाते । निंस्से । निंसिता । णिजि शुद्धौ । चोःकुः । निंक्ते । निंक्षे । निंजिता । शिजि अव्यक्तेशब्दे । शिंक्ते । शिंक्षे । शिंजिता । पिजि वर्णे सम्पर्चने च । पिङ्क्ते । पिपिंजे । पिंजिता । पृचि सम्पर्चने । पृङ्क्ते । पपृञ्चे । पृचिता । पृची सम्पर्चने । पृक्ते पपृचे । अपर्चिष्ट । ईड स्तुतौ । ईट्टे ।

सुबोधिनी—चक्षिङोऽनपिख्याञ्क्शाञावादेशौ भवतः अचतुर्षु । लिटि परे तु वा । ञित्त्वात्पदद्वयम् । आतोणलुडाविति डौ । चख्यौ । आतोनपीत्यालोपः । चख्ये चक्शौ । चक्शे चचक्षे

संयोगादेरादंतस्यैकारो वा । ख्यायात ख्येयात् । क्शायात् क्शेयात् । ख्यासीष्ट । क्शासीष्ट ख्याता, क्शाता । ख्यास्यति । ख्यास्यते क्शास्यति । क्शास्यते । अख्यास्यत् । अख्यास्यत । अक्शास्यत् अक्शास्यत । अस्यति वक्तीतिङः । आतोनपीत्यालोपः । अख्यत्, अख्यद् । अक्शासीत् अक्शास्त । वर्जने ख्याञ्क्शाञौ नेष्टौ । समचक्षिष्ट । आङः शासु इच्छायाम् । आङ्पूर्वकत्वं प्रायिकं । तेन नमोवाकं प्रशास्महे इति सिद्धम् । वचेर्वस्ज् चजोरिति कः । कसिगतिशासनयोः । शासनमाज्ञा । तालव्यांतोप्यनिदित् छशषेति षत्वं ष्टुत्वम् । कष्टे । षढोरिति कः षत्वं च । कक्षे । षत्वष्टुत्वे । झषे इति ढः । कड्ढ्वे । णिजि शुद्धौ । अनिट्केषु णिजिरिति जौहोत्यादिकस्य ग्रहणादयं सेट् । चोः कुरिति जस्य गः । खसेचपा इति कः । निंक्ते गत्वकत्वषत्वानि । निंक्षे । शिजि अव्यक्ते शब्दे । क्तप्रत्यये शिंजितं । णिन्यंतादपि कृते । शिंजिनी भूषणानांतु शिंजितमित्यमरः । मौर्वी ज्या शिंजिनी गुण इतिच । चोःकुरिति जस्यगः । खसे चपा इति कः । शिंक्ते । पिजि वर्णे संपर्चने च । संपर्चनं मिश्रीभावः ।

**मू०—ईडीशिभ्यांसध्वयोरिट् ॥** ईडिषे । ईडिध्वे ।

सुबोधिनी—ईडीशिभ्यांसध्वयोरिट् । आभ्यां परयोः सध्वशब्दयोरिट् स्यात् ।

**मू०—लङोध्वस्यनेट् ॥** ऐड्ढ्वम् । ईड ईडांचक्रे । ऐडिष्ट । ईश ऐश्वर्ये । ईष्टे । ईशिषे । ईशिध्वे । ईशांचक्रे । ईशितासे । आसउपवेशने । आस्ते । आध्वे । आसांचक्रे । वस आच्छादने । वस्ते । ववसे । अवासिष्ट । षूङ् प्राणिगर्भविमोचने । सूते । सुवातोः । सुवाते । सूताम् ।

सुबोधिनी—लङोध्वस्यनेट् । ईडीशिभ्यां परस्य लङो ध्वशब्दस्य इण्नस्यात् । आस उपवेशने । उपवेशनं स्थितिः । धिचेति सलोपे आध्वं । कासादिप्रत्ययादित्याम् । आसांचक्रे । वस आच्छादने । धिचेति सलोपे । वध्वे शसददेत्येत्वपूर्वलोपौ न । ववसे । षूङ् प्राणिगर्भविमोचने । प्राणिगर्भविमोचनं प्रसवः ।

**मू०—सुवोनगुणश्चतुर्षु ॥** सुवावहे । सुषुवे । सविषीष्ट, सोषीष्ट । सविता, सोता । शीङ् । स्वप्ने ।

सुबोधिनी—सुवोनगुणश्चतुर्षु । सुवो गुणो न स्यात् त्यादिषु चतुर्षु । स्वरतिसूतीति विकल्पं बाधित्वा कित इति निषेधे प्राप्ते क्रादिर्णादेरिति नित्यमिट् । नुधातोरित्युव् । सुषुविषे । स्वरतिसूतीति वेट् । सविषीष्ट सोषीष्ट । शीङ् । स्वप्ने । स्वप्नमालस्यं निद्रा च ।

**मू०—शीङोगुणश्चतुर्षु ॥** शेते । शयाते ।

सुबोधिनी—शीङोगुणश्चतुर्षु । क्ङित्यद्युसीत्यस्यापवादः ।

**मू०—शीङोऽतोरुट् ॥** शीङः परस्यातो रुडागमः । शेरते । शेताम् । अशेत । अशेरत । शिश्ये । अशयिष्ट । इङ्अध्ययने अधिपूर्वः । अधीयाते । अधीयीत । अधीयीयाताम् । अध्ययै । अध्येत । अध्यैयाताम् ।

सुबोधिनी–शीङोरुट्। शीङः परस्यातः प्रत्ययस्य रुडागमः स्यात्। तुधातोरिति यः। शिश्य। इङ् अध्ययने। अध्ययनं पठनं। नुधातोरितीय्। अधीयाते। आतोऽन्तोदनत इत्यत्। अधीयते। लिटि उत्तमपुरुषे गुणायादेशयोः कृतयोऽनुपसर्गस्य इयङ्स्वरे इति यत्वम्। अध्यये। लङि अध्यैत। प्रयनभिय् ततोऽटो। अध्यैयाताम्। अध्यैयत। उत्तमे तु अध्यैयि। अध्यैवहि।

तत्त्वदीपिका–अध्यैयातामिति। परत्वादियादेशे पुनरडागमद्वयेन सिद्धिः।

**मू०–इङोणाद्गोगाङ्॥** अधिजगे। अध्येषीष्ट।

सुबोधिनी–इङोणाद्गोगाङ्। इङो गाङादेशः स्याल्लिटि। आतोनपीत्यालोपः। अधिजगे।

**मू०–इङोवागीर्लुङ्ल्ङोर्गुणाभावश्च॥** अध्यगीष्यत, अध्यैष्यत। अध्यगीष्ट, अध्यैष्ट।

सुबोधिनी–इङोवागीर्लुङ्ल्ङोर्गुणाभावश्च। इङो गी इत्यादेशो वा स्यात् गुणनिषेधश्च लुङ्ल्ङोः परयोः। इत्यात्मनेपदम्॥

तत्त्वदीपिका–कृतायामिह टीकायां लोकेशंकरशर्मणा। अगादादिमध्यस्थमात्मनेपदसाधनम्॥

**मू०–** द्विष अप्रीतौ। द्वेष्टि। द्विष्टः। द्वेष्टु। द्विड्ढि। अद्वेट् अद्वेड्। अद्विष्टाम्। अद्विषुः। अद्विषन्। दिद्वेषिथ। द्विक्षीष्ट। अद्विक्षत्। दुह प्रपूरणे। दादेर्घः। तथोर्धः। दोग्धि। दुग्धः दुहन्ति। धोक्षि। दुग्धे। दोग्धु दुग्धि। दोहानि। अधोक् अधोग्। दुदोह। धुक्षीष्ट। अधुक्षत। अदुग्ध। अधुक्षत। अधुक्षाताम्। अदुग्धाः अधुक्षथाः। अधुग्ध्वम्। अधुक्षध्वम्। अदुह्वहि। अधुक्षावहि। दिह उपचये। देग्धि। लिह आस्वादने। लेढि। लीढः। ष्टुञ् स्तुतौ। स्तौति, स्तवीति। स्तुतः स्तुवीतः। स्तुवन्ति। स्तौषि। स्तवीषि। स्तुते। स्तुवीते। स्तुवीष्व। अस्तौत्। तुष्टोथ। तुष्टुव। तुष्टुम। स्तोषीष्ट।

सुबोधिनी–द्विष अप्रीतौ। अप्रीतिः शत्रुता। ष्टुत्वं। द्वेष्टि द्विष्टे। द्विष्यात् द्विषीत। द्विष्टां। हौ ढुत्वं। झबेजबा इति डत्वं। द्विड्ढि। द्वेषाणि द्वेषै। दिस्योरिति दिप्सिपोर्लोपः। वावसाने इति वादः। अद्वेट् अद्वेड्। आदंताद्विष इत्यत उस् वा। अद्विषुः अद्विषन्। आति तु। अद्विष्ट। दिद्वेष दिद्विषे। द्विष्यात्। षढोरिति कः। षत्वं च। द्विक्षीष्ट। द्वेष्टा। द्वेक्ष्यति द्वेक्ष्यते। अद्वेक्ष्यत्। अद्वेक्षत। हशषांतादिति सक्। अद्विक्षत् अद्विक्षत। आतिस कोलोप इत्यल्लोपे अद्विक्षाताम्। दुह प्रपूरणे। प्रपूरणं त्यजनम्। दादेर्घ इति घः तथोरिति तस्य धः झबेजबा इति गः। दोग्धि। सिपि तु घत्वम् आदिजबानामिति घ खसेचपा इति कः षत्वं च धोक्षि। लुङि दिस्योरिति दिप्सिपोर्लोपः धत्वढत्वकत्वानि। अधोक्। लुङि हशषांतादिति सक्। ढत्वकत्वषत्वानि। अधुक्षत् आति तु अधुक्षत। दुहदिहेतिसको लुक्पक्षे तन्थासध्ववहिषु लङ्वत् धत्वं तथोर्ध इति धत्वं झबेजबाइति गः अदुग्ध। अदुग्धाः। धत्वे अदुग्धम् अदुह्वहि। दिह उपचये। उपचयो वृद्धिः। लिह आस्वादने। होढ

इति ढः तथोर्धोऽ इति धः ष्टुत्वं ढिढोलोप इति ढलोपः । लेढि । सिपि ढत्वं षढोःकःसि इति कः षत्वं । लेक्षि । हौ ढत्वं झसादिति हेर्धिः ष्टुत्वं ढिढ इति ढलोपपूर्वदीर्घौ । लीढि । लुङि हशषांता-दिति सक् । अलिक्षत् । आति तु अलिक्षत । दुहदिहेति सको लुक्पक्षे ढत्वधत्वष्टुत्व ढलोपपूर्वदीर्घाः । अलीढ । आतिसक इत्यल्लोपे । अलिक्षाताम् । अलिक्षत । अलीढाः आलिक्षथाः । अलोपः । अलिक्षाथाम् । अलीढ्वम् । अलीक्षध्वम् । अलिक्षि । अलिह्वहि । अलिक्षावहि । अलिक्षामहि । ओरौ इत्यौ । स्तौति । तुरुस्तुभ्य इतीड्वा । स्तवीति । नुधातोरित्युव् । स्तुवंति ॥

**मू०-स्तुसुधूञ्भ्यःपसेरिट् ॥** अस्तावीत् । अस्तोत् । ब्रूञ् व्यक्तायांवाचि ।

सुबोधिनी-स्तुसुधूयांपसेरिट् । ष्टुञ् स्तुतौ । षुञ् अभिषवे । धूञ् कंपने । एषां पर-स्मैपदस्य सेरिट् आति तु न । धातोर्नामिन इति वृद्धिः । अस्तावीत् । आति तु गुणः । षत्वष्टुत्वं । अस्तोष्ट ।

**मू०-अबादौपितितिस्मि॥**ब्रूञईप्रत्ययोऽबादौ पितितिस्मि । ब्रवीति । ब्रूतः । ब्रुवन्ति ।

सुबोधिनी- अबादौपितितिस्मि । ब्रुवः परेषां पितां तिबादीनां चतुर्णां तकारसकारमका-रादिप्रत्ययानामिडागमः स्यात् ।

तत्त्वदीपिका-अबादाविति । अपूआदिःस्थानीयस्यसतथाअलुक् । तेनलुग्विषय इत्यर्थः । त्स्मीत्यत्र हिसतकारकोनिर्देशः दस्यत्वसेचपा इतितः । तेनाब्रवीदितिसिध्यति ।

**मू०-ब्रुवआहश्चपञ्चानाम् ॥** ब्रुवः परेषां पञ्चानां सिबादीनां णबादयः पंचादेशा वा स्युः । ब्रुव आहश्च । आह । आहतुः । आहुः ।

सुबोधिनी-ब्रुवआहश्चपंचानां । ब्रुवः धातोराहादेशः अकार उच्चारणार्थः तिबादीनां पंचानां क्रमेण णबादयः पंचादेशाश्च । अत्रद्विश्चेति द्वित्वं न उक्तार्थइत्युक्तत्वात् ॥

तत्त्वदीपिका-पंचानामिति । आदेशादेशिनोः संख्यासाम्यादादेशा अपि पंचैव ग्राह्याः । द्विश्चेत्यत्र परोक्षार्थणादियोगेद्वित्वविधानादेतद्योगेद्वित्वंन । तथा । आहइत्यनुवर्त्य तच्च षष्ठ्याविपरिणम्यषष्ठ्यानिर्दिष्टत्वेनान्त-स्येत्याह हस्येति ।

**मू०-तस्थे ॥** आहो हस्य तस्थे परे । आत्थ । आहथुः । ब्रूते।ब्रवीतु । अब्र-वीत् ।

सुबोधिनी-तस्थे ॥ आह इत्यनुवर्त्तते तच्च षष्ठ्या विपरिणम्यते षष्ठीनिर्दिष्टत्वेनांतस्य हस्येत्यर्थः ।

**मू०-ब्रूञोऽनपिवच् ॥** उवाच । ऊचे । अवोचत् । अवोचत । आदाथइः । अवोचेताम् । अवोचन्त । अवोचथाः । अवोचेथाम् । अवोचध्वम् । अवोचे । अवोचावहि । ऊर्णुञ् आच्छादने ।

सुबोधिनी–ब्रूञोनपिवच् । ब्रूञो वचादिशः स्यादचतुर्षु णबादौ । पूर्वस्येति पूर्वस्य संप्रसारणम् । उवाच । यजामितिसंप्रसारणम् । ऊचतुः । अस्यतिवक्तीति ङः । ङवचेरित्युम् । अवोचत् । ऊर्णुञ् आच्छादने । आच्छादनमावरणम् ॥

**सू०–ऊर्णोतिर्वावृद्धिर्हसादौपितिचतुर्षु ॥** ऊर्णौति, ऊर्णोति । ऊर्णुतः । ऊर्णुवंति, ऊर्णुते । ऊर्णुयात्, ऊर्णुवीत् । ऊर्णौतु, ऊर्णोतु । ऊर्णुहि ।

सुबोधिनी–ऊर्णोतिर्वावृद्धिर्हसादौपितिचतुर्षु । ओरौ इति नित्ये ओत्वे प्राप्ते इयं विभाषा । हसादौ किम् । ऊर्णवानि । पिति किं । ऊर्णुतः । वृद्ध्यभावे गुणः । ऊर्णौति । उर्णोति । नुधातोरित्युव् । ऊर्णुवंति ॥

तत्त्वदीपिका–ऊर्णोतेरिति । श्तिपानिर्देशो यङ्लुग्व्यावृत्त्यर्थः ।

**सू०–ऊर्णोतेर्गुणोदिस्योः ॥** वृद्धेरपवादः । और्णोत् । और्णोः ।

सुबोधिनी–ऊर्णोतेर्गुणोदिस्योः । ऊर्णोतेर्गुणः स्यात् दिपि सिपि च । ऊर्णोतिर्वा इत्यस्यापवादः ॥

**सू०–ऊर्णोतेराम्न ॥**

सुबोधिनी–ऊर्णोतेराम्न । अनेकस्वरत्वात्प्राप्त आम् अनेन निषिध्यते ॥

**सू०–स्वरादेः परः ॥** स्वरादेर्धातोर्द्वितीयोऽवयवोऽद्विरुक्तःसस्वरोद्विर्भवति । **स्वरात्परास्संयोगादयोवनदराद्विर्न ॥** ऊर्णुनाव । ऊर्णुनुवतुः ।

सुबोधिनी–स्वरात्पराःसंयोगादयोवनदराद्विर्न। संयोगादयो वकारनकारदकाररकारास्तेषां द्वित्वंनेत्यर्थः। यथा । उंदी । उंदिदिषति । इदि । इंदिदिषति । अड्ड । अड्डिडिषति । अर्च् । अर्चिचिषति । स्वरादेः परः सस्वरआदिरित्यस्यापवादः । अद्विरुक्तेत्युक्तत्वात् इयायेत्यादौ नातिप्रसंगः । आद्योच्चारणनकार एव णत्वं तु षुरुर्नोण इत्यनेन विधीयते तेन नुशब्दस्य द्वित्वम् ॥

तत्त्वदीपिका–स्वरादेरिति । सस्वरआदिरित्यस्यापवादः । अद्विरुक्तइति । तेनइयाजेत्यादौ नातिप्रसंगः।

**सू०–ऊर्णोतेरिडादिप्रत्ययोवाङित् ॥** ऊर्णुनुविथ, ऊर्णुनविथ । ऊर्णुविता, ऊर्णविता । **ऊर्णोतेर्वावृद्धिस्सौपे ॥** पक्षे वा गुणः । और्णावीत् । और्णाविष्टाम् । और्णवीत्, और्णुवीत् । और्णुविष्टाम् । और्णविष्ट, और्णुविष्ट ॥ इत्यदादयः ॥

सुबोधिनी–ऊर्णोतेरिडादिप्रत्ययोवाङित् । ङित्त्वपक्षे तु नुधातोरित्युव् । ऊर्णुनुविथ । पक्षे गुणः । ऊर्णुनविथ । और्णावीत् और्णवीत् और्णवीत इत्यात्पे ।

तत्त्वदीपिका–कृतायामिहटीकायांलोकेशंकरशर्मणा । गणोदादिरगादेषशेषभाषितदष्टगः ।

इत्यदादयः ।

**सू०–हु दानादनयोः । ह्वादेर्द्विश्च ॥** हुइत्यादेरुत्पन्नस्यापो लुक् धातोश्च द्वित्वम् । जुहोति । जुहुतः ।

सुबोधिनी–हु दानादनयोः । आदानेचेत्येके । प्रीणनेपीतिभाष्यम् । दानं चेह प्रक्षेपः ॥ ह्वादेर्द्विश्च । हु आदिर्यस्य स ह्वादिस्तस्य ह्वादेः । अदादेरित्यतो लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते । ह्वादेरिति कर्म्मणिषष्ठी । उच्चारणक्रियायाः कर्म्मत्वात् । तथा च लुकि सति ह्वादिर्द्विवारमुच्चारणीय इति फलितम् । द्विःप्रयोगाद्द्विर्वचनमिति सिद्धांतः ॥

तत्त्वदीपिका–हु दानादनयोः । दानमिह प्रक्षेपमात्रम् । अग्नौ हविषश्चेति स्वभावाल्लभ्यते । अस्य च नित्यपरस्मैपदित्वात् कुत्रचिद्धोष्यत इत्यादिप्रयोगाः प्रामादिका एव स्मर । अग्नौ जुह्वाना इत्यत्र न शानः किन्तु आनशप्रत्ययान्तम् । ह्वादेः हु आदिर्यस्य तथा तस्य । द्वौ वाराविति द्विः योग्यतयेहोच्चारणक्रियालभ्यते । तदावृत्तौ द्विशब्दात्सुः लुगित्यनुवृत्तं सप्तम्या विपरिणम्यते । तस्मिन्सतीत्यर्थः ।

मू०–द्वेः ॥ द्विरुक्तात्परस्यान्तोऽत् । जुह्वति । जुहोषि । जुहुथः । जुहुथ । जुहोमि । जुहुवः जुहुमः । जुहुयात् ।

सुबोधिनी–द्वेः । द्वेः किं । युवंति । हुन्वोरिति वः । जुह्वति ॥

तत्त्वदीपिका–द्वेः । द्विर्वचनमस्यास्तीति विग्रहे मत्वर्थीय इप्रत्ययोऽव्ययस्य तद्धितस्वरयोष्टिलोपश्चास्मादेव लिंगात् द्विस्तस्मात् । आतोन्त इति द्वयमप्यनुवृत्तम् ।

मू०–जुहोतेर्हेर्द्धिः ॥ जुहुधि । अजुहोत् ।

सुबोधिनी–जुहोतेर्हेर्द्धिः । जुहोतेः परस्य हेर्धिः स्यात् लोडुत्तमे तु परत्वाद्गुणः । जुहवानि ॥

मू०–अनउस् ॥ द्विरुक्तादन उस् । उसि गुणः । अजुहवुः । जुहाव ।

सुबोधिनी–अनउस् । द्वेरित्यनुवृत्तं । परत्वादुसिचेति गुणः । अजुहवुः ॥

तत्त्वदी०–अनउस् । द्वेरित्यनुवृत्तेराह । द्विरुक्तादिति ।

मू०–भीन्हीभृहुवामाम्वासचलुग्वत् ॥ जुहवांचकार । ये । हूयात् । होता । होष्यति । अहौषीत् । ञिभी भये । बिभेति ।

सुबोधिनी–भीन्हीभृहुवामाम्वासचलुग्वत् । एभ्यश्चतुर्भ्यो वाम् प्रत्ययो भवति लिटि स चाऽमलुग्वत् । कार्य्यातिदेशोयम् । तेन लुकि सति यत्कार्य्यं द्वित्वादि तदामिपरेपि भवतीत्यर्थः। जुहवांचकार । पक्षे जुहाव । येइति दीर्घः । हूयात् । होता । होष्यति । अहोष्यत् । धातोर्नामिन इति वृद्धिः । अहौषीत् ॥

मू०–ङितिह्सेभीह्राकोरिद्वा ॥ बिभीतः, । बिभितः बिभ्यति । बिभीयात् बिभियात् । बिभेतु बिभीतात् बिभितात् । अबिभयुः । बिभयांचकार । बिभाय । अभैषीत् । न्ही लज्जायाम् । जिन्हेति । अजिन्हयुः । जिन्हयांचकार । जिन्हाय । न्हीयात् । हेता । अहैषीत् । पॄपालनपूरणयोः ।

सुबोधिनी–ङितिह्सेभीह्राकोरिद्वा । अनयोः स्वरस्य वेकारो भवति ङिति ह्से परे ॥

मू०–ऋप्रोरिःपूर्वस्य ॥ ऋप्रोः पूर्वस्यात इत् लुकि । पिपर्ति ।

सुबोधिनी–ऋप्रोरिःपूर्वस्य । ऋ गतौ । पॄ पालनादौ । गुणे कृते । पिपर्ति ॥

मू०-पोरुर् ॥ पवर्गात् वकाराच्च ऋत उर् अगुणवृद्धौ प्रत्यये ॥ य्वोर्विहसे । पिपूर्तः । पिपुरति पिपूर्य्यात् पिपूर्ताम् । पिपुरतु । दिस्योर्हलात् अपिपः । पपार । पपरतुः । पपरिथ । पूर्य्यात् । परिता परीता । परिष्यति । परीष्यति । अपारीत् । पृपालनपूरणयोः । पिपर्ति । पिपृतः । पिप्रति । पिपृया त् । पिपर्तु, पिपृतात् । पिपृताम् । पिप्रतु । पिपृहि, पिपृतात् । पिपृतम् । पिपृत । पिपराणि । पिपराव । पिपराम । अपिपः अपिपृताम् । पपार । पप्रतुः । पप्रुः । पपर्थ । प्रियात् । पर्ता परिष्यति । अपरिष्यत् । अपार्षीत् । अपार्ष्टाम् । ओहाक् त्यागे । जहाति ।

सुबोधिनी-पोरुर् । पवर्गात् वकाराद्युत्तरस्य ऋत उर् । यथा तुर्वर्यति य्वोर्विहसे इति दीर्घः । पिपूर्त्तः । द्वेरित्यतोऽत् पिपुरति । दिस्योरिति दिपूसिपोर्लुक् । अपिपः । आसि तु गुणः । आपिपरुः । ऋसंयोगादित्यकित्त्वाद्गुणः । पपरतुः । वृङ्वृञिति वेटोदीर्घः । परिता, परीता ॥

तत्त्वदीपिका-पोरुर् । धात्वत्वयवात्पवर्गादिति बोध्यम् । तेन समीर्णमित्यादौ नातिप्रसंगः ।

मू०-द्वेस्तौ ॥ द्विरुक्तस्य धातोरातो लोपः ङिति स्वरे । ईकारश्च ङितिहसे । जहीतः जाहितः । जहति । जहातेर्यादादावालोपः । जह्यात् ॥

सुबोधिनी-द्वेस्तौ । द्वौवाराविति द्विरुच्चारणं । सुप्रत्ययः द्विरकारि इति । ञिङित्करणे इति ञितौ । स्वंतस्य टिलोपः । औणादिके इप्रत्यये ञिलोपः । अत्रानुवृत्त्यैव ईलोपयोर्लाभेपि अनंतरत्वादीकारस्यैव ग्रहणं माभूदित्येतदर्थं तावित्युक्तं । ननु तर्हि द्वेश्चेति पाठ्यं अनंतरत्वादाश्चालोपेनुवर्ततां एवं ङिति हसे लोपः । ङिति स्वरे ईरिति विपर्ययस्यापि संभवात् । तावित्युक्ते तु नातः ईहसे अनयोर्यादृशौ दृष्टौ तावेवाऽत्र स्त इति न दोषः । पक्षे भीहाकोरिति इत्वं । जहितः हाको यादादावालोपः ॥

तत्त्वदीपिका-द्वेस्तौ द्वेरित्यस्य पूर्ववत्प्रक्रिया । अनुवृत्त्यैव ईलोपयोर्लाभेऽपिअनन्तरत्वादीकारस्यैव ग्रहणं मा भूदित्येतदर्थंतावित्युक्तम् । ओर्वमोरितो लोपः ईहसे इत्यत ईकारस्तस्य हसे इत्यनेन योगाद्धसे ईकारः परिशेषात्स्वरे लोपः ।

मू०-ईर्वाहौ ॥ जहातेर्हौ परे इकार ईकारश्च वा । जहिहि जहीहि जहाहि । अजहात् । अजहिताम् अजहीताम् । अजहुः । जहौ । दादेरे । हेयात् । अहासीत् ऋ गतौ । असवर्णे स्वरेइयु । इयर्ति । इयृतः । इय्रति इयृयात् । इयर्तु । ऐयः । ऐयृताम् । ऐयरुः । आर । आरतुः । आरुः । अत्यर्तिव्ययतीनामितीट् । आरिथ । आरत् । सृ गतौ ससर्ति । ससर्थ । स्रियात् । असरत् । इतिपरस्मैपदम् ।

सुबोधिनी-ईर्वाहौ । जहातेर्हौ परे इत्वमीत्वमात्वं च भवति । अत एव भट्टिः प्रायुंक्त । जहिहि जहीहि जहाहि रामभार्यामिति दादेरित्येत्वं । हेयात् यमिरमिनमातामितीट्सकौ ।

अहासीत् । ऋप्पोरिति पूर्वस्येत्वं । असवर्णे स्वरे इतीय् । इयर्ति । लङि अडागमोदिस्योरिति दिप्सिपोर्लोपः । ऐयः । डसि तु गुणः । ऐयरुः । अत्यर्तिव्ययतीनामिति थपि नित्यमिट् । आरिथ । आशिषि गुणोर्त्तीति गुणः अर्यात् । हनृत इतीट् । अरिष्यति । सर्तिशास्त्यर्त्तिभ्य इति ङः । ऋवर्णदृशोरिति गुणः । आरत् । आरतां । आरन् । इति परस्मैपदम् ।

तत्त्वदी०–ईर्वाहौ ई इरिति छेदः तयोरभावपक्षे आकारः स्थित एव ।

कृतायामिहटीकायांलोकेशंकरशर्मणा । अगमद्भ्वादिमध्यस्थपरस्मैपदसाधनम् ।

इतिपरस्मैपदम्

**मू०–ओहाङ्गतौ । भृञ्ञांलुकि ॥ डुभृञ् हाङ् माङां पूर्वस्यात इत् लुकि । जिहीते । जिहाते । जिहते । जहे । अहास्त । माङ्माने । मिमीते । ममे । अमास्त । इत्यात् ।**

**सुबोधिनी**–भृञ्ञांलुकि । बहुवचनेन डुभृञ् हाङ् माङामिति त्रयाणां ग्रहणं । द्वेरित्यतोन् । जिहते । आतोनपीत्यालोपः । जहे । जहाते । इत्यात्मनेपदम् ।

तत्त्व०–कृतायामिहटीकायांलोकेशंकरशर्मणा । अगमद्भ्वात्मनेपदम्मध्यस्थमात्मनेपदसाधनम् । इत्यात् ।

**मू०–डुभृञ् धारणपोषणयोः । बिभर्ति । बिभृतः बिभ्रति । बिभृयात् । बिभर्तु । अबिभः । बिभरांचकार । बभर्थ । बभृव । बभृम । बभ्रे बभृद्वे । भृषीष्ट । अभार्षीत् अभृत । डुदाञ्दाने । ददाति ।**

**सुबोधिनी**–डुभृञ् धारणपोषणयोः । ड्वितःत्रिमक् इति त्रिमक् । भृत्रिमं । भृञ्ञांलुकि इति पूर्वस्येत्वं बिभर्ति । बिभृते । बिभृयात् । बिभ्रति । बिभर्तु । बिभृतां । दिस्योरिति दिप्सिपोर्लोपः । अबिभः । डसि तु गुणः । अबिभरुः अबिभृत । भीन्हीभृहुवामिति वाम् । बिभरांचकार बिभरांचक्रे । पक्षे बभार । बभ्रे । यादादपि इति रिङ् । भ्रियात् । उरिति न गुणः । भृषीष्ट ।भर्त्ता । हनृत इतीट् । भरिष्यते । अभरिष्यत् । अभरिष्यत । धातोर्नामिन इति वृद्धिः । अभार्षीत् । लोपोन्ह्स्वादिति सिलोपः अभृत ॥

तत्त्वदीपिका–भृञ्ञामिति । कपिञ्जलाधिकरणन्यायेन धातुत्रयमेव लभ्यतइत्याह डुभृञ् हाङ्माङामिति । डुभृञ् । ड्वितस्त्रिमगर्थोडुः ।

**मू०–दादेः ॥ द्विरुक्तानामपिदाधाम्नातोलोपोङितिति । दत्तः । ददति । दत्ते । ददातु ।**

**सुबोधिनी**–दादेः । द्वेरित्यनुवृत्तं । द्वेस्त इत्यस्यापवादो येननाप्राप्तिन्यायात् ॥

तत्त्वदीपिका–दादेरिति । द्वेस्तावित्यस्यापवादो येननाप्राप्तिन्यायात् ।

**मू०– दांहौ ॥ अपिदाधामेत्वं पूर्वस्य च लोपो हौ । देहि । अददात् । ददौ । ददिथ । ददाथ । देयात् । अदात् । अदित । अदिषाताम् । डुधाञ् धारणपोषणयोः । दधाति ।**

**सुबोधिनी**–दांहौ । बहुवचनेन धाञो ग्रहणं । लिटि आतोणबित्यौकारः । ददौ । आतोनपीत्यालोपः । ददे । दादेरित्येत्वं । देयात् । दादेःपे इति सेर्लुक् । अदात् । आति तु अपिदाधास्थामितीत्वं स्योलोपोन्ह्स्वादिति सिलोपः । अदित । डुधाञ् धारणपोषणयोः । दानेपीत्येके ॥

तत्त्व०–दामिति। बहुवचनेन दारूपाणां ग्रहणं धाग्रहणं च।

**मू०–पूर्वस्यडिङतिझसेधः॥** धात्रपूर्वस्य दकारस्य धो भवति ङिति झसे परे। धत्तः। दधति। धत्ते। धेहि। अधात्। धेयात्। अधित। अधिषाताम्। णिजिर् शौचपोषणयोः।

सुबोधिनी–पूर्वस्याङितिझसेधः। धात्रधातोरेवेत्यर्थः। झसे किम्। दधति दधाति। दादेरित्यालोपे तथोर्धे इति धत्वं न। दधातेर्नेत्युक्तत्वात्। धत्तः। धत्तेदादेरित्यालोपः दध्यात्। दधीत। दधातु। धत्तां। अदधत्। अधत्त। दधौ। दधे। धेयात्। धासीष्ट। धाता। धास्यति। धास्यते। अधास्यत्। अधास्यत। दादेःपे इति सिलोपे। अधात् अपिह्वाधास्थामितीत्वं। अधित्॥

तत्त्वदीपिका–धत्त इति। तथोर्द्धइत्यत्र वावसान इत्यतो वानुवृत्तेर्व्यवस्थया तथात्वभावः।

**मू०–निजांगुणः॥** णिजिविजिविषां पूर्वस्य गुणो लुकि। नेनेक्ति। नेनिक्तः। नेनिजति। नेनेक्षि नेनिक्षे। नेनिज्यात्। नेनेक्तु। नेनिग्धि।

सुबोधिनी–निजांगुणः। बहुवचनमाद्यर्थं। बहुवचनेन त्रयाणां ग्रहणं। णिजिर् शौचपोषणयोः। विजिर् पृथक्भावे। विष्लृ व्याप्तौ। एषां पूर्वस्य गुणो लुकि॥

**मू०–द्वेःस्वरेपिनोपधागुणः॥** द्विरुक्तस्य धातोः पितिविषयेस्वरे परे उपधाया गुणो न। नेनिजानि। अनेनेक्। अनेनेग्। निनिजिषे। निनेज। निनिजे। निक्षीष्ट। अनिजत् अनैक्षीत्। अनैक्ताम्। अनिक्त। विजिर् पृथक्भावे। वेवेक्ति। विवेजिथ। विक्षीष्ट। अविजत्। अवैक्षीत्। अविक्त। विष्लृव्याप्तौ। वेवेष्टि। विविषीध्वे। विक्षीष्ट। अविषत्। तनिहशषान्तात्सक् अविक्षत्। अविक्षाताम्। अविक्षन्त। इत्युभयपदप्रक्रिया॥ इतिजुहोत्यादयः॥

सुबोधिनी–द्वेःस्वरेपिनोपधायागुणः। द्विरुक्तस्य धातोरुपधाया गुणो न चतुर्षु पिति स्वरे। द्विरुक्तस्य किं। द्वेषाणि। स्वरे किं। वेवेष्टि। चतुर्षु किम्। निनेज। नेनेक्ति। नेनिक्ते। नेनिज्यात्। नेनिजीत्। नेनेक्तु। नेनिक्तां। दिस्योरीति दिपूसिपोर्लोपः। अनेनेक्। अनऊसि अनेनिजुः। अनेनिक्त। निनेज। निनिजे। निज्यात्। सिस्योरीति न गुणः। निक्षीष्ट। नेक्ता। नेक्ष्यति। नेक्ष्यते। अनेक्ष्यत् अनेक्ष्यत। इरितोवेति वा ङः। अनिजत्। अनिटोनामिति वृद्धिः। अनैक्षीत्। आति तु झसादिति सिलोपः। अनिक्त। अनिक्षातां। विजिर् पृथक्भावे। विवेजिथ। अत्र विजेरिडादिप्रत्यय इति ङित्वं न। ओविजीभयचलनयोरित्यस्यैव तत्र ग्रहणात्। निजिविजीरुधादावपि। विष्लृव्याप्तौ। व्याप्तिः कार्त्स्न्यं। लित्पुषादेरिति ङः॥ अविषत्। आति तु। हसषांतादिति सक् षढोरिति कः। अविक्षत। आतिसकोलोप इति स्वरे अल्लोपः। अविक्षातां। अविक्षंत। इत्यात्मनेपदपरस्मैपदे। ॥ इतिजुहोत्यादयः॥३॥

तत्त्वदीपिका–कृतायामिहटीकायांलोकेशंकरशर्मणा। संक्षिप्तो बालबोधार्थं जुहोत्यादिगणोऽगमत्।

इतिजुहोत्यादिः।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु

सू०— दिवादेर्यः ॥ कर्त्तरि चतुर्षु । अपोऽपवादः । य्वोर्दीर्घ इति । दीव्यति । दीव्यतु । दिदेव दीव्यात् । अदेवीत् । षिवु तन्तुसन्ताने । सीव्यति सिवादेरड्व्यवायेऽपि वा षः । न्यषेवीत् । न्यसेवीत् । ष्ठिवु गतिशोषणयोः । ष्ठीव्यति । तिष्ठेव । ष्ठिवु निरसने । ष्ठीव्यति । ष्णुसु अदनादानदर्शनेषु । सुष्णोस । ष्णसु निरसने । ष्णस्यति । क्नसु कौटिल्ये द्वीप्तौ च । चक्नासिथ । अक्नासीत् । अक्नसीत् । व्युषु पुषु दाहे । बुव्योष । नृती गात्रप्रक्षेपे । नृत्यति ननर्त ।

सुबोधिनी—दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकांतिगतिषु । उदित्करणं क्त्वाप्रत्यये इड्विकल्पार्थं क्तक्तवत्वोरनिडर्थं च । किङति इति क्रौ उभ ऊठ् । द्यूत्वा । देवित्वा । द्यूतेन दीव्यंति माणवकाः । क्रीडंतीत्यर्थः । शत्रुं दीव्यति । विजिगीषतीत्यर्थः । कांतिरिच्छा । द्युतेः पृथग्ग्रहणात् ॥ दिवादेर्यः । दिव आदिर्यस्य स दिवादिस्तस्माद्यप्रत्ययःस्यात् कर्त्रर्थेषु चतुर्षु परतः । य्वोरिति दीर्घः । दीव्यति षिवु तंतुसंताने । आदेः ष्णः स्नःइतिसः । सीव्यति । सिवादेरड्व्यवायेऽपि षः । उपसर्गस्थान्निमित्तात्परस्य सिवादेः सस्याड्व्यवधानेऽपि षः स्यात् ॥ प्रादिश्चेत्यत्र सिवादिरुक्तः । नृतीगात्रविक्षेपे । नर्तने इत्यर्थः । इदित्करणमादीदित इत्यनेन क्तक्तवत्वोरिण्निषेधार्थम् । यद्यपि नृततृदेतीटो विकल्पितत्वात् क्वचिद्वेट् इत्यनेनैवेष्टं सिद्ध्यति तथापि क्वचिद्वेट् इति सूत्रस्यानित्यत्वज्ञापनार्थमिदित्करणम् । तेन धावुगतिशुद्ध्योरित्यस्मात् क्तप्रत्यये इति च धावितमिभराजधियेत्यादि सिद्धं ॥

तत्त्वदीपिका—दिवु । व्यवहारः क्रयादिः । उकारः क्त्वाप्रत्यये इड्विकल्पार्थः । दिवादेर्यः दिव आदिर्यस्य तथा तस्मात् । अपोऽपवाद इति । अपो गणविशेषाकांक्षाभावात्प्राप्तिः । दीव्यतीति । यप्रत्ययस्य ङित्त्वाद्गुणो न ।

सू०—नृततृदछृदचृतकृद्भ्योऽसेस्सादेरिड्वा ॥ नर्तिष्यति । नर्त्स्यति । अनर्तीत् । त्रसी उद्वेगे । आशम्लाशेति वा यः । त्रस्यति । त्रसति । तत्रास । तत्रसतुः । कुथ पूतीभावे । कुथ्यति चुकोथ । चुकोथिथ । पुथ हिंसायाम् । पुथ्यति अपोथीत् । गुध परिवेष्टने । गुध्यति । अगोधीत् । क्षिप प्रेरणे । क्षिप्यति क्षेप्ता । अक्षैप्सीत् । पुष्प विकसने । पुष्प्यति । पुपुष्प । तिम तीम ष्टिम ष्टीम आर्द्रीभावे । तिम्यति । तीम्यति । तितेम । तिष्टीम । व्रीड लज्जायाम् । व्रीडयति । विव्रीड । इष गतौ । इष्यति इयेष । ईषतुः । एषिता, एष्टा । ऐषीत् । षह षुह तृप्तौ । सह्यति । ससाह । सेहतुः । सेहुः । असहीत् । सुह्यति । जृषिर् झृष वयोहानौ जीर्य्यति । जजरतुः । जेरतुः । जीर्यात् । जरिता, जरीता । ऋवर्णदृशोरित्यनेन गुणः । अजरत् अजारीत् । झीर्यति । जझरतुः । अझारीत् । शो तनूकरणे ।

सुबोधिनी—नृततृदछृदचृदकृद्भ्योऽसेःसादेरिड्वा । एभ्यः परस्य सिभिन्नस्य सादेः प्रत्ययस्येड्वा स्यात् । उतृदिर् हिंसानादरयोः । उच्छृदिर् दीप्तिदेवनयोः । कृती छेदने । असेरित्यु-

कत्वादिह नित्यमिट् । अनर्तीत् । सप्रत्यये निनर्तिषति । निनृत्सति । भ्राशभ्लाशेति वा यः भ्रस्यति,त्रसति । फणरा जृइत्येत्वपूर्वलोपौ त्रेसतुः । अतोहलादेरिति वा वृद्धिः । अत्रासीत् । अत्रसीत् । कुथ पूतीभावे । पूतीभावः पवित्रभवनं । कुथ्यति भूमिः । पवित्रीभवतीत्यर्थः, पुष्प विकसने । पांतीयं । शतृप्रत्यये पुष्प्यत । पचाद्यच्प्रत्यये पुष्पं । संज्ञायां कप्रत्यये पुष्पकं ब्रीड चोदने लज्जायां च । चोदनं प्रेरणं । गुरोर्हसादित्यकुप्रत्यये आनत इत्याप् व्रीडा । घञि तु व्रीडः । अत एव "व्रीडादिवाम्यासगतेर्विलिल्ये" इति माघः । "व्रीडमावहति मे ससंप्र-तीति"कालिदासः । षह पुह तृप्तौ । तृप्तिस्तर्पणम् । इपुसहेतीड्विकल्पस्त्वस्य न भवति स-हेत्यपाणिदेशात् । नपुंसक भावे क्तप्रत्यये सुहितं तृप्तिः । जृषिड् वयोहानौ । पित्वात्षिद्भि-दामित्यङ्प्रत्यये जरा । ऋतइड् इतीड् । य्वोरिति दीर्घः । जीर्यति । ऋसंयोगाद्गुणाद्वितःयाकि-त्वाद्गुणे कृते श्वशदृवेति गुणशब्देन भावितस्य निषेधाल्लोपः । पच्चामित्यस्याऽप्रवृत्तौ फणरा-जृ इत्येत्वपूर्वलोपविकल्पः । जेरतुः,जजरतुः । वृद्धवृञ्ऋदंतानामिति वा दीर्घः । जरिता, जरीता । इगितोवेति वाङ् ऋदृर्णाद्दशोरिति गुणः अजरत् । पक्षे णिलेपे इति णित्वाद्धातोर्नामिन इति वृद्धिः । अजारीत् ॥

तत्त्वदीपिका—नृत । उर्दिर्हिंसानादरयोः उच्छृदिर् दीप्तिदेवनयोः । भ्रस्यति । भ्राशेति वा यः पक्षेऽय् पुष्पविकसने । पान्तः । तथा नभः पुष्प्यतु कोरकश्रीति श्रीहर्षः ॥ व्रीडा । व्रीडादिवाम्यासगतेर्विलिल्ये इत्यत्र घञ् । मंदाक्षं ह्रीस्त्रपा व्रीडेत्यत्र गुरोश्चेत्यः । पह अत्रषसहेतीड्विकल्पः कस्यचिन्मत न भवति । अवन्त-निर्देशाद्वीपादिकस्यैव तत्र ग्रहणात् महान्तस्तु । विकल्पं मन्यंते । अकारस्योच्चारणार्थत्वात् । जृष् । षकारो-जरैत्यत्राऽर्थः । अजरत् । ऋदृर्णाद्दशोरिति गुणः ।

सू०—श्योः ॥ यप्रत्यये परे धातोरोतो लोपः । श्यति । शशौ । शाता । अ-शात् । अशासीत् । छो छेदने । छ्यति । अच्छात् । अच्छासीत् । षो अन्त-कर्म्मणि । स्यति सेयात् । असात् । असासीत् । दोऽवखंडने । द्यति देयात् अदात् । राध साध संसिद्धौ ।

सुबोधिनी—श्योः । यि ओरिति च्छेदः । धातोरोतो लोपः स्यात् दिवादिविकरणे ये परे । तेन लव्यमित्यादौ न । शाछेति वा सेलुक् । अशात् । लुगभावे यमिरमनातीट्सकौ । अशा-सीत् । षोंतकर्म्मणि । अंतकर्म नाशः । दादेरे इत्येत्वं । सेयात् । राघवस्य शरैर्घोरैर्घोरं रा-वणमाहवे इत्यत्र राघवेति संबोधनं स्यति लोटो मध्यमस्यैकवचनांतम् दादेरित्येत्वम् । दे-यात् उपसर्गस्थान्निमित्तान्नेरिति णत्वम् । प्रणिदाता । दादेः पे इति सिलुक् । अदात् ॥

तत्त्वदीपिका—श्योः । यि ओरिति छेदः । विकरणप्रकरणत्वाद्दिवादेर्य इतिविहित एव गृह्यते । नत्वन्यः । तेन लव्यमित्यादौ नातिप्रसंगः । षो । अन्तकर्म नाशः ।

सू०— राधोऽकर्म्मकाद्वेवयः ॥ राध्यति । रराधिथ । राद्धा । रात्स्यति । अरात्सीत् । व्यध ताडने । ग्रहांङ्क्तिच । विध्यति । विव्याध । विविधतुः । विव्यधिथ । विव्यद्ध । व्यद्धा । अव्यात्सीत् । पुष पुष्टौ । पुष्यति । पुपोषिथ । पोष्टा । पोक्ष्यति । पुषादित्वात् ङः । अपुषत् । शुष शोषणे । शोष्टा । शोक्ष्यति । अशुषत् । तुष तुष्टौ । तोष्टा । तोक्ष्यति । अतुषत् । दुष वैकृत्ये । दोष्टा । अदुषत् । श्लिष् । आलिंगने । श्लेष्टा ।

सुबोधिनी—राधोऽकर्म्मकादेवयः। अकर्म्मकाद्राधेर्यप्रत्ययः स्यात् सकर्म्मकात्तु न यन्मह्यमपराध्यति। द्रुह्यतीत्यर्थः। विराध्यतं क्षमेत कः। द्रुह्यंतमित्यर्थः राध्यत्योदनः। सिध्यतीत्यर्थः। अकर्म्मकात् किं शत्रुमपराध्नोति। हिनस्तीत्यर्थः। राध संसिद्धौ हिंसायां च। स्वादिश्चुरादिश्चायम्। राधोहिंसायामित्यनेनैत्वपूर्वलोपाविह न। हिंसार्थकस्य सकर्म्मकतया दैवादिकत्वाऽयोगात्। ग्रहामिति संप्रसारणं। विध्यति लित्पुषादेरिति ङः। अपुषत्। षढोरिति कत्वं षत्वं च शोक्ष्यति॥

**मू०—आलिङ्गनेश्लिषेस्सक्॥** ङोऽपवादः। अश्लिक्षत्कन्यां चैत्रः। अनालिंगने तु। समश्लिषज्जतुकाष्ठम्। ष्विदा गात्रप्रक्षरणे। स्वेत्ता। अस्विदत्। क्रुध क्रोधे। क्रोद्धा। अक्रुधत्। क्षुध बुभुक्षायाम्। क्षोद्धा। अक्षुधत्। शुध शौचे। शोद्धा। अशुधत्। सिधु संराद्धौ। सेद्धा। असिधत्। रध हिंसायां च। रध्यति। ररन्ध। ररन्धतुः। ररन्धिथ, ररद्ध। ररन्धिव, रेध्व। ररन्धिम रेध्म।

सुबोधिनी—आलिंगनेश्लिषेस्सक्। अनिटः श्लिषेः सक् प्रत्ययः स्यात् आलिंगनर्थे। नान्यत्र। प्राणिकर्तृकमुपगूहनमालिंगनम् लित्पुषादेरित्यस्यापवादः। अनिटः किम्। श्लिषां दाहे इति सेटो भौवादिकस्य मा भूत्। अश्लेषीत्। इसषांतादिति सकिसिद्धे पुनः सको विधानं नियमार्थम्। तेन कर्म्मणि आतां प्रभृतिषु परतोऽनालिंगने सेरेव न तु सक् यथा इणुतनीतीण्। अश्लेषि। अश्लिक्षातां। अश्लिक्षत। अश्लिष्ठाः अश्लिक्षाथाम्। अश्लिड्ढ्वम्। अश्लिक्षि। अश्लिक्ष्वहि अश्लिक्ष्महि। ञिष्विदा गात्रप्रक्षरणे। गात्रप्रक्षरणं वर्मस्रुतिः। ञीदिति न्यासकारः। नेति हरदत्तः। ञीतांतक्तवर्तमानेपीति तक्। आदीदित इति नेट् स्विन्नः। भावे कर्तरि चादित इतीट् वा। स्विन्नम्। स्वेदितं। क्षुध बुभुक्षायाम्। भोक्तुमिच्छा बुभुक्षा अनिडयं। कथं तर्हि क्षुधित इति। क्विबंतादितोजातार्थे इतीव् प्रत्यय इति माधवः वस्तुतस्तु वसिक्षुध्योरिडिति वक्ष्यते। षिधु संराद्धौ। संराद्धिर्निष्पत्तिः। उदितः क्त्वावेति क्त्वाप्रत्यये इड्विकल्पः। सिद्धः। इट्पक्षे इवर्णोवर्णोपधाद्धसादेरिति वाकित्वं। सेधित्वा सिधित्वा। रधिजभोः स्वरे इति नुम्। ररंध। नुमि कृते संयोगात् परत्वेनाकित्वात् नलोपो न ररन्धतुः स्वरतिसूतीति सूत्रे रधाद्यष्टकोऽवांतरगणो ज्ञेयस्तेन गणनिर्दिष्टत्वाद्यङ्लुकि न वेट्। राराधिता। स्वरतीति। वेट्। ररंधिथ ररद्ध। लोपः पचामित्येत्वपूर्वलोपौ रेध्व। इट्पक्षे ररंधिव॥

तत्वदीपिका—अनालिंगनेत्विति। आलिंगनं प्राणिकर्तृकमुपगूहनं। षिधु। उदितो वेति वेट्त्वार्थ उः। संराद्धिः निष्पत्तिः। रधहिंसायां चेति। चात्संराद्धावित्यर्थः। ररंधिवेति नित्यत्वान्नुमि संयोगात्। कित्वाभावे न लोपो न।

**मू०—लिड्वर्जितेइटिरधेर्नुम्न॥** रधिता रद्धा। रधिष्यति रत्स्यति। अरधत्। णश् अदर्शने। नश्यति। ननाश। नेशतुः नेशिथ।

सुबोधिनी—लिड्वर्ज्जितेइटिरधेर्नुम्न। रधेर्नुम् न स्यात् इटि परे। लिट्संबंधिनीटि तु नुम् स्यादेव। इटि किं। रंधकः। लित्पुषादेरिति ङः। नुम्। नोलोप इति नस्य लोपः। अरधत्॥

तत्वदीपिका--णश् अदर्शने।

मू-मस्जिनशोर्झलि नुम् ॥ ननंष्ठ । नेशिव नेश्व । नेशिम नेश्म । नशिता । नंष्टा । नशिष्यति । नङ्क्ष्यति । अनशत् । तृप् प्रीणने । तृप्यति । ततर्पिथ तत्रप्थ ततर्प्थ । तर्पिता त्रप्ता तर्प्ता । तर्पिष्यति त्रप्स्यति । तर्प्स्यति । अतृपत् अतर्पीत् अत्राप्सीत् अतार्प्सीत् । दृप् हर्षगर्वयोः । दृप्यति । अद्राप्सीत् अदृपत् । द्रुह जिघांसायाम् । दुद्रोहिथ दुद्रोढ । दुद्रोग्ध । दुद्रुहिव दुद्रुह्व । दुद्रुहिम दुद्रुह्म । दुद्रोहिथ । द्रोग्धा द्रोढा । द्रोहिष्यति ध्रोक्ष्यति । अद्रुहत् । मुह वैचित्ये । मुह्यति । मुमोहिथ मुमोढ मुमोग्ध । ष्णुह उद्गिरणे । स्नुह्यति । सुष्णोहिथ सुष्णोढ सुष्णोग्ध । ष्णिह प्रीतौ । सिष्णेग्ध । शमु उपशमे ।

सुबोधिनी--मस्जिनशोर्झलि नुम् । अनयोर्नुम् स्यात झलि परे । टुमस्जो शुद्धौ । णश् अदर्शने । छ्शषेति षत्वं ष्टुत्वं ननंष्ठ । नशेरिति कत्वमिह कर्तुं न शक्यं पदांत एव तद्विधानात् । अन्यथा नष्टं नष्टिरित्यादि न सिध्यति । तृप् प्रीणने । प्रीणनं तृप्तिस्तर्पणं च । नाग्निस्तृप्यति काष्ठानां करणस्य संबंधविवक्षायां षष्ठी । पितॄन् अतार्प्सीत् इत्युभयत्र दर्शनात् । स्वरतीति वेट् । ततर्पिथ । कृषादीनामिति वा रः । ततर्प्थ तत्रप्थ कृषस्पृशमृशतृपदृपामिति वा सिः अतर्पीत् । इडभावे अनिटोनामिवत इति वृद्धिः । अतार्प्सीत् । रत्वे अतउपधाया इति पुनर्वृद्धिः । अत्राप्सीत्, अतृपत् । दृप् हर्षमोहनयोः । मोहनं गर्वः । मुह वैचित्ये । वैचित्यमविवेकः । दुहादेरिति धत्वढत्वे तथोर्द्धइति थस्य धत्वं । झवे इति गः । मुमोग्ध । ष्टुत्वे ढिढ इतिढलोपः । मुमोढ मुमोहिथ । ल्टि घत्वढत्वयोस्तुल्यंरूपं खसे इति षढोरिति च कत्वविधानात् । मोक्ष्यते । शमु उपशमे । उदित्त्वात् क्त्वाप्रत्यये वेट् । शमित्वा शांत्वा । क्वचिद्वेटः इति क्तक्तवत्वोरनिट् । शांतः ।

तत्वदीपिका--नंष्टेति । अत्र नशेः कोवेति पक्षे ककारोस्त्विति न भ्रमितव्यम् । तस्य पदान्त एव विधानात् । स्याद्यधिकाराच्च ।

मू०-शमांदीर्घः ॥ शमादीनांदीर्घः कर्तरि ये । शाम्यति । शमिता । अशमत् । तमु कांक्षायाम् । ताम्यति । तताम । तेमतु । अतमत् । दमु शमनायाम् । दाम्यति । देमतुः । अदमत् । श्रमु तपसि खेदे च । श्राम्यति शश्राम । शश्रमतुः । अश्रमत् । भ्रमु अनवस्थाने । भ्राम्यति भ्रमति । बभ्राम । भ्रेमतुः । बभ्रमतुः । अभ्रमत् । क्षमू सहने । क्षाम्यति । चक्षमिथ, चक्षन्थ । अक्षमत् । क्लमु ग्लानौ । भ्राश् भ्लाशेति यो वा । क्लाम्यति । ष्ठिवु क्लम्वाचमांदीर्घेऽपि । क्लामति । मदी हर्षे । माद्यति । मेदिथ । अमदत् । शमादयोऽष्टौ । असु क्षेपणे । अस्यति । अस्येत् । आस । आसतुः । आसिथ ।

सुबोधिनी–शमांदीर्घः । शमादीनामष्टानां दीर्घः स्यात् ये परे । लोपःपचामित्येत्वपूर्व-
लोपौ । शमतुः । दमु उपशमनेऽयमकर्मकः । भ्रमु शभ्लाशेति यो वा । भ्राम्यति, भ्रमति । फणू-
राजू इत्येत्वपूर्वलोपौ वा । भ्रेमतुः । क्षमू सहने । नायं पित् । भ्रमादिस्तु पित् । अ पितः क्षा-
म्यतेः क्षांतिःक्षमूषः क्षमतेः क्षमा । ऊदित इति वेट् । चक्षमिथ, चक्षंथ । मोनोधातोरिति
मस्य नत्वमत्वे । चक्षण्व । क्लमु ग्लानौ । अत्रापिवयप्रत्ययपि ष्ठिवुक्लम्वाचमामित्येव दीर्घे सिद्धे
शमादिपाठः शमादिभ्य इति विनुणार्थः ॥

**मू०–अस्यतेस्थुकङे ॥** आस्थत् । यसु प्रयत्ने ।

सुबोधिनी–अस्यतेस्थुकङे । असेःथुगागमः स्यात् ङे परे । असेः पुषादित्वात् ङप्रत्यये सिद्धे अस्यतिवक्तीति वचनमात्मनेपदार्थम् । उपसर्गादस्यत्यूहोरित्यात्मनेपदं वक्ष्यते । पर्या-स्थत ।

**मू०–अनुपसर्गाद्यसस्सम्पूर्वाच्चयोवा ॥** यस्यति यसति । संयस्यति संयसति । ययास । येसिथ । अयसत् । उपसर्गे तु प्रयस्यति । जसु मोक्षणे । जस्यति । जजास । जेसिथ । अजसत् । तसु दसु उपक्षये । तस्यति । दस्यति । ददास । देसिथ । अदसत् । वसुस्तम्भे । वस्यति । ववास । ववसतुः । अवसत् । बिस प्रेरणे । बिस्यति । बिबेस । अबिसत् । कुश संश्लेषणे । कुश्यति । चुकोश । कोशिता । अकुशत् । बुस उत्सर्गे । बुस्यति । बुबोस । बोसिता । अबुसत् । मुस खण्डने । मुस्यति । मोसिता । अमुसत् । मसी समी परिणामे । मस्यति । मेसिथ । अमसत् । लुठ विलोडने । लुठ्यति । लोठिता । अलुठत् । उच समवाये । उच्यति । उवोच । ऊचतुः । औचत् । भृशु भ्रशु अधःपतने । भृश्यति । बभर्शिथ । अभृशत् । भ्रश्यति । बभ्रंश । अभ्रशत् । वृश वरणे । वृश्यति । ववर्शिथ । अवृशत् । कृश तनूकरणे । कृश्यति । चकर्शिथ । अकृशत् । ञितृष् पिपासायाम् । तृष्यति । ततर्षिथ । अतृषत् । हृष तुष्टौ । हृष्यति । जहर्षिथ । अहृषत् । रुष् रिष् हिंसायाम् । रुष्यति । रोषिता । रोष्टा । अरुषत् । रिष्यति । रेषिता । रेष्टा । अरिषत् । डिप क्षेपे । डिप्यति । अडिपत् । कुप् क्रोधे । कुप्यति । अकुपत् । गुप् व्याकुलत्वे । गुप्यति । अगुपत् । युप् रुप् लुप् विमोहने । युप्यति । युयोपिथ । अयुपत् । रुप्यति । रुरोपिथ । अरुपत् । लुप्यति । लुलोपिथ । अलुपत् । लुभ आकांक्षायाम् । लुभ्यति । लुलोभ । लोभिता । लोब्धा । अलुभत् । क्षुभ् संचलने । क्षुभ्यति । चुक्षोभ । अक्षुभत् । क्लिदू आर्द्रीभावे । क्लिद्यति । चिक्लेद । क्लेत्ता । अक्लिदत् । ञिमिदा स्नेहने ।

सुबोधिनी–अनुपसर्गाद्यसः संपूर्वाच्चयोवा । अनुपसर्गात् संपूर्वाच्च यसेर्यप्रत्ययो वा स्यात् । वादित्वान्नैत्वपूर्वलोपौ । ववसतुः । बुस उत्सर्गे । उत्सर्गस्त्यागः । मसी समी परिणामे । परिणा-

मोविकारः । इपुसहेति वेट् । रोपिता रोप्ता । लुभ्यति सेट्कः । अनिट्कारिकासु लिपि साहचर्यात् तौदादिकस्यैव ग्रहणात् इपुसहेतिवेट् । लोभिता लोब्धा ।

**मू०–मिदेर्गुणोये ॥ मेद्यति । मिमेद । मिद्यात् । अमिदत् । ञिक्ष्विदा स्नेहनमोचनयोः । क्ष्वेदिता । अक्ष्विदत् । ऋधु वृद्धौ । ऋध्यति । आर्धत् । आनर्द्ध । ऋध्यात् । आर्द्धत् । गृधु अभिकांक्षायाम् । गृध्यति । जगर्द्धिथ । अगृधत् । इतिपुषादयः । इतिपरस्मैपदम् ।**

सुबोधिनी–मिदेर्गुणोये । मिदेर्गुणः स्यात् दिवादिविकरणे ये परे । नुगशामितिनुक् । आनर्द्ध इति परस्मैपदम् ।

तत्त्वदीपिका–कृतायामिहटीकायांलोकेशंकरशर्मणा ॥ अगात् दिवादिगणस्यार्थं परस्मैपदसाधनम् ॥

**मू०– षूङ् प्राणिप्रसवे । सूयते । सुषुवे । सुषुविषे । सविता । असविष्ट । दूङ् परितापे । दूयते । दुदुविढ्वे । दुदुविध्वे अदविष्ट । दीङ् क्षेपे । दीयते ।**

सुबोधिनी–षूङ्प्राणिप्रसवे । प्रसव उत्पत्तिः । मृत्पिंडो घटं सूयते इत्यादिप्रयोगाभावात् प्राणीत्युक्तं । स्वादय ओदितः वक्ष्यमाणत्वातल्वाद्योदितश्चेति नत्वं । प्रसूनं । नानप्योरि त्युत्र । सुषुवे । स्वरतिसूतीतिविकल्पं बाधित्वा कितइतीण्निषेधे प्राप्ते क्रादिनियमान्नित्यमिट् । सुषुविषे ॥

तत्त्वदीपिका–सवितेति । स्वरतिसूतीति वेट् । ओदित इतिफलं तु क्तक्तवतोस्तस्यनत्वम् ।

**मू०–दीङोयुट्क्ङितः ॥ स्वरस्य । दिदीये ।**

सुबोधिनी–दीङो युट्क्ङितः । स्वरस्य दीङः परस्य स्वरादेः क्ङितः प्रत्ययस्य युट् स्यात् । स्वरादेः किं । देदीयते । क्ङितः किं । उपादानम् ।

**मू०–मीनातिमिनोतिदीङांगुणवृद्धिविषयेक्यपिचात्वम् ॥ दासीष्ट । दाता । दास्यते । अदास्त । डीङ् विहायसागतौ । डीयते । डयिष्यते । अडयिष्ट । धीङ् धारणे । धीयते । दिध्यिढ्वे दिध्यिध्वे । अधेष्ट । मीङ् प्राणवियोगे । मीयते । मेता । रीङ् स्रवणे । रीयते । रिर्ये । अरेष्ट । लीङ् श्लेषणे । लीयते । लिल्ये ।**

सुबोधिनी–मीनातिमिनोतिदीङांगुणवृद्धिविषये क्यपि चात्वम् । एषामात्वं स्यात् गुणवृद्धिविधायके प्रत्यये क्यपि च । मीञ् हिंसायाम् । डु मिञ् प्रक्षेपणे । दीङ् क्षये । घञि उपादायः तव्यप्रत्यये प्रमातव्यम् । लुङिअदास्तेत्यत्रापिद्याधास्थामितीत्वं न । दीङोऽनुकरणे दारूपासंभवात् । डीङ् विहायसागतौ । आकाशेनगमने । डीनः । डीनवान् । डीङः स्वादिषु पाठसामर्थ्यात् क्तक्तवत्वोरितिइट् । इटिसति व्यवधानात् ल्वाद्योदितश्चेति नत्वं न स्यादित्यर्थः । मीङ् प्राणवियोगे । मीयते । प्राणैर्वियुज्यते इत्यर्थः ।

**मू०–लीलीङोरात्ववागुणवृद्धिविषयेक्यपिच ॥ लाता । लेता । अलास्त अलेष्ट । व्रीङ् वरणे । व्रीयते । विव्रिये । व्रेष्यते । अव्रेष्ट । स्वादय**

ओदितः । पीङ् पाने । पीयते । अपेष्ट । माङ् माने । मायते । ममे । अमास्त । अमासाताम् । ईङ् गतौ । ईयते । अयाञ्चक्रे । प्रीङ् प्रीतौ । प्रीयते । पिप्रिये । अप्रेष्ट । जनी प्रादुर्भावे ।

सुबोधिनी–लीलीङोरात्वंवागुणवृद्धिविषये क्यपि च । अनयोरात्वं वास्यात् गुणवृद्धिविधायके प्रत्यये क्यपि च परे । ली श्लेषणे क्र्यादिः । लिङ् श्लेषणे दिवादिः । क्यपि विलाय । विलीय । व्रीङ् वरणे । वरणमंगीकारः । व्रीवरणे क्र्यादिः । स्वादय ओदित इति । तत्फलंतु क्तक्तवत्वोस्तस्य नत्वं ल्वाद्योदित इत्यनेन वक्ष्यते । प्रीङ् प्रीतौ । सकर्मकः ।

मू०–ज्ञाजनोर्जा ॥ कर्तरि चतुर्षु । जायते । गर्भा स्वरे । जज्ञे । जनिता । दीपजनेति इण् । जनिवध्योर्नवृद्धिः । अजनि अजनिष्ट । तूरीगतित्वरणहिंसनयोः । तूर्यते । तुतूरिषे । दीपी दीप्तौ । दीप्यते । अदीपि अदीपिष्ट । पूरी आप्यायने । अपूरि अपूरिष्ट । तप ऐश्वर्य्ये । तप्यते । तेपे । तप्ता । अतप्त । वावृतु वरणे । वावृत्यते । वावर्त्ताञ्चक्रे । पद गतौ । पेदे । पत्ता ।

सुबोधिनी–ज्ञाजनोर्जा । अनयोर्जादेशः स्यात् चतुर्षु । ज्ञा अवबोधने । जनी प्रादुर्भावे । चतुर्षुकिम् । ज्ञाता । दीपजनेतीणवा । अजनि । वावृतु वरणे । ततो वावृत्यमाना सा रामशालां न्यवीक्षतेतिभट्टिः ।

तत्त्वदीपिका–अजनि । दीपजनेति वाइण् ।

मू०–पदेरिण्तनि ॥ अपादि । अपत्साताम् । खिद दैन्ये । खेत्ता । विद सत्तायाम् । विद्यते । वित्सीष्ट । वेत्ता । अवित्त । बुध अवगमने । बुध्यते भुत्सीष्ट । दीपजनेति इण् । अबोधि । अबुद्ध । युध सम्प्रहारे । युध्यते । युयुधे । युत्सीष्ट । अयुद्ध ।

सुबोधिनी–पदेरिण्तनि । पदेरिण् प्रत्ययः स्यात् कर्त्रर्थे तनि परे । अपादि । दीपजनेतीण् । वालुगिति तनो लुक् । अबोधि । झलादिति सिलोपः । अबुद्ध । आदिजबानामिति भः । अभुत्साताम् ।

मू०–अनोरुधकामे ॥ अनुरुध्यते । अनुरुरुधे । अनुरुत्सीष्ट । अनुरोद्धा । अन्वरुद्ध । मन ज्ञाने । मन्यते । मेने । मेनिषे । मन्ता । अमंस्त । युज् समाधौ । युज्यते । योक्ता । अयुक्त । सृजविसर्गे । सृज्यते । रारो झले दृशाम् । स्रष्टा । असृष्ट । असृक्षाताम् । लिश अल्पीभावे । लिश्यते । लिक्षीष्ट । लेष्टा । अलिक्षत । अलिक्षाताम् ॥ इत्यादि ।

सुबोधिनी–अनोरुधकामे । अनूपसर्गात् परो रुध्धातुरिच्छायामस्ति । दिवादिपाठसामर्थ्यात् रुधादेरिति नमं बाधित्वा यः । युज् समाधौ । समाधिश्चित्तवृत्तिनिरोधः । अकर्मकः । सृजविसर्गे । अकर्मकः । संसृज्यते सरसिजैररुणांशुभिन्नैरिति सिस्योरिति न गुणः । सृक्षीष्ट

छशषेति षत्वं घुत्वं झसादिति सिलोपः । असृष्ट । लिश अल्पीभावे । अनल्पस्याल्पत्वेन भवनमल्पीभावः सिस्योरिति न गुणः । छशषेति षत्वं षढोरिति कत्वं । लिक्षीष्ट । लुङि हस-शांतादिति सक् । अलिक्षत । इत्यात ।

तत्वदीपिका—कृतायामिहटीकायांलोकेशंकरशर्मणा । अगाद्दिवादिमध्यस्थमात्मनेपदसाधनम् ।

**मू०—मृष् तितिक्षायाम् । मृष्यति । मृष्यते । ममर्ष । ममृषे । अमर्षीत् । अमर्षिष्ट । ईशुचिर् क्लेदने । शुच्यति । शुच्यते । अशुचत् । अशोचीत् । अशोचिष्ट । रञ्ज रागे । अपिरञ्जदंशेति नलोपः । रज्यते । रज्यति । अरा-ङ्क्षीत् । अरङ्क्त । शप् आक्रोशे । शप्यति शप्यते । शेपतुः । शेपे । शप्ता । अशाप्सीत् । अशप्त । शक् मर्षणे । शेकिथ । शशकथ । पुषादित्वात्ङः । अशकत् । अशक्त । सेट्कोऽयमित्येके । शकिता । णह बन्धने । नह्यति । नह्यते । नेहिथ । ननद्ध । नत्सीष्ट । नद्धा । अनात्सीत् । अनद्ध ॥ इतिदि-वादयः ।**

सुबोधिनी—ईशुचिर् क्लेदे । आदीदित इति नेट् । शुक्तम् क्लिन्नम् । इरितइतिवाङः । अशुचत् । स्वरांतादत्वतश्चेति वेट् । नेहिथ । नहइति धः तथोरिति थस्यधः ननद्ध । अत उपधायाइति वृद्धिः । अनात्सीत् ।

॥ इतिदिवादिगणः ॥

तत्वदीपिका—ननद्धेति । नहोधइति धत्वे तथोर्द्धइति धत्वमित्यर्थः । कृतायामिहटीकायांलोकेशंकरश-र्मणा । अगात्समाप्तिसंक्षिप्तदिवादिगणसाधनम् । इति दिवादयः ।

**मू०—षुञ् अभिषवे । स्वादेर्नुः ॥ कर्तरि चतुर्षु । नूपः । नुप्रत्ययस्य उप्रत्ययस्य च गुणो भवति पिति । सुनोति । सुनुते । ओर्म्बोर्वालोपः । सुन्वः, सुनुवः । सुनोतु । ओर्वाहेः । सुनु । सुनवानि । सुनवै । असुनोत् । असुनुताम् । सुषाव । सुषुवतुः । सोषीष्ट । असावीत् । स्तुसुधू-ञ्भ्यःपसेरिट् । असोष्ट । षिञ् बन्धने । सिनोति । सिनुते । सिष्ये । सिष्यति । असैषीत् । असेष्ट । शिञ् निशाने । शेता । अशेष्ट । डुमिञ् प्रक्षेपे । मीनातिमिनोतीत्यात्वम् । ममौ । मिम्यतुः । ममिथ, ममाथ । मिम्ये । अमासीत् । अमास्त । चिञ् चयने । चिनोमि ।**

सुबोधिनी—षुञ् अभिषवे । स्नपनं स्नानं पीडनं सुरासंधानं चाभिषवः । स्नानेऽकर्म-कः ॥ स्वादेर्नुः । सुरादिर्यस्य सः स्वादिस्तस्मान्नुप्रत्ययः स्यात् कर्त्रर्थेषु परेषु । नूपः । उपसाहचर्यान्नुःप्रत्ययएवगृह्यते न धातुः । हुश्नुवोरिति वः । सुन्वंन्ति । ओर्म्बोरित्युकारलोपो वा । सुन्वः, सुनुवः । ओर्वाहेरिति हेर्लुक् । सुनु । नानप्योरित्युव् । सुषुवे । स्तुसुधूञ्भ्यामि-तीट् । असावीत् । मीनातिमिनोतीत्यात्वं आतोणलित्यौकारः । ममौ । नुधातोरिति यः । मिम्यतुः । यमिरमीतीट्सकौ । अमासीत् । चिञ्चयने । चयनं रचनाविशेषः ।

तत्वदीपिका–षुञ् । अभिषवः स्नपनं स्नानं पीडनं सुरासंधानं च । तत्रस्नानेऽकर्मकः । स्वादेर्नुः । स्वादिर्यस्य स तथा तस्मात् । नूपः । उपसाहचर्य्यान्नुप्रत्यय एव गृह्यत इत्याह । नुप्रत्ययस्येति ।

मू०– चिनोतेस्सणादौकिर्वा ॥ चिकाय चिचाय । चिच्यतुः । अचैषीत् । अचेष्ट । स्तृञ् आच्छादने । स्तृणोति । स्तृणुतः । स्तृण्वन्ति । तस्तार । गुणोर्तिसंयोगाद्योः । तस्तरतुः । ऋदन्तात्थपोनेट् । तस्तर्थ । तस्तरे । स्तर्यात् ।

सुबोधिनी–चिनोतेःसणादौकिर्वा । चिनोतेः किरादेशः स्यात् लिटि सप्रत्यये च से परे । चिकीषति चिचीषति । णादौतु चिकाय चिचाय । गुणोर्तिसंयोगाद्योरिति गुणः । तस्तरतुः । स्तर्य्यात् ।

मू०– ऋदन्तात्संयोगादेःसिस्योरिड्वाति ॥ स्तरिषीष्ट स्तृषीष्ट । अस्तारीत् । अस्तरिष्ट । अस्तृत । लोपोऽन्हस्वाज्झसे । कृञ् हिंसायाम् । कृणोति कृणुते । चकर्थ । चकृवहे । अकार्षीत् । अकृत । वृञ् वरणे । ववार । वव्रतुः ।

सुबोधिनी–ऋदंतात्संयोगादेःसिस्योरिड्वाति । ऋदंतात्संयोगादेर्द्धातोः परयोः सिस्यो-रिड्वास्यादात्मनेपदे परे । स्तरिषीष्ट । उरिति न गुणः । स्तृषीष्ट ।

मू०–वृञःस्थपइट् ॥ ववरिथ ।

सुबोधिनी–वृञः स्थपइट् । वृञः परस्य थप इट् स्यात् । ववरिथ ।

मू०– वृङ्वृञ्ऋदन्तात्सिस्योरिड्वाति ॥ वरिषीष्ट वृषीष्ट । वरिता वरीता । वरिष्यति वरीष्यति । अवारीत् । अवारिष्टाम् । अवरिष्ट अवरीष्ट । अवृत । धुञ् कम्पने । धुनोति धुनुते । दुधाव । दुधुवतुः । धोष्यति । अधौ-षीत् अधोष्ट । दीर्घान्तोप्ययम् । धूनोति । स्तुसुधूञ्भ्यामितीट् । अधावीत् । स्वरतिसूतीतिवेट् । अधविष्ट । अधोष्ट इत्युभयपदिनः । टुदु उपतापे । दुनोति । दुदाव । दुदुवतुः । अदौषीत् । हिगतौ वृद्धौच । हिनोति ।

सुबोधिनी–वृङ्वृञृदंतात् सिस्योरिड्वाति । वृङ्वृञ्भ्यां ऋदंताच्च परस्य सिप्रत्ययस्य सीष्टादेश्चेड् वा स्यात् आत्मनेपदे परे । पसेरिटोनदीर्घः । सीष्टादेरितिनदीर्घः वरिषीष्ट । वृङ्-वृञीति वा दीर्घः । वरिता वरीता । स्वरतिसूतीति वेट् । दुधविथ दुधोथ । किति लिटि तु कितइतीण् निषेधं बाधित्वा क्रादिनियमान्नित्यमिट् । नानप्योरित्युव् । दुधुविव । स्तुसुधू-ञ्भ्यामितीट् । अधावीत् । इत्यात्मे ।

तत्त्वदीपिका–धुञ् । दीर्घांतोप्ययमिति । तथा च कविरहस्ये । धूनोतिचंपकवनानिधुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् । वायुर्विधूनयति केशरपुष्परेणून्यत्कानने धवति चंदनमंजरीश्चेति । हिगतौ

मू०–पूर्वाद्धिनोतेर्हस्यघोनत्वङि ॥ जिघाय । जिघ्यतुः । अहैषीत् । आप्लृ व्याप्तौ । आप्नोति । आप्नुवन्ति । आप्नुहि । आप । आपतुः । आप्ता ।

आपत् । शक्लृ शक्तौ । शक्नोति । शशाक । शेकतुः । शक्ता । अशकत् । राध साध संसिद्धौ । राध्नोति । राध्नुवन्ति ।

सुबोधिनी–पूर्वाद्धिनोतेर्हस्यणोनत्वाङि । द्वित्वे सति पूर्वात् परस्य हिनोतेर्हस्य घः स्यात् आङि तु न । अजीघकिम् । अजीहयत् । संयोगपूर्वकत्वात् अत्रोहेरिति नहेर्लुक् । आप्नुहि ।

तत्त्वदीपिका–नत्वङीति । अङीति किं । अजीहयत् । ण्यन्तस्य धात्वन्तरत्वेन हिनोग्रहणादग्रहणेऽपि जिघाययिषतीत्यत्रव्याधिकस्यापि कुत्वज्ञापनार्थमिदमिति बोध्यम् ।

मू०–राधोहिंसायामेत्वपूर्वलोपौकितिलिटिसेटिथपिच्च ॥ रराध । रेधतुः । रेधिथ । अरात्सीत् । ञिधृषा प्रागल्भ्ये । धृष्णोति । दधर्ष । अधर्षीत् । दम्भु दम्भे । दभ्नोति ।

सुबोधिनी–राधोहिंसायामेत्वपूर्वलोपौकितिलिटिसेटिथपिच । हिंसार्थकस्यराध एत्वपूर्वलोपौ स्तः नान्यार्थकस्य । दंभु दंभे । लोकवंचनाय विहितकर्मानुष्ठानं दंभः ।

मू०–श्रन्थिग्रन्थिदम्भिस्वञ्जीनांलिटःकित्त्वंवा ॥ दम्भेर्लिटचेत्वपूर्वलोपौ । ददम्भ । देभतुः, ददम्भतुः । देभिथ, ददम्भिथ । अदम्भीत् । ऋधु वृद्धौ । आनर्द्ध । नुगशाम् । आनृधतुः । अर्द्धिता । क्षि हिंसायां । क्षिणोति । क्षिण्वन्ति । क्षेता ॥ इतिपम् ॥ अशूङ् व्याप्तौ संघाते च । अश्नुते । नुगशाम् । आनशे । अशिषीष्ट, अक्षीष्ट । अशिता, अष्टा । आशिष्ट । आक्षाताम् । ष्टिघ आस्कंदने । स्तिघ्नुते । स्तिघ्नुवाते । तिष्टिघिध्वे । अस्तेघिष्ट । इति स्वादयः ।

सुबोधिनी–श्रंथिग्रंथिदंभिभ्यो लिटः कित्त्वं वा । एभ्यः परस्य लिटः कित्त्वं स्याद्वा । श्रंथ ग्रंथसंदर्भे । दंभु दंभे । ष्वंज परिष्वंगे । दंभेः किति लिटचेत्वपूर्वलोपौ । श्रंथीति कित्संज्ञायां नोलोपइति नलोपस्तस्यासिद्धत्वात्पूर्वलोपयोरप्राप्तौ सत्यामारंभः ॥ इतिपं । नुगशामिति नुक् । आनशे । ष्टिघ आस्कंदने । आस्कंदनं संग्रामः । स्तिघ्नुते । इत्यात् ॥ इतिस्वादयः

तत्त्वदीपिका–कृतायामिहटीकायांलोकेशंकरशर्मणा । बाधनं दुष्टबुद्धीनामगमत्स्वादिसाधनम् ॥ इति स्वादयः ।

मू०–रुधिरावरणे । रुधादेर्नम् ॥ कर्तरि चतुर्षु । रुणद्धि । नमसोऽस्य । रुन्धः । रुन्धन्ति । रुणत्सि । रुन्धे । रुन्धाते । अरुधत् । अरुद्ध । भिदिर् विदारणे । अभिदत् अभैत्सीत् अभित्त । छिदिर् द्वैधीकरणे । अच्छिदत् अच्छैत्सीत् । अच्छित्त । रिचिर् विरेचने । रिणक्ति । अरिणग् अरिणक् । अरिचत् अरैक्षीत् अरिक्त । विचिर् पृथग्भावे । विङ्क्ते । अविचत् अवैक्षीत् अविक्त । क्षुदिर् संपेषणे । अक्षुदत् अक्षौत्सीत् । अक्षुत्त । युजिर् योगे । अयुजत् अयौक्षीत् अयुक्त । उच्छृदिर् दीप्तिदेवनयोः । छृणत्ति छृन्ते । नृत तृदइति वेट् । छृत्सीष्ट छर्दिषीष्ट । अछृदत् अछर्दीत् अछर्दिष्ट । उतृदिर् हिंसानादरयोः । अतृदत् अतर्दीत् । इत्युभयपदप्रक्रिया । शिष्लृ

विशेषणे । शिनष्टि । शिंष्टः । शिंषन्ति । शेष्टा । शेक्ष्यति । अशिषत् । पिष्लृ सञ्चूर्णने । पिनष्टि । पेक्ष्यति । अपिषत् । भञ्जो आमर्दने । भनक्ति । बभञ्जिथ बभंक्थ । भङ्क्ता । अभाङ्क्षीत् । भुज पालनाभ्यवहारयोः । भुनक्ति । भुङ्क्तः । अभुनक् अभुनग् । अभौक्षीत् । तृह हिसि हिंसायाम् ।

सुबोधिनी—रुधिर् आवरणे । रुधादेर्नम् । रुध् आदिर्यस्य स रुधादिस्तस्माद्रुधादेर्नम् प्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु । मित्त्वादंत्यात्स्वरात्परः नित्यत्वाद्गुणं बाधते । तथोरिति धत्वं णत्वं । रुणद्धि । नमसोऽस्यइत्यल्लोपः । रुन्धः । दिस्योरिति दिप्सिपोर्लोपः । वावसाने इति धस्य दकारतकारौ । सिपिदः स इति दस्य वा सः । अरुणत्, अरुणः । तृतदृदेति वेट् । चच्छृदिषे, चच्छृत्से । इत्यात्पे । झसादिति हेर्द्धिः । झषे इति षस्य डत्वं । ष्टुत्वं अनुस्वारपरसवर्णौ शिण्ड्ढि । हसात्परस्य झसस्येति डलोपे शिण्ढि । लित्पुषादेरिति ङः । अशिषत् । भंजो आमर्दने । ओदित्करणं ल्वाद्योदित इति नत्वार्थं । भग्नः । भुजपालनाभ्यवहारयोः । भुजोऽपाळने इत्यात्मनेपदं वक्ष्यते ।

तत्वदीपिका—रुधिर् । रुधादेर्नुम् । रुध आदिर्यस्य स तथा तस्मात् । न च रुदादेरिति भविष्यति अन्तर्वर्त्ति विभक्त्या पदत्वादिति वाच्यं । असंदेहार्थमिदं । अन्यथा रुधू आदिः रुद् आदिरिति संदेहः स्यात् । यद्यपि व्याख्यानतोविशेषप्रतिपत्तिरिति न्यायाद्रुधिरादिरेव गृह्यते । तथापि क्वचिदान्तरंपदकार्यं नेतिज्ञापनार्थमिदं । नमःप्रत्ययत्वेपिमित्त्वसामर्थ्यादन्त्याचःपरत्वम् । अन्यथा मित्त्वं व्यर्थं स्यात् । नच नमइति विशेषणार्थं तदितिवाच्यम् । अनुबंधान्तरस्यैव सुवचत्वात् । अथनमि मध्येपि तिबादिपरत्वस्याबाधनादपा भाव्यमिति वाच्यं । न । दधि ब्राह्मणेभ्यो दीयतां तक्रं कौंडिन्यायेति तक्रकौंडिन्यन्यायेन तक्रदानेन दधिदानस्येव नमापो बाधनान्नमा नित्यत्वाद्गुणो बाध्यते । उच्छृदिर् ङः क्त्वायामिड्विकल्पार्थः । छृत्वा । छृदित्वा ।

मू०—तृहोनमिकृतेइमागमःपितिहसे । तृणेढि । अतृणेट् । अतर्हीत् । इदितोनुम् । नमःप्रत्ययात् परस्य नस्य लोपः । हिनस्ति । हिंस्तः । हिंसंति । धेसलोपः । हिन्धि । अहिनः । जिहिंस । अहिंसीत् । उन्दी क्लेदने । उनत्ति । उन्तः । उन्दन्ति । औनत् । औन्दन् । उन्दांचकार । औन्दीत् । अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु । अनक्ति । नुगशाम् । ऊदितो वा । आनञ्जिथ । आनंक्थ । अञ्जिता अङ्क्ता ।

सुबोधिनी—तृहोनमिकृतेइमागमः पिति हसे । तृहेः पूर्वं नम् ततः इम् स्यात् पितिहसे परे । नमःप्रकरणात्प्रत्ययस्य ग्रहणं । उंदी क्लेदने । क्लेदनमार्द्रीभावः । नम इति नलोपः । उनत्ति । उंद्यात् । उनत्तु । औनत् । उंदांचकार । उंद्यात् । उंदिष्यति । औन्दिष्यत् । औंदीत् । अंजू व्यक्तिम्रक्षणकांतिगतिषु । व्यक्तिर्विवेचनं । म्रक्षणं स्निग्धता । नुगशामिति नुक् । आनंज ।

तत्वदीपिका—तृहोनमि कृते इति । यद्येवं न स्यात् तर्हि येन नाप्राप्तिन्यायेनेमा नम् बाध्येत अबाधने वा पूर्वमिमेव स्यादिति शंकानिवृत्तये नमिकृते इति नमः प्रकरणत्वात्प्रत्ययग्रहणम् ।

मू०—अञ्जेस्सेर्नित्यमिट् ॥ आञ्जीत् । तञ्चु संकोचने । तनक्ति । अताञ्चीत्, अतांक्षीत् । ओविजी भयचलनयोः । विनक्ति ।

सुबोधिनी—अञ्जेःसेर्नित्यमिट् । अञ्जेः परस्य सिप्रत्ययस्य इडागमः स्यात् ऊदित्त्वाद्विकल्पप्राप्ते इदम् ॥

**मू०—विजेरिडादिप्रत्ययोङित् ॥ विविजिथ । विजिता । अविजीत् । वृजी वर्जने । वृणक्ति । अवर्जीत् । पृची संपर्के । पृणक्ति । अपर्चीत् ॥**

सुबोधिनी—विजेरिडादिप्रत्ययोङित् । विजेः परस्य इट्सहितस्य प्रत्ययस्य ङित्वं स्यात् । इति पम् ॥

**मू०—ञिइन्धी दीप्तौ । इंद्धे । इन्धीत । ऐंद्ध । इन्धाञ्चक्रे । ऐन्धिष्ट । खिद दैन्ये । खिन्ते । खित्सीष्ट । अखित्त । विद विचारणे । विन्ते । वित्सीष्ट । अवित्त । इति रुधादयः ।**

सुबोधिनी—ञिइंधी दीप्तौ । तथोर्द्ध इति धत्वं झबेजबाइति दत्वम् इंद्धेनेमोनकारस्यानुस्वारपरसवर्णौं । नोल्लोपइति नलोपस्तु न भवत्यल्लोपस्यासिद्धत्वात् स्थानिवत्त्वाद्वा ॥ इत्यतत् । इति रुधादयः ॥

तत्व०—ञिइंधि । ञीतांतगित्येतदर्थोञिः इद्ध इत्यत्रेणनिषेधार्थः । इंद्धे इति नम इति न लोपः नमसोस्योति सलोपः । कृतायामिहटीकायांलोकेशंकरशर्मणा । मताभाष्यकृताभाव्याध्यादिप्रक्रियागता ।

**मू०— तनु विस्तारे । तनादेरुप् ॥ कर्तरि चतुर्षु । नूपः । तनोति । तनुतः । तन्वन्ति । ओर्म्वोर्वालोपः । तनुवः, तन्वः । तनुते । ततान । तेनतुः । तेने । अतानीत् अतनीत् ।**

सुबोधिनी—तनुविस्तारे । तनादेरुप् । तन्आदिर्यस्य स तनादिस्तस्मादुप् कर्त्रर्थेषु चतुर्षु । अपोऽपवादः । तनोति । तनुते । तनुयात् । तन्वीत । तनोतु । तनुताम् । अतनोत् । अतनुत । ततान । तेने । तन्यात् । तनिषीष्ट । तनिता । तनिष्यति । तनिष्यते । अतनिष्यत् । अतनिष्यत । अतोहसादेर्लघोरितिवा वृद्धिः । अतनीत्, अतानीत् ॥

**तत्त्वदीपिका—तनु** । उकारः क्त्वायामिड्विकल्पार्थः । **तनादेरुप्** । तन आदिर्यस्य स तथा तस्मात् नलोपाभावस्त्वसंदेहार्थः । यदि व्याख्यानत इति न्यायादसंदेहस्तदा क्वचिन्नलोपो नेति ज्ञापनार्थः । तेन सन् आदिर्येषांतिसनादय इत्यादि सिद्धं । उपःपित्त्वं कुरुत इत्यादौ गुणार्थं । यदिङित्यदुरिति सामर्थ्याद्गुणः अन्यथा ऽकारस्यासंभव इति विभाव्यते । तदा घूर्णोतीत्यत्र गुणार्थमिति बोध्यम् ।

**मू०—तनादेस्तथासोर्वासेर्लुक् ॥ लोपस्त्वनुदात्ततनां ॥ अतत, अतनिष्ट । अतथाः, अतनिष्ठाः । षणु दाने । सनोति । सनुते । सेनतुः । सेने । जनसनखनामात्वमिति । सायात् सन्यात् । असात् । असनिष्ट । असाथाः । असनिष्ठाः । क्षणु क्षिणु हिंसायाम् । क्षणोति । ह्यन्तक्षणेति न वृद्धिः । अक्षणीत् । अक्षत् । अक्षणिष्ट । अक्षथाः, अक्षणिष्ठाः ।**

सुबोधिनी—तनादेस्तथासोर्वासेर्लुक् । तनादेः परस्य सेर्लुक् वा भवति तनि थासि च परे । अतत, अतनिष्ट । षणु दाने । नांतोयं । णकारस्तु लाक्षणिकः । तेन यङ्लुकि संस-

न्ति । संसन्तः । इत्यादावनुस्वारपरसवर्णौ स्तः । जनसनेत्यात्वं । सायात्, सन्यात् । असात्, असनिष्ट । असाथाः, असनिष्ठाः । क्षणु क्षिणु हिंसायां । इमावपि लाक्षणिकौ णकारौ तेन यङ्लुकि चक्षन्ति इत्यत्रानुस्वारपरसवर्णौ । ह्म्यंतेति न वृद्धिः । अक्षणीत् । तनादेस्तथासोरिति वासेर्लुक् लोपस्त्वनुदात्ततनामिति नलोपः । अक्षत, अक्षणिष्ट ॥

तत्त्वदीपिका–क्षणु । द्वावपि दन्त्यान्तौ । णत्वं तु सूत्रबलात् । अन्यथा यङ्लुकिचाक्षंति चक्षंतीत्यत्रानुस्वारो न स्यात् ।

**मू०–तनादेरुपधायागुणोवापि** ॥ क्षिणोति क्षेणोति । अक्षेणीत् । अक्षितः अक्षेणिष्ट । अक्षथाः । अक्षेणिष्ठाः । ऋणु गतौ । ऋणोति अर्णोति । ऋणुतः । आनर्ण । आनृणं । आर्णीत् । आर्त आर्णिष्ट । आर्थाः । आर्णिष्ठाः । तृणु अदने । तृणोति, तर्णोति । तृणुते, तर्णुते । अतर्णीत्, अतृत अतर्णिष्ट । अतृथाः अतर्णिष्ठाः । घृणु दीप्तौ । घृणोति, घर्णोति । जघर्ण । अघर्णीत्, अघृत, अघर्णिष्ट । अघृथाः, अघर्णिष्ठाः । डुकृञ् करणे । करोति । ङित्यद्गुः । कुरुतः ।

सुबोधिनी–तनादेरुपधायागुणोवापि । तनु षणु क्षणु धातूनां गुणासंभवात् क्षिण्वादिष्वस्य प्रवृत्तिर्बोध्या । अतद्गुणसंविज्ञानो बहुव्रीहिः । उवमितिवः । कुर्वंति ॥

**मू०–कुरछुरोर्नदीर्घः** ॥ कुर्वंति ।

सुबोधिनी–कुरछुरोर्नदीर्घः । कृञः कुररूपस्य छुरछेदने इत्यस्य च दीर्घो न भवति । कुर शब्दे इत्यस्य तु न निषेधः ॥

**मू०–कृञोनित्यंवमोरुलोपः** ॥ कुर्वः । कुर्मः ।

सुबोधिनी–कृञोनित्यंवमोरुलोपः । कृञः परस्य उप्रत्ययस्य लोपः स्यात् वमयोः परयोः ॥

तत्त्वदीपिका–कृञोनित्यमिति । कृञो ये इत्यत्र वेत्यनुवृत्तेर्व्यवस्थया बोध्यम् ।

**मू०कृञोये** ॥ कृञ उप्रत्ययस्य लोपो यि । कुर्यात् । चकर्थ । क्रादिनेट् । क्रियात् । कृषीष्ट । अकार्षीत् । अकृत । अकृथाः ।

सुबोधिनी–कृञोये । रिङित्यनुवृत्तम् आशिषि यादादौ पे इति रिङ् । क्रियात् । वर्णित न गुणः । कृषीष्ट । तनादेरिति सेर्लुगभावे लोपो ह्रस्वादिति सिलोपः । अकृत ॥

**मू०–संपर्युपेभ्यः करोतिर्भूषणेसुट्** ॥ संस्करोति । अड्द्वित्वव्यवधानेपि कात् पूर्वःसुट् । समस्करोत् । संचस्कार ।

सुबोधिनी–संपर्युपेभ्यःकरोतेर्भूषणेसुट् । संपर्युपपूर्वस्य करोतेः सुट् स्यात् भूषणे सन्घे चार्थे । संस्करोति । अलंकरोतीत्यर्थः । संस्कुर्वंति । संघीभवंतीत्यर्थः ॥ अड्द्वित्वव्यवधानेपि कात् पूर्वः सुट् । संपर्युपेभ्यः परस्य कृञोऽड्व्यवधाने द्वित्वव्यवधाने च कात्पूर्वः सुट् भवति ॥

तत्त्वदीपिका—संपर्युपेभ्य इति । वृत्तिकारमतेनायं पाठः । भाष्यवार्तिककारादिमते तु संपरिभ्या-मित्येव ।

मू०—ससुटः कृञोलिटइट् ॥ सञ्चस्करिथ । संचस्करिव । संस्क्रियात् । संस्कृषीष्ट । एवं परिष्कुरुते । उपस्कुरुते । परिष्कार्ष्यते । पर्यस्कार्षीत् पर्यष्कार्षीत् । इत्यादि ॥ वनुयाचने । वनुते । ववने । परस्मैपदमप्ययमित्येके । वनोति । शसददइति । ववान । ववनिथ । अवानीत् । मनु अवबोधने । मनुते । मेने । मनिषीष्ट । अमत, अमनिष्ट ॥ इतितनादयः ॥

सुबोधिनी—ससुटः कृञोलिटइट । सुटसहितात् कृञोलिट इट् भवति । इतितनादयः ॥

तत्त्वदीपिका—कृतायामिहटीकायांलोकेशकरशर्मणा । मताभाष्यकृता भव्या तनादिप्रक्रियागता । इति तनादयः ।

मू०—तुदव्यथने । तुदादेरः ॥ कर्तरि चतुर्षु । तुदति तुदते । तुत्सीष्ट । अतौत्सीत् । अतुत्त । णुद प्रेरणे । नुदति । नुत्सीष्ट । अनौत्सीत् । अनुत्त । दिश अतिसर्जने । दिशति । दिक्षीष्ट । अदिक्षत् । भ्रस्ज पाके । ग्रहांक्ङिति च । झषेजबाः । भृज्जते ।

सुबोधिनी—तुद व्यथने ॥ तुदादेरः । तुद आदिर्यस्य स तुदादिः तस्मादप्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु । अपोपवादः । तुदति । तुदते । तुदेत् । तुदेत । तुदतु । तुदताम् । अतुदत् अतुदत । अतुदेताम् । अतुदंत । तुद्यात् तुत्सीष्ट । सिस्योरिति न गुणः । तोत्ता । तोत्स्यति । तोत्स्यते । अतोत्स्यत् । अतोत्स्यत । अतौत्सीत् । झसादिति सिलोपः । अतुत्त । दिश अतिसर्जने । अतिसर्जनं दानम् । हशषांतात्सगिति सक् छशषेति षत्वं षढोरिति कत्वं च । अदिक्षत् । अदिक्षत । भ्रस्ज पाके । भर्जनरूपः पाकोत्र धात्वर्थो नत्वोदनादेः पाकस्तत्र प्रयोगाभावात् ग्रहामिति संप्रसारणं सस्य श्चुत्वेन शः शस्य झषेजबाइति जः । भृज्जति । भृज्जेत् भृज्जेत । भृज्जतु । भृज्जताम् । अभृज्जत् । अभृज्जत ॥

तत्वदीपिका—तुदादेरः । तुद आदिर्यस्य स तथा तस्मात् । अप्रत्ययस्यापित्त्वादपित्तादिर्ङिदिति ङित्वेन गुणो न । भ्रस्ज भ्रस्जे । इत्ययं पाठे भ्रष्टः भ्रष्टवानित्यत्रत्वाद्योदित इति नत्वं स्यात् ।

मू०— भ्रस्जोरसोरमनपिवा ॥ बभर्ज, बभ्रज्ज । बभर्जतुः, बभ्रज्जतुः । बभर्जिथ, बभ्रज्जिथ, बभर्ष्ठ, बभ्रष्ठ । स्वरान्तादत्वतश्चेति वेट् । क्ङितिसंप्रसारणं बाधकम् । भृज्ज्यात् । अभ्राक्षीत्, अभार्क्षीत् । अभ्रष्ट, अभर्ष्ट । क्षिप प्रेरणे । क्षिप्सीष्ट । अक्षैप्सीत् । अक्षिप्त । कृषविलेखने । कृक्षीष्ट । क्रष्टा, कर्ष्टा । अक्राक्षीत् अकार्क्षीत् । अकृक्षत् । अकृक्षाताम् । अकृक्षन्त । मिलसंगमे । मिलति । मिमिले । अमेलीत् । अमेलिष्ट । मुच्लृ मोचने । मुचादेर्मुम् । मुचलुपविदलिपषिचकृतपिशखिदामप्रत्ययेमुम् । मुञ्चति । मुक्षीष्ट । लितुपुषादेर्ङः । अमुचत् । अमुक्त । लुपॢ छेदने । लुम्पति । लुलोप । लुप्सीष्ट । अलुपत् । अलुप्त । विद्ऌलाभे । विन्दति । अविदत् । अवेदिष्ट ।

अनिडयमित्येके । वेत्ता । लिप उपदेहे । लिम्पति । लिपिसिचीतिङः । अलिपत् । अलिपत । अलिप्त । षिच क्षरणे । सिञ्चति । सिषिचिषे । असिचत् । असिचत । असिक्त । इत्यात्पे ॥ ऋषी गतौ । ऋषति । आनर्ष । ओव्रश्चू छेदने । वृश्चति । वव्रश्च । वव्रश्चतुः । वव्रश्चुः । वव्रश्चिथ, वव्रष्ठ । व्रश्चिता, व्रष्टा । व्रश्चिष्यति व्रक्ष्यति । अव्रश्चीत् अव्राक्षीत् । अव्राष्टाम् । व्यच व्याजीकरणे । विचति । विव्याच । विविचतुः । विच्यात् । व्यचिता । व्यचिष्यति । अव्याचीत् अव्यचीत् । उछि उंच्छे । उंच्छति । उञ्छाञ्चकार । औञ्छीत् । उच्छी विवासे । उच्छति । उच्छाञ्चकार । औच्छीत् । ऋच्छ गतींद्रियप्रलयमूर्तिभावेषु । ऋच्छति ।

सुबोधिनी—भ्रस्जोरसोरमनपिवा । भृजेरेफस्योपधायाश्च स्थाने रमागमो वा स्यात् अनपि मित्त्वादंत्यात् स्वरात्परो भवति । स्थानषष्ठीनिर्देशात् रकारोपधयोर्निवृत्तिः । बभर्ज, बभ्रज्ज । बभर्ज्जतुः, बभ्रज्जतुः । थपि बभर्ज्जिथ, स्वरांतादत्वतश्चेतिवेट् बभ्रज्जिथ । स्कोरिति सलोपः छशषेतिषः । बभर्ष्ठः, बभ्रष्ठ । आति । बभर्जे । बभ्रज्जे । क्ङिति रमागमं बाधित्वा संप्रसारणम् भृज्ज्यात् । भर्क्षीष्ट, भ्रक्षीष्ट । भर्ष्टा, भ्रष्टा । भर्क्ष्यति, भ्रक्ष्यति । भर्क्ष्यते, भ्रक्ष्यते । अभार्क्ष्यत अभर्क्ष्यत् अभ्रक्षत् । अभार्क्षीत् अभ्राक्षीत् । अभर्ष्ट, अभ्रष्ट । कृषविलेखने । कृषादीनांवेति वा रः । क्रष्टा, कर्ष्टा । सिस्योरिति न गुणः । कृक्षीष्ट । कृष स्पृश मृशेति वा सिः । अनिटोनामिवद् इति वृद्धिः अकार्क्षीत्, अक्राक्षीत् । अकार्क्षीत् । पक्षे । इशषांतादिति सक् । अकृक्षत् । सिस्योरिति न गुणः । अकृष्ट । साकि । अकृक्षत । आति सको लोपः स्वरे इत्यलोपः । अकृक्षाताम् । मिल संगमे । अस्मिन्नेव गणे परस्मैपदिषु मिलसंश्लेषणे इति धातुपाठे पठ्यते इह तस्य पुनः पाठः कर्तर्यात्मनेपदार्थः मिलति । मिलते । मुचादेर्मुम् । मुच्लृमोक्षणे लुप्लृछेदने विद्लृलाभे लिपउपदेहे षिचक्षरणे कृतीछेदने पिशअवयवे खिदपरिघाते विद्लृलाभे । व्याघ्रभूतिमतेसेट्कः । वेदिता । भाष्यमतेत्वनिट्कः । वेत्ता । लिपउपदेहे । उपदेहोवृद्धिः । लिपिसिचीतिङः । आतित्वाङः । अलिपत् । झसादितिसिलोपः । अलिप्त । अलिपत् ॥ इत्यात्पे ॥ नुगशामिति नुक् । आनर्ष । ओव्रश्चू छेदने । ग्रहामिति संप्रसारणं । वृश्चति । लिटि । णबादौ पूर्वस्येत्यनेन पूर्वरेफस्य ऋकारः ततो नसंप्रसारणे संप्रसारणामिति परिभाषया निषेधात्सकृत्सूत्रं प्रवर्त्तते इति न्यायाद्वा पुनर्वस्य संप्रसारणं न । वव्रश्च । ऊदितोवेति वेट् । वव्रश्चिथ । स्कोरिति सलोपः छशषेति षत्वं ष्टुत्वं । वव्रष्ठ । ऊदितोवेतीटि । अव्रश्चीत् । इडभावे स्कोरितिसलोपः । छशषेति षत्वं षढोरिति कः । ततः सस्य षत्वम् । अव्राक्षीत् । नन्वत्र शकारस्य कथं लोपः उच्यते । नकारजावनुस्वारपंचमौ झलि धातुषु । सकारजः शकारश्च षाट्टवर्गस्तवर्गजइति ॥ १ ॥ व्यच व्याजीकरणे । व्याजीकरणं छद्मकरणं । ग्रहामिति संप्रसारणं णबादौ पूर्वस्येति पूर्वस्य संप्रसारणं च । विविचतुः । अतोहसादेरिति वा वृद्धिः । अव्याचीत्, अव्यचीत् । उछि उञ्छे । उच्छी विवासे । स्वदेशं परित्यज्य देशांतरे गमनं विवासः । सम्प्रति धातुपाठे इमौ भ्वादिगणे पठितौ इह पुनः पाठस्तु उंछतीत्यत्र वादीपोः शतुरिति नुम्विकल्पार्थः । अप्प्रत्यये तु अप्यपोरान्नित्यमिति नित्यं नुम् । उंछंति ॥

तत्त्वदीपिका—रश्चोरिति । रश्च सूच रसौ तयोः रेफसकारयोरादेशो भवतीत्यर्थः ।

मू०—ऋच्छेर्नाम् ॥ ऋच्छेर्लिटिगुणः ॥ नुगशाम् । आनर्छ । आनर्छतुः । ऋच्छिता । उञ्ज आर्जवे । उञ्जाञ्चकार । उज्झ त्यागे । उज्झाञ्चकार । लुभ विमोहने । लुभति । लोभिता लोब्धा । अलोभीत् । तृप तृम्प तृफ तृम्फ तृप्तौ । तृपति । अतर्पीत् । तृफादीनामप्रत्यये मुम् । तृम्फति । तुप तुम्प तुफ तुम्फ हिंसायाम् । तुपति । तुतोप । अतोपीत् । तुम्पति । अतुम्पीत् । तुफति । तुतोफ । अतोफीत् । तुम्फति । तुतुम्फ । अतुम्फीत् । दृप दृंफउत्क्लेशे । दृपति । दृम्फति । ऋफ ऋम्फ हिंसायाम् । ऋफति । ऋम्फति । ऋम्फाञ्चकार । गुफ गुम्फ ग्रन्थे । गुफति । गुम्फति । अगुम्फीत् । उभ उम्भ पूरणे । उभति । उवोभ । औभीत् । उम्भति । उम्भाञ्चकार । औम्भीत् । शुभ शुम्भ शोभार्थे । शुभति । अशोभीत् । शुम्भति । अशुम्भीत् । दृभी ग्रन्थे । दृभति । अदर्भीत् । चृती हिंसाग्रन्थनयोः । चृतति । नृततृदचृतेतीड्वा । चर्तिष्यति चर्त्स्यति । अचर्तीत् । विध विधाने । विधति । वेधिता । लिख अक्षरविन्यासे । लिखति लेखिता । कुट कौटिल्ये । कुटति । चुकोट ।

सुबोधिनी—ऋच्छेर्नाम् । ऋच्छतेराम् प्रत्ययो न लिटि । गुरुनाम्यादित्वात्प्राप्तेर्निषेधः ॥ ऋच्छेर्लिटिगुणः । ऋच्छतेर्गुणः स्याल्लिटि । लुभ विमोहने विमोहनमाकुलीकरणम् । इषुसहेति वेट् । लोभिता, लोब्धा । तृप तृंफ तृप्तौ । कुष स्पृशमृशेति सिविकल्पस्तु पौषादिकस्यैव ङस्यापवादत्वात् । तेनात्र नित्यं सिः । अतर्पीत् । तृंफादीनामप्रत्यये नुम् । आदिशब्दः प्रकारे तेन यत्र नकारानुषक्तास्ते तृंफादयः अप्रत्ययस्य ङित्त्वान्नोलोपइति नलोपे कृते नुम् । तृंफति । दृपदृंफउत्क्लेशे । उत्क्लेशः पीडा । चृती हिंसाग्रंथनयोः । ईदित्करणमादीदितइतीणनिषेधार्थं । यद्यप्यस्य वेट्कत्वादिण्निषेधः सिद्ध्यति । तथापि क्वचिद्वेट्इत्यस्यानित्यतां ज्ञापयितुं ईदित्करणं । तेन धावितमिभराजधियेत्यादिसिद्धमिति । नृततृदेतिवेट् । चर्त्स्यति । विध विधाने । विधानं करणं । कुट कौटिल्ये । कुटिलस्य भावः कौटिल्यं तस्मिन् ॥

तत्त्वदीपिका—ऋच्छ गुरुनामित्वादाम्प्राप्त इत्याह । ऋच्छेरिति । ह्रस्वाच्छकारस्य द्वित्वे संयोगपरत्वाल्लघूपधत्वाभावाद्गुणाप्राप्तौ लिटि गुण इति ।

मू०– कुटादेर्ङिणद्वर्जःप्रत्ययोङित् ॥ चुकुटिथ । कुटिता । अकुटीत् । पुट संश्लेषणे । पुटति । पुपोट । अपुटीत् । कुचसंकोचने । कुचति । चुकोच । अकुचीत् । गुजशब्दे । गुजति । गुजिता । अगुजीत् । गुड रक्षायाम् । गुडति । गुडिता । अगुडीत् । कुड शब्दे । कुडति । कुडिता । डिप क्षेपे । डिपिता । छुर च्छेदे । कुरछुरोर्नदीर्घः । छुर्यात् । छुरिता । स्फुट विकसने । स्फुटति । मुट आक्षेपप्रमर्दनयोः । मुटति । मुमोट । मुटिता । त्रुट छेदे । त्रुट्यति, त्रुटति । तुत्रोट । त्रुटिता । तुट कलहकर्म्मणि । तुटति । तुटिता । तुटिष्यति । छुट चुट छेदे । छुटति । छुटिता । चुटिता । जुटबन्धने ।

त्रुटति । त्रुटिता । कड मदे । कडति । अकडीत् । लुठ संश्लेषणे । लुठति । लुठिता । कुड घनत्वे । कुडिता । कुड बाल्ये । कुडति । पुड उत्सर्गे । पुडिता । घुट प्रतीघाते । घुटिता । स्फुर स्फुरणे । स्फुरिता । स्फुल संचलने । स्फुलिता ।

सुबोधिनी–कुटादेर्ङिगद्वर्जःप्रत्ययोङित् । कुटादेर्गणात्परः प्रत्ययो ङित् स्यात् ञितं णितं च वर्जयित्वा । ङित्त्वान्नगुणः । चुकुटिथ । छुर छेदने । र्वोर्विहलिइत्यनेन दीर्घेप्राप्ते कुरछुरो रितिनिषेधः । छुर्यात् । त्रुटभ्राशभ्लाशिति वा यः । त्रुट्यति, त्रुटति । कडधातुपाठ भ्वादौ पठितस्य पुनरत्र पाठः शतृप्रत्यये वादीपोरिति नुम्विकल्पार्थः पूर्वं पाठस्तु कंडतीति नित्यनर्थः । कुड घनत्वे । घनत्वं सांद्रता ॥

**मू०–निर्निविभ्यःस्फुरतिस्फुलत्योस्सस्यषोवा** ॥ निःष्फुरति, निस्स्फुरति निःस्फुरति निष्फुरति निस्फुरति । निःष्फुलति निःस्फुलति निष्फुलति निस्फुलति । णू स्तवने । अनुवीत् । धू विधूनने । अधुवीत् । गु पुरीषोत्सर्गे । जुगुविथ जुगुथ । गूयात् गोता । ध्रु गतिस्थैर्ययोः । ध्रुता । अध्रुषीत् । इतिकुटादयः । कृतीछेदने । मुचादेर्मुम । कृन्तति । नृततृदच्छृदचृतकृद्भ्योऽसेस्सादेरड्वा । कर्तिष्यति, कर्त्स्यति । अकर्तीत् । गॄ निगरणे ।

सुबोधिनी–निर्निविभ्यःस्फुरतिस्फुलत्योःसस्यषोवा । एभ्यः परस्यानयोः सस्य वा षत्वं भवति । णू दीर्घांतः । परिणूत गुणोदयइत्यत्र कितइतीण्निषेधः । कुटादेरिति ङित्त्वान्न वृद्धिः । नुधातोर्ग्युव् । अनुवीत् । लोपोऽह्रस्वादिति सिलोपः । अगुर्ता । वृत्ताः कुटादयः । कृती छेदने । मुचादेरिति मुम् । कृंतति । नृततृदेति वेट् । कर्तिष्यति, कर्त्स्यति ॥

**मू०–गृलोवा** ॥ गिरतेः स्वरेरस्यलोवा ॥ ऋतइर् । गिरति, गिलति । गरिता, गरीता, गलिता गलीता । अगारीत् अगालीत् । स्पृश स्पर्शने । स्प्रष्टा स्पर्ष्टा । अस्प्राक्षीत् अस्पार्क्षीत् अस्पृक्षत् । प्रच्छज्ञीप्सायाम् । ग्रहां क्ङितिच । पृच्छति । पप्रच्छिथ पप्रष्ठ । अप्राक्षीत् । सृज विसर्गे । सृजति । सृजिदृशोस्थपोवेट् । ससर्जिथ सस्रष्ठ । स्रष्टा । अस्राक्षीत् । टुमस्जो शुद्धौ मज्जति । मस्जिनशोर्झलिनुम् । ममज्जिथ ममङ्क्थ । मङ्क्ता । अमाङ्क्षीत् । विच्छगतौ । आयः । विच्छायति । विच्छायाञ्चकार । विविच्छ । इषु इच्छायाम् । गमाञ्छः । इच्छति । इच्छेत् । इच्छतु । ऐच्छत् । इयेष । इयेषिथ । एषिता एष्टा । ऐषीत् । विश प्रवेशने । वेष्टा । अविक्षत् । मृश आमर्शने । अम्राक्षीत् अमार्क्षीत् अमृक्षत् । रि पि गतौ । रियति । पियति । रेता । पेता । धि धारणे । धियति । क्षिनिवासगत्योः । क्षियति । षु प्रेरणे । सुवति । सविता । कॄ विक्षेपे । किरति । चकार । चकरतुः । चकरुः ।

सुबोधिनी–गृलोवा । गिरतेः रेफस्य लत्वं वा स्यात् स्वरे परे । वृङ्वृञ्ऋदंतानां वेति वा इटो दीर्घः । गरिता, गरीता । स्पृशकृषादीनां वेति वा रकारः । छशषेति षत्वं ष्टुत्वं । स्प्रष्टा, स्पर्ष्टा । कृषस्पृशेति वा सिः । अनिटो नामिवत इति वृद्धिः । अस्प्राक्षीत् । अस्पार्क्षीत् । पक्षे हशषांतादिति सक् । अस्पृक्षत् । प्रच्छ ज्ञीप्सायां । ज्ञातुमिच्छा ज्ञीप्सा । वुण्प्रत्यये प्रच्छकः । पिद्भिदादिभ्योऽङिति भिदादित्वादङ्प्रत्यये संप्रसारणे च पृच्छा । ततो णिङिट्करणे इति ञ्यंतात् वुणप्रत्यये तु पृच्छकः । ग्रहादीनामिति संप्रसारणं । पृच्छति । ऋसंयोगादित्यकित्त्वान्नसंप्रसारणं । पप्रच्छतुः । स्वरांतादत्वत इति वेट् । पप्रच्छिथ, पप्रष्ठ । सृजिदृशोस्थपीति थपि वेट् । ससर्जिथ, रागोऽसिदृशामिति रः । सस्रष्ठ । टुमस्जो शुद्धौ । द्वितीयुः । मज्जथुः । श्चुत्वेन सस्य शः । झबेजबाइति शस्य जः । मज्जति । मस्जिनशोरिति नुम् स्कोरिति सलोपः ॥ मङ्क्ता । विच्छ तुदादिपाठसामर्थ्यादायप्रत्ययांतादपि अः नत्वप् । तेन विछायंतीति विछायतीत्यत्र वादीपोरिति नुम्विकल्पः । आयइत्यायप्रत्ययः । विच्छायति । आयादयोनपिवेति वा आयः । कासादिप्रत्ययादित्याम् यतइत्यलोपः । विच्छायां चकार । इषु भाष्यवार्तिकमतेऽनुदित् । गमांछइति छः । इच्छति । इषसहेतिवेट् । एषिता, एष्टा । विश प्रवेशने । हशषांतादिति सक् । अविक्षत् । मृश आमर्शने । आमर्शनं स्पर्शः । कृषस्पृशमृशेति वा सिः कृपादीनांवेति वा रः । अम्राक्षीत्, अमार्क्षीत्, हशषांतादिति सक् । अमृक्षत । रि पि । तुधातोरितीय् । रियति । पियति । ऋतइर्तोऽङ् किरति । ऋसंयोगादित्यकित्त्वाद्गुणः । चकरतुः । वृङ्वृञ्ऋदंतानामिति वेटोदीर्घः । करिता, करीता ।

तत्त्व०–गृलोवेति । व्यवस्थितविकल्पोयं तेन गल इति कंठे नित्यं विषे तु गर इत्यत्र न । प्रच्छ अथ कथं वक्तारं पृच्छकं श्रोतृनिति प्रच्छकमित्येव पाठ इति बहवः पृच्छक इति पाठे तु भिदादराकृतिगणत्वादाङ्पृच्छा तत्करोतीति ञ्यन्ताद्वुणि बोध्यं । विछ । तुदादिपाठसामर्थ्यादप्रत्ययान्तादपि अतएव नत्वप् । तेन विच्छायती– विच्छायन्तीत्यत्र वा दीपोरिति नुम्विकल्पः । केचित्तु तुदादिपाठादिदमेव विकल्पयन्ति तन्मते तुदादिपाठस्य केवले विच्छती विच्छन्तीत्यत्र चरितार्थत्वादाय् प्रत्ययान्तादेव नत्वः । तेन विच्छायन्तीत्यत्र नित्यमेव नुम् । इषु अनुदित्पाठस्तु भाष्यवार्तिकसम्मतः । रियतीति रिअति इति स्थिते उपधाया लघोरिति गुणः प्राप्तो बहिरंगत्वान्निवारितः । तथाहि । इय् अकारापेक्षत्वेनअंतरंगः । अल्पाश्रितत्वात् । गुणस्तु अकारातिवोक्षत्वे बहिरंगः बहुपक्षत्वात् ।

**मू०–उपात्किरतेस्सुट्छेदेऽर्थे ॥**

सुबोधिनी–उपात् किरतेः सुट्छेदेऽर्थे । उपोपसर्गात् परस्य किरतेः सुडागमः स्यात् छेदे वाच्ये नान्यत्र ॥

**मू०– हिंसायाम्प्रतेश्च ॥** उपस्किरति । प्रत्यस्किरत् । रुजो भंगे । अरौक्षीत । अरौक्ताम् । भुजो कौटिल्ये । भोक्ता । अभौक्षीत् । अभौक्ताम् । छुप स्पर्शे । छोप्ता । अच्छौप्सीत् । रुश रिश हिंसायाम् । रोष्टा । रोष्टारौ । अरुक्षत् । रेष्टा । अरिक्षत् । लिशगतौ । लेष्टा । अलिक्षत् । खिद परिघाते । मुचादेर्नुम् । खिन्दति । खेत्ता । अखैत्सीत् । पिश् अवयवे । पिंशति । पेशिता ॥ इतिपम् ॥ जुषी प्रीतिसेवनयोः । जुषते । ओविजी भयचलनयोः । विजते ।

सुबोधिनी–हिंसायांप्रतेश्च। उपात् प्रतेश्च किरतेः सुट्स्यात् हिंसायाम्। अड्‌द्वित्वव्यवधानेऽपि सुट् कात् पूर्व इति वक्तव्यं। उपास्किरत् उपचस्कार। उपेविदारंप्रतिचस्करे नखैरिति माघः। कर्म्मणि लिट्। लिश गतौ। इशषांतादिति सक्। अलिक्षत्। मुचादेरिति मुम्। खिंदति। अयं दैन्येपि दिवादौ रुधादौ च वर्त्तते। पिश् अवयवे। मुचादेरिति मुम्। पिंशति। अयं दीपनायामपि। त्वष्टा रूपाणि पिंशतु। दीपयत्वित्यर्थः॥ इतिपम्॥ ओविजी। प्रायेणायमुत्पूर्वः। उद्विजते॥

**मू–विजइट्**॥ विजेः परइडादिप्रत्ययोङित्। विजिता। ओलजीओलस्जी व्रीडे। लेजे। ललज्जे। पृङ् व्यायामे।

सुबोधिनी–विजइट्। विजेः परइडादिः प्रत्ययो ङित्। इह ओविजी तुदादिः रुधादिश्च गृह्यते न तु विजिर् पृथग्भावे इति जुहोत्यादिः व्याख्यानात्। पृङ् व्यायामे। प्रायेणायं व्याङ्पूर्वः॥

**मू०–अयकि**॥ ऋतो रिङ्भवत्यकारे प्रत्यये यकि च। नुधातोः व्याप्रियते। व्यापरिष्यते। व्यापृत। व्यापृषाताम्। मृङ् प्राणोत्सर्गे।

सुबोधिनी–अयकि। निर्दिष्टत्वादृकारस्यैव रिङि सिद्धे ङकारग्रहणं व्यवधानार्थं। तेन येइति नदीर्घः॥

**मू०–म्रियतेर्लुङ्लिङोश्चतुर्ष्वेवात्**॥ म्रियते। ममार। ममर्थ। मृषीष्ट। अमृत। दृङ् आदरे। आद्रियते। आदद्रे। आदृषीष्ट। आदर्ता। आदृत। धृङ् अवस्थाने। ध्रियते। अध्रियत। लोपो ऽह्स्वात्झसे। अधृत।

॥ इतितुदादयः॥

सुबोधिनी–म्रियतेर्लुङ्लिङोश्चतुर्ष्वेवात्। मृङश्चतुर्षु लुङ्लिङोश्च परतः आत्मनेपदं स्यादन्यत्र पम्। अयकीति रिङ् नुधातोरितीय्। म्रियते। उरिति न गुणः। मृषीष्ट। ह्नृतः स्यप इतीट्। मारिष्यति। लोपोऽह्स्वादिति सिलोपः। अमृत। शानप्रत्यये म्रियमाणः। दृङ् प्रायेणाङ्पूर्वः। तथाद्रियंते न बुधाः सुधामपि इति श्रीहर्षः। इत्यात्। इति तुदादयः॥

तत्त्वदीपिका–कृतायामिहटीकायां लोकेशंकरशर्मणा। मताभाष्यकृताभव्यातुदादिप्रक्रिया गता। इति तुदादयः।

**मू०– डुक्रीञ् द्रव्यविनिमये**॥ **नाक्र्यादेः**॥ **कर्तरिचतुर्षु**। क्रीणाति।

सुबोधिनी–डुक्रीञ् द्रव्यविनिमये। विनिमयो व्यतिहारः॥ नाक्र्यादेः। क्रीरादिर्यस्य स क्र्यादिस्तस्मात् ना प्रत्ययः स्यात् कर्त्रर्थेषु चतुर्षु॥

तत्त्वदीपिका–डुक्रीञ्। विनिमयः परिवर्त्तः। ना क्र्यादेः। क्री आदिर्यस्य स तथा तस्मात्।

**मू०–ईह्से**॥ नाइत्यस्याकारस्य ई ङिति ह्से। क्रीणीतः।

सुबोधिनी–ईह्से। ङित्यदुरितो ङितीत्यनुवृत्तं नात इति च॥

तत्त्वदीपिका–ईह्से। नात इत्यनुवर्त्तते।

मू०—नातः ॥ नाइत्यस्याकारस्य लोपो ङिति स्वरे । क्रीणन्ति । क्रीणीते । चिक्रयिथ, चिक्रेथ । अक्रैषीत् । अक्रेष्ट । प्रीञ् तर्पणे कान्तौ च । पिप्रिये । श्रीञ् पाके । अश्रैषीत् । मीञ् हिंसायाम् । मीनातिमिनोतीत्यात्त्वम् । ममौ । मिम्यतुः । ममिथ, ममाथ । मासीष्ट । माता । अमासीत् । स्कुञ् आप्लवने ।

सुबोधिनी—नातः । ना आत इति छेदः । ङित्यदुगित्यतोऽङितीत्यनुवृत्तम् ओश्मोरित्यतो लोपइति च ङिति हसे ईविधानात्परिशेषात्स्वर इति लब्धं । नाइत्यविभक्तिकम् । आतोतोद्नतइत्यतोनातइत्यालोप क्रीणते । नुधातोरितीय् । चिक्रिये । वृद्धिः । अक्रैषीत् । अक्रेष्ट । प्रीञ् तर्पणे कांतौच । कांतिः कामना । मीञ् मीनातिमिनोतीत्यात्वं । ममौ । नुधातोरितियः । मिम्ये । मीयात् । मासीष्ट । माता । मास्याति । मास्यते । अमास्यत् । अमास्यत । यमिरमिनमातामितीट्सकौ । अमासीत् । अमास्त ।

तत्त्वदीपिका—नातः । न आत इति छेदः । नेत्यविभक्तिकं । षष्ठीनिर्दिष्टत्वेननांतस्यैव स्यादात इत्युक्तराथं स्पष्टार्थमिहैव कृतं । हसे ईविधानात्परिशेषात्स्वर इति लभ्यत इत्याह स्वरेपरे । स्कुञ् । आप्लवनमुद्धरणम् ।

मू०—स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्योनुर्नाच ॥ स्कुनोति । स्कुन्वन्ति । स्कुन्वीत । स्कुनुताम् । स्कुनाति । अस्कुनीत । चुस्कुविषे । अस्कौषीत् । अस्कोष्ट । स्तुम्भु स्कम्भु रोधने । एते पमंताः । वेः स्तभ्नादीनां सस्यषःस्यात् । विष्टभ्नोति विष्टभ्नाति । व्यष्टभ्नात् । वितष्टम्भ । वितष्टम्भतुः । विष्टभ्नोति ।

सुबोधिनी—स्तंभुस्तुंभुस्कंभुस्कुम्भुस्कुञ्भ्योनुर्नाच । स्तंभ्वादयश्चत्वारः सौत्राः । सर्वेरोधनार्थाइत्येके । माधवस्तु प्रथमतृतीयौ स्तंभार्थौ द्वितीयो निष्कोषणार्थः चतुर्थोधारणार्थ इत्याह । सर्वे पमंताः नोलोपइति नलोपः । स्तभ्नोति स्तभ्नाति ।

तत्वदीपिका—स्तंभु । पमन्ताइति । पं परस्मैपदमन्तेयेषामिति पमन्ताः ।

मू०—हसादानहौ ॥ हसान्ताद्धातोर्नास्थाने आनस्स्याद्धौ परे । स्तुभान । स्कभान । अस्तुभत् । अस्तम्भीत् । युञ् बन्धने । युनाति । योता । पूञ् पवने ।

सुबोधिनी—हसादानहौ । हसादिति धातोर्विशेषणं तेन तदंतलाभः । अतइत्यारंभसामर्थ्यात्संनिपातपरिभाषाया अप्रवृत्तेर्हेर्लुक् । स्तभान । इरितोवेति वाङः । अस्तभत् अस्तंभीत् ।

तत्वदीपिका—हसादानहौ । हसादिति धातोः विशेषणात्तदन्तलाभ इत्याशयेनाह । हसान्तादिति । येन नाप्राप्तिन्यायेन नाप्रत्ययं बाधित्वाऽऽन एवायं नतु नोरपि । तेन पक्षेस्तभ्नुहीत्येव ।

मू०—प्वादेर्ह्रस्वः ॥ कर्तरि चतुर्षु । पुनाति । अपावीत् । लुञ् छेदने । लुनाति । अलावीत् । स्तृञ् आच्छादने । स्तृणाति । तस्तार । तस्तरतुः । स्तीर्यात् । स्तरिषीष्ट । स्तीर्षीष्ट । अस्तारीत् अस्तरीष्ट । अस्तीर्ष्ट । कृञ्

हिंसायाम् । कॄणाति । चकरे । करिषीष्ट । कीर्षीष्ट । अकारिष्ट । अकरीष्ट । अकीर्ष्ट । पेसेरिटोनदीर्घः सीष्टादेश्च । वॄञ् वरणे । वृणाति । वूर्यात् वरिषीष्ट। वूर्षीष्ट अवरीष्ट । अवूर्ष्ट । धूञ् कंपने । धुनाति । दुधविथ, दुधोथ । धविता, धोता । अधावीत् । अधविष्ट अधोष्ट । ग्रहउपादाने । गृह्णाति । गृहाण । जग्राह । जगृहतुः । ग्रहीषीष्ट । ग्रहीता । अग्रहीत् अग्रहीष्ट । इत्यात्पे । शॄ-हिंसायाम् । शृणाति ।

सुबोधिनी—प्वादेर्ह्रस्वः । प्वादेर्ह्रस्वो भवति चतुर्षु परेषु ऋसंयोगादित्यकित्त्वाद्गुणः । तस्तरतुः । ऋतइरितीर् य्वोर्विहसेइतिदीर्घः । स्तीर्यात् । सीष्टादेश्चेतीटो न दीर्घः । स्तरिषीष्ट । वृङ्वृञ्ऋदंतात् सिस्योरिड्वा इति वेट् पक्षे उरिति गुणो न । ऋतइरितीर् । य्वोर्विहसेइति दीर्घः । स्तीर्षीष्ट । वृङ्वृञितिवेटोदीर्घः । स्तरिता, स्तरीता । पेसेरिटो न दीर्घः । अस्तारिष्टां । वृञ् पोरुरित्युर् य्वोर्विहसेइति दीर्घः । वूर्यात् । लुङि अवारीत् । पेसेरिति न दीर्घः । अवारिष्टाम् । आते तु । वृङ्वृञऋदंतात सिस्योरिति वेट् । अवरिष्ट, अवरीष्ट । उरिति गुणो न पोरुर्इत्युर् य्वोरितिदीर्घः । अवूर्ष्ट । धूञ् स्वरतिसूतीतिवेट् । दुधविथ, दुधोथ । स्तुसुधूञामितीट् । अधावीत् । ग्रहामिति संप्रसारणं । गृह्णाति, गृह्णीतं । ईटोग्रहामितीटो दीर्घः ग्रहीषीष्ट । ह्म्यंतेति न वृद्धिः । अग्रहीत् । ईटोग्रहामस्मिन्सूत्रे एकस्वराद्ग्रहेर्विहितस्येटो दीर्घ इति वक्तव्यम् । एकस्वरादितिकिं । जाग्रहिता । जाग्रहिष्यति इत्यादौ यङ्लुकि मा भूत् । ग्रहेर्विहितस्य किं । ग्राहितः । अत्रणेर्विहितत्वान्नदीर्घः । प्रकृतस्येटो ग्रहणात् ग्राहिष्यते इत्यादाविण्वदिटो न दीर्घः । इत्यात्पे ।

मू—०शॄदॄप्रां ह्रस्वोवालिटि ॥ किति । शशरतुः शश्रतुः । शीर्यात् । शरिता, शरीता । पॄ पालनपूरणयोः । पृणाति । पपरतुः । पूर्यात् । वॄ वरणे । वृणाति । ववरतुः । वूर्य्यात् । भॄ भर्त्सनभरणयोः । भृणाति । मॄ हिंसायाम् । मृणाति । दॄ विदारणे । दृणाति । ददरतुः दद्रतुः । जॄ वयोहानौ जृणाति । नॄणये । नृणाति । कॄ हिंसायाम् । कृणाति । ॠ गतौ । ऋणाति । अराञ्चकार । ईर्यात् । अरिता अरीता । आरीत् । गॄ शब्दे । गृणाति । ज्यावयोहानौ । ग्रहांकितिच । जिनाति । जिज्यौ । जिज्यतुः जीयात् । अज्यासीत् । रीगतिरेषणयोः । रिणाति । रियतुः । ली श्लेषणे । लिनाति । ललौ । लिलाय । लिल्यतुः । ललिथ, ललाथ, लिलयिथ, लिलेथ । लाता, लेता । अलैषीत् । अलासीत् । व्लीवरणे व्लिनाति । प्ली गतौ ॥ प्लिनाति । इतिप्वादयः ॥ व्री वरणे । व्रीणाति । भ्रीभयभरणयोः । भ्रीणाति । क्षीष् हिंसायाम् । एषां त्रयाणां वा ह्रस्वः। ज्ञा बोधने । ज्ञाजनोर्जा । जानाति । जज्ञौ । ज्ञायात्, ज्ञेयात् । अज्ञासीत् । बन्ध बन्धने । बध्नाति । बबंधिथ । बबंध । बंधा । भंत्स्यति । अभांत्सीत् । सकारलोप आदेशइति नतु मात्रविधौ । तेन अबान्धाम् । मन्थ विलोडने । मथ्नाति । ममाथ । श्रन्थ ग्रंथ संदर्भे । श्रथ्नाति ।

शश्रंथ । जग्रंथ । श्रन्थिग्रन्थीत्यादीनांवा लिटः कित्त्वम् । शश्राथ । जग्राथ ।
कुथ कुंथ संश्लेषणसंक्लेशनयोः । चुकोथ । चुकुन्थ । मृद मृड क्षोदे । मृदा-
न । मृडान । गुध रोषे । गुध्नाति । कुष निष्कर्षे । कुषाण ।

सुबोधिनी-शृदृप्रांह्रस्वोवालिटि । एषां वा ह्रस्वो लिटयेव । शश्रतुः । अन्यत्र ऋसंयो-
गादित्यकित्त्वाद्गुणः । शशरतुः । किनइति निषेधस्य क्रादिनियमेन बाधः । शशरिव, शश्रिव ।
ऋतइरितीरि कृते ग्वोर्विहसेइतिदीर्घः । शीर्यात् । वृङ्वृञितिति वेटो दीर्घः । शरिता शरीता ।
ऋणाति । ऋणीयात् । ऋणातु आर्णात् । अरांचकार । ईर्यात् । अरिता अरीता । अरिष्यति
अरीष्यति । आरिष्यत् । आरीत् । ज्याग्रहामिति संप्रसारणं दीर्घस्य दीर्घइति दीर्घे कृते प्वादे-
र्ह्रस्वइति ह्रस्वः । जिनाति ॥ रिगतिरेषणयोः । रेषणं वृकशब्दः । लिलीङोरित्यात्वं वा ।
ललौ, लिलाय लेता । ल्वादयः । प्वादयोपि । क्षीष् षित्त्वादङ् । क्षिया । ज्ञाजनोर्जेति
जादेशः । जानाति । बंध नोलोपइति नलोपः । बध्नाति । हसादानहावित्यानः अतइति
हेर्लुक् । बधान । आदिजबानामिति भत्वं । भंत्स्यति । सावनिटोनित्यमिति वृद्धिः । अभांत्सीत् ।
तथोर्द्धइतितस्य धत्वं झसादिति सिलोपः । अबांधां । अभांत्सुः । श्रंथ विमोचनप्रतिह-
र्षयोरित्यस्य श्रंथ ग्रन्थ संदर्भे इत्यर्थभेदात् श्रंथेः पुनः पाठः श्रंथिग्रंथीत्यादिना कित्त्वपक्षे
एत्वपूर्वलोपावप्यत्रवक्तव्याविति हरदत्तादयः । श्रेथतुः । श्रेथुः । इदं कित्त्वं पितामपि इति
सुधाकरमते श्रेथिथ । अस्मिन्नपि पक्षे णप् । शश्राथ । उत्तमेतु शश्राथ, शश्रथेति माधवः
तत्र मूलं मृग्यं । मृद मृड, ष्टुत्वं मृद्गाति । कुष निष्कर्षे । अंतर्गतस्य बहिर्निष्कासनं निष्कर्षः ॥

**मू०-निरःकुषोवसादेरनपीड्वा** ॥ निष्कोषिता, निष्कोष्टा । निरकोषीत्,
निरकुक्षत् । क्षुभ संचलने । क्षुभ्नादिषु न णत्वम् । क्षुभान । णभ तुभ
हिंसायाम् । नभान । तुभान । क्लिशू विबाधने । क्लिश्नाति । अक्लेशीत् ।
अक्लिक्षत् । अश भोजने । अश्नाति । आशीत् । उध्रस् उञ्छे । ध्रस्नाति ।
उकारो धात्ववयवइत्येके । उध्रसाञ्चकार । औध्रासीत्, औध्रसीत् । विष
विप्रयोगे । विषाण । वेष्टा । अविक्षत् । पुष पुष्टौ । पोषिता । मुष स्तेये ।
खच् खव हिठ भूतप्रादुर्भावे । खच्नाति ।

सुबोधिनी-निरः कुषोवसादेरनपीड्वा । निरपूर्वात् कुषेः परस्य वसादिप्रत्ययस्य इड्वा
स्यात् अनपि । इडभावे हशषांतादिति सक् । निरकुक्षत् । क्षुभ्नादिषु न णत्वं । क्षुभ्नादिरा-
कृतिगणः । णभतुभ भ्वादौ दिवादौ च । क्लिशू । नशादिति श्चुत्वनिषेधः । क्लिश्नाति ।
ऊदितोवेति वेट् । अक्लेशीत् । इडभावे हशषांतादिति सक् । अक्लिक्षत् । पुष अनि-
ट्केषु पुष्यति यप्रत्ययेन निर्देशादयं सेडिति भावः । पोषिता । खच् खव हिठ भूतप्रादुर्भावे
भूतप्रादुर्भावः अतिक्रांतोत्पत्तिः । श्चुत्वं । खच्नाति ।

**मू०-खवोवस्यऔने** ॥ खौनाति । हिठ्णाति । इतिपम् ॥ वृङ् संभ-
क्तौ । वृणीते । वव्रे । वरिषीष्ट, वृषीष्ट ॥ अवरिष्ट, अवृत ।

इतिक्र्यादयः ।

सुबोधिनी–खवोवस्यऔने । खवेर्धातोर्वकारस्य औत्वं भवति नाप्रत्यये परे । परत्वादौ इसांतत्वाभावात् हसादानहाविति न । खौनीहि । ष्टुत्वं हिढ्णाति ॥ इतिपं ॥ वृङ् संभक्तौ संभक्तिर्भजनं । क्रादेरिति नेट् । ववृषे । वृङ्वृञ्ऋदंतात्सिस्योरिङ्वा । वरिषीष्ट, वृषीष्ट । वृङ्वृञ्ऋदंतानामिति वेटो दीर्घः । वरिता, वरीता । इडभावे लोपेऽह्रस्वादिति सिलोपः । अवृत । इत्यात् । ॥ इतिक्र्यादयः ॥

तत्त्वदीपिका–खव । भूतप्रादुर्भावोतिक्रान्तोत्पत्तिः । खच्त्रातीति । स्तोःश्चुभिःश्चुरितिञः ।
कृतायामिहटीकायां लोकेशंकरशर्मणा ।
बाधनंदुष्टबुद्धीनामगमत्क्र्यादिसाधनम् ।
इति क्र्यादयः ।

मू०–चुरस्तेये । चुरादेःस्वार्थेञिः ॥ चोरयति । चोरयेत । चोरयांचकार । चोर्य्यात् । अचूचुरत् । चिति स्मृत्याम् । चिन्तयति । अचिन्तत् । चुरादेर्ञिर्वेति केचित् । चिन्तति । यत्रिसङ्कोचने । यंत्रयति । अयंत्रयत् । ओलडि उत्क्षेपे । ओलण्डयति ओलण्डति । ओलण्डांचकार । औलल-ण्डत् । औलण्डीत् । ओकारइदित्येके । लण्डयति । अललण्डत् । लण्डति । पीड़ अवगाहे । पीडयति पीडयते । पीडाञ्चक्रे ।

सुबोधिनी–चुरस्तेये । चुरादेःस्वार्थेञिः चुर आदिर्यस्य स चुरादिस्तस्मात् चुरादेर्ग-णात् स्वार्थे ञिः स्यात् । उपधायालघोरिति गुणः । धातुत्वात् तिप् गुणायादेशो । ञित्स्व-रितेतउभे इत्युभयपदं । चोरयति, चोरयते । चोरयेत, चोरयेत । चोरयतु, चोरयताम् । अचोर-यत, अचोरयत । चोरयामास । चोरयांचक्रे । ञेरिति ञिलोपः । चोर्यात् चोरयिषीष्ट । चोर-यिता । चोरयिष्यति, चोरयिष्यते । अचोरयिष्यत, अचोरयिष्यत । लुङि अचूचुरत, अचूचु-रत । चिति स्मृत्यां । चितेति पठितव्ये इदित्करणं ञिप्रत्ययस्य पाक्षिकत्वे ज्ञापकं । सर्वेपि चुरादयो विकल्पेन ञिप्रत्ययं लभंते इत्यर्थः । तेन चिंत्यात् चिंत्यते इत्यादौ नोलोप इत्यनेन लोपो न । यत्रिसंकोचने । यंत्रेति पठितुं शक्यं । यत्तु इदित्करणाद्यंत्रतीति माधवेनोक्तं तच्चित्यं । यंत्रइत्यत्र नकारे पठितेपि नोलोपो इति नलोपो न लभ्यते नकार-स्यानुपधात्वात् । चिंत्यादित्यत्र तु चिंत स्मृत्यामिति नकारोपधपाठे नस्यलोपः स्यादेवेति तद्वारणाय क्रियमाण इकारस्तु ज्ञापक इति भावः । ओलडि उत्क्षेपणे । ओदित्करणं ल्वाद्योदितश्चेति धातोरव्यवहितस्य तकारस्य नत्वार्थमिति तद्बलात् नेडित्येके । ओदिद्ब-लादिड्व्यवधानेऽपि नत्वमित्यन्ये दंडिनः ।

तत्त्वदीपिका–चुरादेः । चुर् आदिर्यस्य स तस्मात् । तद्गुणसंविज्ञानोबहुव्रीहिः अनुद्भूतावयवभेदसमुदाय-स्यान्यपदार्थत्वेनाश्रयणादेकवचनं । ननुधातोः प्रेरणे इत्यनेनैव चुरादेरपि स्यात्किमनेनेत्यत आह । स्वार्थे इति । ञिर्वेति । अयं भावः चिन्तेति पठितव्ये इदित्करणं ञेः पाक्षिकत्वे लिंगं तेन चिन्त्यादित्यादौ नलोपो न । यत्रि । यंत्रेति पठितुं युक्तं । इदित्वाभावेपि उपधाभूतनकाराभावे नलोपाभावात् ।

मू०– भ्राजभासभाषदीपजीवमीलपीडांवोपधायाह्रस्वोऽङ्प-रेञौ ॥ अपिपीडत, अपीपिडत् । प्रथ् प्रख्याने । प्राथयति ।

सुबोधिनी–भ्राजभासभाषदीपजीवमीलपीडांवोपधायाह्रस्वोऽङ्परेञौ । एषामुपधाया ह्रस्वो वा स्यात् अङ् परो यस्मात् सोऽङ्परस्तस्मिन् ञिप्रत्यये परे । भ्राज् भासृ दीप्तौ । भाष व्यक्तायां वाचि । दीपी दीप्तौ । जीव प्राणधारणे । मील निमीलने । पीड अवगाहे । ह्रस्वपक्षे लघोर्दीर्घ इति पूर्वस्य दीर्घः । अपीपिडत् । ह्रस्वाभावे अपिपीडत् । प्रथ प्रख्याने प्रख्यानं कथनं । स्वार्थे ञौ ज्ञपादिभ्यइति वक्ष्यमाणेन मित्त्वाभावान्न ह्रस्वः । प्राथयति ।

**मू०–स्मृदृत्वरप्रथम्रदस्तृस्पृशांपूर्वस्यादङ्परेञौ ॥ इत्वापवादः । अपप्रथत् । पृथ प्रक्षेपे । पर्थयति ।**

सुबोधिनी–स्मृदृत्वरप्रथम्रदस्तृस्पृशांपूर्वस्यादङ्परेञौ । एषां द्वित्वे पूर्वस्य आत्वं स्यात् अङ्परे ञौ । अङिलघावित्यस्यापवादः । स्मृ चिंतायां । दृ भये । ञित्वरा संभ्रमे । प्रथ प्रख्याने । म्रद मर्दने । स्तृञ आच्छादने । स्पृश् बाधनग्रंथनयोः ।

**मू०–उपधायाऋवर्णस्यऋद्वाङ्परेञौ ॥ इररारामपवादः । अपीपृथत्, अपपर्थत् । भक्ष अदने । अबभक्षत् । श्रण दाने । विश्राणयति । अशिश्रणत्, अशश्रणत । तड आघाते । अतीतडत् ।**

सुबोधिनी–उपधायाऋवर्णस्यऋद्वाङ्परेञौ । ऋवर्णोपधस्य धातोरुपधाया ऋद्वा स्यात् अङ्परेञौ । इररारामपवादः । धातोरुपधायाऋतइरिति अचीकृतदित्यादौ इर्प्राप्तः । अमीमृजदित्यत्र मृजेर्वृद्धिरित्यार् प्राप्तः । इतरेषामृदुपधानामुपधाया लघोरिति अपीपृथदित्यादावर् प्राप्त इति विवेकः । श्रण दाने । प्रायेणायं विपूर्वः । विश्राणनं वितरणम् ।

तत्वदीपिका–इररारामिति । दीर्घोपधे उपधाया ऋत इति इर्प्राप्तः । मृजेर्वृद्धिरित्यार्प्राप्तः । लघूपधत्वे त्वर्प्राप्तः ।

**मू०–ज्ञपज्ञानज्ञापनयोर्मित् ॥**

सुबोधिनी–ज्ञपज्ञानज्ञापनयोर्मित् ॥ ज्ञपधातुर्ज्ञाने ज्ञापने च ञिप्रत्ययं लभते मित्संज्ञकश्च । प्रतिपज्ज्ञप्तिचेतनाः ।

**मू०–मितांह्रस्वः ॥ मितां धातूनामुपधाया ह्रस्वो ञौ । ज्ञपयति । अजिज्ञपत् ।**

सुबोधिनी–मितांह्रस्वः । मइत् येषां ते मितः तेषां । घटादयो मित इत्यादिमित्संज्ञकानां ग्रहणम् ।

तत्वदीपिका–मितां ह्रस्वः । मइत् येषान्ते तथा तेषाम् ।

**मू०–यमवेष्टनेमित् ॥ यमयति । अयीयमत् ।**

सुबोधिनी–यमवेष्टनेमित् । चुरादौ यमधातुर्वेष्टने मित् नतु भोजने । यमयति चंद्रं । परिवेष्टते परिवेषंकरोतीत्यर्थः । यमधातुश्चुरादौ घटादौ च । घटादौ तु यच्छतिर्भोजनतोऽन्यत्र मित्रोति भोजने एव मित्संज्ञकः । यमयति ब्राह्मणान् । भोजयतीत्यर्थः । अन्यत्र आयाम-

याति। ज्ञापयाति। व्यापारयति वेत्यर्थः। जनीजॄषित्यमंतत्वादेव सर्वार्थेषु मित्त्वे सिद्धे विशेषार्थं वचनम्।

तत्त्वदीपिका--यमयति। परिवेष्टत इत्यर्थः।

मू०--चहचयपरिकल्कनेमित्॥ चहयाति। अचीचहत्। चययाति। अचीचयत्।

सुबोधिनी--चहचयपरिकल्कनेमित्॥ परिकल्कनं दंभः शाठ्यं च। अदंतेषु कथादिषु वक्ष्यमाणस्य तु अदंतत्वेनाग्वृलोपित्वान्नाङ्कार्यम्। अचचहत्।

तत्त्वदीपिका--परिकल्कने। परिकल्कनं दंभः शाठ्यं च। कत्थनमित्यन्ये।

मू०--रहत्यागेमित्। रहयाति। अरीरहत्।

सुबोधिनी--रहत्यागेमित्॥ कथादेस्तु अररहत्।

मू०--बलप्राणनेमित्॥ बलयाति। अबीबलत्।

मू०--चिञ्चयने मित॥

सुबोधिनी--चिञ्चयनेमित्। रचनायां मिद्यम्।

मू०--चिस्फुरोर्ञौवात्वंवा।

सुबोधिनी--चिस्फुरोर्ञौवात्वंवा। अनयोरात्वं वा स्यात् ञिप्रत्यये परे॥

मू०--रातोञौपुक्॥ ऋधातोरादंतस्यच पुक् ञौ। चपयाति। अचीचपत्। चययाति। अचीचयत्। स्वार्थेञौ ज्ञपादिभ्योऽन्येमितोन। कृत संशब्दने।

सुबोधिनी--रातोञौपुक्। आच आश्चानयोः समाहारो रात् तस्य आत्वे पुकि ह्रस्वे। चपयाति। आत्वाभावे चययाति। स्वार्थे ञौ ज्ञपादिभ्योन्ये मितो न। तेन शमादीनाममंतत्वप्रयुक्तं मित्त्वं न मुख्यमते पंच ज्ञपादयः। मतांतरे सप्त। कृत संशब्दने।

तत्त्वदीपिका--रातोञौ। आ च आश्च रात् तस्य रातः ऋइत्यनेनोभयोरपि ग्रहणं तेन ऋच्छंतमिति ऋच्छति वाग्रेरयतीतिविग्रहे अर्प्पयतीतिभवति। ज्ञपादिभ्य इति। सप्तभ्य इति मतान्तरं बोध्यं। तेन शमादीनाममन्तत्वप्रयुक्तं मित्त्वं न।

मू०--धातोरुपधायाऋतइर्॥ कीर्तयति। अचीकृतत्, अचिकीर्तत।

सुबोधिनी--धातोरुपधायाऋतइर्। ननु ऋतइर् इति सूत्रे धातोर्ऋतइर् व्याख्याने सिद्धमिष्टं किमनेन सूत्रेणेति चन्मैवं तथाहि सति ऋकारीयति इत्यत्रापि इरः प्रसंगः स्यात्। उपधाऋवर्णस्य ऋद्धेति पक्षे आङ्लिघोन्ह्रस्व इति इत्वे कृते लघोर्दीर्घ इति दीर्घः। अचीकृतत्। पक्षेअचिकीर्तत।

मू०--आकुस्मादात्मनेपदिनः॥ चित् सञ्चेतने। चेतयते। अचीचितत। दंशिर्दंशने। दंशयते। अददंशत। आकुस्मीयमात्मनेपदं ञिसन्नियोगेनैव। दंशति। न लोपो न संजिसाहचर्य्यात् भ्वादेरेव तत्र ग्रहणात्। तात्रि

कुटुम्ब धारणे । तन्त्रयते । कुटुम्बयते । अततन्त्रत । अचुकुटुम्बत । अचुकुटुम्बत् । मत्रि गुप्तभाषणे । मन्त्रयते । शम लक्ष आलोचने । शामयते । लक्षयते । अशीशमत । अललक्षत । दिवु परिकूजने । देवयते । गॄ विज्ञाने । गारयते । अजीगरत । विद चेतनाख्याननिवासेषु । वेदयते । अवीविदत् ।

सुबोधिनी–आकुस्मादात्मनेपदिनः । कुस्मनाम्नो वेति वक्ष्यते तमभिव्याप्येत्यर्थः । परगामिफलार्थमिदमात्मनेपदं । चित संचेतने । संचेतनं मूर्च्छाद्यवस्थानिवृत्त्युत्तरकालकं ज्ञानं । शम लक्ष आलोचने । ननु निशामयतदुत्पत्तिमिति कथं संगच्छते । आकुस्मीयत्वादात्मनेपदे निशामयस्वेति रूपस्य सर्वसंमतत्वादिति । यदि शमु उपशमे इत्यस्मात् ञिप्रत्ययस्तर्हीमं तत्त्वान्मित्वे सति ह्रस्वेन भाव्यं । अत्राहुः । स्वार्थञ्यंतादस्माद्धातोः प्रेरणे इति ञिप्रत्ययेनिशामयेति रूपं जानीहि । नचार्थासंगतिरिति वाच्यम् । "निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजिष्यते" इति सिद्धांतात् । स्वार्थे ञौ ज्ञपादिभ्य इति मित्त्वनिषेधः । शामयते । विद चेतनाख्याननिवासेषु । " सत्तायां विद्यते ज्ञाने वेत्ति विंत्ते विचारणे ॥ विंदते विंदति प्राप्तौ श्यन्लुक्श्नम्शेष्विदं क्रमात् " ॥ १ ॥

तत्त्वदीपिका–शामयत इति आकुस्मीयत्वादात् । निशामय तदुत्पत्तिमित्यत्र तु निवृत्तप्रेरणात् प्रेरण इति ञौ बोध्यं । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः ।

मू०–कुस्मनाम्नोवा ॥ कुस्मेतिधातुः कुत्सितस्मयने अथवा कुस्मेति नाम । ततो ञिः । कुस्मयते । अचुकुस्मत् । कण निमीलने । काणयति । अचीकणत्, अचकाणत् ।

सुबोधिनी–कुस्मनाम्नोवा । कुपूर्वात्स्मयतेर्डप्रत्यये टिलोपे समासे च कृते निष्पन्नं कुस्मेति ाम । कण निमीलने । एकनेत्रनिमीलने एवायं । शब्दस्वभावात् । काण्यादीनां कणरणभणेति सूत्रेण आङि लघो ह्रस्व इति ह्रस्वो विकल्प्यते । अचीकणत्, अचकाणत् ।

तत्त्वदीपिका–निमीलने स्वभावादेकनेत्रस्यैव ।

मू०–नवगण्यामुक्तेभ्योहिंसार्थेभ्यःस्वार्थेञिः ॥ हिसि हिंसायाम् । हिंसयति । ज्ञा नियोगे । आज्ञापयति । अजिज्ञपत् । भू मिश्रीकरणचिन्तनयोः । भावयति । अबीभवत् । लोकृ लोचृ परिभाषणे ।

सुबोधिनी–नवगण्यामुक्तेभ्यो हिंसार्थेभ्यः स्वार्थे ञिः । नवगण्यामुक्ता हिंसार्थाः स्वार्थे ञिप्रत्ययं लभते । घातयतिहंतीत्येतौ समानार्थौ । भू मिश्रीकरणचिंतनयोः । भावयति मिश्रीकरोति चिंतति वेत्यर्थः ।

मू०–नरितः ॥ ऋदितः शासेश्चाङ्युपधाया ह्रस्वो न । अलुलोकत् । अलुलोचत् । धूञ् कम्पने ।

सुबोधिनी–नरितः । ऋइद्यस्य स रित् तस्य । शासु अनुशिष्टौ ।

मू०–धूञ्प्रीञोर्नुकञौ ॥ धूनयति । अदुधूनत् । प्रीञ् तर्पणे प्रीणयति ।

अपिप्रीणत्। अथादन्ताः। कथ वाक्यप्रबन्धने। यतः। अल्लोपस्थानिवत्त्वेन न वृद्धिः। कथयति।

सुबोधिनी–धूञ्प्रीञोर्नुगागमः स्यात् ञिप्रत्यये। धूञ् कंपने। प्रीञ् तर्पणे। धूञ् धातुः स्वादौ क्र्यादौ तुदादौ चुरादौ च स्वादौ ह्रस्वश्च। तथाच कविरहस्ये काव्ये। "धूनोति चंपकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम्। वायुर्विधूनयति चंपकपुष्परेणून् यत्कानने धवति चंदनमंजरीषु। १।" अथादंताः। वक्ष्यमाणेषु धातुषु अंत्यावयवोऽकारो विवक्षितो नतूच्चारणार्थ इत्यर्थः। कथ वाक्यप्रबंधे। यत इत्यल्लोपस्य स्थानिवद्भावान्नवृद्धिः। कथयति।

तत्त्वदीपिका--कथ। अदन्तप्रयोजनमाह। अल्लोप इति।

**सू०– अग्ग्लोपिनोनाङ्कार्य्यम्॥** अचकथत्। वर ईप्सायाम्। वरयति। अववरत्। गण संख्याने। गणयति। गणेः पूर्वस्य ईद्वाङ्परे ञौ। अजीगणत्। स्तनगदी देवशब्दे। स्तनयति। गदयति। अतस्तनत्। अजगदत्। पत गतौ। वा ञ्यन्तः। पतयति पतति। पताञ्चकार। पतयांचकार। अपपतत्। अपतीत्। वादन्तइत्येके। पातयति। अपीपतत्। रचप्रतियत्ने। रचयति। सूत्र वेष्टने। सूत्रयति। असुसूत्रत्। मूत्र प्रस्रवणे। मूत्रयति। कल गतौ संख्याने च। कलयति। स्पृह ईप्सायाञ्च। स्पृहयति। अपस्पृहत्। भाम क्रोधे। भामयति। अबभामत्। सूच पैशुन्ये। सूचयति। ऊन परिहानौ। ऊनयति। ञिनिमित्तः स्वरादेशो द्वित्वेकर्तव्ये स्थानिवत्। औननत्। अर्थङ् याचने। अर्थयते। आर्तथत। संग्राम युद्धे। अससंग्रामत्। अन्ध दृष्ट्युपघाते। अन्धयते। अन्धयति। आन्दधत्। अङ्क अङ्ग पदे लक्षणेच। आञ्चकत्। आञ्जगत्॥

इतिचुरादयः।

सुबोधिनी–अग्ग्लोपिनोनाङ्कार्यं। अश्च इश्च उश्च ऋच तेषां समाहारोऽग्ग् अग्ग्लोपो अस्यास्तीति अग्ग्लोपी तस्य अइउऋलोपिनो धातोरङ्निमित्तं कार्यं न स्यात्। तत्किं। आङिलघोर्ह्रस्व इत्युपधाह्रस्वत्वं पूर्वस्येत्वं च लघोर्दीर्घ इति दीर्घः अङ्कार्यं। पतगतौ इति वा ञ्यंतः वाऽदंत इत्येके। आद्ये पतयति। पतति। अनेकस्वरत्वात्कासादिप्रत्ययादित्याम्। पतांचकार। पतइत्यल्लोपः। अपतीत्। द्वितीये तु। पातयति। अपीपतत्। स्तन गदी देवशब्दे। स्तनादेर्ण्यंतादित्नुरितीत्नुः। "स्तनयित्नुर्बलाहकः"। सप्रत्यये तु तिस्तनयिषति। रच प्रतियत्ने। प्रतियत्नो गुणाधानम्। स्पृह ईप्सायाम्। आप्तुमिच्छा ईप्सा। भाम क्रोधे। अबभामदित्यत्राल्लोपस्य स्थानिवत्त्वात् ञौ आङि लघौ ह्रस्व इति ह्रस्वो न। सूच पैशुन्ये। पिशुनो दुर्जनस्तत्कर्म पैशुन्यं। लुङि असुसूचत्। ऊन परिहाने। ञिनिमित्तः स्वरादेशो द्वित्वे कर्तव्ये स्थानिवत्। ञिप्रत्ययो निमित्तं यस्य ईदृशः। स्वरस्थाने आदेशः स स्थानिना तुल्यः स्थानिवद्भवति द्वित्वे कर्तव्ये। स्वरादेःपर इत्यनेन

नशब्दस्य द्वित्वं । उत्तरखंडे यत इति अल्लोपः। औननत । अर्थङ् याचने। कथादिषु उपधावृद्धिदीर्घपूर्वत्वविरहेण भामप्रभृतीनामुपधाह्रस्वस्य निषेधेन गृहमृगप्रभृतीनामुपधागुणस्य च व्यावर्तनेनादंतत्वं सार्थकम् । इहत्वदंतत्वे प्रागुक्तफलाभावात् । किमर्थमदंतत्वमुच्यते बोपदेवस्तु धातोर्नामिन इति वृद्धौ कृतायां रातोऽप्पुकि अर्थापयते इति रूपमाह । शाकटायनस्तु कथादीनां सर्वेषां पुकमाह । तन्मते कथापयति । गणापयतीत्यादि ॥इतिचुरादयः

तत्त्वदीपिका—प्रयोजनान्तरमाह। अग्लोपिन इति । अश्च इश्च उश्च आ च ते तथा तान् लोपयति स तथा तस्य अङ्कार्यं न द्वित्वे सतीकारदीर्घत्वादि न । गणसंख्याने संख्यानिमित्तो ज्ञानविशेषः अंकपदं संख्यानमेकत्वादि तेन च तन्निष्ठः क्रियाविशेषो लभ्यते । लक्षणं चिह्नकरणं ।

कृतायामिहटीकायांलोकेशंकरशर्मणा । इयंदशगणीपूर्णामाननीयामनीषिभिः ॥

## ॥ इति चुरादयः ॥

**मू०—धातोःप्रेरणे ॥ धातोः प्रयोजकव्यापारेऽर्थे ञिप्रत्ययः । भवंतं प्रेरयति भावयते । भावयाञ्चकार ।**

सुबोधिनी—धातोः प्रेरणे । प्रयोजकः प्रेरकः स च चेतनाचेतनसाधारण्येन विवक्षितः स च क्वचित्सिद्धः क्वचित् फलरूपः। देवदत्तःपाचयति गमयतीत्यादौ सिद्धः। भिक्षा वासयति संग्रामो वासयतीत्यादौ तु फलरूपः । तस्य व्यापारः प्रेरणं भृत्यादेर्निकृष्टस्य प्रवर्त्तना प्रेरणमाज्ञेत्यर्थः । धातोर्ञिः प्रत्ययः स्यात्प्रेरणेऽर्थे । ननु यदि धातोः प्रेरणे ञिर्भवति लोट् च तदा ञेर्लोटश्च पर्यायता स्यात् ततश्चेदानीं पृच्छतु भवानिति वक्तव्ये प्रच्छयतीति ञिप्रत्ययेनापि प्रयुज्येतेति चेन्मैवं । प्रयोज्यप्रवृत्त्युपहिता या प्रयोजकनिष्ठप्रवृत्तिः सा ञिप्रत्ययस्यार्थः। प्रयोज्यवृत्त्यनुपहितादप्रयोजकप्रवृत्तिस्तु लोडर्थ इत्युभयोर्भेदः। उक्तं च। "द्रव्यमात्रस्य तु प्रैषे प्रच्छादेर्लोट् विधीयते । सक्रियस्य यदि प्रैषस्तदा स विषयो णिचः॥" भवंतं प्रेरयति भावयति । ञित्स्वरितेतउभे इत्युभयपदम्। भावयते । भावयेत् । भावयेत । भावयतु । भावयताम् । अभावयत् । अभावयत । कासादिप्रत्ययादित्याम्। भावयांबभूव । भावयांचक्रे। ञेरिति ञिलोपः । भाव्यात् । भावयिषीष्ट । भावयिता । भावयिष्यति । भावयिष्यते । अभावयिष्यत् । अभावयिष्यत ॥

तत्त्वदीपिका—दशगणीं निरूप्य स्वार्थञिप्रसंगात्प्रेरणार्थं ञिं दर्शयति । धातोः प्रेरणे। प्रेरणं चानेकविधं। प्रेरणाध्येषणा तत्समर्थाचरणभेदात् । तत्र भृत्यादेर्निकृष्टस्यप्रवर्तना प्रेषणमाज्ञेति यावत् । गुर्वादेः प्रवर्त्तनाध्येषणं प्रार्थनेति यावत् । तत्समर्थाचरणं तदनुकूलव्यापारकरणं तच्चानुमित्युपदेशानुग्रहान्नदानादिरूपं । तत्र यस्यानुमितिं विनार्थो निवर्त्तते तस्य राजादेरनुमित्याप्रयोजकत्वं । वैद्यादेस्तूपदेशेन । पलायमानं निरोधेनानुग्रहेण चौरस्यान्नदानेन सर्वश्चायं प्रकरणादिलभ्यः । सर्वत्रानुगतप्रकरणमात्रं व्यर्थम् । अथ पृच्छतु मां भवानित्यत्रास्त्विति चेदुच्यते । प्रयोज्यप्रवृत्त्युपहितप्रयुक्तिर्ण्यर्थो। केवला तु लोडर्था इति । उक्तं च । द्रव्यमात्रस्य तु प्रैषे "पृच्छादेर्लोड् विधीयते। सक्रियस्य यदा प्रैषस्तदा स विषयो णिच॥" इति। अथ कथं भिक्षा वासयन्तीति कारीषो अग्निरध्यापयतीत्यत्र ञिः भिक्षादेश्च चेतनतया प्रेरणस्य च चेतनधर्मत्वात् । इति चेत् शृणु । अत्राप्यानुकूल्याचरणमेव प्रयोजकव्यापारित्वेनाध्यारोप्यते यतो भिक्षा अपि प्रचुरा व्यंजनाद्याल्याश्चलभ्यमाना वा संप्रयुज्यते ॥ तथा कारीषो अग्निरेकान्ते निर्वाते प्रज्वलितः शीतकृतमुपद्रवमध्ययनविरोधिनमपनयनाध्ययनेनानुकूलो भवतीति। ञित्त्वादुभयपदमाह । भावयतीत्यादि ।

**मू०—अङ्सयोःपूर्वस्योकारस्येत्वं पवर्गयलजकारेष्ववर्णपरेषु परतः ॥** अबीभवत् । मूङ् बन्धने । मावयति । अमीमवत् । यावयति । अयीयवत् । अरीरवत् । लावयति । अलीलवत् । अजीजवत् ।

सुबोधिनी—अङ्सयोःपूर्वस्योकारस्येत्वं पवर्गयलजकारेष्ववर्णपरेषु परतः । द्वित्वरूपस्य उत इत्वं भवति । अवर्णः परो येभ्यस्तेऽवर्णपरास्तेषु पवर्गयलजेषु परेषु । अवर्णपरेषु किं । बुभूषति । पवर्गयलजेषु किम् । ऊर्णुनुविषति।भू सत्तायाम्।एरङ्द्विश्चेति आङि कृते द्वित्वे च भूभू इति जातं तत उत्तरस्य वृद्ध्यावादेशौ ततोऽङि लघौ ह्रस्वे कृते अङ्सयोरिति पूर्वस्येत्वं ततो दीर्घः । अबीभवत, अबीभवत। मूङ् बंधने । अमीमवत । यु मिश्रणे । अयीयवत् । रु शब्दे । अरीरवत् । लूञ् छेदने अलीलवत् । जु गतौ । सौत्रोयं धातुः । अजीजवत् ॥

**मू०—स्रवतिशृणोतिप्लवतिच्यवतीनामङ्सयोः ॥** पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे । असिस्रवत्, असुस्रवत् । अशिश्रवत् अशुश्रवत् । अदिद्रवत्, अदुद्रवत् । अपिप्रवत्, अपुप्रवत् । अपिप्लवत्, अपुप्लवत् । अचिच्यवत् । अचुच्यवत् । नरितः । अशशासत् । अडुढौकत् ।

सुबोधिनी—स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनामङ्सयोः । पूर्वस्येत्वं वाऽवर्णपरे धात्वक्षरे परे । स्रु गतौ । श्रु श्रवणे । द्रु गतौ । प्रुङ् च्युङ् गतौ । अक्षरशब्दोत्रावर्णपरः । अवर्णपरे किं । शुश्रूषति । अपिप्रवत, अपुप्रवत । अचिच्यवत, अचुच्यवत ॥

**मू०—ञन्तात्ञिः ॥** चोरयति । अचूचुरत् ।

सुबोधिनी—ञ्यंतात् ञिः । स्वार्थञ्यंताद्धातोर्ञिः स्यात् प्रेरणे । अपवादत्वाद्वृद्धिं बाधित्वा ञेरिति ञिलोपः । चोरयति । लुङि अङि लधोर्ह्रस्व इति ह्रस्वः । लघोर्दीर्घ इति दीर्घः । नन्वग्लोपित्वाद् द्वयोरप्यसंभवः । अचुचोरदित्येवरूपं स्यात् । उच्यते । अङ्गाक्षिप्तस्य ञेर्निमित्तत्वेनाश्रयणान्नासंभवः ॥

तत्त्वदीपिका— अचूचुरदिति । अत्र ञेरिकारस्य लोपेपि अग्लोपिनोनाङ्कार्यमिति निषेधो न शक्यः अङ्गाक्षिप्तस्य ञेर्निमित्तत्वेनाश्रयणात् । तथाहि ञिजातिरेका निमित्तत्वेनाश्रिता तथा च तस्या एकत्वाद्गोबलीवर्दन्यायेन व्याक्तेरन्यस्यादेर्ञेलोपः प्रतिषेधविषयत्वेनाश्रयत इत्यर्थः । यत्तु कैश्चिदुक्तं परत्वादादौ वृद्धौ सत्यामिकारस्य लोपेऽग्लोपित्वाभावादेवाङ्कार्यमिति तन्न । सर्वविधिभ्यो लोपविधिर्बलीयांस्तस्य सर्वसंमतत्वात् ।

**मू०—हनोघत ॥** हन्तेर्घदादेश इणूवर्जिते ञ्णिति । घातयति । अजीघतत् ।

सुबोधिनी—हनोघत् । क्ङिति णिति च प्रत्यये हंतेर्घदादेशः स्यात् इण्प्रत्यये णप्प्रत्यये च परे । घातः घञ् । घातकः वुण् । ञ्णिति किं । हंता ॥

तत्त्वदीपिका—हनो घत इति । हनोर्घदादेश इत्यादिव्याख्यानं तु प्राचामनुरोधेन व्याख्यानं त्वीदृशं ॥ ह्श्च नश्चानयोः समाहारो हन् तस्य । घश्च त्चानयोः समाहारो घत् हनोघ्न इत्यतो हन् इत्यनुवृत्तेः हन्तेर्हस्य घ

ञ्णिति । तस्य तो नुच भवति ञ्णिति । न चेति निषेधाद्विगुवर्जनम् । एतेन हनोघ्न इत्यतो हनोऽनुवृत्तेर्वत्वसिद्धे-श्चोभयं व्यर्थमित्युक्तिरपि परास्ता ।

**मू०–शदेरगतौतोञ्णौ ॥ शातयति । अशीशतत् । गतौ तु शादयति । अशीशदत् । रातोञ्णौ पुक् ।**

सुबोधिनी–शदेरगतौतोञ्णौ । शदेर्ञ्णौ तांतादेशः स्यात् न तु गतौ । शातयति । गतौ तु गाः शादयति गोविंदः । गमयतीत्यर्थः । ऋगतौ । अस्य रातोञ्णौपुगित्यंतरंगत्वादादौ पुक् पश्चाद्गुणः ॥

**मू०–पुक्गिुणः ॥ अर्पयति । आर्पिपत् । दापयति अदीदपत् । धापयति । अदीधपत् । स्थापयति ।**

सुबोधिनी–पुक्गिुणः । पुगागमे परे गुणो भवति । अर्पयति । लुङि स्वरादेः पर इति पि इत्यस्य द्वित्वे ञेरिति ञिलोपे च आर्पिपत् । डुदाञ् दाने । आङि लघाविति ह्रस्वे इत्वे च कृते लघोर्दीर्घ इति दीर्घत्वम् । अदीदपत् । डुधाञ् धारणादौ । अदीधपत् । ष्ठागतिनिवृत्तौ रातोञ्णाविति पुकि स्थापयति ॥

**मू०–तिष्ठतेरङ्युपधायाइत् ॥ अतिष्ठिपत् ।**

सुबोधिनी–तिष्ठतेरङ्युपधायाइत् । तिष्ठतेरुपधाया इत्वं स्यात् अङ्प्रत्यये । स्थापीत्यत्रात इत्वं ततो द्वित्वादि । अतिष्ठिपत् । तिष्ठतेरिति तिपा निर्देशो यङ्लुङ्निवृत्त्यर्थः । तेन यङ्लुकि लुङि । अतिष्ठपत् ॥

**मू०–पादेर्युक् ॥ पा शो च्छो सो व्हेञ् व्येञ् वेञां युक् ञौ । पाययति ।**

सुबोधिनी–पादेर्युक् । एषां युक् ञौ परे । पा पाने । लुग्विकरणालुग्विकरणेतिपरिभाषया पारक्षणे इति नेह गृह्यते । तस्य तु पालयतीति रूपं । शो तनूकरणे । छो छेदने षो अंत-कर्मणि । व्हेञ् स्पर्द्धायां । व्येञ् संवरणे । वेञ् तंतुसंताने । वाययति ॥

**मू०–पिबतेरङिपूर्वस्येकारउपधालोपश्च ॥ अपीप्यत् । शाययति । अशीशयत् । छाययति । अचिच्छयत् । साययति । असीषयत् । व्हाययति ।**

सुबोधिनी–पिबतेरङिपूर्वस्येकारउपधालोपश्च । पिबतेः पूर्वरूपस्य इत्वमुत्तररूपस्यो-पधाया लोपश्च स्यात् अङि परे । पापीत्यत्र पापशब्दस्य द्वित्वे हसादिः शेषेचेत्वमुत्तरत्राका-रलोपः । इहाग्वृलोपित्वादलघुत्वाच्च इत्वदीर्घयोरप्राप्तावीत्वं । अपीप्यत् । शाययति अशी-शयत् । छाययति ह्रस्वाभावान्न दीर्घः । अचिच्छयत् । शाययति । अशीशयत् । साययति । असीषयत् व्हाययति ॥

**मू०–ह्वयतेर्ण्यन्तस्याङ्सयोस्सम्प्रसारणंयुगभावश्च ॥ अजूहवत् । अजुहावत् । व्याययति । अविव्ययत् । वाययति अवीवयत् ॥**

सुबोधिनी–ह्वयतेर्ण्यंतस्याङ्सयोःसंप्रसारणंयुगभावश्च स्यात् अङ्सः परो यस्मात् सोऽङ्सपरस्तस्मिन् ञौ परे ह्वायीत्यत्र पूर्वसंप्रसारणे युगभावे च कृते हूइत्यस्य द्वित्वादि

उत्तरस्य उवृद्धौ आवादेशे च कृते कणरणेति ह्रस्वे लघोरिति दीर्घे च अजूहवत्। ह्रस्वाभावे अजुहावत् ॥

**मू०-पातेर्णौलुक् ॥ पालयति । अपीपलत् ।**

सुबोधिनी-पातेर्णौलुक् । लुगागमः स्यात् । रातोऽन्योयुगिति पुकोपवादः । लुगागमस्य पुङ्निवृत्तिरेव फलं । पालयतीति रूपस्य पालरक्षणे इति धातुनाऽपि सिद्धेः ॥

तत्त्वदीपिका-पातेर्णौलुक् । कित्वादन्ते । पुकोपवादः ।

**मू०-प्रयोजकात्स्मयेर्णौस्मयतेरात्वम् ॥**

सुबोधिनी-प्रयोजकात्स्मयेर्णौस्मयतेरात्वम् । स्मयजनकः प्रयोजकश्चेत्तस्मिन् आत्वं स्यात् णौ परे ॥

तत्त्वदीपिका-स्मयतेरात्वं । ष्मिङ् ईषद्धसने । एवं विस्मापयन्विस्मितमात्मवृत्ताविति पाठः । मनुष्यवाचेतिकरणादेवविस्मयात् । अन्यथाशानोऽपि स्यात् । ण्यन्तात्णौशतावा । विस्मायते मनुष्यवाक् । तया सिंहो विस्मापयन्निति ।

**मू०-भीस्मिभ्यांण्यन्ताभ्यामात् प्रयोजकाच्चेद्भयस्मयौ ॥ जटिलो विस्मापयते । व्यसिष्मयत । भियःस्वरस्यात्वंवा । तद्भावे पुकृणौ । हेतोश्चेद्भयम् । मुण्डोभापयते । भीषयते । अबीभयत । अबीभिषत ।**

सुबोधिनी-भीस्मिभ्यांण्यंताभ्यामात्प्रयोजकाच्चेद्भयस्मयौ । भयस्मययोर्जनकः प्रयोजकश्चेत् ण्यंताभ्याम्भीस्मिभ्यामात्मनेपदं स्यात् भिय आत्वं । तद्भावे षुक् णौ हेतोश्चेद्भयं भयजनकः प्रयोजकश्चेद्भियोवाऽकारः । आत्वाभावे पुगागमश्च स्यात् णौ । ञिभी भये इत्यस्यानेनात्वे रातोञ्चाविति पुकि च मुंडो भापयते । भीषयते । जटिलो विस्मापयते प्रयोजकाद्भयस्मयावित्युक्तेर्नेह । कुंचिकयेनं भाययति । विस्माययति ॥

**मू०-रुहेर्णौपोवा ॥ रोपयति । अरूरुपत् । रोहयति । अरूरुहत् । कल्पयति । अचीकृपत् । अचकृपत् । वर्तयति । अवीवृतत् । अववर्तत् । मार्जयति । अमीमृजत् । अममार्जत् ।**

सुबोधिनी-रुहेर्णौपोवा । रुहेर्हस्य वा पकारः स्यात् णौ परे । रुह बीजजन्मनि प्रादुर्भावे च । रुप विमोहने इति दैवादिकस्य धातूनामनेकार्थत्वाज्जन्मनि वृत्तौ सूत्रं स्पष्टार्थं । कृपू सामर्थ्यं । उपधावर्णस्येति ऋद्भावे अङि लघौ ह्रस्व इति पूर्वस्येकारः लघोर्दीर्घ इति दीर्घत्वे कृपोरोल इति लत्वे च अचीक्लृपत् । वृतु वर्त्तने । अवीवृतत् । मृजूष् शुद्धौ । अमीमृजत् । पक्षे मृजेर्वृद्धिरिति वृद्धौ अममार्जत् ॥

तत्त्वदीपिका-रुहेः । रुह बीजजन्मनि प्रादुर्भावे च । रुपमोहन इति दैवादिकस्यापि रोपयतीति धातूनामनेकार्थत्वन्मानि वृत्तिः । सूत्रं तु स्पष्टार्थं ।

**मू०-इङ्क्रीजीनामात्वंणौ ॥ अध्यापयति । अध्यापिपत् ।**

सुबोधिनी-इङ्क्रीजीनामात्वंणौ । इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये । जि जये । अचिक्रपत् । अजीजपत् ॥

तत्त्वदीपिका—इङ्क्री ॥ इङ् अध्ययने । डुक्रीञ् द्रव्यविनिमये ॥ जि जये ।

मू०—अङ्सपरेञौ ॥ इङो गाङ् वा । अध्यजीगपत् । क्रापयति । अची-क्रपत् । जापयति । अजीजपत् ।

सुबोधिनी—अङ्सपरेञौ । इङो गाङ् वा । अध्यजीगपत् पक्षेऽस्वरादेः पर इति पिशब्दस्य द्वित्वे अध्यापिपत् ॥

मू०—ह्रीव्लीरीक्नूयीक्ष्मायीनांञौपुक् ॥ ह्रेपयति । अजिह्रिपत् । व्लेपयति । अविव्लिपत् । रेपयति । अरीरिपत् ।

सुबोधिनी—ह्रीव्लीरीक्नूयीक्ष्मायीनांञौपुक् । एषां पुक् ञौ । ह्री लज्जायां । व्ली वरणे । रीङ् क्षये । क्नूयी शब्दे उंदे च । क्ष्मायी विधूनने ॥

तत्त्वदीपिका—ह्रेपयतीति । उपधायालघोरित्यत्रोपधाया इत्यस्य योगविभागाद्धातोरुपधाया नामिनो गुणो भवति । तेन गुरोरपि भवति ।

मू०—यवयोर्वसेहकारेचलोपः ॥ क्नोपयति । अचुक्नुपत् । क्ष्मापयति । अचिक्ष्मपत् ।

सुबोधिनी—यवयोर्वसेहकारेचलोपः । यकारवकारयोर्लोपः स्यात् वसप्रत्याहारे हकारे च परे ॥

मू०—दुषेञौदीर्घः ॥ दूषयति । अदूदुषत् ।

सुबोधिनी—दुषेञौदीर्घः । दुष्यतेः उपधायाऊत्स्याद्ञौ । दूषयति । वैकृत्ये दिवादिः । ञौ किं । दोषः । वा चित्तविरागे । चितीसंज्ञाने इत्यस्मात् क्तः । चित्तं । विरागोऽप्रीतिता । दूषयति दोषयति वा चित्तं कामः । चित्तं दुष्यति स्नानसंध्यादौ विरतं भवति तत् प्रयुंक्ते इत्यर्थः ॥

मू०—स्फायोवः ॥ ञौ । स्फावयति अपिस्फवत् । अड्ड उद्यमे । अड्डयति । आड्डिडत् । अर्च पूजायाम् । अर्चयति । आर्चिचत् । उन्दी क्लेदने । उन्दयति । औन्दिदत् । उब्ज आर्जवे । उब्जयति । औब्जिजत् । द्रापयति । अदिद्रपत् ।

सुबोधिनी—स्फायोवः । स्फायो वत्वं स्याद् ञौ परे । अड्ड उद्यमे । स्वरादेः परइति डिशब्दस्य द्वित्वे आड्डिडत् । अर्च पूजायाम् । आर्चिचत् । एध वृद्धौ। उपधाह्रस्वो द्वित्वात्प्रागेव भवति । ततो धिशब्दस्य द्वित्वे माभवानिदिधत् । उंदी क्लेदने । दीशब्दस्य द्वित्वे औंदिदत् । उब्ज आर्जवे । उपदेशे दकारोपधोयं । द्वित्वविषये स्वरात्पर इति निषेधात् जिशब्दस्य द्वित्वेकृते ततो निपातनाद्दस्य बः । द्रा कुत्सायां । पूर्वउपधाह्रस्वः ततो द्वित्वे इत्वे च अदिद्रपत् ॥

मू०—रभिलभोःस्वरेनुमनत्वपूलिटोः ॥ रंभयति । अररम्भत् । डुलभष् प्राप्तौ । लम्भयति । लम्भयते । अललम्भत् । हापयति हापयते । अजीहपत् । स्मारयति । स्मारयते । असस्मरत् । दारयति । दारयते । अददरत् ।

सुबोधिनी–रभिलभोःस्वरेनुमनत्वपुलिटोः । स्वरे किम् । आरब्धम् । अपुलिटोः किं । रभते । रेभे । रभ राभस्ये । डुलभष् प्राप्तौ । अररंभत् । अललंभत् । हि गतौ वृद्धौ च । पूर्वाद्धिनोतेगिति सूत्रे नत्वङीत्युक्ते धत्वं न । अजीहयत् । स्मृ चिंतायां । आङि लघाविति ह्रस्वः । स्मृदत्वरेति पूर्वस्यात् । असस्मरत् । दॄ विदारणे । अत्रापि पूर्वस्यात् । अददरत् । तपरत्वसामर्थ्यादत्र लघोर्नदीर्घः ॥

मू०–वेष्टिचेष्टयोःपूर्वस्यात्वंवाङि ॥ अविवेष्टत्, अववेष्टत् । अचिचेष्टत् । अचचेष्टत् । भ्राजृ दीप्तौ । भ्राजयति । भ्राजयते । अबिभ्रजत्, अबभ्राजत् ।

सुबोधिनी–वेष्टिचेष्टयोः पूर्वस्याऽत्वंवाऽङि । अनयोः पूर्वरूपस्याऽत्वंवा स्यादङ्प्रत्यये परे । वेष्ट वेष्टने । चेष्ट चेष्टायां । भ्राजृ दीप्तौ । भ्राजभ्राशेत्यादिना वा उपधाह्रस्वः । अबिभ्रजत्, अबभ्राजत् ॥

मू-कणरणभणश्रणलुपहेठिव्हेञ्बाणिलोटिलोठिलोपीनांवाह्रस्वोऽङि ॥ अचीकणत्, अचकाणत् । व्यशिश्रणत्, व्यशश्राणत् । अलूलुपत्, अलुलोपत् । अजीहिठत्, अजिहेठत् । अजूहवत्, अजुहावत् । अबीबणत्, अबबाणत् । अलूलुटत्, अलुलोटत् । अलूलुठत्, अलुलोठत् ।

सुबोधिनी–कणरणभणश्रणलुपहेठिव्हेञ्बाणिलोटिलोठिलोपीनांवाह्रस्वोङि । कण निमीलने । रण शब्दे । भण शब्दे । श्रण दाने । लुपॢ छेदने । हेठ विबाधायां । व्हेञ् स्पर्धायां शब्देच । बाणिर्ण्यंतः शब्दे । लुट प्रतिघाते । लुठ छेदने । लोपीति ण्यंतनिर्देशः । लापीति पाठान्तरं लप व्यक्तायांवाचि । अचीकणत्, अचकाणत् । अरीरणत्, अरराणत् । अबीभणत्, अबभाणत् । अशिश्रणत्, अशश्राणत् । अलूलुपत्, अलुलोपत् । अजीहिठत् अजिहेठत् ॥

मू०–स्वापेस्सम्प्रसारणमङि ॥ असूषुपत् ।

सुबोधिनी–स्वापेःसंप्रसारणमङि । ञिष्वप्शये । ण्यंतस्यास्य संप्रसारणं स्यादङि । इह संप्रसारणोत्तरं द्वित्वम् । असूषुपत् ॥

मू०–श्वयतेर्ण्यन्तस्यसम्प्रसारणंवाऽङ्सयोः ॥ अशिश्वयत् । अशूशवत् ।

सुबोधिनी–श्वयतेर्ण्यंतस्यसंप्रसारणंवाङ्सयोः । संप्रसारणंतदाश्रयंचकार्य्यंबलवदिति वचनाद्वृद्धेः पूर्वं संप्रसारणम् अलघुत्वान्न दीर्घः ॥ अशिश्वयत्, अशूशवत् ।

मू०–जिघ्रतेरुपधायाइद्वाङि ॥ अजिघ्रपत्, अजिघ्रिपत् ।

सुबोधिनी–जिघ्रतेरुपधायाइद्वाऽङि ॥ घ्रापीत्यस्यातइत्वं वा स्यात् आङि परे । ततो द्वित्वादि ॥

मू०–सिध्यतेरैहलौकिकेऽर्थेस्वरस्यात्वंञौ ॥ अन्नं साधयति असीषधत् । अन्यत्र तपः सेधयति, असीषिधत् ।

सुबोधिनी–सिध्यतेरपारलौकिके॥ऽर्थेस्वरस्यात्वंणौ। इह लोके भवः ऐहलौकिकः तस्मिन् ऐहलौकिकेऽर्थे सिध्यतेः स्वरस्यात्वं णौ। अन्नं साधयति निष्पादयतीत्यर्थः। सिध्यतेरिति यनिर्देशात् भौवादिकस्याग्रहणं। ऐहलौकिके किं। तापसः सिध्यति। तत्त्वं निश्चिनोति। तत्त्वनिश्चयश्चात्मविषयकः स च परलोके उपयुज्यते। तं प्रेरयति तापसं तपः। लुङि असीषिधत्। आत्वाभावे असीसिधत्॥

तत्त्वदीपिका–सिद्ध्यतेरपारलौकिकेइति। इहलोकेभवऐहलौकिकस्तस्मिन्नित्यर्थः। अन्नंसाधयतिनिष्पादयतीत्यर्थः। अन्यत्रपारलौकिके इत्यर्थः। सेधयति तापसः सिद्ध्यति हेयमुपादेयञ्च तत्त्वतो ज्ञातुकामः प्रवर्तते तमपरः प्रयुङ्क्ते ज्ञानविशेषवन्तं करोतीत्यर्थः।

**मू०–प्रजनेवीयतेरात्वंवाणौ॥ वापयति वाययति वा गाःपुरोवातः। गर्भं ग्राहयतीत्यर्थः। चित्तविरागे। दुषेर्दीर्घोवाणौ। चित्तं दूषयति दोषयति वा कामः।**

सुबोधिनी–प्रजनेवीयतेरात्वंवाणौ। वीगतिप्रजनादौ आदादिकस्य यकानिर्देशः। अत्र केचिदुत्प्रेक्षयंति। वेतेरिति वक्तव्ये यकानिर्देशात् व्येञो न ग्रहणं तस्यापि यकि संप्रसारणे वीधातुना समानरूपत्वात्। अतो द्वयोरपि प्रजनेर्थे आत्वं वा स्यात्। तत्राऽत्वे तदभावे च यद्यपि व्येञः व्यापयतीति रूपंतुल्यं। पादेर्युगिति युकोऽपवादतया पुग्विधानात्। तथापि ण्यंतात् क्विपि व्याः व्यौ व्याः आत्वाऽभावपक्षे व्यैः। व्यायौ। व्यायः। इत्यास्तिविशेषः। सूत्रे। विभाषाविधानसामर्थ्यात्पक्षेऽपिसंध्यक्षराणामित्यात्वं न प्रवर्त्तते। रातोञ्पुगिति पुक्। वापयति। आत्वाऽभावे वाययति गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः॥

तत्त्वदीपिका–प्रजने वीयतेरिति। वीगतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्य यकानिर्देशः अन्यथादादिकत्वेन यकारासंभवः प्रजनो गर्भग्रहणं तत्रेत्यर्थः। वापयतीतिगर्भं ग्राहयतीत्यर्थः॥ वातेरनेकार्थत्वाद्यदि प्रजनोप्यर्थ उच्यते तदास्य वापयति। वेतेस्तु वापयतीति सिद्धौ कृतमेतेन। चित्तविरागे। वाक्यभेदेन व्याख्येयं। दुषेर्दीर्घोणौ। दूषयति ततश्चित्तविरागे वा। चित्तविरागोऽप्रीतिता॥

**मू०–इणोञ्जोवागमिः॥ गमयति। अजीगमत्। आपयति। आपिपत्। घटादयोमितः। घट चेष्टायाम्। मित्तांन्हस्वः। घटयति। व्यथयति। अविव्यथत्। प्रथयति। अपप्रथत्। प्रसविस्तारे। प्रसयति। म्रद मर्दने। म्रदयति। अमम्रदत्। स्खद विद्रावणे। स्खदयति। अचिस्खदत्। त्वरयति। अतत्वरत्। ज्वररोगे। ज्वरयति। नट नृतौ। नटयति। अनीनटत्। चक तृप्तौ। चकयति। लगे संगे। लगयति। ज्वल दीप्तौ। प्रज्वलयति। स्मृआध्याने। स्मरयति। असस्मरत्। दृभये। दरयति। अददरत्। नॄ नये। नरयति। अनीनरत्। श्रा पाके। श्रपयति। अशिश्रपत्।**

सुबोधिनी–इणोञ्जोवागमिः। गमिरबोधने इणोगमिः स्याद्वाणौ अबोधनेऽर्थे। अजीगमत्। बोधनेतु प्रत्याययति। प्रतिपूर्वस्येणोज्ञानार्थता। स्वरादेःपरइति णिसहितस्य द्वित्वं। प्रत्यायियत्। घटादयोमितः। घटचेष्टायां तत्फलंतुमितांन्हस्वइति न्हस्वत्वं। मितां ण्यंतानामिणि णमि च वादीर्घइति च। त्वरत्यंताघटादयः। षितश्च। षित्प्रयोजनं तु षिद्भिदामाङित्यङ्।

आनतःक्रियामित्यापू । तेन घटा व्यथंत्यादि रूपसिद्धिः । विघटयति । कथं तर्हि कमलव-
नोद्घाटनंकुर्वते ये इत्यादि । शृणु । घटसंघातइति चौरादिकस्येदं । व्यथ दुःखसंचलनयोः।
अविव्यथत् । प्रथ प्रख्याने । अपप्रथत् । स्मृदृत्वरेति पूर्वस्यात् । प्रस विस्तारे । अपि-
प्रसत् । अलघुत्वान्नदीर्घः । म्रद मर्दने । अमम्रदत् । स्मृदृत्वरेति पूर्वस्यात् । स्खद वि-
द्रावणे । अचिस्खदत् । ञित्वरा संभ्रमे । अतत्वरत् । स्मृदृत्वरेति पूर्वस्यात् । घटादयः
षितः । षित्वादङ् । त्वरा । ज्वर रोगे । अजिज्वरत् । इणप्रत्यये अज्वारि, अज्वारि । णमुप्रत्यये
ज्वरंज्वरं, ज्वारंज्वारं । नट नृतौ । गात्रविक्षेपमात्रं नृतिः । अनीनटत् । चक तृप्तौ । अस्य
तृप्तिमात्रे मित्त्वं परस्मैपदं च । अचीचकत् । लगे संगे । अलीलगत् । ज्वल दीप्तौ ।
अजिज्वलत् । ज्वलादेर्णइति णप्रत्यये ज्वालः । स्मृ आध्याने । उत्कंठापूर्वकं स्मरणमा-
ध्यानं । दॄ भये । हृणंतं प्रेरयति दरयति भयादन्यत्र दारयति । केचित्तु घटादौ स्मृदृत्वे-
तिसूत्रे च दॄइति दीर्घस्थाने ह्रस्वं पठंति तन्नेति माधवः । यद्ययंह्रस्वांतो भवेत् तर्हि
शृदॄपांह्रस्वोवेति सूत्रे ह्रस्वविकल्पविधायके दॄग्रहणमनर्थकं स्यात् । नॄ नये । नयादन्यत्र
नारयति । श्रापाके । श्रपयति । विक्लेदयतीत्यर्थः । पाकादन्यत्र श्रापयति स्वेदयतीत्यर्थः ॥

तत्त्वदीपिका–मितः । केके पुनर्मित इत्याह । घटादयइति ।

**मू०–मारणतोषणनिशामनेषुज्ञा ॥ ज्ञपयति । कम्पने चलिः । चल-
यति शाखांवायुः । अन्यत्र शीलं चालयति । मदी हर्षदैन्ययोः । मदयति ।
हर्षदैन्ययोः किम् । मादयति । ध्वन शब्दे मित् । ध्वनयति । अदिध्वनत् ।**

सुबोधिनी–मारणतोषणनिशामनेषुज्ञा । एष्वेवार्थेषु जानातिर्मित् । शम आलोचनइत्यस्मा-
न्निष्पन्नत्वान्निशामनंचाक्षुषज्ञानामिति माधवः । ज्ञापनमात्रमित्यन्ये । निशानेष्विति पाठांतरं ।
निशानं तीक्ष्णीकरणं । पशुं संज्ञपयति मारयतीत्यर्थः । विष्णुं विज्ञपयति संतोषयतीत्यर्थः ।
संज्ञपयति रूपं । माधवमते दर्शयतीत्यर्थः । मतांतरे तु बोधयतीत्यर्थः । प्रज्ञपयति शरं
तीक्ष्णं करोतीत्यर्थः । कथंतर्हि विज्ञापना भर्तृषु सिद्धिमेतीति । तज्ज्ञापयत्याचार्यइति च ।
अत्र ज्ञाधातोर्णौ मित्त्वाद्ध्रस्वेन भावितव्यमिति । शृणु । माधवमतेऽचाक्षुषज्ञाने मित्त्वाऽभावात्।
ज्ञापनमात्रेमित्त्वमिति मतेतु ज्ञानियोगे इति चौरादिकस्य धातूनामनेकार्थत्वाद्बोध्यम् । कं-
पने चलिः । चलयति शाखाम् । कंपनादन्यत्रतु शीलं चालयति । अन्यथाकरोतीत्यर्थः ।
हरतीत्यर्थइति स्वामी । सूत्रंचालयति क्षिपतीत्यर्थः । मदीहर्षदैन्ययोः । मदयति । हर्षयति
ग्लेपयति वा दैन्यंकरोतीत्यर्थः । अन्यत्र मादयति । चित्तविकारमुत्पादयतीत्यर्थः । ध्वन
शब्दे । ध्वनयति घंटाम् । अन्यत्र ध्वानयति । अस्पष्टाक्षरमुच्चारयतीत्यर्थः ॥

तत्त्वदीपिका–मारणेति । मारणं हिंसनं निशामनं चाक्षुषज्ञानं । तज्ज्ञापयत्याचार्यः विज्ञापना भर्तृषु
सिद्धिमेतीत्यादौ ज्ञापनसामान्ये मित्त्वाभावान्न ह्रस्वः । कम्पने चलयतीति शाखामिति शेषः । अन्यत्र शीलं
चालयति अन्यथा करोतीत्यर्थः । मदयतीति । अन्यत्र मादयति चित्तविरागमुत्पादयतीत्यर्थः । ध्वनयतीति ।
घंटामिति शेषः । अन्यत्र ध्वानयति अस्पष्टाक्षरमुच्चारयतीत्यर्थः ।

**मू०–जनीजॄष्क्नसुरंजोऽमन्ताश्च ॥ जनयति । जरयति । क्नसु कौटिल्ये
दीप्तौ च । क्नसयति ।**

सुबोधिनी–जनीजॄष्क्नसुरंजोऽमन्ताश्च । जनी प्रादुर्भावे । जॄष् वयोहानौ । क्नसु ह्वरणदीप्त्योः । त्रयोपि दिवादयः । रञ्ज रागे । दैवादिकोभौवादिकश्च । अमंताः क्रमिगम्यादयः । जॄषिति षित्निर्देशाज्जीर्यतेर्ग्रहणं । जृणातेस्तु जारयति ॥

तत्त्वदीपिका–अमंताश्च । अम् अन्ते येषान्ते अमादय इत्यर्थः ।

**मू०–रंजेर्णौमृगरमणेनलोपः ॥ रजयति मृगान् । अरीरजत् । अन्यत्र वस्त्रं रंजयति । अररञ्जत् । शमयति । दमयति ।**

सुबोधिनी–रंजेर्णौमृगरमणेनलोपः । रंजेर्नस्य लोपः स्यात् णौ परे आखेटेर्थे । रजयति मृगान् । मृगेतिकिं । रंजयति पक्षिणः । रमणादन्यत्रतु रंजयति मृगान् तृणदानेन । शमु दमु उपशमे । दैवादिकौ । अशीशमत । अदीदमत् ॥

तत्त्वदीपिका–रंजेर्णावित्यादि । मृगरमणमाखेटः । मृगेति किं । रंजयति पक्षिणः । रमणे किम् । रंजयति मृगान् तृणदानेन । संक्रामयतीति तु चित्तविरागइत्यतोवेत्यनुवृत्तेर्व्यवस्थयाबोध्यम् ।

**मू०–ज्वलह्वलह्मलनमामनुपसर्गाद्वा ॥ ज्वलयति ज्वालयति । ह्वल ह्मल चलने। ह्वलयति, ह्वालयति । ह्मलयति, ह्मालयति । नमयति, नामयति । उपसर्गेतु । प्रह्वलयति ।**

सुबोधिनी–ज्वलह्वलह्मलनमामनुपसर्गाद्वा । ज्वल दीप्तौ । ह्वल ह्मल संचलने इति त्रयाणां पूर्वं घटादौ पठितत्वात् नमेस्तु अमंतत्वान्नित्यं प्राप्ते विभाषेयं । उपसर्गेषु नित्यं मित्त्वम् । प्रज्वलयति । कथंतर्हि । प्रज्वालयति उन्नामयतीति । घञंतात् नाम्नोणिजितिकरणे इति णौ बोध्यं । कथं संक्रामयति विश्रामयतीति च । मान्तस्य सेटो न वृद्धिरिति वृद्धिनिषेधात् । घञि क्रमः श्रम इत्येव भवति । नतु क्रामः श्रामइति । पूर्वोक्तसमाधानस्यात्रासंभवात् पृथक् प्रश्नः । शृणु । घञंताभ्यां क्रमश्रमाभ्यां स्वार्थेऽणि क्रामश्रामशब्दौ स्वीकृत्य ताभ्यांणिजिडादीति णिप्रत्यये संक्रामयति । विश्रामयतीति सिद्धम् ॥

तत्त्वदीपिका–अनुपसर्गाद्वेति । तेनोपसर्गेमित्त्वमेव । प्रज्वालयत्युन्नामयतीति तु घञन्तात्करोतीति णौ ।

**मू०–ग्लास्नावनुवमाञ्च ॥ ग्लापयति, ग्लपयति । स्नापयति, स्नपयति । वानयति वनयति, वामयति, वमयति ।**

सुबोधिनी–ग्लास्नावनुवमांच । अनुपसर्गादेषां मित्त्वं वा । आद्ययोः प्राप्ते वनेर्घटादित्वात्प्राप्ते वमेरमंतत्वाच्च प्राप्ते विभाषा । ग्लापयति, ग्लपयति । स्नापयति, स्नपयति । वानयति, वनयति । वामयति, वमयति ॥

**मू०–नकम्यमिचमाम् ॥ कामयति । अम गत्याम् । आमयति । आमिमत् । चामयति ।**

सुबोधिनी–नकम्यमिचमाम् । अमंतत्वात्प्राप्तं मित्त्वमेषां न स्यात् ॥

**मू०–शाम्यतिर्दर्शनेमित्र ॥ निशामयति रूपम् ।**

सुबोधिनी—शाम्यतिर्दर्शनेमिन्न । निशामयाति रूपम् । अन्यत्र प्रणयिनो निशमय्य वधूः कथाः । कथं तर्हि निशामय तदुत्पत्तिं विस्तराद्गदतो ममेति । शृणु । शम आलोचने इति चौरादिकस्यैव । धातूनामनेकार्थत्वाच्छ्रवणे वृत्तिः । यथा शाम्यतिर्निशामयतीत्यादौ दर्शन प्रयुज्यते तथा चुरादिः शमधातुरपि श्रवणे भविष्यतीति ॥

तत्त्वदीपिका—दर्शने मिन्नेति । निशामयतदुत्पत्तिमित्यादि तु शमलक्षआलोचनइत्यस्य धातूनामनेकार्थत्वाच्छ्रवणार्थतापि ।

**मू०—यच्छतिर्भोजनतोऽन्यत्रमिन्न ॥ आयामयति । भोजनेतु । यमयति विप्रान् ।**

सुबोधिनी—यच्छतिर्भोजनतोऽन्यत्र मिन्न । यम उपरमे इत्ययंधातुर्भोजने मित् । अन्यत्र तु न । आयामयाति । द्राघयाति । व्यापारयति वेत्यर्थः । भोजने तु यमयति ब्राह्मणान् । भोजयतीत्यर्थः ॥

तत्त्वदीपिका—आयामयति । द्राघयति व्यापारयति वेत्यर्थः । भोजनेतु यमयति विप्रं भोजयतीत्यर्थः ।

**मू०—स्खदिरवपरिभ्यांमिन्न ॥ अवस्खादयति । परिस्खादयाति । ईर्ष्य अक्षान्तौ । ईर्ष्ययति ।**

सुबोधिनी—स्खदिरवपरिभ्यांमिन्न । घटादित्वात्प्राप्तं मित्त्वं न । अवाचिस्खदत् ॥

**मू०—ईर्ष्यतेस्तृतीयोद्विः ॥ तृतीयोहसएकस्वरोवा । ऐर्ष्यियत् । अङितु । स्वरादेःपरः । ऐर्षिष्यत् । द्वितीयपक्षे सान्ते ईर्ष्यिषिषति । तृतीयएकस्वरपक्षे सान्ते प्रवर्तते । ञ्यन्तेतु । तृतीयएकस्वराभावादित्यर्थः । इतिञ्यन्तप्रक्रिया॥**

सुबोधिनी—ईर्ष्यतेस्तृतीयोद्विः । तृतीयव्यंजनस्येति पक्षे सस्वरस्य यकारस्य द्वित्वम् । ऐर्ष्यियत् । तृतीयैकस्वरस्येतिपक्षे तृतीयाभावेन प्रकृतवार्तिकाप्रवृत्तेः । स्वरादेः परइति द्वित्वे षकार एव पूर्वं श्रूयते । हसादिः शेषात् । ऐर्षिष्यत् । तृतीयहसपक्षे षस्य द्वित्वं वारयितुमिदम् । तृतीयैकस्वरस्येति पक्षे तु स्वरादेः परइत्यस्यापवादत्वेन सांते प्रवर्तते ॥

इतिञ्यंतप्रक्रिया ॥

तत्त्वदीपिका—ईर्ष्यतेरिति । तृतीयः कः इत्याकांक्षायांमतभेदेन व्याचष्टे । तृतीयो हसः । स्वरसहितः इत्यर्थः । अस्मिन्पक्षे षस्य न द्वित्वम् । मतान्तरमाह । एकस्वरोवेति । तृतीय इत्येव । ईर्ष्यतेर्यस्तृतीय एकस्वरः स द्विर्वाच्य इत्यर्थः । अत्र पक्षे सान्तेईर्ष्यिषयतीति सस्य द्वित्वं । आद्यपक्षे ईर्ष्यिषिषयतीति सान्तेपि रूपद्वयम् । ईर्ष्यतेः सेपि सयोर्नाद्वित्वमिति । द्वितीयव्याख्यायां ञ्यंतादाङि द्वितीयस्य द्वित्वे हसादिशेषेण पूर्वत्र षस्यैव श्रवणात्तृतीयाभावेनैतद्वार्त्तिकाप्राप्ते । ऐर्ष्यियदिति । प्रथमपक्षे । ऐर्षिष्यदिति तु द्वितीयपक्षे एतद्बीजं तूक्तमेव । अत्र पण्डिताः क्वचित्तु ऐर्ष्यिष्यदिति षकारादेरपि द्वित्वमुदाह्रियते तद्भ्रांतप्रक्षिप्तत्वादुपेक्ष्यं तस्मादैर्ष्यियदित्येकमेवात्र रूपं साधनीयं नत्वैर्ष्यिष्यादिति ण्यन्ते तृतीयस्यैकाचोऽसंभवादित्याहुः । तत्त्वमतिभ्रमोद्भावनायेति मन्यामहे ॥ तथाहि ञ्यन्तेद्वितीयव्याख्यायां तृतीयस्यैकाचोऽसंभवात् द्वितीयद्वित्वंकेननिर्धार्य्यमिति । स्वयमेवोहनीयमितिदिक् । निवृत्तप्रेरणात्धातोर्ञ्यैकेवलेन तुल्योऽर्थः तेन प्रार्थयन्ति शयनोत्थितामित्यादिसिद्धम् ।

कृतायामिहटीकायांलोकेशंकरशर्मणा ।
बाधनं दुष्टबुद्धीनामगमञ्ञ्यन्तसाधनम् ।
इतिञ्यन्तप्रक्रिया ।

**मू०—इच्छायामात्मनः सः ॥** धातोरात्मनः इच्छायांसप्रत्ययो भवति ।

सुबोधिनी—इच्छायामात्मनःसः । इच्छायाः क्रियारूपत्वेन कर्त्तारं विनाऽनुपपन्नत्वात् कर्तुराक्षेपात् इच्छाकर्त्ता इष्यमाणं वस्तु यदि स्वसंबंधित्वेनैव इच्छति तदा धातोः सप्रत्ययइत्यर्थः । तेन शिष्याणां पठनमिच्छति गुरुरित्यादौ सो न ॥

तत्त्वदीपिका—इच्छायामात्मनः सः । धातोरित्यधिकारात् । इषिरिच्छा इषेरिच्छेत्यत एव निपातनात् आत्मशब्दोऽत्र स्ववाची । न तु चेतनद्रव्यवाची । आत्मन इत्यस्य व्यर्थत्वापातात् । इच्छायामात्मकर्तृकत्वाद्व्यभिचारात् । तत्रेदिष्यमाणमिच्छाकर्तृसंबंधि भवति । आद्धुनि कर्मणीत्यतः कर्मणीत्यनुवर्त्य पंचम्या विपरिणम्य कर्मणो धातोरिति सामानाधिकरण्येन व्याख्येयम् ॥ इच्छायां किं । कर्तुं याति । आत्मनः किं । शिष्याणां पठनमिच्छति गुरुः । स्वसंबंधित्वं वेच्छायाः साक्षादेव तेन शिष्याणांस्वसंबंधित्वेपि न । धातोः किं । प्रतिष्ठासते इत्यत्र प्रसाहितस्याधातोर्नाभूत्तथा सत्यद्द्वित्वयोर्वैषम्यं स्यात् । कर्मणः किं । गमनेनेच्छतीति करणान्माभूत् । यत्तु वासुदेवेन व्याख्यातम् । इच्छा चेत्स्वसंबंधिनीति । तन्न । शिष्याणांपठनमिच्छतिगुरुरित्यत्रातिव्याप्तेरनिवारणात् । तथाहि । अत्रपठनस्यधात्वर्थत्वेतत्संबंधिन्याइच्छायाः सत्त्वात् ।

**मू०—द्विश्च ॥** आत्मनः भवितुमिच्छति । बुभूषाञ्चकार । अबुभूषीत् ।

सुबोधिनी—द्विश्च । सप्रत्ययांतस्य धातोर्द्वित्वं स्यात् । भवितुमिच्छति कर्म्मनियतत्वादिषुकर्मेति लब्धं । धातोः प्रत्ययविधानात् तदर्थत्वं लब्धं । तेन इषिकर्म्मार्थवाचकद्धातोरिच्छायां सप्रत्ययः स्यात् । तुम् तु स्वार्थिकः साध्यावस्थांक्रियामाह । स च लौकिके वाक्ये प्रयुज्यते । केवलस्य धातोः प्रयोगानर्हत्वात् । अलौकिके तु धातुमात्रं प्रयुज्यतेऽतः तुमः कथं लोप इति नो शंक्यम् । अत्रात्मशब्दस्तु स्वशब्दस्य पर्यायः । संबंधसामान्ये षष्ठी । आत्मनः स्वस्येत्यर्थः । स्वशब्दे हि इषिकर्तैव गृह्यते ॥

तत्त्वदीपिका—भवितुमिच्छतीति । साध्यावस्थायाः क्रियावाचकस्य तुमः स्वार्थत्वेनलौकिकएववाक्यप्रयोगः । केवलस्यधातोः प्रयोगानर्हत्वात् । नत्वलौकिकेपि । तेनतुमः कथंलोपइतिनाशंकनीयं । द्विश्चेत्यतोद्विरित्यनुवृत्तांभिन्नंवाक्यंतेनसप्रत्ययप्रकृतिभूतस्यधातोर्नद्वित्वं किन्तुसांतस्य । तथाचप्रतीषिषतीत्यादि सिद्धम् ।

**मू०—वुस्से ॥** उवर्णान्ताद्दवर्णांताद्ग्रहिगुहिभ्याञ्च परस्य सस्य नेट् ।

सुबोधिनी—वुः से । उश्च आचेति वृ तस्मात् वुः । सौत्रं पुंस्त्वम् । ऋवर्णोवर्णांताभ्यां ग्रहिगुहिभ्यां च सस्य नेट् । ग्रहेर्नित्यं प्राप्ते गुहेर्विकल्पेन प्राप्ते निषेधोयं । भूसत्तायां । सप्रत्यये द्वित्वे च ह्रस्वे षत्वे च बुभूषति ॥

तत्त्वदीपिका—वुःसे । उश्चआचवृतस्मात् । सौत्रंपुंस्त्वम् ।

**मू०—नाऽनिटिसे ॥** इङ्वर्जितेसप्रत्ययेगुणो न । दीर्घः । ऋतइर् । तितीर्षति । जुघुक्षति । चिकीर्षति । चिचीषति चिकीषति । जिगीषति । यस्से । पिपक्षति । पिपासति । मुमूर्षति ।

सुबोधिनी—नाऽनिटिसे । न इट्यस्य सोऽनिट् तस्मिन् सेइत्यस्य विशेषणम् । बुभूषेत् । बुभूषतु । अबुभूषत् । कासादिप्रत्ययाादित्यम् । बुभूषांचकार । बुभूष्यात् । सिसतासीस्यपामितीट् बुभूषिता । बुभूषिष्यति । अबुभूषिष्यत् । अबुभूषीत् । तॄ प्लवनतरणयोः । ऋत इर् इतीर् । य्वोर्विंहसे इति दीर्घः । तरितुमिच्छति तितीर्षति । गुहू संवरणे । सप्रत्यये

द्वित्वे च होढ इति ढत्वम् आदिजबानामिति घत्वं । षढोःकस्से इति कत्वं किलात्षःस इति षत्वं । जुघुक्षति । सेदीर्घः स्यान्तस्यधातोर्दीर्घः स्यात् सप्रत्यये । आदौ दीर्घस्तत इङ् । चिकीर्षति । चिनोतेःसणादौकिर्वेति किः । चिकीषति चिचीषति । सपरोक्षयोर्जेगिरिति गिः सेदीर्घ इति दीर्घः । जिगीषति । पूञ् पवने । पुपूषति । वुःसे इतीङ् न । डुपचष् पाके । पक्तुमिच्छति पिपक्षति । यःसे इति पूर्वस्येकारः । पा पाने । पातुमिच्छति पिपासति । मृ हिंसायां । पोरुरित्युर् य्वोर्विहसे इति दीर्घः । मुमूर्षति । पॄ पालनादौ । पुपूर्षति । भॄ भर्त्सनभरणयोः । बुभूर्षति ॥

तत्त्वदीपिका–नाऽनिटि। नइट्यस्मिन्सतथातस्मिन् । सेइत्यस्यविशेषणम् । अपित्तादिर्ङिदित्यनेनाङित्त्वे सिद्धेनियमार्थमिदम् । अनिटएवाङित्त्वंयथास्यात् । चिकीर्षतीति ॥ आदौदीर्घस्ततः इङ् । शिक्षतीति । शक्तुमिच्छतीतिवाक्येस्वरस्यक्षादेशपूर्वलोपसलोपपत्वानि ।

**सू०–रुदविदमुषग्रहिस्वपिप्रच्छिभ्यःसःकित् ॥ रुरुदिषति । विविदिषति । मुमुषिषति । होढः । आदिजबानामिति षढोःकःसे । ग्रह उपादाने । ग्रहीतुमिच्छति जिघृक्षति । सुषुप्सति ।**

सुबोधिनी–रुदविदमुषग्रहिस्वपिप्रच्छिभ्यः सःकित् । रुदसाहचर्याद्विदेरेव ग्रहणं रुदविदमुषाणां त्रयाणामिवर्णोपधादिति विकल्पे प्राप्ते ग्रहिस्वपिप्रच्छीनां तु सस्य कित्त्वस्याप्राप्तौ वचनम् । अत्र गुणाभावः संप्रसारणं च कित्त्वस्य फलं । ग्रहामिति संप्रसारणं । ग्रहीतुमिच्छति जिघृक्षति । ञिष्वप् शये । यजांयवराणामिति संप्रसारणं । सुषुप्सति ।

**सू०–कॄगृदृधृप्रच्छिभ्यःसस्येट् ॥ चिकरिषति । जिगरिषति । जिगलिषति । दिदरिषते । दिधरिषते । पिपृच्छिषति । अत्तुमिच्छति जिघत्सति ।**

सुबोधिनी–कॄगृदृधृप्रच्छिभ्यःसस्येट् । कॄ हिंसायां । गॄ निगरणे । दृङ् आदरे । धृङ्अवस्थाने । एतौ तुदादी । प्रच्छ ज्ञीप्सायां । एभ्यः सप्रत्ययस्येट् । चिकरिषति । वुःसेइति निषेधेप्राप्ते विधानम् । इह वृङ्वृञ्ऋदंतानामितीटो दीर्घो नेष्टो भाष्यकारेणानुक्तत्वात् । जिगरिषति । जिगलिषति । गिरतेः स्वरे रस्य लोवेति वा लः । आदनुदात्तेत्यात्मनेपदम् । दिदरिषते । दिधरिषते कथमुद्दिधीर्षुरिति भौवादिकयोर्धृङ्धृञोरिति गृहाण । सेदीर्घ इति दीर्घे ऋत इरितीर् य्वोर्विहसे इतिदीर्घे उद्दिधीर्षुः । ग्रहामिति संप्रसारणं रुदविदेति सस्य कित्त्वात्पिपृच्छिषति । अद् भक्षणे । सिसयोरदेर्घस्लृलिटितुवेति घस् । नैकस्वरादनुदात्तादिति नेट् । सस्तोऽनपीति सस्य तकारः । अत्तुमिच्छति जिघत्सति ॥

**सू०–हनिङोःसेदीर्घः ॥ जिघांसति ।**

सुबोधिनी–हनिङोस्सेदीर्घः । पूर्वोद्धंतेर्हस्य घत् इति घत्वं । जिघांसति । सूत्रे स्वरादेशस्य गमेर्दीर्घ इति वक्तव्यं । तेन गच्छतेर्न दीर्घः । जिगंस्यते । समोगमृच्छीत्यात् संजिगंसते । तेन इणइकइङां स्थाने योगमिस्तस्य दीर्घः स्यात् । इणिकोस्तु कर्मोक्तौ जिगांस्यते अधिजिगांस्यते । इत्यादि । अत इङ्स्थाने उक्तव्याख्येयम् ॥

**सू०– इङस्सेगम् ॥**

सुबोधिनी–इङःसेगम् । इङो गमिः स्यात्सप्रत्यये । इङ् अध्ययने ॥

**मू०–सान्तात्पूर्ववदात ॥** अधिजिगांसते ।

सुबोधिनी–सांतात्पूर्ववदात् । सप्रत्ययात्पूर्वो यो धातुस्तेन तुल्यं सांतादप्यात्मनेपदं स्यात् । तेन ङित्त्वादात्मनेपदं । हनिङोरिति दीर्घः । अधिजिगांसते ॥

**मू०–गमेःसस्येड्नाति ॥** जिगमिषति ।

सुबोधिनी–गमेःसस्येड्नाति । आति किम् । इण् गतौ । जिगांस्यते ॥ कर्म्मण्यात् । यःसे इति पूर्वस्यात इत् पत्वं । जिगमिषति ॥

**मू०–इस्से ॥** अपिद्दाधारभलभशकपतपदामिमीमाङ्मेङां स्वरस्येस् अनिटि से परे पूर्वस्य च लोपः । दित्सति । धित्सति । रभ राभस्ये । स्कोराद्योश्च । खसेचपाक्षसानाम् । रिप्सते । लिप्सते । शिक्षति । पित्सते ।

सुबोधिनी–इस्से । अपिद्दाधारभलभशकपतपदामिमीमाङ्मेङाम् एषां स्वरस्येस् स्यात् पूर्वस्य च लोपः अनिटि से । दैप् शोधने दाप् लवने आभ्यां विना । दाण् दाने भ्वादौ पं । देङ् पालने भ्वादावात् । डुदाञ् दाने ह्वादावात्ये । दो अवखंडने दिवादौ पं । एषां दारूपं । धेट् पाने भ्वादौ पं । डुधाञ् धारणे ह्वादावात्ये । अनयोर्धारूपं । रभ राभस्ये । डुलभष् प्राप्तौ । शक्ल शक्तौ स्वादौ पं । शक मर्षणे दिवादावात्ये । पदे गतौ । पत्ल पतने । डुमिञ् प्रक्षेपणे । मिङ् प्राणवियोगे । दिवादावात् । मीञ् हिंसायां क्र्यादावात्ये । मा माने अदादौ पं । माङ् माने ह्वादौ दिवादौ चात् । मेङ् प्रणिदाने भ्वादावात् । दोदाणोः सस्तो नपीति सस्य तः । दित्सति । देङ् दित्सते । दाञ् दित्सति । दित्सते, धेट् धित्सति । धाञ् धित्सति, धित्सते । रभ् स्कोरिति सलोपः खसेचपा इति भस्य पत्वं रिप्सते । शक्ल स्कोरिति सलोपः पत्वं शिक्षति । शक शिक्षति । पित्सते । पत्ल पतने ॥

**मू०–पततनदरिद्राभ्यःसस्येड्वा ॥** पिपतिषति, पिपत्सति । डुमिञ् प्रक्षेपणे । मित्सति मित्सते । मीञ् हिंसायाम् । मित्सति मित्सते । मा माने । मित्सति । मेङ् प्रणिदाने माङ्मेङोः । मित्सते ।

सुबोधिनी–पततनदरिद्राभ्यःसस्येड्वा । एभ्यः परस्य सप्रत्ययस्य वा इङ् भवति । स्कोरिति सलोपः । पित्सति । इट्पक्षे यः से इति पूर्वस्येट् पिपतिषति । डुमिञ्मीञोः सस्तोनपीति सस्य तः । मित्सति । मित्सते । माङ्मङोर्मित्सते । मा मित्सति । आप्ल व्याप्तौ ॥

**मू०–आप्नोतेरातईस्सेपूर्वलोपश्च ॥** ईप्सति ।

सुबोधिनी–आप्नोतेरातईस्सेपूर्वलोपश्च । आपेरातइत्वं पूर्वलोपश्च स्यात् सप्रत्यये आप्तुमिच्छति ईप्सति । अश् भोजने ॥

**मू०–अशेरनायोवा ॥** अशेरिच्छायां वानायप्रत्ययः । अशनायति, अशिशिषति । तितनिषति । तनेरनिटिसे वा दीर्घः । तितांसति, तितंसति । दिदरिद्रिषति, दिदरिद्रासति ।

सुबोधिनी–अशेरनायोवा । सस्यापवादः । पक्षे सस्येट् । स्वरादेः पर इति शिस् शब्दस्य द्वित्वं इस इति सप्रत्ययस्यावयवः पूर्वस्य हसादिःशेषः । अशिशिषति । तनु विस्तारे । पततनोति सस्य वेट् । तितनिषति पक्षे तनेरनिटि से वा दीर्घः । तनेः सादौ सेवा दीर्घः । तितांसति । दरिद्रा दुर्गतौ । पततनेति वेट् दरिद्रातेरनप्यालोपः सौवेत्यालोपे षत्वेच दिदरिद्रिषति ॥

**मू०–दम्भिज्ञपिभ्यांसस्यवेट् ॥** दम्भु दम्भे । दिदंभिषति । जिज्ञपयिषति । ज्ञपेस्स्वरस्यानिटिसेईत्पूर्वलोपश्च । ज्ञीप्सति ।

सुबोधिनी–दंभिज्ञपिभ्यां सस्य वेट् । यःसे इति पूर्वस्येत् । दिदंभिषति । इडभावे ।

**मू०–दम्भेरिच्च ॥** धिप्सति । धीप्सति ।

सुबोधिनी–दंभेरिच्च । दंभेः स्वरस्य इस् स्यात् ईच्च पूर्वस्य लोपश्च । अनिटि से उपधानस्य लोप इति नलोपः आदिजबानामिति धत्वं । धिप्सति, धीप्सति । पुगंतोमित्संज्ञको ण्यंतो जानातेर्ज्ञपिः पकारांतश्चौरादिको वा दंभिज्ञपिभ्यामिति वेट् । जिज्ञपयिषति इडभावे नानिटिसे इति न गुणः । सेदीर्घ इति दीर्घस्तु परत्वात् ऐरिति णिलोपे न बाध्यते । ज्ञपेः स्वरस्य सादौ से ईत्पूर्वस्य लोपश्च । अनिटिसे ज्ञीप्सति ॥

**मू०–इवन्तऋधभ्रस्जश्रिस्वृयूर्णुभृसनिभ्यःसस्येड्वा ॥** दिदेविषति ।

सुबोधिनी–इवन्तऋधभ्रस्जश्रिस्वृयूर्णुभृसनिभ्यःसस्येड्वा । इवंतेभ्यः ऋधादिभ्यश्च सस्येड् वा स्यात् । दिवु क्रीडादौ । सिसतासीस्यपामितीट् । दिदेविषति । इडभावे नानिटिसे इति न गुणः ॥

**मू०–वस्यानिटिसेऊः ॥** दुद्यूषति । अर्दिधिषति ।

सुबोधिनी–वस्यानिटिसेऊः । धातोर्वस्य ऊत्वंस्यात् अनिटिसे यत्वं द्वित्वं च । दुद्युषति । ऋध वृद्धौ । अर्द्धितुमिच्छति स्वरादेःपर इति धिस्शब्दस्य द्वित्वे अर्दिधिषति इडभावे ॥

**मू०–ऋधेरनिटिसेस्वरस्यइर्द्धित्वलोपश्च ॥** ईर्त्सति । बिभ्रज्जिषति, बिभर्जिषति, बिभ्रक्षति, बिभर्क्षति । शिश्रयिषति, शिश्रीषति । सिस्वरिषति, सुस्वूर्षति । यियविषति, युयूषति । ऊर्णुनुविषति, ऊर्णुनविषति, ऊर्णुनूषति । बिभरिषति, बुभूर्षति ।

सुबोधिनी–ऋधेरनिट्सेस्वरस्यइर्द्धित्वलोपश्च । ऋकारस्य इर् र्वोर्विहसे इति दीर्घः खसेचपाझसानामिति तः । ईर्त्सति । भ्रस्ज पाके । इट् पक्षे भ्रस्जोरसोरिति अर् रावपो द्विरिति द्वित्वं । बिभर्जिषति । अरभावे श्चुत्वं झभेजवा इति सजः । बिभ्रज्जिषति इडभावे स्कोरिति सलोपः छशषेति षत्वं षढोः कः से इति कत्वं बिभ्रक्षति बिभर्क्षति । श्रिञ् सेवायां । शिश्रयिषति इडभावे सेदीर्घ इति दीर्घः शिश्रीषति । स्वृ शब्दोपतापयोः । सिस्वरिषति । इडभावे सेदीर्घ इति दीर्घे पोरुर् इत्युर् द्वित्वं । सुस्वूर्षति । यु मिश्रणे । अङ्सयोरिति पूर्वोकारस्येत् । यियविषति । इडभावे सेदीर्घ इति दीर्घे युयूषति । ऊर्णुञ् आच्छादने ऊर्णोतेरिडादिप्रत्ययो वाङिदिति ङित्वाद्गुणाभावे नुधातोरित्युव् ऊर्णुनुविषति । ङित्वाभावे

ऊर्णुनविषति । अतः पूर्वं द्वित्वं पश्चाद्गुणावादेशौ इडभावे सेदीर्घ इति दीर्घः । ऊर्णूनूषति । भृभर्त्सनभरणयोः । बिभरिषति । इडभावे पोरुरित्युर् य्वोर्विहसे इति दीर्घे द्वित्वे च बुभूर्षति ॥

**मू०–स्तौतिण्यन्तयोरेवषेपूर्वात्सस्यषः ॥** तुष्टूषति । साधयितुमिच्छति सिषाधयिषति । सिषेधयिषति । सुष्वापयिषति । स्तौतिण्यन्तयोरिति किम् । सिसनिषति । षेइति किम् । सिपासति । तिष्ठासति ।

सुबोधिनी–स्तौतिण्यंतयोरेवषेपूर्वात्सस्यषः । पूर्वादित्वात्परस्य स्तौतिण्यंतयोरेव सस्य षः स्यात्षभूते से नान्यस्य । ष्टुञ् स्तुतौ । षत्वे सेदीर्घ इति दीर्घे च । तुष्टूषति । वुंःसे इति नेट् । साधसंसिद्धौ ण्यंतः द्वित्वे यःसे इति पूर्वस्येत्वे षत्वे च । सिषाधयिषति । स्तौतिण्यंतयोः किं । षिच् क्षरणे सेसिक्षति । उपसर्गात्तु प्रादिश्च तथा तौसुनमाम् इति अड्द्वित्वव्यवधानेपीति च षत्वं परिषिषिक्षति । वन् षण् संभक्तौ । इडभावे जनसनखनामित्यात्वं वा । सिसनिषति, सिषासति । क्विलादिति षत्वं ॥

तत्त्वदीपिका–स्तौतिण्यन्तयोरवेषेइति । षेइतिकृतषत्वनिर्देशात्से स्तौतिण्यन्तस्यापिपूर्वात्षत्वं । सिपासतीति । जनसनेत्यात्वविकल्पः षेइतिनिर्देशादत्रनषत्वनिषेधः ।

**मू०–अनिटिसेउपधायानस्यलोपः ॥** तृहू हिंसायाम् । तितृंहिषति । तितृक्षति ।

सुबोधिनी–अनिटिसेउपधायानस्यलोपः । धातोरुपधाभूतस्य नस्य लोपःस्यात् अनिटि सप्रत्यये । तृहु तृहू तृंहू हिंसार्थास्तुदादौ ऊदितोवेतिवेट् इडभावे नलोपः ढत्वे कत्वषत्वे च । तितृक्षति, तितृंहिषति ॥

तत्त्वदीपिका–अनिटिसेउपधायानस्येति । णादिःकिदित्यतः किदित्यनुवर्त्यवाक्यभेदेनव्याख्येयम् । लक्ष्यानुसारेणसस्याकित्वाकित्वेबोध्ये । ततोगुणाभावसंप्रसारणनलोपाः सिद्धाः । विवृत्सति । वृतादिभ्यः स्यसयोर्वा पमितिपरस्मैपदं । षेनिट्त्वंचेतिइडभावः ।

**मू०–इणःसेगमबोधने ॥** एतुमिच्छति जिगमिषति । बोधनेतु प्रतीषिषति । इण्वादिकः । अधिजिगमिषति । बोधनेतु अधीषिषति ।

सुबोधिनी–इणःसेगमबोधने । इणेर्गमःस्यात् सप्रत्यये परे बोधनेऽर्थे तु न । एतुमिच्छति गमेःसस्येडितीट् जिगमिषति । बोधने तु यःसे इति सरूपस्य पूर्वस्येत्वं प्रतीषिषति । इण्वादिकः । इक् स्मरणे । गमेःसस्येतीट् अधिजिगमिषति ॥

**मू०–इवर्णोवर्णोपधाद्धसादेरसान्ताद्धान्ताच्चक्त्वासौसेटौवाकितौ ॥** दिद्युतिषते । दिद्योतिषते । रुरुचिषते । रुरोचिषते । लिलिखिषति । लिलेखिषति । सिस्निहिषति । सिस्नेहिषति । सिस्निक्षति । राधोहिंसायाम् । इस्सेद्वित्वलोपश्च । रित्सति । अन्यत्र आरिरात्सति गुरुम् ।

सुबोधिनी–इवर्णोवर्णोपधाद्धसादेरसांताद्धांताच्चक्त्वासौसेटौवाकितौ । द्युतदीप्तौ । द्युतेः

पूर्वस्येति संप्रसारणं । कित्त्वाद्गुणो न । दिद्युतिषते, दिद्योतिषते । एवंरुच दीप्तौ । लिख अक्षरविन्यासे । ष्णिह प्रीतौ । राधो हिंसायां इस्सेद्वित्वलोपश्चराधस्वरस्येत्यर्थः । राध संसिद्धौ । स्कोरिति सलोपे खसे चपा इति धस्य तः । रित्सति । हिंसायां किं । देवमारिरात्सति । यःसे इति पूर्वस्येत् खसे चपा इति धस्य तः ॥

**मू०-मुचोऽकर्मकस्यगुणोवासेद्वित्वलोपश्च ॥** मोक्षते मुमुक्षते वा वत्सः स्वयमेव । अकर्मकेति किम् । मुमुक्षति वत्सं कृष्णः । विवर्तिषते । विवृत्सति । निनर्तिषति । निनृत्सति । वृङ्वृञ्ऋदन्तात्सस्येड्वा । तितरिषति । तितरीषति । तितीर्षति । विवरिषते । विवरीषते । वुवूर्षते । विवरिषति । विवरीषति । वुवूर्षति । ध्वृ कौटिल्ये । दुध्वूर्षति ।

सुबोधिनी-मुचोऽकर्म्मकस्यगुणोवासेद्वित्वलोपश्च । मुचॢ मोक्षणे । चोःकुरिति कः । मोक्षते, मुमुक्षते । अकर्म्मकस्य किं । मुमुक्षति । नानिटिसे इति गुणाभावः । वृतु वर्त्तने । वृतादिभ्यः स्यसयोरिति वा पं । पेनिट्त्वं च नाऽनिटिसे इति न गुणः । विवृत्सति । विवर्तिषते । नृती गात्रविक्षेपे । नृततृदेतिवेट् नानिटिसे इति न गुणः । निनृत्सति, निनर्त्तिषति । वृङ् वृञ् ऋदंतस्येड्वा । तॄ प्लवनसंतरणयोः । वृङ्वृञिति वेटोदीर्घः । तितरिषति, तितरीषति । इडभावे ऋतइरितीर् । य्वोर्विहसे । इति दीर्घः विवरिषति, विवरीषति । इडभावे पोरुरित्युः वुवूर्षति । एवं वृञ् संभक्तौ । विवरिषते, विवरीषते, वुवूर्षते । ध्वृकौटिल्ये दुध्वूर्षति ॥

तत्त्वदीपिका--दुध्वूर्षति । प्रथमंदीर्घस्ततः पोरुरुततो य्वोर्विहसइतिदीर्घः ।

**मू०स्मिङ्पूङ्रञ्ज्वशूभ्यःसस्येट् ॥** सिस्मयिषते । पिपविषते । अरिरिषति । अञ्जिजिषति । अशिशिषते ॥ उचिच्छिषति । अधिजिगापयिषति । अध्यापिपयिषति । शिश्वाययिषति । शुशावयिषति । जुहावयिषति । पुस्फारयिषति । पुस्फोरयिषति । पिपावयिषति । बिभावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । सिस्रावयिषति । सुस्रावयिषति ।

सुबोधिनी-स्मिङ्पूङ्रंज्वशूभ्यःसस्येट् । स्मिङ् ईषद्धसने । अस्यानिट्त्वादिडागमस्याप्राप्तिः । स्तौतिण्यंतयोरेवेति नियमान्न षः । सिस्मायिषते । पूङ् पवने । वुःसे इति निषेधे प्राप्ते अङ्सयोरिति पूर्वोवर्णस्येत् । पिपविषते । ऋ गतौ । अस्याप्यनिट्त्वादिडागमस्याप्राप्तिः । सस्य इटि गुणे च कृते अरिस इति स्थिते । स्वरादेःपर इति रिस्शब्दस्य द्वित्वे अरिरिषति । अंजू व्यक्तिलक्षणादौ । अशूङ्व्याप्तौ । अनयोरुदित्त्वादिड् विकल्पे नित्यमित् । अश् भोजने इति क्र्यादिस्तु नित्यं सेडेव । अंजिजिषति । आशिशिषते । उछ उंछे । अत्र छ इति छस्य द्वित्वे खसेच्चपाझसानामिति चकारे कृते च्छसहितसेटो द्वित्वे हसादिशेषे च उचिच्छिषति । इङ् अध्ययने । अध्यापयितुमिच्छति अङ्सपरेञौ इङोगाङ्वेति वा गाङ् रातोञेपुगिति पुक् । अधिजिगापयिषति । पक्षे इङ्क्रीजीनामित्यात्वं स्वरादेःपर इति पिशब्दस्य द्वित्वे अध्यापिपयिषति । टुओश्वीर् गतिवृद्ध्योः श्वयतेर्ण्यंतस्येति वा संप्रसारणं । शिश्वाययिषति शुशावयिषति । ह्वेञ् स्पर्द्धायाम् । ह्वयतेरङ्सपरे इति संप्रसारणे । पुगभावे च कृते जुहावयिषति । स्फुर विकसने । ञौ चिस्फुरोरित्यात्वे कृते ञिनिमित्तः स्वरादेश

इति वचनेन तस्य स्थानिवद्भावादुकारविशिष्टस्य द्वित्वं पुस्फारयिषति । आत्वाभावे पुस्फोरयिषति । टुक्षु शब्दे चुक्षावयिषाति । पूङ् पवने । अङ्सयोरिति पूर्वोवर्णस्येत्वं । पिपावयिषति । भू सत्तायाम् । भावयितुमिच्छति पूर्वस्येत्वं । बिभावयिषति । यु मिश्रणे । अत्रापीत्वं यियावयिषाति । रु शब्दे । पूर्वस्येत्वं रिरावयिषाति । लूञ् छदने । लिलावयिषति । स्रु गतौ स्रवतिशृणोतिद्रवतीतीत्वंवा । सिस्रावयिषति, सुस्रावयिषति ॥

तत्त्वदीपिका–स्मिङ्पूङ् । स्मिङ् ईषद्धसने । पूङ्पवने । ऋगतौ । ऋगतिप्रापणयोश्च । अंजू व्यक्तिम्रक्षणकान्तिगतिषु । अशूङ्व्याप्तौ । रंजरागे वशकान्तावित्येतयोर्भ्रमेनकार्य्यः । स्मिङोऽनिट्त्वादप्राप्ते ऋपङोस्तु तुःसेइतिनिषेधः अंजश्योस्तूदित्वाद्विकल्पेप्राप्ते वचनं । किरइत्यादीनां ग्रहणादकारांतानग्राह्याः सिस्मयिषतइति । ण्यन्तयोरेवेतिनियमान्नपः । ङानुबन्धग्रहणात्तुपञः पुपूर्षतीत्येव ॥ अरिरिषतीति । ऋ इ स इति स्थिते इति गुणे अरिसइतिस्थिते । स्वरादेःपर इतिरिशब्दस्य द्वित्वं । पिपावयिषतीत्यादि ण्यंतात्से अङ्सयोः पूर्वस्येति इकारः नदी वृक्षमुन्मूलयिषति वृष्टिराजिमभिषिषिचतीत्याद्येतु चेतनत्वारोपात्सः । पाषाणादीनां संबोधनवत् ।

सू०–सान्तात्सोन ॥ चिकीर्षितुमिच्छति । स्वार्थसान्तात्तु स्यादेव । जुगुप्सिषते ।

॥ इतिसान्तप्रक्रिया ॥

सुबोधिनी–सांतात्सोन । "शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ॥ सरूपः प्रत्ययो नेष्टः सन्नंतान्न सनिष्यते" । १ । शैषिकाच्छैषिकः सरूपः प्रत्ययो नेष्टः । शालीये भव इति वाक्यमेव । न तु ईयंतात् पुनरीयः । सरूपः किं । आहिच्छत्रे भवः आहिच्छत्रीयः । अण्णंतादीयः । तथा मत्वर्थीयात् मतुबर्थिकः सरूपः प्रत्ययो न भवति । धनवानस्यास्ति । वत्वंतात् न वतुः । विरूपस्तु स्यादेव । दंडिमति शाला । सरूप इत्यनुसंबध्यते सरूपः सादृश्यं तत्तु अर्थद्वारा । तेनेच्छासन्नंतादिच्छासन् न भवति । स्वार्थसांतात्तुस्यादेव । गुब्भ्यइति स्वार्थे सप्रत्ययः । तदंतादिच्छासः । जुगुप्सिषते । यःसे इतीत्वे मानादीनामिति दीर्घे च । मीमांसिषते । गुप् गोपने । मान विचारणे ॥

॥ इति सांतप्रक्रिया ॥

तत्त्वदीपिका–सान्तात्सोनेति । अतिशये हसादेर्यङ्द्विश्चेत्यतश्चकारानुवृत्तेरेतद्बोध्यम् ।

कृतायामिहटीकायां लोकेशंकरशर्मणा ।

बाधनं दुष्टबुद्धीनामगमत्सान्तसाधनम् ॥

इति सप्रक्रिया ।

सू०– अतिशयेहसादेर्यङ्द्विश्च ॥ हसादेरेकस्वराद्धातोर्भृशार्थे पौनःपुन्ये च यङ्प्रत्ययो भवति द्वित्वञ्च ।

सुबोधिनी–अतिशयेहसादेर्यङ्द्विश्च । हसआदिर्यस्य स हसादिस्तस्मादेकस्वराद्धातोर्यङ् स्यात् । यङंतस्य धातोर्द्वित्वं च अतिशयेऽर्थे । अतिपूर्वात् शीङो भावे स्वराद इत्यः । अतिशयो द्विविधः । पौनःपुन्यं भृशार्थश्च । अतिशये किं । पठति । एकस्वरात्किम् । पुनःपुनर्जागर्ति । हसादेः किम् । भृशमीक्षते । भृशंशोभते । भृशंरोचते इत्यादौ यङ् नेतिभाष्यं पौनःपुन्ये तु स्यादेव । रोरुच्यते । शोशुभ्यते ॥

तत्त्वदीपिका—अतिशयेहसादेर्यङ्द्विश्च । अतिशयनमतिशयः । अतिपूर्वात् शीङोभावे स्वराद इत्यप्रत्ययः । सच द्विविधः पौनःपुन्यं भृशार्थश्च । सचार्थो यङो द्योत्य एव । हसआदिर्यस्य स तथा तस्मात् द्विरित्यपरं वाक्यं धातोर्द्विर्वचनं । धातुश्च यङन्त एव नतु यङः प्रकृतिभूतः अटाटचत इत्याद्यसिद्धेः ।

**मू०— यङि ॥ यङि यङ्लुकि च पूर्वस्य नामिनो गुणः । सधातुः । ङित्वादात् । भृशं पुनःपुनर्वा भवति बोभूयते । बोभूयाञ्चक्रे । बोभूयिषीष्ट । अबोभूयिष्ट । बोभुज्यते ।**

सुबोधिनी—यङि । यङ्प्रत्यये लुकि च पूर्वस्येत्यनुवृत्तं । भू सत्तायाम् । सधातुरिति धातुत्वाल्लडादयः । ङिदन्तत्वादात्मनेपदम् पुनःपुनरतिशयेन वा भवति बोभूयते । बोभूयेते बोभूयतां अबोभूयत । कासादिप्रत्ययादित्याम् । यत इत्यलोपः । बोभूयांचक्रे । बोभूयिषीष्ट । बोभूयिता । बोभूयिष्यते । अबोभूयिष्यत । अबोभूयिष्ट । भुज पालनादौ । अतिशयेन भुनक्ति बोभुज्यते ॥

तत्त्वदीपिका—ङित्वादादिति । अत्र केचित् । कथं यङंतादात् ङितोधातोराद्विधानात् । अत्र च यो ङित् स न धातुः यो धातुः स च न ङित् । किंच । ङस्य गुणनिषेधादिप्रयोजनत्वेन चरितार्थत्वादात्मनेपद प्रयोजकत्वासंभवः । अवयवे कृतं लिंगमचरितार्थं समुदायविशेषकं भवतीत्युक्तेः । अत्रोच्यते । स धातुरित्यनेन यङंतस्य धातुत्वेन धातोर्ङित्वसत्त्वात् । गुणनिषेधार्थं च ङकारप्रश्लेषस्य कर्तव्यत्वात् । बोभूयत इति । भवनानुकूलएकाभिन्नाश्रयको वर्त्तमानोऽतिशयविशिष्टो व्यापारः ।

**मू०— अनपिच्चहसात् ॥ हसादुत्तरस्य यस्य लोपो भवत्यनपि विषये । बोभुजाञ्चक्रे । बोभुजिता । मोमुह्यते । मोमुहाञ्चक्रे । लेलिह्यते । जोहूयते । वेविद्यते ।**

सुबोधिनी—अनपिच्चहसात् । हसात्परस्य शब्दस्य लोपोऽनपि । हसात्किं । लोलूयिता योयूयिता । आदेःपरस्य । परस्य यद्विहितं तत्तस्यादेर्बोध्यमिति । यूलोपः यत इत्यलोपः । बोभुजांचक्रे । बोभुजिषीष्ट । अल्लोपस्य स्थानिवत्वान्नोपधागुणः । एवं मुह वैचित्ये । लिह आस्वादने । हु दानादानयोः । ये इति दीर्घः । जोहूयते । विद ज्ञानादौ वेद्यते । डुपचष् पाके ॥

**मू०—आतः ॥ यङि यङ्लुकि च पूर्वस्यात आकारः । पापच्यते । पापठ्यते ।**

सुबोधिनी—आतः । आ अत इति च्छेदः पूर्वस्येत्यनुवृत्तं । पापच्यते । पठ व्यक्तायां वाचि । पापठ्यते ॥

**मू०—सिचोयङिनषः ॥ सेसिच्यते ।**

सुबोधिनी—सिचोयङिनषः । सिचेः सस्यषत्वंनस्यात् यङ्प्रत्यये परे । षिच क्षरणे । सेसिच्यते ।

**मू०—सूचिसूत्रिमूत्र्यटचर्त्यशूर्णोतिभ्योयङ् ॥ सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते ।**

सुबोधिनी–सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्योयङ् । सूच पैशून्ये । सूत्र वेष्टने ॥ मूत्र प्रस्रवणे । एते त्रयश्चुरादावदंताः । सोसूच्यते । सोसूत्र्यते । मोमूत्र्यते । अट गतौ । गोः कुटिलमटति इह व्यशब्दस्य द्वित्वे आत इत्यात्वम् । अटाट्यते । ऋ गतौ । कुटिलमृच्छाति गुणोर्तिसंयोगाद्योरिति गुणः ॥

तत्त्वदीपिका–सूचिसूत्रि । सूच पैशून्ये । सूत्र अवमोचने । मूत्रप्रस्रवणे । अट गतौ ऋ गतौ । अश् भोजने अशूङ् व्याप्तौ । ऊर्णुञ् आच्छादने । तत्राद्यानां त्रयाणां चुरादिण्यन्तत्वेनानेकस्वरत्वादट्यादीनां चाहमादित्वादप्राप्ते वचनम् ।

मू०–यकारपररेफस्यनद्वित्वनिषेधः ॥ अरार्य्यते । अराराञ्चक्रे । अशाश्यते । ऊर्णोनूयते ।

सुबोधिनी–यकारपररेफस्यनद्वित्वनिषेधः । यकारो परो यस्मात् स यकारपरः यकारपरश्चासौ रेफश्च यकारपररेफस्तस्य ततो यशब्दस्य द्वित्वे हसादिशेषे आत इति दीर्घे च अरार्यते इति भाष्योदाहरणात् । लिटि अनपि च हसादिति यलोपः यत इत्यलोपः अराराञ्चक्रे । लुटि अरारिता । अशूङ् व्याप्तौ । अशाश्यते । ऊर्णुञ् आच्छादने । ये इति दीर्घः । ऊर्णोनूयते ॥

तत्त्वदीपिका–अरार्य्यत इति । ऋय इति स्थिते गुणेकृते यशब्दस्य द्वित्वे हसादिशेषे आतइति दीर्घः । ऊर्णोनूयत इति णत्वस्यासिद्धत्वान्नुशब्दस्य द्वित्वं ।

मू०–गत्यर्थात्कौटिल्येएवयङ् ॥ कुटिलमटाति अटाट्यते । कुटिलं व्रजाति वाव्रज्यते ।

सुबोधिनी–गत्यर्थात्कौटिल्येएवयङ् । कुटिलस्य भावः कौटिल्यं । व्रज गतौ । कुटिलं व्रजाति । आत इति पूर्वस्यात्वं । वाव्रज्यते ॥

तत्त्वदीपिका–अटाट्यत इति । एकाभिन्नाश्रयको वक्रगत्यनुकूलो वर्त्तमानकालिकोव्यापार इति कौटिल्यस्य फलविशेषणत्वे व्यापारविशेषणत्वे तु वक्रो गत्यनुकूलोव्यापारइति शेषः ।

मू०–लुपसदचरजपजभदहदंशगृभ्योधात्वर्थगर्हायामेवयङ् ॥ गर्हितं लुम्पति लोलुप्यते । सासद्यते ।

सुबोधिनी–लुपसदचरजपजभदहदंशगृभ्योधात्वर्थगर्हायामेवयङ् । लुपॢ छेदने । गार्हितं लुंपाति लोलुप्यते । षदॢ विशरणादौ । आत इति पूर्वस्यात्वं गार्हितं सदाति सासद्यते ॥

तत्त्वदीपिका–धात्वर्थगर्हायामेवेति । गर्हापि फलस्य व्यापारस्य वा विशेषणं । लोलुप्यते वनं चैत्रः चैत्राभिन्नाश्रयो वनाभिन्नाश्रितः कुत्सितश्छेदनानुकूलो वर्त्तमानकालिको व्यापारः । वनाभिन्नाश्रयः छेदनानुकूलः कुत्सितो व्यापारइति वा ।

मू०–ञमजपांनुक् ॥ ञमान्तस्य जपजभदहदंशभञ्जपसचरफलां च पूर्वस्य नुग् यङ्यङ्लुकोः ।

सुबोधिनी–ञमजपांनुक् । जप व्यक्तायां वाचि । जभी गात्राविनामे । दह भस्मीकरणे । दंश दशने । भंजो आमर्दने । पस धातुर्दंत्यांतः सौत्रो गत्यर्थः । तालव्यांत इति माधवः ।

चर गत्यादौ । ञिफला विशरणे । फलनिष्पत्तौ वा । एषां अमप्रत्याहारांतस्य च नुक् यङ्यङ्लुकोः ॥

**मू०–चरफलोःपूर्वात्परस्यातउद्यङ्लुकोः ॥ चञ्चूर्यते । चञ्चुराश्चके । पम्फुल्यते । नुगित्यनेनाऽनुस्वारो लक्ष्यते । स च पदान्तवत् । जञ्जप्यते । जंजप्यते ।**

सुबोधिनी–चरफलोःपूर्वात्परस्यातउद्यङ्लुकोः । पूर्वाद् द्वित्वरूपादुत्तररूपस्यात उत्वमित्यर्थः । नुगित्यनेनानुस्वारो लक्ष्यते । स च पदांतवत् । यमजपामिति नुमागमोऽनुस्वारं बोधयति । सोऽनुस्वारः पदांतकार्यं लभते इत्यर्थः । तेन वापदांतस्येत्यनेन वा परसवर्णः चञ्चूर्य्यते ॥

तत्त्वदीपिका–सच पदान्तवदिति । तेन वेति यथा स्यात् ।

**मू०–गिरतेरेफस्यलत्वंयङि ॥ जेगिल्यते । यँय्यम्यते, यंयम्यते । दीङ् क्षये । देदीयते । ओप्यायी वृद्धौ । पेपीयते । वँव्वम्यते । वंवम्यते । चाखायते, चङ्खन्यते । चङ्कण्यते । तन्तन्यते । जञ्जभ्यते । दन्दह्यते । दंदश्यते । बम्भज्यते । पस बाधनग्रंथनयोः । पंपस्यते ।**

सुबोधिनी–गिरतेरेफस्यलत्वंयङि । गॄ निगरणे इत्यस्य रेफस्य लत्वं स्यात् यङि । गर्हितं गिलति जेगिल्यते । यम उपरमे । कण निमीलने । तनु विस्तारे । यमांतत्वादेषां पूर्वस्य नुक् । यंयम्यते । चंकण्यते । तंतन्यते ॥

तत्त्वदीपिका–जेगिल्यतइति ॥ गिलनस्यच गर्हितत्त्वं विवृत्तास्यचेष्टादिकृतं ।

**मू०–रीगृदुपधस्य ॥ ऋत्वतो धातोर्यङि परे पूर्वस्य रीक् । नरीनृत्यते । वरीवृत्यते । जरीगृह्यते । वरीवृश्च्यते । परीपृच्छ्यते । चलीक्लृप्यते ।**

सुबोधिनी–रीगृदुपधस्य । ऋदुपधस्य धातोः पूर्वस्य रीक् यङि । ऋदुपधस्येति किं । चेकीर्त्यते । अरभावपक्षे एकस्वरत्वाद्यङ् । नृती गात्रविक्षेपे । क्षुभ्नादित्वान्न णत्वम् । नरीनृत्यते । वृतु वर्त्तने । अतिशयेन वर्त्तते वरीवृत्यते । ग्रह उपादाने । ओव्रश्चू छेदने । प्रच्छ ज्ञीप्सायाम् । ग्रहामिति संप्रसारणम् । जरीगृह्यते । वरीवृश्च्यते । परीपृच्छ्यते । रीगिति । योगविभागादुभयत्र रीक् । कृपू सामर्थ्ये । उभयत्र लत्वम् । चलीक्लृप्यते । वश कांतौ । आत इति पूर्वस्यात्वं ॥

**मू०–वशेर्यङिनसंप्रसारणम् ॥ वावश्यते । श्वयतेर्वा ॥ शोशूयते । शेश्वीयते । सास्मर्यते ।**

सुबोधिनी–वशेर्यङिनसंप्रसारणं । ग्रहामिति प्राप्ते निषेधः । अतिशयेन वष्टि वावश्यते । टुओश्वि इर् गतिवृद्ध्योः ॥ श्वयतेर्वा ॥ संप्रसारणं यङि ये इति दीर्घः । शोशूयते । शेश्वीयते । स्मृ चिंतायाम् । गुणोर्त्तिसंयोगाद्योरिति गुणः । आत इति पूर्वस्यात्वम् सास्मर्यते ॥

**मू०–कवतेःपूर्वस्यनचुत्वंयङि ॥** कोकूयते ।

सुबोधिनी–कवतेःपूर्वस्यनचुत्वंयङि । कवतेरित्यपानिर्देशात् कुङ् शब्दे इति भ्वादिरेव गृह्यते । न तु कुशब्दे इत्यादादिकः कुङ् शब्दे इति तौदादिकश्च । ये इति दीर्घः । कोकूयते ॥

**मू०–वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दां ॥** यङि यङ्लुकि च पूर्वस्यनीक् । वनीवच्यते । सनीस्रस्यते । दनीध्वस्यते । बनीभ्रस्यते । चनीकस्यते । पनीपत्यते । पनीपद्यते । चनीस्कद्यते ।

सुबोधिनी–वंचुस्रंसुध्वंसुभ्रंसुकसपतपदस्कंदां ॥ याङि यङ्लुकि च पूर्वस्य नीक् । वंचु वंचने । स्रंसुध्वंसुभ्रंसु अधःपतने । कस् गतौ । पत्लृ पतने । पद गतौ । स्कन्दिर् गतिशोषणयोः । आत इत्यस्यापवादः । नोलोप इति नलोपः । वनीवच्यते ॥

तत्त्वदीपिका–वंचु । वनीवच्यत इति । नोलोपः दीर्घोच्चारणसामर्थ्याद्धस्वगुणोन ।

**मू०–ऋतोरिः ॥** येऽनपि । चेक्रीयते । जेह्रीयते । वेव्रीयते ।

सुबोधिनी–ऋतोरिः । यप्रत्यये ये इति दीर्घः । परत्वाद् रि आदेशे कृते द्वित्वम् डुकृञ् करणे । चेक्रीयते । हृञ् हरणे । जेह्रीयते । वृङ्वृञ्ो वेव्रीयते ॥

**मू०–दादेरिः ॥** अपिदाधामागैहाकूपिबातिसामिकारःक्ङिति हसेअनपि । देदीयते । मेमीयते । जेगीयते । जेहीयते । पेपीयते । सेषीयते । तेष्ठीयते ।

सुबोधिनी–दादेरिः । डुदाञ् दाने । दो अवखंडने । देङ् पालने । अनयोः संध्यक्षराणामित्यात्वे दारूपम् दाप्दैपौ विना । डुधाञ् धारणादौ । मा माने । माङ् माने । मेङ् प्रणिदाने । गै शब्दे । ओहाक् त्यागे । पा पाने । षो अंतकर्मणि । ष्ठा गतिनिवृत्तौ । एषामिकारः स्यात् क्ङिति हसेऽनपि । अनेनेत्वे द्वित्वं यङीति गुणः । देदीयते । इत्यादि ॥

**मू०–घ्राध्मोरीर्यङि ॥** जेघ्रीयते । देध्मीयते ।

सुबोधिनी–घ्राध्मोरीर्यङि । दीर्घोच्चारणं यङ्लुगर्थम् । घ्रा गन्धोपादाने । ध्मा शब्दाग्निसंयोगयोः । जेघ्रीयते । देध्मीयते ॥

**मू०–हन्तेर्हिंसायांघ्नीभावः ॥** जेघ्नीयते, जङ्घन्यते ।

सुबोधिनी–हन्तेर्हिंसायां घ्नीभावः । यङि घ्नीभावे सति द्वित्वं । जेघ्नीयते । हिंसायां किम् जंघन्यते । पूर्वाद्धन्तेरिति घः ॥

तत्त्वदीपिका–जेघ्नीयत इति । घ्नीभावेन न द्वित्वबाधः विषयभेदात् ह्रस्वेन सिद्धेपि प्रक्रियालाघवाय घ्नी। एवमन्यत्रापि ।

**मू०–स्वपिस्यमिव्येञांयङिसंप्रसारणम् ॥** सोषुप्यते । सेसिम्यते । वेवीयते ।

सुबोधिनी–स्वपिस्यमिव्येञांयङिसंप्रसारणम् । ञिष्वप् शये । स्यमु शब्दे । व्येञ् संवरणे षत्वं । सोषुप्यते । इत्यादि ॥

**मू०–चायःकीर्यङि ॥ चेकीयते । जञ्जन्यते । शीङोऽयङ्ये क्ङिति । शाशय्यते । डोढौक्यते । तोत्रौक्यते । ॥ इति यङन्तप्रक्रिया ॥**

सुबोधिनी–चायःकीर्यङि । यङि परे चायः कीः स्यात् । दीर्घोच्चारणं यङ्लुगर्थम् । चायृ पूजानिशामनयोः । चेकीयते । जनी प्रादुर्भावे । जनसनखनामित्यात्वं जाजायते । पक्षे यमजपामिति पूर्वस्य नुक् । जंजन्यते । शीङोऽयङ्येक्ङिति । ङित्त्वादंतादेशः । परत्वादंतरंगत्वाच्चायङादेशे कृते द्वित्वम् । आत इति पूर्वस्यात्वं । यत इत्यल्लोपः । शाशय्यते । ढौकृ त्रौकृ गतौ । ह्रस्व इति पूर्वस्य ह्रस्वे ततो यङीति गुणः । डोढौक्यते । तोत्रौक्यते ॥ इति यङन्तप्रक्रिया ॥ १ ॥

तत्त्वदीपिका–कृतायामिह टीकायां लोकेशंकरशर्मणा । मता भाष्यकृताभाव्या यङन्तप्रक्रिया गता ॥

इति यङन्तप्रक्रिया ॥

**मू०–वान्यत्र ॥ ऊकप्रत्ययसंयोगं विना यङो वा लुक् । यङ्लुगन्तात्पम् । अदादौ बोध्यम् । अदादित्वादपो लुक् यङ्लुकि सति ।**

सुबोधिनी–वान्यत्र । लुगिति सूत्रमनुवृत्तम् ऊकप्रत्यये यङो लुग् विधीयते दंदशूक इत्यादौ । अन्यत्र ऊकप्रत्ययाभावे यङ्प्रत्ययस्य वा लुग् भवति । लुगभावे यङ्प्रत्ययांत भवतीत्यर्थः । अनैमित्तिकोयमंतरंगत्वादादौ भवति ततः प्रत्ययलक्षणेन यङन्तत्वाद्द्वित्वादि । धातुत्वाल्लडादयः । परतोऽन्यदिति परस्मैपदम् । आदनुदात्तङित इत्यनेनात्मनेपदं तु न भवति । येपि स्पर्द्धशीङादयोनुदात्तङितस्तेभ्योपि न । अनुबंधनिर्दिष्टत्वात् । उक्तं च । "श्तिपा शपानुबंधेन निर्दिष्टंयद्गणेन च ॥ यत्रैकाज्ग्रहणं चैव पंचैतानि न यङ्लुकि ॥ १ ॥" इति निषधात् एतानि पंच कार्याणि यङ्लुकि न प्रवर्तते । तान्याह श्तिप्प्रत्ययनिर्दिष्टं कार्यम् इक्श्तिपाविति श्तिप् । शपा अप्प्रत्ययेन निर्दिष्टम् अप्कर्त्तरीत्यप् । अनुबंधनिर्दिष्टंयङोङित्त्वादि । गणनिर्दिष्टं दिवादेर्य इत्यादि । एकस्वरनिर्दिष्टं नैकस्वरादनुदात्तादित्यादि । यथा गदनदेति सूत्रे श्तिपा शपा च निर्दिष्टत्वाचङ्लुकि णत्वं न । प्रणिजंघनीति । प्रनिजागदीति । लित्पुषादेरित्यत्रानुबंधेन गणेन च निर्दिष्टत्वाद्ङोन । अजंगमीत् । अवर्वर्तीत् । नैकस्वरादित्यत्रैकस्वरनिर्दिष्टत्वादिण्निषेधो न बेभेदिता । चेच्छेदितेति । अत एव यादयो न गणेन निर्दिष्टत्वात् । किंतु अबेव । यङ्लुगंतमदादौ बोध्यम् । अदादित्वादपो लुक् भू सत्तायाम् यङि लुकि सति ।

तत्त्वदीपिका–वान्यत्र । लुक् इति सूत्रमात्रमनुवर्तते ततऊप्रत्ययेयङो लुग्विधीयते ॥ दंदशूक इत्यादौ । अन्यत्रेति व्याचष्टे ऊकप्रत्ययसंयोगं विनेति व्यवस्थायामन्यत्र यङोलुगित्यर्थः । प्रक्रियाक्रममाह । यङ्लुकि सतीति ।

**मू०–पितितिस्मिवेट् ॥ बोभवीतु, बोभोतु । अबोभवीत्, अबोभोत् । अबोभूताम् । अबोभवुः । बोभवाञ्चकार । गुणं बाधित्वा नित्यत्वाद्वुक् । अबोभोत् । अबोभूवीत्, अबोभूवुः । अबोभूवीः, अबोभोः । अबोभूवम् । पापचीति, पापक्ति । पापक्तः । पापचति । अपापचीत्, अपापक्, अपापग् ।**

अपापच्चुः । पापचांचकार । पापचिता । अपापाचीत्, अपापचीत् । द्विःस्वरपिनोपधायागुणः । बोभुजीति, बोभोक्ति । बोभुक्तः । बोभुजति । अबोभुजीत्, अबोभोक् । बोभोजिता । अबोभोजीत् । वावदीति, वावत्ति । वावदीतु, वावत्तु । वावद्धि । वावद्यात् । जाघटीति, जाघट्टि । जाघटीषि । झुभि: झुः । जाघट्पि । अजाघटीत् । स्पर्धसंघर्षे । पास्पर्द्धीति, पास्पर्द्धि । पास्पर्द्धः । पास्पर्धति । द्वौ । पास्पर्द्धि । अपास्पर्द्धीत्, अपास्पर्त्, अपास्पर्द् । सिपि । अपास्पर्द्धीः, अपास्पाः, अपास्पर्त्, अपास्पर्द् । गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च । जागाधीति, जागाद्धि । जागाद्धः । आदिजबानामिति । जाघात्सि । अजागाधीत्, अजाघात् । सिपि । अजाघाः, अजाघात् । नाथृ । नानाथीति, नानात्ति । नानात्तः । नानाथति । दध । दादधीति, दादद्धि । दाधत्सि । अदादधीत् । अदादद्धाम् । अदादधुः, अदाधः, अदादधीः । दादधिता । अदादधीत् । मुद । मोमुदीति, मोमोत्ति । कुर्द खुर्द गुर्द गुद क्रीडायामेव । चोकूर्दीति, चोकूर्ति । चोकूर्त्तः । अचोकूर्त् । सिपि अचोकूः । ऋदन्तानामृदुपधानां च यङ्लुकि पूर्वस्य रुक्रिक्रीकः । चर्करीति, चरिकरीति, चरीकरीति । चर्कर्ति, चरिकर्ति, चरीकर्ति । चर्कृतः, चरिकृतः, चरीकृतः । चर्क्रति, चरिक्रति, चरीक्रति । अचर्करीत्, अचरिकरीत्, अचरीकरीत् । अचर्कः, अचरिकः, अचरीकः । चर्करिता । वर्वृतीति, वरिवृतीति, वरीवृतीति । वर्वर्ति, वरिवर्ति, वरीवर्ति । वर्वर्त्तामास । वर्वर्तिता । वर्वर्तिष्यति अवर्वर्तिष्यत् । वनीवञ्चीषि । वनीवङ्क्षि । वनीवच्यात् । वनीवञ्चीतु, वनीवङ्क्तु । वनीवङ्क्ताम् । अवनीवञ्चीत् । संयोगान्तस्यलोपः । अवनीवन् । जङ्गमीति, जङ्गन्ति । लोपस्त्वनुदात्ततनाम् । जङ्गतः । गमांस्वरे । जंग्मति । जङ्गमीमि । जङ्गन्वः । जङ्गन्मः । जङ्गमीतु, जङ्गन्तु । हौ जङ्गहि । अजङ्गमीत् । अजङ्गन् । अजङ्गताम् । गमांस्वरे । अजङ्गमुः । जङ्गमिता । अजंगमीत् । हिंसायान्तु । जेघ्नयीति, जेघ्नेति, जंघनीति, जंघंति । लोपस्त्वनुदात्ततनाम् । जंघतः । जंघ्नति । अजंघनीत्, अजंघन् । आशिषि वध्यात् । अवधिष्ट । चञ्चुरीति । चञ्चूर्तः । चञ्चुरति । चञ्चूर्यात् । चञ्चुरीतु, चञ्चूर्तु । चञ्चूर्तात् । चञ्चूर्ताम् । चञ्चूर्हि । अचञ्चुरीत् । अचञ्चूः । चोस्कुन्दीति, चोस्कुन्ति । चोस्कुन्तः । चोस्कुन्दति । चोस्कुन्द्यात् । चोस्कुंदीतु, चोस्कुंत्तु । चोस्कुंताम् अचोस्कुन्दीत् । अचोस्कुन् । अचोस्कुंताम् । अचोस्कुन्दुः । सिपि अचोस्कुन्दीः । अचोस्कुन् । चंखनीति, चंखन्ति । चंखातः । चंख्नति । चंखनीषि, चंखंसि । चंखाथः । चंखनीमि, चंखन्मि । चंखन्वः । चंखन्मः । चंखायात्, चंखन्यात् । चंखनीतु, चंखन्तु,

चंखातात् । चंखाताम् । चंखनतु । चंखाहि । अचंखनीत्, अचंखानीत् । अचंखानिष्टाम् । योयवीति, योयोति । योयुतः । योयुयात् । योयवीतु, योयोतु । अयोयवीत् । नोनवीति, नोनोति । नोनुतः । नोनुयात् । नोनवीतु, नोनोतु । अनोनवीत् । अनोनोत् । सिपि अनोनवीः । अनोनोः । जाहेति, जाहाति । द्विस्तौ । जाहीतः । जाहीयात् । जाहेतु, जाहातु, जाहीतात् । जाहीताम् । अजाहेत्, अजाहात्, अजाहीत् । अजाहीताम् । अजाहुः । जाहीयात् । जाहिता । आतोऽनापि । अजाहासीत् । अजाहासिष्टाम् । दादेति, दादाति । दात्तः । दादति । दादेषि । दादासि । दात्थः । दात्थ । दाद्वः । दाद्मः । हौ । देहि । दादेयात् । आतोऽनापि । दादिता । दादेःपे । अदादेत्, अदादात् । अदादाताम् । एवं धेट् । दाधेति, दाधाति । दाद्धः । दाधाति । दाध्यात् । धेहि । दाधेयात् । आदाधासीत् । अदाधेत्, अदाधात् । अदाधत् । अदाधताम् । अदाधन् । डुधाञ् । दाधेति, दाधाति । धात्तः । धात्थः । दादेः । दाध्वः । दाध्मः । लङि अदाधात्, अदाधेत् । पितोस्तु दैप् शोधने । दाप् लवने । दादेति, दादाति । दादीतः । दादति । दादीयात् । दादेतु, दादातु दादीताम् । दादीहि । अदादेत्, अदादात्, अदादीताम् । दादायात् । अदादासीत् । सास्वपीति, सास्वप्ति । सास्वप्तः । सास्वपति । हौ । सास्वब्धि । असास्वपीत्, असास्वप् । सास्वप्यात् । असास्वापीत् । असास्वपीत् । कॄ विक्षेपे । चाकरीति, चाकर्ति । चाकीर्तः । चाकिरति । चाकरिता, चाकरीता । तातरीति, तातर्ति । तातीर्तः । तातिरति । तातरीतु तातर्तु । ॠत इद् । तातीर्तात् । तातीर्हि । अतातरीत्, अतातः अतातारीत् । अतातारिष्टाम् । अर्तेर्यङ्लुकि द्वित्वे पूर्वस्य रइत्यत्वं । रुक् रिग्रीकोस्तु पूर्वस्यासवर्णइयू । अररीति, अरियरीति, अरीयरीति, अरार्ति, अरियर्ति, अरीयर्ति । अर्ऋतः, अरियृतः, अरीयृतः । रुको रिलोप इति लोपः । आरति, अरीयृरति । अर्ऋयात्, अरियृयात् । अरीयृयात् । अररीतु, अरियरीतु, अरीयरीतु, अरर्तु, अरियर्तु, अरीयर्तु, आरतु, अरियतु, अरीयतु, अरीयृतु । आररीत्, आरियरीत्, आरीयरीत्, आरः, आरियः, आरीयः । आररुः, आरियरुः, आरीयरुः । सिपि आररीः, आरियरीः, आरीयरीः । आरः, आरियः, आरीयः । लिङि । यादादाविति रिङ् । आरियात्, अरीयृरियात् । अररिता, अरियरिता, अरीयरिता । लुङि आरारीत् आरियरीत् । गृहू । जगृहीति, जरिग्रहीति । जर्गर्ढि । जर्गृढः । जर्गृहति । जर्गृहीतु, जर्गर्ढु, जर्गढात् । हौ जर्गृढि । अजर्गृहीत् । अजर्घर्ट्, अजर्घर्ड् । ग्रह जाग्रहीति, जाग्राढि । तसादौ ङिन्निमित्तं सम्प्रसारणम् । तस्य बहिरङ्गत्वेनासिद्धत्वान्नरुगादयः । जागृढः । जागृहति । जाग्रहीषि, जाग्राक्षि,

जागृहि । जाग्रहिता । गृधु । जर्गृधीति, जर्गर्धि । जर्गृद्धः । जर्गृधति । जर्गृधीषि, जर्घर्त्सि । अजर्गृधीत्, अजर्घर्त् । सिपि अजर्गृधीः, अजर्धाः । अजर्गर्धीत् । अजर्गर्धिष्टाम् । पाप्रच्छीति, पाप्रष्टि । तस्मादौ न सम्प्रसारणं । श्तिपा निर्देशात् ।

सुबोधिनी—पितितिस्मिवेट् । यङन्तात्परेषां हसादीनां पितां तकारसकारमकाराणामीड् वा स्यात् यङो लुक्यपि । प्रत्ययलक्षणेनात्र यङः तत्त्वं । बोभवीति । बोभोति । बोभूतः । ह्वेरित्यंतोऽतहुर्बरेवापीति नियमात् नुधातोरित्युत्र् । बोभूवति । बोभूयात् । लोटि बोभवीतु, बोभोतु । बोभूतात् । लङि अबोभवीत्, अबोभोत् । अबोभूताम् । अनउसइत्यन उस् उसि गुण इति गुणे अबोभवुः । कासादिप्रत्ययादित्याम् । बोभवांचकार । बोभूयात् । सिसतासीस्यपामितीट् । बोभविता । बोभविष्यति । अबोभविष्यत् । लुङि दादेः पे इति सेर्लुक् यङ्लुकि सर्तातीट्पक्षे गुणं बाधित्वा नित्यत्वाद्भुवः सिलोपे स्वरे इति वुक् । अबोभूवीत् । भुवः सिलोपे यङ्लुकि गुणो नेत्यानिषेधाद्गुणः अबोभोत् । अबोभूतां । अनउस इत्यनउस् नित्यत्वाद्वुक् । अबोभूवुः । डुपचष् पाके । आत इति पूर्वस्यात्वं । पापचीति, पापक्ति । १ । पापच्यात् । २ । पापक्तु, पापचीतु, पापक्तात् । ३ । अपापचीत् । चोःकुरिति कः दिस्योर्हसादिति दिप्सिपोर्लोपः । अपापक् । ४ । पापचांचकार । ५ । पापच्यात् । ६ । पापचिता । ७ । पापचिष्यति । ८ । अपापचिष्यत् । ९ । अतोऽहसादेरिति वा वृद्धिः । अपापाचीत्, अपापचीत् ॥ १० ॥ भुजपालनाभ्यवहारयोः । ङ्वेःस्वरेपि नोपधाया इत्यनेन चतुर्षु गुणो न । यङीति पूर्वस्य गुणः । बोभुजीति । चोःकुरिति गः खसेचपा इति गस्यकः । बोभोक्ति ॥ १ ॥ बोभुज्यात् ॥ २ ॥ बोभुजीतु, बोभोक्तु ॥ ३ ॥ अबोभुजीत् । दिस्योरिति दिप्सिपोर्लोपः अबोभोक् ॥ ४ ॥ बोभोजांचकार ॥ ५ ॥ बोभुज्यात् ॥ ६ ॥ बोभोजिता ॥ ७ ॥ बोभोजिष्यति ॥ ८ ॥ अबोभोजिष्यत् ॥ ९ ॥ अबोभोजीत् ॥ १० ॥ वद व्यक्तायां वाचि । आत इति पूर्वस्यात्वं । वावदीति । खसेचपा इति तः वावत्ति ॥ १ ॥ वावद्यात् ॥ २ ॥ वावत्तु, वावदीतु, वावत्तात् ॥ ३ ॥ अवावदीत्, अवावत् ॥ ४ ॥ वावदांचकार ॥ ५ ॥ वावद्यात् ॥ ६ ॥ वावदिता ॥ ७ ॥ वावदिष्यति ॥ ८ ॥ अवावदिष्यत् ॥ ९ ॥ अवावादीत् ॥ १० ॥ घट चेष्टायाम् । आत इति पूर्वस्यात्वं । जाघटीति । ष्टुभिःष्टुरिति टः । जाघट्टि । १ । जाघट्यात् । २ । जाघटीतु, जाघट्टु, जाघट्टात् । ३ । अजाघटीत् । दिस्योरिति दिप्सिपोर्लोपः । अजाघट् । ४ । जाघटांचकार । ५ । जाघट्यात् । ६ । जाघटिता । ७ । जाघटिष्यति । ८ । अजाघटिष्यत् । ९ । अजाघाटीत् । १० । अतोऽहसादेर्लघोरिति वा वृद्धिः । स्पर्द्ध संघर्षे । संघर्षः पराभिभवेच्छा । आत इति पूर्वस्यात्वं । यङ्लुकीतीट् । पास्पर्द्धीति । ईडभावे तथोर्द्ध इति धत्वं । हसात्परस्य झसस्येति धलोपे पास्पर्धि धलोपाभावे झभेजबा इति दत्वं । पास्पर्द्धि । सिपि दलोपे खसेचपा इति तः । पास्पर्त्सि । पक्षे पास्पर्त्सि । पास्पर्ध्यात् । २ । पास्पर्द्धु । पास्पर्द्धीतु, तुह्योरिति तातङ् । पास्पर्द्धात् । हौ झसाद्धिर्हेरिति धत्वे हसादिति धलोपे पास्पर्द्धि । धलोपाभावे दत्वं । पास्पार्द्धि । ३ । लङि अपास्पर्द्धीत् । ईडभावे

दिस्योर्ईसादिति दिप्सिपोर्लोपः । संयोगांतस्येति धलोपः । वाऽवसाने इति वा तः । अपास्पर्द्, आपास्पर्त् । सिपि तु अपास्पर्द्धीः । पक्षे दः सः इति दस्य सः । दोषामिति सस्य रः । रिलोपोदीर्घश्चेति रलोपपूर्वदीर्घौ । अपास्पाः । ४ । पास्पर्द्धींचकार । ५ । पास्पर्द्ध्यात् । ६ । पास्पर्द्धिता । ७ । पास्पर्द्धिष्यति । ८ । अपास्पर्द्धिष्यत । ९ । लुङि सिसतासीस्यपामितीट् सेरितीट् इटईटीति दः सिलोपः । अपास्पर्द्धीत् । १० । गाधृ प्रतिष्ठादौ । तथोर्द्ध इति धः । झभेजबा इति दः । जागाद्धि ईट्पक्षे जगाधीति । सिपि आदिजबानामिति घः । खसेचपा इति घस्य तःजाघात्सि ॥ १ ॥ जागाध्यात् ॥ २ ॥ जागाधीतु, जागाद्धु । हौ झसादिति हेर्द्धिः । जागाद्धि । ३ । अजागाधीत् । आदिजबानामिति घः । अजाघात् । सिपि अजागाधीः । ईडभावे दिस्योरिति सिलोपः । वावसाने वादः । दःसः इति दस्य सः आदिजबानामिति घः । अजाघात् । सिपि अजाघाद् । ४ । लुङि अजागाधीत् । अजागाधिष्टां । नाथृ नाधृ याच्ञादौ । आत इति पूर्वस्यात्वं । खसेचपा इति थस्य तः । नानात्ति, नानाथीति । नानाथ्यात् । नानात्तु, नानाथीतु, नानात्तात् । अनानात् । अनानाथीद् । लुङि । अनानाथीत् । अनानाथिष्टाम् । दध धारणे । ईट्पक्षे दादधीति । पक्षे तथोर्द्ध इति धः । झभेजबा इति दः । दादद्धि । सिपि आदिजबानामिति धः । दाधत्सि दादध्यात् । दादधीतु, दादद्धु, दादद्धात् । हौझसाद्धिर्हैरिति धिः । दादद्धि । लङि अदादधीत् । ईडभावे आदिजबानामिति धः । अदाधत् । सिपि दःस इति दस्य सः । अदाधः, अदाधत्, अदादधीः । लुङि अतोहसादेर्लघोरिति वा वृद्धिः । अदादाधीत्, अदादधीत् । स्कुदि आप्लवने । इदितोनुमिति नुम् । चोस्कुंदीति, ईडभावे चोस्कुंति । चोस्कुंद्यात् । चोस्कुंदीतु, चोस्कुन्तु, चोस्कुन्तात् । अचोस्कुंदीत् । दिस्योर्ईसादिति दिप्सिपोर्लोपःसंयोगांतस्येति दलोपः । अचोस्कुन् । लुङि अचोस्कुन्दीत् । मुदी हर्षे । मोमुदीति । द्वेः स्वरेऽपि न गुणः मोमोत्ति । मोमुद्यात् । मोमुदीत्, मोमोत्तु, मोमुत्तात् । अमोमुदीत् । अमोमोत् । सिपि दःस इति दस्य सः । अमोमोः, अमोमोत् । लुङि अमोमोदीत् कुर्द खुर्द गुर्द गुद क्रीडायाम् । य्वोर्विहसे इति दीर्घः । खसेचपा इति दस्य तः चोकूर्त्ति । ईट्पक्षे चोकूर्दीति, चोकूर्द्यात् । चोकूर्त्तु, चोकोर्दीतु, चोकूर्तात् । हौ झसाद्धिर्हैरिति धिः । चोकूर्द्धि । अचोकूर्दीत् । अचोकूर्त् । रात्सस्येति तलोपो न । सिपि दः सः इति दस्य सः रात्सस्येति सलोपः । य्वोर्विहसे इति दीर्घः । अचोकूः, अचोकूर्दीः । लुङि अचोकूर्दीत् । डुकृञ् करणे । ऋदंतानामृदुपधानां च यङ्लुकि पूर्वस्य रुक्रिक्रीक् । अतिशयेन करोति । चर्करीति । ईडभावे चर्कर्ति । द्वेरित्यंतोऽत् रत्वं । चर्कर्ति । विधिलिङि चर्कुयात् । लोटि । चर्करीतु, चर्कर्तु, चर्कृतात् । लङि अचर्करीत् । ईडभावे दिस्योर्ईसादिति दिप्सिपोर्लोपः । अचर्कः । आशिषि लिङि यादादौपे इति रिङ् । चर्क्रियात् । लुङि णित्पे इति णित्वाद्धातोर्नामिन इति वृद्धिः । अचर्कारीत् । वृतु वर्तने लटि ईट्पक्षे द्वेः स्वरेपीति न गुणः । वर्वृतीति ईडभावे वर्वर्ति । विधिलिङि वर्वृत्यात् । इटि लोटि वर्वृतीतु ईडभावे वर्वर्तु, वर्वर्तात् ॥ हौ झसाद्धिर्हैरिति धिः । वर्वृद्धि । लङि अवर्वृतीत् । ईडभावे रात्सस्येतितलोपो न । अवर्वर्त् । दिस्योर्ईसादिति दिप्सिपोर्लोपः । सिपि पक्षे वावसाने इति दः दः स इति दस्य सः । दोषामिति सस्य रः । रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ । अवर्वाः । अवर्वर्त् । ईटि अवर्वृतीः । लिटि वर्वर्तामास । वर्वृत्यात् । वर्वर्तिता । लृटि गणनिर्दिष्टत्वात् वृतादिभ्यः स्यसयोरिति न ।

वर्वर्तिष्यति । अवर्वर्तिष्यत् । लुङि गणनिर्दिष्टत्वात् लित्पुपादेरितिङोन । अवर्वर्तीत् । वंचु गतौ । गत्यर्थात् कौटिल्ये इति यङ् । वंचु स्रंसु इति पूर्वस्य नीगागमः । लुकि न तन्निमित्त-मिति यङो लुका लुप्तत्वात्तदाश्रितो नलोपो न । वनीवंचाति । ईडभावे वनीवंक्ति । तसोङि-त्त्वादिह स्यादेव । नोलोप इति नलोपः।वनीवक्तः द्वेरित्यंतोऽत् । वनीवचति । वनीवच्यात् । वनीवंचातु, वनीवङ्क्तु, वनीवक्तात् । हो झसादिति दीर्घः । वनीवग्धि । अवनीवंचीत् । ईड-भावे संयोगांतस्येति चलोपः । अवनीवन् । ९ । लुङि अवनीवंचीत् । १० । गम्लृगतौ । जमजपामिति पूर्वस्य नुक् । जंगमीति । ईडभावे । जंगंति । लोपस्त्वनुदात्ततनामिति मलोपः । जंगतः । गमांस्वरे इत्युपधालोपः जंग्मति । मोनोधातोरितिनः । जंगन्मि । १ । जंगम्यात् । ५ । जंगमीतु, जंगंतु, जंगतात् । होलोपस्त्वनुदात्ततनामिति मलोपस्याऽसिद्ध-त्वादऽत इति न हेर्लुक् । जंगहि । अजंगमीत् । ईडभावे दिस्योरिति दिप्सिपोर्लोपः । मो-नोधातोरिति न अजंगत् । अनुबंधनिर्दिष्टत्वात् लित्पुपादेरिति न ङः । ह्म्यंतेति न वृद्धिः । अजंगमीत् । हन हिंसागत्योः पूर्वार्द्धंतेरिति हस्य घः । हंतेरिति श्तिपानिर्देशस्तथापि यङ्-लुकि भवत्येवेति न्यासकारः । श्तिपाशपेति निषेधस्य अनित्यत्वात् । जमजपामिति पूर्वस्य नुक् । जंघनीति । ईडभावे जंघंति । तसि लोपस्त्वनुदात्ततनामिति नलोपः जंघतः । गमां स्वरे इत्युपधालोपः । द्वेरित्यंतोऽत् । जंघ्नति । जंघन्यात् । जंघनीतु, जंघंतु, जंघतात्, जहोधिशाधीतिसूत्रे अयङ्लुकीति वक्तव्यम् । तेन जंघहि । अजंघनीत् । ईडभावे अजंघन् । जंघनांचकार । हनोलुङ्लिङोर्वध इति वधादेशः । द्वित्वविशिष्टस्य हनोवधादेशात् वधादे-शस्य पुनर्द्वित्वं न । वध्यात् । अवधीत् । आङ्पूर्वात्तु आङोयमहन इत्यात्मनेपदम् । आजंघते । इत्यादि । प्रकृतिग्रहणे यङ्लुगंतस्यापि ग्रहणमित्युक्तत्वात् । चर गतौ भक्षणे च । लुपसदेति गर्हायां यङ् । यङो लुक् । जमजपामिति नुक् । चरफलोरित्युत्वं उतस्तपर-त्वान्न गुणः । र्वोर्विहसे इति दीर्घस्तु स्यादेव । चंचूर्ति, चंचूरीति । चंचूर्यात् । चंचूर्तु, चंचुरीतु, चंचूर्तात् । अचंचूः । पदांतविषयत्वात् र्वोर्विहसे इति दीर्घः । अचंचुरीत् । खनु अवदारणे । जमजपामिति नुक् । चंखनीति, चंखन्ति । जनसनेत्यात्वं । चंखातः । जनस-नेत्यत्र हकारे चेति वाच्यम् । तेन हावप्यात्वं । चंखाहि । अचंखनीत्, अचंखन् । आशी-र्लिङि जनसनेतिवाऽत्वं । चंखायात्, चंखन्यात् । लुङि अतोहसादेरिति वा वृद्धिः । अ-चंखनीत्, अचंखानीत् । यु मिश्रणेऽमिश्रणे च । ओरौ इति सूत्रेऽद्विरुक्तस्येत्युक्तत्वादुत औत्वं न । यङीति पूर्वस्य गुणः । योयोति । ईट्पक्षे योयवीति । नुधातोरित्युव् । योयुवति । योयुयात् । योयोतु, योयवीतु, अयोयोत्, अयोयवीत् । आशिषि ये इति दीर्घः योयूयात् । लुङि णित्पे इति णित्वात् धातोर्नामिन इति वृद्धिः । आयोयावीत् । णुस्तुतौ । नोनोति, नोनवीति नोनुयात् । नोनवीतु, नोनोतु, नोनुतात् । अनोनवीत् । अनोनोत् । उसिगुण इति गुणे । अनोनुवः । लुङि । अनोनावीत् । ओहाक् त्यागे । ओहाङ् गतौ । अनयोस्तुल्यानि रूपाणि ङित्त्वप्रयुक्तस्यात्मनेपदस्य यङ्लुक्यप्रवृत्तेः । भृञ्लुकीति इत्वस्य लुग्निमित्ते द्वित्वे एव विहितत्वाच्च । आत इति पूर्वस्यात्वम् । ईट्पक्षे जाहेति, जाहाति । द्वेस्तावितीत्वं । जाहीतः । इह ङिति हसेभीहाकोर्द्विर्तीत्वं न अनुबंधनिर्दिष्टत्वात् द्वेरित्यंतोऽत् द्वेस्तावित्या-लोपः । जाहति । जाहेषि, जाहासि । जाहीथः । जाहीथ । जाहेमि, जाहामि । जाहीवः । जाहीमः । द्वेस्तावितीत्वं । जाहीयात् । इह हाकोयादादावालोप इत्यालोपेन । अनुबंध-

निर्दिष्टत्वात् । जाहेतु, जाहातु, जाहीतात् । हौ द्वेस्ताविततीत्वं । जाहीहि । इह इर्वाहाविति ह्रस्वदीर्घविकल्पे रूपत्रयं न । जहातेरिति श्तिपानिर्दिष्टत्वात् । अजाहेत । ईडभावे अजाहात् । आशिषि जाहायात् । इह दादेरे इत्येत्वं दादेरिति इत्वं च न । हागित्युभयत्रानुबंधनिर्दिष्टत्वात् । जहिता । लुङि । यमिरमिनमातामितीट्सकौ । अजाहासीत् । अजाहासिष्टाम् । अजाहासिषुः । डुदाञ् दाने । आत इति पूर्वस्यात्वं दादाति । ईट् पक्षे । दादेति । दादेरित्यालोपः । दातः । द्वेरित्यंतोऽत् दादाति । दादासि, दादेषि । दाद्यात् । दादेतु, दादातु, दात्तात्, । हौ दांहावित्येत्वपूर्वलोपौ । देहि, दात्तात् । अदादात्, अदादेत । दादांचकार । दादेरे इत्येत्वं । दादेयात् । दादेता । दादेष्यति।अदादेष्यत् । दादेःपे इति सिलोपः अदादात् । धेट् पाने दाधाति, दाधेति । दादेरित्यालोपः । खसेचपाझसानामितितः । दात्तः । तथोर्ध इति धत्वं न दादेरित्यालोपस्य स्थानिवत्त्वेन हसांतत्वाभावात् । तत्र सूत्रेष्वनवस्थितार्थत्वानुवृत्तेर्वादाधति।दाध्यात्।दाधातु, दाधेतु, दात्तात् । दाधतु । हौ दांहावित्येत्वपूर्वलोपौ । धेहि । अदाधात्, अदाधेत् । दाधांचकार । दादेरे इत्येत्वं । दाधेयात् । दाधेता । दाधेष्यति । अदाधेष्यत् । शाछासाघ्राधेटामिति वा सिलोपः । अदाधात् । पक्षे यमिरमिनमातामितीट्सकौ अदाधासीत् । धेटो भूतमात्रे दिवादिपरोङ्वेति ङः । अदाधत् । डुधाञ् धारणादौ । दाधाति दाधेति । पूर्वस्य ङिति झसे ध इति धः । खसेचपा इतितः । धात्तः । दाधति । दाध्यात्।दाधातु, दाधेतु धात्तात्।हौ दांहावित्येत्वपूर्वलोपौ धेहि । अदाधात् ,अदाधेत्। दाधाञ्चकार । दादेरे इत्येत्वं दाधेयात् । दाधेता । दाधेष्यति । अदाधेष्यत्। दादेः पे इति सिलोपः । अदाधात्। दाप् लवने । दैप् शोधने । आदादिकभौवादिकयोरनयोर्दादित्वं । दादाति, दादेति । द्वेस्ताविततीत्वं । दादीतः । द्वेरित्यंतोऽत् । द्वेस्तावित्यालोपः । दादति । दादीयात् । दादातु, दादेतु, दादीतात् । हौ । दादीहि । अदादात् । अदादेत्।दादांचकार । दादायात् । दादेता । दादेष्यति । अदादेष्यत् । यमिरमिनमातामितीट्सकौ । अदादासीत् । ञिष्वप्शये । सर्वविधिभ्यो लुग्विधिर्बलीयान् इति यङो लुक् । लुका लुप्ते प्रत्ययलक्षणत्वाभावात् स्वापिस्यामिव्येञांयङीति विधीयमानं यत्संप्रसारणं तन्न भवति । रुदादेश्चतुर्णां हसादेरिति गणनिर्दिष्टत्वादिण्न आत इति पूर्वस्यात्वम्। ईट्पक्षे सास्वपीति। ईडभावे सास्वाप्ति। सास्वप्तः । सास्वपति । सास्वप्यात् । सास्वपीतु, सास्वप्तु, सास्वप्तात् । हौ झसाद्धिरिति धिः । झभेजबा इति बः । सास्वाब्धि । रुदादेर्दिस्योरीडडाविति गणनिर्दिष्टत्वान्न । असास्वपीत् , असास्वप् । सास्वपांचकार । आशिषि यजामिति संप्रसारणम् सासुप्यात् । सास्वपिता । सास्वपिष्यति । असास्वपिष्यत् । अतो हसादेरिति वा वृद्धिः । असास्वापीत्, असास्वपीत् । कॄ विक्षेपे । आत इति पूर्वस्यात्वम् ।ऋदंतानामिति तपरत्वात् रुक्रिक्रीको न भवंति । ईट्पक्षे चाकरीति । ईडभावे चाकर्त्ति । ऋतइरितीर् । य्वोर्विहसे इति दीर्घः । चाकीर्तः । द्वेरित्यन्तोत् । चाकिरति । चाकीर्यात् । चाकरीतु, चाकर्तु।चाकीर्त्तात् । चाकीर्हि । अचाकरीत् । ईडभावे दिस्योर्हसादिति दिप्सिपोर्लोपः । अचाकः । उसि गुणः अचाकरुः । चाकरांचकार । चाकीर्य्यात् चाकरिता चाकरिष्यति । अचाकरिष्यत् । लुङि णित्पे इति णित्वात् धातोर्नामिन इति वृद्धिः अचाकारीत् । तॄप्लवनसंतरणयोः।तातरीति, तातर्ति। तातीर्यात् । तातरीतु, तातर्तु, तातीर्त्तात् । अतातरीत्, अतातः । तातरांचकार । तातीर्यात् । तातरिता । तातरिष्यति । अतातरिष्यत् । अतातारीत् । अतातारिष्टाम् । ऋ गतौ

भौवादिकजौहोत्यादिकयोर्ग्रहणं । अस्मात् सूचिसूत्रिमूत्रीति यङ् द्वित्वं च । केचित्तु यङीति पूर्वस्य गुणमाहुः । अन्ये तु रङीति पूर्वस्यात्वमित्याहुः । फले तु न विशेषः । ऋदंतानामिति पूर्वस्य रुग्रिग्रीगागमाः । अरर्ति । रिग्रीकोस्तु तुल्यं रूपं । असवर्णे स्वरे पूर्वस्यतीय् । अरियर्ति । ईट्पक्षे अररीति, अरीयरीति । तसि अर्ऋतः अरियृतः । द्वेरित्यंतोत् ऋरमिति रः । रलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ । आरति । परत्वात्पूर्वमिय् ततो रत्वम् अरियूरति , मध्यमपुरुषे तु अरियर्षि । ईट्पक्षे । अररीषि, अरियरीषि । रिग्रीकोस्तुल्यं रूपम् । अर्ऋथः। अरियृथः । उत्तमपुरुषे तु अरर्मि, अरियर्मि । ईट्पक्षे अररीमि, अरियरीमि । अर्ऋवः । अरियृवः । लिङि अर्ऋयात्, अरियृयात् । लोटि अरर्तु, अरियर्तु । ईट्पक्षे अररीतु, अरीयरीतु, अर्ऋतात्, अरियृतात् । अर्ऋताम्, अरियृताम्, । आरतु, अरियूरतु । अर्ऋहि, अरियृहि । उत्तमेतु अरराणि, अरियराणि । अरराव, अरियराव । लङि दिस्योर्हसादिति दिप्सिपोर्लोपः आरः, आरियः । पक्षे आररीः, आरीयरीः । उत्तमे तु आररम् आरियरम् । आर्ऋव, आरियृव । लिटि अररांचकार, अरियरांचकार । आशिषिलिङि शितपानिर्दिष्टत्वाद्गुणोर्तिसंयोगाद्योरिति गुणेन । यादादौ ये इति रिङ् रिलोपो दीर्घश्चेति रलोपपूर्वदीर्घौ । आरियात्, आरिरियात्, अरीरियात् । लुटिअररिता, अरियरिता । लृटि अररिष्यति, अरियरिष्यति । लृङि आररिष्यत्, आरियरिष्यत् । णित्त्वात् धातोर्नामिन इति वृद्धिः । आरारीत्, आरियारीत् । गृहू ग्रहणे । द्वेःस्वरेपीति गुणः निषेधे ऋदंतानामृदुपधानांचेति रुग्रिग्रीकः । ईट्पक्षे जगृहीति ईडभावे होढ इति ढत्वं तथोर्ध इति धत्वं ष्टुत्वं ढिढोलोप इति ढलोप इति ढलोपे जर्गाढि । जर्गृढ इत्यत्र ढिढ इतिढलोपे पूर्वस्य दीर्घेन । अनृत इत्युक्तत्वात् । जर्घर्क्षि । उत्तमे । जर्गृहीमि, । जर्गृह्मि । जर्गृह्यात् । जर्गृहीतु, जर्गढु, जर्गृढात् । जर्गृढां । जर्गृहतु । झसाद्धिर्हिरितिधिः । जर्गृढि । उत्तमे तु द्वेः स्वरेपीति गुणो न । जर्गृहाणि । लङि । अजर्गृहीत् । ईडभावे आदिजबानामिति घः । अजर्घट् । अजर्गृढाम् । अजर्गृहुः । अजर्गृहीः, अजर्घट् । अजर्गृढम् । अजर्गृढ । द्वेः स्वरेपीति न गुणः । अजर्गृहम् । अजर्गृह्व । अजर्गृह्म । जर्गृहांचकार । जर्गृह्यात् । लुटि अनुबंधनिर्दिष्टत्वाद् ऊदितो वेतीड्विकल्पो न । जर्गर्हिता । जर्गर्हिष्यति अजर्गर्हिष्यत् । अजर्गर्हीत् । अजर्गर्हिष्टाम् । ग्रह उपादाने । यङो लुका लुप्तत्वात्तन्निमित्तग्रहां क्ङितिचेति संप्रसारणमिह न भवति । आत इति पूर्वस्यात्वं । जाग्रहीति। ईडभावे होढ इति ढत्वं । तथोर्द्ध इति धत्वं ष्टुत्वं च । ढिढोलोपोदीर्घश्चेति ढलोपपूर्वदीर्घौ । जाग्राढि । तसादौ प्रत्यये ङित्त्वात् ग्रहांक्ङितिचेति संप्रसारणम् । तस्य संप्रसारणस्याऽसिद्धंबहिरंगमंतरंगे इत्यसिद्धत्वात् रुग्रिग्रीगागमा न भवंति । जागृढः । सिपि जाग्रहीषि । ईडभावे होढ इति ढत्वं । षढोः कः से इति कत्वं । आदिजबानामिति घः जाघ्रक्षि । जाग्रह्यात् । जागृहीतु, जाग्राढु, जागृढात् । अजाग्रहीत्, अजाग्रट् । जाग्रहांचकार । जागृह्यात् । लुटि ईटोग्रहामितिसूत्रे एकस्वरस्य ग्रहेरित्युक्तत्वात् यङ्लुकि दीर्घेन । माधवस्तु दीर्घमाह तद्भाष्यविरुद्धम् । जाग्रहिता । जाग्रहिष्यति । अजाग्रहिष्यत् । अजाग्रहीत् ह्यंतेति न वृद्धिः। गृधु अभिकांक्षायाम् । द्वेः स्वरेपीति गुणनिषेधः । ऋदंतानामृदुपधानांचेति रुग्रिग्रीगागमाः। जर्गृधीति । ईडभावेतथोर्ध इतिधः । झभेजबा इति दः । जर्घर्द्धि । जर्गृध्यात् । जर्गृधीतु । जर्गर्द्धु, जर्गृद्धात् । अजर्गृधीत् । ईडभावे उपधायालघोरिति गुणः । दिस्योरिति दिप्सिपोर्लोपः । आदिजबानामिति घः । अजर्घत् । अजर्गृद्धाम् । अजर्गृधुः । सिपि दःस इति सः ।

दोषामिति सस्य रः । रिलोपोदीर्घश्चेति रलोपपूर्वदीर्घौ । अजर्घाः, अजर्घत् । जर्गर्द्धांचकार । जर्गृध्यात् । जर्गर्धिता । जर्गर्धिष्यति । अजर्गद्धिष्यत् । अजर्गर्धीत् । प्रच्छ ज्ञीप्सायाम् । आत इति पूर्वस्यात्वं । पाप्रच्छीति । ईडभावे छशषेति षत्वं ष्टुत्वं प्राप्राष्टि । तसादौ प्रत्यये ग्रहांकिङतिचेतिसंप्रसारणं न श्तिपानिर्द्दिष्टत्वात् ॥

तत्त्वदीपिका—त्स्मिड्त्यत्रापि द्वितकारको निर्देशः । एको दकारजः । यङ्लुगन्तात्पमिति । अत्र दीक्षिताः प्रत्ययलक्षणेन ङित्वमाश्रित्यात्मनेपदं त्वस्य न ङित्वस्य प्रत्ययाप्रत्ययसाधारणत्वेन प्रत्ययलक्षणाप्रवृत्तेः यत्र हि प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव तत् इत्याहुः । तन्नेति पण्डिताः । तथाहि तेतिक्ते इति किं निपात्यत इति अेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते नैतदस्ति प्रयोजनं । सिद्धमात्रात्मनेपदमनुदात्तङितआत्मनेपदमितिस्यात् । नियमार्थं तर्हि भविष्यति । अत्रैवयङ्लुगन्तस्यात्मनेपदं भवति । नान्यत्रेति । तथा च वामनोपि अेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते । यङो ङित्वात्प्रत्ययलक्षणेन यङ्लुगन्तस्यात्मनेपदमन्यत्र न भवतीत्येतदेव ज्ञापकमिति । भाष्यकारादिमतोद्भावनेन तदाकरविरुद्धमित्युक्तवंतः । अदादित्वादिति प्राञ्चस्तु । ह्वादित्वंमत्वा द्वित्वमाहुस्तदपाणिनीयमित्युपेक्षितं । द्वे स्वरेऽपि । अपिशब्दाद्धात्वंतलोपे गुणवृद्धी न तेन बेभिदिता मरीमृजितेत्यादिसिद्धं । अपास्या इतिद इति रत्वे रिलोप इति दीर्घः । ऋदन्तानामित्यादि रुगादीनां त्रयाणामपि क्वित्वात्रयोप्यागमाः पर्यायेण भवन्ति । रुक् उकारउच्चारणार्थः । चर्करीति ॥ ईकारे रूपत्रयं तदभावे च त्रयमिति षट् । तिपि जगन्त इतिलोपस्त्वनुदात्ततनामिति मलोपः जगन्मीति । म्वोश्चेति मस्य नः जंघनीति पूर्ववत् हन्तेरिति घत्वम् । आशिषि वध्यादिति द्विरुक्तस्य वधादेशाद्वित्वन्न । एकस्यां व्यक्तावेकलक्षणं सकृदेव प्रवर्तत इत्युक्तेः । चंचूर्तीति । चरगतिभक्षणयोः । चरफलोरतउदिति उत्वे र्व्वोर्विहसे इति दीर्घः । चंखात इति । जनसनेत्यात्वं । योयोति । अद्विरुक्तस्येत्यनुवृत्तेरोरावित्यौत्वंन । दांतइति । दादेरित्याकारलोपः । देहीति । दांहावित्येत्वलोपौ । चाकर्तीति । ऋदन्तानामित्यत्र तपरकरणान्न रुगादयः । अरतीति । गुणोद्वितीयस्य । आरियार्ति । पक्षद्वयेपि इयादेशे तु समं । जाग्रहीति । ईकाराभावे ढत्वधत्वष्टुत्वढलोपदीर्घत्वानि । कैश्चिदत्र संप्रसारणे जर्गृहीतीत्यादिरूपमुक्तं तदनाकरमित्युपेक्षितं । बहिरङ्गत्वे इति । प्रत्ययाश्रितं बहिरङ्गमित्युक्तेः । अजर्घा इति । दइति रत्वे रिलोप इति दीर्घः । तसादौ न संप्रसारणमेतद्बीजं तु श्तिपानिर्देशः । उक्तं च । "श्तिपा शपानुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकी" ति ।

**मू०–क्ङितिझसेक्कौञमेचच्छस्यशोवस्यऊः ॥** पाप्रष्टः । पाप्रच्छति । पाप्रश्मि । पाप्रच्छ्वः । पाप्रश्मः । हय् गतौ । जाहयीति । यवयोर्वसेहकारे च लोपः । जाहति । जाहतः । जाहयति । जाहयीषि, जाहसि । जाहामि । जाहावः । जाहामः । अजाहयीत्, अजाहत् । जाहय्यात् । हर्य गतिकान्त्योः । जाहर्यीति, जाहर्ति । जाहर्तः । जाहर्यति । जाहर्हि । अजाहर्यीत्, अजाहः । अजाहर्ताम् । अजाहर्युः ।

सुबोधिनी–क्ङितिझसेक्कौञमेचच्छस्यशोवस्यऊः । धातोः छस्य शकारः स्यात् वकारस्य ऊश्च किति ङिति झसे परे क्विपि ञमे च परे । भाष्ये उक्तं च्छ्वोरित्यनेन ऊभाविनां यकारवकारान्तानां धातूनां लुग् यङोन भवतीति । मव्य बंधने यांतः । तेवृ देवृ देवने इत्यादि वांतश्च ऊभावी ज्वरत्वरेति । ऊभाविनोः स्रिविमव्योस्तु । यङ्लुग् अस्त्येवेति छस्य शः । छशषेति षः पाप्रष्टः । पाप्रच्छति । पाप्रच्छीषि । ईडभावे छशषेतिषः । षढोःकःसे इति कः । पाप्राक्षि । उत्तमे तु पाप्रश्मि । पाप्रच्छ्यात् । पाप्रच्छीतु, पाप्रष्टु, पाप्रष्टात् । हौ झसाद्धिर्हेरिति धिः । क्ङिति झसे इति छस्य षः । छशषेति षः । झभे इति षस्य डः ष्टुत्वं च पाप्र-

ङ्धि । अपाप्रच्छीत् । ईडभावे दिस्योरिति दिप्सिपोर्लोपः । छशषेति षः । षोढ इति ढः । अपाप्रट् । अपाप्रष्टाम् । अपाप्रच्छुः । अपाप्रच्छीः । अपाप्रट् । अपाप्रष्टम् । अपाप्रष्ट । अपाप्रच्छम् । अपाप्रच्छ्व । अपाप्रच्छ्म । पाप्रच्छांचकार । पाप्रच्छ्यात् । पाप्राच्छिता । पाप्राच्छिष्यति । अपाप्राच्छिष्यत् । अपाप्रच्छीत् । हय गतौ । जाहयीति । ईडभावे यवयोर्वसे इति यलोपः । जाहति । उत्तमे तु । जाहयीमि । यवयोरिति यलोपे म्वोरित्यात्वं । जाहामि । जाहय्यात् । जाहयीतु, जाहतु । जाहतात् । जाहतां । जाहयतु । जाहहि । जाहतात् । उत्तमेतु । जाहयानि । लङि । अजाहयीत् । अजाहत । जाहयांचकार । जाहय्यात् । जाहयिता जाहयिष्यति । अजाहयिष्यत् । ह्यन्तेति न वृद्धिः । अजाहयीत् । हर्य गतिकान्त्योः आत इत्यात्वं । जाहर्यीति । ईडभावे यवयोर्वसे इति यलोपः । जाहर्त्ति । जाहर्य्यात् । जाहर्यीतु, जाहर्त्तु, जाहर्तात् । अजाहर्य्यीत् । अजाहः । जाहर्य्यांचकार । जाहर्य्यात् । जाहर्य्यिता । जाहर्य्यिष्यति । अजाहर्य्यिष्यत् । अजाहर्यीत् ।

तत्त्वदीपिका–जहातीति । यवयोरिति यलोपः ।

**मू०–ज्वरत्वरस्रिव्यविमवामुपधावकारयोरूः ॥** क्वौ झसादौऽमादौ हकारे च प्रत्यये परे । जाज्वरीति, जाजूर्ति । जाजूर्तः । जाज्वरति । जाजूर्वः । जाजूर्मः । अजाज्वरीत् । अजाजूः । तात्वरीति, तातूर्ति । अतात्वरीत्, अतातूः । सेस्रिवीति । सेस्रोति । सेस्रीव्यात् । असेस्रिवीत् । असेस्रोत् । मव बन्धने । मामवीति, मामोति । मामूतः । मामवति । मामावः । मामूमः । मामूहि । मामवानि । अमामवीत्, अमामोत् । सिपि अमामवीः, अमामोः । अमामवम् । अमामाव । अमामूम । तुर्वी थुर्वी दुर्वी धुर्वी हिंसायाम् । तोतुर्वीति ।

सुबोधिनी–ज्वरत्वरास्रिव्यविमवामुपधावकारयोरूः । क्वौ झसादौऽमादौ हकारे च प्रत्यये । ज्वर रोगे । ञित्वरा संभ्रमे । स्रिवु गतिशोषणयोः । अव पालने । मव बंधने । ज्वरादेरुदाहरणं क्विपि जूः । जूरौ । जूरः । झसादौ तु जूर्तिः । जूर्णः । जूर्णवान् । तूः । तूरौ । तूरः । तूर्तिः तूर्णवान् । स्रूः । स्रुवौ । स्रुवः । स्रूतिः । ऊः । उवौ । उवः । ऊतिः । मूः । मुवौ । मुवः । मूतिः । मूतः । ज्वर आतइति पूर्वस्यात्वं । जाज्वरीति । ईडभावेउपधावकारयोरूः । जाजूर्ति । जाजूर्त्तः । जाज्वरति । जाज्वर्यात्, जाज्वरीतु, जाजूर्तु, जाजूर्तात् । अजाज्वरीत्, अजाजूः । जाज्वरांचकार । जाज्वर्य्यात् । जाज्वरिता । जाज्वरिष्यति । अजाज्वरिष्यत् । अतोहसादेरिति वा वृद्धिः । अजाज्वारीत् । अजाज्वरीत् । ञित्वरा संभ्रमे । तात्वरीति, तातूर्ति । तात्वर्य्यात् । तात्वरीतु, तातूर्तु, तातूर्त्तात् । अतात्वरीत् । अतातूः । तात्वरांचकार । तात्वर्य्यात् । तात्वरिष्यति । अतात्वरिष्यत् । अतात्वरीत्, अतात्वारीत् । स्रिवु । सेस्रिवीति, सेस्रोति । सेस्रीव्यात् । सेस्रिवीतु, सेस्रूतात् । असेस्रिवीत् असेस्रोत् । सिपि । असेस्रोः । सेस्रेवांचकार । सेस्रीव्यात् । सेस्रेविता । सेस्रेविष्यति । असेस्रेविष्यत् । असेस्रेवीत् । मव मामवीति, ईडभावे ऊत्वे कृते गुणः । मामोति । उत्तमेतु मामवीमि, मामोमि । यवयोर्वसे इति वलोपः । म्वोरित्यात्वं । मामावः । मामूमः । मामव्यात् । मामवीतु,

मामोतु । मामूतात् । हौ मामुहि । अमामवीत् । अमोमोत् । उत्तमेतु अमामवम् । अमामाव । अमामूम । लुङि अमामवीत् । तुर्वी हिंसायाम् । य्वोर्विहसे इति दीर्घः । यङीति पूर्वस्य गुणः तोतूर्वीति ईडभावे ॥

तत्त्वदीपिका—उपधावकारयोरिति । उपधा वकारश्च उपधावकारौ तयोः द्वयोः स्थाने ऊरित्यर्थः । मामाव इति अत्र झसादित्वाभावेन ऊत्वाभावः । यवयोरिति वलोपे दीर्घः ।

**सू०—रेफाच्छ्वोर्लोपः ॥** क्वौ झसादौ अमादौ हे च प्रत्यये । तोतोर्ति । तोतूर्तः । तोतूर्वति । तोतूर्वीषि, तोतोर्षि । तोतूर्वः । तोतूर्मः । लिपि अतोतूर्वीः, अतोतोः । तोथोर्ति । तोथूर्तः । दोदोर्ति । दोधोर्ति । मुर्च्छा मोहसमुच्छ्राययोः । मोमूर्च्छीति, मोमोर्ति । मोमूर्तः । मोमूर्च्छति । मोमूर्मः । अमोमूर्च्छीत् । इतियङ्लुगन्तप्रक्रिया ।

सुबोधिनी—रेफाच्छ्वोर्लोपः । क्वौ झसादौ अमादौ हकारे च प्रत्यये रकारात्परयोर्द्वतो छकारवकारयोर्लोपः स्यात् क्विपि परे झसे अमे हे च क्वावुदाहरणं । तुर्वी तूः तूरौ तूरः धुर्वी धूः । धूरौ । धूरः । मुर्छा मूः । मूरौ । मुरः । झसादौ तु रेफाच्छ्वोरिति वलोपः । उपधायालघोरितिगुणः तोतोर्ति । यद्यप्यत्र यवयोर्वसे इत्यनेन वलोपः सिध्यति तथापि तोतूर्त इत्यादौ वलोपार्थं रेफाच्छ्वोर्लोप इत्युपन्यस्तमन्यथा तत्र यवयोर्वसे इति लोपं बाधित्वा वस्य क्ङिति झसे इति ऊः स्यात् । तोतूर्व्यात् । तोतुर्वीतु, तोतोर्तु, तोतुर्तात् । अतोतूर्वीत् । अतोतोः । लुङि अतोतूर्वीत् । थुर्वी धुर्वी हिंसायाम् । तोथूर्वीति तोथोर्ति । तोथुर्व्यात् । तोथुर्वीतु, तोथोर्तु, तोथूर्तात् । अतोथुर्वीत् । अतोथोः । लुङि अतोथूर्वीत् । धुर्वी दोधुर्वीति, दोधोर्ति । दोधुर्व्यात् । दोधुर्वीतु, दोधोर्तु, दोधूर्तात् । अदोधूर्वीत् अदोधोः । लुङि अदोधूर्वीत् । मुर्च्छामोहसमुच्छ्राययोः । मोमुर्छीति, ईडभावे रेफाच्छ्वोरिति छलोपः उपधायालघोरिति गुणः मोमोर्ति । मोमूर्छ्यात् । मोमूर्छीतु, मोमोर्तु, मोमूर्त्तात् । अमोमूर्छीत् । अमोमोः । लुङि अमोमूर्छीत् । अजगत्यादौ । अजेरचतुर्षु वीति यङि विवक्षिते वीआदेशः वेवीयते अस्य यङ्लुग्नास्ति लुकापहारे विषयत्वासंभवेन वीभावस्याप्रवृत्तेः । इतियङ्लुगन्तप्रक्रिया ॥

कृतायामिहटीकायांलोकेशंकरशर्मणा । बाधनं दुष्टबुद्धीनामगाद्यङ्लुक्प्रसाधनम् ॥

॥ इतियङ्लुक्प्रक्रिया ॥

**सू०— नाम्नोयईचाऽस्य ॥** नाम्नइच्छायामर्थे य प्रत्ययो भवत्यवर्णस्यच ईकारः । आत्मनः पुत्रमिच्छति पुत्रीयति । क्वचित्स्वरवद्यकारः । गामिच्छति गव्यति । गव्याञ्चकार । नाव्यति । नाव्याञ्चकार । स्वामिच्छति । त्वद्यति । **इसाद्यस्यलोपोवाऽनपिनामधातौ ॥** त्वदाञ्चकार । त्वद्यांचकार । मामिच्छति मद्यति । युष्मद्यति । अस्मद्यति ।

सुबोधिनी—नाम्नोयईचास्य । आद्रुवीत्यतः कर्मणीति इच्छायामात्मनइत्यतः इच्छायामिति आत्मन इति चानुवृत्तं । कर्मणि वर्तमानान्नाम्नो यप्रत्ययः स्यात् । आत्मशब्दस्तु पर-

व्यावृत्त्यर्थः स्वशब्दपर्यायो गृह्यते । इच्छायाश्च क्रियात्वेन स्वाश्रयः कर्त्ताऽऽक्षिप्तः । स चेदि-ष्यमाणं वस्तु स्वसंबंधित्वेनाऽपेक्षते तदा यप्रत्ययः । आत्मनः स्वसंबंधित्वं साक्षाद्ग्राह्यं तेन यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न यः महांतं पुत्रमिच्छतीत्यत्रापि न यः । सविशेषणानांवृत्तिर्न वृत्तस्य वा विशेषणयोगोनेति वचनात् य। इति सप्तम्या विपरिणम्यते । अवर्णांतस्य नाम्न ईत्वं च यप्रत्ययेपरे । समासप्रत्यययोरिति विभक्तेर्लुक् । सधातुरिति धातु त्वात्तिबादिः । पुत्रीयति । पुत्रीयेत् । पुत्रीयतु । अपुत्रीयत् । कासादिप्रत्ययादित्याम् यतइत्यल्लोपः । पुत्रीयांचकार । यत इत्यल्लोपः । पुत्रीयात् । पुत्रीयिता । पुत्रीयिष्यति । अपुत्रीयिष्यत् । अपुत्रीयीत् । गामिच्छति गव्यतीत्यत्र य्वोर्लोपश्च वा पदांते इति तु न भवत्यपदांतत्वात् । अनापिसंनिपातपरिभाषया यप्रत्यययकारस्यानपि च हसादिति लोपो न यकारे परे वांतादेश-विधानात् । वकारे यस्य लोपस्य निमित्तं न भवतीति भावः । गव्यांचकार । गव्यिता । त्वामिच्छति त्वन्मदेकत्वे इति त्वन्मदादेशौ । त्वद्यति यत इत्यल्लोपः । अनपि च हसादिति यलोपः । त्वदांचकार । मामिच्छति मद्यति । युवांयुष्मान्वेच्छति युवावाविति सूत्रे विभ-क्तावित्युक्तं ततो विभक्तिपरत्वाभावान्न युवावौ एकार्थत्वाभावात् त्वन्मदावपि न । युष्मद्यति एवमस्मद्यति ॥

**तत्त्वदीपिका—नाम्नोय** इति । अत्राकुर्वीत्यतः कर्मणीत्यनुवर्त्य कर्मणि वर्तमानान्नाम्न इति बोध्यं तेन पुत्रेणेच्छतीत्यादौ न । आत्मन इत्यनुवर्त्तते । स च न चेतनद्रव्यवाची किन्तु परव्यावृत्त्यर्थस्वशब्दपर्यायः तेन घटादेरचेतनत्वेऽपि घटीयतीत्यादि भवत्येव । इच्छया कर्ताक्षिप्यते चेदिष्यमाणं वस्तु स्वसंबंधित्वेनापेक्षते । तेन परस्य पुत्रमिच्छतीत्यत्र न । तच्च साक्षादेव । तेन यजमानस्य पुत्रमिच्छति पुरोधा इत्यत्र न । स्वसंबंधित्वं चेष्यमाणेनैव रूपेण विवक्षितं । तेन स्वस्य पुत्रं परस्य दासमिच्छतीत्यत्र न । अत्र यदिष्यमाणं दासत्वं तच्च न स्वसंबंधि । नाम्न इति तूत्तरार्थं । धातुवारणाय तदिति चेत् धातोः सविधानेन परिशेषान्नाम्नोलाभात् । अथ सिवन्तादपि स्यात् इष्टत्वात् । न च वाच्यतीत्यादौ जबादिप्रसंगः स्यादिति वाच्यम् । अप्यघोरादित्यत्र जबाकर-णेन ये पदकार्याभावस्य ज्ञापितत्वात् । राजीयतीत्यादौ तज्ज्ञापकसिद्धस्यासार्वत्रिकान्नलोपः न च महान्तं पुत्रमिच्छतीत्यत्रानेकस्मान्नाम्नोयबाधनार्थं तदिति चेन्न । पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति पुत्रस्यैक-देशत्वेनान्वयाभावात् । सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति वचनाच्च । एवं च कर्मत्वद्योतक-विभक्त्यभावेन कथं तद्बाध इति दूषणपरिहाराय यत्रानेककारकसंभवस्तत्र कारकस्य विशेषबोधार्थं विभक्त्य-पेक्षणमिति सिद्धान्तानुसारेण क्लेशोऽपि न कार्यः ॥ आत्मनः पुत्रमिच्छतीति । पुत्रो मे स्यादितीच्छतीत्यर्थः । गव्यतीति । अवर्णाभावान्नेत्वं । त्वद्यतीति । त्वामिच्छति । युष्मद्यति । युवां युष्मान्वेच्छतीति वाक्ये त्वदादेशो न एकार्थत्वाभावात् युवावौ द्विवचन इति स्याद्यभावान्न ।

## मू०—काम्यश्च ॥ पुत्रकाम्याञ्चकार ।

सुबोधिनी—काम्यश्च । नाम्न इच्छायामर्थे काम्यप्रत्ययः स्यात् । आत्मनः पुत्रमिच्छति पुत्रकाम्यति । यत इत्यलोपः । पुत्रकाम्यांचकार । पुत्रकाम्यिता । इहानपि च हसादिति यलोपो न । अर्थवद्ग्रहणेनानर्थकस्य ग्रहणमिति परिभाषया ॥

## मू०—धनस्यनेकारोगार्द्ध्ये ॥ धनायति । अन्यत्र धनीयति ।

सुबोधिनी—धनस्यनेकारोगार्द्ध्ये । गार्द्धोऽभिलाषुकस्तस्य भावे गार्द्ध्ये यण् सत्यपि धने पुनर्धनमिच्छति धनायति । ये इति दीर्घः । यश्च दरिद्रः सन् धनमिच्छति तत्र धनीयति ॥

तत्त्वदी०—गार्द्धेति । गर्द्धो लोभातिशयः । धनायतीति सत्येव धने भूयो धनमिच्छतीत्यर्थः । धनीयतीति दरिद्रः सन् धनमिच्छतीत्यर्थः ।

**मू०—उदकस्योदन्पिपासायाम् ॥ उदन्यति । अन्यत्रोदकीयति । गीर्य्यति । गिरांचकार । गीर्य्याञ्चकार । पूर्य्यति । दिवमिच्छति । दिव्यति । अमुमिच्छति । अदस्यति । ऋतोरिः । कर्त्रीयति ।**

सुबोधिनी—उदकस्योदन्पिपासायाम् । यश्च सद्य एव पातुमुदकमिच्छति तत्र तु उदन्यति । यश्च कालांतरोपयोगार्थं पातुमुदकमिच्छति तत्र उदकीयति । गिरमिच्छति गीर्य्यति । य्वोर्विहस इति दीर्घः । पुरमिच्छति पूर्य्यति । य्वोर्विहसे इति सूत्रे धातोरिकारोकारयोरुक्तत्वान्नेह । दिवमिच्छति दीव्यति । दिवुधातोः क्विपि क्ङिति झसे क्वाविति वस्योत्वे द्युरिति भवति । यप्रत्यये द्युयतीति । कर्तारमिच्छतिऋतोरिरिति रिः । य इति दीर्घः । कर्त्रीयति ॥

तत्त्व०—न्यत्रापिपासायामिति । पातुमिच्छा पिपासा सा तथा तदभावे । उदन्यतीति स्नातुमिच्छतीत्यर्थः । दिव्यतीति । धातुत्वाभावान्न दीर्घः ।

**मू०— हसात्तद्धितयस्यलोपोयेच्वौच॥गार्गीयति । वाच्यति । कवीयति । समिध्यति । समिध्याञ्चकार । समिधिता ।**

सुबोधिनी—हसात्तद्धितयस्यलोपोयेच्वौच । हसादुत्तरस्य प्रत्ययकारस्यलोपो भवति यप्रत्यये च्विप्रत्यये च परे । ण्यायनणिति ण्यः । च्वौ गार्गीभवति । गार्ग्यमिच्छति गार्गीयति। वाचमिच्छति अपुयोरादित्यत्र चपाअबजबा इत्यकरणेन क्वचित्प्रत्ययपदकार्यं नेति ज्ञापितं तेन पदत्वाभावात् चोःकुरिति कुत्वं न । वाच्यति । आत्मनः कविमिच्छति ये इति दीर्घः । कवीयति । समिधमिच्छति समिध्यति । हसाद्यस्यलोपोवानपि । हसांतान्नाम्नो यस्य लोपो वा अनपि परे । आदेः परस्येति यलोपः । यतइत्यलोपः तस्यलोपः । तस्य स्थानिवत्त्वादुपधायालघोरिति गुणो न । समिधिता समिध्यिता ॥

**मू०—मान्ताव्ययाभ्यांयोन ॥ किमिच्छति । इदमिच्छति । स्वरिच्छति । उच्चैरिच्छति।**

सुबोधिनी—मांताव्ययाभ्यांयोन । मांतप्रकृतिकान्नाम्नोऽव्ययाच्च यो न । किमिच्छति। स्वरिच्छति ।

तत्त्वदी०—मांताव्ययाभ्यामिति । मान्तमिह नामैव नतु सिबन्तम् पुत्रमिच्छतीत्यत्रापि मान्तत्वान्न स्यात्।

**मू०—अश्ववृषयोर्येसुक्मैथुनेच्छायाम् ॥ अश्वस्यति वडवा । वृषस्यति गौः ।**

सुबोधिनी—अश्ववृषयोर्येसुक्मैथुनेच्छायाम् । अश्वस्यति । मैथुनार्थमश्वमिच्छतीत्यर्थः । वृषमिच्छति मैथुनार्थं वृषस्यति ॥

तत्त्वदीपिका—अश्ववृषयोरित्यादि । अश्ववृषभेच्छा यदा मैथुनार्था नत्वारोहणाद्यर्था तदैव सुगित्यर्थः । अन्ये तु इति रामो वृषस्यन्तीमित्यादिप्रयोगदर्शनातपरित्यक्तप्रकृत्यर्था मैथुनेच्छैकार्थं इत्याहुः ।

**मू०-क्षीरलवणयोर्लालसायम् ॥** सुक् । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः ।

सुबोधिनी-क्षीरलवणयोर्लालसायम् । उत्कटेच्छायां सुक् ये । लालसायां क्षीरमिच्छति क्षीरस्यति । लवणस्यति ॥

तत्वदीपिका-लालसायामिति । तृष्णातिरेको लालसा। क्षीरलवणविषय इच्छातिरेको यदाभ्यवहारार्थो नतु होमाद्यर्थस्तदेत्यर्थः ।

**मू०-नाम्नोयेलालसायांसुगसुकौ॥** दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति । यशस्काम्यति ।

सुबोधिनी-नाम्नोयेलालसायां सुगसुकावागमौ भवतः यप्रत्यये परे । तृष्णातिरेको लालसा तस्यामर्थे । दधिस्यतीत्यत्र षःस इति विपरीतनिर्देशान्न षत्वं ॥

तत्वदीपिका-दधिस्यतीति । षःस इति विपरीतनिर्देशान्न षत्वं । दधिमधुशब्दावेवागमिनावित्येके नाम्नो विधानादन्येपीत्यन्ये ।

**मू०-मान्ताव्ययाभ्याङ्काम्यः ॥** किंकाम्यति । स्वः काम्यति । उच्चैस्काम्यति ।

सुबोधिनी-मांताव्ययाभ्यांकाम्यः । मांतप्रकृतिकान्नाम्नोऽव्ययाच्च काम्यः स्यात् इच्छायम्। किमिच्छति किंकाम्यति । स्वः स्वर्गमिच्छति स्वःकाम्यति ॥

तत्वदीपिका-स्वः काम्यतीति । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्राधान्यात्कर्मत्वेन योगः ।

**मू०-करणेचनाम्नः ॥** करणेर्थे यः । तपस्यति । तपश्चरतीत्यर्थः । नमसः पूजायाम् । नमस्यति । देवान् पूजयतीत्यर्थः । वरिवसः परिचर्यायम् । वरिवस्यति गुरुं । शुश्रूषयतीत्यर्थः ।

सुबोधिनी-करणेचनाम्नः । करणे च य इत्यनुवृत्तं । करोत्यर्थे इत्यर्थः । नमस्करोति नमस्यति देवान् पूजयतीत्यर्थः । वरिवस्यति गुरून् शुश्रूषयति इत्यर्थः ॥

तत्त्वदीपिका-करणेति । करणं कृतिः । न तु पारिभाषिकं । नमस्यति देवान् नमः करोति । जहत्स्वार्थायां वृत्तौ नमःशब्दस्यानर्थकत्वात् । अजहत्स्वार्थायान्तु प्रत्ययार्थेउपसर्जनत्वान्न तद्योगे चतुर्थी । वरिवस्यतीति वरिवः शुश्रूषां करोतीति विग्रहः ।

**मू०-शब्दादिभ्योयङ् ॥** शब्दायते । वैरायतेय कलहायते । आम्रायते । मेघायते ।

सुबोधिनी-शब्दादिभ्योयङ् । एभ्यः कर्मभ्यः करोत्यर्थे यङ् । शब्दंकरोति, शब्दायते । पक्षे ञिर्ङित्करणे इति ञिप्रत्ययोपि भवति । शब्दयतीति न्यासकारः ॥

**मू०-कष्टायक्रमणे ॥** कष्टायते ।

सुबोधिनी-कष्टायक्रमणे । चतुर्थ्यंतात्कष्टशब्दादुत्साहेऽर्थे यङ् । कष्टाय क्रमते इति कष्टायते । पापं कर्तुमुत्सहते इत्यर्थः ॥

तत्त्वदी०—गार्द्धेति । गर्द्धो लोभातिशयः । धनायतीति सत्येव धने भूयो धनमिच्छतीत्यर्थः । धनीयतीति दरिद्रः सन् धनमिच्छतीत्यर्थः ।

**मू०—उदकस्योदन्पिपासायाम् ॥** उदन्यति । अन्यत्रोदकीयति । गीर्य्यति । गिरांचकार । गीर्य्याञ्चकार । पूर्य्यति । दिवमिच्छति । दिव्यति । अमुमिच्छति । अदस्यति । ऋतोरिः । कर्त्रीयति ।

सुबोधिनी—उदकस्योदन्पिपासायाम् । यश्च सद्य एव पातुमुदकमिच्छति तत्र तु उदन्यति । यश्च कालांतरोपयोगार्थं पातुमुदकमिच्छति तत्र उदकीयति । गिरमिच्छति गीर्य्यति । य्वोर्विहस इति दीर्घः । पुरमिच्छति पूर्य्यति । य्वोर्विहसे इति सूत्रे धातोरिकारोकारयोरुक्तत्वान्नेह । दिवमिच्छति दीव्यति । दिवुधातोः क्विपि क्ङिति झसे क्वाविति वस्योत्वे द्युरिति भवति । यप्रत्यये द्युयतीति । कर्तारमिच्छतिऋतोरिरिति रिः । य इति दीर्घः । कर्त्रीयति ॥

तत्त्व०—न्यत्रापिपासायामिति । पातुमिच्छा पिपासा सा तथा तदभावे । उदन्यतीति स्नातुमिच्छतीत्यर्थः । दिव्यतीति । धातुत्वाभावान्न दीर्घः ।

**मू०— हसात्तद्धितयस्यलोपोयेच्वौच॥**गार्गीयति । वाच्यति । कवीयति । समिध्यति । समिध्याञ्चकार । समिधिता ।

सुबोधिनी—हसात्तद्धितयस्यलोपोयेच्वौच । हसादुत्तरस्य प्रत्ययकारस्यलोपो भवति यप्रत्यये च्विप्रत्यये च परे । ण्यायनणिति ण्यः । च्वौ गार्गीभवति । गार्ग्यमिच्छति गार्गीयति। वाचमिच्छति अप्ययोरादित्यत्र चपाअबेजबा इत्यकरणेन क्वचित्प्रत्ययपदकार्य्यं नेति ज्ञापितं तेन पदत्वाभावात् चोःकुरिति कुत्वं न । वाच्यति । आत्मनः कविमिच्छति ये इति दीर्घः । कवीयति । समिधमिच्छति समिध्यति । हसाद्यस्यलोपोवानपि । हसांतान्नाम्नो यस्य लोपो वा अनपि परे । आदेः परस्येति यलोपः । यतइत्यलोपः तस्यलोपः । तस्य स्थानिवत्त्वादुपधायालघोरिति गुणो न । समिधिता समिध्यिता ॥

**मू०—मान्ताव्ययाभ्यांयोन ॥** किमिच्छति । इदमिच्छति । स्वरिच्छति । उच्चैरिच्छति।

सुबोधिनी—मांताव्ययाभ्यांयोन । मांतप्रकृतिकान्नाम्नोऽव्ययाच्च यो न । किमिच्छति। स्वरिच्छति ।

तत्त्वदी०—मांताव्ययाभ्यामिति । मान्तमिह नामैव नतु सिबन्तम् पुत्रमिच्छतीत्यत्रापि मान्तत्वान्न स्यात्।

**मू०—अश्ववृषयोर्येसुक्मैथुनेच्छायाम् ॥** अश्वस्यति वडवा । वृषस्यति गौः ।

सुबोधिनी—अश्ववृषयोर्येसुक्मैथुनेच्छायाम् । अश्वस्यति । मैथुनार्थमश्वमिच्छतीत्यर्थः । वृषमिच्छति मैथुनार्थं वृषस्यति ॥

तत्त्वदीपिका—अश्ववृषयोरित्यादि । अश्ववृषभेच्छा यदा मैथुनार्था नत्वारोहणाद्यर्था तदैव सुगित्यर्थः । अन्ये तु इति रामो वृषस्यन्तीमित्यादिप्रयोगदर्शनात्परित्यक्तप्रकृत्यर्था मैथुनेच्छैकार्थे इत्याहुः ।

**मू०–क्षीरलवणयोर्लालसायम् ॥** सुक् । क्षीरस्यति बालः । लवणस्यत्युष्ट्रः ।

सुबोधिनी–क्षीरलवणयोर्लालसायम् । उत्कटेच्छायां सुक् ये । लालसायां क्षीरमिच्छति क्षीरस्यति । लवणस्यति ॥

तत्त्वदीपिका–लालसायामिति । तृष्णातिरेको लालसा । क्षीरलवणविषय इच्छातिरेको यदाभ्यवहारार्थो नतु होमाद्यर्थस्तदेत्यर्थः ।

**मू०–नाम्नोयेलालसायांसुगसुकौ॥** दधिस्यति, दध्यस्यति । मधुस्यति, मध्वस्यति । यशस्काम्यति ।

सुबोधिनी–नाम्नोयेलालसायां सुगसुकावागमौ भवतः यप्रत्यये परे । तृष्णातिरेको लालसा तस्यामर्थे । दधिस्यतीत्यत्र षःस इति विपरीतनिर्देशान्न षत्वं ॥

तत्त्वदीपिका–दधिस्यतीति । षःस इति विपरीतनिर्देशान्न षत्वं । दधिमधुशब्दावेवागमिनावित्येके नाम्नो विधानादन्येपीत्यन्ये ।

**मू०–मान्ताव्ययाभ्याङ्काम्यः ॥** किंकाम्यति । स्वः काम्यति । उच्चैस्काम्यति ।

सुबोधिनी–मांताव्ययाभ्यांकाम्यः । मांतप्रकृतिकान्नाम्नोऽव्ययाच्च काम्यः स्यात् इच्छायम् । किमिच्छति किंकाम्यति । स्वः स्वर्गमिच्छति स्वःकाम्यति ॥

तत्त्वदीपिका–स्वः काम्यतीति । अधिकरणशक्तिप्रधानस्याप्यस्य वृत्तिविषये शक्तिमत्प्राधान्यात्कर्मत्वेन योगः ।

**मू०–करणेचनाम्नः ॥** करणेर्थे यः । तपस्यति । तपश्चरतीत्यर्थः । नमसः पूजायाम् । नमस्यति । देवान् पूजयतीत्यर्थः । वरिवसः परिचर्यायम् । वरिवस्यति गुरुं । शुश्रूषयतीत्यर्थः ।

सुबोधिनी–करणेचनाम्नः । करणे च य इत्यनुवृत्तं । करोत्यर्थे इत्यर्थः । नमस्करोति नमस्यति देवान् पूजयतीत्यर्थः । वरिवस्यति गुरून् शुश्रूषयति इत्यर्थः ॥

तत्त्वदीपिका–करणेचेति । करणं कृतिः । न तु पारिभाषिकं । नमस्यति देवान् नमः करोति । जहत्स्वार्थायां वृत्तौ नमःशब्दस्यानर्थकत्वात् । अजहत्स्वार्थायान्तु प्रत्ययार्थेउपसर्जनत्वान्न तद्योगे चतुर्थी । वरिवस्यतीति वरिवः शुश्रूषां करोतीति विग्रहः ।

**मू०–शब्दादिभ्योयङ् ॥** शब्दायते । वैरायतेय कलहायते । आम्रायते । मेघायते ।

सुबोधिनी–शब्दादिभ्योयङ् । एभ्यः कर्मभ्यः करोत्यर्थे यङ् । शब्दंकरोति, शब्दायते । पक्षे ञिर्डित्करणे इति ञिप्रत्ययोपि भवति । शब्दयतीति न्यासकारः ॥

**मू०–कष्टायक्रमणे ॥** कष्टायते ।

सुबोधिनी–कष्टायक्रमणे । चतुर्थ्यंतात्कष्टशब्दादुत्साहेऽर्थे यङ् । कष्टाय क्रमते इति कष्टायते । पापं कर्तुमुत्सहते इत्यर्थः ॥

मू०–ऊष्मबाष्पधूमेभ्यउद्वमने ॥ ऊष्मायते । बाष्पायते । धूमायते ।

सुबोधिनी–ऊष्मबाष्पधूमेभ्यउद्वमने । एभ्यः कर्मभ्यो यङ् । ऊष्माणमुद्वमति । नाम्नो नोलोपशिति नस्य लोपः ये इति दीर्घः । ऊष्मायते ॥

तत्त्वदीपिका–ऊष्मायत इति । ऊष्माणमुद्वमतीत्यर्थः ।

मू०–ञिर्डित्करणे ॥ नाम्नो ञिप्रत्ययः करणेऽर्थे स च डित् । घटं करोति घटयति । घटयते । अजघटत् । पटयति । पटयते । अपपटत् । अग्वृलोपिनो नाङ्गकार्यम् । महान्तङ्करोति माहयति । अममहत् । युवानङ्करोति युवयति । अयूयवत् । कनयति । अचीकनत् ।

सुबोधिनी–ञिर्डित्करणे । तत्करोति तदाचष्टे वेत्यर्थे नाम्नो ञिः स च डित् । डिति टेरिति डित्त्वाट्टिलोपो भवति । घटमाचष्टे घटयति । लुङि अग्वृलोपित्वादजघटत् । पटुमाचष्टे पटयति । लुङि परत्वाद्वृद्धौ सत्यां टिलोपः । अपीपटत् । भाष्ये तु वृद्धेर्लोपोबलीयानित्युक्तं तेन पूर्वं लोपस्ततोऽग्वृलोपित्वान्नाङ्गकार्य्यम् । अपपटत् । महांतमाचष्टे माहयति ॥

तत्त्व०–ञिर्डित्करणे । ड् इत् यस्य स डित् । अतिदेशोयं नतु संज्ञा तथात्वे तु डिति टेरित्यादावस्यैव ग्रहणं स्यान्नतु डइत् यस्य तस्यकृत्रिमाकृत्रिमयोः कृत्रिमस्यैवग्रहणमित्युक्तत्वात् । अथ कथं वतिं विनातिदेशबोधनम् इति चेत् शृणु । अडितं डिदित्याह डिदिदिति गम्यत इतिभाष्योक्तेः ।

मू०–आविष्ठवत्कार्य्यम् ॥ स्फिरङ्करोति स्फापयति । अपिस्फयत् । उरुम् वरयति । अवीवरत् । बहुलम् बंहयति । अबबंहत् । वृद्धम् वर्षयति । अववर्षत् । तृप्रम् त्रपयति । अतित्रपत् । दीर्घम् द्राघयति । अदद्राघत् । वृन्दारकम् वृन्दयति । अववृन्दत् । अन्तिकम् नेदयति । अनिनेदत् । स्थूलम् स्थवयति । अतुस्थवत् । दूरम् दवयति । अदूदवत् । ह्रस्वं ह्रसयति अजह्रसत् । क्षिप्रम् क्षेपयति । अचिक्षेपत् । क्षुद्रङ्करोति क्षोदयति । अचुक्षोदत् । प्रियंकरोति प्रापयति । अपिप्रयत् । गुरुं करोति । गरयति । अजीगरत् । स्थिरङ्करोति स्थापयति । अतिस्थपत् । ऊढिं करोति ऊढयति । ञेरङ् द्विश्च । स्वरादेः परः ।

सुबोधिनी–आविष्ठवत्कार्य्यम् । इष्ठप्रत्यये परतो यत्कार्यं दृष्टं संभावितं च तन्नाम्नो आवप्यतिदिश्यते । इष्ठे यथा विन्वतुमतूनां लोपो रभावो गुर्वादिगराद्यादेशटिलोपौ तद्वत् आवपि स्युः । स्रग्विणमाचष्टे स्रजयति । अग्निमंतमाचष्टे अग्नयति । दंडवंतमाचष्टे दंडयति । लुङि असस्रजत् । अत्र पूर्वस्य इत्वं तु नभाष्यासंमतत्वात् । अजिग्नत् । अददंडत् । अल्लोपस्य स्थानिवत्त्वान्नलोपो न । स्थूलं करोति । गुर्वादेरिष्ठेमेयस्सु गरादयष्टिलोपश्चेति स्थूलस्य स्थवष्टिलोपाभावश्च । स्थवयति । लुङि अतुस्थवत् आदेशावयवत्वान्न षः । दूरं करोति । दूरस्य दव् दवयति । लुङि अदूदवत् । कथं तर्हि दूरयत्त्यवनते विवस्वतीति । दूरं भवतीति दूरात्क्विबंतः । तं कुर्वतीत्यर्थः । युवानं करोति । युवन्श-

ब्दस्य युव् । युवयति । युवाल्पयोः कन्वेति कन् । कनयति । लुङि अयूयवत् । अचीकनत् । णिर्डिदिति सूत्रे बहुलग्रहणं कर्तव्यं । तस्मादिह सर्वत्र वृद्ध्यभावः । ह्रस्वं करोति । ह्रस्वस्य ह्रस् संज्ञापूर्वकविधेरनित्यत्वाद्बहुलग्रहणाद्वा न वृद्धिः । माधवेन तु विकल्पेन वृद्धिरुदाहृता । ह्रसयति । अजिह्रसत् । क्षिप्रं करोति । क्षिप्रस्य क्षेप् । क्षेपयति । अचिक्षिपत् । क्षुद्रं करोति । क्षुद्रस्य क्षोदः क्षोदयति । अचुक्षुदत् । प्रियं करोति । प्रियस्य प्रः । धातोर्नामिन इति वृद्धौ रातोऽयाविति पुक् । प्राययति । अपिप्रयत् । गुरुं करोति गुरोर्गर् गरयति । अजीगरत् । स्थिरं करोति । स्थिरस्य स्थः । स्थापयति । अतिस्थपत् । वहनमूढिस्ताऊढिं करोति ऊढयति । ऊढिमाख्यत् औडिढत् ॥

तत्त्वदीपिका—ञाविष्ठवदिति । इष्ठे यत्कार्यं दृष्टं संभावितं च तन्नाम्नोञावतिदिश्यते । इष्ठे यथा विन्मतुवतुर्यादेशास्तथाञावपीति बोध्यं । दवयतीति दूरंकरोति इति वाक्यं संज्ञापूर्वकत्वेनानित्यत्वाद्वृद्ध्यभावः टिलोपस्यासिद्धत्वाद्दूरयत्यवनते विवस्वतीत्यत्र तु वेत्यनुवर्त्य व्यवस्थयाभावः यद्वा दूरमतति दूरात्कुर्वतीत्यर्थः । प्रापयतीति । प्रियस्य प्रादेशे वृद्धियुकौ । आदेशाभावेप्रिययतीत्यपि । अप्सरायते अप्सरस इवाचरतीत्यर्थः ।

**मू०—अङिपूर्वस्यजोवा ॥ औजिढत्, औडिढत् । ऊढं करोति । ऊढयति । औजढत्, औडढत् ।**

सुबोधिनी—अङिपूर्वस्यजोवा । पूर्वरूपस्थस्य डकारस्य जो वा भवति अङ्प्रत्यये परे । औजिढत् । ऊढं करोति ऊढयति । लुङि ढिलोपे च सति ञिसहितस्य द्वित्वे पश्चात्पूर्वाकारो दुर्लभः । अतो ञिनिमित्तः स्वरादेश इत्यनेन ढस्य द्वित्वम् । ऊढमाख्यत् औडढत् । जत्वे औजढत् ॥

**मू०—कर्तुर्यङ् ॥ उपमानात्कर्तुराचारार्थे यङ् । श्येनइवाचरति श्येनायते काकः । पण्डितायते मूर्खः । एतायते । यङ्मानिनोः पुंवत् ।**

सुबोधिनी—कर्तुर्यङ् । आचारेऽपमानादित्यत उपमानादित्यनुवृत्तम् । आचारे इति च । उपमानात् कर्तुर्नाम्न आचारे यङ् । आदनुदात्तङित इत्यात् । श्येन इवाचरति यङ्मानिनोरिति पुंवत् ये इति दीर्घः । श्येनायते ॥

**मू०—यङिवासलोपः । पापायते पंपस्यते वा तक्रम् ।**

सुबोधिनी—यङि वा सलोपः । सांतस्य कर्तुः सस्य वा लोपः ॥

**मू०—अप्सरसोजस्सुमनसांनित्यम् ॥ अप्सरायते । ओजायते दुर्बलः । सुमनायते ।**

सुबोधिनी—अप्सरसोजस्सुमनसांनित्यम् । ओजः शब्दस्तद्वति वृत्तौ । ओजस्वीवाचरतीति ओजायते ॥

तत्त्वदीपिका—ओजायत इति । ओजःप्रभृतयो वृत्तिविषये तद्वति वर्त्तते ।

**मू०—नाम्नआचारेक्विवा ॥ कृष्णइवाचरति कृष्णति । अकृष्णत् । अइवाचरति अति । अतः । अन्ति । ऐत् । ऐताम् । ऐयुः । अतु, अतात्**

अताम् । अन्तु । अतात् । आत् । आन् । आः । लिटि । औ । अतुः । उः । इथ । यात् । इता । आसीत् । आसिष्टाम् । मालेवाचरति । मालाति । मालायात् । मालाहि । अमालात् । मालाञ्चकार । मालिता । अमालासीत् । कविरिवाचरति । कवयति । अकवयत् ।

सुबोधिनी—नाम्नआचारेक्विब्वा । कर्त्तुरुपमानान्नाम्नः क्विप् वा स्यात् आचारेऽर्थे । नाम त्वसिबंतं ग्राह्यं तेन विभक्त्याश्रितं कार्य्यं । पक्षे यङ् । कृष्ण इवाचरतीति सधातुरिति धातुत्वात्तिबादिः । अदे इत्यलोपः । कृष्णति । अः कृष्णस्तद्वदाचरति अदे इत्यलोपः । अति । लिटि तु कासादिप्रत्ययादिति सूत्रस्य वृत्तौ प्रत्ययग्रहणमपनीयानेकस्वरेत्युक्तेर्नाम् । द्वित्वे अदे इत्यलोपे प्राप्ते परत्वादाभ्योर्णादाविति पूर्वस्यात्वं तत आतोणब्डाविति डौ । डित्वाट्टिलोपे औ । आतोनपीत्यालोपे । अतुः । लुङि यमिरमिनमातामितीट्सकौ । आसीत् । मालेवाचरति मालाति । लिटि अनेकस्वरत्वादाम् । मालांचकार । लुङि अमालासीत् । कविरिवाचति कवयति । कवयांचकार । आशिषि ये इति दीर्घः । कवीयात् ॥

तत्वदीपिका—नाम्न आचार इति । अत्रासिबन्तं नाम गृह्यते नतु सिबन्तं । तेन पदकार्यं न । औइति । सवर्णदीर्घेण वौ अनेकस्वरत्वाभावादाम्न । अतुसादिषु दीर्घ आतोनपीत्यालोपः । इता ॥ यतइत्यलोपःगुणस्तु प्रत्ययावयवत्वान्न । नाहि निमित्तं कार्यित्वेनाश्रीयते । आसीदिति । यमिरमेति सगिटौ । मालातीति । लिङ्ग-विशिष्टपरिभाषया ।

**मू०—नामधातोर्वृद्धिर्वासौ** ॥ अकवायीत्, अकवयीत् । विरिवाचरति । वयति । विवाय । विव्यतुः । अवायीत्, अवयीत् । श्रीरिवाचरति । श्रयति । शिश्राय । शिश्रियतुः । अश्रायीत्, अश्रयीत् । पितेवाचरति । पितरति । पितराञ्चकार । यादादाविति रिङ् । पित्रियात् । भूरिवाचरति । भवति । बुभाव । अभावीत् । द्रुरिवाचरति द्रवति । अद्रावीत् ।

सुबोधिनी—नामधातोर्वृद्धिर्वासौ । सिप्रत्यये परे लुङि कैयटमतेन वृद्धिः माधवस्तु नामधातोरपि वृद्धिमिच्छति । विःपक्षी तद्वदाचरति वयति । लिटि नुधातोरिति यः । विव्यतुः । आशिषि यादादौपे इति रिङ् । पित्रियात् दादेःपे इति सिलुक् । भुवः सिलोपे इति भुवोवुगिति च वुक् आभ्वोरित्यनेनात्वं चास्य न अभिव्यक्तत्वेन धातुपाठस्थस्येव तत्र ग्रहणात् । अभावीत् । बुभाव । श्रिस्रुद्रुभ्य इति न ङो धातुपाठस्थाभावात् । अद्रावीत् ॥

तत्त्वदीपिका—बुभावेति । आभ्वोर्णादौ भुवोवुगिति नामधातुपाठस्थस्यैव ग्रहणात् ।

**मू०—अमान्तस्योपधायादीर्घः** ॥ कौ झसादौ क्ङिति हे च । इदमिवाचरति । इदामति । राजेवाचरति राजानति । राजायते । मन्था इवाचरति मथीनति । ऋभुक्षा इवाचरति ऋभुक्षीणति । द्यौरिवाचरति द्यवति । दुद्याव । द्यूयात् । द्यविता । कइवाचरति कति । चकौ । चकेइत्यन्ये । स्वइवाचरति स्वति । सस्वौ । सस्व इत्यन्ये ।

सुबोधिनी—अमांतस्योपधायादीर्घः । कौ झसादौ इकारे च क्ङिति । झसादौकिति शांतो

दांत इत्युदाहरणं । ङिति तु यङ्लुकि तसप्रत्यये । शंशांतः । दंदांतः । पंथा इवाचरति पथीनाति । अत्रांतरंगत्वाद्दीर्घस्ततो न गुणः । द्यौरिवाचरति क्ङिति ह्रसे क्काविति वस्य उत्वे गुणावादेशौ । द्यवति । को ब्रह्मा तद्वदाचरति कति । लिटि धातोर्नामिन इति वृद्धौ आतोणब्डावित्यौ । चकाविति हरदत्तः । माधवस्तु णपि वृद्धिं बाधित्वा यत इत्यलोपात् चक इति रूपमाह ॥

**तत्त्वदी०**–द्यवतीति । क्कौ ह्रसादाविति । वस्योत्वे गुणावादेशौ । चकाविति । आत इत्यत्र आअत इति छित्वा अदंतादपि डौ ।

**मू०–आचारउपमानात् ॥** कर्मधारयेउपमानादाचारेऽर्थे यप्रत्ययोऽस्य चेकारः । पुत्रमिवाचरति पुत्रीयति शिष्यमुपाध्यायः । प्रासादइवाचरति प्रासादीयति कुट्यां भिक्षुः ।

**सुबोधिनी**–आचारउपमानात् । नाम्नो य ई चास्येत्यनुवृत्तम् । आचरणमाचारः । चरेर्भावे घञ् । ज्ञानं व्यवहारो वा । उपमीयते अनेनेत्युपमानम् । माङः करणे युट् । कर्मण उपमानादाचारादुपमानाच्च नाम्नो यः स्यात् आचारार्थे तस्मिन् ये परे पूर्वस्यावर्णस्य इत्वं च । राजानमिवाचरतीत्यत्र नाम्नोन इति नलोपे कृते इत्वं राजीयति ॥

**तत्वदीपिका**–आचार उपमानादिति। आचरणमाचारः चरेर्भावे घञ् । व्यवहारो ज्ञानं वा।उपमीयतेऽनेनेत्युपमानं पुत्रीयति शिष्यमुपाध्याय इति । पुत्रविषयकं यज्ज्ञानं व्यवहारो वा तत्सदृशं शिष्याभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूलो वर्त्तमान एकगुर्वभिन्नाश्रयको व्यापारः । प्रासादाभिन्नाश्रय यज्ज्ञानं व्यवहारो वा तत्सदृशं कुव्यभिन्नाश्रयं यज्ज्ञानं व्यवहारो वा तदनुकूल एकभिन्नाश्रयो वर्त्तमानकालिको व्यापारः ।

**मू०–भृशादिभ्योऽभूततद्भावेयङ्अन्त्यहसलोपश्च ॥** अभृशो भृशो भवति भृशायते । अशश्वत् शश्वद्भवति शश्वायते ।

**सुबोधिनी**–भृशादिभ्योऽभूततद्भावेयङ्अंत्यहसलोपश्च । भृशादिभ्यो यङ्स्यात् तस्मिन् परे भृशादीनामंत्यस्य हसस्य लोपश्चाभूततद्भावेऽर्थे । ये इति दीर्घः । भृशायते ॥

**मू०–क्विबपि ॥** भृशति ।

**सुबोधिनी**–क्विबपि । भृशादिभ्यः क्विप् स्यादभूततद्भावेऽर्थे ॥

**मू०–च्विरपि ॥** भृशीभवति । भृश्यभूत् । सुमनायते । उपसर्गसमानाकारम्पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते । स्वमनायत । उदमनायत ।

**सुबोधिनी**–च्विरपि । भृशादिभ्यः च्विः स्यादभूततद्भावेऽर्थे कृभ्वस्तियोगे एव । उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाहेतौ प्रत्यये चिकीर्षिते पृथक् क्रियते । धातुसंज्ञाविधायके प्रत्यये कर्तुमिष्टे सति उपसर्गतुल्यं पूर्वपदं भिन्नं कर्त्तव्यमित्यर्थः । चुरादौ संग्राम युद्धे इति संविशिष्टपाठोस्य ज्ञापकः । तेन मनस्शब्दात्प्राग् अट् भवति । स्वमनायत ॥

**तत्त्वदीपिका**–उपसर्गसमानाकारमित्यादि। अत्र ज्ञापकन्तु चुरादिषु संग्राम युद्ध इति विशिष्टपदं । अन्यथा ग्रामयुद्ध इत्येवापठिष्यत ।

**मू०-सुखादिभ्योयङ्** ॥ कर्तुरनुभवे । सुखंवेदयते सुखायते । दुःखायते ।

सुबोधिनी-सुखादिभ्योयङ् । कर्तुरनुभवे सुखादिभ्यः कर्म्मभ्योऽनुभवकर्तुरेव चेतसुखादीनि स्युः अनुभवशब्दो ज्ञानवाची तदपेक्षमेव कर्तृत्वं कर्ता चेत्सुखादिभिरन्वेति सुखं वेदयते । ये इति दीर्घः । सुखायते । कर्तुरिति किं । सुखं वेदयते परस्य । इह यन्निष्ठं सुखं तद्भिन्नोऽनुभवः ॥

तत्वदीपिका-सुखंवेदयत इति । स्वगतं सुखमनुभवतीत्यर्थः ।

**मू०-पुच्छादुदसनेव्यसनेपर्य्यसनेचञिङ्** ॥उत्पुच्छयते। उदपुच्छत । विपुच्छयते । परिपुच्छयते ।

सुबोधिनी-पुच्छादुदसनेव्यसनेपर्यसनेचञिङ् । पुच्छान्नाम्नो ञिङ् स्यात् उत् ऊर्द्ध्वमसनं क्षेपणं उदसनं । विविधं विरुद्धं वाऽसनं व्यसनं । परि समंतादसनं पर्यसनं । तास्मिन्नर्थे । ङित्त्वादात् । पुच्छमुदस्यति उत्पुच्छयते । उदपुच्छत ॥

तत्व०-पुच्छादुदसन इत्यादि ॥ उदसनमुत्क्षेपणं । विविधं विरुद्धं वा क्षेपणं व्यसनं । परितः पर्यसनम् ।

**मू०-भाण्डात्समाचयने** ॥ सम्भाण्डयते ।

सुबोधिनी-भांडात्समाचयने । भांडात् ञिङ् स्यात् राशीकरणेऽर्थेसंभांडयते । लुङि समबभांडत ॥

तत्वदीपिका-समाचयनं राशीकरणं ।

**मू०-चीवरादर्ज्जनेपरिधानेच** ॥ चीवराणि अर्जयति परिधत्ते वा संचीवरयते भिक्षुः । नाम्नोञिराचष्टे ।

सुबोधिनी-चीवरादर्जनेपरिधानेच । ञिङ् । चीवराण्यर्जयति परिधत्ते वा संचीवरयते लुङि । समचिचीवरत ॥

तत्वदीपिका-संचीवरयते इति । अर्जयति परिधत्ते वेत्यर्थः ।

**मू०-अर्थवेदसत्यानामापुगूञौ** ॥ अर्थापयति । आर्तीथपत् । वेदापयति । सत्यापयति । अससत्यपत् । एतयते । ऐतत् । पृथुम् प्रथयति । वृद्धौ सत्यां पूर्वं वा टिलोपः । अपप्रथत्, आपिप्रथत् । मृदुम् म्रदयति । अमम्रदत् । अमिम्रदत् । भृशं भ्रशयति । अबभ्रशत् । कृशं क्रशयति । अचक्रशत् । दृढम् द्रढयति । अदद्रढत् । परिव्रढयति । पर्य्यवव्रढत् । स्वादयति । अतित्वदत् । मादयति । अमीमदत् । युष्मयति । अयुयुष्मत् । अस्मयति । आसिस्मत् । विद्वांसं विद्वयति । अविविद्वत् । विदावयति इत्यपरे । अविविदावत् । विदयति इत्यन्ये । अविविदत् । एवं श्वानमाचष्टे श्वयति । अशिश्वत् । शावयत्यपरे । अशुशावत् । शुनयतीत्यन्ये । अशुशुनत् । उदश्वम्

उदीचयति । उदैचिचत् । प्रत्यञ्चम् प्रतीचयति । प्रत्यचिचत् । सम्यञ्चम् समीचयति । सम्यचिचत् । तिर्य्यञ्चम् । तिरायति । अतितिरायत् । सध्र्यञ्चं सध्रायति । असशध्रायत् । अन्तिकम् नेदयति । अनिनेदत् । बाढम् साधयति । वृद्धम् ज्यापयति । अजिज्यपत् । वृद्धम् वर्षयति । स्फिरम् स्फापयति । अपिस्फापत् । उरुं वरयति । बहुलम् बंहयति । तृप्रम् त्रपयति । दीर्घम् द्रावयति । अदद्राघत् । वृंदारकम् वृन्दयति । अववृन्दत् । इतिनामधातुप्रक्रिया ।

सुबोधिनी—अर्थवेदसत्यानामापुग्ञौ एषामापुगागमः स्यात् ञिप्रत्यये परे । अर्थमाचष्टे करोति वा अर्थापयति एनीमाचष्टे ञिप्रत्यये टिलोपः । ततो निमित्ताभावे नैमित्तिकस्याप्यभाव इतीपोऽभावे नस्याप्यभावः । एतयति । पृथुमाचष्टे ऋरमनीति रभावे टिलोपे च प्रथयति । लुङि वृद्धौ सत्यां टिलोपः । अग्वृलोपित्वाभावादङि लघाविति पूर्वस्येत्वं । अपिप्रथत् । वृद्धेः पूर्वं टिलोपे त्वग्वृलोपित्वादित्वं न । अपप्रथत् । मृदुं आचष्टे आविष्टवद्भावात् ऋरमनीति रभावे टिलोपे च म्रदयति । एवं भृशकृशदृढादयः । त्वां मांवाऽऽचष्टे टिलोपे त्वन्मदेकत्वे इति त्वन्मदादेशे च कृते अतउपधाया इति वृद्धौ त्वादयति मादयति युवामावां युष्मानस्मान् वाचष्टे विभक्तिपरत्वाभावान्न युवावौ । टिलोपे सति युष्मयति । अस्मयति । श्वानमाचष्टे आविष्टवद्भावात् शुनो वस्य ऊर्वा च दीर्घ इत्युत्वे टिलोपाभावे च शुनयतीति रूपं केचिदाहुः । टिलोपे उत्वे च वृद्धौ सत्यां शावयति । लुङि अग्वृलोपित्वान्न ह्रस्वः । अशुशावत् । विद्वांसमाचष्टे टिलोपे विद्वयति । टिलोपे कृते वसोर्वउरित्युत्वे वृद्धावायादेशे च विदायतीत्यन्ये नित्यत्वात्पूर्वमुत्वं पश्चाट्टिलोपः । विदयतीत्यपरे । उदंचमाचष्टे आविष्टवद्भावात् तिरश्चादय इत्युदीच् । उदीचयतीत्यत्रोपसर्गं पृथक्कृत्य अचशब्दादेव ञिः बहुलग्रहणाट्टिलोपो न । लुङि उपसर्गसमानाकारमितीकारात्पूर्वमटि चिशब्दस्य द्वित्वे पश्चात् ञेरिति ञिलोपः । उदैचिचत् । प्रत्यंचमाचष्टे अंचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ । प्रतीचयति-लुङि चिशब्दात्प्रागटि कृते पूर्वस्य यत्वं प्रत्यचिचत् । ग्वृणामसवर्णेस्वर इति प्रकृतिभावपक्षे तु प्रतिअचिचत् । सम्यंचमाचष्टे अंचेर्दीर्घश्चेत्यलोपपूर्वदीर्घौ । समीचयति । लुङि सम्यचिचत् । प्रकृतिभावपक्षे समिअचिचत् । तिर्यञ्चमाचष्टे अंचेष्टिलोपेनापहारेपि तस्य बहिरंगत्वेनासिद्धत्वात्तिरीत्यस्य सद्भावः । वृद्धौ सत्यां तिरायति । उपसर्गसमानाकारत्वाभावादिहतिरसः पृथक्करणं नास्ति । अतितिरायत् । अङि लघाविति ह्रस्वस्तु नाग्वृलोपित्वात् । सध्र्यञ्चमाचष्टे टिलोपेनांचेरपहारे वृद्धौ सत्यां सध्रायति अंतिकमाचष्टे गुर्वादेरित्यंतिकस्य नेदष्टिलोपश्च । यस्येत्यलोपः । नेदयति । लुङि अनिनेदत् बाढमाचष्टे बाढस्य साधः । साधयति । अससाधत् । वृद्धमाचष्टे वृद्धस्य ज्यादेशः । रातोञाविति पुक् । ज्यापयति अजिज्यपत् । वृद्धस्य वर्षोपि । वर्षयति । अववर्षत् । स्फिरमाचष्टे स्फिरस्य स्फः वृद्धौ सत्यां रातोञाविति पुक् । स्फापयति । अपिस्फपत् । उरुमाचष्टे उरुशब्दस्य वर् संज्ञापूर्वकविधेरनित्यत्वाद्बाहुलकाद्वा माधवेन विकल्पेन वृद्धिरुदाहृता । वरयति । अवीवरत् । बहुलमाचष्टे बहुलस्य बंहः । बंहयति । नोलोप इति नलोपो न । अग्वृलोपित्वात् । न

इत्वदीर्घौ । अववंहत् । तृप्रमाचष्टे तृप्रस्य त्रप् । त्रपयति । अतित्रपत् । दीर्घमाचष्टे दीर्घस्य द्राघः । द्राघयति । अदद्राघत् । वृंदारकमाचष्टे वृन्दारकस्य वृन्दः वृंदयति । अववृन्दत् ॥

॥ इतिनामधातुप्रक्रिया ॥

तत्त्वदी०—अर्थवेदेत्यादि । अत्र करणं इत्यनुवृत्तं क्रियाविशेषोपलक्षणं तेनार्थमाचष्ट इत्यादिविग्रहः आत्वेनैव सिद्धं आपुक्करणमन्यतोपि विधानार्थं । तेन लिखापयतीत्यादिसिद्धं । अपिप्रथदिति । वृद्धौ ओकारे कृते ततः लोपः अग्लोपित्वाभावादङ्कार्यं । त्वादयति मादयतीति । नो वेत्यत्र वा इत्यस्य व्यवस्थितत्वात्क्वचिन्न टिलोपः । विद्वयतीति आदौ टिलोपः पुनरङ्गवृत्तपरिभाषया संप्रसारणं न । विद्वयतीति । संप्रसारणे कृते टिलोप इति पक्षे विदावयति टिलोपे कृते संप्रसारणे वृद्ध्यावादेशौ सकृत्प्रवृत्तत्वात्पुनष्टिलोपाप्रसंगः । उदीचयतीति । टिलोपो न व्यवस्थितत्वात् । तिरायतीति । आदौ टिलोपस्ततस्तिर्यादेशस्ततो वृद्ध्यायादेशौ पुनष्टिलोपस्त्वसकृत्प्रवृत्तत्वान्न । अतितिरायदिति । अग्लोपित्वादुपधाह्रस्वोपि न ।

कृतायामिहटीकायांलोकेशंकरशर्मणा । समासेनेदमभवन्नामधातुसमापनम् ॥

इति नामधातुप्रक्रिया ।

**मू०— कण्ड्वादिभ्योधातुभ्योयक्स्वार्थे ॥ कण्डूञ् गात्रविघर्षणे । कण्डूयति । कण्डूयते । मन्तु अपराधे रोषेच मन्तूयति । ञिदित्येके । मन्तूयते । वल्गु पूजामाधुर्य्ययोः । वल्गूययति । असू असु असूञ् उपतापे । अस्यति । अनपिचहसात् । असाञ्चकार । असूयति । असूयते । लेलादीप्तौ । लेलायति। मेधा आशुग्रहणे । मेधायति । सुख दुःख तत्क्रियायाम् । सुख्यति । दुःख्यति । सपर् पूजायाम् सपर्य्यति । सपराञ्चकार । भिषज् चिकित्सायाम् । भिषज्यति । इषुध् शरधारणे । इषुध्यति । ऐषुधीत् । गद्गद्वाक्स्खलने । गद्ग्यति । एला खेला विलासे । एलायति । खेलायति । ह्णीङ् रोषणे लज्जायाञ्च । ह्णीयते । महीङ् पूजायाम् महीयते । अगद् नीरोगत्वे । अगद्यति । आगदीत् । इतिकण्ड्वादयः ॥**

सुबोधिनी—कंड्वादिभ्योधातुभ्योयक्स्वार्थे । एभ्यो धातुभ्यो नित्यं यक् स्यात् स्वार्थे । कंड्वादयो द्विधा । धातवः प्रातिपदिकानि च नाम्नां तु विग्रह एव । सपर् पूजायां । यगंतात् षिद्भिदामङ् इत्यनेनाङ् प्रत्यये आप् । सपर्या । महीङ् पूजायां । महीयते । पूजां लभते इत्यर्थः । आकृतिगणोयं ॥ इति कंड्वादयः ॥

तत्त्वदीपिका—कंड्वादिभ्योयगिति । कंड्वादयो हि द्विविधाः । धातवो नामानिच । तत्र धातुभ्यो नित्यं यक् । नाम्ना तु कुंडुं करोतीति विग्रह एव ।

कृतायामिहटीकायांलोकेशंकरशर्मणा । बाधनं दुष्टबुद्धीनामगात्कंड्वादिसाधनं ॥

इति कंड्वादिप्रक्रिया ।

प्रत्ययमाला—कंडूयतेः सप्रत्यये द्विश्चेति प्रथमस्य द्वित्वे प्राप्ते कंड्वादेस्तृतीयस्य द्वित्वं । कंडूयियिषति । यप्रत्ययान्तात् सप्रत्यये तु यथेष्टं नामधातुषु द्वित्वमित्याद्यानां त्रयाणामन्यतमस्य द्वित्वं भवति । स्वरादेस्त्वाद्येतरस्य द्वित्वं । पुत्रीयितुमिच्छति पुपुत्रीयिषति । पुति

त्रीयिषति पुत्रीयियिषति । अशिश्वीयिषति । अश्वीयियिषति । आत्मन इंद्रमिच्छति इन्द्रीयति । इन्द्रीयतेः सप्रत्यये द्रीशब्दयीशब्दयोरन्यतरस्य द्वित्वं । इंदिन्द्रीयिषति । इन्द्रीयियिषति ञ्यंतात्सप्रत्यये तु प्रियशब्दात् ञाविष्ठवद्भावेन प्रियशब्दस्य प्रादेशस्ततोद्वित्वादि । प्रियमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छति पिप्रापयिषति प्रापिपयिषति प्रापयियिषति । यङ्सञ्यंतात्सप्रत्ययेतु बोभूयिषयिषति । यङ्ञिलांतात् ञिप्रत्यये तु । बोभूययिषति ॥ इतिप्रत्ययमाला ॥

**मू०— निविशादेः ॥ न्यादिपूर्वाद्विशादेर्धातोरात् । निविशते ।**

सुबोधिनी—निविशादेः । निपूर्वोविशः नेः परो विश इति वा निविश आदिर्यस्य स निविशादिस्तस्मादात्स्यात् । आदिशब्दः प्रकारे । विश इत्यत्र अकार उच्चारणार्थः । "निविशते यदि शूकशिखापद,, इति श्रीहर्षः । निर्कि । प्रविशति । अर्थवद्ग्रहणलक्षणप्रतिपदोक्तपरिभाषाभ्यां नेरुपसर्गस्य ग्रहणं । तेनेह न । मधुनि विशंति भ्रमराः ॥

तत्त्वदीपिका—निविशादेः निपूर्वो विशः नेः परोविश इति वा विशोऽकार उच्चारणार्थः असंदेहार्थं वा । पदकार्यवारणं अन्यथा निविडादेरित्युक्ते विश वा विड भेदेन वेति संदेहः स्यात् निविश आदिर्यस्येति स तथा तस्मात् अत्रादिशब्दः प्रकारे तेन निविशसदृशादिति बोध्यं सादृश्यं चोपसर्गपूर्वत्वं । निविशादिगणाभावाव्द्यवस्थावाचिन आदिशब्दस्य ग्रहणं तेन नद्यतीति कुलं विशतीत्यत्र न भवति । एवं वेति विजयतीत्यत्र(?)न । परा जयति दुरात्मनोत्तमाः पराः ॥

**मू०—परिव्यवेभ्यः क्रियः ॥ परिक्रीणीते । विक्रीणीते । अवक्रीणीते ।**

सुबोधिनी—परिव्यवेभ्यःक्रियः । परगामिफलार्थमिदमात्मनेपदं ॥

**मू०— विपराभ्याञ्जेः ॥ विजयते । व्यजेष्ट । पराजयते ।**

सुबोधिनी—विपराभ्यांजेः । आभ्यां परो जयतिरात्वान् ॥

**मू०—आङोदाञोनतुविकसने ॥ विद्यामादत्ते । आदित । विकसने-तु । व्याददाति मुखं कृष्णः । पराङ्गकर्म्मकाद्भवत्येव । व्याददते पिपीलिकाः पतंगस्य मुखम् ।**

सुबोधिनी—आङोदाञोनतुविकसने । परगामिफलार्थमिदं । आङ्पूर्वाद्ददातेर्मुखविकसनादन्यत्रार्थे वर्त्तमानादात्मनेपदं स्यात् । विद्यामादत्ते ॥

**मू०—क्रीडआङ्नुसम्परिभ्यः ॥ आक्रीडते । अनुक्रीडते । परिक्रीडते ।**

सुबोधिनी—क्रीड आङनुसंपरिभ्यः । तृतीयार्थस्यानोर्योगे नात्मनेपदं । माणवकमनुक्रीडति । तेन सहेत्यर्थः ॥

**मू०—समोऽकूजने ॥ संक्रीडते । कूजने तु । संक्रीडति रथचक्रम् ।**

सुबोधिनी—समोऽकूजने । समः परः क्रीडतिरात्वान् । अकूजनेर्थे ॥

**मू०— आगमेःक्षमायाम् ॥ आगमयस्व तावत् ।**

सुबोधिनी—आगमेःक्षमायां । आङ्पूर्वात् ञ्यंताद्गमेरात्स्यात् । क्षमायामर्थे । आगमयस्व तावत् । मा त्वरिष्ठा इत्यर्थः ॥

तत्त्वदीपिका—आगमेः क्षमायां । गमेरिति ण्यंतस्य ग्रहणं । क्षमा प्रतीक्षा । आगमयस्वेति मात्वरिष्ठा इत्यर्थः ।

**मू०—शिक्षेर्जिज्ञासायाम् ॥ धनुषि शिक्षते ।**

सुबोधिनी—शिक्षेर्जिज्ञासायाम् । शिक्ष विद्योपादाने इत्यस्य नेह ग्रहणं। आनुदात्तत्वादेवात्मनेपदसिद्धेः । किंतु शकेः सांतस्येह ग्रहणं । धनुषि शिक्षते । धनुर्विषये ज्ञानं शक्तो भवितुमिच्छतीत्यर्थः ॥

तत्त्वदी०—धनुषि शिक्षत इति । धनुर्विषये ज्ञानेशक्तो भवितुमिच्छतीत्यर्थः ।

**मू०—हरतेर्गतताच्छील्ये ॥ पैतृकमश्वा अनुहरन्ते मातृकङ्गावः ।**

सुबोधिनी—हरतेर्गतताच्छील्ये । गतं प्रकारः सादृश्यमिति यावत् । पैतृकमश्वा अनुहरंते मातृकं गावः । पितुर्मातुश्च सादृश्यं सततं परिशीलयंतीत्यर्थः । ताच्छील्ये किं । मातुरनुहरति इह सादृश्यमात्रं विवक्षितं । नतु प्रकारताच्छील्यम् ॥

तत्त्वदी०—गतताच्छील्य इति । गतं प्रकारः । पैतृकमश्वा अनुहरन्त इति । पितुः प्रकारं सततं परिशीलयन्तीत्यर्थः । गतं गमनं तस्य । ताच्छील्य इति व्याख्याने तु अयकः संबन्धो यदनुहरते तस्य कुमुदमित्यादाव व्याप्तिः स्यात् ।

**मू०—किरतेर्हर्षजीविकाकुलायकरणेषु ॥**

सुबोधिनी—किरतेर्हर्षजीविकाकुलायकरणेषु । किरतेरात्स्यात् एषु वाच्येषु । हर्षादयो विषयाः तत्र हर्षो विक्षेपस्य कारणमितरे फले ॥

तत्त्वदीपिका०—किरतेरिति । कृविक्षेपे । हर्षादयोविषयत्वेनोपादीयंते । तत्र हर्षोविक्षेपकरणं। इतरे फलं।

**मू०—अपात्किरतेस्सुट्चतुष्पाच्छकुनिकर्तृकेआलेखने॥अपस्किरते वृषो हृष्टः । कुक्कुटो भक्षार्थी । श्वाऽऽश्रयार्थी च । हर्षादिष्विति किम् । अपकिरति कुसुमं वायुः ।**

सुबोधिनी—अपात्किरतेःसुट्चतुष्पाच्छकुनिकर्तृकेआलेखने । अपात्किरतेः सुट् स्यात् हर्षादिष्वेव चतुष्पाच्छकुनिकर्तृके आलेखने सति । अपस्किरते वृषो हृष्टः । हर्षेण भूमिं विलिखतीत्यर्थः। हर्षादिष्विति किम्। अपकिरति कुसुमं । इहात्सुटौ न। हर्षादिमात्रविवक्षायां यद्यप्यात्मनेपदे प्राप्ते तथापि सुडभावे नेष्यत इत्याहुः गजोऽपकिरति । अत्र हर्षे सत्यप्यालेखनाभावात् सुटोऽप्राप्तिः ॥

तत्त्वदीपिका—अपस्किरतेवृषो हृष्टइति । हर्षेण भूमिं विलिखतीत्यर्थः ।

**मू०—आङोनुप्रच्छोः ॥ आनुते । आपृच्छते ।**

सुबोधिनी—आङोनुप्रच्छोः । आङः परावेतावात्वंतौ भवतः । णु स्तुतौ । अदादिः । प्रच्छ ज्ञीप्सायां । तुदादिः ॥

तत्त्वदीपिका—आङ्इति । णुस्तुतौ अदादिः । प्रच्छ ज्ञीप्सायां तुदादिः । आनुत इति उत्कण्ठापूर्वक शब्दं करोतीत्यर्थः ।

मू०—शपउपालम्भे ॥ विप्राय शपते ।

सुबोधिनी—शप उपालंभे । आक्रोशार्थे स्वरितेतः शपः परगामिफले शपथरूपेऽर्थे आत्मनेपदं भवति । कृष्णाय शपते । श्लाघन्हुङिति संप्रदानसंज्ञा ॥

तत्त्वदीपिका—उपालम्भ इति । शपथ इत्यर्थः स च वाचा शरीरस्पर्शनरूपः विप्राय शपत इति त्वत्पादौ स्पृशामि नैतन्मया कृतमित्येव शपथेन विप्रस्य स्वाभिप्रायं प्रकाशयतीत्यर्थः ॥ सख्यः शपामि यदि किंचिदिह स्मरामीत्यत्रतु स्वाशयप्रकाशनमात्रं विवक्षितं नतु शपथरूपमपीत्यदोषः ।

मू०—समवप्रविभ्यःस्थः ॥ संतिष्ठते । समस्थित । अवतिष्ठते । प्रतिष्ठते । वितिष्ठते ।

सुबोधिनी—समवप्रविभ्यःस्थः । लुङि । अपिद्धाघास्थामिदितीत्वं । समस्थिषातां ॥

मू०—आङःप्रतिज्ञायाम् ॥ शब्दं नित्यमातिष्ठते ।

सुबोधिनी—आङःप्रतिज्ञायां । शब्दं नित्यमातिष्ठते । नित्यत्वेन प्रतिजानीते इत्यर्थः ॥

मू०—स्वाभिप्रायाविष्करणेनिर्णेत्राख्यायाञ्च ॥ गोपी कृष्णायातिष्ठते । अस्थित । संशय्य कर्णादिषु तिष्ठते यः ।

सुबोधिनी—स्वाभिप्रायाऽऽविष्करणेनिर्णेत्राऽऽख्यायांच । स्वाशयस्य प्रकाशने विवादस्य निराकरणकर्त्ता निर्णेता तस्मिन्नर्थे च तिष्ठतेरात्स्यात् । गोपी कृष्णाय तिष्ठते । स्थित्या नेत्रादिविकाराद्वा स्वाभिप्रायं ज्ञापयति । संशय्य कर्णादिषु तिष्ठते यः। संशयं विधाय निर्णेतृत्वेन कर्णादीनाश्रयते इत्यर्थः ॥

तत्त्वदीपिका—निर्णेत्राख्यायामिति । निर्णेता विवादस्य निराकरणकर्त्ता लोके प्रसिद्धः । कृष्णाय तिष्ठते इति । स्वस्थित्या नेत्रादिविकारद्वारा स्वाभिप्रायविशेषं ज्ञापयतीत्यर्थः । संशय्यकर्णादिष्विति । संशयं निर्णेतुं कर्णादिषु तिष्ठतीत्यर्थः । अन्ये तु संशयस्य कर्णादय एव निर्णेतार इत्येवार्थइति ।

मू०—उदोऽनूर्ध्वकर्म्मणीहायाम् ॥ मुक्तावुत्तिष्ठते । उदस्थास्तम्भोस्सलोपः । उत्थासीष्ट । उत्थासीयास्तां । उदस्थास्यत । उदस्थित । अनूर्ध्वकर्म्मणि किम् । पीठादुत्तिष्ठति । ईहायांकिम् ग्रामाच्छतमुत्तिष्ठति ।

सुबोधिनी—उदोऽनूर्ध्वकर्मणीहायां । इच्छापूर्विका चेष्टा ईहा तस्यामेव नेह ग्रामाच्छतमुत्तिष्ठति । उत्पद्यते इत्यर्थः ॥

तत्वदी०—उदइति । कर्मक्रियाईहा परिस्पंदः । मुक्तावुत्तिष्ठत इति । मुक्तचर्थं घटत इत्यर्थः । ईहायां किं ग्रामाच्छतमुत्तिष्ठति । उत्पद्यत इत्यर्थः । उत्पत्तिः क्रिया नतु परिस्पंदात्मिकेत्यादभावः

मू०—उपान्मंत्रकरणदेवपूजासंगतिकरणमित्रकरणपथिषु ॥ आग्नेय्याऽऽग्नीध्रमुपतिष्ठते । मंत्रकरणे किम् । भर्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते । गंगा यमुनामुपतिष्ठते । रथिकानुपतिष्ठते । स्रुघ्नमुपतिष्ठते पन्थाः ।

सुबोधिनी—उपान्मंत्रकरणदेवपूजासंगतिकरणमित्रकरणपथिषु । एष्वर्थेषु उपात्तिष्ठतेरा-

त्स्यात् । मंत्रः करणं यत्र तत् मंत्रकरणं स्तुतिः । आग्नेय्याऽऽग्नीध्रमुपतिष्ठते । अग्निदेवताकया ऋचाऽऽग्नीध्रमग्निविशेषं स्तोतुं तत्समीपे तिष्ठतीत्यर्थः । अग्निमिंधे इति अग्नीत् क्विबंतः । अग्नीधः स्थानमग्नीध्रं तत्स्थोपाग्नीध्रः । निपातनात्तद्धितो रण्प्रत्ययः मंत्रकरणे किं भर्त्तारमुपतिष्ठति यौवनेन । आदित्यमुपतिष्ठते आदित्यं स्तोतुं तदभिमुखतया तिष्ठतीत्यर्थः गंगा यमुनामुपतिष्ठते । उपश्लिष्यतीत्यर्थः । रथिकान् उपतिष्ठते । मैत्रीकरोतीत्यर्थः । पंथाः स्रुघ्नो देशस्तमुपतिष्ठते प्राप्नोतीत्यर्थः ॥

**तत्त्वदीपिका**–उपान्मंत्रकरणं कारकं देवानां पूजा संगतिः संश्लेषः मित्रस्य करणं पंथा मार्गः स च कर्तृत्वेन संबध्यते । आदित्यमुपतिष्ठत इति । पूजयतीत्यर्थः । यमुनेति । उपश्लिष्यतीत्यर्थः रथिकानिति । मित्रीकरोतीत्यर्थः । पंथा इति प्राप्नोतीत्यर्थः ।

**मू०–वा लिप्सायाम् । भिक्षुः प्रभुमुपतिष्ठते, उपतिष्ठति वा ।**

सुबोधिनी–वा लिप्सायां । प्रभुमुपतिष्ठते । लिप्सयोपगच्छतीत्यर्थः ॥

**तत्त्वदीपिका**–वालिप्सायामिति । लब्धुमिच्छा लिप्सा तस्यां गम्यमानायामित्यर्थः ।

**मू०–अकर्मकाच्च ॥ ज्ञानमुपतिष्ठते ।**

सुबोधिनी–अकर्मकाच्च । उपात्तिष्ठतेरकर्मकादात्मनेपदं स्यात् । भोजनकाले उपतिष्ठते सन्निहितो भवतीत्यर्थः ॥

**तत्वदीपिका**–अकर्मकर्मकारकं न तु क्रियाज्ञानम् । उपतिष्ठत इति सन्निधत्त इत्यर्थः ।

**मू०–उद्विभ्यान्तपोऽकर्मकात्स्वाङ्गकर्मकाच्च ॥ उत्तपते । वितपते पाणिं । शिरोवा । स्वांगकर्मकात्किम् । सुवर्णमुत्तपति ।**

सुबोधिनी–उद्विभ्यांतपोऽकर्मकात्स्वांगकर्मकाच्च । स्वमंगं स्वांगं न त्वद्रवमिति परिभाषितं । उत्तपते । वितपते । दीप्यते इत्यर्थः । नेह सुवर्णमुत्तपति । संतापयति विलापयति वेत्यर्थः । चैत्रो मैत्रस्य पाणिमुत्तपति । संतापयाति वेत्यर्थः ।

**तत्वदीपिका**–उत्तपतइति दीप्यत इत्यर्थः ।

**मू०– आङोयमहनिभ्यामकर्मकाभ्यांस्वांगकर्मकाभ्याञ्च ॥ आयच्छते । आहते । पाणिं शिरो वा । आघ्नाते । आहसे । अन्यत्र । शत्रुमायच्छति । आहन्ति वा ।**

सुबोधिनी–आङोयमहनिभ्यामकर्मकाभ्यांस्वाङ्गकर्मकाभ्यांच । यमहनिभ्यामात् । नेह परस्य शिर आहंति । कथं तर्हि "आजघ्ने विषमविलोचनस्य वक्षः" इति भारविः । आहध्वं मा रघूत्तममितिभट्टिश्च । प्रमाद एवायमिति । समीपमेत्येत्यध्याहारो वा बोध्यः विषमविलोचनस्य समीपमेत्य वक्ष आजघ्ने । स्वकीयमेव वक्षो मल्ल इव संतोषातिशयादास्फोटनं चक्रे इत्यर्थः ॥

**तत्त्वदीपिका**–आङ इति । अकर्मकस्वांगकर्मकयोरनुवृत्तिरत्रापि ॥ आयच्छत इति । दीर्घो भवतीत्यर्थः आहत इति नलोपः । आघ्नाते । आजघ्ने विषमविलोचनस्य वक्ष इत्यादौ तु प्राप्येत्यध्याहारो बोध्यः ।

**मू०–हनस्सिःकित्** ॥ वधोवा.ति । आवधिष्ट । आवधिषाताम्, आहसा-ताम् ।

सुबोधिनी–हनःसिःकित् । हंतेः परः सिः प्रत्ययो वा कित् स्यात् । हनोलुङ्लिङोरिति वधादेशः । आवधिष्ट । आवधिषातां । पक्षे कित्वात् लोपस्त्वनुदात्ततनामिति नलोपः । लोपोऽह्रस्वादिति सिलोपः । आहत । आहसातां । आहसत ॥

**मू०–यमस्सूचनेसिःकित्** ॥ उदायत् उदायसाताम् उदायसत ।

सुबोधिनी–यमःसूचनेसिःकित् । सूचनं परदोषाविष्करणं । कित्वाल्लोपस्त्वनुदात्ततनामिति मलोपः । लोपोऽह्रस्वादिति सिलोपः । उदायत । सूचने किं । उदायंस्त पादः माकृष्टवानित्यर्थः ॥

तत्वदीपिका–सूचन इति । परेणाच्छाद्यमानस्याविष्करण इत्यर्थः । उदायते इति परावद्यं प्रकाशयति स्मेत्यर्थः

**मू०–समोगमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिदृशिभ्यः** ॥ अकर्मकेभ्यः । सङ्गच्छते ।

सुबोधिनी–समोगमृच्छिप्रच्छिस्वरत्यर्तिश्रुविदिदृशिभ्यः । समुपसर्गादकर्मकेभ्योगमृच्छचर्तिश्रुदृशिभ्यः । प्रच्छिस्वरतिविदिभ्यः सकर्मकेभ्यश्चात्स्यात् । संगच्छते । संगतं भवतीत्यर्थः ॥

तत्त्वदीपिका–समोगमृच्छतीति । ऋच्छ गत्यादौ आदेशस्तुन । अर्त्तेः पृथग्ग्रहणात् वित्तेरेवग्रहणं । गम्यादिपरस्मैपदिसाहचर्यात् संगच्छत इति युज्यत इत्यर्थः । अकर्मकादित्येव । रक्षांसीति पुरापि संशृणुमहे इति । मुरारिप्रयोगस्तु इति कथयद्भ्च इत्याध्याहारेण समाधेयः । अर्थान्तरे वृत्तेरकर्मकत्वं सकर्मकाणामपि ।

**गमेस्सिस्यौकितौवा** ॥ सङ्गसीष्ट, संगंसीष्ट । समगत, समगंस्त । समृच्छिष्यते । समानृच्छे । समार्च्छिष्ट । संस्वरते । संसस्वरे । संस्वरिषीष्ट, संस्वृषीष्ट, समस्वरिष्ट, समस्वृत । सम्पृच्छते । समप्रष्ट । समप्रक्षाताम् । सशृणुते । संश्रोता । समश्रोष्ट । संवित्ते । संविदाते ।

सुबोधिनी–गमेःसिस्यौकितौवा । गमेरनिटौ सिस्यौ वा कितौ स्तः । आशिषि लिङि कित्वाल्लोनस्त्वनुदात्ततनामिति मलोपः संगसीष्ट । लुङि पक्षे संगंसीष्ट कित्वान्मलोपे लोपोऽह्रस्वादिति सिलोपः समगत । समगसातां । समगसत । कित्वाभावे । समगंस्त समगंसातां समगंसत । तौदादिकस्य ऋच्छेरत्र ग्रहणं नतुऋच्छादेशस्येति ध्वननार्थं लटः प्रयोगः । समृच्छिष्यते । ग्रहामिति संप्रसारणं संपृच्छते । स्वृ शब्दोपतापयोः । संस्वरते । अर्त्तीति भौवादिकजौहोत्यादिकयोर्ग्रहणं । तत्र भ्वादेः समृच्छते लिटि समाराते । समारिरे लिङि उरिति न गुणः । समृषीष्ट । समर्त्ता । इनृत इतीट् समरिष्यते । समारिष्यत । लुङि मेट इत्यटोऽभावः । उरिति न गुणः लोपो ह्रस्वादिति सिलोपे । मासमृत । मासमृषातां । मासमृषत । माङभावे समार्त्त । समार्षातां । समार्षत । इयर्त्तेस्तु ऋप्रोरिःपूर्वस्येति पूर्वस्येत्वे असवर्णे स्वरे पूर्वस्येतीय् । समियृते । लुङि । सर्तिशास्त्यर्तिभ्य इति ङः । ऋवर्णदृशोरिति

गुणः वेट इत्यडभावः । मासमरत । मासमरेतां । मासमरंत । माङ्भावे समारत । समरेतां। समारंत । श्रवःशृआदेश इति शुर्नुप्रत्ययश्च । संशृणुते । परस्मैपदसाहचर्याद्विदज्ञाने इत्यस्यैव ग्रहणं न तु स्वरितेतो विदॢ लाभे इत्यस्य सत्ताविचारणार्थस्य । विदेस्त्वनुदात्तत्वादात्मनेपदं सिद्धमेव ॥

**वेत्तेरन्तोवारुट् ॥** संविदते, संविद्रते । सम्पश्यते । समदृष्ट । समियृते । समारे । समियूरते । ऋध्रोरिः पूर्वस्य । समियूरीत । समियूरीयाताम् । स्वरादेः । अइए एऐऐ । समैयृत । समैयूराताम् । अकर्मकात्किं ग्रामं सङ्गच्छति ॥

सुबोधिनी—वेत्तेरन्तोवारुट् । विदेः परस्यात्प्रत्ययस्य रुड् वा स्यात् । दृशादेरिति पश्यः । संपश्यते । कथं तर्हि सकर्मकस्य रक्षांसीति पुरापि संशृणुमहे इति मुरारिप्रयोगः । ग्रामादिकोयामिति कथयद्भ्य इत्यध्याहारो वा । अथास्मिन्नकर्मकाधिकारे हानिगम्यादीनां कथमकर्मकतेति चेच्छृणु । धातोरर्थान्तरेवृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेत्युक्तत्वादकर्मकत्वं बोध्यम् ॥

**मू०—उपसर्गादस्यत्यूह्योर्वा ॥** निरस्यते, निरस्यति । निरास्यत् । समूहति समूहते । समुह्यात् ।

सुबोधिनी—उपसर्गादस्यत्यूह्योर्वा । अकर्मकादितिनिवृत्तं असु क्षेपणे । ऊहवितर्के । बंधं निरस्यति । दिवादित्वात् । उपसर्गादूहतेर्ह्रस्वोयादौक्ङिति । ब्रह्म समुह्यात् । अग्निं समुह्यति ॥

**मू०—निसमुपविभ्योह्वः ॥** निह्वयते ।

सुबोधिनी—निसमुपविभ्योह्वः । एभ्यः परस्मात् ह्वेञ आत् स्यात् ॥

**मू०—स्पर्द्धायामाङः ॥** कृष्णश्चाणूरमाह्वयते ।

सुबोधिनी—स्पर्द्धायामाङः । आङः परात् ह्वेञ आत् स्यात् । पराभिभवेच्छा स्पर्द्धा तस्यामर्थे ॥

तत्त्वदीपिका—स्पर्द्धायामिति । पराभिभवेच्छास्पर्द्धा कृष्ण इति । स्पर्द्धतया तस्याह्वानं करोतीत्यर्थः ।

**मू०—अप्रतिबन्धोत्साहस्फीततासुक्रमः ॥** ऋचि क्रमते बुद्धिः । अध्ययनाय क्रमते । क्रमन्तेऽस्मिन्शास्त्राणि ।

सुबोधिनी—अप्रतिबन्धोत्साहस्फीततासुक्रमः । ऋचि क्रमते बुद्धिर्न प्रतिहन्यत इत्यर्थः अध्ययनाय क्रमते । उत्सहत इत्यर्थः । क्रमतेऽस्मिन् शास्त्राणि । स्फीतानि प्रवृद्धानि भवंतीत्यर्थः ॥

तत्वदीपिका—ऋचिक्रमत इति न प्रतिहन्यत इत्यर्थः । अध्ययनाय क्रमतइति उत्सहत इत्यर्थः । क्रमन्तइति । स्फीतानि भवन्तीत्यर्थः ।

**मू०—उपपराभ्याम् ॥** उपक्रमते । पराक्रमते ।

सुबोधिनी—उपपराभ्यां । अप्रतिबंधादिषु वाच्येष्वाभ्यां क्रम आत् स्यात् । नेह संक्रामति ॥

**मू०—आङोज्योतिरुद्गमने ॥ आक्रमते, आक्रम्यते सूर्यः ।**

सुबोधिनी—आङोज्योतिरुद्गमने । आक्रमते सूर्यः उदयते इत्यर्थः । नेह । आक्रामति धूमो हर्म्यस्थलात् ॥

तत्त्वदी०—ज्योतिरुद्गमन इति । ज्योतिर्नक्षत्रादिः । आक्रमते सूर्यइति । उदयत इत्यर्थः । नभः समाक्रामति चंद्रमाः क्रमादित्यत्र तु प्राप्नोतीत्येवार्थो नतूद्गमनम् ।

**मू०—वेःपादविहरणे ॥ साधुविक्रमते वाजी ।**

सुबोधिनी—वेः पादविहरणे । क्रमेः पादविक्षेप एवार्थस्तथापि धातूनामनेकार्थत्वादेवमुक्तं। पादविहरणे किम् । विक्रामति संधिर्द्विधा भवति स्फुटतीत्यर्थः ॥

तत्त्वदीपिका—वेः । विहरणं विक्षेपणम् । यद्यपि धातुरयमस्मिन्नेवार्थे प्रसिद्धस्तथापि धातूनामनेकार्थत्वाद्विशेषणं । नेह विक्रामति संधिः द्विधाभवतीत्यर्थः ।

**मू०—प्रोपाभ्याम्प्रारम्भार्थाभ्याम् ॥ प्रक्रमते । उपक्रमते ।**

सुबोधिनी—प्रोपाभ्यांप्रारंभार्थाभ्यां । प्रक्रमते। आरंभं करोतीत्यर्थः । प्रारंभार्थाभ्यां किम्। प्रक्रामति । गच्छतीत्यर्थः उपक्रामत्यागच्छतीत्यर्थः। उपपराभ्यामिति नात्रात्मनेपदं शंक्यं। अप्रातिबंधादिष्वेवेत्युक्तत्वात् ॥

**मू०—अनुपसर्गाद्वा ॥ क्रमते, क्रम्यते । क्राम्यति, क्रामति ।**

सुबोधिनी—अनुपसर्गाद्वा । अप्राप्तविभाषेयमप्रतिबंधादिषु तु नित्यमेव ॥

**मू०—अपन्हवेज्ञः ॥ शतमपजानीते ।**

सुबोधिनी—अपन्हवेज्ञः । अपनयनेऽर्थे ज्ञ आत् ॥

तत्वदीपिका—शतमपजानीत इति । अपलपतीत्यर्थः ।

**मू०—अकर्म्मकाच्च ॥ सर्पिषो जानीते ।**

सुबोधिनी—अकर्मकाच्च । सर्पिषो जानीते । सर्पिषोपायेन प्रवर्तते इत्यर्थः ॥

तत्वदीपिका—सर्पिष इति । सर्पिष उपायेन प्रवर्त्तते इत्यर्थः ।

**मू०— अनुपसर्गाज्ज्ञः ॥ गांजानीते ।**

सुबोधिनी—अनुपसर्गाज्ज्ञः।अकर्मकाच्चेत्येवसिद्धे सकर्मकार्थमारंभः। अनुपसर्गात् किम्। स्वर्गलोकं न प्रतिजानाति । कथं तर्हि इत्थं नृपः पूर्वमवालुलोचे ततोऽनुजज्ञे गमनं सुतस्येति भट्टिः । कर्मणि लिट् । नृपेणेति विपरिणामः ॥

**मू०— सम्प्रतिभ्यामनाध्याने ॥ शतं सञ्जानीते । शतंप्रतिजानीते । अनाध्याने किम् । मातरं सञ्जानाति ।**

सुबोधिनी—संप्रतिभ्यामनाध्याने । उत्कंठापूर्वकं स्मरणमाध्यानं । शतं संजानीते अवेक्षते इत्यर्थः । शतं प्रतिजानीते । अंगीकरोतीत्यर्थः ॥

तत्त्वदीपिका—शतं संजानीते अवेक्षत इत्यर्थः । प्रतिजानीते अंगीकेरोती त्यर्थः ॥

**मू०—अनुपसर्गाद्वा ॥** गां जानाति जानीते वा ।

सुबोधिनी—अनुपसर्गाद्वा । अनुपसर्गात् परस्य ज्ञो वात् स्यात् ॥

**मू०—वेःशब्दकर्मणः ॥**

सुबोधिनी—वेःशब्दकर्मणः कृञः । शब्दं विकुरुते । उच्चारयतीत्यर्थः । शब्दकर्मणः किम् । चित्तं विकरोति कामः ॥

**मू०—अकर्मकाच्च ॥**

सुबोधिनी—अकर्मकाच्च । वेरकर्मकात् कृञ आत् स्यात् । विकुर्वते सैंधवाः । वाजिनो विकारं लभंते इत्यर्थः ॥

**मू०—भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषुवदः ॥** शास्त्रे वदते । भृत्यानुपवदते । शास्त्रेवदते । क्षेत्रेवदते । गृहेवदते । उपवदते ब्राह्मणः परदारान् ।

सुबोधिनी—भासनोपसंभाषाज्ञानयत्नविमत्युपमंत्रणेषुवदः । वदतेरात्स्यादेष्वर्थेषु । शास्त्रे वदते । भासमानो ब्रवीतीत्यर्थः । उपसंभाषोपसांत्वनं । भृत्यानुपवदते । सांत्वयतीत्यर्थः । शास्त्रे वदते । ज्ञानं वदतीत्यर्थः । क्षेत्रे वदते । क्षेत्रप्रयत्नं वदतीत्यर्थः । गृहेवदते विवादं विवदतीत्यर्थः । उपवदते प्रार्थयते । उपमंत्रणमुपच्छंदनं । एषु किं । किंचिद्वदति ॥

तत्त्वदीपिका—भासनेत्यादि । भासनं दीप्तिः । उपसंभाषा सांत्वनं । शास्त्रे वदत इति । भासमानोब्रवीतीत्यर्थः । भृत्यानीति । सांत्वयतीत्यर्थः । शास्त्रे वदत इति । वदितुं सम्यगवबुध्यत इत्यर्थः । क्षेत्रे वदत इति । क्षेत्रविषयकमुत्साहमाविष्करोतीत्यर्थः । गृहे वदत इति । विविधंभाषत इत्यर्थः । परदारानुपवदते इति । भद्रे भजस्व मामिदं ते दास्यामीत्येवं रहसि प्रचोद्य स्वाभिलषिते प्रवर्त्तयतीत्यर्थः ।

**मू०—मनुष्यादीनांसंभूयोच्चारणे ॥** सम्प्रवदन्ते ब्राह्मणाः ।

सुबोधिनी—मनुष्यादीनांसंभूयोच्चारणे । वदतेरात्स्यात् मनुष्यादीनां समूहोच्चारणेऽर्थे ॥

तत्त्वदीपिका—संभूयोच्चारणे । समूहोच्चारणइत्यर्थः ।

**मू०—व्यक्तवाग्विषयादनुपूर्वादकर्मकात् ॥** अनुवदते कठः कलापस्य ।

सुबोधिनी—व्यक्तवाग्विषयादनुपूर्वादकर्मकात् । एतादृशाद्वदतेरात्स्यात् । व्यक्तः वाग्विषयो यस्य स व्यक्तवाग्विषयस्तस्मात् । अनुवदते कठः कलापस्य वेदशाखावाचकावपि कठकलापशब्दावत्र तदध्येतरि वर्तेते । अनु सादृश्यं । कलापस्येति संबंधे षष्ठी । अकर्मकात् किम् । उक्तमनुवदति । व्यक्तवागिति किं । अनुवदति वीणा ॥

तत्त्वदीपिका—व्यक्तेति । व्यक्ता परिस्फुटा वाणी अर्थावगतिहेतुश्च वाग्येषां ते व्यक्तवाचस्ते च यद्यपि शुकाअपि मनुष्या एवात्र बोध्याः प्रसिद्धतरत्वात् । अतएव ह्येतदुपात्तम् । अन्यथा वदेः स्वभावादिवत्तदर्थकत्वात्क्तमनेन अनुवदतइत्यादि शाखावचनावपि कठकलापशब्दौ तदध्येतरि वर्त्तेते कलापेन सदृशं कठोधीयानो वदतीत्यर्थः । अकर्मकात्किम् उक्तमनुवदति । व्यक्तवाचांकिम् । अनुवदति वीणा ।

**मू०—वाविरुद्धोक्तौ ॥** विप्रवदन्ति विप्रवदन्ते वा वैद्याः ।

सुबोधिनी—वाविरुद्धोक्तौ । विरुद्धोक्तिरूपे व्यक्तवाचां समुच्चारणेर्थे वदवातिं । अप्राप्त-विभाषेयम् ॥

तत्त्वदीपिका—विप्रवदन्तीत्यादि । युगपत्परस्परं विरुद्धं वदन्तीत्यर्थः ।

**मू०—अवाद्गिरतेः ॥अवगिरते ।**

सुबोधिनी—अवाद्गिरतेः । गिरतेरिति तौदादिकस्यैव ग्रहणं । गृणातेरवपूर्वस्य प्रयोगो नास्तीति भाष्योक्तेः ॥

तत्त्वदी०—अवादिति । गिरतेरिति निर्देशात्तौदादिकस्यैव ग्रहणं । गृणातेस्त्ववपूर्वस्य प्रयोगो नास्तीति भाष्योक्तेः क्रैयादिकस्याग्रहः । अतो गिर इ युक्तावप्यदोषः ।

**मू०—समःप्रतिज्ञाने ॥ शब्दं नित्यं सङ्गिरते ।**

सुबोधिनी— समःप्रतिज्ञाने । समोगिरतेरात्स्यात् प्रतिज्ञानेर्थे । संगिरते । प्रतिजानीते इत्यर्थः । प्रतिज्ञाने किं । संगिरति ग्रासम् ॥

तत्त्वदीपिका—संगिरत । इति प्रजानाति इत्यर्थः ।

**मू०—उदश्चरस्सकर्मकात् ॥ धर्ममुच्चरते ।**

सुबोधिनी—उदश्चरःसकर्मकात् । धर्ममुच्चरते । उल्लंघ्य गच्छतीत्यर्थः । सकर्मकात्किं । बाष्पमुच्चरति । उपरिष्टाद्गच्छतीत्यर्थः ॥

तत्त्वदीपिका—धर्ममुच्चरत इति । उल्लंघ्य गच्छतीत्यर्थः ।

**मू०—समस्तृतीयायुक्तात् ॥ रथेन सञ्चरते ।**

सुबोधिनी—समस्तृतीयायुक्तात् । तृतीयांतयुक्तात् समश्चरेरात्स्यात् । रथेन संचरते । व्यवधानेपि । रथेन समुच्चरते ॥

**मू०—दाणश्चसाचेच्चतुर्थ्यर्थे ॥ दास्या संयच्छते कामुकः ।**

सुबोधिनी—दाणश्चसाचेच्चतुर्थ्यर्थे । तृतीयांतयुक्तात् समो यच्छतेरात्स्यात् सा तृतीया चेच्चतुर्थ्यर्थे भवति । दास्या संयच्छते । दास्यै धनं ददातीत्यर्थः । दास्येति संप्रदाने तृतीया ॥

तत्त्वदी०—दास्येत्यादि । कामितया दास्यै ददातीत्यर्थः ।

**मू०—उपाद्यमस्स्वीकारे ॥ भार्यामुपयच्छते ।**

सुबोधिनी—उपाद्यमःस्वीकारे । उपाद्यमेरात्स्यात् स्वीकारो विवाहस्तस्मिन्नर्थे ॥

तत्त्वदीपिका—स्वीकारइति । स्वीकारोविवाहः अंगीकारमात्रमिति तु भाष्यम् ।

**मू०—यमस्सिःकिद्वाविवाहे ॥ रामस्सीतामुपायत, उपायंस्त वा ।**

सुबोधिनी—यमःसिःकिद्वाविवाहे । यमेः परः सिप्रत्ययो वा कित् स्यात् विवाहेऽर्थे । लोपस्त्वनुदात्ततनामिति मलोपः । उदायत । पक्षे उदायंस्त ॥

**मू०—ज्ञाश्रुस्मृदृशांसान्तानामात् ॥ जिज्ञासते । शुश्रूषते । सुस्मूर्षते । दिदृक्षते ।**

सुबोधिनी–ज्ञाश्रुस्मृदृशांसांतानामात् । सप्रत्ययान्तेभ्य एभ्य आत् स्यात् । अपन्हवेज्ञ इत्यादिना ज्ञाधातोः समोगमृच्छीत्यनेन श्रुदृशिभ्यां चात्मनेपदे कृते ततः सप्रत्यये सांतात् पूर्ववदादित्यनेन तदात्मनेपदं सिद्धमेव पुनर्ग्रहणं विषयांतरेप्यात्मनेपदार्थम् ॥

**मू०–अनोर्ज्ञानातेर्न ॥** अनुजिज्ञासति पुत्रम् ।

सुबोधिनी–अनोर्ज्ञानातेर्न । अनोः सांताज्ज्ञानातेर्नात् स्यात् ॥

**मू०–प्रत्याङ्भ्यांश्रुवः ॥** प्रतिशुश्रूषति आशुश्रूषति ।

सुबोधिनी–प्रत्याङ्भ्यांश्रुवः । आभ्यां सांताच्छृणोतेर्नात् ॥

**मू०–स्वराद्यन्तोपसर्गाद्युजेरयज्ञे ॥** प्रयुङ्क्ते । उद्युंक्ते । अयज्ञे किम् । पात्राणि प्रयुनक्ति ।

सुबोधिनी–स्वराद्यंतोपसर्गाद्युजेरयज्ञे । स्वरादेः स्वरांताच्चोपसर्गाद्युजेरात् न तु यज्ञपात्रेर्थे ॥

तत्त्वदीपिका–स्वराद्यंतोपसर्गादिति । स्वरआदिरंतोवयवो यस्य स तथा तेन समादयो व्यावृत्ताः

**मू०–समःक्ष्णुवः ॥** संक्ष्णुते शस्त्रम् ।

सुबोधिनी–समःक्ष्णुवः । समःक्ष्णोतेरात्स्यात् ॥

तत्त्व०–संक्ष्णुतेशस्त्रमिति । समोगमित्यादौ न पठितः । अस्यात्र सकर्मकस्य ग्रहणात् ।

**मू०–भुजोऽपालने ॥** ओदनम्भुङ्क्ते । पालने तु महीम्भुनक्ति ।

सुबोधिनी–भुजोऽपालने । अभ्यवहारे इति वक्तव्ये अपालन इति पर्युदासग्रहणं प्रयोजनद्वंद्वार्थं । संयोगवद्विप्रयोगस्यापि विशेषावधारणहेतुत्वात् रौधादिकस्यैव भुजेर्ग्रहणमित्येके। अभ्यवहारादर्थांतरे उपभोगादावप्यात्मनेपदं भवतीति । द्वितीये निषधस्य निषेधः । पर्य्युदासः भुजेरान्नस्यात् पालनेऽपालनत्वात् । उपभोगार्थे तु वृद्धो जनो दुःखशतानि भुंक्ते इतीह भुजेरुपभोगोऽर्थः । उपभोग इत्युपलक्षणं । तेन बुभुजे पृथिवीपालः पृथिवीमेवकेवलामित्यत्रात्मसात्करणमर्थः । पृथिवीं बुभुजे । स्वाधीनां चकारेत्यर्थः । भुजोकौटिल्ये इति तुदादेस्तु पमेव । पाणिं विभुजति । अपालने किं । महीं भुनक्ति ॥

तत्त्वदीपिका–भुजो इति । रुधादेरेवग्रहणं तौदादिकस्यअनवन इति प्रतिषेधात् । तेन विभुजति पाणिमित्यादावदोषः । बुभुजे पृथिवीपाल इत्यादौ तु भुजेरुपभोगार्थः । अन्यथा भुजोभक्षण इत्येवाकरिष्यत् ।

**गृधिवंचिभ्यांण्यन्ताभ्याम्प्रतारणे ॥** माणवकंवञ्चयते । गर्द्धयते ।

सुबोधिनी–गृधिवंचिभ्यांण्यंताभ्यांप्रतारणे । परगामिफलार्थमिदमात्मनेपदम् । प्रतारणे किं। श्वानं गर्द्धयति । अस्याभिकांक्षामुत्पादयति । अहिं वंचयति । वर्ज्जयतीत्यर्थः ॥

**मू०–अपाद्वदः ॥** न्यायमपवदते । **समुदाङ्भ्योयमोग्रन्थे ॥** व्रीहीन् संयच्छते । धान्यान् स्वीकरोतीत्यर्थः । भारमुद्यच्छते । भारं वहतीत्यर्थः । वस्त्रमुयच्छते । वस्त्रमादधातीत्यर्थः । अग्रन्थेकिम् । वेदमुद्यच्छति । अधिगन्तुमुद्यमं करोतीत्यर्थः ।

सुबोधिनी–अपाद्वदः । अपाद्वदतेपंस्यात् । अनुपसर्गाज्ज्ञः पूर्वं व्याख्यातम् ॥

**मू०–कर्मव्यतिहारेधातोरात् ॥** व्यतिभवते । व्यतिराते ।

सुबोधिनी–कर्मव्यतिहारेधातोरात् । क्रियाविनिमयेऽर्थेधातोः कर्तर्यात्मनेपदं स्यात् । व्यतिभवते । अन्यस्य योग्यं भवनमन्यतरः तंकरोतीत्यर्थः । रा दाने । व्यतिराते ॥

तत्त्व०–कर्मव्यतिहारेधातोरिति।कर्म क्रिया तस्य व्यतिहारो विनिमयो व्यत्यासस्तस्मिन्नर्थे वर्त्तमाना-द्धातोरादित्यर्थः । व्यतिभवत इति । अन्यस्य योग्यं भवनमन्यतरः करोतीत्यर्थः । परस्परकरणमपि कर्मव्यति-हारः । संप्रहरंते राजान इति यथा । अत्र च यदानेकस्य कर्तृत्वे सहविवक्षा तदा द्विवचनं च भवति सहविव-क्षाभावे त्वेकवचनमपि तेन कर्मव्यतिहारस्यानेककर्तृकत्वादेकवचनं न संभवतीति न शंकनीयं ।

**मू०–नगतिहिंसार्थपठजल्पहसात् ॥** व्यतिगच्छन्ति । व्यतिपठन्ति । व्यतिघ्नन्ति । व्यतिजल्पन्ति । व्यतिहसन्ति ।

**मू०–इतरेतरान्योऽन्यपरस्परोपपदाच्च ॥** इतरेतरस्य अन्योऽन्यस्य परस्परस्य वा । व्यतिलुनन्ति । ॥ इत्यात्मनेपदम् ॥

सुबोधिनी–नगतिहिंसार्थपठजल्पहसात् । इतरेतरान्योन्यपरस्परोपपदाच्च । नगतिहिंसार्थे-भ्यः पठजल्पहसेभ्यः इतरेतरान्योन्यपरस्परोपपदेभ्यश्च धातुभ्यः आन्नस्यात् ।

**मू०–अनुपराभ्याङ्कृञः पम् ॥** अनुकरोति । पराकरोति ।

सुबोधिनी–अनुपराभ्यांकृञःपम् । आत्मगामिफले परस्मैपदार्थमिदम् ॥

**मू०–अभिप्रत्यतिभ्यःक्षिपः ॥** पम् । अभिक्षिपन्ति । प्रतिक्षिपन्ति । अतिक्षिपन्ति ।

सुबोधिनी–अभिप्रत्यतिभ्यःक्षिपः । क्षिपप्रेरणे स्वरितेत् तस्यात्मगामिफलेपि परस्मैपदा-र्थमिदम् ॥

**मू०–प्राद्वहः ॥** प्रवहन्ति ।

सुबोधिनी–प्राद्वहः । प्राद्वहतेः पंस्यात् ॥

**मू०–परेर्मृषश्च ॥** परिमृष्यति । परिवहति ॥ इतिपरस्मैपदव्यवस्था ॥

सुबोधिनी–परेर्मृषश्च । परेर्मृषेः पं स्यात् । स्वरितेत्त्वात् परेर्मृषेः पदद्वये प्राप्ते आरम्भः । मृष आमर्षणे । दिवादिः । परिमृष्यति । अरभावे परिमर्षति । चकाराद्वहेरपिपं भवति । परिवहति । व्याङ्पर्युपेभ्योरमः । भ्वादौ व्याख्यातमिदम् । अकर्मकाद्वा । अकर्मकाद्रमतेर्वा पं स्यात् । उपादित्येव उपरमति । उपरमते वा । निवर्त्तते इत्यर्थः । बुधयुधनशजनेङ्प्रद्रु-स्रुभ्योऽण्यंतेभ्यः पं । इङ्क्रीजीनामित्यात्वे । अध्यापयति । प्रावयति । प्रापयतीत्यर्थः । द्रावयति विलापयतीत्यर्थः । स्रावयति स्पंदयतीत्यर्थः ॥

तत्त्वदीपिका–कृतायामिहटीकायांलोकेशंकरशर्मणा । पदव्यवस्थेयमगात्समाप्तिं शुभलक्षणा ।

इति पदव्यवस्था ।

**मू०–यक्चतुर्षु॥** धातोर्भावे कर्मणि च यक् प्रत्ययस्तिवादिषु चतुर्षु परतः ।

सुबोधिनी–अथ भावकर्मणोर्लडादयः॥ यक्चतुर्षु। भुविकर्मणीति चाद्भुवीत्यतोऽनुवृत्तम् अव्यवहितमपि कर्त्तरीति नानुवर्त्तते उत्तरसूत्रे कर्तृग्रहणात्। आख्यातप्रकरणादादितश्चतुर्विधेष्वाख्यातेषु चतुरः शब्दोऽस्ति तेन भावार्थकेषु कर्मार्थकेषु च चतुर्षु परतो धातोर्यक् स्यात्।

तत्त्व०–यक्चतुर्षु॥

**मू०–आद्भुविकर्मणि॥** अकर्मकाद्भावे सकर्मकाच्च कर्मण्याद्भवति। भावस्यैकत्वादेकवचनमेव। युष्मदस्मदोस्सामानाधिकरण्याभावात्प्रथमः। नामाद्यविषयत्वेऽपि प्रथमातिक्रमे कारणाभावात्प्रथमः। भूयते। भूयते। भूयताम्। अभूयत। बभूवे॥

सुबोधिनी–आद्भुविकर्म्मणि। भवनं भूः संपदादित्वाद्भावेक्विप्। तस्यां भुविशुद्धेधात्वर्थे साध्यरूपे स्वार्थे इति फलितं। घञर्थो भावस्तु सिद्धरूपः। उक्तं च "क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्तिता। सिद्धता द्रव्यमिच्छंति तत्रैच्छति घञाविधम्॥ १॥" भावो भावना उत्पादना क्रिया सा च धातुत्वेन सकलधातुषु वाच्या वर्त्तते। उक्तं च। "व्यापारो भावना सैवोत्पादना सैव च क्रिये"तिउत्पत्त्यनुकूलो व्यापार इत्यर्थः।तत्र सिद्धरूपो भावो घञादिवाच्यः तस्य तु सत्त्वरूपत्वमिष्टमेवेति। उक्तं च भाष्यकृता "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति। द्रव्यधर्मान् लिंगसंख्याकारकादीन् गृह्णातीत्यर्थः। लिंगसंख्याकारकान्वितं द्रव्यमित्युक्तेस्तेन पाकं पाकेनेत्यादौ द्वितीयादयः प्रवर्त्तते। साध्यरूपो भावस्त्वाख्यातवाच्यस्तस्यासत्त्वरूपत्वेन द्वित्वाद्यप्रतीतेर्न द्विवचनादि। भाष्ये तु आस्यंते शय्यंते इत्यत्र भावेपि बहुवचनं कृतं न च कर्मण्येवाख्यातप्रत्ययोऽस्त्विति शंक्यं धातुद्वयस्याप्यकर्मकत्वात्। आस्यंते इत्यासिकाः। शय्यंते इति शायिका इत्यत्र धात्वर्थनिर्देशे वुण्प्रत्ययः। उष्ट्रासिका आस्यंते हतशायिकाः शय्यंत इत्यत्र ह्युष्ट्राणां यादृशान्यासनानि हतानां यादृशानि शयनानि तादृशानि देवदत्तादिकर्तृकान्यासनादीनीत्यर्थः। फलाश्रयं कर्म फलं च धातुनैवोक्तमित्याश्रयमात्रमाख्यातार्थः। अनन्यलभ्यत्वात्। अकर्मकेभ्यो धातुभ्यो भावे आत्। सकर्मकेभ्यस्तु कर्मण्यात् स्यात्। साध्यरूपस्वभावस्योत्सर्गत एव संख्यानपेक्षत्वेन स्वस्यैकत्वादेकवचनमेव भवति तत्तु प्रथमस्यैव न मध्यमोत्तमयोः। युष्मदस्मदोराख्यातवाच्यकारकवाचित्वाभावात्। नाम्नोप्याख्यातवाच्यकारकवाचित्वाभावस्तथापि प्रथमोभवति तस्यानिष्पादने वचनाभावात् तत्रैकवचनस्वीकारः। प्रथमपुरुषमंतरा कथं संभवेदित्यर्थः। भावे यथा भूयत इत्यादि॥

तत्त्व०–आद्भुविकर्मणि। भवनं भूः तस्यां भुवि शुद्धे धात्वर्थे साध्यरूपभावे घञर्थस्तु सिद्धरूपो भाव इति भेदः तत्र सिद्धरूपो भावो द्रव्यवत्प्रकाशते लिंगसंख्यादीन्गृह्णातीत्यर्थः। अतो द्विवचनादिसाध्यरूपस्य त्वसत्त्वरूपत्वान्न संख्यायन्वयः। उक्तं च "क्रियायाः सिद्धतावस्था साध्यावस्था च कीर्त्तिता। सिद्धतां द्रव्यमिच्छंति तत्रैवेच्छंति घञ्विधिमि"ति। कर्म तु पारिभाषिकमेव पुनर्भावग्रहणात्। फलाश्रयः कर्म। फलस्य च धातुवाच्यत्वादाश्रयमात्रमाख्यातार्थः। अथ सकर्मकादपि भावे स्यादिति चेन्न। द्विश्चेत्यतश्चेत्यनुवर्त्तते स चावधारणार्थः। सकर्मकात्कर्मण्येव न भावे कर्त्तर्य्यपि न स्यादिति चेत् शृणु मध्येपवादन्यायेन भावस्यैव बाधनात्। एकवचनमिति। एकवचनमुत्सर्गतः करिष्यत इति वचनादिति भावः। तत्किं मध्यमोत्तमयोरपि न स्येत्याशंकायामाह। युष्मदस्मदोरिति।

**सू०— स्वरान्तानांहनग्रहदृशांचभावकर्मणोस्सितासीस्यपामि-ड्वासइण्वच्च ॥** भाविषीष्ट, भविषीष्ट । भाविता, भविता । भाविष्यते, भविष्यते । अभाविष्यत, अभविष्यत ।

सुबोधिनी—स्वरांतानांहनग्रहदृशांचभावकर्मणोः सितासीस्यपामिड्वासइण्वच्च । स्वरांतेभ्यो हनिग्रहिदृशिभ्यश्च परेषां भावे कर्मणि चार्थे स्थितानां सितासीस्यपां प्रत्ययानामिडागमो वाभवति स इट् इणीवेतीण्वत् सप्तम्यंताद्वत् । कार्यातिदेशोयम् । इणि परे यद्वृद्ध्यादिकार्यं भवति तदिण्वादिति परेणीत्यर्थः । यथा भाविता । भाविष्यते । इत्यादौ वृद्धिः । दायिता । दायिष्यते । इत्यादौ युक् । घानिता घानिष्यते । इत्यादौ घत्वं । प्रयोजकञ्यंतात् शमःक-र्मण्याख्यात कृते शामिता, शमिता । शामिष्यते, शमिष्यते । इत्यादौ मितां ञ्यंतानामित्य-नन मितामुपधाया वा दीर्घ इत्यादि ॥

**सू०—इणूतन्यकर्तरि ॥** धातोस्तनि परे भावे कर्मणि च इणप्रत्ययस्सेर-पवादः । लुक् । अभावि । अकर्मकोऽप्युपसर्गवशात्सकर्मको भवति । सुख-मनुभूयते स्वामिना । लज्जासत्तास्थितिजागरणं वृद्धिक्षयभयजीवितमरणम् । शयनक्रीडारुचिदीप्त्यर्थं धातुगणं तमकर्मकमाहुः । १ । फलव्यापारयोरे-कनिष्ठतायामकर्मकः । धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः । २ । धातो-रर्थान्तरेवृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिकाक्रिया ।३।

सुबोधिनी—इणूतन्यकर्तरि । कर्तुरन्योऽकर्ता तस्मिन्नकर्तरि भावे कर्मणिचार्थे तन्प्रत्यये परे धातोरिण् स्यात् । अकर्तरीतिकिम् । अकृत घटं कुलालः । लुगिति तनो लुक् । अभावि । अकर्मकोपि धातुः कुत्रचिदर्थांतरे सकर्मको भवति धातूनामनेकार्थत्वेनार्थान्तर-स्योपसर्गेण द्योतनाद्धेतोः । यथा । कर्मण्यात् स्वामिना सुखमनुभूयते । आत्मसात् क्रियते इत्यर्थः। लज्जासत्तास्थितिजागरणंवृद्धिक्षयभयजीवितमरणम्। शयनक्रीडारुचिदीप्त्यर्थंधातुगणं तमकर्मकमाहुः । अकर्मकधातुलक्षणमाहुः । आचार्यास्तं धातुगणमकर्मकमाहुर्ब्रुवंति । तं कं लज्जासत्तास्थितिजागरणान्यर्थाः संति यस्य स लज्जासत्तास्थितिजागरणस्तं पुनःवृद्धि-क्षयभयजीवितमरणस्तं पुनः शयनक्रीडारुचिदीप्तयोऽर्थो यस्य स शयनक्रीडारुचिदी-प्त्यर्थस्तं । फलव्यापारयोरेकनिष्ठतायामकर्मकः । धातुस्तयोर्द्धर्मिभेदेसकर्मक उदाहृतः । सकर्मकाकर्मकधातुलक्षणमाह । आचार्यैरकर्मको धातुरुदाहृतः । क सत्यां उत्पत्त्यनुकूलोव्यापारो धात्वर्थः । तत्रोत्पादनव्यापारः उत्पत्तिः फलं । यथा पचेः फूत्करणैधोदकोपस्करणादिलक्षणो व्यापारः विक्लित्त्यादि फलं तयोः फलव्यापारयोरेक-निष्ठतायां एकस्मिन् धर्मिण्याश्रये स्थितौ सत्यामित्यर्थः । धातुः सकर्मकउदाहृतः । कसति तयोः फलव्यापारयोर्धर्मिभेदे आश्रयभेदेसति एकस्मिन् धर्मिणि फलमन्यस्मिन्धर्मिणि व्यापार इत्यर्थः । धातोरर्थांतरेवृत्तेर्धात्वर्थेनोपसंग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोकर्मिका क्रिया । कुत्रचित्सकर्मकस्यापि धातोः क्रिया धात्वर्थोऽकर्मिका कर्मरहिता भवतीत्यर्थः । कुतः अन्योर्थ इत्यर्थांतरं तस्मिन्नर्थांतरे वृत्तेर्वर्त्तनाद्धेतोः । यथा नदी वहति स्यंदते इत्यर्थः। पुनर्द्धात्वर्थेन कर्मण उपसंग्रहाद्धेतोः । जीवति । प्राणान् बिभर्तीत्यर्थः । पुनः कर्मणः प्रसि-

द्धेहेतोः । मेघो वर्षति । जलमिति कर्म प्रसिद्धमेव । पुनः कर्मणोऽविवक्षातो वक्तुरिच्छाया अभावाद्धेतोः । यथा । हितान्नयः संशृणुते स किंप्रभुः । कुत्सितप्रभुरित्यर्थः । वचनमिति कर्मविवक्षितमत्र ॥

तत्त्वदीपिका—अकर्मकोऽपि इति । यो यदाऽकर्मक्रियावाच्यप्यनेकार्थत्वात्सकर्मकक्रियामुत्थापयति तदा तदर्थपरत्वे सकर्मको भवति तत्परत्वं च तस्योपसर्गेण द्योत्यते इत्यनुपसर्गवशादित्युक्तं नतु सोपसर्ग एव सकर्मकः उपसर्गस्तु द्योतक एव । अनुभूय इति । उपालंभेऽयं सकर्मकः सुखे कर्मण्यात् । फलव्यापारयोरित्यादि । फलं विक्लित्त्यादि । व्यापारः फूत्कारादिलक्षणः । एकनिष्ठतायाम् एकस्मिन् धर्मिणि स्थितौ तयोः फलव्यापारयोः धर्म्मिभेदे एकस्मिन् धर्मिणि फलमन्यस्मिन् व्यापार इति भेदे धातुः सकर्मको बोध्यः । धातोरर्थांतरे वृत्तेरित्यादि । अन्योऽर्थोऽर्थान्तरं तस्मिन् वृत्तेर्वर्त्तमानात् । उदाहरणानि यथा । नदी वहति । स्पन्दत इत्यर्थः । नृत्यति चैत्रः गात्रविक्षेपं करोतीत्यर्थः । मेघो वर्षति । जलमित्यर्थः । गच्छति । ग्राममिति शेषः ।

**मू०–शीङोऽयङ्येक्ङिति ॥ शय्यते । शिश्ये । शायिषीष्ट । शयिषीष्ट । अशायि । अयकि ऋतोरिङ्भवत्यकारप्रत्यये यकि च । घटः क्रियते । त्वं दुःखीक्रियसे रागैर्विरागैस्सुख्यहंक्रिये । चक्रे । भाव्यते । भावयाञ्चक्रे । भावयामासे । भावयांबभूवे ।**

सुबोधिनी–शीङोयङ्येक्ङिति । शेतेरयङादेशः स्यात् किति ङिति च यप्रत्यये परे । ङित्वादंतादेशः । यत इत्यलोपः । शय्यते । नुधातोरिति यः । शिश्ये । इणवद्भावाद्वावृद्धिः । शायिषीष्ट, शयिषीष्ट । करोतेः कर्म्मण्यात् उरिति न गुणः । कृषीष्ट । चौरादिकात्ण्यंताद्भावयतेः कर्मण्यात् । णेरिति णिलोपः । भाव्यते ॥

**मू०–इण्वदिटिणेर्लोपः ॥ भाविता, भावयिता । भाविष्यते, भावयिष्यते । अभावि । अभाविषाताम्, अभावयिषाताम् । सान्तात्तु, । बुभूष्यते । बुभूषाञ्चक्रे । अबुभूषि । यङन्तात्तु बोभूय्यते । बोभूयाञ्चक्रे । यङ्लुगन्तात्तु बोभूयते । बोभवाञ्चक्रे । बोभाविषीष्ट, बोभविषीष्ट । स्तूयते विष्णुः अस्तावि । अस्ताविषाताम् । अस्तोषाताम् । अर्यते । आरे । आरिषीष्ट, ऋषीष्ट, । आरिष्ठाः, आर्थाः । स्मर्यते । स्मरिता । स्मर्ता । इज्यते । ईजे । यक्षीष्ट । यष्टा ।**

सुबोधिनी–इण्वदिटिणेर्लोपः । णिलोपो वा स्यात् इण्वदिटि परे । णिलोपे भाविता । पक्षे सिसतेतीटि भावयिता । सप्रत्ययांताद्बुभूषतेर्भावे आत् । यत इत्यलोपः । बुभूष्यते । यङ्प्रत्ययांतात्तुयत इत्यलोपे बोभूयते । यङ्लुगंताद्भावे आत् । बोभूयते । स्तौतेः कर्मण्यात् । ये इति दीर्घः । स्तूयते । ऋ गतौ । कर्मण्यात् गुणोर्तीति गुणः । अर्य्यते । इण्वदिटि तु धातोर्नामिन इति वृद्धिः । आरिता । स्मृचिंतायाम् । गुणोर्तीति गुणः । स्मर्य्यते यजतेः कर्मण्यात् । यजामिति संप्रसारणम् । इज्यते । लिटि ईजे । आशिषि लिङि । यक्षीष्ट ।

**मू०–तनोतेर्वा आत्वं यकि ॥ तायते, तन्यते । तनिषीष्ट । अतानि । जायते, जन्यते ।**

सुबोधिनी–तनोतेर्वाआत्वं यकि । तनेराकारांताऽऽदेशो वा स्यात् यक् प्रत्यये परे । जनेर्वायकि जनेराकारांतादेशो वा स्यात् यकि परे ॥

**मू०—तपोऽनेणुकर्मकर्त्तर्यनुतापेच ॥** अन्वतप्त देवदत्तः पापेन । दादेरिः । दीयते । ददे ।

सुबोधिनी—तपोनेणुकर्मकर्त्तर्यनुतापेच । तपेरिण् प्रत्ययो न स्यात् अनुतापेऽर्थे कर्मकर्त्तर्यर्थे च । अन्वतप्त देवदत्तः पापेन । पापेन कर्त्राऽभ्याहत इत्यर्थः । भावेपीदं बोध्यम् । पापेन पापवता पुंसाऽविचार्य्य कृत्वा पश्चादशोचीत्यर्थः । कर्मकर्तरि तु अतप्त तपस्तापस इत्यत्र तपस्तपःकर्मकस्येत्यनेन कर्तुः कर्मवद्भावः । डुदाञ् दाने । दादेरित्वं ये इति दीर्घः । दीयते । आतोनपीत्यालोपे ददे ॥

तत्वदीपिका—तपोनेणुकर्मकर्त्तरि अनुतापेच । तपसंतापे इत्यस्मादिण् न । तपो नेति । पूर्वं कृतं यत्पापं कर्म तेनाभ्याहतो देवदत्त इत्यर्थः । पापेनेति । कर्त्तरितृतीया । यदा तु कर्म न विवक्ष्यते शोकार्थावातिस्तदाभावे लः । पापेनेति । कर्त्तरि तृतीयाकरणे पुरुषधर्मयोरनभिधानात् । अभ्याहननार्थस्य तु कर्मकर्तृविवक्षायां हेतौ तृतीयेतिबोध्यम् ।

**मू०—आतोयुक् ॥** इणि ञ्णिति कृति च । दायिषीष्ट, दासीष्ट । अदायि । अदायिषाताम्, अदिषाताम् । धीयते । स्थीयते । अग्लायि । हन्यते । हनो घ्ने । घानिषीष्ट, वधिषीष्ट । घानिता, हन्ता । अघानि । अघानिषाताम्, अहसाताम् । अवधि । अवधिषाताम् ।

सुबोधिनी—आतोयुक् । आदंतस्य धातोर्युक् स्यात् इणि प्रत्यये परे ञिति णिति कृत्प्रत्यये च परे । घञि दायः । वुणि । दायकः । इण्वदिटि दायिषीष्ट । इण्वदिटोऽभावे दासीष्ट । लुङि । अदायि । इण्वदिटि अदायिषाताम् । तदभावे अपिद्दाधास्थामितीत्वम् । अदिषाताम् । एवं धास्थाधातू । ग्लै हर्षक्षये । इण्वदिटि युक् । अग्लायिषाताम् । हंतेः कर्मण्यात् । हन्यते । पूर्वाद्धंतेरिति घः । जघ्ने । हनो लुङ्लिङोरिति वधः यत इत्यल्लोपः । वधिषीष्ट, हनोघ्नत् इति घः । अतउपधाया इति वृद्धिः । घानिषीष्ट । इण्वद्भावो वधादेशस्य बाधको ज्ञेयः । अत्र हनोघदित्यनेन घदादेशो न । इण्वर्जिते इत्युक्तत्वात् । ल्टटि इण्वदिटि घानिष्यते । पक्षे हनृत इतीट् । हनिष्यते । लुङि इण्वदिडभावे हनःसिः किदिति किस्वात् लोपस्त्वनुदात्ततनामिति नलोपः । अहसाताम् । गृह्णातेः कर्मण्यात् । ग्रहामिति संप्रसारणं गृह्यते ।

तत्त्वदीपिका—वधिषीष्टेति । इण्वदभावे वधादेशो बोध्यः । वध हिंसायामिति । प्रकृत्यन्तरं । अवधीदिति । जनिवध्योरिति वृद्धिनिषेधः । हनादेशस्य त्वदन्तत्वान्न वृद्धिः । तथा च प्रयोगः 'भक्षकश्चेन्न विद्येत वधकोपि न विद्यते' इति ।

**मू०—इण्वदिटोनदीर्घः ॥** ग्राहिता, ग्रहिता । दर्शिषीष्ट, दृक्षीष्ट । दर्शिता, द्रष्टा । अदर्शि । अदर्शिषाताम्, अदृक्षाताम् । शम्यते मुनिना ।

सुबोधिनी—इण्वदिटो न दीर्घः । इटो ग्रहामिति सूत्रेण सिसतेत्यादिलक्षणेन विधीयमानस्यैवेटो दीर्घो भवति नेण्वदिट इत्यर्थः । दृशेः कर्मण्यात् । लुङि इण्वदिटि परे उपधाया लघोरिति गुणः । अदर्शिषातां । पक्षे छशषेति षत्वं षढोरिति कः । दृशषांतादिति सक् तु न । नदुदृशेरित्युक्तत्वात् । सिस्योरिति न गुणः । अदृक्षातां । शमेर्भावे आदकर्मकत्वात् ।

**मू॰–मान्तस्यसेटोनवृद्धिरिणिञ्णितिकृतिचनत्वाचामिकामिव मीनाम् ॥** अशामि । अदमि । आचामि । अकामि । अवामि । ञ्यन्ता-त्तु शम्यते मोहो मुनिना । शमयाञ्चक्रे ।

सुबोधिनी–मांतस्यसेटोनवृद्धिरिणिञ्णितिकृतिचनत्वाचामिकामिवमीनां । सेटो मांतस्य धातोः वृद्धिर्न स्यात् इणि ञिति णिति कृत्प्रत्यये च परे । आचमिकमिवमीनां तु वृद्धिर्भवतीत्यर्थः । घञि शमः । दमः । वुणि शमकः । दमकः । कथं तर्हि हरेर्यदक्रामि पदैककेन खमिति श्रीहर्षप्रयोग इति चेदुच्यते । "निवृत्तप्रेषणाद्धातोः प्राकृतेर्थे णिजिष्यते" इति प्राकृते ञिस्तत इण् बोध्यः । सेटः किम् । अगामि । कमुकांतौ । कमेः स्वार्थे ञिङिति ञिङ् वा ञेरिति ञिलोपः । काम्यते । लुङि ञिङभावे । अकामि । ञिञिङोरप्येवं । ञ्यंतात् शमेः कर्मण्यात् । ञेरिति ञिलोपः । शम्यते । कासादिप्रत्ययादित्याम् । शमयांचक्रे ॥

**मू॰–मितांञ्यन्तानामिणिणमिचवादीर्घः ॥** शामिता शमिता शमयिता । अशामि । अशामिषाताम् । अशमियिषाताम् । वधहिंसायाम् । वध्यते । जनिवध्योर्न वृद्धिः । अवधि ।

सुबोधिनी–मितांञ्यंतानामिणिणमिचवादीर्घः । मित्संज्ञकानां ञ्यंतानां धातूनां वा वृद्धिर्भवति इणप्रत्यये णमूप्रत्यये च परे । इण्वदिटि ञेरिति ञिलोपो वृद्धिश्च वा । शामिता । पक्षे शमिता । पक्षे सिसतेतीटि गुणः । शमयिता । यङंतप्रकृतिकञिप्रत्ययान्तात् शंशमेः कर्मण्यात् । ञौ परतोऽनपिचहसादिति यलोपः यत इत्यल्लोपः ततो यकि ञेरिति ञिलोपः शंशम्यते । लुटि शंशामिता, शंशमिता शंशमयिता । लुङि अशंशामि, अशंशमि । णमूप्रत्यये तु शंशामं, शंशमम् । वध हिंसायां । हसांतः ॥

**मू॰– भञ्जेरिणिनलोपोवा ॥** अभाजि, अभञ्जि ।

सुबोधिनी–भञ्जेरिणि नलोपो वा।भञ्जो आमर्द्दने इत्यस्य नस्यलोपोवा स्यादिणि प्रत्यये परे।

**लभेरिण्णमोर्नुम्वा ॥** अलम्भि, अलाभि । गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् ॥ बुद्धिभक्षार्थयोश्शब्दकर्मकाणां निजेच्छया ॥ १ ॥ प्रयोज्यकर्मण्यन्येषां ञ्यन्तानां लादयो मताः ॥ गौर्दुह्यते पयः धुक्षीष्ट । अजा ग्रामं नीयते । ह्रियते । कृष्यते । उह्यते । बोध्यते माणवकं धर्म्मः । माणवको धर्ममिति वा । भोज्यते माणवकमोदनः ओदनंमाणवको वा । पाठ्यते माणवकं वेदः माणवको वेदमिति वा । देवदत्तो ग्रामङ्गम्यते ।

सुबोधिनी–लभेरिण्णमोर्नुम्वा। डुलभष् प्राप्तावित्यस्य नुमागमो वा स्यात् इणि प्रत्यये णमि प्रत्यये च परे । प्रादेर्नित्यं नुम्प्रपूर्वस्य लभेर्नित्यंनुम् स्यात् णमि प्रत्यये। प्रलंभं॥अथ ये द्विकर्मक धातवस्तेभ्य आत् कृत्यक्तखलर्थप्रत्ययाः किं मुख्ये कर्मणि उत गौणे । किंचोभयोरिति संदेहे व्यवस्थामाह । गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहां ॥ बुद्धिभक्षार्थयोः शब्दकर्मकाणां निजेच्छया ॥ १ ॥ प्रयोज्यकर्मण्यन्येषां ञ्यंतानां लादयो मताः । दुह्याच्चिति कारके उक्तं दुह्यादिद्वादशसंख्यस्य धातोर्गौणे कर्मणि लादयः प्रत्यया मताः । नीप्रभृतीनां चतुर्णां प्रधाने

कर्म्मणि लादयो मताः । बुद्धिभक्षार्थयोर्ण्यन्तयोः शब्दकर्मकण्यंतानां च प्रयोज्यप्रधानयोरन्यतरकर्मणि निजेच्छया लादयो मताः । अन्येषां ण्यन्तानां तु प्रयोज्यकर्मणि लादयो मताः कारके गतिबुद्धीत्यनेन कर्तुर्यत्कर्मकारकं कृतं तद्योज्यं कर्म ज्ञातव्यं । लादय इत्यत्रादिशब्देन कृत्यक्तखलर्थाः प्रत्यया ग्राह्याः । दुह्यादेर्गौणे कर्मण्यात् । उदाहरणमाह । गौर्दुह्यते पय इत्यत्र गौरिति गौणं कर्म तत्राख्यातेनोक्तत्वादन्योक्ते इत्यनेन प्रथमा । पय इति तु मुख्यं कर्म तत्र कर्मणि द्वितीया । कर्त्तरि इत्यनुक्तत्वात्तृतीया देवदत्तेनेति । न्यादीनां प्रधानकर्मण्यात् । उदाहरणमाह । अजा ग्रामं नीयते इत्यत्राजेति मुख्यं कर्म । तत्रोक्तत्वात्प्रथमा ग्राममिति गौणं कर्म । कर्त्तातु तृतीयांतोऽध्याहार्य्यः । बुद्धिभक्षार्थयोः शब्दकर्मकाणां च ण्यंतानां प्रयोज्ये मुख्ये च कर्मण्यात् । उदाहरणमाह । बोध्यते माणवकं धर्म इत्यत्र धर्म इति मुख्यं कर्म माणवकमिति प्रयोज्यं कर्म । तत्र निजेच्छयाऽऽख्यातादिः कर्तव्यः । भोज्यते माणवकमोदन इत्यत्रौदन इति मुख्यं कर्म माणवकमिति प्रयोज्यं कर्म तत्र निजेच्छयाऽऽख्यातादिः । पाठ्यते माणवकं वेद इत्यत्र वेद इति मुख्यं कर्म माणवकमिति प्रयोज्यं कर्म तत्र निजेच्छयाऽऽख्यातादिः । तृतीयांतः कर्ताध्याहार्य्यः । ण्यंतस्य प्रयोज्यकर्मण्यात् । उदाहरणमाह । देवदत्तो ग्रामं गम्यते इत्यत्र ग्राममिति मुख्यं कर्म देवदत्त इति प्रयोज्यं कर्म तत्राख्यातादिः । कर्मण उक्तत्वात् प्रथमा । कर्त्ता तु तृतीयांतोऽध्याहार्य्यः ॥

तत्त्व०—द्विकर्मकाणांतु । गौणे कर्मणीत्यादि । गौर्दुह्यतइति । गौरिति गौणं कर्म । अजेत्यादि । अजात्र प्रधानं । निजेच्छयेति । गौणप्रधानयोरात्मेच्छयेत्यर्थः । अन्येषामिति । पूर्वोक्तव्यतिरिक्तानामित्यर्थः ।

**मू०-अकर्मकाणांकालादिकर्मकाणाम्भावेकर्मणिचलकारः ॥ मासं, मासो वास्यते देवदत्तेन । क्रोशः क्रोशं वास्यते । कुरवः, कुरून् वास्यते । गोदोहङ्गोदोहो वास्यते । ण्यन्तात्तु प्रयोज्ये प्रत्ययः । मासमास्यते माणवकः ।**

॥ इति भावकर्मप्रक्रिया ॥

सुबोधिनी—अकर्मकाणां कालादिककर्मकाणांभावेकर्मणिच्चलकारः । कालादिकर्मकाद्धातोर्भावकर्मणोरर्थयोराख्यातो भवति । कारके । अकर्मकधातुभिर्योगे इति सूत्रेण कर्मसंज्ञा येषां धातूनां कृता ते कालादिकर्मकाः । कालादिकर्मकस्य कर्मण्यात् । उदाहरणमाह । मास आस्यते इत्यत्रकालवाचिकर्मण आख्यातेनोक्तत्वात् प्रथमा । कर्ता तु तृतीयांतोऽध्याहार्यः । भावे तु मासमास्यते देवदत्तेनेत्यत्र कर्मणोऽनुक्तत्वान्मासमिति द्वितीया । कर्तुरनुक्तत्वाद्देवदत्तेनेति कर्त्तरि तृतीया । ण्यंतात् कालादिकर्मकाद्धातोस्तु प्रयोज्यकर्मण्येवाख्यातादिः । मासमास्यते माणवक इत्यत्र कालवाचिकर्मणोऽनुक्तत्वान्मासमिति द्वितीया । माणवक इति प्रयोज्यं कर्म । तत्राख्यातेनोक्तत्वात् प्रथमा । कर्तरि त्वनुक्तत्वात् तृतीया देवदत्तेनेति ।

॥ इति भावकर्मप्रक्रिया ॥

**मू०—यदासौकर्य्यातिशयन्द्योतयितुंकर्तृव्यापारो न विवक्ष्यते तदाकारकान्तराण्यपि कर्तृसंज्ञां लभन्ते । साध्वसिश्छिनत्ति । काष्ठानि पचान्ति । स्था-**

ली पचति । पच्यते ओदनेन । अपाचि । भिद्यते काष्ठेन । अभेदि । तेनोक्ते कर्मकर्तरि यगादिणिण्वदिटः । पच्यते ओदनः । अपाचि । भिद्यते काष्ठम् । अभेदि ।

सुबोधिनी—सकलकारकाणामवांतरव्यापारो वर्त्तते सकलकारकाणामवांतरव्यापारहीनस्याकारकत्वात् तत्र स्वव्यापारे स्वातंत्र्यं च व्यापारभेदाऽऽकांक्षायां करणादिसंभवः । तत्र यदा कारकांतराणां सौकर्य्यातिशयं द्योतयितुं प्रतिपादयितुं कर्तृव्यापारो वक्तुं नेष्यते तदा कारकांतराण्यपि कर्तृसंज्ञां प्राप्नुवन्ति । स्वव्यापारे स्वतंत्रत्वात् सुष्ठुकरोतीति सुकरस्तस्य भावः सौकर्यं । कारकांतराणां पूर्वं करणत्वादिसत्त्वेपिकर्तृसंज्ञाकरणात् कर्त्तर्याख्यातो भवति । साध्वसिश्छिनत्तीत्यत्र करणस्य कर्तृसंज्ञा । आख्यातेन कर्तुरुक्तत्वाद-सिरित्यत्र प्रथमा । काष्ठानि पचंतीत्यत्रापि करणस्य कर्तृसंज्ञा कर्तुराख्यातेनोक्तत्वात् काष्ठानीति प्रथमा । स्थाली पचति इत्यत्राधारस्य कर्तृसंज्ञा कर्तुराख्यातेनोक्तत्वात् स्थलीति प्रथमा । कर्मणस्तु कर्तृत्वविवक्षायां प्राक् सकर्मका अपि प्रायेणाकर्मकाः । कर्मणः सौकर्यातिशयं द्योतयितुं यदा कर्तृविवक्षा ततः प्राक् सकर्मका अपि धातवोऽकर्मकाः प्रायेण भवंति प्रायेणेत्युक्तत्वादेककर्मकाः छिदिभिदिप्रभृतय एवाकर्मकाभवंति नतु द्विकर्मकाः । अकर्मकस्य फलमाह । तेभ्यो भावे कर्त्तरि च लकारः कर्मकर्तुरकर्मकाद्धातोर्भावे कर्तरि चार्थे आख्यातप्रत्ययो भवति भावे । आख्यातस्योदाहरणमाह । पच्यते ओदनेन भिद्यते काष्ठेनेत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातस्तु भावे कर्तुरनुक्तत्वात् ओदनेनेत्यादौ तृतीया । कर्मकर्त्तर्याख्यातस्योदाहरणमाह । तेनोक्ते इत्यादि कर्मवत् कर्मणा तुल्यक्रियः । कर्मस्थया क्रियया तुल्यक्रियः कर्त्ता कर्मवद्भवति । कार्यातिदेशोयं । कर्मणो यत्कार्यं भवति तत्कर्मकर्तुरपीत्यर्थस्तेन यक्चतुर्ष्विति यक् आद्धुवीत्यात् इणतनीतीण् स्वरांतानामितीण्वदिट इत्यादि कार्याणि कर्मकर्तरि भवंति । काष्ठं भिनत्तीत्यत्र काष्ठस्था या विदारणाश्रयत्वरूपा क्रिया सैव काष्ठं भिद्यते स्वयमेवेत्यत्र तस्मिन्कर्तृभूतेपि भवति । अयं कार्यातिदेशः कर्मस्थभावकानां कर्मस्थक्रियाणां च धातूनां भवति नतु कर्तृस्थभावकानां कर्तृस्थक्रियाणां च धातूनां भवति यत्र कर्म्मणि दृष्टे क्रियानुमातुं शक्यते ते कर्मस्थक्रियास्ततोऽन्ये कर्तृस्थक्रियाः । पक्वेषु तण्डुलेषु भिन्नेषु च काष्ठेषु दृष्टेष्वदृष्टः कर्तृव्यापारोऽनुमीयते । तदुक्तं च । कर्मस्थः पचतेर्भावः कर्मस्था च भिदेः क्रिया ॥ आशासिभावः कर्तृस्थः कर्तृस्था च गमेः क्रिया ॥ १ ॥ यद्यप्याधारभावयोरित्यत्र भावशब्देन क्रियापि गृह्यते तथाप्यत्र भेदो विवक्षितः पृथगुपादानात् परिस्पंदरूपो धात्वर्थः छिदादिः क्रिया अपरिस्पंदरूपो विक्लित्त्यादिर्भावः । पचत्योदनं भिनत्ति काष्ठं च देवदत्तः । पच्यते ओदनः भिद्यते काष्ठं स्वयमेवेत्यत्राख्यातेन कर्तुरुक्तत्वात् प्रथमा । कर्तृस्थक्रियाया उदाहरणमाह । आशास्ते घटं देवदत्तः । आशास्ते घटः स्वयमेव । गच्छति ग्रामं देवदत्तः । गच्छति ग्रामः स्वयमेवेत्यत्र घट ग्रामयोर्दृष्टयोर्नहि देवदत्तस्य व्यापारोऽनुमातुं शक्यते इति कर्तृस्थत्वं क्रियायाः ॥

तत्त्वदीपिका—यदा सौकर्यातिशयमित्यादि । अयमर्थः । सकलकारकाणामवान्तरव्यापारोस्ति व्यापारहीनस्य कारकत्वाभावात् स्वव्यापारे स्वतंत्रत्वं सर्वत्रैव कारकेऽस्तिव्यापारभेदाकांक्षायां कारकत्वादिसंभवः तत्र यदा कर्मणः सौकर्यातिशयप्रतिपादनाय कर्तृव्यापारो न विवक्षितस्तदा भिदादिकर्मव्यापारिकारकमात्रे प्रवर्तते । व्यापारमात्रं प्रति च कर्तृत्वमेव काष्ठादीनां तदाकरणत्वादिलेशोपि न । तदा सकर्मकाणामप्यकर्म-

कत्वमेव । तत्र भावे कर्त्तरि च लकाराः कर्त्तरि तु लेनोक्त इत्यादि कर्मग्रहणात्लाव्यासिरित्यादौ न यद्यपि काष्ठादेरचेतनतया कुठारोद्यमनानिपातनादिकरणसंभवेन भेदनादिकर्त्तृत्वमनुपपन्नं तथापि स्वधर्मः प्रशिथिलावयवसंयोगविस्मरणादिभिः कर्मकर्त्तृत्वमिति ध्येयम् ।

**मू०–द्विकर्मकाणान्न ॥ अजा ग्रामं नयति ।**

सुबोधिनी–द्विकर्मकाणांन । द्विकर्मकधातूनां कर्मकर्त्ता कर्मवन्न भवति । अजा ग्रामं नयतीत्यत्र प्रधानकर्मणः कर्तृसंज्ञा । प्रधाने नीहृकृष्वहामित्युक्तत्वात् । आख्यातेनोक्तत्वात्तत्र प्रथमा । इह प्रतिषेधाभावे यक् स्यात् । क्रिया लस्याकर्तृगामित्वेप्यात्मनेपदं स्यादित्यर्थः ॥

**मू०–दुहिपच्योस्सकर्मकयोर्वा ॥**

सुबोधिनी–दुहिपच्योः सकर्मकयोर्वा । अनयोः कर्मकर्त्ता कर्मवद्वा भवति ॥

**मू०–दुहस्नुनमांकर्मकर्तरियगिणौन ॥ गौः पयो दुग्धे । दोग्धि वा ।**

सुबोधिनी–दुहस्नुनमांकर्मकर्त्तरियगिणौन । एभ्यो यगिणौ प्रत्ययौ न भवतः कर्मकर्त्तर्यर्थे । दुहेरनेन यक् निषिध्यते । इण् तु विकल्पेन वक्ष्यते । गौः पयो दुग्धे इत्यत्र गौणकर्मणः कर्तृत्वविवक्षा । गौणे कर्मणि दुह्यादेरित्युक्तत्वात् ॥

**मू०–स्वरांतानांकर्मकर्तरीण्वातनि ॥ अकारि, [illegible] अकृत कटस्स्वयमेव ।**

सुबोधिनी–स्वरांतानांकर्मकर्त्तरीण्वातनि । स्वरांतेभ्यो धातुभ्य इण् प्रत्ययो वा भवति कर्मकर्त्तर्यर्थे तनिपरे । स्वरान्तानां किम् । अभेदि काष्ठं । कर्मकर्त्तरि किम् अकारि घटः कुलालेन । कर्मकर्त्तरि लुङ् यथा । अकारि घटः स्वयमेव । पक्षे लोपोऽह्रस्वादिति सिलोपः । अकृत ॥

**मू०–दुहश्च ॥ अदोहि, अधुक्षत, अदुग्ध । उदुम्बरः फलम्पच्यते । पचति वा । प्रस्नुते गौः । स्नुक्रमोरातिनेट् । प्रास्नाविष्ट, प्रास्नोष्ट । नमते दण्डः । अनंस्त ।**

सुबोधिनी–दुहश्च । दुहेरिण् प्रत्ययो वा भवति कर्मकर्त्तर्यर्थे तनि परे । कर्मकर्त्तरि किम् । अदोहि गौर्देवदत्तेन । कर्मकर्त्तरि लुङः यथा इण्प्रत्यये अदोहि । पक्षे हशषांतादिति सक्, दुहदिहलिहगुहूभ्य इतिसको वा लुक् । अधुक्षत । पक्षे अदुग्धफलं पच्यते उदुंबर इत्यत्र गौणकर्मण उदुंबरस्य कर्तृसंज्ञा । गौणे कर्मणि दुह्यादेरित्युक्तत्वात् । तत्र कर्मवद्भावस्तेन यगादिणिण्वदिटो भवंति । ष्णु प्रस्रवणे । प्रस्रवणमुत्कंठा । वत्सो गां प्रस्नौति । उत्कंठयतीत्यर्थः । गोः कर्मणः कर्तृत्वविवक्षायां प्रस्नुते गौः । लुङि स्वरांतानांहनग्रहेतीण्वदिट् । प्रास्नाविष्ट । पक्षे स्नुक्रमोरिति नेट् । प्रास्नोष्ट । नमते दण्ड इत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि अनंस्त । अत्र कर्मकर्त्तर्यात्मनेपदमेव जातम् । अत्र च अन्तर्भावितण्यर्थो बोध्यः ॥

**मू०–सृजेश्श्रद्धोपपन्नेकर्तरिवा ॥ सृज्यते, स्रजं भक्तः । असर्जि ।**

सुबोधिनी–सृजेः श्रद्धोपपन्नेकर्त्तरिवा । सकर्मकस्य सृजेः कर्त्ता कर्मवद्वा भवति श्रद्धायुक्ते कर्त्तर्यर्थे सृज्यते स्रजं भक्त इत्यत्र कर्तरि आख्यातादिः । कर्तुः कर्मवद्भावात् आद्यगिणो भवति । श्रद्धयानिष्पादयतीत्यर्थः ॥

**मू०–युजेर्वा ॥ युज्यते ब्रह्मचारी योगं । युनक्ति वा ।**

सुबोधिनी–युजेर्वा । सकर्मकस्य युजेः कर्त्ता कर्मवद्वा भवति । युज्यते योगं ब्रह्मचारीत्यत्र कर्त्तरि आख्यातः । कर्तुः कर्मवद्भावादाद्यगिणः । तपस्तपःकर्मकस्य । तपःकर्मकस्य तपेः कर्ता कर्मवद्भवति । तप्यते तपस्तापस इत्यत्र कर्तर्याख्यातः । कर्त्तुः कर्मवद्भावादात्मनेपदादिः । अर्जयतीत्यर्थः । लुङि तपोनेणित्यनेनेण् न । अतप्त ॥

**मू०–भूषावाचिनाङ्किरादीनांसान्तानाञ्चयगिणिण्वदिटोन ॥ अलंकुरुते कन्या । अलमकृत । अवकिरते हस्ती । अवाकरिष्ट, अवाकरीष्ट, अवाकीर्ष्ट । अवगिरते पुष्पम् । अवागीर्ष्ट । आद्रियते दानम् । आदृत । ध्रियते । अधृत । पृच्छते । अप्रष्ट । चिकीर्षते कटः । चिकीर्षांचक्रे । चिकीर्षांबभूवे । अचिकीर्षिष्ट ।**

सुबोधिनी–भूषावाचिनांकिरादीनांसांतानां च यगिणिण्वदिटोन । भूषार्थेभ्यःकिरादिभ्यः सप्रत्ययांतेभ्यश्च धातुभ्यः कर्मकर्तरियगिणिण्वदिटो न भवति । आत्मनेपदमेव भवतीत्यर्थः । तुदाद्यंतर्गणः किरादिः । कॄ विक्षेपे । गॄ निगरणे । दृङ् आदरे । धृङ् अवस्थाने । प्रच्छ ज्ञीप्सायामिति पंचकः । अलंकुरुते कन्येत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वादत्र प्रथमा । एवमग्रेपि ज्ञेयं । तुदादेरित्यः । ऋत इतीर् । अवकिरते । लुङि वृङ्वृञृदंतात्स् सिस्योरिति वेट् । अवाकरिष्ट वृङ्वृञृदंतानामिति वा दीर्घः । अवाकरीष्ट । इडभावे उरिति गुणो न ऋत इतीर् । पुनः सिस्योरिति गुणो न । अवाकीर्ष्ट । एवं गॄ । तुदादेरित्यप्रत्यये अयकीति रिङ् ततो नुधातोरितीय् । आद्रियते । लुङि उरिति गुणो न । लोपोऽह्रस्वादिति सिलोपः । आदृत । एवं धृङ् । तुदादेरित्यप्रत्यये ग्रहामिति संप्रसारणं । पृच्छते । लुङि छशषेति षत्वं झसादिति सिलोपः । अप्रष्ट । चिकीर्षते कट इत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङि सिसतेतीट् । यत इत्यल्लोपः । अचिकीर्षिष्ट ॥

**मू–ञिश्रिब्रूञ्श्रन्थिग्रंथ्यादकर्मकाणांयगिणौन ॥ कारयते कटः स्वयमेव । कारिषीष्ट । अचीकरत । उच्छ्रयते दण्डः । उदशिश्रियत । ब्रूते कथा । अवोचत । ग्रन्थते ग्रन्थः । अग्रन्थिष्ट । विकुर्वते सैन्धवाः । व्यकारिष्ट । व्यकृत ।**

सुबोधिनी–ञिश्रिब्रूञ्श्रंथिग्रंथ्यादकर्मकाणांयगिणौन । ञिप्रत्ययांतेभ्यः । श्रिब्रूञ्श्रंथिग्रंथिभ्य आत्मनेपदविधावकर्मकेभ्यश्च धातुभ्यो यगिणौ न भवतः कर्मकर्त्तर्यर्थे । आदिण्वदिटौ भवत इत्यर्थः । कारयते घट इत्यत्र ञ्यंतात् कर्मकर्तर्याख्यातः । तत्रोक्तत्वात्प्रथमा ।

लुङि णेरङित्यङ् । द्वित्वे आङि लघावित्युपधान्ह्रस्वः पूर्वस्येकारश्च लघोरिति पूर्वदीर्घः णेरिति णिलोपः । अचीकरत । उच्छ्रयते दण्ड इत्यत्र कर्मकर्त्तर्याख्यातः । अपूकर्त्तरीत्यप् । लुङि श्रिस्रुद्रुभ्य इतिङः द्वित्वे नुधातोरितीय् । उदशिश्रियत । ब्रूते कथेत्यत्र कर्मणः कर्तृसंज्ञा । आख्यातेनोक्तत्वात्तत्र प्रथमा । लुङिब्रुवोऽनपीति वच् । अस्यतिवक्तीतिङः । ङेवचेरित्युमागमः । अवोचत । श्रंथिग्रंथ्योश्चौरादिकयोर्णेरभावपक्षे श्रंथते । ग्रंथते । ग्रंथ इत्यत्र कर्मणः कर्तृत्वविवक्षा । तत्राख्यातेनोक्तत्वात्प्रथमा । लुङि अश्रंथिष्ट । अग्रंथिष्ट । क्रैयादिकयोस्तु श्रथ्नीते । ग्रथ्नीते च मेखला स्वयमेव । आत्मनेपदविधौ योऽकर्मकस्तमुदाहराति । विकुर्वते सैंधवा इत्यत्राकर्मकाच्चेत्यनेनाऽऽद्विधानं । आख्यातेनोक्तत्वात् कर्मकर्तरि प्रथमा भवतीत्यर्थः। लुङि इण्वदिटि व्यकारिष्ट । व्यकारिषातां । व्यकारिषत । इण्वदिडभावे लोपो ह्रस्वादिति सिलोपः । व्यकृत । व्यकृषातां । व्यकृषत ।

तत्त्व०--णीत्यादिः। श्रंथिग्रंथ्योर्णेरभावे ग्रहणं आदिति आत्मनेपदिनो ग्रहणम् न त्वदंतस्य। आत्मनेपदविधौ योऽकर्मकस्तमुदाहरति । विकुर्वते सैंधवा इति ।

**मू०--कुषिरञ्जोःकर्मकर्तरिवाद्वादौ ॥ कुष्यति, कुष्यते वा पादः । अकोषि । रज्यति, रज्यते वा वस्त्रम् । अरञ्जि ।**

**॥ इतिकर्मकर्तृप्रक्रिया ॥**

सुबोधिनी--कुषिरंजोः कर्मकर्त्तरि वाद्वादौ । कुषिरंजिभ्यामुभयपदं भवति कर्मकर्त्तर्यर्थे तिबादिचतुष्टये परतः अनपि त्वादात्मनेपदमेव भवति । कुष निष्कर्षे क्रैयादिकः । रंज रागे दैवादिकः। कुष्यति कुष्यते वा पाद इत्यत्र कर्मणः कर्तृत्वविवक्षायामाख्यातः कर्तुः कर्मवद्भावादात्मनेपदादिः । लुङि इणूतनीतीण् अकोषि । रज्यति, रज्यते वा वस्त्रमित्यत्रापि कर्मकर्त्तर्याख्यातः । तत्राख्यातेनोक्तत्वात् प्रथमा । लुङि अरंजि । अरंक्षातां । अरंक्षत । इह कर्मकर्तृप्रकरणे भिद्यते काष्ठं स्वयमेवेत्यादौ सर्वत्र स्वयंशब्दः करणार्थको ज्ञेयः । आत्मना करणेनेत्यर्थः । कर्त्रर्थे तु कर्मण्याख्यातः स्यादित्यर्थः ॥

**॥ इति कर्मकर्तृप्रक्रिया ॥**

कृतायामिह टीकायां लोकेशंकरशर्मणा । बाधनं दुष्टबुद्धीनामगाद्भावादिसाधनम् ।

इति कर्मकर्तृप्रक्रिया ।

**मू०--स्मृतिवाचिन्युपपदेभूतानद्यतनेधातोर्लृट् ॥ लङोऽपवादः । स्मरसि कृष्ण गोकुले वत्स्यामः ।**

सुबोधिनी--स्मृतिवाचिन्युपपदेभूतानद्यतनेधातोर्लृट् । धातोर्लृट्भवति स्मृतिवाचकशब्दे उपपदे सति न तु लङ् । वयं वत्स्यामः । अवसाम इत्यर्थः । एवं बुध्यसे चेतयसे इत्यादियोगेपि ॥

तत्त्वदीपिका--स्मृतिवाचिनीत्यादि । स्मृतिवाचिनीत्युक्तेर्बुध्यसे चेतयसे इत्यादियोगेपि भवति एषामपि प्रकरणादिना स्मृतिवाचित्वात् । स्मरसीत्यादि । अत्र पश्य मृगो धावतीतिवद्वाक्यार्थस्य कर्मता बोध्या ।

**मू०--यद्योगेउक्तंन ॥ अभिजानासि कृष्ण यद्वनेऽभुञ्ज्महि ।**

सुबोधिनी–यद्योगेउक्तंन। स्मृतिवाचकशब्दे उपपदे सत्यपि यच्छब्दयोगे भूतानद्यतने लृट् न भवति किंतु लङेव ॥

तत्त्वदीपिका–अभीत्यादि। अत्र लङेव न तु लृट्।

मू०–उत्तमपुरुषेचित्तविक्षेपादिनापारोक्ष्यम् ॥ सुप्तोहंकिलविललाप ॥

सुबोधिनी–उत्तमपुरुषे चित्तविक्षेपादिना पारोक्ष्यं। मदस्वप्नादिभिः कश्चित् स्वांतगतमेव न वेत्ति पश्चादन्येभ्यः श्रुत्वा प्रयुंक्ते किलशब्दोऽज्ञानसूचकः सुप्तःसन् अहं विललापेति ॥

तत्त्वदीपिका–उत्तमपुरुषेत्यादि। अत्र यद्यपि बुद्धींद्रियशरीरादिसंघातरूपस्य कर्तुरात्मनः प्रत्यक्षतैव तथापि मदस्वप्नादिभिश्च विक्षिप्ते कश्चित्स्वगतमेव न वेत्ति पश्चादन्येभ्यः श्रुत्वा प्रयुंक्ते। सुप्तोहमित्यादि। किलेत्यज्ञानं सूचयति।

मू०–अत्यन्ताऽपह्नवेलिट् ॥ कलिङ्गेष्ववात्सीः। नाहंकलिङ्गाञ्जगाम।

सुबोधिनी–अत्यंतापन्हवेलिट्। अत्यंतापलापेऽर्थे लिट् भवति कलिंगोनाम निषिद्धो देशः उक्तंच। "अङ्गवंगकलिंगेषु सौराष्ट्रमगधेषु च॥ तीर्थयात्रां विना गत्वा पुनः संस्कारमर्हतीति" केनचित्काश्चित्पृष्टः त्वं कलिंगेषु अवात्सीः तत्र गत्वा चिरंस्थितमित्यर्थः। स आह नाहं कलिंगान् जगामेति। केवलमवस्थानमेव न निषिध्यते किंतु तद्धेतुभूतं गमनमपीत्यत्यंतापन्हवो भवति ॥

तत्त्वदीपिका–अत्यंतापह्नव इति। अपह्नवोऽपलापः। नाहमित्यादि। कलिंगस्य तु जुगुप्सितत्वेन तत्र त्वया चिरं स्थितमित्युक्तः कश्चिद्गमनमेव निषेधतीत्यत्रास्यात्यंतापह्नवः। यदा तु गमनमेवायुक्तंतदेवापलपति तदा लङेवात्यंतापह्नवाभावात्।

मू०–हशश्वतोर्लिङ्विषयेलङ्लिटौ ॥ इति हाकरोत् चकार वा। शश्वदकरोत् चकार वा।

सुबोधिनी–हशश्वतोर्लिङ्विषयेलङ्लिटौ। ह शश्वत् निपातयोर्योगे लिडर्थे लङ्लिटौ भवतः॥

मू०–आसन्नकालेपृच्छ्यमानेऽर्थेलङ्लिटौ ॥ अगच्छत् किम्। जगाम किम्। अनासन्ने तु कंसञ्जघान किम्।

सुबोधिनी–आसन्नकालेपृछ्यमानेऽर्थेल ङ्लिटौ। आसन्नकालिकेभूतानद्यतनपरोक्षवृत्तिधात्वर्थे प्रष्टव्ये लङ्लिटौ भवतः। पञ्चवर्षाभ्यंतर आसन्नकालः। पंचवर्षातीतो विप्रकृष्टकालः। पृच्छ्यमाने किं। जगादैवं। लिडेव। अनासन्नेतु लिडेव। कंसं जघान किम् ॥

तत्त्व०–आसन्नेत्यादि। पंचवर्षाभ्यन्तरमासन्नकालं पञ्चवर्षातीतं विप्रकृष्टकालं वर्णयन्ति।

मू०–स्मेलट् ॥ लिटोपवादः। यजति स्म युधिष्ठिरः। भूतानद्यतने लट् स्म योगे। एवं स्म पिता ब्रवीति।

सुबोधिनी–स्मेलट्। स्मयोगे लट् भवति न तु लिट् स्मेत्यव्ययं भूतकालद्योतकं भूतानद्यतने लट् स्मयोगे। लङोपवादः। ब्रवीतिस्माब्रवीदित्यर्थः ॥

**मू०—ननौपृष्टप्रतिवचने ॥** भूते लट् । अकार्षीः किम् । ननु करोमि भोः ।

सुबोधिनी—ननौपृष्टप्रतिवचने । भूते लट् पृच्छयते इति पृष्टः कर्मणि क्तः पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनामीति षष्ठीसमासः भावे क्तप्रत्यये तु पृष्टं प्रश्नः पृष्टपूर्वं च तत् प्रतिवचनं च पृष्टप्रतिवचनामिति मध्यमपदलोपी समासः । ननु करोमि । अकार्षमित्यर्थः ॥

तत्त्वदीपिका—नना्विति । पृष्टेति कर्मणिक्तः । पृष्टस्य प्रतिवचनं पृष्टप्रतिवचनमिति षष्ठीसमासः भावे तु पृष्टं प्रश्नस्तत्पूर्वं प्रतिवचनमित्युत्तरपदलोपी समासः ।

**मू०—नन्वोर्वा ॥** अकार्षीः किम् । नकरोमि । नाकार्षम् । अहं नुकरोमि । अहं न्वकार्षम् ।

सुबोधिनी—नन्वोर्वा । ननुनिपातयोर्योगे पृष्टप्रतिवचने भूते वा लट् भवति पक्षे लुङ्-लिटौ ॥

**मू०—पुराशब्दयोगेभूताऽनद्यतनेवालुङ्लटौनतुस्मयोगे ॥** वसन्तीह पुरा छात्राः । अवात्सुः । अवसन् । ऊषुर्वा । यजति स्म पुरा युधिष्ठिरः ।

सुबोधिनी—पुराशब्दयोगेभूतानद्यतनेवालुङ्लटौ । न तु स्मयोगे पक्षे लङ्लिटौ । स्म इति किम् । यजति स्म पुरा युधिष्ठिरः ।

**मू०—यावत्पुरानिपातयोर्भविष्यतिलट् ॥** यावद्भुंक्ते । पुरा भुंक्ते । भोक्ष्यसे । भोक्ता वा ॥ **कदाकर्ह्योर्वा ॥** भविष्यति लट् । कदा कर्हि वा भुंक्ते भोक्ष्यसे । भोक्ता वा ।

सुबोधिनी—यावत्पुरानिपातयोर्भविष्यतिलट् । यावद्भुंक्ते । निश्चितं भोक्ष्यते इत्यर्थः । निपातावेतौ निश्चयंद्योतयतः । निपातयोः किम् । यावद्दास्यते । तावद्भोक्ष्यते । करणभूतया पुरा यास्यति ।

**मू०—वर्तमानसामीप्येभूतेभविष्यतिचवर्तमानवद्वा ॥** कदाऽऽगतोसि । अयमागच्छामि । अयमागमम् । कदा गमिष्यसि । एष गच्छामि, गमिष्यामि वा ।

सुबोधिनी—वर्त्तमानसामीप्येभूतेभविष्यतिचवर्त्तमानवद्वा । कदागतोसीतिभूतकालेन प्रश्नवाक्यं । अयमागच्छामीत्युत्तरं । भूतकालाभिव्यक्तयेऽयमिति प्रयोगास्त्विदानीमेवाऽऽगतमिति वर्त्तमानसमीपभूतकालद्योतनाय । तेन ह्यागमनं विना भूतरूपं धूलीधूसरताप्रस्वेदादियुक्तं तत्प्रति निर्द्दिश्यते । एवं कदा गमिष्यसीति भविष्यत्कालेन प्रश्नवाक्यम् एषगच्छामीत्युत्तरं भविष्यत्कालाभिव्यक्तये । एष इति प्रयोगस्तु इदानीमेव गमिष्यामीति वर्त्तमानसमीपभविष्यत्कालद्योतनाय । तेन हि गमनेन विना भूतं यत् परिकरबंधादियुक्तं तत्प्रतिनिर्द्दिश्यते तत्र कदेति प्रश्ने उत्तरवाक्ययोः कालानुपादानात् अयमेषशब्दाभ्यामिदानीमिति कालावगमः ॥

तत्त्वदीपिका—अयमागच्छामीत्यादि । अयमेषपदाभ्यामागमनादिना भूतं यद्रूपं प्रस्वेदादियुक्तं तत्प्रतिनिर्द्दिश्यते । इदानीमागममित्यर्थः ॥

**मू०-क्षिप्रवचनेलृट्** ॥ वृष्टिश्चेत् क्षिप्रमाशु त्वरितं वा यास्यति तदा शीघ्रं वप्स्यामः ।

सुबोधिनी-क्षिप्रवचनेलृट्। वचनग्रहणं स्वरूपग्रहणनिरासार्थं क्षिप्रपर्यायउपपदे लृट् ॥

तत्त्वदीपिका-क्षिप्रेति। क्षिप्रपर्यायस्यापि ग्रहणं। न तु स्वरूपस्यैव।

**मू०-गर्हायांलडपिजात्वोः** ॥ कालत्रये। अपि जायान्त्यजसि। जातु गणिकामाधत्से वा।

सुबोधिनी-गर्हायांलडपिजात्वोः। कालत्रये आभ्यां योगे लट् स्यात् गर्हायां। कालत्रये परत्वात् लुङादीनयं बाधते। अपिजायां त्यजसि। त्यक्ष्यसि। अत्याक्षीः। इत्यादिविषये त्यजसीत्यादि लडेव प्रयुज्यते इति भावः। एवं यो जायां अत्यजत्। तत्याज। त्यक्ष्यति अत्याक्षीत्। इत्यादिविषये यो जायामपि त्यजतीति जातु गणिकामाधत्से गर्हितमेतत्।

तत्त्वदी०-जातुगणिकामिति। गर्हितमेतत्।

**मू०-वाकथमिलिङ्लटौ** ॥गर्हायांकालत्रये। कथं धर्म्मन्त्यजेस्त्यजसि वा।

सुबोधिनी-वाकथमिलिङ्लटौ। गर्हायां कालत्रये। पक्षे लङ् लिट् लुट् लृट् लृङ् लुङः। भूतानद्यतने लङ्। कथं धर्ममत्यजः। परोक्षाऽनद्यतने भूते लिट्। कथं धर्मं तत्यक्थ। भविष्यत्यनद्यतने लुट्। कथं धर्मं त्यक्तासि। भविष्यत्सामान्ये लृट्। कथं धर्मं त्यक्ष्यसि। क्रियातिक्रमे लृङ्। कथं धर्ममत्यक्षत्। भूतसामान्ये लुङ्। कथं धर्ममत्याक्षीः ॥

**मू०-जातुयद्यदायदियोगेलिङ्** ॥ लटोपवादः। जातु यद् यदा यदि वा त्वादृशो हरिं निंदेत् नावकल्पयामि। न मर्षयामि।

सुबोधिनी-जातुयद्यदायदियोगेलिङ्। अनवक्लृप्त्यमर्षयोर्लिङ् स्यादेषांयोगे। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा। लटोपवादः। लृङ् तु क्रियाऽनिष्पत्तौ भूते वा भविष्यति तु नित्यमित्यर्थः। जातु भवान् हरिमनिंदिष्यदित्याद्युदाहर्तव्यम्। अगर्हायामिदं। गर्हायान्तु जातु योगे लडुक्तः ॥

तत्त्वदीपिका-नावकल्पयामीत्यादि। अनवक्लृप्तिरसंभावना। अमर्षोऽक्षमा।

**मू०-उताप्योर्बाढार्थयोर्लिङ्** ॥ समर्थयोरनयोर्लिङ् कालत्रये। उत आपिवा हन्यादघं हरिः। उत दण्डः पतिष्यति। अपिधास्यति द्वारम्।

सुबोधिनी-उताप्योर्बाढार्थयोर्लिङ्। समर्थयोरनयोर्योगे लिङ्। बाढार्थयोः किं। उत दण्डः पतिष्यति। अपिधास्यति द्वारमत्र प्रश्नः आच्छादनं च गम्यते।

तत्त्वदी०-समर्थयोरिति। समानोऽर्थो ययोस्तौ तयोः हलादित्वाट्टिलोपः समशब्द एव वा तुल्यार्थः। बाढमित्यर्थेऽनयोस्तुल्यार्थता। उतदण्ड इत्यादि। प्रश्नः आच्छादनं चार्थः ॥

**मू०-स्वाभिप्रायाविष्करणेगम्येलिङ्** ॥ कालत्रये न तु कच्चिदिति। कामो मे भुञ्जीत भवानिति। कच्चिदिति किम्। कच्चिज्जीवति मे माता।

सुबोधिनी–स्वाभिप्रायाविष्करणेगम्येलिङ् । न तु कच्चिदिति कालत्रये सर्वलकारापवादः। न तु कच्चिदिति किं । कामो मे कच्चिज्जीवति । वर्तमानसमीपे इति लट् ॥

**मू०–हेतुमतोर्भविष्यतिलिङ्वा ॥ कृष्णं नमेच्चेत्सुखं यायात् । कृष्णं नमस्यति चेत्सुखं यास्यति ।**

सुबोधिनी–हेतुहेतुमतोर्भविष्यतिलिङ्वा । हेतुः कारणं हेतुमत्फलम् । पक्षे लट् । कृष्णं नमेच्चेत्सुखं यायात् । कृष्णनतिः सुखप्राप्तेर्हेतुः । भविष्यत्येवेष्यते । नेह हंतीति पलायते ॥

तत्त्व०–हेतुहेतुमतोरिति । हेतुः कारणं हेतुमत्फलं । कृष्णमित्यादि नमनमात्रं हेतुः सुखप्राप्तिफलम् ।

**मू०–इच्छार्थेषुलिङ्लोटौकामप्रवेदने ॥ इच्छामि भुञ्जीत । भुंक्तां वा भवान् ।**

सुबोधिनी–इच्छार्थेषुलिङ्लोटौकामप्रवेदने। काम इच्छा तस्य प्रवेदनं प्रकाशनं तस्मिन्नर्थे।

तत्त्वदीपिका–कामप्रवेदन इति । काम इच्छा प्रवेदनं प्रकाशनं । इच्छार्थेभ्य इति इच्छा अर्थो येषांते इच्छार्था ग्राह्याः ।

**मू०–इच्छार्थेभ्योलिङ्लटौ ॥ वर्तमानाऽर्थे । कामयेत । कामयते ।**

सुबोधिनी–इच्छार्थेभ्योलिङ्लटौ । वर्त्तमाने इति शेषः।इच्छार्थो येषां ते इच्छार्थास्तेभ्यः। तेन वशकांतावित्यादयोपीच्छार्था ग्राह्याः ॥

**मू०– पौनःपुन्येभृशार्थेचधातोर्लोट्सर्वलकारविषयेतस्याहिस्वौ सर्वतुबादिविषयेतध्वमोर्विषयेवा॥क्रियासमभिहारेद्वित्वन्तस्यैव धातोरनुप्रयोगश्च ।**

सुबोधिनी–पौनःपुन्येभृशार्थेचधातोर्लोट्सर्वलकारविषयेतस्याहिस्वौसर्वतुबादिविषयेतध्वमोर्विषयेवा। पौनःपुन्यं भृशार्थश्च धातोरेवार्थः। लोट् द्योतक इति भावः। किंच तुबादीनामादेशत्वेपितेषां स्थाने विहितस्य हेः स्थानिवद्भावेन पित्त्वात् ङिच्च पिन्न पिच्च ङिन्नेति भाष्योक्तत्वात् ङित्त्वाभावे लुनीहीत्यत्र ईहसे इतीत्वं न स्यात् । तृण्ढि इत्यत्र तु तृहोनमिकृते इमागमः। पितीति इमागमे तृणेढि इति च स्यात् । अतो लोटोहिस्वावित्युक्तम्। सकलपुरुषवचनविषये परस्मैपादिभ्यो हिः कर्त्तरि । आत्मनेपदिभ्यः स्वो भावकर्मकर्त्तृषु । क्रियासमभिहारे द्वे इति द्वित्वं। यस्माद्धातोर्लोट्विहितस्तस्यैव धातोरनुप्रयोगश्च कर्त्तव्यः। अनुप्रयोगाद्यथायथं लडादयस्तिबादयश्च कर्त्तव्याः । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाभिव्यक्तिर्भवति । अत्र लोडंतविषये सङ्ख्याकारकादीनां हिस्वांताद्प्रतीतिस्तद्बोधनायानुप्रयोगो न्यायत एव । याहि याहीति याति । यातः। यांति । यासि । पुनःपुनरतिशयेन वा यानं हिप्रत्ययान्तस्यार्थः। एककर्तृकं वर्तमानं यानं याति इत्यस्याऽर्थः । इतिशब्दस्तत्त्वभेदान्वये तात्पर्यं ग्राहयाति मध्यमपुरुषबहुवचने तशब्दे तु यातयातेति यूयं याथ । पक्षे याहि याहीति यूयं याथ। एवं भूतभविष्यतोरप्युदाहरणं याहि याहीति यास्यति । याही याहीति अयासीत्। मध्यमपुरुषबहुवचने ध्वंशब्दे तु अधीध्वमधीध्वमिति । यूयमधीध्वे । पक्षे अधीष्वाधीष्वेत्यधीष्व । भावकर्मणोस्तु भूयस्व भूयस्वेति भूयते। पच्यस्व पच्यस्वेति पच्यते । गद्यस्व गद्यस्वेति गद्यते। भज्यस्व भज्यस्वेति भज्यते । इत्यादि ज्ञेयम् ॥

**तत्त्वदीपिका**—पौनःपुन्ये भृशार्थे चेति पुनःपुनर्भावः पौनःपुन्यं । भृशार्थोऽतिशयार्थः । एतद्विशिष्टक्रियावचनाद्धातोरित्यर्थः । क्रियासमभिहारे द्वित्वमिति । पौनःपुन्ये भृशार्थे चेत्यर्थः । परस्मैपदिभ्योहिःकर्तरि । आत्मनेपदिभ्यः स्वः भावकर्मकर्तृषु । सकलपुरुषवचनविषये याहि याहीतियातीति । पुनःपुनरतिशयेनवायासने लोडन्तस्यार्थः । एककर्तृकं वर्तमानं यानं तिबन्तस्य कालपुरुषविशेषाभिव्यक्तिः सर्वत्र तु प्रयोगादेव बोध्या । इतिशब्दोऽभेदान्वयद्योतकः भविष्यद्भूतयोरप्युदाहरति । यास्यतीत्यादि । स्वमुदाहरति । अधीष्वेत्यादि । सक्तून् पिबेत्यादि । सक्तुपानादिकं करोतीत्यर्थः । एवं पुरीमवस्कंद लुनीहि नंदनमित्यादि व्याख्येयं । अवचस्कंद लुलावेत्यादि । यत्तु वासुदेवादिभिरतिशयेन पुनःपुनर्वाऽवचस्कंदेत्यादिव्याख्यातं । तदसत् । अनेकक्रियासमुच्चये क्रियासमभिहारेऽस्यानुक्तेः । लोडन्तद्वित्वापत्तेश्च ।

**मू०—अनेकक्रियासमुच्चयेवालोट्तस्यहिस्वौतध्वमोर्विषयेवा ॥**
हिस्वौ समानार्थस्य धातोरनुप्रयोगात्तिबादयः । याहि याहीति याति । एवं यातः । यान्ति । यासि । याथः । याथ । यात यातेति यूयं याथ । यामि । यावः । यामः । याहि याहीति यास्यति । अयासीत् । अधीष्वाधीष्वेत्यधीते । एवमन्यत्रापि । ध्वंविषयेप्राग्वत् । पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे । सक्तून् पिब धानाः खादेत्यभ्यवहरति । पिबत खादतेत्यभ्यवहरथ । अन्नंभुंक्ष्व । दाधिकमास्वादस्वेत्यभ्यवहरते । भुंग्ध्वमास्वादध्वमित्यभ्यवहरध्वे ।

॥ इत्याख्यातप्रक्रिया ॥

**सुबोधिनी**—अनेकक्रियासमुच्चयेतुवालोट्तस्यहिस्वौतध्वमोर्विषयेवा । सामान्यार्थस्य धातोरनुप्रयोगात्तिबादयः । चिनोतिर्भावे स्वरादय इत्यप्रत्यये कृते समुच्चीयते इति समुच्चयः अस्मिन् सूत्रे पौनःपुन्ये भृशार्थेचेत्यनुवर्त्तनात् द्वित्वमकृत्वैवोदाहरति । सक्तून्पिबेत्यादि । तध्वमोस्तु पिवत खादतेति । यूयं अभ्यवहरथ । पक्षे पिब खादेति । यूयं अभ्यवहरथ । भुङ्ग्ध्वमास्वादध्वमिति यूयं अभ्यवहरध्वे पक्षे भुङ्क्ष्व आस्वादस्वेति यूयं अभ्यवहरध्वं । लोडभावपक्षे सक्तून् पिबति धानाः खादति । अन्नम्भुङ्क्ते । दाधिकमास्वादते । " धानाभ्रष्टयवे स्त्रियाम् " इत्यमरः । दध्ना संस्कृतं दाधिकं व्यंजनादि । एतेन " पुरीमवस्कंद लुनीहि नंदनं मुषाण रत्नानि हरामराङ्गनाः ॥ विगृह्य चक्रे नमुचिद्विषाबली य इत्थमस्वास्थ्यमहर्निशंदिवः॥१॥" इति व्याख्यातम् अवस्कंदनलवनादिरूपा भूताऽनद्यतनपरोक्षा एककर्तृका अस्वास्थ्याक्रियेत्यर्थात् । इह पुनःपुनश्चस्कंदेत्यादिरर्थ इति तुव्याख्यानमत्रममूलमेव द्वितीयसूत्रे क्रियासमभिहारे इत्यस्याननुवृत्तेः । लोडंतस्य द्वित्वापत्तेश्च पुरीमवस्कंदेत्यादि मध्यमपुरुषैकवचनमित्यपि केषांचिद्भ्रम एव । पुरुषवचनसंज्ञे इह नेत्युक्तत्वात् ॥

बुद्धिमांद्यवशात् किंचिद् यदशुद्धमलेखि तत् ॥
द्वेषभावं समुत्सृज्य शोधनीयं मनीषिभिः ॥

इतिश्रीसिद्धान्तचन्द्रिकाव्याख्यायां सदानन्दाख्यायामाख्यातकांडंसमाप्तम् ॥

॥ श्रीरस्तु ॥ शुभमस्तु ॥

**तत्त्वदीपिका**—कृतायामिहटीकायां लोकेशंकरशर्मणा । अगादगाधबुद्धीनां कृतमाख्यातसाधनम् ॥

इति श्रीलोकेशंकरविरचितायां सिद्धांतचंद्रिकाव्याख्यायां
तत्त्वदीपिकायामाख्यातप्रक्रियासंपूर्णा । श्रीरस्तु ।

## इति तिङन्तप्रकरणं समाप्तम् ।

श्रीः ।

# सिद्धान्तचन्द्रिकोत्तरार्धे-

## कृदन्तप्रकरणम् ।

**मू०—कृत्कर्त्तरि ॥** वक्ष्यमाणाः प्रत्ययाः कृत्संज्ञकास्ते च कर्तरि भवंति ।

सुबोधिनी—प्रतोष्य जगन्नाथं सदानंदेन सन्मुदा ॥

सिद्धांतचंद्रिकावृत्तिः क्रियते कृत्प्रकाशिका ॥ १ ॥

कृत्कर्त्तरि ॥ उत्सर्गतः कर्त्तरीति बोध्यम् ॥

तत्त्वदीपिका—ते च कर्तरीति । उत्सर्गतः कर्त्तरीति बोध्यम् ।

**मू०—तृवुणौ ॥** धातोः । पक्ता ।

सुबोधिनी—तृवुणौ । धातोरेतौ स्तः । कर्त्तरि तृप्रत्ययमाह । पचतीतिविग्रहे चोःकुरिति कः । कृत्तद्धितेति नामसंज्ञायां स्यादिर्विभक्तिः । सेरा इति सेरात्वं टिलोपश्च । पक्ता । पाकानुकूलकृतिमान् देवदत्त इत्यर्थः ॥

तत्त्वदीपिका—धातोरिति । अधिकारादिदं लब्धमित्याशयः । पक्तेति । पचतीति वाक्यं चोः कुरिति कुत्वम् ॥

**मू०—कृतः ॥** वसादेः कृत इट् । कुटिता । एधते इति एधिता । गोपायिता, गोपिता गोप्ता । सहिता, सोढा । एषिता, एष्टा ।

सुबोधिनी—कृतः । धातोः परस्य वसादेः कृत्प्रत्ययस्येट् । वसोत्र प्रत्याहारः । भवतीति भविता । कुट कौटिल्ये तुदादिः । कुटादेर्ङिणद्वर्जंत् इति प्रत्ययस्य ङित्त्वान्न गुणः । कुटतीति कुटिता । एधते इति एधिता । गुपू रक्षणे । आयादयोऽनपीति । वाऽऽयः । इति आयपक्षे कृत इति नित्यमिट् । अन्यत्र ऊदितोवेति वेट् । गोपायतीति गोपायिता, गोपिता, गोप्ता । षह मर्षणे । इषुसहेति वेट् । सहते इति सहिता । इडभावे होढ इति हस्य ढः । तथोर्द्ध इति तस्य धः । ष्टुत्वं ढिढ इति ढलोपपूर्वदीर्घौ । सहिवहोरित्योत्वं । सोढा । इषु इच्छायाम् । इषु सहेति वेट् । इच्छतीति एषिता । इडभावे ष्टुत्वम् । एष्टा । वुण् प्रत्ययमाह । णकारो वृद्ध्यर्थः ॥

तत्त्व०—कृत इति । वसादेरिति । वसप्रत्याहार आदिर्यस्य स तथा तस्य । कुटितेति । ङित्त्वान्न गुणः । सोढेति । इषुसहेत्यादिनावेट् ढत्वष्टुत्वढलोपाः । सहिवहोरित्योत्वम् ।

**मू०—युवोरनाकौ ॥** पाचकः । भावकः । आतोयुक् । दायकः । घातकः । जनकः । घटकः । दरिद्रायकः । कोटकः । शमकः । नियामकः ।

सुबोधिनी–युवोरनाकौ । युश्च वुश्च अनयोः समाहारः युवु तस्य युवोः । वक्तीति वाचकः । पचतिपाचयतीतिवा पाचकः । भवति भावयतीति वा भावकः । यदि ञ्यन्ताद्गुणविधिः तदा ञेरिति ञिलोपः । ददातीति आतोयुगिति युक् दायकः । हन्तीति हनो घदिति घत् । घातकः । जनी प्रादुर्भावे । दैवादिकः । जन जनने । जौहोत्यादिः । जनयतीति जनिवध्योरिति न वृद्धिः । ञेरिति ञिलोपः जनकः । घटयतीति मितां ह्रस्व इति ह्रस्वः । ञेरिति ञिलोपः । घटकः । दरिद्रातीति युक् दरिद्रायकः । तृप्रत्यये तु कृत इतीट् । दरिद्रातेरनपीत्यालोपः । दरिद्रिता । कुट कौटिल्ये । कुटादेर्ङिणद्वर्ज इति वुणोऽङित्त्वादुपधाया लघोरिति गुणः । कुटतीति कोटकः । शमु उपशमे । मांतस्य सेटो नेति न वृद्धिः । शाम्यतीति शमकः । यम उपरमे । नियच्छतीति मांतस्य सेट इति वृद्धिनिषेधस्तु न प्रवर्त्तते अस्यानिट्त्वात् । नियामकः ॥

तत्त्व०—युवोः । युश्चवुश्चेति समाहारः । नुसत्त्वनित्यत्वात् दायक इति । आतोयुगितियुक् । जनक इति । जनिवध्योरिति न वृद्धिः । कोटक इति । ङिणद्वर्जइति ङित्त्वाभावाद्गुणः ।

## मू०–क्रमेःकर्तर्यात्द्विषयात्कृतइण्न ॥ प्रक्रन्ता ।

सुबोधिनी–क्रमेः कर्तर्यात्द्विषयात्कृतइण्न । आत्मनेपदविषयात् क्रमेःपरस्य कर्त्तरि कृत्प्रत्ययस्येण् नभवति । प्रोपाभ्यां प्रारंभार्थाभ्यामिति क्रमेरात्मनेपदविषयता । प्रक्रमते इति प्रक्रंता । तृप्रत्ययः । कर्त्तरि किम् । प्रक्रम्यते इति प्रक्रमितव्यम् । आत्मनेपद इति किम् । संक्रामतीति संक्रमिता ॥

तत्त्व०–प्रकन्तेति । प्रोपाभ्यामित्यात्द्विषयता ।

## मू०–नाम्युपधात्कः ॥ क्षिपः । बुधः । वृतः ।

सुबोधिनी–नाम्युपधात्कः । कप्रत्ययमाह । प्रत्ययाद्या लशकवर्गा इत्संज्ञका भवंति तद्धितवर्ज्जं । कित्त्वाद्गुणो न । बोधतीति बुधः । क्षिप प्रेरणे । क्षिपतीति क्षिपः । तृप्रत्यये तु क्षेप्ता । वुणि तु क्षेपकः । वर्तते इति वृतः ॥

तत्त्व०—नाम्युपधादिति । नामी अवर्णवर्ज्जः उपधा यस्य स तस्मात् क्षिप इति क्षिपतीति विग्रहः ।

## मू०–प्रीकृज्ञाभ्यश्च ॥ नुधातोः । प्रियः । किरः । ज्ञः ।

सुबोधिनी–प्रीकृज्ञाभ्यश्च । एभ्योपि कः । प्रीञ् तर्पणे । प्रीणातीति नुधातोरितीय् । प्रियः कॄ विक्षेपे । किरतीति ऋतइरितीर् । किरः । जानातीति आतोनपीत्यालोपः । ज्ञः ॥

तत्वदीपिका–प्रिय इति । प्रीञ् तर्पणे । इय् । किर इति । कॄ विक्षेपे । ऋत इर् । ज्ञ इति । आतोऽनपीत्यालोपः ।

## मू०–उपसर्गेआदन्तात ॥ प्रदः । सुग्लः ।

सुबोधिनी–उपसर्गे आदंतात् । उपसर्गे पूर्वपदे आदंताद्धातोः कः । प्रददातीति । आतोनपीत्यालोपः । प्रदः । सुष्ठु जानातीति सुज्ञः । ग्लै हर्षक्षये । सुष्ठु ग्लायतीति सुग्लः ॥

## मू०–पचिनन्दिग्रहादेरयुणिनि ॥ पचादेरः । नन्द्यादेर्युः । ग्रहादेर्णिनिः । पचः । वदः । चलः । पतः । चरः ।

सुबोधिनी—पचिनंदिग्रहादेर्युणिनि । द्वंद्वांते श्रूयमाणः शब्दः प्रत्येकं संबद्ध्यत इत्यादिशब्दः प्रत्येकं योज्यः पचादेर्धातोरप्रत्ययः नंद्यादेर्धातोर्युप्रत्ययः । ग्रहादेर्धातोर्णिनिप्रत्ययः । अप्रत्ययमाह । पचतीति पचः । वदतीति वदः । चल संचलने । चलतीति चलः। पतॢ पतने । पततीति पतः । चरतीति चरः ॥

तत्त्वदीपिका—पचिनंदिग्रहादेरित्यादि । द्वंद्वांते श्रूयमाणतदादिशब्दस्य प्रत्येकंयोगः । अश्च युश्च णिनिश्चेति समाहारद्वंद्वः एते च गणा न धातुपाठे पठ्यन्ते किन्तु नंदरमण इत्येवमादिषु नामगणेषु वोद्धृत्य प्रकृतयो निर्दिश्यंते इति । पच इति । पचतीतिवाक्यं । पचादिराकृतिगणः ।

मू०—चरिचलिपतिवदीनांवाद्वित्वंपूर्वस्यागप्रत्यये ॥ चराचरः । चलाचलः । पतापतः । वदावदः ।

सुबोधिनी—चरिचलिपतिवदीनांवाद्वित्वंपूर्वस्याऽऽगप्रत्यये । अत्र ह्रस्व इति ह्रस्वः । पूर्वस्य हसादिःशेष इत्यादिशेषश्च न भवति । आगमस्य दीर्घत्वसामर्थ्यात् । चराचर इत्यादि ॥

तत्त्वदीपिका—चरिचलीत्यादि । चराचर इत्यादि । आगागमविधानसामर्थ्याद्धसादिः शेष इति न । तथाहि सति तस्मिन् आगमादेशयोर्विशेषो न स्यात् । दीर्घत्वविधेः ह्रस्वोपि न ।

मू०—हन्तेर्हस्य घत्वञ्च ॥ घनाघनः ।

सुबोधिनी—हन्तेर्हस्यघत्वंच । हंतेर्द्वित्वं पूर्वस्य हस्य घत्वं वाऽप्रत्यये चकारात् पूर्वस्याक् उत्तरहस्य तु पूर्वाद्धंतेरिति घः । घनाघनः ॥

तत्त्वदीपिका—हन्तेः पूर्वस्यैव उत्तरस्य तु पूर्वादित्यनेनैवेति सिद्धं चकारात्पूर्वोक्तमपि ।

मू०—पाटेर्ञिलुक्चोक्चदीर्घश्चपूर्वस्य ॥ पाटूपटः । हनः । पाटः । नन्दनः । वामनः । क्रमणः । दूषणः । साधनः । वर्द्धनः । शोभनः । रोचनः। रावणः । सहनः । तपनः । दमनः । जल्पनम् । लवणम् । णत्वं निपात्यम् । कोचनः । कुच शब्दे चुरादिः । म्लेच्छ अव्यक्ते शब्दे म्लेच्छनः । ग्राही । उत्साही । उद्भासी । स्थायी । मायी । मंत्री । अयाची । अवाची । अपराधी ।

सुबोधिनी—पाटेर्ञिलुक्चोक्चदीर्घश्चपूर्वस्य । यद्यपि ञेरित्यनेनैव ञिलोपः सिद्धः तथापि प्रत्ययलक्षणेनोपधाया वृद्धिर्मा भूदित्येवमर्थं लुक्करणं । पूर्वं ञिलुक् । ततो द्वित्वंतत ऊगागमपूर्वदीर्घौ स्तः । पाटयतीति पाटूपटः । इहापि ह्रस्वहसादिशेषयोरभावः । पक्षे हन्तीति हनः । ञेरिति ञिलोपः । पाटः । युप्रत्ययमाह । युवोरित्यनादेशः । टुनादि समृद्धौ । नंदयतीति ञेरिति ञिलोपः । नंदनः । टुवम् उद्गिरणे । ग्लास्नावनुवमांचेति वैकल्पिकमित्त्वाभावे वामयतीति वामनः । दुष वैकृत्ये । दुषेर्ञाविति दीर्घः । ञेरिति ञिलोपः । दूषयतीति दूषणः । साध संसिद्धौ । साध्यति साधयतीति वा साधनः । वृधु वृद्धौ । वर्धते इति वर्धनः । शोभते इति शोभनः । रोचते इति रोचनः । रु शब्दे । रावयतीति ञेरिति ञिलोपः रावणः । षह मर्षणे । सहते इति सहनः । तप ऐश्वर्ये । दैवादिकः । तप्यते इति तपनः । दाम्यतीति दमनः । जल्पतीति जल्पनः । कुचशब्दे कोचनः । म्लेच्छ अव्यक्ते शब्दे । म्लेच्छतीति म्लेच्छनः। लुनातीति लवणं । नंद्यादिगणे निपातनाण्णत्वं । णिनिप्र-

त्ययमाह । प्रत्यग्राद्यौ चवर्गटवर्गाविती स्त इति णित्त्वादतउपधाया इति वृद्धिः । गृह्णातीति इनामिति सौ दीर्घः । नाम्नो न इति नलोपः । ग्राही । षह मर्षणे उत्सहते इति उत्साही । उद्भासते इति उद्भासी । तिष्ठतीति आतोयुगिति युक् । स्थायी । छो छेदने । छ्यतीति छायी । पिबतीति पायी । मत्रि गुप्तपरिभाषणे । चुरादिः । मंत्रयतीति । ञेरिति ञिलोपः । मंत्री । टुयाचृ याच्ञायाम् । न याचते इति नञोऽद्वादेशः । अयाची । न वदतीति अवादी। राध संसिद्धौ अपराध्यतीति अपराधी ॥

तत्त्वदीपिका–पाटेरिति । यद्यपि ञेरित्यनेनैव ञिलोपस्सिद्धस्तथापि प्रत्ययलक्षणेनोपधावृद्धिर्मा भूदित्येवमर्थं लुक्करणं । पाटूपट इति । पूर्ववद्धसादिशेषन्हस्वयोरभावः । नंदन इति । नंदयतीति विग्रहः । टुनदिस-मृद्धौ । युवोरित्यनः । दूषयतीति वाक्यं । दुषवैकृत्येदुषेर्ञाविति दीर्घः ।

**मू०–दृशादेश्शः ॥ दृशूपाघ्राध्माधेड्भ्यः शः ।**

सुबोधिनी–दृशादेः शः । दृशूपाघ्राध्माधेड्भ्यः शप्रत्ययो भवति । शप्रत्ययमाह शस्येत्संज्ञा ॥

तत्त्वदीपिका–दृशादे । आदिपदग्राह्यानाह । दृशूपाघ्रेत्यादि ।

**मू–शितिचतुर्वत् ॥ चतुर्षु तिबादिषु यत्कार्य्यमुक्तन्तच्छिति परे भवति । पश्यः । धयः । धमः । जिघ्रः । पिबः । घ्रस्संज्ञायां न । व्याघ्रः ।**

सुबोधिनी–शितिचतुर्वत् । चतुर्ष्विवेति चतुर्वत् । पश्यतीति दृशादेरिति पश्यादेशः । अप् कर्त्तरीतिअप् । अदे इत्यलोपः । पश्यः । पा पाने । पारक्षणे इत्ययं तु न गृह्यते । लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति न्यायात् । पिबतीति पिबः । घ्रा गंधोपादाने । जिघ्रतीति जिघ्रः । ध्मा शब्दाग्निसंयोगयोः । धमतीति धमः । धेट् पाने । धयतीति धयः । घ्रः संज्ञायां न । संज्ञायां वाच्यायामस्माच्छो न । विशेषेण जिघ्रतीति उपसर्गे आदंतादिति कः । आतोनपीत्यालोपे व्याघ्रः ॥

तत्त्वदीपिका–पश्य इति । पश्यतीति विग्रहः चतुर्वत्करणादप्पश्यादेशौ । एवमन्यत्रापि । अत्र केचिदुपसर्गमनुवर्तयन्ति बहवः। श्रीहर्षोपि । फलानि धूमस्य धयानित्युदाहृतवान् । व्याघ्र इति । विशेषेणाजिघ्रतीति व्याघ्र उपसर्गे आदन्तादिति कः ।

**मू०–अनुपसर्गेभ्योलिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्शः ॥ लिम्पः । विन्दः । धारयः । पारयः । वेदयः । उदेजयः । चेतयः । सातिः सुखे । सातयः । साहयः ।**

सुबोधिनी–अनुपसर्गेभ्योलिंपविंदधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यःशः । लिप उपदेहे विद्ऌ लाभे । तौदादिकाविमौ । भाविना मुमा निर्दिष्टौ तेन लाभार्थस्यैव विदेर्ग्रहणं न तु सत्ताद्यर्थकस्य । लिंपतीति विंदतीति । तुदादेरित्यः । अदेरित्यलोपः । लिंपः । विंदः । मुचादेरिति मुम् । धृञ् धारणे । धृङ् अवस्थाने । ण्यंतयोर्द्वयोरपि ग्रहणं । धारयतीति धारयः । पार कर्मसमाप्तौ । चुरादिः । पृ पालनादौ इति ण्यंतो वा पारयतीति पारयः । विद चेतनादिषु चुरादिः । ज्ञानाद्यर्थानामन्यतमो ण्यंतो वा । वेदयतीति वेदयः । उत्पूर्वः एजृकंपने ण्यंतः ।

उदेजयतीति उदेजयः। चित संचेतने। चुरादिः। चेतयतीति चेतयः। सातिः सुखे सौत्रः। सातयतीति सातयः। क्विप्प्रत्यये तु सात्परमात्मा। सात् विद्यते येषां ते सात्वंतो भक्ताः। षह मर्षणे चुरादिः। प्रयोजकण्यंतो वा। साहयतीति साहयः। अनुपसर्गेभ्य इति किम्। प्रलिम्पः। नाम्युपधादितिकः॥

तत्त्वदीपिका—अनुपसर्गेभ्यः। लिप उपदेहे। विद्लृलाभे समुमुनिर्देशालाभार्थादन्येषामग्रहणम्। धृञ्- धारणे। धृङ् अवस्थाने। द्वयोरपि ण्यंतयोर्ग्रहणं। पार कर्मसमाप्तौ पृपालनपूरणयोरितिवाण्यन्तः। चिदचेतना- ख्यानिवासेषुचुरादिण्यन्तः ज्ञानाद्यर्थानामन्यतमो वा प्रेरणण्यन्तः। उत्पूर्व एजृ कंपने। षह मर्षणे चुरादिः। प्रेरणार्थण्यंतो वा। लिंपविंदोस्तुदादित्वादः। मुचादित्वान्मुम्। धारयादिष्वपि गणाःयादृशाः।

**मू०—नौलिम्पेः॥ निलिम्पाः देवाः।**

सुबोधिनी—नौलिंपेः। नौ पूर्वपदे शः। निलिंपंतीति निलिंपा देवाः॥

**मू०—गवादिषुविन्देस्संज्ञायाम्॥ गोविन्दः। अरविन्दम्।**

सुबोधिनी—गवादिषु विंदेः संज्ञायाम्। कार्येऽण् इत्यस्यापवादोयम्। गां विंदतीति गोविंदः। चक्रस्य नाभिनेम्योरंतराले स्थितानि काष्ठान्यरा उच्यंते अराकाराणि दलानि तत्सादृश्या- दरास्तान् विंदते लभते इत्यरविंदम्॥

तत्त्व०—अरविंदमिति। चक्रनाभिनेम्यन्तरालस्थितकाष्ठानि अरास्तदाकाराणि दलानि विंदति प्राप्नो- तीति।

**मू०—दाञ्धाञोर्वा॥ ददः। दधः।**

सुबोधिनी—दाञ्धाञोर्वा। अनुपसर्गाभ्यामाभ्यां वा शः। ददातीति दधातीति। ह्लादे- रिति द्वित्वं शस्य ङित्त्वाद्दादेरित्यलोपः। ददः। दधः। पक्षे ज्वलादेरिति णः। आतोयुगिति युक्। दायः। धायः। उपसर्गे किम्। प्रदः। प्रधः। उपसर्गे इति कः। दद दाने। दध धारणे। एतयोरपि ददः। दध इति॥

तत्त्व०—दाञ्धाञोरिति यद्यपि दद दाने दध धारणे एतयोरपि ददः दधइति सिद्धं दाञ्धाञश्च णे दायो धाय इति तथापि आद्युदात्तस्वरार्थमिति पाणिनीयानुसारिणः। इह लिदं चिंत्यप्रयोजनम्।

**मू०—ज्वलादेर्णः॥ ज्वालः। तापः। श्यादेश्च॥ अवश्यायः। दायः। धायः।**

सुबोधिनी—ज्वलादेर्णः। अनुपसर्गात् ज्वलादेर्वा णः। णप्रत्ययमाह णकारो वृद्ध्यर्थः। ज्वलतीति ज्वालः। चलतीति चालः। तप संतापे। तपतीति तापः। पक्षे पचादेरित्यः। ज्वलः। चलः। तपः। उपसर्गे किम्। उज्ज्वलः॥

तत्त्व०—ज्वलादेरिति॥ पाथः इत्यादौ ज्वलादिपाठसामर्थ्याद्वृद्धौ सत्यां मुम्। अणप्यत्रेति केचित्। प्रियांगपाथः कुचयोर्निपत्येति श्रीहर्षोपि।

**मू०—कार्य्येऽण्॥ कर्मण्युपपदे। धातोरण्। कुम्भकारः।**

सुबोधिनी—कार्य्येऽण्। अण्प्रत्ययमाह। णकारो वृद्ध्यर्थः। कुंभंकरोतीत्यत्राणि कृते कर्तृकार्ययोरिति षष्ठ्यंतस्य कुंभशब्दस्य नाम्नश्च कृतेति कारशब्देन समासः। कुंभस्य

कारः । कुंभकारः । कथं तर्हि गंगाधरभूधराद्य इति । पदसंस्कारपक्षे धरतीति धरः गंगायाः धरः गंगाधरः । इति शेषे कृति वेति कर्मणि या षष्ठी तदंतेन समासः ॥

तत्त्व०–कुंभकार इति । कुंभं करोतीति नित्यसमासार्थमस्वपदविग्रहः । इहाणि कृतेकर्तृकार्ययोरिति षष्ठ्यंतेन कुंभशब्देन कारकशब्दस्य समासः । गंगाधर इत्यादौ अचि गंगायाः धर इति विग्रहो बोध्यः ।

**मू०–ह्वावामाभ्यश्च ॥ स्वर्गह्वायः । तंतुवायः । धान्यमायः ।**

सुबोधिनी–ह्वावामाभ्यश्च । कर्मण्युपपदे एभ्योप्यण् आतोड इत्यस्यापवादः । स्वर्गं ह्वयतीति संध्यक्षराणामित्यात्वे आतोयुक् स्वर्गह्वायः । वेञ् तंतुसंताने । तंतुं वयतीति तंतुवायः । माङ् माने । मेङ् प्रणिदाने । अनयोरिह ग्रहणं । न तु मामाने इत्यस्याकर्मकत्वात् धान्यं मिमीते इति धान्यमायः ।

**मू०–शीलिकामिभक्ष्याचरिक्षमीक्षिभ्योणः ॥ मांसशीला । मांसकामा । मांसभक्षा । कल्याणाचारा । सुखप्रतीक्षा । बहुक्षमा ।**

सुबोधिनी–शीलिकामिभक्ष्याचरिक्षमीक्षिभ्योणः । णप्रत्ययमाह । णोवृद्ध्यर्थः । शीलं समाधौ मांसं शीलतीति आबतः स्त्रियामित्याप् । मांसशीला । मांसं कामयते इति कमेर्ञिङिति ञिङ् । ञेरिति ञिलोपः । मांसकामा । भक्ष अदने । चुरादिः । मांसं भक्षयतीति मांसभक्षा । कल्याणमाचरतीति कल्याणाचारा । ईक्ष दर्शनादौ । सुखं प्रतीक्षते इति सुखप्रतीक्षा । क्षमूष् सहने । बहून् क्षमते इति बहुक्षमा ॥

**मू०–आतोडः ॥ कर्मण्युपपदे आदन्ताड्डः । गोदः । धनदः । पार्ष्णित्रः ।**

सुबोधिनी–आतोडः । अनुपसर्गादित्येव । डप्रत्ययमाह । अणोऽपवादः । डित्वाट्टिलोपः । गां ददातीति गोदः । धनं ददातीति धनदः । पार्ष्णि पश्चात्पदं त्रायते इति पार्ष्णित्रः । अनुपसर्गे किम् । गोसंदायः । अण् युक् च ॥

तत्त्वदीपिका–आतोडः । यद्यपि अप्रत्ययेनैवातोनपीत्यालोपे रूपसिद्धिस्तथाप्युत्तरार्थंडित्वं । तथा च द्विज इत्यादि सिद्धिफलम् ।

**मू०–नाम्निच ॥ नाम्न्युपपदे धातोर्डः । द्विजः । द्विपः । गृहस्थः । गिरिशः । पादपः ।**

सुबोधिनी–नाम्निच । नाममात्र इत्यर्थः । आदंतादित्येव । द्वाभ्यां मुखशुंडाभ्यां पिबतीति द्विपः । गृहे तिष्ठतीति गृहस्थः । गिरावुपपदे डः छंदस्येव नान्यत्र । भाष्याद्यनुक्तत्वात् । गिरौ शेत इति गिरिशः । पादैः पिबतीति पादपः । कथं तर्हि गिरिशमुपचचार प्रत्यहं सा सुकेशीति । गिरिरस्यास्तीति गिरिशः । लोमादित्वाच्छः ॥

तत्त्वदीपिका–नाम्नि चेति । नाममात्रे इत्यर्थः । द्विप इति । द्वाभ्यां शुण्डादण्डमुखाभ्यां पिबतीति द्विपः । द्विर्जायते इति द्विजः । मातुर्यदग्रे जायन्ते द्वितीयं मौजिबंधनादित्युक्तेः ।

**मू०–शुचश्शूद्रे ॥ शुचन्द्रवतीति शूद्रः ।**

सुबोधिनी–शुचः शूद्रे । शुचः शब्दस्य शूरादेशो द्रे परे चात् द्रु धातोर्डप्रत्ययः । द्रु गतौ । शुचं द्रवतीति शूद्रः ॥

तत्त्व०–शुचः शूद्र इति । शुचः शू इत्ययमादेशः द्रे पर इत्यर्थः । शुचं द्विजसेवारूपं शोकं द्रवति प्राप्नोतीति शूद्रः ।

मू०–उरसोलोपोमुम्वाडान्तेगमौ ॥ उरगः, उरंगः ।

सुबोधिनी–उरसःसलोपोमुम्वाडांतेगमौ । उरस्शब्दस्य सस्य लोपः । गमेर्डश्च वा मुमागमः । उरसा गच्छतीति उरगः ॥

तत्त्व०–उरसो लोप इति । सस्येत्यर्थः । उरसागच्छतीति विग्रहः ।

मू०–विहायसोविहोमुम्वाडान्तेगमौ ॥ विहगः विहङ्गः ।

सुबोधिनी–विहायसोविहोमुम्वाडांतेगमौ । विहायस्शब्दस्य विह आदेशः गमेर्डश्च वा मुम् । विहायसा आकाशेन गच्छतीति विहगः, विहंगः ॥

मू०–भुजतुरयोर्मुम्वा ॥ डान्तेगमौ । भुजगः, भुजङ्गः, । तुरगः तुरङ्गः ।

सुबोधिनी–भुजतुरयोर्मुम् वा । अनयोरुपपदयोर्गमेर्डः अनयोर्मुम् च वा । भुजेन कौटिल्येन गच्छतीति भुजगः, भुजंगः । तुरेण वेगेन गच्छतीति तुरगः, तुरंगः ॥

तत्त्वदीपिका–भुजग इति । भुजेन कौटिल्येन गच्छतीति विग्रहः ।

मू०–सम्प्रसारणिभ्योडः ॥ कापवादः । प्रज्यः । आव्हः । प्रव्हः ।

सुबोधिनी–संप्रसारणिभ्योडः । उपसर्गे आदंतादित्यस्यापवादः । संप्रसारणं येषां धातूनामस्ति ते संप्रसारणिनस्तेभ्यो डः । ज्या वयोहानौ । प्रजिनातीति प्रज्यः । व्हेञ् स्पर्द्धायाम् । आह्वयतीति आव्हः । प्रह्वः ॥

तत्त्वदीपिका–संप्रसारणिभ्य इति । कापवाद इति । केचित्तु संप्रसारणं स्यादिति भावः । प्रज्य इति । प्रजिनातीति विग्रहः ।

मू०–तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः कः ॥ तुन्दपरिमृजोऽलसः । शोकापनुदः सुखस्याहर्ता ।

सुबोधिनी–तुंदशोकयोःपरिमृजापनुदोरालस्यसुखाहरणयोःकः । तुंदशोकयोः कर्मणोरुपपदयोराभ्यांकः आलस्यसुखाहरणयोरर्थयोः । नुदोरिति पंचम्यर्थे षष्ठी । पुनः कप्रत्ययमाह । कित्त्वान्न गुणः । मृजूष् शुद्धौ । तुंदं परिमार्ष्टीति तुंदपरिमृजोऽलसः । अत्र मृजेर्वृद्धिरिति वैकल्पिकी वृद्धिर्नेत्येके । स्यादेवेत्यन्ये । नुद प्रेरणे । शोकमपनुदतीति शोकापनुदः । सुखस्याहर्ता । सुखाभिलाषी । अलसादन्यत्र तुंदपरिमार्जः । यश्च संसारासारत्वोपदेशेनशोकमपनुदति स शोकापनोदः । अणेव ॥

तत्त्वदीपिका–तुंदशोकयोरिति । तुंदशोकयोरुपपदयोः परिपूर्वोमृजूषशुद्धौ अपपूर्वो नुदप्रेरणे । पंचम्यर्थे षष्ठी । आलस्यसुखाहरणयोरर्थयोः । तुंदपरिमृजोलस इति । य आलस्यात्तुंदं परिमार्ष्टि एवमुच्यते । मृजेर्वावृद्धिरिति तु व्यवस्थितविभाषया न । अलसादन्यत्र तुंदपरिमार्ग एव । शोकापनुद इति । यस्तु संसारानित्यताद्युपदेशेन शोकमेवापनुदति स शोकापनोद एव ।

मू०–मूलविभुजादेःकः ॥ मूलानि विभुजतीति मूलविभुजोरथः । कुध्रः । महीध्रः । गिरः । गिलः ।

सुबोधिनी–मूलविभुजादेः कः । मूलानि विभुजतीति भुजो कौटिल्ये मूलविभुजः । धृञ् धारणे । महीं धरतीति महीध्रः पर्वतः । कुं धरतीति कुध्रः । गॄ निगरणे । गिलतीति ऋत इरितीर् । गिरतेः स्वरे इति वा लः । गिलः ॥

तत्त्व०–मूलविभुजादेरिति । मूलविभुज इत्यादिरूपस्यसिद्धये को वक्तव्य इति व्याख्येयम् ।

**मू०–गष्टक् ॥ सामगः । सामगी स्त्री ।**

सुबोधिनी–गष्टक् । कर्मण्युपपदे अनुपसर्गाद्गायतेष्टक् । टक्प्रत्ययमाह । टः ष्टिव्रत इतीबर्थः । गैशब्देनतु गाङ् गतौ गास्तुतावित्यनयोर्ग्रहणमनभिधानात् । साम गायतीति आतोनपीत्यालोपः । सामगः । स्त्री सामगी । उपसर्गे किं । सामसंगायः । अण् च ॥ युक् च

तत्त्व०–गष्टगिति । गैशब्दे इत्यस्यैव ग्रहणं न तु गाङ्गतौ । गास्तुतावित्यनयोः । अनभिधानात् । सामगीति ष्ट्रिव्रत इतीप् ।

**मू०–पिबतेस्सुराशीध्वोः ॥ सुरापी । सीधुपी ।**

सुबोधिनी–पिबतेः सुराशीध्वोः । सुराशीध्वोरुपपदयोः पिबतेष्टक् । सुरां पिबतीति सुरापी । शीधु मद्यं पिबतीति शीधुपी । अन्यत्र ड एव । क्षीरपा ब्राह्मणी ।

तत्त्व०–सुरापीति सुरांपिबतीति विग्रहः । अन्यत्र सुरां पातीति सुरापा क्षीरपा ।

**मू०–अटौनाम्निकार्येच ॥ अकारटकारौ प्रत्ययौ । अस्थिहरःश्वा । कवचहरः कुमारः । धनुर्धरो युवा । कुरुचरः । पुरस्सरः । अग्रेसरः । पार्श्वशयः । पृष्ठशयः । शक्तिग्रहः । पूजार्हा । स्तम्बेरमो हस्ती । कर्णेजपः सूचकः । यशस्करी विद्या । श्राद्धकरः । वचनकरः । कर्म्मकरः । दिवाकरः । निशाकरः ।**

सुबोधिनी–अटौनाम्निकार्येच । अप्रत्ययमाह । अस्थि हरतीति अस्थिहरः । कवचं हरतीति कवचहरः । धनुर्धरतीति धनुर्धरः । पार्श्वाभ्यां शेते इति पार्श्वशयः । पृष्ठेन शेते इति पृष्ठशयः । शक्तिं गृह्णातीति शक्तिग्रहः । अर्ह पूजायाम् । पूजामर्हतीति पूजार्हा ब्राह्मणी । स्तंबे रमते इति सप्तम्या अलुक् स्तंबेरमः । कर्णे जपतीति सप्तम्या अलुक् । कर्णे जपः सूचकः पिशुनः। टप्रत्ययमाह । ट ईबर्थः । कुरुषु देशेषु चरतीति कुरुचरः । स्त्री कुरुचरी । पुरःसरतीति पुरःसरः । अग्रे सरतीति एदंतत्वं निपात्यते । अग्रेसरः। हेतुताच्छील्यानुलोम्येषु कृञष्टः । हेतौ । यशः करोतीति यशस्करी । सहादित्वात्सः । ताच्छील्ये । श्राद्धं करोतीति श्राद्धकरः । आनुलोम्ये । वचनं करोतीति वचनकरः । एषु किं । कुंभकारः । अणेव । कर्म्मशब्दपूर्वात्कृञोवेतिनेटः । कर्म करोतीति कर्मकरो भृतकः । अन्यः कर्मकारः । अणेव । दिवाऽव्ययं दिवसवाची । दिवा करोतीति दिवाकरः ॥

तत्त्व०–अटौ । अश्चटश्च अटौ । कर्मत्वविशेषविवक्षायामपि यथा स्यादित्येवमर्थं कार्यस्यानुवर्त्तनमन्यथा–कार्ये अणेव स्यात् । अस्थिहर इति अस्थि हरतीति विग्रहः । कुरुषु चरतीति टित्त्वादीप् ।

**मू०–इखखि ॥ नाम्नि कार्ये च । शकृत्करिः । स्तम्बकरिः । फलानि गृण्हाति फलेग्रहिः । फलस्यैदन्तत्वं निपातनात् । दतिहरिः । नाथहरिः । देवापिः । वातापिः ।**

सुबोधिनी—इखखि । स्तंब शकृत् पूर्वात् कृञ इखौहिवत्सयोरर्थयोः । इप्रत्ययमाह । स्तंबं करोतीति स्तंबकरिर्व्रीहिः। शकृत् पुरीषं करोतीति शकृत्करिर्वत्सः। अनयोः किं । स्तंबकारः। शकृत्कारः । अणेव । फलानि गृह्णातीति एदंतत्वं निपात्यते । फलेग्रहिः । दृतिनाथपूर्वाद्धृ-रतेरिः पशौ कर्तरि । दृतिश्चर्ममयी खल्ला इति ख्याता तां दृतिं हरतीति दृतिहरिः पशुः । नाथं नासारज्जुं हरतीति नाथहरिः । पशौ किं । दृतिहारः । नाथहारोऽणेव । आप्लृ व्याप्तौ । देवान् आप्नोतीति देवापिः । वातान् आप्नोतीति वातापिः ॥

तत्त्व०—इखखि । इश्च खश्च खिश्च एतेषां समाहारः ।

**मू०—खितिपदस्य ॥ खिति परे अनव्ययस्यपूर्वपदस्य मुम् । सर्वंकषः । कूलंकषः । करीषंकषः ।**

सुबोधिनी—खितिपदस्य । खिदंते परे अनव्ययस्य पूर्वपदस्य मुम् । खप्रत्ययमाह । खित्त्वान्मुम् । सर्वकूलाभ्रकरीषपूर्वात्कषः खः । कष हिंसायां । सर्वं कषतीति सर्वंकषः खलः । कूलंकषतीति कूलंकषा नदी । अभ्रं कषतीति अभ्रंकषो वायुः । "करीषं गोमयं शुष्कमित्यमरः" करीषं कषतीति करीषंकषा वात्या ॥

तत्त्वदीपिका—खितीति । खइत्यस्य खित् तस्मिन् ।

**मू०—वाचंयमादयोनिपात्याः ॥ वाचंयमः । पुरन्दरः । द्विषन्तपः । परन्तपः । कुक्षिम्भरिः । उदरम्भरिः । आत्मम्भरिः ।**

सुबोधिनी—वाचंयमादयोनिपात्याः । वाच्पूर्वाद्यमः खो व्रतेर्थे । यमु उपरमे । वाचं यच्छतीति वाचपुरोरदंतत्वं निपात्यते । वाचंयमो मौनव्रती । व्रते किम् । अशक्त्यादिना वाचं यच्छतीति वाग्यामः । अणेव । दॄ विदारणे । पुरं दृणातीति पुरंदरः । दृ भये । दृङ् आदरे । एतयोर्ग्रहणं न । संप्रदायात् । द्विषत्परपूर्वात्तापेः खः । द्विषंतं परं वा तापयतीति ञेरिति ञिलोपः । उपधाह्रस्वत्वं निपात्यते । मुमि कृते संयोगांतस्येति नलोपः । द्विषंतपः । परंतपः । खिप्रत्ययमाह । आत्मोदरकुक्षिषुभृञः खिः । आत्मानं बिभर्तीति मुमि कृते संयोगांतस्येति नलोपः । आत्मंभरिः । कुक्षिमुदरं वा बिभर्तीति कुक्षिंभरिः । उदरंभरिः । पुनः खप्रत्ययमाह ॥

**मू०—आशितेभुवोभावकरणयोः ॥ खः । आशितेन भूयते आशितम्भवः । आशितो भवत्यनेनेति वा ।**

सुबोधिनी—आशितेभुवोभावकरणयोः । खः । आशितशब्दे उपपदे भवतेः खः भावे करणे च । यावतौदनेनातिथ्यादिर्भोजितो भवति स ओदन आशितंभव उच्यते ॥

तत्त्वदीपिका—आशितंभव इति । यावता ओदनेनातिथ्यादिर्भोजितोभवत्याशितंभवः स एवमुच्यते ।

**मू०—एजोःखश् ॥ जनानेजयतीति जनमेजयः । आत्मानम्पण्डितम्मन्यते इति पण्डितम्मन्यः । मुंजं धयतीति मुंजन्धयः । कूलन्धयः ।**

सुबोधिनी–एजांखश् । एजादिभ्यः खश् । खश्प्रत्ययमाह । खित्त्वान्मुम् शित्त्वाच्चतुर्वत्कार्य्यम् । एज़ृ कंपने । जनमेजयतीति अपूकर्तरीत्यप् । अद इत्यलोपो जनमेजयः । पंडितमात्मानं मन्यते इति दिवादेरिति यः पंडितंमन्यः । णिनि प्रत्यये पंडितमानी । मुंजं धयतीति आयादेशे न धेटो धय् । मुंजंधयः ॥

तत्त्वदीपिका–एजामिति । बहुवचनमाद्यर्थम् ।

**मू०–खशन्तेपूर्वपदस्यानव्ययस्यन्ह्रस्वः ॥** मुष्टीं धमतीति मुष्टिंधमः । नाडिन्धमः । नासिकंधयः । अनव्ययस्य किम् । दिवामन्यारात्रिः । दोषामन्यमहः । कूलमुद्रुजः । कूलमुद्वहः । अरुन्तुदः ।

सुबोधिनी–खशंतेपूर्वपदस्यानव्ययस्यन्ह्रस्वः । मुष्टीं धयतीति मुष्टिंधयः । मुष्टीं धमतीति मुष्टिंधमः । नाडीं धमतीति नाडिंधमः । नासिकां धयतीति नासिकंधयः । नाडीमुष्टीनासिकानां न्ह्रस्वः । हशादेरिति ध्माधातोर्धम् धेटोऽयादेशः । अनव्ययस्य किं । दिवामन्या रात्रिः । दोषामन्यमहः । रुजो भंगे । कूलमुद्रुजतीति कूलमुद्रुजः । तुदादेरित्यः । कूलमुद्वहतीति कूलमुद्वहः । अरुस्तुदतीति अरुंतुदः । मुमि कृते संयोगांतस्येति सलोपः । "व्रणोऽस्त्रियामीर्ममरुरि"ति । "अरुंतुदस्तुमर्मस्पृगि"ति चामरः ॥

तत्त्वदीपिका–अरुंतुद इति । व्रणोस्त्रियामीर्ममरुः अरुस्तुदतीति विग्रहः । उकारादग्रे मुमिकृते संयोगांतस्येति सलोपः ।

**मू०–दारावाहनोऽणन्तस्यचटः संज्ञायाम् ॥** हनोघत् । उवम् । दारु आहन्तीति दार्वाघाटः ।

सुबोधिनी–दारावाहनोऽणंतस्यचटःसंज्ञायाम् । दारुशब्दे उपपदे आङ्पूर्वाद्धंतेरण् अंतस्यतस्य टश्च स्यात् । पुनरण्प्रत्ययमाह । णित्त्वाद्वृद्धिः । दारु आहंतीति हनोघादिति घत् । उवामिति वः । दार्वाघाटः । सूत्रे शब्दापेक्षया दाराविति पुंस्त्वं । "काष्ठंदार्विन्धनंत्वेधः" इत्यमरः । टकारविधानार्थमिदं सूत्रम् । अण् तुकार्येऽणित्यनेनैव सिद्धः । अंतग्रहणं स्पष्टार्थम् ॥

**मू०–चारौवा ॥** चार्वाघाटः, चार्वाघातः ।

सुबोधिनी–चारौवा । चारुशब्दे उपपदे आङ्पूर्वाद्धंतेरण् वा टः । चारु आहंतीति चार्वाघाटः, चार्वाघातः ॥

**मू०–कर्मणि सम्पूर्वाच्च ॥** वर्णान् संहन्तीति वर्णसंघाटः, वर्णसंघातः । पदं संहन्तीति पदसंघाटः, पदसंघातः ।

सुबोधिनी–कर्मणिसंपूर्वाच्च । कर्मण्युपपदे संपूर्वाद्धंतेरण् वा टः । वर्णान् संहंतीति वर्णसंघाटः, वर्णसंघातः । एवं पदानि संहंतीति पदसंघाटः, पदसंघातः ॥

**मू०–जायापत्योष्टक्रूलक्षणवतिकर्तरि ॥** गमांस्वरे । हनोघ्ने । जायां हन्तीति जायाघ्नो ना । पतिघ्नी स्त्री ।

सुबोधिनी–जायापत्योष्टक्लक्षणवतिकर्त्तरि । हंतेष्टक् । टक्प्रत्ययमाह । टित्वात् ष्ट्वित इतीप् । मरणसूचकं पाणिरेखादिकं लक्षणम् यस्यास्ति स लक्षणवान् तस्मिन् कर्त्तरि साति जायांहंतीति गमांस्वरे इत्युपधालोपः हनोघ्ने इति घः । जायाघ्नो ना । पतिघ्नी स्त्री ॥

तत्त्वदीपिका–जायापत्योरिति । कथं प्रलंबघ्नः कृतघ्नः शत्रुघ्न इत्यादि मूलविभुजादित्यादित्वात् के बोध्यः ।

**मू०–अमनुष्यकर्तृकेच ॥ पतिघ्नी पाणिरेखा । जायाघ्नस्तिलकालकः ।**

सुबोधिनी–अमनुष्यकर्तृकेच । कर्मण्युपपदे हंतेष्टक् मनुष्याभिन्ने कर्तरि साति । जायाघ्नस्तिलकालकः । पित्तघ्नं घृतम् । अमनुष्येति किम् । आखुघातः, शूद्रोऽणेव । कथं तर्हि बलभद्रः प्रलंबघ्न इति शत्रुघ्नः कृतघ्नः इति । मूलविभुजादित्वात्कः ॥

**मू०–पाणिघताडघौशिल्पिनिनिपात्यौ ॥ पाणिघः । ताडघः । शिल्पिनि किम् । पाणिघातः । ताडघातः ।**

सुबोधिनी–पाणिघताडघौशिल्पिनिनिपात्यौ । पाणिताडयोरुपपदयोर्हन्तेष्टक् । टिलोपघत्वे निपात्येते इति । पाणिं हन्तीति पाणिघः । ताडं हंतीति ताडघः । क्रियासु कौशल्यं शिल्पं तदस्यास्तीति शिल्पी । शिल्पिनि किम् । पाणिघातस्ताडघातः । कार्येणित्यण् ॥

तत्त्वदीपिका–शिल्पिनीति । क्रियासु कौशलं शिल्पं तदस्यास्तीति शिल्पी तस्मिन् ।

**मू०–राजघश्च ॥ राजानं हन्तीति राजघः ।**

सुबोधिनी–राजघश्च । राज्ञि हंतेष्टक् टिलोपघत्वे च । राजानं हंतीति राजघः ॥

**मू०–भजांविण् ॥ वेः वेर्ल्लोपः । अर्द्धभाक् । सुखभाक् । तुराषाट् । भारवाट् ।**

सुबोधिनी–भजांविण् । नाम्न्युपपदे भजादेर्विण् । विण्प्रत्ययमाह । णित्वाद्वृद्धिः । वेरिति विलोपः । अर्द्धं भजतीति अर्द्धभाक् । चोःकुरिति कः । सुखंभजतीति सुखभाक् । षह मर्षणे तुरां सहते इति सहेः साढिति षत्वम् । तुराषाट् । केचित्तुरशब्दमदंतमाहुः । तन्मतेऽन्येषामपीति पूर्वपदस्य दीर्घः ॥

तत्त्वदीपिका–भजामिति । बहुवचनमाद्यर्थं । तुराषाडिति । तुरं वेगं सहते इति विग्रहः । अन्येषामपीति अन्त्यस्वरस्य दीर्घः । सहादित्वाड्ढा । तुरं न सहत इति कश्चित् । तद्बहूनामसंमतम् ।

**मू०–अभूततद्भावेकृभ्वस्तियोगेनाम्नश्च्विः ॥ च्वौदीर्घईचास्य । च्वौपरेऽवर्णस्य ई । इदुतोर्दीर्घः । मिथुनीकरणम् । शुक्लीभावः । शुचीभवति । सहायीस्यात् । हेतूकृतम् ।**

सुबोधिनी–अभूततद्भावेकृभ्वस्तियोगेनाम्नश्च्विः । नाम्नश्च्विप्रत्ययः न प्राग्भूतमभूतम् अभूतस्य भवनमभूततद्भावस्तस्मिन्नर्थे कृ भू अस् एषां धातूनामन्वये साति च्विप्रत्ययमाह। च्वौ दीर्घईचास्य । च्वौपरे अवर्णस्य ईकारः इदुतोश्च दीर्घः । च्वौइति विशेषणार्थे । वेरिति विलोपः । क्त्वाद्यंतं चेति च्व्यंतस्याव्ययत्वाद्विभक्तेर्लुक् । आमिथुनं मिथुनं क्रियत इति

मिथुनीकरणम् । अशुक्लस्य शुक्लेन स्वभवनमिति शुक्लीभावः । असहायःसहायः स्यादिति सहायीस्यात् । अहेतुना हेतुना कृतमिति हेतूकृतम् । कृभ्वस्तियोगे इति किम् । अशुक्लः शुक्लो जायते ॥

**मू०—च्वौसलोपः ॥ सुमनीभावः । अरूकरोति । चक्षूकरोति । सुचेतीभावः । रहीभवति । विरजीकरोति ।**

सुबोधिनी—च्वौसलोपः । अरुर्मनश्चक्षुश्चेतोरहोरजसांसस्यलोपः च्विप्रत्यये । असुमनसः सुमनसा भवनमिति सुमनीभावः । अनरुररुः करोतीति अरूकरोति । अचक्षुश्चक्षुः करोतीति चक्षूकरोति । असुचेताः सुचेताः भवतीति सुचेतीभवति । अरहो रहो भवतीति रहीभवति । आविरजो विरजः करोतीति विरजीकरोति ॥

**मू०—क्वचिड्डा ॥ सुखं करोतीति सुखाकरोति । दुःखाकरोति । शंबाकरोति । द्विगुणाकरोति । बीजाकरोति ।**

सुबोधिनी—क्वचिड्डा । नाम्नो डाप्रत्ययः कृञो योगे । दुःखात् प्रातिलोम्ये डा । डाप्रत्ययमाह डित्त्वाट्टिलोपः । क्त्वाद्यंतंचेति डाप्रत्ययांतस्याव्ययत्वाद्विभक्तेर्लुक् । दुःखाकरोति स्वामिनं पीडयतीत्यर्थः । सुखप्रियाभ्यामानुलोम्ये डा । सुखाकरोति, प्रियाकरोति वा गुरुम् । अनुकूलाचरणेनानंदयतीत्यर्थः । शंबद्विगुणबीजिभ्यो डा कृषिवाच्ये । शंबाकरोति । शंबशब्दः प्रतिलोमेऽर्थेऽस्ति । अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः । क्षेत्रं द्विगुणाकरोति । क्षेत्रकर्मकं द्विगुणं कर्षणं करोतीत्यर्थः । बीजाकरोति । काशिकायां बीजशब्दो बीजवापनसहितविलेखने वर्त्तते । बीजवापनसहितं विलेखनं करोतीत्यर्थः ॥

तत्त्वदीपिका—दुःखीकरोति पीडयतीत्यर्थः । सुखीकरोति अनुकूलाचरणेनानंदयतीत्यर्थः । शंबाकरोति अनुलोमं कृष्टं क्षेत्रं पुनः प्रतिलोमं कर्षतीत्यर्थः । द्विगुणाकरोति क्षेत्रं । क्षेत्रकर्मकं द्विगुणं करोतीत्यर्थः । बीजाकरोति । बीजेन सह करोतीत्यर्थः ।

**मू०—अव्ययस्यच्वावीत्वंन ॥ दोषाभूतमहः । दिवाभूता रात्रिः । हसात्परस्य । यकारस्य लोपश्च्वौ । अगार्ग्यो गार्ग्यो भवति गार्गीभवति ।**

सुबोधिनी—अव्ययस्यच्वावीत्वंन । पुनः च्विप्रत्ययमाह । अदोषाभूतमिति दोषाभूतमहो दिनम् । अदिवा दिवाभूतेति दिवाभूता रात्रिः । ण्यायनणेयणीया इति ण्यः । गार्ग्यः । अगार्ग्यो गार्ग्यो भवति हसात्तद्धितस्येति यलोपे च्वावितीत्वे च गार्गीभवति ॥

**मू०—रीङ्ऋतः ॥ मात्रीकरोति ।**

सुबोधिनी—रीङ्ऋतः । ऋकारस्य रीङ् स्यात् च्वौ । अमातरं मातरं करोतीति मात्रीकरोति ॥

**मू०—च्विविषयेसाद्वा ॥**

सुबोधिनी—च्विविषयेसाद्वा । नाम्नोऽभूततद्भावे एव सात्प्रत्ययो वा स्यात् साकल्येऽर्थे । सात्प्रत्ययमाह । सात्प्रत्ययस्याव्ययत्वाद्विभक्तेर्लुक् ॥

**मू०–सात्पदाद्योः ॥ सस्य षत्वं न । अग्निसाद्भवति । अग्नीभवति ।**

सुबोधिनी–सात्पदाद्योः । सात्प्रत्ययस्य पदादौ वर्त्तमानस्य च सस्य षत्वं न । दधि सिंचति । क्विलादिति षत्वे प्राप्ते निषेधः । अनाग्निरग्निर्भवतीति अग्निसाद्भवति । कृत्स्नं सर्वावयवोपेतं शस्त्रमग्नीभवतीत्यर्थः । सादभावपक्षे च्विरेव । साकल्ये किम् । एकदेशेन शुक्लीभवति पटः ॥

**मू०–सम्पदायोगेच ॥ जलसात्सम्पद्यते ।**

सुबोधिनी–संपदायोगेच । नाम्नः संपद्धातुयोगे सात्प्रत्ययो वा भवति । अजलं जलं संपद्यते इति । लवणं जलसात्संपद्यते । पक्षे संपदायोगे वाक्यमेव ॥

**मू०–अधीनेच ॥ राजसात्सम्पद्यते ।**

सुबोधिनी–अधीनेच । नाम्नस्तदधीनेऽर्थे सात् स्यात् कृभ्वस्तिसंपद्योगे । राजाधीनं संपद्यते इति । नाम्नोनोलोपशिति नलोपः । राजसात्संपद्यते । राजाधीनं करोतीति राजसात्-करोति ॥

**मू०–देयेत्राच ॥ विप्राधीनं देयं करोति विप्रत्राकरोति । विप्रत्रासम्पद्यते । विप्रसात्करोति ।**

सुबोधिनी–देयेत्राच । नाम्नस्तदधीने देयेऽर्थे त्रा प्रत्ययः स्यात् चात्सादपि कृभ्वस्तिसं-पद्योगे । त्राप्रत्ययमाह । अव्ययत्वाद्विभक्तेर्लुक् । विप्राधीनं देयं करोतीति विप्रत्राकरोति । विप्राधीनं देयं संपद्यते इति विप्रत्रा संपद्यते । देये किम् । राजसाद्भवति राष्ट्रम् ॥

**मू०–देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्यन्तेभ्योवात्रा ॥ देवत्रावन्दे । देवंवन्दे ।**

सुबोधिनी–देवमनुष्यपुरुषपुरुमर्त्येभ्योद्वितीयासप्तम्यंतेभ्योवा त्रा । द्वितीयांतेभ्यः सप्त-म्यंतेभ्यश्चैभ्यस्त्रा वा स्यात् । देवान् इति देवत्रावंदे । देवेषु इति देवत्रा रमे । मनुष्यान् इति मनुष्यत्रा गच्छति । मनुष्येषु इति मनुष्यत्रा वसति । पुरुषान् इति पुरुषत्रागच्छति । पुरुषेषु इति पुरुषत्रा वसति । पुरून् इति पुरुशब्दोऽत्र बहुशब्दपर्यायः । "पुरुः परागे प्रचुरे स्वर्लोकनृपभेदयोरिति हैमः" । पुरुत्रागच्छति । पुरुषु इति पुरुत्रावसति । मर्त्यान् इति मर्त्यत्रा गच्छति । मर्त्येषु इति मर्त्यत्रावसति ॥

**मू०–ख्युट्करणे ॥ आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेषुपदेषु कृञः करणेऽर्थे ख्युट्प्रत्ययः । अनाढ्यमाढ्यं करोत्यनेनाढ्यंकरणम् । सुभगंकर-णम् । स्थूलंकरणम् । दाधि । पलितंकरणम् । नग्नंकरणं । द्यूतम् । अन्धंकरणम् । प्रियंकरणम् ।**

सुबोधिनी–ख्युट्करणे । ख्युट्प्रत्ययमाह । खःखितिपदस्येति मुमर्थः ट ईबर्थः । युवो-रित्यन आढ्यंकरणम् । एवं सुभगंकरणं । स्थूलंकरणं । पलितंकरणं । नग्नंकरणं । अंधं-करणं । प्रियंकरणम् ॥

तत्त्वदीपिका—च्व्यर्थेष्विति । अभूततद्भावविषयेष्वित्यर्थः । आढ्यंकरणमिति खित्त्वान्मुम् ।

**मू०—भुवःखिष्णुखुकञौकर्तरि ॥** अनाढ्य आढ्यो भवति । आढ्यम्भविष्णुः । आढ्यंभावुकः ।

सुबोधिनी—भुवः खिष्णुखुकञौकर्त्तरि । आढ्यादिषु च्व्यर्थेषूपपदेषु भवतेरेतौ स्तः । खिष्णुप्रत्ययमाह । खित्त्वान्मुम् । आढ्यंभविष्णुः । एवं सुभगंभविष्णुः । स्थूलंभविष्णुः । पलितंभविष्णुः । नग्नंभविष्णुः । अंधंभविष्णुः । प्रियंभविष्णुः । खुकञ्प्रत्ययमाह । खित्त्वान्मुम् । ञित्त्वाद्वृद्धिः। अनाढ्य आढ्यो भवतीति आढ्यंभावुकः । एवं सुभगंभावुकः। स्थूलंभावुकः । पलितंभावुकः । अंधंभावुकः । प्रियंभावुकः ।

**मू०—आतोमनिपक्वनिब्वनिपः ॥** नाम्न्युपपदे आदन्ताद्धातोरेते प्रत्ययाःस्युः । सुदामा । अश्वे तिष्ठतीति अश्वत्थामा । निपातात्सस्यत्वः ।

सुबोधिनी—आतोमनिपक्वनिब्वनिपः प्रत्ययानाह । पित्त्वात्तुक् । कित्त्वान्नगुणः । इकार उच्चारणार्थः । सुष्ठु ददातीति नोपधाया इति दीर्घः । नाम्नोनोलोपशिति नलोपः सुदामा ॥

**मू०—स्थामिः ॥** तादौ किति दो सो मा स्थामिर्भवति ।

सुबोधिनी—स्थामिः । दोऽवखंडने । षोंऽतकर्म्मणि । मा माने । माङ् माने । मेङ् प्रणिदाने । इति त्रयाणां ग्रहणम् । घ्वागतिनिवृत्तौ । एषामित्वं स्यात् तादौ किति ईत्वदत्वयोरपवादः ॥

तत्त्वदीपिका—स्थामिः । स्थाम् इतिच्छेदः इत्यभिप्रेत्याह । दोसो इत्यादि ।

**मू०—शाछोर्वा ॥**

सुबोधिनी—शाछोर्वा । शो तनूकरणे । छो छेदने । अनयोरित्वं वा तादौकिति ॥

**मू०—अपिदाधागैहाक्पिबतीनामीः ॥** किति हसे क्विपि वा । न तु क्यपि । सुपीवा । घृतपीवा । भूरिदीवा । अनादन्तादपि । अपिशब्दान्निरुपपदेभ्योऽपि । सुकर्मा । ह्रस्वस्यपितिकृतितुक् । प्रातरित्वा । वनिपि ।

सुबोधिनी—अपिदाधागैहाक्पिबतीनामीः । दो अवखंडने । देङ् पालने । दाण् दाने डुदाञ् दाने । एषां चतुर्णां ग्रहणं । धेट् पाने । डुधाञ् धारणपोषणयोरित्युभयोर्ग्रहणम्। गै शब्दे । ओहाक् त्यागे । पा पाने । एषामीत्वं स्यात् किति हसे । क्विपि तु इत्वं वा क्यपि इत्व न । सुष्ठु पिबतीति कित्त्वान्न गुणः । सुपीवा । घृतं पिबतीति घृतपीवा । अनादंतादपि एते प्रत्ययाः स्युः । शॄ हिंसायां सुष्ठ शृणातीति ह्वत्येरितिण् न । सुशर्मा । ह्रस्वस्यपिति कृति तुक् ह्रस्वस्य तुगागमः स्यात् पिति कृति । इण् गतौ । प्रातरेतीति प्रातरित्वा । वनिपि ॥

**मू०—जमस्यात्वम् ॥** विशेषेण जायते विजावा । ओणृ ओणतीत्यवावा। पारदृश्वा । राजयुध्वा । सुत्वा । धीवा । पीवा ।

सुबोधिनी–अमस्यात्वम् । अमांतस्य धातोरात्वं स्यात् वनिपि । षष्ठीनिर्दिष्टस्येत्यंतस्यादेशः । जनी प्रादुर्भावे । विजायते इति विजावा । ओणृ अपनयने ओणतीति अनुनासिकस्यात्वे अवादेशे च अवावा । कर्मण्युपपदेदृशेः क्वनिप् । भूते इति केचित् । पारं दृष्टवान् इति पारदृश्वा । वर्त्तमानेपि स्यात् विश्वदृश्वनयनावयमित्यत्र विश्वं पश्यंतीति विश्वदृश्वानि नयनानि येषां ते विश्वदृश्वनयना इति वर्त्तमानेन विग्रहेऽपि न क्षतिः । युध संप्रहारे । राजानं युध्यते इति राजयुध्वा । षुञ् अभिषवे सुनोतीति ह्रस्वस्येति तुक् सुत्वा । दधातीति अपिद्धाधेतीत्वं धीवा । पिबतीति पीवा ॥

तत्त्वदीपिका–अवावेति। ओणोणस्यात्वे ओतोऽवादेशे रूपं । पारदृश्वेति । पारंदृष्टवान् राजयुध्वेति । अन्तर्भावितण्यर्थो युधिः । राजानं योधितवान् ।

**मू–क्विप् ॥ धातोः क्विप्स्यात् । कर्मकृत् । मोनोधातोः । प्रशान् । प्रदान् ।**

**अग्निचित् । सोमसुत् । सोमपाः । सर्वदृक् । दिशृ अतिसर्जने । दिक् ।**

सुबोधिनी–क्विप् ॥ सर्वधातुभ्यः क्विप् स्यात् । क्विप्प्रत्ययमाह । किस्वान्नगुणः पित्त्वात्तुक् वेरिति विलोपः । कर्म करोतीति कर्मकृत् । प्रशाम्यतीति अमांतस्येति दीर्घः । मोनोधातोरिति नत्वम् । प्रशान् । सोमंसुनोतीति सोमसुत् । अग्निंचिनोतीति अग्निचित् । सोमं पिबतीति अपिद्धाधेति क्विपि वेत्वं सोमपाः । सर्वं पश्यतीति सर्वदृक् । दिशामिति कः । दिश अतिसर्जने । दिशतीति दिक् ॥

**मू०– क्विपिवाचिप्रच्छचायतस्तुकटप्रुजुश्रीणांदीर्घोसम्प्रसारणञ्च ॥ वाक् । क्ङिति झसे कौ अमे चेति छस्य शो वस्य ऊः । तत्त्वप्राट् । तत्त्वप्राशौ । आयतस्तूः । कटप्रूः । जु गतौ । जूः । श्रीः ।**

सुबोधिनी–क्विपिवच्चिप्रछचायतस्तुकटप्रुजुश्रीणांदीर्घोऽसंप्रसारणंच । एषां दीर्घः संप्रसारणाभावश्च स्यात्क्विपि । वच परिभाषणे । प्रच्छ ज्ञीप्सायाम् आयतपूर्वः ष्टुञ् स्तुतौ । कटपूर्वः प्रुङ् गतौ । जु गतौ । श्रिञ् सेवायां । वक्तीति चोः कुरिति कः वाक् । तत्त्वं पृच्छतीति क्ङिति झसे कौ अमेचेति छस्य शः छशषेतिषः । षोड इति डः तत्त्वप्राड् । आयतं स्तौतीति आयतस्तूः । कटं प्रवते इति कटप्रूः । जवतीति जूः । हरिं श्रयतीति हरिश्रीः । वच्चिप्रच्छचोः संप्रसारणाभावः ॥

तत्त्वदीपिका–वागिति । वक्तीति विग्रहः । तत्त्वप्राडिति तत्वं पृच्छति । एवमदपिकर्त्तरि ।

**मू०– ध्यायतेःक्विपिसम्प्रसारणम् ॥ सुधीः ।**

सुबोधिनी–ध्यायतेःक्विपिसंप्रसारणम् । ध्यै चिन्तायाम् । सुष्ठु ध्यायतीति सुधीः ॥

**मू०–गमादीनांञमस्यलोपः ॥ क्विपि क्यपि वा । अङ्गगत् । परीतत् । संयत् । सुनत् ।**

सुबोधिनी–गमादीनांञमस्यलोपः । क्विपि क्यपि वा । गम् तनु यम् णम् इत्यादीनामनुनासिकस्य लोपः स्यात्क्विपि तु वा । अङ्गंगच्छतीति ह्रस्वस्यापितीति तुक् । अंगगत् । परि

तनोतीति परीतत् । नहिवृतिवृषिव्यधीति पूर्वस्य दीर्घः । संयच्छतीति संयत् । सुनमतीति सुनत् ॥

**मू०–ऊङ्च ॥ अग्रेगूः । अग्रेभ्रूः ।**

सुबोधिनी–ऊङ्च । गम्यादीनामूङादेशो अमस्य लोपश्च स्यात्क्विपि । ङित्त्वादंत्यस्यादेशः । अग्रे गच्छतीति अग्रेगूः । अग्रे भ्रमतीति अग्रेभ्रूः । सप्तम्या अलुक् ॥

तत्त्वदीपिका–अग्रेगूः । अग्रे गच्छतीति ।

**मू०–द्युतिगमिजुहोतीनांक्विपिद्वित्वम् ॥ दिद्युत् । जगत् ।**

सुबोधिनी–द्युतिगमिजुहोतीनांक्विपिद्वित्वं । द्योतते इति द्युतेः पूर्वस्येति संप्रसारणं । दिद्युत् । गच्छतीति गम्यादीनामिति मलोपः ह्रस्वस्येति तुक् । जगत् ॥

**मू०–जुहोतेर्दीर्घः ॥ जुहूः ।**

सुबोधिनी–जुहोतेर्दीर्घः । अस्य दीर्घः स्यात्क्विपि । जुहोत्यनयेति जुहूः । करणस्य कर्तृत्वविवक्षायां क्विप् ॥

**मू०–पदान्तस्यानितेर्नस्यणत्वमुपसर्गस्थान्निमित्तात् ॥ अनप्राणने । हेप्राण् । मित्राणि शास्तीति मित्रशीः ।**

सुबोधिनी–पदांतस्यानितेर्नस्यणत्वमुपसर्गस्थान्निमित्तात् । उपसर्गस्थान्निमित्तात् परस्य पदांतस्यानितेर्नस्य णत्वं स्यात् । अन प्राणने । प्रकर्षेण अनितीति संबोधने हे प्राण् । अत्र अमांतस्येतिदीर्घो नाम्नो नोलोपशिति सूत्रे अधावित्युक्तत्वान्नलोपो न । शासु अनुशिष्टौ । क्विपो लोपे प्रत्ययलोपेप्रत्ययलक्षणमिति न्यायेन झलादिकित्प्रत्ययपरत्वात् शासेरिरितीकारः घसादेरिति षः । दोषामिति रः । र्वोर्विहसे इति दीर्घे मित्रशीः ॥

तत्त्वदीपिका–हेप्राणिति । नाम्नो नोलोपशधावित्यत्राधाविति निषेधाद्धावेव नलोपाभावोन्यत्र भ्यामादौ भवत्येवेति सूचनाय संबोधनान्तमेवोदाहृतम् ।

**मू०–आशासःक्वावुपधायाइत्वम् ॥ आशीः । गीः । पूः ।**

सुबोधिनी–आशासःक्वावुपधायाइत्वम् । आङःशासु इच्छायामित्यात्मनेपदी । शासेरितिसूत्रेणेत्वेसिद्धे आशास उपधाया इत्वं क्वावेव नान्यत्रेति नियमार्थमिदं सूत्रं तेनाऽऽशास्ते इत्यत्रेत्वं न भवति । आशास्ते इति आशीः । गॄ निगरणे । गिरतीति ॠतइरितीर्‌र्वोर्विहसे इति दीर्घः । गीः । पॄ पालनादौ । पिपर्त्तीति पोरुरित्युर् र्वोर्विहसे इति दीर्घः ॥

**मू०–इस्मन्त्रन्क्विषुच्छादेर्ह्रस्वः ॥ छदः अपवारणे । चुरादिः । तनुं छादयतीति तनुच्छत् । अक्षद्यूः । रेफाच्छ्वोर्लोपः क्वौ झसादौ हे च प्रत्यये । मूः मुरौ । धूः धुरौ ।**

सुबोधिनी–इस्मन्त्रन्क्विषुच्छादेर्ह्रस्वः । छद अपवारणे । ञ्यंतस्य अस्य ह्रस्वः स्यात् एषु परेषु । इसि प्रत्यये छादिः मन्प्रत्यये छद्म । त्र प्रत्यये छत्रम् । क्विपि तु तनुं छादयतीति ञेरिति ञिलोपः । तनुच्छत् । दिवु क्रीडादौ । अक्षैर्दीव्यतीति क्ङिति झसे क्वौ ञमेचेति

वस्य ऊः । अक्षद्यूः । मुर्छा मोहसमुच्छ्राययोः । मूर्छतीति रेफाच्छ्वोरिति छलोपः । र्वोर्वि-हसे इति दीर्घः । मूः । धुर्वी हिंसायाम् धूर्वतीति रेफाच्छ्वोरिति वलोपः धूः ॥

तत्त्वदीपिका–तनुच्छदिति । तनुं छादयतीति विग्रहः । अक्षैर्दीव्यतीति अक्षद्यूः । मूरिति । मूर्छतीति विग्रहः ।

**मू०–दुहःकोघोन्तादेशश्च ॥ कामदुघा ।**

सुबोधिनी–दुहःकोघोन्तादेशश्च । दुहः कप्रत्ययो हस्य घश्च स्यात् । कप्रत्ययमाह । कित्त्वाद्गुणो न कामं दोग्धीति कामदुघा धेनुः ॥

**मू०–दृशेष्टक्सकौचोपमानेकार्ये ॥ उपमाने कर्मण्युपपदे दृशेष्टक्सकौ चात्क्विप् ।**

सुबोधिनी–दृशेष्टक्सकौचोपमानेकार्य्ये । टक्सकौ प्रत्ययावाह । टित्त्वादीप् । कित्त्वाद्गुणो न ॥

**मू०–आसर्वादेः ॥ एषु परेषु सर्वादेष्टेरात्वम् । अन्यादृशः । अन्यादृक्षः । अन्यादृक् । तादृशः तादृक्षः तादृक् ।**

सुबोधिनी–आसर्वादेः । सर्वादेष्टेरात्स्यात् । दृक् दृश् दृक्षेषु परेषु। अन्यमिव पश्यतीति अन्यादृशः । ईपि अन्यादृशी । छशषेति षत्वं षढोरिति कत्वं । अन्यादृक्षः क्विपि अन्यादृक् । तमिव पश्यतीति तादृशः । ईपि तादृशी । तादृक्षः । तादृक् ॥

तत्त्वदीपिका–एषु परेष्विति । एवं चोपमाने कर्मोपपदनिमित्तकटक्सक्क्विपि एषु परेषु सर्वादेष्टेरात्वं नान्यत्र । तेन सर्वं पश्यतीति सर्वदृगित्यत्र न उपमानाभावात् । अन्यादृश इति । अन्य इव दृश्यते इति विग्रहः । एवमन्यत्रापि । अत्राहुः कर्त्तरि कृतोविधानात् कर्मार्थताऽयुक्ता । तमिव पश्यतीति चेन्न कर्मण्यणबाधात् । अपेक्षितार्थानुपस्थितेश्च । अत्र भाष्यं स इव भवति तादृशेति कर्मकर्त्तरि व्युत्पत्तिः बाहुलकात्कर्मण्यपीति तु बहवः ।

**मू०–किमिदमःकीश् ॥ कीदृशः कीदृक्षः कीदृक् । ईदृक्षः ईदृशः । ईदृक् । भवादृशः । भवादृक्षः भवादृक् । यादृक् । अदसोऽमूरस्याद्दृक्दृशदृक्षेषु । अमूदृक्षः । अमूदृशः । अमूदृक् । मादृशः । मादृक्षः । मादृक् । त्वादृशः । त्वादृक्षः । त्वादृक् । युष्मादृशः । युष्मादृक्षः । युष्मादृक् । अस्मादृशः । समानस्यसः । सदृशः । सदृक्षः । सदृक् ।**

सुबोधिनी–किमिदमः कीश् । किम्शब्दस्य इदम्शब्दस्य च की ईश् आदेशौ स्तः । कामिव पश्यतीति कीदृशः । ईपि कीदृशी । कीदृक्षः । कीदृक्। इदमिव पश्यतीति ईदृशः । ईपि ईदृशी । ईदृक्षः । ईदृक् । भवंतमिव पश्यतीति भवादृशः । ईपि भवादृशी । भवादृक्षः । भवादृक् । यमिव पश्यतीति यादृशः । ईपि यादृशी । यादृक्षः । यादृक् । अमुमिव पश्यतीति अदसष्टेरात्वे कृते दस्यम इति मः मादू इत्यूत्वम् । अमूदृशः । ईपि अमूदृशी । अमूदृक्षः । अमूदृक् । मामिव त्वामिव च पश्यतीति त्वन्मदेकत्वे इति त्वन्मदौ टेरात्वे च । मादृशः । ईपि मादृशी । मादृक्षः । मादृक् । त्वादृशः । ईपि त्वादृशी । त्वादृक्षः । त्वादृक् । अस्मानिव

युष्मानिव च पश्यतीति अस्मादृशः । ईपि अस्मादृशी । अस्मादृक्षः । अस्मादृक् युष्मादृशः । ईपि युष्मादृशी । युष्मादृक्षः । युष्मादृक् ॥

**सू०-णिनिरतीते ॥ धातोरतीते काले शीले च णिनिः । अग्निष्टोमेनायाक्षीत् । यजनशीलो वा । अग्निष्टोमयाजी । पितृव्यघाती । उष्णभोजी ।**

सुबोधिनी-णिनिरतीते । नाम्न्युपसर्गे चोपपदे धातोरतीते काले ताच्छील्ये णिनिः स्यात् कर्त्तरि । णिनिप्रत्ययमाह । णित्त्वाद्वृद्धिः । इकार उच्चारणार्थः । यजदेवपूजादौ । अग्निष्टोमेनेष्टवान् इति इनामिति दीर्घः । अग्निष्टोमयाजी । स्तोत्रेण समाप्यमानो यो यागः सोऽग्निष्टोमः । पितृव्यं हतवानिति हनोघत् इति घत् । पितृव्यघाती । शीले तु उष्णं भोक्तुं शीलमस्येति उष्णभोजी । शीले किम् । उष्णं भुंक्ते कदाचित् ॥

तत्त्वदीपिका-णिनिरतीते । शीले तृन्नित्यतः शीलेइत्यनुवर्त्तते । अग्निष्टोमेनायाक्षीदिति । नन्वग्निष्टोमस्य कर्मणामध्येयत्वेनाभेदात्कथं करणत्वमस्येति चेत्सत्यभ्यासोपि फलोत्पादनायां करणम् संभवतीत्याकरे समाहितत्वात् अग्निष्टोमः फलभावनायां करणम् भवत्येव । उष्णभोजीति । उष्णम् भोक्तुं शीलमस्येतिविग्रहः ।

**सू०-व्रतेच ॥ स्थण्डिलशायी ।**

सुबोधिनी-व्रतेच । व्रतेऽर्थे णिनिः स्यात् । स्थंडिले शेते व्रतार्थमिति स्थंडिलशायी । बहुलमाभीक्ष्ण्ये । णिनिः । आभीक्ष्ण्यं पौनःपुन्यं । क्षीरपायिन उशीनराः । एतत्सर्वमनुक्तसमुच्चयार्थकचशब्दादानुवृत्तेर्लभ्यते ॥

**सू०-क्विब्वनिब्डाः ॥ धातोरतीते शीले चैते । ब्रह्महा । भ्रूणहा । वृत्रहा । सुकृत् । धर्मकृत् । पापकृत् । अग्निचित् । सोमसुत् । यज्वा । सरसिजम् । सरोजम् । संस्कारजः । प्रजा । अजः । द्विजः । परितः खाता परिखा ।**

सुबोधिनी-क्विब्वनिब्डाः । पुनः क्विब्वनिब्डप्रत्ययानाह किन्त्वाद्गुणो न पित्त्वात्तुक् डित्त्वाट्टिलोपः इकार उच्चारणार्थो वेरिति विलोपः । ब्रह्मभ्रूणवृत्रेषु कर्मसूपपदेषु हंतेः क्विप् नान्यत्र । ब्रह्माणं हतवानिति इनामिति दीर्घः । ब्रह्महा । भ्रूणं गर्भं हतवानिति भ्रूणहा । वृत्रं दैत्यं हतवानिति वृत्रहा इन्द्रः । कर्मकृतवानिति कर्मकृत् । पापं कृतवानिति पापकृत् । अग्निं चितवानिति अग्निचित् । षुञ् अभिषवे । सोमं सुतवानिति सोमसुत् । वनिपि तु यज देवपूजादौ । इष्टवानिति नोपधाया इति दीर्घः यज्वा । डप्रत्यये तु जनी प्रादुर्भावे सरसि जातमिति सरसिजं । सरोजं । सप्तम्या अलुग्वा संस्काराज्जात इति संस्कारजः । प्रकर्षेण जातेति प्रजा । आवत इत्याप् " प्रजा स्यात् संततौ जने " इत्यमरः । न जात इति अजः नाइत्यदादेशः । द्वाभ्यां जन्यसंस्काराभ्यां जात इति द्विजः । खन् खनने । परितः खातेति आवत इत्याप् परिखा ॥

तत्त्वदीपिका-क्विब्वनिब्डाः । क्विपः सिद्धावपि पुनरुपादानं नियमार्थं । तेन हन्तेर्भूते ब्रह्मभ्रूणवृत्रेष्वेवेति । वनिपोपि पूर्वं वर्त्तमानार्थत्वात्पुनर्ग्रहणं भूतेपि यथास्यादित्येवमर्थं । यज्वेति । इष्टवानिति वाक्यं प्रजा प्राणिजातस्य संज्ञैषा । द्विजइति मातुर्यदग्रेजायेत इति स्मृतेः ।

**सू०-क्तक्तवतू ॥ धातोरतीते काले क्तक्तवतू एतौ स्तो भावकर्मणोः । क्तः । स्नातम् कृतः कटः । क्तवतुः । विष्णुर्विश्वं कृतवान् ।**

सुबोधिनी–क्तक्तवतू । कित्त्वाद्गुणो न । उकारो अतोनुमिति नुमर्थः क्तप्रत्ययो भाव-कर्मकर्तृषु भवति । क्तवतुः कर्त्तर्येव । ष्णा शौचे । त्वयाऽस्नायि इति स्नातम् । अकारीति कृतः कटस्त्वया । अकार्षीदिति कृतवान् । अत्वसोःसाविति दीर्घः ।

तत्त्वदीपिका–क्तक्तवतू । भावकर्मणोरिति । मंडूकप्लुत्येहभावकर्मेत्यनुवृत्तं क्तवतुः कर्तरि परिशेषात्। स्नातामिति । अस्नायीति विग्रहः । कृत इति अकारीति । कृतवानिति । अकार्षीदिति । एवमन्यो विग्रहो यथावदवगन्तव्यः ।

**मू०–गत्यर्थादकर्मकाच्च कर्तरिक्तः ॥** भावकर्मणोरपि गङ्गांगतः । स्थितः । अमान्तस्योपधायादीर्घः क्ङितिझसेकौच । शान्तः । दान्तः ।

सुबोधिनी–गत्यर्थादकर्मकाच्चकर्त्तरिक्तः । गत्यर्थादकर्मकाच्च धातोः क्तः स्यात् भाव-कर्मकर्तृषु । अगमदिति गतो गंगां सः । लोपस्त्वनुदात्ततनामिति मलोपः । अस्थादिति स्थितः सः । स्थामीतीत्वं । शमुदमु उपशमे । अशमददमदिति अमांतस्योपधाया इति दीर्घः । शान्तः । दान्तः ॥

तत्त्वदीपिका–गतइति । अगमदिति ।

**मू०–श्लिषशीङ्स्थाआसवसजनरुहजीर्यतिभ्यश्च ॥** रामःसीतामाश्लिष्टः । शेषमधिशयितः । स्वर्गमधिष्ठितः । हरिमुपासितः । हरिदिनमुपोषितः । तमनुजातः । वृषमारूढः । जगदनुजीर्णः ।

सुबोधिनी–श्लिषशीङ्स्थाआसवसजनरुहजीर्यतिभ्यश्च । एभ्यः कर्त्तरि क्तः भावकर्मणोश्च । श्लिष आलिंगने । शीङ् स्वप्ने । ष्ठा गतिनिवृत्तौ। आस उपवेशने। वस निवासे । जनी प्रादुर्भावे। रुह बीजजन्मनि प्रादुर्भावे च। जॄ वयोहानौ। अधिपूर्वाणां शीङ्स्थासामित्याधारस्य कर्मसंज्ञा । उपान्वध्याङ्पूर्वस्येति वस आधारस्य कर्मसंज्ञा । आश्लिक्षदिति आश्लिष्टो रामः सीतां । अध्यशयिष्टेति अधिशयितो हरिः शेषं । अध्यष्ठादिति अधिष्ठितः स स्वर्गम् । स्थामीतीत्वम् । उपासिष्टेति उपासितः सः हरिं । उपावात्सीदिति वसिक्षुधोरितीट् यजामिति संप्रसारणम् घसादेरिति षः उपोषितः स हरिदिनं । अन्वजनिष्टेति जनसनखनामित्यात्वं अनुजातः सः रामम् । आरुक्षदिति होढ इति ढत्वम् । तथोर्द्ध इति तस्य धत्वम् ष्टुत्वं च ढिढोलोप इतिढलोपपूर्वदीर्घौ । आरूढःस वृषम् । अन्वजारीदिति ऋतइरितीर ग्वोर्विहसे इति दीर्घः र इति तस्य नत्वम् । अनुजीर्णः स विश्वं । कर्म्मणि तु गता प्राप्ता गंगा । तेन आश्लिष्टा सीता रामेण । अधिशयितः शेषो हरिणा । अधिष्ठितः स्वर्गस्तेन । उपासितो हरिस्तेन । उपोषितं हरिदिनं तेन । अनुजातो रामस्तेन । आरूढोवृषस्तेन । अनुजीर्णो विश्वस्तेन ।

तत्त्वदीपिका–श्लिषेति: सकर्मकत्त्वादप्राप्तौ वचनं । अधिशयित इति । अध[illegible]ष्ट इति ।

**मू०–क्तोवासेट् ॥** उदुपधात्सेट् क्तो वा कित् । द्युतं [illegible] [illegible]तितम् । प्रमुदितः,प्रमोदितः साधुः ।

सुबोधिनी—क्त्वोवासेट् । उदुपधाद्बविकरणादिट्भावकर्मणोः सेट् क्तो वा कित्संज्ञः स्यात् । कित्त्वाभावे गुणः । द्युत दीप्तौ । अद्योति इति द्युतितं, द्योतितम् । तेन । मुदहर्षे । प्रामोदि इति प्रमुदितः साधुस्तेन । उदुपधात्किम् । विदितं । भावकर्म्मणोः किम् । रुचितं वनम् । गत्यर्थादकर्मकादिति कर्त्तरि क्तः । सेटि किम् । कुष्टम् कुष निष्कर्षे । आब्विकरणात्किम् । गुध्यतेर्गुधितम् ॥

**मू०—शीङ्स्विदिमिदिक्ष्विदिधृषमृषपूङस्सेटौक्तक्तवतूकितौन ॥** शयितः । शयितवान् । प्रस्वेदितः । प्रस्वेदितवान् । क्ष्वेदितः । क्ष्वेदितवान् । धर्षितः । धर्षितवान् ।

सुबोधिनी—शीङ्स्विदिमिदिक्ष्विदिधृषमृषपूङःसेटौक्तक्तवतूकितौन । अकित्त्वाद्गुणः । अशयिष्टेति शयितः । शयितवान् सः । कृत इतीट् अनुबंधनिर्देशो यङ्लुगनिवृत्त्यर्थः । शेश्यितः । शेश्यितवान् । नुधातोरिति यः । किंच । स्विदादीनामादीदित इतीण्निषेधे प्राप्ते भावे कर्त्तरि चादित इति सेट्कत्वम् । पूङःकित इतीण्निषेधे प्राप्ते पूङो वा कित इति सेट्कत्त्वम् । ञिष्विदा स्नेहनमोचनयोरिति भ्वादिरत्र गृह्यते न तु ञिष्विदा गात्रप्रक्षरणे दिवादिः भ्वादिसाहचर्यात् प्रास्वेदिष्टेति प्रस्वेदितं तेन प्रस्वेदितवान् । ञिधृषा प्रागल्भ्ये । प्रधर्षितवान् प्रधर्षितस्तेन ।

**मू०—मृषः क्षान्तौ ॥** मर्षितः । मर्षितवान् ।

सुबोधिनी—मृषःक्षांतौ । मृषः सेटौ क्तक्तवतू कितौ न स्तः क्षमायामर्थे । मर्षितः, मर्षितवान् । क्षमायां किम् । अपमृषितं वाक्यम् । अविस्पष्टमित्यर्थः ॥

**मू०—पूङोवाकितस्तस्येट् ॥** पवितः, पूतः । पवितवान् , पूतवान् ।

सुबोधिनी—पूङोवाकितस्तस्येट् । पूङः परस्य कितस्तस्येट् वा स्यात् । पूङ् पवने । कितः वुः से इत्यतो वुरित्यनुवृत्तम् ॥

**मू०—कितः ॥ उवर्णान्तादृवर्णान्तात् श्विश्रिभ्यां च परस्य कितस्तस्य इण्न ।** भूतः । वृतः । श्रितः । श्वयतेस्सम्प्रसारणस्य दीर्घः किति ते । शूनः । वेञो ह्रस्वः । किति ते । उतम् ।

सुबोधिनी—कितः । श्विश्रिऋवर्णोवर्णांतेभ्यः परस्य कितः प्रत्ययस्येण्न । अभूदिति भूतः । वृङ् संभक्तौ । वृञ् वरणे च वृतः । श्रिञ् सेवायाम् । श्रितः । टुओश्विइर् गतिवृद्ध्योः । यजामिति संप्रसारणम् । श्वयतेःसंप्रसारणस्यदीर्घः । शूनः । वेञ् तंतुसंताने । यजामिति संप्रसारणे वेञो ह्रस्वः । उतम् ॥

तत्त्वदीपिका—कित इति । वुः सेरित्यतो वुरित्यस्यानुवृत्तेरुवर्णान्तादित्यादि । नैकस्वरादित्यतो नेति योगविभागात् श्विश्रिभ्यामिति च लभ्यते ।

**मू०—आदीदितः ॥** आदित ईदितश्च क्तक्तवत्वोर्नेट् ।

सुबोधिनी—आदीदितः । आच्च ईच्च आदीतौ आदीतौ इतौ यस्य आदीदित् तस्मादादीदितो धातोः क्तक्तवत्वोरिण्न स्यात् कृत इत्यस्यापवादः ॥

तत्त्वदीपिका-आदीदित्तइति । आच्च ईच्च आदीतौ इतौ यस्य तथा तस्मात् । क्त इति प्राप्तस्यापवादः ।

**मू०-ञीताक्तवर्तमानेऽपि ॥** ञीतां धातूनां मतिबुद्धिपूजार्थानाञ्च वर्तमानेऽपि क्तः । राज्ञां मतः । बुद्धः । इष्टः ।

सुबोधिनी-ञीताक्तवर्त्तमानेपि । ञिरिद्येषां ते ञीतस्तेषां मतिबुद्धिपूजार्थेभ्यश्च क्तः स्यात् वर्त्तमानेऽर्थे । मतिरिहेच्छा बुद्धेः पृथग्ग्रहणात् । राज्ञां मतः । इष्टः तैरिष्यमाण इत्यर्थः । बुद्धः । विदितः । पूजितः । अर्च्चितः ॥

तत्त्वदीपिका-ञीतामिति । ञिरिद्येषांते ञीतस्तेषाम् ।

**मू०- दस्तस्यनोदश्च ॥** दकारात्परस्य कितस्तस्य नत्वं दकारस्य च । भेदितम् । भिन्नम् ।

सुबोधिनी-दस्तस्यनोदश्च । दात्परस्य कितस्तस्य नत्वं स्यात् ॥

**मू०-भावेकर्तरिचादितःक्तक्तवत्वोरिड्वा ॥** मेदितः, मिन्नः । प्रस्वेदितः, प्रस्विन्नः । क्ष्वेदितः, क्ष्विन्नः ।

सुबोधिनी-भावेकर्त्तरिचादितःक्तक्तवत्वोरिड्वा । आकारितोधातोर्भावकर्तृस्थितयोः क्तक्तवत्वोरिड्वा स्यात् । ञिमिदा स्नेहने । मिद्यते इति मिन्नम् । तेन शीङ्स्विदिमिदीति क्तस्याकित्त्वाद्गुणः । मेदते इति मेदितः सः । ञिष्विदा स्नेहनमोचनयोः । प्रस्विद्यते इति प्रस्विन्नं तेन । प्रस्वेदते इति प्रस्वेदितः सः । ञिक्ष्विदा स्नेहनमोचनयोः । क्ष्विन्नं तन । क्ष्वेदितः सः ॥

तत्त्वदीपिका-आदित इति ॥ आत् इद्यस्य स तथा ।

**मू०-अदोजग्धुः ॥** किति तकारे । जग्धम् ।

सुबोधिनी-अदोजग्धुः । अदो जग्धुरादेशः स्यात् किति तादौ प्रत्यये । उकारउच्चारणार्थः । तथोर्द्ध इति तस्य धः । झभेझबा इति घस्य गः । जग्धम् ॥

**मू०-रः ॥** रेफात्कितस्तस्य नत्वम् । विकीर्णम् । जीर्णम् ।

सुबोधिनी-रः । रात्कितस्तस्य नत्वं स्यात् । कॄ विक्षेपे । जॄ वयोहानौ । ऋतइरितीर् य्वोर्विहसे इति दीर्घः । विकीर्णः । जीर्णम् ॥

तत्त्वदीपिका-रइति । कृतस्यापत्यं कार्तिरित्यत्र वृद्धेरसिद्धत्वान्न स्वरांतो वेत्यस्यानुवृत्तेर्व्यवस्थया क्वचिन्न क्वचिद्वेति बोध्यं । तेन पूर्त इत्यादौ न । दस्तस्येति सुवचम् ।

**मू०-ल्वाद्योदितश्च ॥** ल्वादेरोदितश्च धातोः कितस्तस्य नो भवति । लूनः । लूनवान् । ज्या वयोहानौ । जीनः ।

सुबोधिनी-ल्वाद्योदितश्च । ल्वादेरेकविंशतेर्द्धातोरोदितश्च कितस्तस्य नत्वं स्यात् । क्र्यादेरंतर्गणोल्वादिः । लूञ् । १ । स्तॄञ् । २ । कॄञ् । ३ । वृञ् । ४ । धूञ् । ५ । शॄञ्

। ६ । हृ । ७ पृ । ८ । भृ । ९ । मृ । १० । दृ । ११ । जृ । १२ । नृ । १३ । कृ । १४ । ऋ । १५ । गृ । १६ । ज्या । १७ । री । १८ । ली । १९ । व्री । २० । प्ली । २१ । इति ल्वादिः । लूञ्छेदने । लूयतेस्म इति लूनः । लुनाति स्मेति लूनवान् । ज्या वयोहानौ । ग्रहामिति संप्रसारणे जीनः ॥

तत्त्वदीपिका–ल्वाद्योदित इति । लू आदिर्यस्य स ल्वादिः । ओदित् यस्य स ओदित् । ल्वादिश्च ओदिच्च ल्वाद्योदित् तस्मात् । लून इति लूयते स्म इति । लूनवानिति । लुनाति स्मेति ।

**मू०–प्यायः पीतिकिति ॥ पीनः । भुजो कौटिल्ये भुग्नः । हीनः । स्वादयओदितः । षूङ् प्राणिप्रसवे । सूनः । सूनवान् । दूङ् परितापे । दूनः । मीनः । डीङ् उड्डीनः । दीनः । लीनः । व्रीणः । रीणः । धीनः ।**

सुबोधिनी–प्यायः पीतिकिति । प्यायः पी आदेशः स्यात् तादौ किति । ओप्यायी वृद्धौ । पीनः । भुजो कौटिल्ये । नत्वस्य सिद्धत्वेन झलपरत्वात् चोःकुरिति गः । भुग्नः । ओहाक् त्यागे । अपिद्धाधेतीत्वं । हीनः । षूङ् प्राणिप्रसवे । स्वादयओदित इत्योदित्त्वान्नत्वम् । सूनः । सूनवान् । दिवादेरंतर्गणोयं स्वादिः । षूङ् १ । दूङ् २ । दीङ् । ३ । डीङ् । ४ धीङ् । ५ । मीङ् । ६ । रीङ् । ७ । लीङ् । ८ ।व्रीङ् । ९ । स्वादयो नव । दूङ् परितापे । दूनः । दूनवान् । डीङ् विहायसा गतौ । ओदिन्मध्ये डीङः पाठसामर्थ्यादिण्न । उड्डीनः । दीङ् क्षये । दीनः । लीङ् श्लेषणे । लीनः । रीङ् स्रवणे रीणः । धीङ् आधारे धीनः ॥

तत्त्वदीपिका–उड्डीन इति । ओदिन्मध्ये पाठसामर्थ्यान्नेट् । एवमन्यत्रापि कर्त्राद्यर्थभेदेन वाक्यभेदः

**मू०–दुग्वोर्दीर्घश्च ॥ दूनः । गूनः ।**

सुबोधिनी–दुग्वोर्दीर्घश्च । दुगुभ्यां परस्य कितस्तस्य नत्वमनयोर्दीर्घश्च स्यात् । गु पुरीषोत्सर्गे । दु गतौ । टुदु उपतापे अयं तु न गृह्यते । सानुबंधकत्वात् । मृदुतया दुतया इति माघः । दूनः । गूनः ॥

तत्त्वदीपिका–दुग्वोरिति । दुगतावित्येव गृह्यते । नतु टुदु उपताप इत्यपि सानुबंधकत्वात् । मृदुतया दुतयेति माघोपि ।

**मू०–क्षियोदीर्घःकर्त्तरिक्तक्तवत्वोर्नत्वंच ॥ क्षीणः । क्षीणवान् । कर्त्तरि किम् । क्षितम् ।**

सुबोधिनी–क्षियोदीर्घःकर्त्तरिक्तक्तवत्वोर्नत्वंच । क्षियः परयोः कर्त्तरि स्थितयोः क्तक्तवत्वोस्तस्यनत्वं क्षियो दीर्घश्च स्यात् । क्षि क्षये । क्षि निवासगत्योश्च । क्षयतिस्मेति क्षीणः । क्षीणवान् । कर्त्तरि किम् । क्षीयते स्मेति क्षितं कामिन ॥

**मू०–यलसंयोगादेरादन्तात्कितस्तस्यनत्वम् ॥ द्राणः । ग्लानः । म्लानः ।**

सुबोधिनी–यलसंयोगादेरादंतात्कितस्तस्यनत्वम् । यलप्रत्याहारः संयोगादेराकारांताद्धातोः परस्य कितस्तस्य नत्वं स्यात् । द्रा कुत्सायां । द्राणः । ग्लै म्लै हर्षक्षये । ग्लानः म्लानः ॥

मू०-नुदविदोन्दत्राघ्राह्रीनिर्वाभ्योवा ॥ त्राणः, त्रातः । घ्राणः । घ्रातः । ह्रीणः, ह्रीतः । नुत्तः, नुन्नः । विद विचारणे । वित्तः, विन्नः । उन्दी क्लेदने । उत्तः, उन्नः । निर्वाणो मुनिवन्ह्यादौ निर्वातस्तुगतेऽनिले ।

सुबोधिनी-नुदविदोंदत्राघ्राह्रीनिर्वाभ्योवा । एभ्यः कितस्तस्य नत्वं वा स्यात् । आद्यानां त्रयाणां दस्तस्येति नित्यं नत्वे प्राप्ते त्राघ्रा अनयोर्यलसंयोगादेरिति नत्वे प्राप्ते ह्री वा अनयोरप्राप्ते साति विभाषेयं । नुद प्रेरणे । नुत्तः, नुन्नः। विद विचारणे । रौधादिक एव गृह्यते । उन्दिना परेण साहचर्यात् । वित्तः, विन्न । तथा च भाष्यम् " वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते ॥ विन्तेर्विंत्तिश्च विन्नश्च भोगे वित्तश्च विंदतेरिति" । उन्दी क्लेदने । आदीदितइतीण्न । नोलोप इति नलोपः । उन्नः, उत्तः । त्रैङ् पालने । त्राणः, त्रातः । घ्रा गंधोपादाने घ्राणः, घ्रातः । ह्री लज्जायां ह्रीतः, ह्रीणः । वा गतिगंधनयोः अवाते कर्त्तरि साति नत्वं स्यात् निर्वाणोऽग्निर्मुनिर्वा । मुक्तिं गत इत्यर्थः । वाते कर्त्तरितु निर्वातो वातः । नितरां वातो गत इत्यर्थः । गत्यर्थादिति कर्तरि क्तः ॥

मू०-दोदत्ति ॥ दाइत्यस्यदथ् कितितकारे न तु पितः । दत्तः । दत्तवान् ।

सुबोधिनी-दोदत्ति । ददातेर्दथादेशः स्यात्किति तकारे । दाप् लवने अस्य तु न । व्याख्यानात् प्रयोगाभावाच्च । थांतोयमादेशः । किंच यदि तांत आदेशस्तदा विदत्तमित्यादौ आद्यंतवदेकस्मिन्निति न्यायेन नाम्यंतोपसर्गस्येति दीर्घः स्यात् । यदि दान्तस्तदा दस्तस्येति नत्वं स्यात् । यदि धांतस्तदा तथोर्द्ध इति क्तस्य धः स्यात् । थांते तु खसेचपा इति थस्य तः । दत्तः । दत्तवान् । पितस्तु दातः ॥

मू०-स्वरांतोवा ॥ स्वरान्तादुपसर्गादुत्तरस्य दाइत्यस्य तो वाकिति तकारे न तु पितः । प्रत्तः । प्रदत्तः । अवत्तः । अवदत्तः ।

सुबोधिनी-स्वरान्तोवा । पक्षे दथादेशः ॥

तत्त्वदीपिका-स्वरपदं स्वरान्तोपसर्गोपलक्षकमित्याह।स्वरान्तोपसर्गादिति। तेन देवदत्त इत्यादौ न

मू०-नाम्यन्तोपसर्गस्यदीर्घोदादेशेतकारे ॥ सुष्ठु अदायि सूत्तम् । नीत्तम् ॥

सुबोधिनी-नाम्यंतोपसर्गस्यदीर्घोदादेशेतकारे । नाम्यंतस्योपसर्गस्य दीर्घः स्यात् दास्थाने आदेशो यस्तकारस्तस्मिन् परे ॥

मू०-धात्रोहिःकितिते ॥ निहितः ।

सुबोधिनी-धात्रोहिः किितिते । दधातेर्हिरादेशः स्यात् किति तकारे ॥

मू०-ध्याख्यापॄमूर्छिमदिभ्योननत्वम् ॥ ध्यातः । ख्यातः । पूर्तः । मूर्तः । मत्तः । यज इष्टम् । उप्तम् । ऊढः । व्येञ् वीतः । ह्वेञ् हूतः । उदितः । उक्तः ।

सुबोधिनी–ध्याख्यापृमूर्छिमदिभ्योननत्वम् । आद्ययोर्यलसंयोगादेरिति नत्वे प्राप्ते । पॄइ-न्त्यस्य तु ल्वादिषु पाठात् ल्वाद्योदित इति नत्वे प्राप्ते मूर्छतेस्तु छस्य लोपे कृते र इति नत्वे प्राप्ते माद्यतेस्तु दस्तस्येति नत्वे प्राप्ते निषेधः । ध्यै चिंतायां । ध्यातः । ख्या प्रकथने ख्यातः । पृ पालनादौ । पोरुरित्युर् । र्व्वोर्विहसे इति दीर्घः । कित इतीण्न । पूर्त्तः । मुर्छा मोहसमुच्छ्राययोः । रेफाच्छोरिति छलोपः । आदीदित इतीण्न । मूर्त्तः । मदी हर्षे । आदीदित इतीण्न । मत्तः । यज देवपूजादौ । छशषेति षत्वम् । ष्टुत्वं । यजादि-त्वात् यजामिति संप्रसारणं । इष्टं । टुवप् बीजतंतुसंताने । उप्तम् । वह प्रापणे । होढ इति हस्य ढः तथोर्ध इति तस्य धः ष्टुत्वं ढिढ इति ढलोपपूर्वदीर्घौ ऊढम् । व्येञ् संवरणे । वीतः । व्हेञ् स्पर्द्धायाम् । हूतः । वद व्यक्तायां वाचि । कृतइतीट् । उदितः । वच परि-भाषण उक्तः ॥

**मू०–वसतिक्षुधोरिट्क्त्वाक्तक्तवतूनाम्॥** उषितः । क्षुधितः । सुप्तः ।

सुबोधिनी–वसतिक्षुधोरिट्क्त्वाक्तक्तवतूनां । वस निवासे । यजामिति संप्रसारणं । घसादेरिति षः । उषितः । क्षुध बुभुक्षायां । क्षुधितः । ञिष्वप् शये । यजामिति संप्रसारणं । सुप्तः ॥

**मू०–क्वचिद्वेटःक्तक्तवत्वोर्नेट् ॥** व्रश्चू वृकूणः वृकणवान् ।

सुबोधिनी–क्वचिद्वेटःक्तक्तवत्वोर्नेट् । यस्य धातोः कुत्रचित्स्थले विकल्पेनेड्विहित-स्तस्माद्धातोः परयोः क्तक्तवत्वोरिण्न स्यात् । ओव्रश्चू छेदने । ऊदितो वेति वेट्त्वादि-ण्न । ग्रहामिति संप्रसारणम् । ल्वाद्योदित इति नत्वं । नत्वस्यासिद्धत्वात् झसे परतः छशषेति षत्वे प्राप्ते क्तक्तवत्वोरादेशः षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्य इति चोःकु-रिति कुत्वम् स्कोरिति सलोपः । वृक्णः , वृक्णवान् ॥

**मू०–अञ्चेः पूजायामिट् ॥** अञ्चितः । जातः ।

सुबोधिनी–अंचेःपूजायामिट् । पूजार्थादंचतेः परयोः क्तक्तवत्वोरिट् स्यात् । उदितः क्त्वावेडिति अंचेः क्त्वायां वेट्कत्वात् क्वचिद्वेटइति निषेधे प्राप्ते सति विधिः । पूजार्था-चतेर्नेति नलोपो न । आंचतः । गतौ तु नोलोप इतिनलोपः । चोःकुरितिकः । अक्तः । जनी प्रादुर्भावे । जनसनेत्यात्वम् । जातः ॥

**मू०–पचोवः ॥** क्तक्तवत्वोस्तस्य । पक्वः । पक्ववान् ।

सुबोधिनी–पचोवः । पचतेः परस्य क्तक्तवत्वोस्तस्य वः स्यात् । डुपचष् पाके । वस्यासिद्धत्वाच्चोःकुरिति । कः पक्वः ॥

**मू०-क्षायोमः ॥** क्षामः । क्षामवान् ।

सुबोधिनी–क्षायोमः । क्षायतेः परस्य क्तक्तवत्वोस्तस्य मः स्यात् । क्षै क्षये । संध्य-क्षराणामित्यात्वं । क्षामः ॥

तत्त्वदीपिका–क्षाम इति । क्षै क्षये इत्यस्यात्वे ।

**मू०–प्रस्त्यस्सम्प्रसारणंकितितस्यमोवा ॥** प्रस्तीमः । प्रस्तीतः ।

सुबोधिनी–प्रस्त्यःसंप्रसारणंकितितस्यमोवा । प्रपूर्वस्य स्त्यायतेः संप्रसारणं स्यात् । किति क्तक्तवत्वोस्तस्य मश्च वा । स्त्यै शब्दसंघातयोः । प्रस्तीमः । प्रस्तीतः ॥

तत्त्वदीपिका–प्रस्त्य इति । प्रस्त्यः संप्रसारणंनित्यं तस्यतुमोवेत्यर्थः । प्रस्त्यायतिस्म प्रस्तीमः । आदौ संप्रसारणे कृते यलसंयोगादित्याभावान्न नत्वमनुपसर्गादिति ।

**मू०–शुषेःकः । शुष्कः । शुष्कवान् ।**

सुबोधिनी–शुषेःकः । शुषेः परस्य क्तक्तवत्वोस्तस्य कः स्यात् । शुष शोषणे । शुष्कः ॥

**मू०–स्फायस्स्फीतिकिति ॥ स्फीतः । धेट् धीतम् । गीतम् । पीतम् । दो दितम् । सो सितम् । मितम् ।**

सुबोधिनी–स्फायःस्फीतिकिति । स्फायतेःस्फीरादेशः स्यात् तादौ किति । स्फायी वृद्धौ स्फीतः । धेट् पाने । गै शब्दे । पा पाने । एषां त्रयाणामपिद्वाधेतीत्वं । धीतं गीतं पीतं । दो अवखंडने । षोंतकर्मणि । मा माने । माङ् माने । मेङ् प्रणिदाने । एषां स्थामितीत्वं । दितं । सितं । मितम् ॥

**मू०–सेटोःक्तक्तवत्वोर्ञिलोपः ॥ चोरितः । चोरितवान् । पाचितः पाचितवान् ।**

सुबोधिनी–सेटोःक्तक्तवत्वोर्ञिलोपः । ञिप्रत्ययस्य लोपः स्यात् सेटोः क्तक्तवत्वोः परयोः । चुर स्तेये । कृत इतीट् । ञिलोपे चोरितः । डुपचष् पाके ञ्यंतः कृत इतीट् । पाचितः ॥

**मू०–ऊर्णोतेर्नेट् ॥ ऊर्णुतः ।**

सुबोधिनी–ऊर्णोतेर्नेट् । ऊर्णोतेरिण्न स्यात् तादौ किति । ऊर्णुञ् आच्छादने । ऊर्णुतः । ऊर्णुतवान् ॥

**मू०–द्रवस्यकाठिन्येस्पर्शेचार्थेश्यैङस्सम्प्रसारणंकितस्तस्यनत्वंचनतुस्पर्शे ॥ शीनं घृतम् । स्पर्शे तु शीतं जलम् ।**

सुबोधिनी–द्रवस्यकाठिन्येस्पर्शेचार्थेश्यैङस्संप्रसारणंकितस्तस्यनत्वंचनतुस्पर्शे । श्यैङः संप्रसारणम् स्यात् द्रवरूपस्य द्रव्यस्य काठिनस्य भावः काठिन्यं तस्मिन् काठिन्येऽर्थे च पुनः द्रवस्यास्पर्शेऽर्थे श्यैङः परस्य कितस्तस्य नश्च स्यात् स्पर्शेऽर्थे नत्वं न । श्यैङ् गतौ शीनं घृतम् । स्पर्शे किम् । शीतं जलं । काठिन्ये स्पर्शेच किम् । संश्यानो वृश्चिकः । शीतात्संकुचित इत्यर्थः । यलसंयोगादेरिति नत्वम् ॥

**मू०–अंचेःकितस्तस्यनत्वंनत्वपादाने ॥ समक्नः । अन्यत्रोदक्तमुदकं कूपात् ।**

सुबोधिनी–अंचेःकितस्तस्यनत्वंनत्वपादाने । अंचु गतिपूजनयोः । नत्वस्यासिद्धत्वात् चोःकुरिति कः । उदितः क्त्वोवेडिति क्त्वायां वेट्कत्वात् । क्वचिद्वेट इतीण्न । समक्नः । अनपादाने किम् । उदक्तमुदकं कूपात् ॥

**मू०–दिवोऽविजिगीषायाम् ॥** आद्यूनः । विजिगीषायां तु द्यूतम् ।

सुबोधिनी–दिवोऽविजिगीषायाम् । दिवः क्तक्तवत्वोस्तस्य नः स्यात् विजेतुमिच्छा विजिगीषा तस्यां वाच्यायां नत्वं न । दिवु क्रीडाविजिगीषादौ क्वितिझसे इति वस्य ऊः । द्यूनः क्षीण इत्यर्थः । "आद्यूनःस्यादौदरिक" इति हैमः । विजिगीषायां तु द्यूतं । द्यूते विजिगीषयाऽक्षाः पात्यंते इति ॥

**मू०– अनुपसर्गात्फुल्लक्षीबकृशोल्लाघानिपात्यन्ते ॥** फुल्लः । फुल्लवान् । क्षीबृ मदे । क्षीबो मत्तः । कृशस्तनुः । लाघ शोषणालमर्थयोः । उल्लाघो नीरोगः । उपसर्गात्तु । **चरफलोरतउतिकिति ॥** प्रफुल्तः । प्रक्षीबितः । प्रकृशितः । प्रोल्लाघितः । चर चूर्णः ।

सुबोधिनी–अनुपसर्गात् फुल्लक्षीबकृशोल्लाघानिपात्यंते । ञिफला विशरणे । क्तक्तवत्वोस्तस्य लत्वं निपात्यते चरफलोरतउतिकिति । एतयोरस्य उत्स्यात् तादौ किति । आदीदित इतीण् न । फुल्लः । क्षीबृ मदे । कृश तनूकरणे । लाघृ शक्तौ । एषां त्रयाणां क्तस्य तलोपो निपात्यते । तलोपस्यासिद्धत्वात् । प्राप्तस्येटोऽभावश्च निपात्यते । ननु फुल्ल विकसने लाघृ शक्तौ आभ्यां पचादेर इत्यप्रत्यये इतराभ्यां नाम्युपधात्क इति कप्रत्यये फुल्लोल्लाघक्षीबकृशाः शब्दाः सिद्ध्यंति किमनेन । उच्यते । फुल्तादिनिवृत्त्यर्थम् सूत्रम् ॥

तत्त्वदीपिका–फुल्ल इति । तस्य लत्वं निपात्यते । लोध्रद्रुमं सानुमतः प्रफुल्लं । प्रफुल्लराजीवांकमध्ये । इत्यादौ तु फुल्लविकसने इत्यस्मात्पचाद्ये बोध्यं । यद्वा प्रफुल्लेन समासे ।

**मू०– उत्फुल्लसंफुल्लौच ॥**

सुबोधिनी–उत्फुल्लसंफुल्लौच । उत्संपूर्वकावप्येतौ निपात्येते । कथं तर्हि लोध्रद्रुमं सानुमतः प्रफुल्लमिति रघुः । आह । फुल्ल विकसने अस्मात् पचादेरित्यप्रत्यये प्रफुल्ल इति । यद्यपिप्रफुल्लवदुत्फुल्लसंफुल्लावपि पचादेरित्यनेन सिद्धौतथापि उत्फुल्त संफुल्त इति प्रयोगानिवृत्त्यर्थं सूत्रम् ॥

तत्त्वदीपिका–उत्फुल्लेति । यद्यपि प्रफुल्लपदे तयोरपि सिद्धिस्तथापि उत्फुल्त इत्यादि रूपनिवृत्त्यर्थमिदम् ।

**मू०– वित्तोभोगप्रतीतयोः ॥** वित्तं धनम् । वित्तः पुरुषः । अन्यत्र विन्नः । भित्तं शकलम् । भिन्नमन्यत्र ।

सुबोधिनी–वित्तोभोगप्रतीतयोः । भुज्यते इति भोगस्तस्मिन् भोगेर्थे प्रतीतः प्रसिद्धः तस्मिन्प्रतीतेऽर्थें च विंदतेः परस्य क्तस्य नत्वाभावो निपात्यते । द्रस्तस्येति नत्वेप्राप्ते निषेधः । विद्लृ लाभे । वित्तः । विद्यतेर्विन्नः । विन्दतेर्वित्तः विन्नश्च । वेत्तेर्विदितः । विद सत्तायां विद विचारणे दैवादिकरौधादिकावेतावनिटौ । विदज्ञाने । विद्लृलाभे आदादिकतौदादिकावेतौसेटौ । विद्लृ लाभे अस्यतु गमहनविदेति क्वसुप्रत्यये वेट्कत्वात्क्वचिद्वेट् इतीण्न । भित्तं शकलं । भिदेः परस्य क्तस्य नत्वाभावो निपात्यते शकलेर्थे । द्रस्तस्येति प्राप्ते निषेधः । भित्तं शकलखंडेवेत्यमरः । अन्याद्भिन्नम् । विदीर्णमित्यर्थः ॥

**मू०– ऋणमाधमर्ण्ये ॥ ऋतमन्यत्र ।**

सुबोधिनी–ऋणमाधमर्ण्ये । ऋगतौ अस्मात् क्तस्य नत्वं निपात्यते अधमं दुःखप्रद-मृणमस्य सोऽधमर्णस्तस्य भाव आधमर्ण्यं तस्मिन्नाधमर्ण्येऽर्थे 'अधमर्णस्तु ग्राहक' इत्यमरः ॥

तत्त्वदीपिका–ऋणमाधमर्ण्यइति । अधमर्ण्यं इति अधमस्य ऋणे अधममृणं यस्येतिवाऽधमर्णस्त-स्यभावस्तत्ता तस्मिन् तेन वाधमर्ण्यव्यवहारो लक्ष्यते तथा चोत्तमर्णेपि प्रयोगः सिध्यति ।

**मू०–क्षुब्धस्वान्तध्वांतलग्नम्लिष्टविरिब्धफाण्टबाढानिमन्थमन-स्तमस्सक्ताविस्पष्टस्वरानायासभृशेषु ॥ क्षुब्धो मन्थः । स्वन शब्दे । स्वान्तं मनः । ध्वान्तं तमः । लगे संगे । लग्नंसक्तम् । म्लिष्टमविस्प-ष्टम् । रेभृ शब्दे । विरिब्धः स्वरः । फाण्टमनायाससाध्यः कषायविशेषः । बाहृ प्रयत्ने । बाढम् भृशम् । अन्यत्र तु क्षुभितम् । स्वनितम् । ध्वनितम् । लगितम् । म्लेच्छितम् । विरेभितम् । फणितम् । बाहितम् ।**

सुबोधिनी–क्षुब्ध १ स्वांत २ ध्वांत ३ लग्न ४ म्लिष्ट ५ विरिब्ध ६ फांट ७ बाढानि ८ मन्थ १ मन २ स्तमः ३ सक्ता ४ विस्पष्ट ५ स्वरा ६ नायास ७ भृशेषु ८ ॥ क्षुब्धादीन्य-ष्टावनिट्कानि निपात्यंते मंथादिष्वर्थेषु । क्षुभ संचलने तथोर्द्ध इति तस्य धः । झभेजबा इति भस्य बः । क्षुब्धः । स्वन ध्वन शब्दे । अमांतस्येति दीर्घः । स्वान्तम् । ध्वांतम् । लगे नत्वमपि निपात्यते । लग्नम् । म्लेच्छ अव्यक्ते शब्दे । रेभृ शब्दे अनयोरुपधाया इत्व-मपि निपात्यते छशषेतिषत्वं ष्टुत्वं । म्लिष्टं तथोर्द्ध इति धः । झभेइति भस्य बः । विरिब्धः। फण गतौ । अमांतस्येति दीर्घः ष्टुत्वम् णस्यानुस्वारो निपात्यते फांटं बाहृप्रयत्ने । ह्रोढ इति ढः तथोर्द्ध इति तस्य धः । ष्टुत्वं ढिढ इति ढलोपे बाढं । कथं तर्हि क्षुब्धो राजेति । आग-मजमनित्यमित्यागमस्यानित्यत्वादिडभावः ॥

तत्त्वदीपिका–क्षुब्धमित्यादि । क्षुब्धमित्यादीन्यष्टौ निपात्यंते मंथादिष्वर्थविशेषेषु वाच्येष्वित्यर्थः । मंथ इति द्रवद्रव्यसंपृक्ताः सक्तवो मंथः मंथनदंडश्च ।

**मू०–धृष्टविशस्तावविनये॥ धृष्टः । विशस्तः । अन्यत्र धर्षितः । विश-सितः ।**

सुबोधिनी–धृष्टविशस्तावविनये अविनयेऽर्थे एतावनिटौ स्तः । ञिधृषा प्रागल्भ्ये अस्य आदीदित इतीण्निषेधे सिद्धे शसु हिंसायामस्य उदितः क्त्वो वेडिति क्त्वायां वेट्कत्वा-त्कचिद्वेट इतीण्निषेध सिद्धे अनयोरविनय एवानिट्त्वं नान्यत्रेति नियमार्थं सूत्रं । विन-येतु धर्षितः । शीङ्स्विदिमिदीति क्तस्याकित्त्वाद्गुणः ॥

तत्त्वदीपिका–अन्यत्रेति । अविनयादन्यत्रेत्यर्थः । धृषेरादित्वं चिन्त्यमिति कश्चित् । अन्यस्तु अविनया-दन्यत्र भावकर्मणोधृष्टं धर्षितमित्यादौ विकल्पेट्त्वार्थमाह ।

**मू०–दृढःस्थूलबलयोः ॥ दृहितो दृंहितोऽन्यः । बृह बृहि वृद्धौ ।**

सुबोधिनी–दृढः स्थूलबलयोः । स्थूलो मांसलस्तस्मिन्नर्थे । बलमस्यास्तीति बलः । अर्शआद्यच् तस्मिन् बलवत्यर्थे च आभ्यां परस्य क्तप्रत्ययस्य ढत्वं धातोरिडभावहलोपौ

च इदितो नलोपश्च निपात्यते । दृढः । ननु ह्रोढ इति ढत्वं तथोर्द्ध इति धत्वे ष्टुत्वे च ढिढ इति ढलोपे कृते दृढेति रूपसिद्धौ सत्यां किमर्थं ढत्वहलोपयोर्निपातनम् । उच्यते । तथाहि सति ढलोपस्यासिद्धत्वेन अलघुत्वात् द्रढिमेत्यत्र ऋरइमनीति रभावो न स्यात् । परिद्रढय्य इत इत्यत्र परिद्रढीत्यस्मान्नामधातोः क्यप्रत्यये क्यपि लघुपूर्वात्परस्य ञेरिति ञेरयादेशो न स्याच्च । अतोऽसिद्धत्वनिवृत्तये निपातनम् ॥

तत्त्वदीपिका–स्थूलबलयोरिति । बलमस्यास्तीति बलः अइकावित्यः । मांसलो निर्बलो दृढः ।

**मू०–प्रभौपरिवृढः ॥ परिवृहितः, परिवृंहितोऽन्यः ।**

सुबोधिनी–प्रभौपरिवृढः । प्रभौ वाच्ये बृह बृहि वृद्धौ आभ्यां परस्य क्तस्य ढत्वं धातो रिडभावहलोपौ च । इदितो नलोपश्च निपात्यते । 'प्रभुः परिवृढो ऽधिप' इत्यमरः । अत्रापि ढत्वहलोपयोर्निपातनं । व्रढिमा पारिव्रढय्येत्यादिसिद्धयर्थं प्राग्वदेव ॥

**मू०–कृच्छ्रगहनयोःकषः ॥ कष्टम् । कष्टो मोहः । कष्टं शास्त्रम् । कषितमन्यत् ।**

सुबोधिनी–कृच्छ्रगहनयोः कषः । एतयोरर्थयोः कषः परस्य क्तस्येण्नस्यात् 'स्यात्कष्टं कृच्छ्रमाभीलमि' त्यमरः । अत्र कष्टशब्देन दुःखं तत्कारणं च गृह्यते । कष हिंसायां । कष्टो मोहः दुःखहेतुरित्यर्थः । कष्टं शास्त्रं । दुखगाहमित्यर्थः ॥

**मू०–घुष्टोऽविशब्दने ॥ घुष्टा रज्जुः । अविशब्दने किम् । घुषितं वाक्यम् ।**

सुबोधिनी–घुष्टोऽविशब्दने । विशब्दनंप्रतिज्ञानं न विशब्दनमविशब्दनं तस्मिन्नर्थे घुषेः परस्य क्तस्येण् न स्यात् । घुषिर् शब्दार्थे भ्वादिः । घुषिर् अविशब्दने चुरादिः । द्वयोरप्यत्र ग्रहणं । ननु विशब्दनेर्थे इण्निषेधाभावात् ञिप्रत्यये उपधागुणे कृते सेटोः क्तक्तवत्वोरिति ञिलोपे च घोषितमित्यपि स्यात् । अत्राहुः । विशब्दनेऽर्थेचुरादेर्ञिरेवानित्य इति ॥

तत्त्वदीपिका–घुषितमिति । शब्देन प्रकटीकृताभिप्रायमित्यर्थः ।

**मू०–अभ्यर्णमाविदूर्य्ये ॥ अभ्यर्दितमन्यत् ।**

सुबोधिनी–अभ्यर्णमाविदूर्य्ये । अर्देः परस्य क्तस्येण्न स्यात् आविदूर्य्येऽर्थे । विशेषेण दूरं विदूरं न विदूरमविदूरम् अविदूरस्य भावः आविदूर्यं । अर्दगतौयाचने च । द्स्तस्येति तदयोर्नत्वम् । अभ्यर्णम् । नातिदूरमासन्नं वा ॥

तत्त्वदीपिका–आविदूर्यइति । विशेषेण दूरं विदूरं ततोऽन्यदविदूरं नातिदूरमासन्नं वा सामीप्य इति तत्समेव नोक्त संकोचात् ।

**मू०–क्षीरहविषोःपाकेशृतम् ॥ अन्यत्र श्राणम् श्रपितं वा ॥**

सुबोधिनी–क्षीरहविषोः पाकेशृतं । श्रायतेः शृ आदेशो निपात्यते । श्रा पाके अदादौ चुरादौ च घटादावपि पठ्यते । श्रै पाके भ्वादौ । अस्यापिकृतात्वस्येहग्रहणं । निपातनसामर्थ्याल्लक्षणप्रतिपदोक्तयोरिति परिभाषा नाश्रीयते । शृतं क्षीरं । स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः ।

क्षीरहविर्भ्यामन्यत्तु श्राणं यलसंयोगादेरिति नत्वं। श्रपितं शाकादि। मितां ह्रस्व इति ह्रस्वः॥

तत्त्व०- शृतामिति। श्राश्रपयत्योर्निपातनं। श्राणमिति शाकादि।

**मू०-दान्तादयोवानिपात्यन्ते॥** दान्तः। दमितः। शान्तः। शमितः। पूर्णः। पूरितः। दसु उपक्षये। दस्तः। दासितः। स्पष्टः। स्पाशितः। छन्नः। छादितः। ज्ञप्तः। ज्ञपितः। रुष्टः। रुषितः। आन्तः अमितः। तूर्णः। त्वरितः। संघुष्टः। संघुषितः। आस्वांतः। आस्वनितः। हृष् तुष्टौ। हृष्टम्। हृषितम्। अपचायितः। अपचितः। प्यानः। पीनः। ल्हादी सुखे।

सुबोधिनी-दान्तादयो वा निपात्यंते दांतादयः सप्त ञिप्रत्यये कृते सति क्तप्रत्ययान्ता निपात्यन्ते। शमु दमु उपशमे। जनीजृषिति मित्त्वादुपधाया ह्रस्वः। एषां सप्तानां निपातनादिडभावः। ञेरिति ञिलोपश्च अमांतस्येति दीर्घः। दांतः। शांतः। पूरी आप्यायने दिवादौ चुरादौ च। र इति तस्य नत्वं। पूर्णः। दसु उपक्षये। स्पश बाधने। छद अपवारणे। एषां त्रयाणां वृद्ध्यभावो निपात्यते। दस्तः। छशषेतिषत्वं ष्टुत्वं स्पष्टः। दस्तस्येति तदयोर्नत्वं। छन्नः। ज्ञप ज्ञानज्ञापनयोश्चुरादिर्मित्त्वादुपधाया ह्रस्वः ज्ञप्तः। पक्षे कृत इतीट् क्तक्तवत्वोरिति ञिलोपः। शमित इत्यादि। रुषादिभ्यः पंचभ्यः क्तस्येडागमो वा निपात्यते। रुष रोषे। इषु सहेति वेट्कत्वात् क्वचिद्विट इति निषेधे प्राप्ते विकल्पो निपात्यते। रुष्टः। रुषितः। अम गत्यदिषु। अम रोगे इति चौरादिकस्तु न गृह्यते। एकस्वरादित्यधिकारात्। अमांतस्येति दीर्घः। आंतः। अमितः। ञित्वरा संभ्रमे। आदीदित इति निषेधे प्राप्ते इड्विकल्पो निपात्यते। ज्वरत्वरेत्यूः। र इति क्तस्य नत्वम्। तूर्णः। त्वरितः। घुषिरः अविशब्दने घुष्टोऽविशब्दने इति विशब्दनेऽर्थे नित्यमिटि प्राप्ते विकल्पो निपात्यते संघुष्टः। संघुषितः। स्वन शब्दे। अमांतस्येति दीर्घः। आस्वांतः। आस्वनितः। आङ्पूर्वस्य स्वनेर्मनोभिधानेप्ययं विकल्पः परत्वात्। आस्वांतम् आस्वनितं वा मनः। हृषु अलीके। अस्योदित इति क्त्वायां वेट्कत्वात् क्वचिद्विटइतीण्निषेधे प्राप्ते। हृष तुष्टौ सेट्त्वादस्य नित्यमिति प्राप्ते विकल्पो निपात्यते। उभयोरिह ग्रहणं। हृष्टं हृषितं। लोम। हृष्टो हृषितो मंत्रः। विस्मितः। प्रतिहतो वेत्यर्थः। चायृ पूजानिशामनयोः। अस्य च आदेशो निपात्यते वा क्ते। अपचितः। अपचायितः। ओप्यायी वृद्धौ। अस्य पीति निपात्यते वा क्ते। आदीदित इतीण्निषेधः। यवयोर्वसे इतियत इति वा यलोपः। ल्वाद्योदित इति नत्वं। प्यानः। पीनः स्वेदः। स्वांगेनित्यं। पीनं मुखं। सोपसर्गस्य न। प्रप्यानः। आङ्पूर्वस्य तु स्यादेव। आपीनः कूपः। आपीनमूधः॥

तत्त्वदीपिका-दान्तादय इति। ञ्यंता इत्यर्थः। तूर्ण इति त्वरासंभ्रम इत्यस्य। आदित्वमस्य मंदफलमात्मनेपदस्यादित्वेनैव सिद्धेः।

**मू०-ल्हादेर्ह्रस्वःक्तिति॥** प्रल्हन्नः।

सुबोधिनी-ल्हादेर्ह्रस्वःक्तिति। ल्हादीसुखे। आदीदित इतीण्न। दस्तस्येति नत्वम्। प्रल्हन्नः॥

तत्त्वदीपिका—प्रह्लन्न इति। ह्लादी सुखे। ईदित्त्वान्नेट्।

**मू०—निनदीभ्यांस्नातेस्सस्यषःकौशले ॥** निष्णातः। नदीष्णातः।

सुबोधिनी—निनदीभ्यांस्नातेः सस्यषः कौशले। आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये। शास्त्रेषु निष्णातः कुशलः। नद्यां स्नातो नदीष्णातः नदीस्नाने कुशलः। नाम्निचेति डः॥

तत्त्वदीपिका—निनदीभ्याहिति ॥ नदीष्णात इति नदीस्नानेकुशलइत्यर्थः।

**मू०—स्थैर्यगतिभक्षणार्थेभ्योऽधिकरणेपिक्तः ॥** तथाच मुकुंदस्यासितमिदमिदं यातं रमापतेः। भुक्तमेतदनन्तस्येत्यूचुर्गोप्योदिदृक्षवः॥

सुबोधिनी—स्थैर्यगतिभक्षणार्थेभ्योऽधिकरणेऽपिक्तः। एभ्य आधारेर्थे क्तः स्यात्। अपिशब्देन यथाप्राप्ते। मुकुंदस्यासितमिदमिदं यातं रमापतेः। भुक्तमेतदनंतस्येत्यूचुर्गोप्यो दिदृक्षवः॥ द्रष्टुमिच्छति दिदृक्षति इति दिदृक्षवो गोप्य इत्यूचुः इतीतिकिम्। मुकुंदस्य कृष्णस्येदमासितं आस्यतेऽस्मिन्नित्यासितमासनं। रमापतेर्विष्णोरिदं यातं यायतेऽस्मिन्निति यातं मार्गः। अनन्तस्य हरेरेतद्भुक्तम्। भुज्यतेऽस्मिन्निति भुक्तम् भाजनम्। मुकुन्दस्येत्यादि त्रिषु वर्त्तमानाधारार्थक्तस्य योगे इति कर्त्तरिषष्ठी। पक्षे आसेरकर्मकत्वात् कर्त्तरि भावे च क्तः। आसित आसितं तेन। गत्यर्थेभ्यः कर्तरि कर्मणि च क्तः। ग्रामं यातः सः। ग्रामो यातस्तेन। भुजेः कर्मणि क्तः। तेन भुक्तमन्नम्। कथं तर्हि भुक्ता ब्राह्मणाः। पीता गाव इति। उच्यते। भुक्तमस्त्येषामिति अस्त्यर्थे अः॥

तत्त्वदीपिका—मुकुंदस्येत्यादि। आस्यतेऽस्मिन्नित्यासितमासनमित्यर्थः। जायतेस्मिन्नितिजातं। भुज्यतेऽस्मिन्नितिभुक्तं भाजनमित्यर्थः। त्रिष्वपिअधिकरणार्थक्तस्येति कर्त्तरिषष्ठी।

**मू०—जीर्यतेरतृ ॥** जरन्। जरन्तौ।

सुबोधिनी—जीर्यतेरतृ। जॄष् वयोहानौ अस्माद्भूतेऽर्थे अतृ प्रत्ययः स्यात्। अतृप्रत्ययमाह। ऋदित्त्वात् त्रितोनुमिति नुम्। ऋतो गुणे कृते नामत्वात्स्यादौ संयोगांतस्येति तलोपः तलोपस्यासिद्धत्वान्नोपधाया इति दीर्घो न भवति। ना जरन्। स्त्री जरती। क्तक्तवतोः जीर्णः जीर्णवान्॥

**मू०—कसुकानौणबेवत् ॥** धातोरतीते काले एतौ भवतः। तौ च यथाक्रमं णबेवत्। द्वित्वम्। संयोगान्तस्यलोपः। चकृवान्। वसोर्वउः। चकुषः। चकुषा। वसांरसे। चकृवद्भ्याम्। चक्राणः। बभज्वान्। जजागृवान्। द्वित्वेसत्येकस्वरादादन्ताद्घसेश्च वसोरिट्नान्यस्मात्।

सुबोधिनी—कसुकानौणबेवत्। भूतसामान्ये कसुकानौ प्रत्ययावाह। कसोः ककारो गुणनिषेधार्थः उकारस्तु पुंसि त्रितोनुमिति नुमर्थः। स्त्रियां तु ष्ट्रिवतः इतीबर्थः। कानप्रत्ययस्य कित्करणमस्ति। राण इत्यत्र ऋसंयोगादितिकित्त्वाद्गुणस्य निषेधार्थम्। णबादिपरे यत् कार्य्यं द्वित्वादि तत्सर्वमनयोः परयोरपि स्यात्। डुकृञ् करणे द्वित्वादि। चकृवसिति जातं। नामसंज्ञायां स्यादिः। न्सम्महत इति पुंसि पंचसु दीर्घः क्लीबे तु शौ दीर्घ। संयोगांतस्येति सलोपः। चकृवान्। चकृवांसौ। चकृवांसः। चकृवांसम्। चकृवांसौ। शसादौ तु वसोर्व

उरित्युत्वे ऋरमितिरः। चकृषः। चकृषा। वसोरसे इति सस्य दत्वं। चकृवद्भ्यां। चकृवद्भिरित्यादि। स्त्रियांतु उगितश्चेति ङीप्। वसेरेवउरित्युत्वे षत्वे च चकृषी। क्लीबे तु चकृवत्-चकृवांसि। भज सेवायां। बभज्वान्। बभंजुषी स्त्री। जागृ निद्राक्षये जजागृवान्। जजागृषी स्त्री। द्वित्वे सत्येकस्वरादादंताद् घसेश्च वसोरिट् नान्यस्मात्। द्वित्वे कृते सति एकस्वराद्धातोरादंताद्धातोः घसेश्च परस्य वसोरिट् स्यात् नान्येभ्यः परस्य वसोः। कृतेपि द्वित्वे एकस्वरा ये धातवोऽवशिष्यन्ते तेभ्य इत्यर्थः। हवत्तयोरिति निषेधं बाधित्वा ऋादेरिति नियमात्सर्वत्र प्राप्तस्येटो नियमः॥

तत्त्वदीपिका—णवेवदिति। यथापरस्मैपदिभ्योणलुतथा क्वसुः। यथात्मनेपदिभ्य ए तथाकानः द्वित्वे सतीति। द्वित्वे कृते सति एकस्वरो यस्तस्मादित्यर्थः।

**मू०— गमहनविदविशदृशांवा ॥ बभूवान्। भुवोवुक्। बभूवुषः। बभूवुषा। अद भक्षणे। आदिवान्। ऋगतौ। आरिवान्। डुदाञ्दाने। ददिवान्। ददरिद्रिवान्। वस्योत्वे इडभावः। आदुषः। जक्षिवान्। जक्षिवान्। जग्मिवान्। जगन्वान्। जग्मुषः। जघ्निवान्। जघन्वान्। जघ्नुषा। विविदिवान्। विविद्वान्। विविदुषः। विविशिवान्। विविश्वान्। ददृशिवान्। ददृश्वान्। ईयिवान्। सेदिवान्। ऊषिवान्। शुश्रुवान्। शुश्रुवुषः।**

सुबोधिनी—गमहनविदविशदृशांवा। एभ्यः परस्य वसुप्रत्ययस्येड्वा स्यात्। विशिना साहचर्यात् विद्लृलाभे इत्यस्य ग्रहणं। भू सत्तायां बभूवान्। बभूवांसौ। शसादौ तु वसोर्वे उरित्युत्वे कृते भुवोवुगिति वुक्। बभूवुषः। बभूवुषा। बभूवद्भ्यामित्यादि। बभूवुषी स्त्री। अद भक्षणे। द्वित्वहसादिशेषपूर्वदीर्घसवर्णदीर्घेषु कृते द्वित्वेप्ययमेकस्वरएवेति इट् च भवति। आदिवान्। वस्योत्वे कृते इडभावो भवति। निमित्ताभावे नैमित्तिकस्याप्यभाव इत्युक्तत्वात्। आदुषी स्त्री। ऋ गतौ गुणोर्तीति गुणे कृते द्वित्वादिषु कृतेषु अप्येकस्वरः इट् च भवति। आरिवान्। आरुषी स्त्री। डुदाञ् दाने कृते द्वित्वे नायमेकस्वरः। अनेकस्वरत्वादिण्निषेधे प्राप्ते सूत्रे आदंतग्रहणादिट् भवति आतोनपीत्यालोपः। ददिवान् ददुषी स्त्री। दरिद्रा दुर्गतौ। आदंतग्रहणादिट्। आतोनपीत्यालोपः ददरिद्रिवान्। ददरिद्रुषी स्त्री। अद भक्षणे। सिसंयोगादेरदेर्घस्लृ इति लिटि वा घस्लृ आदेशः। द्वित्वे कृते नायमेकस्वरः। सूत्रेघसेर्ग्रहणादिट्। उपधालोपात्प्रागेव द्वित्वं। पश्चाद्गमांस्वरे इत्युपधालोपः। घसादेःष इति षत्वम् खसेचपा इति घस्य कः। जक्षिवान्। जक्षुषी स्त्री। गम्लृ गतौ। गमादीनां चतुर्णामिड्वा द्वित्वादि। गमामित्युपधालोपः। जगमेति जग्मिवान्। इडभावे मोनोधातोरिति मस्यनः जगन्वान्। जग्मुषी स्त्री। "श्रेयांसि सर्वाण्यधिजग्मुषस्ते" इति रघुः। हन हिंसागत्योः द्वित्वादि गमामित्युपधालोपः। हनोघ्ने इति हस्य घः। जघ्निवान्। इडभावे पूर्वाद्धतेरिति परस्य हस्य घः। जघन्वान्। जघ्नुषी स्त्री। विद्लृलाभे। विविदिवान्। इडभावे। विविद्वान्। विविदुषी स्त्री। विश प्रवेशने। विविशिवान् विविश्वान्। विविशुषी स्त्री। इण् गतौ। द्वित्वं इणः परस्य वसोरिट् निपात्यते द्वित्वे सत्येकस्वराभावाद्विधिरयम्। इणः किति णादाविति पूर्वदीर्घः। सवर्णेदीर्घ इति सूत्रं बाधित्वा नित्यत्वादिणः क्ङितिस्वरे इति यः। वसेरिडागमस्य कित्स्वरस्य परत्र सत्त्वात्। ईयिवान्। ईयुषी स्त्री।

षद्लृ विशरणादौ । द्वित्वादि । लोपः पचामित्येत्वपूर्वलोपौ इट् सेदिवान् । सेदुषी स्त्री । "निषेदुषीमासनबंधधीर" इति रघुः । वस निवासे । द्वित्वादि णबादौ पूर्वस्येति पूर्वस्य संप्रसारणं । यजामिति परस्य संप्रसारणं । सवर्णे दीर्घ इति दीर्घे कृते एकस्वरत्वादिट् । घसादेरिति षः । ऊषिवान् । ऊषुषी । स्त्री । "अध्यूषुषस्तामभवज्जनस्य" इति माघः । श्रुश्रवणे । शुश्रुवान् । शुश्रुषी स्त्री ॥

तत्त्वदीपिका–बभूवानिति । केवलस्यैकस्वरत्वे कृतद्वित्वस्य तदभावात् । एतौ छंदस्येवेति पाणिनीयानुसारिणः भाषायामपीत्यन्ये ।

**मू०–शतृशानौतिप्तिवत्क्रियायाम् ॥** क्रियायांगम्यमानायांधातोः शतृशानौ भवतस्तौ च तिप्तिवत् । पचन्नास्ते । पठंस्तिष्ठति गायन्नागच्छति ।

सुबोधिनी–शतृशानौतिप्तिवत्क्रियायां । शतृशानप्रत्ययावाह । उभयोः शित्त्वाच्चतुर्वत्कार्य्यं । ऋदित्वात् पुंसि त्रितोनुमिति नुम् । स्त्रियां तु टृत्रित इतीप् । पचतीति अप् पचन् । विक्लित्त्यनुकूलवर्त्तमानव्यापाराश्रयश्चैत्रः ॥

तत्त्वदीपिका–शतृशानाविति । परस्मैपदिभ्यः शतृ आत्मनेपदिभ्यः शानउभयपदिभ्यस्तूभयम् ।

**मू०–मुगानेतः ॥** अकारस्याने मुगागमः स्यात् । पचमानऽपठति । मन्वानः । कुर्वाणः । दादेरिः । पीयमानस्सोमो भवता । दीयमाना गौः ।

सुबोधिनी–मुगानेतः । अदंतस्य मुगागमः स्यादाने परे । पचते इति पचमानः । मनुते इति मन्वानः । कुरुते इति कुर्वाणः । उभयत्र उप् । ङित्यदुरित्यत उत् । पीङ् पाने । दीङ् क्षये । दैवादिकाविमौ । अथवा पा पाने । डुदाञ् दाने । आभ्यां कर्मणि शानप्रत्यये कृते यक् चतुर्ष्विति यक् । दादेरिरितीत्वं । ये इति दीर्घः । दीयमानः । पीयमानः ॥

**मू० आसेरानईः ॥** आसेः परस्यान ईः स्यात् । आसीनः ।

सुबोधिनी–आसेरानईः । आनस्य आतेःईत्वं । आस उपवेशने । आस्ते इति आसीनः॥

तत्त्वदीपिका–आसेरानईः । आनस्य आ तस्य ।

**मू०–वादीपोश्शतुः ॥** अवर्णात्परस्य शतुर्वानुमीकारे ईपि च परे । तुदन् सः । तुदती, तुदन्ती । कुले स्त्री वा ।

सुबोधिनी–वादीपोः शतुः । अवर्णात्परस्य शतृप्रत्ययस्य नुम् वा स्यात् ईपि ईकारे च । तुदतीति तुदन् । तुदंतौ । तुदंतः । स्त्रियां तु तुदती तुदंती । क्लीबे तु तुदत् । तुदती, तुदंती । तुदंति ॥

**मू० अप्ययोरान्नित्यम् ॥** अप्प्रत्ययप्रत्ययसम्बन्धिनोऽवर्णात्परस्य शतुर्नुम्नित्यमीकारे ईपि च । भवन् सः । भवन्ती । दीव्यत् । दीव्यन्ती । दीव्यन्त्यौ । मंगायसुने । द्विरुक्तानां जक्षादीनाञ्च परस्य शतुर्नुम्न शौ वा । ददत् । दधत् ।

सुबोधिनी–अप्ययोरान्नित्यम् । अप्प्रत्ययाभ्यां परस्य शतुर्नित्यं नुम् स्यात् ईपि ईकारे च । भवतीति पुंसि भवन् । भवंतौ । स्त्रियां तु भवंती । क्लीबे तु भवत् । भवती । भवंति । दीव्यतीति य्वोर्विहसे इति दीर्घः । दीव्यन् दीव्यन्तौ । स्त्रियां तु दीव्यंती । क्लीबे तु दीव्यत् । दीव्यती । दीव्यंति । ददतीति दधातीति च ह्वादेर्द्विश्चेति द्वित्वादि । दादेरित्यालोपः । ददत् सः । ददती, ददंती स्त्री । ददत् । ददती । ददाति, ददंति । दधन् सः । दधती, दधंती स्त्री । दधत् दधती । दधति, दधंति ॥

**मू०–विदेर्वा वसुः ॥** वेत्तेः परस्य शतुर्वा वसुरादेशः । विद्वान् । विदन् ।

सुबोधिनी–विदेर्वा वसुः । वसोरुदित्करणं वसोर्वउदित्करणं वसोर्वउरित्युत्त्वार्थम् । नुम् तु स्थानिवत्त्वेनैव सिद्धः । वेत्तीति अपित्तादेर्ङिदिति वसुशत्रोर्ङित्त्वं । ङित्त्वाद्गुणो न । विद्वान् । विदन् । विदुषी स्त्री ॥

तत्त्वदीपिका–विदेर्वेति । शतृवदेव ऋदित्त्वेन नुमि सिद्धे वसोरुदित्करणं वसुग्रहणेन क्वसोरपि ग्रहणार्थम् ।

**मू०–माङ्याक्रोशे ॥** माजीवन् ।

सुबोधिनी–माङ्याक्रोशे । माङि उपपदे निंदायामर्थे धातोः शतृप्रत्ययः स्यात् । माङि सिरेवेति लुङि प्राप्ते लङ्विधिः । जीव प्राणधारणे । माजीवन् ॥

**मू०–लक्षणहेत्वोःक्रियायाः ॥** शयाना भुञ्जते यवनाः । अर्जप्रतियत्ने चुरादिः । अर्जयन्वसति ।

सुबोधिनी–लक्षणहेत्वोः क्रियायाः । चिह्ने हेतौ चार्थे वर्तमानाद्धातोः शतृशानौ स्तः । अत्र हेतुशब्देन फलं कारणं चोच्यते । शेरते इति शीङो गुण इति गुणः । शयाना भुंजते यवनाः । यवनकर्तृकभोजनस्य शयनं लक्षणं । अर्जप्रतियत्ने चुरादिः । अर्जयतीति अर्जयन् वसति । अर्जनार्थो वास इत्यर्थः ।

तत्त्वदीपिका–शयाना इति । अत्र शयनं भोजनस्य लक्षणं । अर्जयन्निति । अर्ज प्रतियत्ने चुरादिः । अर्जनार्थो वास इत्यर्थः । लक्षणहेत्वोः किं । पचति पठति च । क्रियायाः किं । यः कंपते सोऽश्वत्थवत्लवते तल्लघुद्रव्यगुणयोर्लक्षणं माभूत् । हन्तीति पलायते । वर्षतीति धावतीत्यत्र इतिना हेतुत्वस्य द्योतितत्वान्न ।

**मू०–भविष्यतिस्यपूशतृशानपरः ॥** हन्नृतस्यपः । करिष्यन् । करिष्यमाणः ।

सुबोधिनी–भविष्यतिस्यपूशतृशानपरः । भविष्यत् स्यबंताद्धातोः परयोरात्परयोः स्थाने शतृशानौ वा स्तः । करिष्यतीति करिष्यन् । सिसतेतीट् करिष्यते इति करिष्यमाणः ।

**मू०–ताच्छील्यवयोवचनशक्तिष्वानश् ॥** भोगंभुञ्जानः । कवचंबिभ्राणः । शत्रून्निघ्नानः ॥

सुबोधिनी–ताच्छील्यवयोवचनशक्तिष्वानश् । ताच्छील्यं तत्स्वभावता वयो यौवनादिः शक्तिः सामर्थ्यम् । एषु द्योत्येषु धातोः कर्तरि आनश् स्यात् । आनश्प्रत्ययमाह । शित्त्वाच्चतुर्वत्कार्यं । परस्मैपदिभ्योप्यानश् स्यात् । एतदर्थमिदं भुनक्तीति रुधादित्वान्नम् ।

नमसोऽस्येत्यलोपः । भुंजानः । बिभर्तीति बिभ्राणः । हंतीति गमामित्युपधालोपः । हनोघ्ने इति हस्य घः विघ्नानः ॥

तत्त्वदीपिका—ताच्छील्य इति । ताच्छील्यं तत्स्वभावता । वयो यौवनादि । शक्तिः सामर्थ्यं । पदानियमोऽत्र ।

**मू०—इङ्धार्योरकृच्छ्रिणिकर्तरिशतृ ॥ इङ् अध्ययने । अधीयन् । धृञ् धारणे ण्यन्तः धारयन् । द्विष अप्रीतौ ।**

सुबोधिनी—इङ्धार्योरकृच्छ्रिणिकर्त्तरिशतृ । अकृच्छ्रः सुखसाध्यो धात्वर्थः आभ्यां शतृप्रत्ययः स्यात् अकृच्छ्रिणि कर्त्तरि । पुनः शतृप्रत्ययमाह । इङ् । आत्मनेपदित्वात् शतृप्रत्ययो न सिद्ध्यति धारयतेरपि आत्मगामिनि क्रियाफले शतृप्रत्ययो न सिध्यति तदर्थोयमारंभः । इङ् अध्ययने । अधीते इति अदादित्वादपो लुक् नुधातोरितीय् । अधीयन् । धारयते इति अप् धारयन् ॥

तत्त्वदीपिका—ईङ् । अकृच्छ्रः सुखसाध्यो धात्वर्थः सोऽस्यास्तीत्यकृच्छ्री । ण्यन्तत्वादुभयपदित्वेनोभयप्राप्तौ शत्रेव यथा स्यादित्येतदर्थमिदम् ।

**मू०—द्विषश्शत्रौ ॥ द्वेष्टीति द्विषन् ।**

सुबोधिनी—द्विषःशत्रौ । द्विष् अप्रीतावस्मात् शत्रौ वाच्ये शतृप्रत्ययः स्यात् । द्वेष्टीति द्विषन् ॥

**मू०—अर्हपूजायाम् ॥ अर्हन् ।**

सुबोधिनी—अर्हपूजायाम् अस्मात् शतृप्रत्ययः स्यात् पूजायामर्थे । अर्हतीति अर्हन् ॥

तत्त्वदीपिका—अर्हइति । पूजायां किम् । अर्हयति चौरो वधम् ।

**मू०—शीले ॥ तृन् । कटंकर्ता । हृञ् हर्ता ।**

सुबोधिनी—शीले । तृन्प्रत्ययमाह नकारः स्वरार्थः । इतः परं वक्ष्यमाणाः प्रत्ययाः ताच्छील्यादिषु बोध्या । करोतीत्येवंशीलः कर्त्ता कटम् ॥

**मू०—इष्णुस्नुक्नुशीले ॥ अलंकरिष्णुः । निराकरिष्णुः । जनी । प्रजनिष्णुः ।**

सुबोधिनी—इष्णुस्नुक्नुशीले । धातोरेते प्रत्ययाः शीलेऽर्थे । इष्णुस्नुक्नुप्रत्ययानाह । क्नु ककारो गुणनिषेधार्थः । अलं करोतीत्येवंशीलोऽलंकरिष्णुः । निराकरोतीत्येवंशीलो निराकरिष्णुः । जनी प्रादुर्भावे । प्रजायते इत्येवंशीलः प्रजनिष्णुः ॥

तत्त्वदीपिका—इष्णुस्नुक्नु । इष्णुश्च स्नुश्च क्नुश्च एषां समाहारः ण्यन्तभाजभूसहन्वचरवृधकृतप्रजननश्च यत्रयं । अलंकृञ् निराकृञ् उकणच् । जल्पभिक्षुकुट्टलुंठवृङःषाकः सान्ताःशंसुभिक्ष उः लषपतपदस्थाभूवृषहनकमगमशृभ्य उकण् ।

**मू०—जिभुवोर्नेङ्गुणौस्नौ ॥ जि जये । जिष्णुः । भूष्णुः । ग्लास्नुः । त्रस्नुः । त्रेङ त्रस्नुः । गृध्नुः । ञिधृषा धृष्णुः । क्षिपः क्षिप्नुः ।**

सुबोधिनी–जिभुवोर्नङ्गुणौस्नौ। जयतीत्येवंशीलो जिष्णुः। भवतीत्येवंशीलो भूष्णुः। ग्लायतीत्येवंशीलो ग्लास्नुः। त्रसीउद्वेगे। क्नुः। इवक्तयोरितीण्न त्रस्नुः। गृधु अभिकांक्षायां। गृध्नुः। जिधृषा प्रागल्भ्ये। धृष्णुः। क्षिप प्रेरणे। क्षिप्नुः।

**मू०–षाकोकणः॥** शीलार्थे षाक उ उकण् प्रत्यया भवंति। जल्पाकः। भिक्षयाश्चायाम्। भिक्षाकः। कुट्ट च्छेद। कुट्टाकः दुष्टः। लुण्ठचौर्ये। लुण्ठाकः। वृङ् संभक्तौ। वराकः। भिक्षुः। शसि वाक्यप्रबन्धे। इदितोनुम्। आशंसुः चिकीर्षुः। लष् कान्तौ। लाषुकः। पतॣपतने पातुकः। आतो युक्। स्थायुकः। भावुकः। वृषु सेचने। वर्षुकः। घातुकः। कामुकः।

सुबोधिनी–षाकोकणः। षाक उ उकण् प्रत्ययानाह। षाकस्य षः ष्टिव्रत इतीवर्थः। उकणोणो वृद्ध्यर्थः। जल्पतीत्येवंशीलः जल्प व्यक्तायां वाचि। जल्पाकः। भिक्षभिक्षायां भिक्षाकः। कुट्ट च्छेदने। लुंठ स्तेये। चौरादिकाविमौ। कुट्टाकः। लुंठाकः। वृञ् वरणे वृङ् संभक्तौ। वराकः। सांताऽऽशंसभिक्षिभ्य उः। सः प्रत्ययः तदंतो धातुः सांतउच्यते। आङः शंसु इच्छायामयमेव गृह्यते। न तु शंसु स्तुतौ आङा सह निर्देशात्। भिक्ष भिक्षायां। भिक्षुः। आशंसुः। कर्तुमिच्छति चिकीर्षतीति सप्रत्यये द्वित्वाद्यः से इतीत्वं सेदीर्घ इति दीर्घः ऋतइरितीर् र्वोर्विइसे इति दीर्घः षत्वं चिकीर्षेति जातं। यत इत्यलोपः। चिकीर्षुः। लष कांतौ। उकण्। लाषुकः। पतॣ पतने। पातुकः। पद् गतौ पादुकः। ष्ठा गतिनिवृत्तौ। आतोयुगिति युक्। स्थायुकः। भू सत्तायाम्। भावुकः। वृष सेचने। उपधायालघोरिति गुणः वर्षुकः। हन हिंसागत्योः हनोघदिति घत् घातुकः। कमु कांतौ। कामुकः। गम्ॣ गतौ। गामुकः। शॄ हिंसायां। शारुकः॥

तत्त्वदीपिका–जल्पाक इति। जल्पनशीलः। एवं सर्वत्र शीलार्थप्रत्यये वाक्यं पर्यवर्थः। तेन वराकी।

**मू०–शॄवंद्योरारुः॥** शॄ हिंसायाम्। शरारुः। वदि वन्दारुः।

सुबोधिनी–शॄवंद्योरारुः। शॄ हिंसायां। वदि अभिवादनस्तुत्योः। आभ्यामारुः। आरुप्रत्ययमाह। शरारुः। वंदारुः। शरारुर्घातुको हिंस्रो वंदारुरभिवादक इत्यमरः॥

**मू०–स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्यआलुः॥** स्पृहयालुः। गृह ग्रहणे। चुरादिः। गृहयालुः। पतयालुः। दय दाने। दयालुः। द्रा कुत्सायाम्। निद्रालुः। तदोनान्तत्वम्। तन्द्रालुः। श्रद्धालुः। शीङ्। शयालुः।

सुबोधिनी–स्पृहिगृहिपतिदयिनिद्रातन्द्राश्रद्धाशीङ्भ्यआलुः। आलुप्रत्ययमाह। स्पृह ईप्सायां। गृहु ग्रहणे। पदगतौ। एते त्रयश्चुरादावदंताः। अल्लोपस्य स्थानिवत्त्वान्नोपधायागुणवृद्धी। णेरिति णिलोपो न। नल्विडामंतेतिनिषेधात्। णेर्गुणे कृते स्पृहयालुः। गृहयालुः। पतयालुः। दय दाने। दयालुः। द्रा कुत्सायां। निपूर्वः। आतोनपीत्यालोपः निद्रालुः। तत्पूर्वोद्रा तत् शब्दस्य समाजे नत्वं निपात्यते। तंद्रालुः। श्रत्पूर्वो डुधाञ्

धारणादौ । धेट्पानेऽर्थं तु न गृह्यते । श्रतपूर्वस्य धेट् प्रयोगाभावात् । शीङ् स्वप्ने । शयालुः । कथं तर्हि कृपालुः । स्पर्धालुरिति । कृपां स्पर्द्धां च लातीति विग्रहे मृगय्वादित्वात्कुः ॥

तत्त्वदीपिका— स्पृहि इति । स्पृह्यादयस्त्रयोपि चुरादावदन्ताः । अल्लोपस्यस्थानिवत्त्वान्नोपधागुणवृद्धी । नल्विडाम्तेत्यादिना निषेधात् णेर्लोपेन ।

**मू०—शमादिभ्यो घिनुण् ॥ शमउपशमे शमी । तमी । दमी । भ्रमी । क्षमी । क्लमी । श्रमी । प्रमादी । चजोः कगौ घिति ॥ चकारजकारयोःक-कारगकारौ घिति । सम्पर्की । योगी । विवेकी । त्यागी । असि । उसि । अनेकके घिनुणि रञ्जेर्नलोपो वाच्यः । रागी । भागी । विकाषी । विला-सी । प्रलापी । प्रसारी । मथ हिंसायाम् । प्रमाथी । प्रवासी ।**

सुबोधिनी—शमादिभ्यो घिनुण् । शमु तमु दमु श्रमु भ्रमु क्षमु क्लमु मदि शमादयोऽष्टौ । घिनुणप्रत्ययमाह । उकार उच्चारणार्थः । घित्त्वाच्चजोरिति कगौ । णित्त्वाद्वृद्धिः । शाम्यतीत्येवं-शीलः । मांतस्य सेट इति न वृद्धिः । इनामिति दीर्घः । शमी । तमी । दमी । श्रमी । भ्रमी । क्षमी । क्लमी । प्रपूर्वस्य मदेर्दीर्घः प्रमादी । आदिशब्देनान्येपि ग्राह्याः । पृची संपर्के । चजोरिति कः संपर्की । सृज विसर्गे । युज समाधौ । युजिर् योगे वा । योगी । विचिर् पृथ-ग्भावे । विवेकी । त्यजहानौ । त्यागी । राजृ दीप्तौ । रागी । भज सेवायां । भागी । कष् हिं-सायां । विकाषी । लस् श्लेषणक्रीडनयोः विलासी । लप व्यक्तायां वाचि । प्रलापी । सृ गतौ । प्रसारी । मंथ विलोडने । प्रमाथी । वस निवासे । प्रवासी ॥

तत्त्वदीपिका—शमादिभ्यइति । घो घित्कार्यार्थः । उकारउच्चारणार्थ इति वृत्तिः । उरिदिति भाष्यं । तेन शमिनितराशमिनीतरेत्यत्र वृतः परस्येति ह्रस्वो वा । शमीशमिनावित्यत्र नुमभावस्तु झसग्रहणमपकृष्य छसा-न्तानामेव तद्विधानात् । शमीति । शमनशील इति वाक्यं । अमंतत्वाद्ध्रस्वः ।

**मू०—निन्दादेर्वुञ् ॥ निन्दकः । हिंसकः । परिक्षेपकः । परिवादकः ।**

सुबोधिनी—निंदादेर्वुञ् । वुणप्रत्ययेनापिसिद्धे वुञ्वचनं ज्ञापकम् । शीलादिष्वर्थेषु आऽऽदयो न भवंतीति । वुञ् प्रत्ययमाह । ञित्त्वाद्वृद्धिः युवोरनाकावित्यकादेशः । णिदि कुत्सायां । निंदकः । हिसि हिंसायां । हिंसकः । क्षिप प्रेरणे । क्षेपकः । वदव्यक्तायां वाचि । ण्यंतः णेरिति णिलोपः । परिवादकः ॥

तत्त्वदीपिका—निंदादेरिति । वुणैव सिद्धे वुञ्वचनं ताच्छीलिकेषु वासरूपविधिर्नास्ति तेनैतेषु तृन्नादयोन ।

**मू०—चलनशब्दार्थादकर्मकाद्युः ॥ चुप मन्दायाङ्गतौ । चोपनः । चलनः । कम्पनः । शब्दनः । रवणः ।**

सुबोधिनी—चलनशब्दार्थादकर्म्मकाद्युः । चलनार्थादकर्मकात् शब्दार्थाच्चयुः स्यात् । युप्रत्ययमाह युवोरित्यनादेशः । चल कंपने । चलनः । चुप मंदायां गतौ । चोपनः । कपि चलने कंपनः । शब्द शब्दने अदंतः । चुपादिः । णेरिति णिलोपः शब्दनः । रु शब्दे रवणः । अकर्मकात् किम् । पठिता विद्या ॥

तत्त्वदीपिका–चलनशब्दार्थादिति । चलनं देशान्तरप्राप्तिहेतुः क्रियाविशेषः । शब्दः श्रोत्रग्राह्यार्थः । चलकंपने । शब्द शब्दने चुरादिः ॥

मू०–अनुदात्तेतोहसादेरकर्मकात् ॥ वर्तनः । रमणः ।

सुबोधिनी–अनुदात्तेतोहसादेरकर्मकात् । युः स्यात् । वृतु वर्तने । वर्तनः । अनुदात्तेतः किं । भविता । हसादेः किम् । एधिता । अकर्मकात्किं । वसिता वस्त्रम् ॥

तत्त्वदीपिका–अनुदात्तेति । यद्यपिसर्वानुदात्तेद्धसान्त एवातो हसग्रहणसामर्थ्यादेव हसादिर्गृह्यते । जुगुप्सादिसान्तोनुदात्तादस्ति अवयवे कृतं लिंगमचरितार्थं समुदायस्य विशेषकमित्युक्तत्वात् । अतस्तद्व्यावृत्तये तदंतविधिः स्यादित्यादिग्रहणं । वर्त्तन इति । वर्त्तते तच्छीलइति विग्रहः । अनुदात्तेतः किं । भविता । हसादेः किम् । एधिता । अकर्मकात्किं । वसिता वस्त्रम् ।

मू०–ज्वादेश्च ॥ जु गतौ वेगेच । जवनः । सरणः । गर्द्धनः । क्रोधनः । रोषणः । मण्डनः । भूषणः ।

सुबोधिनी–ज्वादेश्च । युः स्यात् जु गतौ वेगे च । जवनः । सृ गतौ । सरणः । गृधु अभिकांक्षायां । गर्द्धनः । क्रुध क्रोधे । क्रोधनः । रुष रोषे । रोषणः । मडि भूषायां । मंडनः । भूष अलंकारे । भूषणः ॥

मू०–ज्यादेरिनिः ॥ जयी । प्रजवी । दरी । क्षयी ।

सुबोधिनी–ज्यादेरिनिः । इनिप्रत्ययः स्यात् । इनिप्रत्ययमाह । इकार उच्चारणार्थः । जि जये । जि अभिभवे च । इनाामिति दीर्घः । जयी । जु गतौ वेगे च । प्रजवी । दृङ् आदरे । दरी । क्षि क्षये । क्षि निवासगत्योश्च । क्षयी ॥

मू०–दादेरुः ॥ दारुः । धारुः । सेरुः ।

सुबोधिनी–दादेरुः । रुप्रत्ययः स्यात् । रुप्रत्ययमाह । डुदाञ् दाने । दोऽवखंडने । देङ् पालने । त्रयाणामेषां ग्रहणं । दारुः न तु दाण्दापोर्ग्रहणं । डुधाञ् धारणादौ । धारुः । षिञ् बंधने । सेरुः ॥

मू०–सृघस्यदःक्मरः ॥ सृमरः । घस्मरः । अद्मरः ।

सुबोधिनी–सृघस्यदःक्मरः । क्मरप्रत्ययः स्यात् । क्मरप्रत्ययमाह । कित्त्वाद्गुणो न सृ गतौ । सृमरः । घस्लृ अदने । घस्मरः । अद भक्षणे । अद्मरः ॥

मू०–भञ्जभासमिदोघुरः ॥ भङ्गुरः । भासुरः । मेदुरः ।

सुबोधिनी–भंजभासमिदोघुरः । एभ्यो घुरप्रत्ययः स्यात् । घुरप्रत्ययमाह । घित्त्वात् चजोरिति कगौ । भंजो आमर्दने । भंगुरः । भासृ दीप्तौ । भासुरः । ञिमिदा स्नेहने । मेदुरः ॥

तत्त्वदीपिका–भंजभास । भंजेः कर्मकर्तरि । अभिधानस्वाभाव्यमत्र हेतुः ।

मू०–विदिभिदिच्छिदेःकुरः ॥ विदुरम् । भिदुरम् । छिदुरम् ।

सुबोधिनी–विदिभिदिच्छिदेःकुरः । कुरः प्रत्ययः स्यात् । कुरप्रत्ययमाह । कित्त्वाद्गुणो न । विद ज्ञाने । अस्यैव ग्रहणम् । न तु विद्लृ लाभे इत्यस्य संप्रदायात् । विदुरः । भि-

१४

दिर् विदारणे । भिदुरं । छिदिर् द्वैधीकरणे । छिदुरं । कुरः कर्त्तरि भवति । तथाच माघः । प्रियतमायवपुर्गुरुमत्सराच्छिदुरयादुरयाचितमंगनाः । इह अदुरिति छेदः ॥

तत्त्वदीपिका–विदिभिदीति । ज्ञानार्थविदिर्व्याख्यानात् । छिदुरामिति । कर्मकर्त्तरीति कश्चित् । भाष्ये तु न तथैवमाद्योपि प्रागुक्त एव मुख्यकर्त्तरि । गुरुमत्सराच्छिदुरयाऽदुरयाचितमंगना इति ।

**मू०–इण्नशजिसर्तिभ्यःक्वरप् ॥** ह्रस्वस्यपिति तुक् । इत्वरः । इत्वरी । नश्वरः । जित्वरः । सृत्वरः । गमेर्लोपश्च गत्वरः ।

सुबोधिनी–इण्नशजिसर्तिभ्यःक्वरप् । एभ्यः क्वरप् प्रत्ययः स्यात् । क्वरप्प्रत्ययमाह । कित्त्वान्न गुणः । टित्वाट्टिड्ढ इतीप् । पित्त्वात्तुक् । इण् गतौ । इत्वरः इत्वरी स्त्री । णश् अदर्शने । नश्वरः । जि जये । जित्वरः । सृ गतौ । सृत्वरः । गम्लृ गतौ । मलोपो निपात्यते । गत्वरः ॥

तत्त्वदीपिका–इत्वरः । ह्रस्वस्येतितुक् । टईबर्थः ।

**मू०– जागर्तेरूकः ॥** जागरूकः ।

सुबोधिनी–जागर्तेरूकः । ऊकप्रत्ययः स्यात् । ऊकप्रत्ययमाह । जागृ निद्राक्षये जागरूकः ॥

**मू०–यङऊकः ॥** यजजपदशवदिभ्यो यङन्तेभ्य ऊकश्शीले लुक् ॥ ऊके-ऽति यङो लुक् । यायजूकः । जञ्जपूकः । दंदशूकः । वावदूकः ।

सुबोधिनी–यङऊकः । यजादिभ्यो यङन्तेभ्य ऊकः स्यात् । यजेर्यङि कृते द्वित्वादि आत इति पूर्वस्य दीर्घेऽतिशयेन जयतीति यायज्यते । १ । इतियायजूकः । जप व्यक्तायां वाचि । अतिशये जपतीति जमजपामिति नुक् । जंजप्यते । २। इति जंजपूकः। दंश दशने। अतिशयेन दशतीति नुक् । दंदश्यते । ३ । इति दंदशूकः । नोलोप इति नलोपः । वद व्यक्तायां वाचि । अतिशयेन वदतीति वावद्यते । ४ । इति वावदूकः ॥

**मू०–भियःक्रुक्रुकक्लुकाः ॥** भीरुः । भीरुकः । भीलुकः ।

सुबोधिनी–भियःक्रुक्रुकक्लुकाः । ञिभी भये अस्मादेते प्रत्ययाः स्युः । क्रुक्रुकक्लुक प्रत्ययानाह । कित्त्वान्नगुणः । भीरुभीलुकभीरुका इत्यमरः ॥

**मू०– नमादेरः ॥** नम्रः। स्मेरः । नञ्पूर्वाज्जसेः क्रियासातत्ये । अजस्रम् । कम्रः । हिंस्रः दीप्रः ।

सुबोधिनी–नमादेरः । रप्रत्ययः स्यात् । रप्रत्ययमाह । णम् प्रह्वत्वे शब्दे च । नम्रः । कपिचलने कंप्रः । ष्मिङ् ईषद्धसने । स्मेरः । जसु मोक्षणे । नञ्पूर्वः । नाइत्यः अजस्रं । कमु कांतौ । कम्रः । हिसि हिंसायां । हिंस्रः । दीपी दीप्तौ । दीप्रः ॥

**मू०–विन्दुरिच्छुरेतौनिपात्यौ ॥** वेत्तितच्छीलोविन्दुः । इच्छती-तीच्छुः ।

सुबोधिनी–विंदुरिच्छुरितोनिपात्यौ । वेत्तेर्नुम् इषेश्च्छत्वं च निपात्यते । विद् ज्ञाने इत्यस्यैव ग्रहणं नेतरेषाम् । इषु इच्छायामित्यस्यैवग्रहणं न तु इषगतौ इषआभीक्ष्ण्ये इत्यनयोरनभिधानान्निपातनाद्वा । वेत्तीत्येवंशीलो विंदुः । इच्छतीत्येवंशीलः इच्छुः । बिंदु शब्दः पवर्गादिस्तु विदि अवयवे अस्मान्मृगय्वादित्वात् कुप्रत्यये बोध्यः ॥

तत्त्वदीपिका–विंदुः । वेत्तेर्ज्ञानार्थस्य नुमागम एवमिषेरिच्छार्थस्य छत्वमुप्रत्ययश्च ।

**मू०–स्वपितृषिधृषेर्नजिङ् ॥ स्वप्नक् । तृष्णक् । धृष्णक् ।**

सुबोधिनी–स्वपितृषिधृषेर्नजिङ् । एभ्यो नजिङ् प्रत्ययः स्यात् । नजिङ्प्रत्ययमाह । ङित्त्वान्न गुणः । इकारउच्चारणार्थः । ञिष्वप् शये । चोःकुरिति जस्य गः स्वप्नक् । तृष् पिपासायां । तृष्णक् । ञिधृषा प्रागल्भ्ये धृष्णक् ॥

तत्त्वदीपिका–स्वपि । धृष्णगिति । ङित्त्वान्न गुणः ।

**मू०–स्थादेर्वरः ॥ स्थावरः । ईश्वरः । भास्वरः । पेस्वरः । कस्वरः ।**

सुबोधिनी–स्थादेर्वरः । एभ्यो वरप्रत्ययः स्यात् । वरप्रत्ययमाह । ष्ठा गतिनिवृत्तौ । स्थावरः । ईश ऐश्वर्ये । इवत्योरितीण्न । ईश्वरः । भासृ दीप्तौ । भास्वरः । पिस गतौ । पेस्वरः । कस गतौ । कस्वरः ॥

तत्त्व०–ईश्वर इति । इवत्योरितिनेट् ।

**मू०–आहतःकिर्द्विश्चभूते ॥ आदन्तादृदंताज्जनिगमिनमिभ्योयङंतेभ्यस्सासहिवावहिचाचालिपापतिभ्यः किप्रत्ययो भूते शीले धातोश्च द्वित्वम् । किलिंङ्वद्वाच्यः । रामस्सोमंपपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् । याजकान्वव्रिराजन्हिः पौण्डरीके महाद्विजान् ॥ १ । जज्ञिः ॥ नेमिः । जग्मिः । सासहिः । वावहिः । चाचालिः । पापतिः ।**

सुबोधिनी–आहतःकिर्द्विश्चभूते । किप्रत्ययमाह । कित्त्वान्न गुणः । किप्रत्यये द्वित्वादि । पा पाने । द्वित्वादि । आतोनपीत्यालोपः । पपिः । डुदाञ् दाने । ददिः । डुकृञ् करणे । चक्रिः । वृङ् संभक्तौ । र इत्यः । दद्रिः । हृञ् हरणे । आजह्रिः । जनी प्रादुर्भावे । गमामित्युपधालोपः । जज्ञिः । णम प्रह्वत्वे शब्दे च । लोपः पचामित्येत्वपूर्वलोपौ । नेमिः । गम्लृ गतौ । गमामित्युपधालोपः । जग्मिः । षह मर्षणे । वह प्रापणे । चल कंपने । पत्लृ पतने । एते यङंताः । अतिशयेन सहते आत इति पूर्वस्यात्वं सासह्यते सासहांचक्रे इति यत इत्यलोपः । अनपि च हसादिति यलोपः । सासहिः अतिशयेन वहतीति वावह्यते वावहांचक्रे इति । वावहिः । अतिशयेन चलतीति चाचल्यते । चाचलांचक्रे इति । चाचलिः । अतिशयेन पततीति पनीपत्यते पापतांचक्रे इति । वंचुस्रंसु इति प्राप्तस्य नीकोऽभावो निपात्यते पापतिः । रामः सोमं पपिर्यज्ञे ददिर्गाश्चक्रिरद्भुतम् । याजकान् वव्रिराजह्निः पौंडरीके महाद्विजान् ॥ १ ॥ रामो यज्ञे सोमं पपाविति पपिः अक्तादाविति वर्जनान्न कर्मणि षष्ठी । रामो यज्ञे गाः सुरभीः ददाविति ददिः । रामो यज्ञे अद्भुतमाश्चर्यं चकारेति चक्रिः । रामो यज्ञे

याजकान् यज्ञकर्तॄन् वव्रे इति वव्रिः । रामः पौण्डरीके नाम्नि यज्ञे महांतश्चते द्विजाश्च महाद्विजास्तान् आजहारेति आजह्रिः ॥

तत्त्वदीपिका—आह्नतइति । आच्च ऋच्च तत्तस्मात् । लिड्वद्भावान्नेमिरित्यादौएत्वपूर्वलोपौ । जग्मिरिति । गमां स्वर इत्यलोपः ।

**मू०—अथोणादयः । कादेरुण् ॥ कारुः । वातीति वायुः । पायुः । जायुः । मिनोतीति मायुः । स्वद आस्वादने । स्वादुः । साधुः । आशुः । दीर्यते इति दारु । सानु ।**

सुबोधिनी—अथोणादयः । कादेरुण् । उण् प्रत्ययः स्यात् । उण्प्रत्ययमाह । णित्त्वाद्वृद्ध्यादि । डुकृञ् करणे । करोतीति कारुः । शिल्पी कारकश्च तत्राद्ये योगरूढिःद्वितीये तु योगमात्रमिति विवेकोऽतएव यौगिके तु धात्वर्थं प्रति कारकान्वयो भवत्येव । तथाच भट्टिः । राघवस्य ततः कार्यं कारुर्वानरपुंगवः । सर्ववानरसेनानामाश्वागमनमादिशदिति ॥१॥ विश्वकर्मणि ना कारुस्त्रिषु कारकशिल्पिनोरितिमेदिनी । कारुः शिल्पिनि कारके इति धरणिः। वा गतिगंधनयोः । आतोयुगिति युक् । वायुः । पा पाने । पा रक्षणे च । पिबत्यनेन तैलादिकमिति पायुः । युक् । गुदं त्वपानं पायुर्नेत्यमरः । पाति रक्षतीति विग्रहे रक्षकोपि पायुः । जि अभिभवे । जयत्यभिभवति रोगान् इति जायुः । औषधम् । भेषजौषधभैषज्यान्यगदोजायुरित्यमरः । पुँल्लिंगसाहचर्याज्जायुः पुंसि । डुमिञ् प्रक्षेपणे । मिनोति प्रक्षिपति देहे ऊष्माणमिति मीनोतिदीङामित्यात्वं युक् च मायुः । मायुः पित्तं कफः श्लेष्मेत्यमरः । गां वाचं विकृतां मिनोति प्रक्षिपतीति गोमायुः सृगालः । स्वद आस्वादने । स्वदते रोचते इति स्वादुः । साध संसिद्धौ । साध्नोति परकार्यमिति साधुः । स्वादुसाधू विशेष्यनिघ्नौ । अशूङ् व्याप्तौ अश्नुते इत्याशुः । आशुर्व्रीहिः पाटलः स्यात् । शीघ्रार्थोप्ययं । तत्र विलंबभावमात्रपरत्वे क्लीबः । तद्विशिष्टद्रव्यपरत्वे तु त्रिलिंगः । अथ शीघ्रं त्वरितमित्युक्तम् । क्लीबे शीघ्राद्यसत्त्वे स्यात् त्रिष्वेषां भेद्यगामि यदित्यमरः । दृ विदारणे । दीर्यते इति दारु । काष्ठं दार्विन्धनं त्वेध इत्यमरः । षण् दाने । सानुः । स्नुः प्रस्थः सानुरस्त्रियामित्यमरः ॥

तत्त्वदीपिका—कादेरिति । कृ आदिर्यस्य स कादिस्तस्मात् । कृवापाजिमिस्वदित्यादय आदिशब्दग्राह्याः णो वृद्ध्यर्थः । कारुरिति । कारुः शिल्पिनि । कारके द्वितीयेर्थे योगमात्रं । राघवस्य तु ततः कार्यं कारुर्वानरपुंगवः । इति भट्टिश्चातएव । वायुरिति आतो युक् । पायुरिति । पिबत्यनेनौषधीमिति पायुर्गुदं । गुदं त्वपानं पायुर्नेत्यमरः। जायुरिति । जयतिरोगानिति । जायुरौषधं । भेषजौषधभैषज्यान्यगदो जायुरित्यमरः । मिनोतीति । प्रक्षिपति देहे ऊष्माणमिति । मायुः पित्तं कफः श्लेष्मेत्यमरः॥ स्वादते रोचते इति स्वादुमिष्टं । साध्नोति परकार्यमिति साधुः । अश्नुते इत्याशुर्व्रीहिभेदः शीघ्रार्थश्च । विलंबाभावमात्रपरत्वे क्लीबं तद्विशिष्टद्रव्यपरत्वे तु त्रिलिंगं । त्रिष्वेषां भेद्यगामि यत् इत्यमरोक्तेः ।

**मू०—जनेर्त्रुञ् । जानुः । चारु । चाटु । किंशृणातीति किंशारुः । जरामेतीति जरायुः ।**

सुबोधिनी—जनेर्त्रुञ् । ञुञ्प्रत्ययमाह । ञकाराविती । अनुबंधद्वयसामर्थ्यात् जानिवध्योर्नेति वृद्धिनिषेधो न प्रवर्त्तते । जन जनने जानु । जानुनी । चर गतौ । चारु रम्यं । चट भेदने । चाटु चटु । चाटु प्रियं वाक्यमिति हेमचंद्रः । चाटुर्नरि प्रियोक्तिः स्यादिति रत्नमाला ।

तथा च माघः । चकर च बहु चाटु प्रौढयोषिद्वदस्येति माघे तु क्लीबेपि चाटु चाकृत कसंभ्रममासामिति । शृ हिंसायां । किंशारुः । किंशारुर्ना सस्यशूके विशेषेकंकपक्षिणीति मेदिनी । इण् गतौ । वृद्धौ कृतायामायादेशे च जरायुः । धर्माशयः ॥

तत्त्वदीपिका-जनेर्त्तुंच् । चार्विति । चटु चाटुप्रियंवाक्यमिति हेमचन्द्रः । चटुर्नरिप्रियोक्तिः स्यादिति रत्नकोशात्पुंस्त्वमपि । तथोभयत्रोदाहृतं माधवेन चाटुचाकृतकसंभ्रममासां । चकरचबहुचाटुप्रौढयोषिद्वदस्येतिच । किंशारुर्ना सस्यशूकेविशिखेकंकपक्षिणि इति ।

**मू०–त्रोरस्यलः ॥ तरन्तिवर्णा अनेनेति तालु ।**

सुबोधिनी–त्रोरस्यलः तृ । ऋ इति प्रश्लिष्य द्वयोरपि सवर्णे दीर्घे कृते त्रौतयोस्त्रोः । तॄ प्लवनतरणयोः ऋ गतौ अनयोरस्यलः स्यात् । उणि वृद्धौ सत्यां तालु । इयर्त्ति अर्यते वा आलुः । शाकविशेषो घटी च । कर्कर्यालुर्गलंतिका इति ॥

**मू०–कृकेवचःकश्च ॥ कृकेन गलेन वक्तीति कृकवाकुः ।**

सुबोधिनी–कृकेवचःकश्च । कृकशब्दे उपपदे वचेः कांतादेशः स्यात् उणि । कृकवाकुः । कृकवाकुर्मयूरे च सरठे चरणायुधे इति विश्वः ॥

**मू०–भ्रादेरुः ॥ मरुः । शयुः । तरुः । चरुः । त्सरछद्मगतौ । त्सरुः । तनुः । धनुः । मयुः । कटुः । बटुः । अणुः । शृणातीति शरुः । स्वरुः । त्रपुः । असवः । वसुः । हनुः । बन्धुः । मनुः । बिन्दुः ।**

सुबोधिनी–भ्रादेरुः । उप्रत्ययः स्यात् । उप्रत्ययमाह । मृङ् प्राणत्यागे । म्रियंतेस्मिन्भूतानीति मरुः । निर्जलदेशः । भृञ् भरणे । डुभृञ् धारणादौ च । भरति बिभर्त्ति वा भरुः स्वर्णहेर पुंसीति मेदिनी । भरुर्भर्तृकनकयोरिति हैमः । शीङ् स्वप्ने । शेते इति शयुः । अजगरे शयुर्वाहस इत्युभावित्यमरः । तॄ प्लवनसंतरणयोः । तरंति नरकमनेन रोपका इति तरुर्वृक्षः । चर गत्यादौ । चरंति भक्षयंति देवा इममिति चरुः । चरुर्भांडे च हव्यान्ने इति घृतपक्वमन्नमित्यर्थः । त्सर छद्मगतौ । त्सरुः खड्गादिमुष्टिः । तनु विस्तारे । तनुः । तनुः काये त्वचि स्त्री स्यात् त्रिष्वल्पे विरले कृशे इति मेदिनी । स्त्रियां मूर्तिस्तनुस्तनूरित्यमरः । धन धान्ये । धनुः । स्यात्तनुस्तनुषा सार्धं धनुषा च धनुर्विदुरिति विश्वः । उकारांते । श्रीहर्षः शुद्धवंशजनितोपि गुणस्य स्थानतामनुभवन्नपि शक्रः । क्षिप्नुरेनमृजुमासु सपक्षं सायकं धनुरिवाजनि वक्रः ॥ १ ॥ धनुः पुमान् प्रियालद्रौ राशिभेदे शरासने इति सांते मेदिनी । अथास्त्रियांधनुश्चापावित्यमरः । डुमिञ् प्रक्षेपणे । मीनातिमिनोतीत्यात्वं तु नेह । बाहुलकात् । मयुः । तुरंगवदनोमयुरित्यमरः । मयुस्तुरंगवदने मृडोपि मयुरिष्यते इति विश्वः । टुमस्जो शुद्धौ । मज्जति पानीये इति न्यंक्वादित्वाद्गः झभेजबा इति सस्य दः । मद्गुः पानीयकाकिकेति रभसः । अण शब्दे । अणुः । व्रीहिभेदस्त्वणुः पुमानिति लवलेशकणाणवइत्यमरः । कटे वर्षादौ । कटति रसनामिति कटुः स्त्री कटुरोहिण्यां लताराजिकयोरपि । नपुंसकमकार्येस्यात्पुंल्लिंगोरसमात्रके । त्रिषुतद्वत्सुगंध्यश्च मत्सरेपि खरेपि चेति मेदिनी । बट वेष्टने । बटतीति बटुः । बटुर्द्विजसुतः स्मृत इति संसारावर्त्तः । शॄ हिंसायां शरुः । शरुः कोपे शरे वज्रे इति हैमः । स्वृशब्दोपतापयोः । शतकोटिः स्वरुः शंब

इत्यमरः । त्रपूष् लज्जायाम् । अग्निं दृष्ट्वा त्रपते लज्जते इति त्रपुः । रंगसीसकयोस्त्रपुरिति मेदिनी । असु क्षेपणे । अस्यंति क्षिपंति शरीरमिति असवः । पुंसि भूम्न्यसवः प्राणा इत्यमरः । वस निवासे । वसुः । " वसुर्न्हदेऽग्नौ योक्त्रेंऽशौ वसुतोये धने मणौ " । हन हिंसागत्योः । हनुः " हनुः पुमान् परो गंडादि"ति वररुचिकोशः स्त्रीलिंगेप्ययं । " हनुर्हट्टविलासिन्यां नृत्यारंभे गदेस्त्रियां । द्वयोः कपोलाऽवयवे " इति मेदिनी । मतुप्रत्यये हनुमान् पाक्षिको दीर्घोपि निपात्यते हनूमान् । बंध बंधने । स्नेहेन बध्नातीति बंधुः । " बंधुर्बंधूकपुष्पे स्यात् बंधुर्भ्रातरि बांधवे " इति विश्वः । मन ज्ञाने । मनुः । आदिराजा मंत्रश्च । बिदि अवयवे बिंदुः ॥

तत्त्वदीपिका–भ्रादेरिति । भरुरिति । भरुः स्वर्णहरे पुंसीति मेदिनी भरुर्भर्तृकनकयोरिति हेमचन्द्रः । शयुरिति । अजगरे शयुः । तरुरिति । तरंति नरकमनेन रोपकाः । चरुरिति । चरुर्भांडे च हव्यान्ने इति । त्सरुः खड्गमुष्टिः । तनुः स्वल्पः मूर्त्तौ स्त्रियां । धनुःशस्त्रविशेषः । धनुषा च धनुर्विंदुः। मयुः किन्नरः। अणुर्लेशः। बटुर्द्विजसुतः स्मृतः । स्वरुर्वज्रं । त्रपुरिति । त्रपतेऽग्निंदृष्ट्वा रंगसीसकयोस्त्रपु । पुंसिभूम्न्यसवः प्राणाः वसु तोये धने मणौ । हनुः पुमान् परो गंडात् । बंधुः स्नेहेन बध्नाति । मनुरादिराजो मंत्रश्च ।

**मू०– स्यन्देस्सम्प्रसारणंधश्च ॥ सिन्धुः ।**

सुबोधिनी–स्यंदेःसंप्रसारणंधश्च ॥ स्यंदु प्रस्रवणे । अस्य यकारस्य संप्रसारणं दस्य धश्च स्यात् उप्रत्यये । सिंधुः । " देशे नदविशेषेऽब्धौ सिंधुर्ना सरिति स्त्रियामि" त्यमरः ॥

तत्त्वदीपिका–सिंधुरिति । देशे नदविशेषेब्धौसिंधुर्ना सरिति स्त्रियामित्यमरः ।

**मू०–उन्देरिच्चादेः ॥ उनत्तीति इन्दुः ।**

सुबोधिनी–उन्देरिच्चादेः ॥ उन्दी क्लेदने । अस्योकारस्य इःस्यादुप्रत्यये । इन्दुः ।

**मू०–स्कन्देस्सलोपश्च ॥ कन्दुः ।**

सुबोधिनी–स्कंदेःसलोपश्च ॥ स्कंदिर् गतिशोषणयोः । अस्य सस्य लोपः स्यादुप्रत्यये । स्कंदति शोषयतीति कंदुः । "क्लीबेंऽबरीषं भ्राष्ट्रो ना कंदुर्वा स्वेदनी स्त्रियामि" त्यमरः । स्कंदति जनता यस्मिन्निति व्युत्पत्त्या भोगस्थानं कंदुरिति केचित् ॥

तत्त्वदीपिका–कंदुरिति । स्कंदत्यस्मिन् जनता इति कंदुर्भोगस्थानम् ।

**मू०– सृजेरसुम्सलोपश्च ॥ रज्जुः ।**

सुबोधिनी–सृजेरसुम्सलोपश्च ॥ सृज विसर्गे । आगमसकारस्य चुत्वेन शः झभेजबा इतिजः । सृजतीति रज्जुः । " रज्जुर्वेण्यां गुणे योषिदि"ति मेदिनी ॥

तत्त्व०–रज्जुरिति । सस्यश्चुत्वेनशस्तस्यजः ।

**मू०–फलेर्गुक्च ॥ फल्गुः ।**

सुबोधिनी–फलेर्गुक्च ॥ फल निष्पत्तौ । फल्गुः । " फल्गुः काकोदुंबरिका भवेत् फल्गुनिरर्थकमि"तिहैमः । । नदी च ॥

मू०–पाटेः पटिश्च ॥ पाटयतीति पटुस्समर्थः।

सुबोधिनी–पाटेःपटिश्च। पटिरादेशः स्यात्। पट गतौ। ञ्यंतः। पाटयतीति पटुः।

मू०–मनेर्द्धश्च ॥ मन ज्ञाने। मधुः।

सुबोधिनी–मनेर्धश्च। धांतादेशःस्यादुप्रत्यये। मन ज्ञाने। मन्यत इति मधुः। "मधुश्चैत्रेच दैत्येच मद्ये पुष्परसे मधु" इति हेमचंद्रः। मकरंदस्य मद्यस्य माक्षिकस्यापि वाचकः। अर्द्धर्चादिगणे पाठात् पुंनपुंसकयोर्मधु" इति शाश्वतः॥

मू०–जनेस्तश्च ॥ जतुः।

सुबोधिनी–जनेस्तश्च। तांतादेशः स्यात् उप्रत्यये। जनी प्रादुर्भावे। जायते इति जतु लाक्षा॥

मू०–वलेर्गुकुच ॥ वलसंवरणे। वल्गुः।

सुबोधिनी–वलेर्गुक्च॥ गुगागमः स्यादुप्रत्यये। वल संवरणे दन्त्योष्ठ्यादिः। वल्गुः। "वल्गुः स्याच्छागले पुंसि सुंदरे चाभिधेयवदि" ति मेदिनी॥

मू०–नमेर्नाकिश्च ॥ नम्यतेऽनेनेति नाकुः।

सुबोधिनी–नमेर्नाकिश्च॥ णम प्रव्हत्वे शब्दे च नाकुः। "वामलूरश्चनाकुश्च वल्मीकं पुंनपुंसकमि" त्यमरः॥

तत्त्वदीपिका–नाकुर्वल्मीकम्।

मू०–श्यतेःकुस्सवच्च ॥ शिशुः।

सुबोधिनी–श्यतेःकुस्सवच्च॥ कुप्रत्ययः स्यात्। स कुः सप्रत्ययवद्भवति। तेन सप्रत्यये यत्कार्यं द्वित्वादि तत्स्यात्। कुप्रत्ययमाह। कित्त्वान्न गुणः। शो तनूकरणे। कुप्रत्यये संध्यक्षराणामित्यात्वं द्वित्वं यः से इति पूर्वस्येत्वं। आतोनपीत्यालोपः। शिशुः बालकः॥

मू०–याभ्रोर्द्विश्च ॥ ययुः। बभ्रुः।

सुबोधिनी–याभ्रोर्द्विश्च॥ आभ्यां कुः स्यात् धातोर्द्वित्वं च। या प्रापणे। भृञ् भरणे। यातीति ययुः। भरतीति बभ्रुः। ययुरश्वोऽश्वमेधीयः। "बभ्रुर्विश्वानरे शूलपाणौ च गरुडध्वजे। विशाले नकुले पुंसि पिंगले त्वभिधेयवदि" ति मेदिनी। बभ्रुर्मन्वंतरे विष्णौ बभ्रुर्नकुलपिंगलौ" इति धरणिः। चादन्यतोपि। चक्रुः कर्त्ता। जघ्नुर्हंता। पपुः पालकः॥

मू०–व्यधेःकुः ॥ विधुः।

सुबोधिनी–व्यधेःकुः। कुप्रत्ययः स्यात्। व्यध ताडने। ग्रहामिति संप्रसारणं। विरहिणं विध्यतीति विधुः। "विधुः शशांके कर्पूरे हृषीकेशे च राक्षसे" इतिविश्वः।

मू०–कृग्रोरुरङ्च ॥ करोतीति कुरुः। गॄ शब्दे। गृणातीति गुरुः।

सुबोधिनी–कृग्रोरुरङ्च । आभ्यां कुः स्यादुरंतादेशश्च । डुकृञ् करणे गृशब्दे । करोतीति कुरुः । "कुरुर्नृपांतरे भक्ते पुमान्पुंभूम्नि नो वृती"ति मेदिनी । गृणाति तत्त्वमिति गुरुः ॥

**मू०–रपेरस्येच्च ॥** अनिष्टं रपतीति रिपुः ।

सुबोधिनी–रपेरस्येच्च । रपेः कुप्रत्ययः स्यात् अकारस्येच्च रपगतौ । अनिष्टं रपतीति रिपुः ॥

**मू०–अर्जिदृशिकम्यमिपशिबाधामृजिपशितुकृधुकृदीर्घहकाराश्च ॥** अर्ज्जयति गुणानिति ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कमु कान्तौ । कन्तुः । अन्धुः । पांशुः । बाधते इति बाहुः ।

सुबोधिनी–अर्जिदृशिकम्यमिपशिबाधामृजिपशितुकृधुकृदीर्घहकाराश्च । अर्ज्ज अर्ज्जने । अस्यऋजिरादेशः । षड्भ्यः कुप्रत्ययश्च । अर्ज्जयति गुणानिति ऋजुः । दृशिर् प्रेक्षणे । अस्य पशिरादेशः । पशुः । चादिगणेपि पठितः । 'पशुदृश्यर्थमव्ययमि'तिधरणिः । कमु कांतौ । अस्य तुगागमः । कंतु । "इः कंतुर्मकराकरः" इति त्रिकांडशेषः । अमरोगे । अमगत्यादौ वा । अस्य धुगागमः । अंधुः कूपः पशि नाशने । सौत्रः । अस्य दीर्घः । पांशुः । पडि पसि नाशने । चुरादिर्दंत्यांतो वा । "पांशुर्ना न द्वयोरजः" इत्यमरः । "तालव्याअपि दंत्याश्च शंबशूकरपांशवः" इति । बाधृ लोडने अस्य हांतादेशः । बाहुः । "बाहुः स्त्रीपुंसयोर्भुजे" इत्यमरः । अकारांतोप्ययं । "बाहौचभुजयोः पुमान्" इति दामोदरः । आबंतोपि । " बाहा भुजे पुमान् मानभेदास्त्रवृषवायुषु" इति मेदिनी ॥

**मू०–प्रथिम्रदिभ्रस्जांसम्प्रसारणंसलोपश्च ॥** पृथुः । मृदुः ।

सुबोधिनी–प्रथिम्रदिभ्रसृजांसंप्रसारणंसलोपश्च । त्रिभ्यः कुप्रत्ययः स्यात् त्रयाणां संप्रसारणं च । भ्रस्जेः सलोपश्च । प्रथ प्रख्याने प्रथते इति पृथुः । 'पृथुः स्यान्महति त्रिषु । त्वक्पत्र्यां कृष्णजीरेथ पुमानग्नौ नृपांतरे' इति मेदिनी । म्रद मर्दने । म्रदितुं शक्यते अकठिनत्वादिति मृदुः कोमलः । भ्रस्ज पाके ॥

**मू०–न्यंक्वादेःकुः ॥** न्यंकुः । भृज्जति तपसा इति भृगुः ।

सुबोधिनी–न्यंक्वादेः कुः । न्यंक्वादिगणे कुत्वं निपात्यते नितरामंचतीति न्यंकुः । न्यंक्वादित्वात् कुत्वं । भृगुः । "भृगुः शुक्रे प्रधाने च जमदग्नौ पिनाकिनी"ति विश्वः ॥

**मू०–लघिबंह्योर्नलोपश्च ॥** लघुः ।

सुबोधिनी–लघिबंह्योर्नलोपश्च । लघि गतौ लघुः । "पृक्कायां स्त्री लघुः क्लीबं शीघ्रे कृष्णाऽगुरुण्यपी"ति त्रिकांडशेषः । "लघुरगुणे मनोज्ञे निःसारे वान्यवत् क्लीबं । शीघ्रे कृष्णागुरुणि च पृक्कायामोषधौ स्त्रियामिति" मेदिनी ॥

**मू०–वालमूललघ्वंगुलीनांवालस्यरः ॥** वालः, वारः । मूलम् , मूरम् । लघुः, रघुः । अंगुलिः, अंगुरिः । बहि गतौ । बहुः ।

सुबोधिनी–वालमूललध्वंगुलीनांवालस्यरः । एषां लो रत्वमापद्यते वा । रघुर्नृपभेदः । अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसंभवमिति रघुः । बहि वृद्धौ । बहुः । "बहुस्तु आदिसंख्यासु विपुले त्वभिधेयवदि"ति मेदिनी ॥

**मू०–ऊर्णोतेर्नुलोपश्च ॥ ऊरुः ।**

सुबोधिनी–ऊर्णोतेर्नुलोपश्च । ऊर्णुञ् आच्छादने । ऊर्णूयते आच्छाद्यते इत्यूरुः । कर्म्मणि कुप्रत्ययः ॥

**मू०–महति-ह्रस्वश्च ॥ उरु महत् ।**

सुबोधिनी–महतिह्रस्वश्च । ऊर्णोतीति कर्त्तरि कुप्रत्ययः । उरु महत् ॥

**मू०–आङ्परयोःखनिशॄभ्यांडिच्च ॥ आखनतीत्याखुः । शॄहिंसायाम् । परान् शृणातीति परशुः ।**

सुबोधिनी–आङ्परयोःखनिशॄभ्यांडिच्च । अनयोरुपपदयोः आभ्यां कुः स्यात् स डिच्च । डित्वाट्टिलोपः । खनु अवदारणे । आखुः । शॄ हिंसायां । परं शृणातीति परशुः । पृषोदरादित्वादकारस्य लोपः । पर्शुः । "पर्शुः परशुनासहे"तिविश्वः ॥

**मू०–द्रोश्च ॥ द्रवति ऊर्ध्वमिति द्रुः । शतधाद्रवतीति शतद्रुः ।**

सुबोधिनी–द्रोश्च । द्रु गतौ । अस्मात् कुः स्यात् । स च डित् । द्रवतीति द्रुः वृक्षः । शाखा च । तद्वान् द्रुमः । शतद्रुः । "शतद्रुस्तु शुतुद्रिः स्यादि"त्यमरः ॥

**मू०–मृगय्वादयोनिपात्याः ॥ मृगं यातीति मृगयुः । शंकुः । नीलंगुः कृमिविशेषः । मन्द्यादेरुरः । मदि मन्दुरा । वाशुरा । मथे हिंसायाम् । मथुरा । चते याचने । चतुरः । अंकुरः ।**

सुबोधिनी–मृगय्वादयोनिपात्याः । कुप्रत्ययान्ता निपात्यन्ते । या प्रापणे आतोनपीत्यालोपः मृगं यातीति मृगयुः । "मृगयुः पुंसि गोमायौ व्याधे च परमेष्ठिनी"ति मेदिनी । "मृगयुर्ब्रह्मणि ख्यातो गोमायुव्याधयोरपी"ति विश्वः । शकि शंकायां शङ्कतेऽस्मादिति शंकुः । "शंकुः कीले गरे शस्त्रे संख्यापादपभेदयोः । पादभेदे च पापे च स्थाणावपि च दृश्यते" । इति विश्वः । "शंकुर्ना कीलशल्ययोः" । लगि गतौ । अस्मात् कुप्रत्यये दीर्घे च निपातनात् कृते नीलंगुः । केचित्तु नीलशब्दे उपपदे गमेः कुप्रत्यये टिलोपः पूर्वपदस्य मुम् पाक्षिकदीर्घश्च निपात्यते इत्याहुः " नीलंगुः कृमिजातौ स्यात् भ्रमरालीप्रसूतयोरि"ति विश्वः । "नीलंगुः स्यात् कृमौ पुंसि भ्रमराल्यां तु योषिती"ति मेदिनी । "नीलंगुरपि नीलगुरि"ति विश्वः। मंद्यादेरुरः । उरप्रत्ययः स्यात् । उरप्रत्ययमाह । मदि स्तुत्यादौ मंदुरा । "वाजिशाला तु मंदुरा" इत्यमरः । मंथ विलोडने । मथुरा । चते याचने । चतुरः । वाशृ शब्दे । वाश्यंते अस्यामिति वाशुरा रात्रिः । गर्दभोऽपि । अकि लक्षणे । अंकुरः । "अंकुरो रुधिरे लोम्नि पानीयेऽभिनवोद्भिदि । खर्जूरादित्वादूरप्रत्यये अंकूरोपि । "अंकूरोऽङ्कुर एव चे"ति विश्वप्रकाशः ॥

तत्त्वदीपिका–मृगयुरिति मृगयुर्व्याधः । शंकुरिति । शंकुर्ना कीलशल्ययोः । नीलंगुः कृमिविशेषः सृगालश्च । मंदुरेति । मंदुरा वाजिशाला स्यात् । वाशुरेति । वाश्यन्तेऽस्यामिति वाशुरा रात्रिर्गर्दभोपि च । "वाशुरा वासिताराव्योरि"ति मेदिनी । अंकुर इति 'अंकुरोरुधिरे लोम्नि पानीयेभिनवोद्भिदि' । अंकूरोपि च ।

**मू०–मद्गुरादयोनिपात्याः ॥ माद्यतीति मद्गुरः । कर्बुरः । बन्धुरः बन्धूरः । कुक वृक आदाने । कुकूरः कुकुरः । असुरः । असूरः मसुरः मसूरः ।**

सुबोधिनी–मद्गुरादयोनिपात्याः । उरप्रत्ययांता निपात्यंते । मदी हर्षे । गुगागमो निपात्यते । माद्यतीति मद्गुरो मत्स्यभेदः । कबृ वरणे । रुगागमो धातोर्निपात्यते । कर्बुरः । "कर्बुरं सलिले हेम्नि कर्बुरः पापरक्षसोः । कर्बुरा कृष्णवृंतायां शबले पुनरन्यवदि"ति मेदिनी । कर्बुरश्चित्ररक्षसोः । बंधबंधने । बध्नातीति बंधुरः । खर्जूरादित्वादूरप्रत्ययोपि "बंधूरबंधुरौ स्यातां नम्रसुंदरयोस्त्रिष्वि"ति रंतिदेवः । कुक आदाने । कोकतेर्वा कुगागमो निपात्यते । कुक्कुरः । "कुक्कुरः कुक्कुरो मत" इति हरचंद्रः । "कुक्कुरः सारमेये ना ग्रंथिपर्णे नपुंसके" इति मेदिनी । असु क्षेपणे । असुरः । अण् प्रत्यये आसुरः । मसी परिणामे । मसुरः । ऊर प्रत्यये मसूरोपि । "मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पादरोगे स्यादुपधाने पुनः पुमानि"ति मेदिनी । "मसूरमसुरौ च द्वावि"ति विश्वः ॥

तत्त्वदीपिका–मद्गुरइति । मत्स्यभेदः । कर्बुरः इति । कबृ वरणे । "कर्बुरः सलिले हेम्नि कर्बूरःपापरक्षसोः" शबलेत्रिष्वपि । बंधुर इति । "बंधूरबंधुरौ स्यातां नम्रसुंदरयोस्त्रिषु ।" मसुर इति । "मसूरा मसुरा वा ना वेश्या-व्रीहिप्रभेदयोः । मसुरा पादरोगे स्यादुपधाने पुनः पुमान् ।"

**मू०–शावशेरातौ ॥ शुइति आश्वर्थे । शु शीघ्रं अश्नुते प्राप्नोति कन्या यस्मात्सः श्वशुरः ।**

सुबोधिनी–शावशेरातौ ॥ आशुशब्दस्य निपातनादाकारलोपस्तस्मिन् शुशब्दे उपपदे आप्तौ गम्यमानायमशूङ् व्याप्तावित्यस्माद्धातोरुरप्रत्ययः स्यात् । श्वशुरः "पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पितातयोरि"त्यमरः ॥

**मू०–अविमह्योरिषट् ॥ अविषः । महिषः । महिषी राजपत्नी ।**

सुबोधिनी–अविमह्योरिषट् ॥ इषट् प्रत्ययः स्यात् । इषट्प्रत्ययमाह । टित्त्वात्ङीब्व्रत इतीप् । अव रक्षणादौ । अविषः । 'अविषौ राजजलधी' इत्युक्तत्वादविषशब्देन राजा समुद्रश्च । मह पूजायां । महिषः । "महिषी राजयोषिती"ति हैमः ॥

तत्त्वदीपिका–अविषइति । अविषौ राजजलधी महिषस्तु महान्मतः महिषी । राजपत्नी स्यात् ।

**मू०–अमेर्दीर्घश्च ॥ अम गत्याम् । आमिषम् ।**

सुबोधिनी–अमेर्दीर्घश्च ॥ अस्य दीर्घः स्यादिषट् प्रत्ययश्च । अम गत्यादौ । आमिषम् । "आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि" ॥

तत्त्वदीपिका–"आमिषंत्वस्त्रियां मांसे भोग्यवस्तुनि चेष्यते ।"

**मू०–रुहेर्वृद्धिश्च ॥ रौहिषः ।**

सुबोधिनी–रुहेर्वृद्धिश्च ॥ अस्य वृद्धिः स्यादिषट्प्रत्ययश्च । रुह बीजजन्मनि । रौहिषः । 'रंकु शंबररौहिषा' इत्यमरः । 'रौहिषो मृगभेदः स्यात् रौहिषं च तृणं मतमि' ति संसारावर्तः॥

तत्त्वदीपिका– रौहिषमिति । तृणे च मृगभेदे च ।

**मू०–किलेर्बुक्च ॥ किल शौक्ल्ये । केलतीति किल्बिषम् ।**

सुबोधिनी–किलेर्बुक्च ॥ किल श्वैत्यक्रीडनयोरस्मादिषट् प्रत्ययो धातोर्बुगागमश्च स्यात् । किल्बिषं । "किल्बिषं पापरोगयोः । अपराधेपी"ति मेदिनी ॥

तत्त्वदीपिका–किल्विषमिति । पापरोगयोः ।

**मू०–मद्यादेःकिरः॥मदिरा । मुदिरा । मंदिरम् । तिमिरम् । मिहिरः । छिदिरः । रुचिरम् । रुधिरम् । वध हिंसायाम् । बधिरः । सुषिरम् ।**

सुबोधिनी–मद्यादेः किरः ॥ किरप्रत्ययः स्यात् । किरप्रत्ययमाह । कित्त्वान्नगुणः । मदी हर्षे । मदिरा सुरा । मुद् हर्षे । मुदिरः । "मुदिरः कामुकाभ्रयोरि"ति मेदिनी । मदि स्तुत्यादौ । मंदिरं । "मंदिरं नगरेऽगारे क्लीबं ना मकरालये" इति मेदिनी । तिम आर्द्रीभावे तिमिरम् । "तिमिरं ध्वांते नेत्रामयेन्तके" इति मेदिनी । मिह सेचने । मिहिरः । "मिहिरः सूर्य-बुद्धयोरि"ति मेदिनी । रुच दीप्तौ । रुचिरं । "सुंदरं रुचिरं चारु" इत्यमरः । रुधिर् आवरणे। रुधिरं । "रुधिरोंगारके पुंसि क्लीबं तु कुंकुमासृजोरि"ति मेदिनी । बंध बंधने । नोलोप इति नलोपः । बधिरः श्रोत्रेंद्रियरहितः । शुष शोषणे । "शुषिरं वंश्यादिवाद्ये विवरे च नपुंसकम्।" " शुषिरं विवरं बिलं छिद्रमि"त्यमरः ॥

तत्त्वदीपिका–मुदिरइति । कामुकाभ्रयोः । मंदिरमिति । नगरागारयोः क्लीबं । मिहिरः सूर्यबुद्धयोः रुधिरमिति 'रुधिरोंगारकेपुंसिक्लीबं तु कुंकुमासृजोः ।' शुषिरं वंश्यादिवाद्ये च नपुंसकम् ।

**मू०–अजिरादयोनिपात्याः ॥ अजिरम् । शश प्लुतगतौ । शशतीति शिशिरम् । श्रथ मोचने । शिथिलम् । स्थिरम् । स्फायी । स्फिरम् । स्थविरः । खदिरः । शीङ् शिबिरम् । सल गतौ सलिलं । अनिलः।महिला । कोकिलः । कमु कपिलः । मथ्यन्ते रिपवो अस्यामिति मिथिला ।**

सुबोधिनी–अजिरादयोनिपात्याः । किरप्रत्ययांता निपात्यंते । अज गतौ अजेर्वीभावा-भावः । अजिरं । दशपादीवृत्तौ तु नञ्पूर्वस्य जीर्यतेः ऋवर्णलोपो निपात्यते इत्युक्तं । नजीर्यतीत्यजिरः । "अजिरं प्रांगणे काये विषये दर्दुरानिले" इति मेदिनी । शश प्लुतगतौ शशेरुपधाया इत्वं निपात्यते।शिशिरं । "शिशिरंस्याद्दतोर्भेदे तुषारे शीतलेऽन्यवदि"ति विश्वः। "शिशिरो ना हिमे न स्त्री ऋतुभेदे जडे त्रिष्वि"ति मेदिनी । श्रथ मोचने । धातोरुपधाया इत्वं रलोपः प्रत्ययरेफस्य लत्वं च निपात्यते । शिथिलं । ष्ठा गतिनिवृत्तौ । आतोनपीत्यालोपः । स्थिरं निश्चलं । तिष्ठतेर्बुक् ऱ्हस्वत्वं च निपात्यते । स्थविरः । स्फायी वृद्धौ । यत इति 'यलोपः । आतोनपीत्यालोपः । स्फिरं । "भूयंदभ्रं पुरुस्फिरमि"ति हैमः । खद स्थैर्ये । खदिरः। 'खदिरी शाकभेदेस्त्री ना चंद्रे दंतधावने" इति मेदिनी । शीङ् स्वप्ने । शीङो बुक् ऱ्हस्वश्च निपात्यते । शेरतेऽस्मिन् राजबलानीति शिबिरं निवेशः । "निवेशः शिबिरं षंड" इत्यमरः ।

सल गतौ । सलिलादय इलप्रत्ययांता निपात्यंते । सलति गच्छति निम्नमिति सलिलम् । अन प्राणने । अनिलः । मह पूजायां । महिला । पृषोदरादित्वान्महेलापि । महेलाफलिनीस्त्रियो-रिति मेदिनी । प्रियंगुः फलिनी फलीत्यमरः । दमयंतीकाव्ये प्रयोगो यथा । परमहेलारतो-प्यपारदारिकः । अत्र परस्य महेला स्त्री । अथ च परमा उत्कृष्टा हेला क्रीडा तत्र रत इत्यर्थः । कुक आदाने । कोकिलः । कुटकौटिल्ये । बाहुल्याद्गुणाभावः । कुटिलः । कमु कांतौ मस्य निपातनात्पः । कपिलः । "कपिलो रेणुकायां च शिंशपागोविशेषयोः । पुंडरी-ककरिण्यां स्त्री वर्णभेदे त्रिलिंगकः । नाऽनले वासुदेवे च मुनिभेदेच कुक्कुरे" इति मेदिनी । मंथ विलोडने । अकारस्येत्वं निपात्यते मथ्यंते रिपवोऽत्रेति मिथिला नगरी ॥

तत्त्वदीपिका—अजिरमिति । "अजिरं प्रांगणे काये विषये दर्दुरेऽनिले । शिशिरं स्यादृतोर्भेदे तुषारे शीतले-ऽन्यवत् ।" स्फिरमिति । निश्चलं । "खदिरी शाकभेदे स्त्री ना चंद्रेदन्तधावन"इति । शिबिरमिति । शेरतेऽस्मिन् राजबलानि निवेशः शिबिरं । महिलेति । 'महिला फलिनी स्त्रियाम् ।'

**मू०–कुबेरादयोऽपि ॥ कुबि आच्छादने । कुबेरः । कबृ वरणे । कपोतः ।**

सुबोधिनी–कुबेरादयोऽपि । कुबिआच्छादने । अस्मादेरप्रत्ययो नलोपश्च निपात्यते । कुंबत्यन्येषामैश्वर्यमिति कुबेरः । कुबेरस्त्र्यंबकसखइत्यमरः । कबृवरणे अस्मादोतप्रत्ययो बकारस्य पत्वं निपात्यते । कपोतः । "कपोतः स्याच्चित्रकंठे पारावतविहंगयोरि"ति मेदिनी । "कपोतः पक्षिमात्रेपी"ति त्रिकांडशेषः ॥

**मू०–भातेर्डवतुः ॥ भातीति भवान् ।**

सुबोधिनी–भातेर्डवतुः । डवतुप्रत्ययमाह । डित्त्वाट्टिलोपः । उदित्त्वान्नुम् ईप् च । भातीति भवान् । भा दीप्तौ । सर्वादिशब्दोयम् ॥

**मू०–किशोरादयोनिपात्यंते ॥ किं शृणातीति किशोरः । कठकृच्छ्र-जीवने । कठोरः । चक तृप्तौ । चकोरः । कपि चलने । कपोलः । पटोलः ।**

सुबोधिनी–किशोरादयोनिपात्यंते । ओरप्रत्ययांता ओलप्रत्ययांताश्च किंपूर्वस्य शृणा-तेष्टिलोपश्च किमोंत्यलोपश्च निपातनात् । शॄ हिंसायां । किशोरः "किशोरोऽश्वस्य शावके । तैलपर्ण्योषधौ च स्यात्तरुणावस्थसूर्ययोरि" ति मेदिनी । कठ कृच्छ्रजीवने । कठोरः । कठिनः पूर्णश्च । " कठोरताराधिपलांछनच्छविरिति " माघः । चक तृप्तौ । चकोरः पक्षि-भेदः । कपि चलने । नलोपो निपातनात् । कपोलः । ओलप्रत्ययोप्येभ्यो निपातनात् । पटगतौ । पटोलः । " पटोलं वस्त्रभेदेनौषध्यां ज्योत्स्न्यां तु योषिती"ति मेदिनी ॥

तत्त्वदीपिका–"किशोरोऽश्वस्यशावके । तैलपर्ण्योषधौचस्यात्तरुणावस्थसूर्ययोः । '

**मू–मीनातेरूरः ॥ मयूरः ।**

सुबोधिनी–मीनातेरूरः । ऊरप्रत्ययमाह । मीञ् हिंसायां । मयूरः ॥

**मू०–स्यन्देःसम्प्रसारणम् ॥ सिन्दूरम् ।**

सुबोधिनी–स्यंदेः संप्रसारणं । स्यंदू प्रस्रवणे । अस्मादूरप्रत्ययः संप्रसारणं च स्यात् । सिंदूरः । ' सिंदूरस्तरुभेदे स्यात् सिंदूरं रक्तवर्णके' इति मेदिनी ।

मू०–स्यादेस्तुः ॥ सेतुः । तन्तुः । ओतुः । मसी परिणामे । मस्तुः । धातुः । षच समवाये सचति समावेशयति चात्मनि जलमिति सक्तुः । क्रोष्टा ।

सुबोधिनी–स्यादेस्तुः । तुप्रत्ययमाह । षिञ् बंधने । सेतुः 'सेतुराली स्त्रियां पुमानित्यमरः' । 'सेतुर्नाली कुमारके' इति मेदिनी' । तनु विस्तारे । तंतुः । इवत्योरितीण्न । 'सूत्राणि कटितंतवः' इत्यमरः । मसी परिणामे । मस्तुः । 'मंडं दधिभवं मस्तु' इत्यमरः । षच सेचने सच्यते इति सक्तुः । चोः कुरिति कः । अर्द्धर्चादिः । डुधाञ् धारणपोषणयोः 'धातुर्ना इंद्रियेषु च । शब्दयोनिमहाभूततद्गुणेषु रसादिषु । मनःशिलादौ श्लेष्मादौ विशेषाद्गैरिकेऽस्तिचे'ति मेदिनी । 'श्लेष्मादिरसलोहादिमहाभूतानि तद्गुणाः ॥ इंद्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः' इत्यमरः । क्रुश आक्रोशे । छशषेति षत्वं ष्टुत्वं तृवद्भावः । क्रोष्टा । स्तुरारित्याङ् । क्रोष्टारौ ॥

तत्त्वदीपिका–स्यादेरिति । सिनोतीति सेतुः जलशेषः । मस्तु इति । दधिमंडं धातुरिति । 'मनःशिलादौ धातुः स्यादिंद्रियेषु तथैव च ।'

मू०–अर्त्तेस्तुक् ॥ ऋतुः । मन्तुः । जनी प्रादुर्भावे । जन्तुः ।

सुबोधिनी–अर्त्तेस्तुक् । तुक्प्रत्ययमाह । कित्त्वान्न गुणः । ऋ गतौ । ऋतुः 'ऋतुर्वर्षादिषट्सु च । आर्त्तवे मासि च पुमानि'ति मेदिनी । 'ऋतुः स्त्रीकुसुमेपि चे'त्यमरः । 'ऋतुः स्त्रीपुष्पकालयोरि'ति विश्वः । पुनः तुप्रत्ययमाह । मन ज्ञाने मंतुः । 'मंतुः पुंस्यपराधेपि मनुष्येपि प्रजापतौ' इति मेदिनी । जनी प्रादुर्भावे । जंतुः प्राणी ॥

तत्त्वदीपिका–ऋतुरिति । 'स्त्रीपुष्पे च ऋतुः काले ।' मंतुरपराधः ।

मू०–चायःकिः ॥ केतुः । वस्तुः ।

सुबोधिनी–चायःकिः । चायृ पूजानिशामनयोः । अस्मात्तुप्रत्ययो धातोः किरादेशश्च स्यात् । केतुः । 'केतुर्ग्रहपताकयोरि'ति विश्वः । 'केतुर्ना(!)रुकादिग्रहे स्थानेषु गुल्मिनी'ति मेदिनी । वस निवासे तुः । वस्तुः ॥

तत्त्वदीपिका–केतुरिति । पताका ग्रहोत्पातेषु लक्ष्मणि च ।

मू०–आगारेणित् ॥ वास्तुः ।

सुबोधिनी–आगारेणित् । आगारेऽर्थे वसेस्तुण् स्यात् । तुण्प्रत्ययमाह । णित्त्वाद्वृद्धिः । वास्तुः । 'वेश्मभूर्वास्तुरस्त्रियामि'त्यमरः ॥

मू०–कृञः कतुः ॥ क्रतुः ।

सुबोधिनी–कृञःकतुः । कतुप्रत्ययमाह । कित्त्वान्न गुणः । डुकृञ् करणे क्रतुः 'क्रतुर्यज्ञे मुनौ पुंसी'तिमेदिनी ॥

तत्त्वदीपिका–क्रतुरिति । क्रतुर्यज्ञेमुनौ पुंसि ।

मू०–जीवेरातृकोवृद्धिश्च ॥ जीवयति कुमुदानीति जैवातृकः ।

सुबोधिनी—जीवेरातृकोवृद्धिश्च । जीव प्राणधारणे । अस्मादातृकप्रत्ययः स्यात् धातोर्वृद्धिश्च। आतृकप्रत्ययमाह। जैवातृकः। 'जैवातृकः पुमान् सोमे कृषकायुष्मतोस्त्रिष्वि'ति मेदिनी। 'जैवातृकस्त्विवद्भिषगाऽऽयुष्मत्सु कृशीवले' इति । अस्मादातुप्रत्ययोपि । 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे ' ॥

तत्त्वदीपिका—जीवेरिति। 'जैवातृकः पुमान्सोमे कृषकायुष्मतोस्त्रिषु'।

**मू०—कृषादेरूः ॥ कर्षूः। खर्ज व्यथने। खर्जूः।**

सुबोधिनी—कृषादेरूः। ऊप्रत्ययमाह। कृष विलेखने कर्षूः। 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मते'ति विश्वः। 'कर्षूः पुमान् करीषाग्नौ स्त्रियां कुल्याल्पखातयोरि'ति मेदिनी। खर्ज व्यथने। खर्जूः।' खर्जूरी कीटकंडूषु' इति हैमः। पामा च ॥

तत्त्वदीपिका—कृषादेरिति। कर्षूः। 'कर्षूः पुंसिकरीषाग्नौ कर्षूर्नद्यांस्त्रियां मता। खर्जूः कीटान्तरे स्मृता'

**मू०—वहोधश्च ॥ वहति प्राप्नोति धनमिति वधूः।**

सुबोधिनी—वहोधश्च। वह प्रापणे अस्य धातादेशः ऊप्रत्ययश्च स्यात्। वधूः। ' स्नुषा नवोढा स्त्री भार्या वधूः पृक्कांगनासु चेति विश्वः। वधूर्जाया स्नुषा स्त्रीषु पृक्काच महिला वधूरि'ति त्रिकांडशेषः '। स्त्रीविशेषः ॥

तत्त्वदीपिका—वधूःस्नुषा नवोढा स्त्री भार्याच।

**मू०—कषेच्छश्च ॥ कच्छूः।**

सुबोधिनी—कषेश्छश्च। कष हिंसायामस्मादूप्रत्ययःस्यात् अंतस्य छश्च। कच्छूः। कच्छ्वां तु पामपामा विचर्चिका इत्यमरः॥

तत्त्वदीपिका—कच्छूः पामा।

**मू०—कास्वादयः ॥ कस्यते हन्यतेऽनया कासूः । पद्यते प्राप्यतेऽनया पादूः। लबिगतौ। अलाबूः। कशेरूः। दद्रूः।**

सुबोधिनी—कास्वादयः। ऊणप्रत्ययांता निपात्यंते । णित्त्वाद्वृद्धिः। ऊणप्रत्ययमाह। कसगतौ । कासूः। 'कासूर्विकलवाचि स्यात् तथा शक्त्यायुधे स्त्रियामि'ति मेदिनी। 'कासूः शक्त्यायुधे रुजि। बुद्धौ बिकलवाचि स्यादि'ति हैमः। पद गतौ। पादूः। चरणधारिणी। लबिस्रंसने। नञ्युपपदे लंबेर्नलोपो निपात्यते । न लंबते जले इत्यलाबूः। 'तुंब्यलाबूरुभे समे' इत्यमरः। शॄ हिंसायां। कशब्दे उपपदे शृणातेरू प्रत्ययः ऋत एरादेशश्च निपात्यते। कशेरूः। बाहुलकादुप्रत्ययोपि 'कशेरुस्तृणकंदे स्त्री'ति। दरिद्रा दुर्गतौ। ऊप्रत्यये इकारस्याकारस्य च लोपो निपात्यते। दद्रूः कुष्ठभेदः। मृगय्वादित्वात् कुप्रत्यये दद्रुरपि। 'दद्रुणो दद्रुरोगी स्यादि'त्यमरः।

तत्त्वदीपिका—कासूर्विकलवाचि स्यात्तथा शक्त्यायुधे स्त्रियामिति मेदिनी। पादूश्चरणधारिणी। तुंब्यलाबूरुभे समे। कसेरुस्तृणकंदे स्त्री।

**मू०—अन्द्वादयः ॥ अन्दूः।**

सुबोधिनी—अंद्वादयः । कूप्रत्ययांता निपात्यंते अदि बंधने । अंदूः । 'अंदूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य चे'ति मेदिनी । 'अंदूको' हस्तिनिगडे इत्यमरः । संज्ञायां कप्रत्यये पूर्वस्य ह्रस्वः । केचित्तु अम गतौ । अस्य दुगागमे कुप्रत्यये च अंदुर्बुद्धिरिति व्याचख्युः ।

तत्त्वदीपिका—अन्द्वदयः । 'अंदूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च ।'

**मू०—जनेर्बुक् ॥ जम्बूः । कर्कन्दधाति कर्कन्धूः । दिधिं धैर्यं स्यतीति दिधिषूः ।**

सुबोधिनी—जनेर्बुक् । जनी प्रादुर्भावे अस्य बुगागमः स्यात् कूप्रत्यये । जंबूः । जंबूः अदने अस्येत्येके बाहुलकात्कुप्रत्ययोपि जंबुः उक्तंच विक्रमादित्यकाव्ये । "तस्य जंबोः फलरसो नदीभूय प्रवर्त्तते" इति । "परिणतजंबुफलोपभोगहृष्टा इति भारविः ।" डुधाञ् धारणादौ आतोनपीत्यालोपे निपातनात्पूर्वपदस्य नुम् । कर्कंदधातीति कर्कंधूः । 'कर्कंधूर्बदरी कोलि' रित्यमरः । षोऽन्तकर्म्माणि । दिधिं धैर्यं स्यति त्यजतीति संध्यक्षराणामित्यात्वे आतोनपीत्यालोपे च दिधिषूः । केश्चित्तु दधातेरित्वं द्वित्वं षुक् च निपात्यते । दधातेरसाविति दिधिषुरिति व्याख्यातं 'पुनर्भूर्दिधिषूरूढाद्विरि'त्यमरः । द्विरूढा द्विवारं विवाहितेत्यर्थः ।

तत्त्वदीपिका—कर्कंधूर्बदरी । दिधिषूः पुनर्भूः ।

**मू०—मृग्रोरुतिः ॥ मरुत् । गरुत् ।**

सुबोधिनी—मृग्रोरुतिः । उतिप्रत्ययमाह । इकार उच्चारणार्थः । मृङ् प्राणत्यागे मरुत् । अणप्रत्यये मारुतः । मरुतशब्दोऽप्यव्युत्पन्नोऽस्ति । 'मरुतः स्पर्शनः प्राणः समीरो मारुतो मरुदि'ति विक्रमादित्यकोशः । 'कोयं वाति सदाक्षिणात्यमरुत' इति कविराजश्लोकः । गॄ निगरणे ॥

तत्वदीपिका—मृगोरिति । गरुत्पक्षः गर्मुत् तृणं च ।

**मू०—गिरतेरुतिस्तस्यमुट् ॥ चट भेदने ।**

सुबोधिनी—गिरतेरुतिस्तस्यमुट् । अस्मात्परस्योत्प्रत्ययस्य मुडागमः स्यात् । गर्मुत् 'गर्मुत्स्त्री स्वर्णलाभयोरि'ति मेदिनी ॥

**मू०—चटेरुलः ॥ चटुलम् ।**

सुबोधिनी—चटेरुलः । उलप्रत्ययमाह । चट भेदने । चटुलं शोभनम् ॥

**मू०—ह्रादेरितिः ॥ हरित् । सरित् । युष सौत्रो धातुः । युष भजने । योषित् ।**

सुबोधिनी—ह्रादेरितिः । इतिप्रत्ययमाह।इकारउच्चारणार्थः।हृञ् हरणे हरित् । 'हरित्ककुभि वर्णे च तृणवाजिविशेषयोरि'ति विश्वः । 'हरिद्दिशि स्त्रियां पुंसिहयवर्णविशेषयोः । अस्त्रियां स्यात् तृणेपि चे'ति मेदिनी । रुह बीजजन्मनि रोहित् । 'रोहिन्मृग्यां लताभेदे स्त्रीनार्के'इति मेदिनी । युष इति धातुः सौत्रः । योषित् । 'स्त्रीयोषिदबलायोषे'त्यमरः ॥

तत्त्वदीपिका—ह्रादेरिति । हरित्ककुभिवर्णे च तृणवाजिविशेषयोः । रोहिन्मृगविशेषेस्त्री ।

मू०–ताडेर्ग्निलुकूच ॥ तडित् ।

सुबोधिनी–ताडेर्ग्निलुकूच । इतिप्रत्यये अस्य णेर्लुक् स्यात् । तड आघाते । ताडयतीति तडित् । 'तडित्सौदामनी विद्युदि'त्यमरः ॥

मू०–शमेर्ढः ॥ शण्ढः ।

सुबोधिनी–शमेर्ढः । ढप्रत्ययमाह । बाहुलकात् ढस्येत्संज्ञा न । शमु उपशमे । हवत्योरितीण्न । 'शंढः स्यात् पुंसि गोपतौ। आकृष्टांडे वर्षधरे तृतीयप्रकृतावपी'ति मेदिनी ॥

तत्त्वदीपिका–शमेरिति । शंढःक्लीबः ।

मू०–कमादेरठः ॥ कमठः । जरठः । रमेर्वृद्धिश्च । रामठम् । शमेः खः । शंखः । कणेष्ठः । कण्ठः ।

सुबोधिनी–कमादेरठः । अठप्रत्ययमाह कमु कांतौ । कमठः । 'कमठः कच्छपे पुंसि भाण्डभेदे नपुंसक' इति मेदिनी । जॄ वयोहानौ । जरठः । 'जरठः कठिनेपांडौकर्कशे चाभिधेयवदि'ति विश्वः । 'जरठः कठिने जीर्णे' इति वैजयंती । रमेर्वृद्धिः । रमुक्रीडायामस्य वृद्धिः स्यात् ठप्रत्यये । रामठं हिंगु । शमेः खः । खप्रत्ययमाह । शमु उपशमे शंखः । 'शंखो निधौ ललाटास्थिन कंबौ न स्त्री'त्यमरः । 'शंखः कंबौ न योषिति । ललाटास्थिन निधौ नखे इति मेदिनी । कणेष्ठः । ठप्रत्ययमाह । कण शब्दे । निपातनात् णस्यानुस्वारे कंठः । 'कंठो गले सन्निधाने ध्वनौ मदनपादपे' इति मेदिनी ॥

तत्त्वदीपिका–कमादेरिति । रामठं हिंगु ।

मू०–वृषलादयःकलप्रत्ययान्तानिपात्याः ॥ वृषलः । शप् । शबलः । पल गतौ । पललम् । सरलम् । तरलम् । कम्बलम् । मुसखण्डने । मुसलम् ।

सुबोधिनी–वृषलादयः कलप्रत्ययांता निपात्याः । कित्त्वान्न गुणः । वृष सेचने वृषलः । 'वृषलस्तु गरे शूद्रे' इति हैमः । शप आक्रोशे । निपातनात्पस्य बः शबलः । पलगतौ । पललं। 'पललं तिलचूर्णे च पिके मांसे नपुंसकं । ना राक्षसे' इति मेदिनी । सृ गतौ । बाहुलकाद्गुणः । सरलः । 'सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिष्वि'ति मेदिनी। "सरला विरलायंते घनायंते कलिद्रुमाः। न शमी न च पुन्नागो ह्यस्मिन् संसारकानने" इति । तॄ प्लवनतरणयोः । तरलः । कमु कान्तौ । कमेर्बुगागमो निपात्यते । कंबलः । 'कंबलो नागराजे स्यात् सास्नाप्रावारयोरपि । क्रियावप्युत्तरासगें सलिले तु नपुंसकमि'ति मेदिनी । 'सास्ना तु गलकंबल' इत्यमरः । मुस खंडने । मुसलं 'मुसलंस्यादयोऽग्रे च पुंनपुंसकयोः स्त्रियां । तालमूल्यामाखुपर्णीगृहगोधिकयोरपी'ति मेदिनी। मुस खंडने। अस्मात्कलप्रत्यये मुशलोपि । 'मुसलो मूसलोपि चे'ति विश्वः ॥

मू०–लगेर्वृद्धिश्च ॥ लांगलम् । कुट्मलम् । कुड्मलम् । कश्मलम् । कोमलम् । मृजू मलम् । चुप् चपलम् । शकलम् । शमलम् । छगलः ।

सुबोधिनी—लगेर्वृद्धिश्च । लगि गतौ । अस्य वृद्धिर्निपात्यते । लांगलं । कुट कौटिल्ये । कलप्रत्ययस्य मुडागमो निपात्यते । कुट्मलः । कुड दाहे । अस्मात्कलप्रत्यये मुडागमे च कुड्मलोपि । कश गतिशासनयोः। कलप्रत्ययस्य मुट् निपातनात् । कश्मलं । कु शब्द। अस्मात्कलप्रत्ययस्य मुट् धातोर्गुणश्च निपात्यते । कोमलं । 'कोमलं मृदुलम् मृदु' इत्यमरः । मृजू शुद्धौ । मृजेष्टिलोपो निपात्यते कलप्रत्यये । मलः । 'मलोऽस्त्री पापविट् किट्टे कृपणे त्वभिधेयवदि'ति मेदिनी । चुपू मंदायां गतौ । धातोरुपधाया अत्वं निपात्यते कलप्रत्यये । चपलः'चपलः पारदे मीने चौरके प्रस्तरांतरे । चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च । नपुंसके तु शीघ्रे स्यात् वाच्यवत्तरले चले इति मेदिनी । शक्ल शक्तौ । शकलं । 'शकलं त्वचि खंडे स्याद्रागवस्तुनि वल्कले' इति मेदिनी । रोहितादीनां त्वचि तद्योगात् शाकली मत्स्यः । शमु उपशमे । शमलम् । छो छेदने । अस्य गुगागमो ह्रस्वश्च निपात्यते । छगलः । 'छगलं नीलवस्त्रे ना छगे स्त्रीवृद्धदारके' इति मेदिनी ॥

**मू०—ञमांताड्डः ॥ दण्डः । रण्डा । खण्डः । मन्यते मण्डः । अण्डः । चण्डः । पण्डः ।**

सुबोधिनी—ञमांताड्डः। ञमप्रत्याहारांताद्धातोर्डः स्यात् । डप्रत्ययमाह । दमु उपशमे। बाहुलकात् डस्यनेत्संज्ञा । दंडः । 'दंडोऽस्त्री लगुडेपिस्यादि'त्यमरः । रमु क्रीडायां । रंडः । 'रंडा मूषकपर्ण्यां च विधवायां च योषिती'ति विश्वः । खनु अवदारणे खंडः । 'खंडोऽस्त्री शकले चेक्षुविकारमणिभेदयोरि'ति मेदिनी ॥

**मू०—कवर्गादिभ्यःकिच्च ॥ गुङ् गतौ । गुडः ।**

सुबोधिनी—कवर्गादिभ्यःकिच्च। डक् स्यात् । कित्त्वाद्गुणो न । डप्रत्ययमाह गुङ् । गतौ । गुङ् अव्यक्ते शब्दे । 'गुडो गोलेक्षुपाकयोरि'त्यमरः । 'गुडः स्याद्गोलके हस्तिसन्नाहेक्षुविकारयोः । गुडा स्नुह्यां च कथिता गुडिकायां चयोषिती'ति मेदिनी ॥

**मू०—स्थादेरालः ॥ स्थालम् । स्थाली ।**

सुबोधिनी—स्थादेरालः । आलप्रत्ययमाह । ष्ठागतिनिवृत्तौ । स्थालं । 'स्थलं भाजनभेदेपि स्थाली स्यात् पाटलौषधावि'ति मेदिनी ॥

**मू०—पतिचण्डिभ्यामालञ् ॥ पातालम् । चडि कोपे । चांडालः ।**

सुबोधिनी—पतिचंडिभ्यामालञ् । आलञ्प्रत्ययमाह । ञित्त्वाद्वृद्धिः । पत्लृपतने । पतंत्यस्मिन्नधर्मिण इति पातालम् । 'अधोभुवनपातालंबलिसद्म रसातलम्' इत्यमरः । 'पातालं नागलोके स्याद्विवरेवडवानले' इति मेदिनी । चडि कोपे । नुमि कृते उपधाया अभावान्नवृद्धिः । चंडालः । अण्प्रत्यये चांडालः ॥

**मू०—तमादिभ्यःकालः ॥ तमालः । बिड भेदने । बिडालः । मृण । हिंसायाम् मर्णयति कमलानि मृणालम् । कुल संख्याने नाशने च । कोलति नष्टां करोति मृत्तिकां कुलालः । कपालम् । पल्यते त्यज्यतेऽसौ पलालः ॥**

सुबोधिनी—तमादिभ्यःकालः । कालप्रत्ययमाह । कित्त्वान्न गुणः । तमु कांक्षायां । तमालः । 'तमालस्तिलके खड्गे तापिच्छे वरुणद्रुमे' इति मेदिनी । विशप्रवेशने ।'विशालात्विंद्रवारुण्यामुज्जयिन्यां तु योषिति । नृपवृक्षभिदोः पुंसि पृथुलेप्यभिधेयवदि'ति मेदिनी । बिड आक्रोशे । 'बिडालः । बिडालो नेत्रपिंगे स्यात् वृषदंशकके पुमानि'ति मेदिनी । 'ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक्' इत्यमरः । मृण हिंसायां । मृणालः । 'मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिशे' इति मेदिनी । कुल संख्याने । कुलालः । 'कुलालः ककुभे कुंभकारे स्त्रीजननांतरे' इति मेदिनी । 'कुलालो घूकपक्षिणि । कुकुभे कुंभकारे चे'ति हैमः । कपि चलने । नलोपो निपात्यते । कपालः । 'कपालोऽस्त्री शिरोस्थिनि घटादेः शकले व्रजे' इति मेदिनी । पल गतौ । पललम् ॥

**मू०—पतादिभ्योऽङ्गः ॥ पतंगः । तरंगः । लवंगम् ।**

सुबोधिनी—पतादिभ्योंगः । अंगप्रत्ययमाह । पत्लृ पतने । 'पतंगः शलभे शालिप्रभेदे पक्षिसूर्य्ययोः । क्लीबं सूते' इति मेदिनी । सूते पारदेइत्यर्थः । तॄ प्लवनतरणयोः । तरंगः 'तरंगस्तुरगादीनां सुस्फाले वस्त्रभंगके । कल्लोलयोरिति विश्वः । लूञ् छेदने । 'लवंगं देवकुसुमे' इत्यमरः ॥

**मू०—बिडादेःकित् ॥ बिडङ्गः । मृद क्षोदे । मृदंगः ।**

सुबोधिनी—बिडादेःकित् । अंगकृप्रत्ययमाह । कित्त्वान्न गुणः बिड आक्रोशे । बिडंगः । "बिडंगः कृमिसंघघ्ने बिडंगो नागरेन्यवदि"ति विश्वः । "बिडंगस्त्रिष्वभिज्ञे स्यात् कृमिघ्ने पुंनपुंसकमि"ति मेदिनी । मृद क्षोदे मृदंगः । 'मृदंगः पटहे घोष ' इति मेदिनी ॥

**मू०—गमादेर्गः ॥ गंगा । छो छागः । खड्गः ।**

सुबोधिनी—गमादेर्गः । गप्रत्ययमाह । गम्लृ गतौ । गंगा । छो छेदने । छागः । खड्ग भेदने । खड्गः । 'खड्गो गंडकशृंगे स्यान्निस्त्रिंशे गंडकेपि चे'ति शब्दतरंगिणी । 'खड्गो गंडकशृंगासिबुद्धिभेदेषु गंडके' इति मेदिनी ॥

**मू०—भृङ्गादयः । भृञ् भृङ्गः । शृङ्गम् । शार्ङ्गम् । पूगः । मोदते मुद्गः ।**

सुबोधिनी—भृंगादयः । गकृप्रत्ययांता निपात्यंते । डुभृञ् धारणपोषणयोः । प्रत्ययस्य नुट् निपातनात् । भृंगः । ' भृंगा विङ्गालिधूम्याटा ' इति विश्वः । 'भृंगो धूम्याटविङ्गयोः । मधुव्रते भृंगराजे पुंसि भृंग गुडत्वची'ति मेदिनी । शृ हिंसायां । शृणातेर्ह्रस्वः प्रत्ययस्य नुडागमश्च निपात्यते । शृंगं । ' शृङ्गं प्रभुत्वे शिखरे चिह्ने क्रीडांबुयंत्रके । विषाणोत्कर्षयोश्चाथ शृंगः स्यात्कूर्चशीर्षके । स्त्रीविषयास्वर्णमीनभेदयोर्ऋषभौषधावि'ति मेदिनी । 'शृंगं विषाणमाख्यातं शैलाग्रे जलयंत्रके । मीनौषधिसुवर्णानां भेदे शृंगी प्रयुज्यते ' । इत्युत्पालिनी कोशे । शृणातेः शकुनौ वाच्ये गणप्रत्ययः तस्य नुट् च निपात्यतेणित्त्वावृद्धिः शार्ङ्गः । पक्षी । शार्ङ्गं धनुरिति तु शृंगस्य विकार इत्यर्थेऽणप्रत्यये बोध्यं । पूङ् पवने । पूयते सुखमनेनेति पूगः । ' पुगस्तु क्रमुके वृंदे' इति मेदिनी । मुद हर्षे । मुद्गः । सस्यभेदः ॥

**मू०—शरदादयोऽदिप्रत्ययान्तानिपात्याः ॥ शॄ शरत् । दृणातेः दरत् । दृषत् त्यजेः त्यत् । तनेः तत् । यजेः यत् । इण् एतत् ।**

सुबोधिनी—शरदादयोऽदिप्रत्ययांतानिपात्याः । शॄ हिंसायाम् । अदिप्रत्ययः । इकार उच्चारणार्थः । शरत् । ' शरत्स्त्री वत्सरेऽप्यृतौ ' इति मेदिनी । दॄ विदारणे । दरत् । ' दरत्स्त्रियां प्रयाते च भयपर्वतयोरपी' ति मेदिनी । दृणातेः षुक् ह्रस्वो गुणाभावश्च निपात्यते । दृषत् । ' दृषन्निष्पेषणशिला पटप्रस्तरयोः स्त्रियामि'ति मेदिनी । त्यज वयोहानौ । निपातनाट्टिलोपः । त्यद् । तनु विस्तारे । निपातनाट्टिलोपः तद् । यज देवपूजादौ । टिलोपो निपातनात् । यद् । इण् गतौ । अस्य गुणे कृते तुगागमो निपात्यते । एतद् ॥

तत्त्वदीपिका—शरदादयइति । शरद्दरयकूलयोः ।

**मू०—भियोऽजिःषुकुन्ह्रस्वश्च ॥ भिषक् ।**

सुबोधिनी—भियोऽजिःषुकुन्ह्रस्वश्च । ञिभी भये । अस्मादजि प्रत्ययः स्यात् । अजिप्रत्ययमाह । इकार उच्चारणार्थः । अजिप्रत्यये भियो ह्रस्वः षुगागमश्च स्यात् । ह्रस्वविधानसामर्थ्यान्न गुणः । भिषक् । ' भिषग्वैद्यौ चिकित्सक' इत्यमरः ॥

**मू०—युष्यसिभ्यांमदिक् ॥ युष सौत्रः युष्मद् । अस्मद् ।**

सुबोधिनी—युष्यसिभ्यांमदिक् । मदिक्प्रत्ययमाह । कित्त्वाद्गुणो न । इकार उच्चारणार्थः । युष् सौत्रो धातुः । युष्मद् । असु क्षेपणे । अस्मद् । त्वमहम् ॥

**मू०—स्त्वादेर्मः ॥ स्तोमः । सोमः । होमः । धर्मः । क्षेमम् । भामः । वामः । यामः । पद्मम् । नयतीति नेमः ।**

सुबोधिनी—स्त्वादेर्मः । मप्रत्ययमाह । ष्टुञ् स्तुतौ । स्तोमः संघातः । षुञ् अभिषवे । ' सोमस्तुहिनदीधितौ । वानरे च कुबेरे च पितृदेवे समीरणे । वसुप्रभेदे कर्पूरनीरे सोमलतौषधावि'ति मेदिनी । हु दानादनयोः होमः । देवतोद्देशेन हविःप्रक्षेपो होमः । धृञ् धारणे । धर्मः । ' धर्मोऽस्त्री पुण्यआचारे स्वभावोपमयोर्क्रतौ । अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ' इति मेदिनी । ' धर्मः पुण्ये यमे न्याये स्वभावाचारयोर्क्रतौ ' इति विश्वः । क्षि क्षेपे । क्षेमं । भा दीप्तौ भामः । ' भामः क्रोधे रुचौ दीप्तौ ' इति विश्वः । आदित्यश्च । या प्रापणे । यामः । ' यामस्तु पुंसि प्रहरे संयमेपि प्रकीर्तितः ' । इति मेदिनी । वा गतिगंधनयोः । वामः 'वामं धने पुंसि हरे कामदेवे पयोधरे । वल्गुप्रतीपसव्येषु त्रिषु नार्य्यां स्त्रियामथ । वामी शृगाली वडवा रासभीकलभीषु चे'ति मेदिनी । पद गतौ । पद्मं । 'पद्मोऽस्त्री पद्मके व्यूहनिधिसंख्यांतरेंबुजे । वा नागे ' इति मेदिनी । णीञ् प्रापणे । ' नेमः कीलेऽवधौ गर्त्ते प्राकारे कैतवेपि चे 'ति मेदिनी । ' नेमस्त्वर्द्धे प्राकारगर्तयोरवधौ कैतवेपिचे' ति हैमः॥

**मू०—जिह्वादयोनिपात्यंते ॥ जिह्मः । ग्रसु ग्लसु अदने । ग्रामः । सिमः । शुष्मम् । श्यैङ् श्यामः । धूमः । युग्मम् । रुक्मम् । तिग्मम् । हिमम् । भीमः । भीष्मः । घृ क्षरणे दीप्तौ च । जिघर्त्यनेन घर्मः । ग्रसेः ग्रीष्मः ।**

सुबोधिनी—जिह्वादयो निपात्यंते । ओहाक् त्यागे । अस्मात् मप्रत्ययः सप्रत्ययवद्भवति आतो लोपश्च निपातनात् तेन द्वित्वादिः । यः से इति पूर्वस्येत्वं । जिह्मः । 'जिह्मः कुटि'

लमंदयोरि'त्यमरः । 'जिह्मस्तु कुटिले मंदे क्लीबे तगरपादपे'इति मेदिनी । ग्रसु अदने । ग्रसेष्टेरात्वं निपात्यते । ग्रामः । 'ग्रामः स्वरे संवसथे वृंदे शब्दादिपूर्वक' इति विश्वः । शब्दादिपूर्वको ग्रामशब्दो वृंदे 'शब्दग्रामो गुणग्राम इति' यथा । 'शब्दादिपूर्वो वृंदेपि ग्राम' इत्यमरः । 'संपूर्वः संयुगे स्मृत' इति विश्वः । षिञ् बंधने । निपातनान्मक्प्रत्ययांतो वक्ष्यमाणो ज्ञेयः । सिमः सर्वादिगणे पठितः । शुष् शोषणे शुष्मं । 'शुष्ममग्निसमीरयोरि'ति विश्वः। 'शुष्मं तेजसि वायौने'ति मेदिनी । श्यैङ् गतौ श्यामः । 'त्रिषु श्यामौ हरितकृष्णौ श्यामा स्याच्छारिका निशे'त्यमरः। 'श्यामो वटे प्रनागस्य वारिदे वृद्धदारुके । पिके च कृष्णहरितोः पुंसि स्यात् तद्वति त्रिषु । मरीचे सिंधुलवणे क्लीबं स्त्री शारिकौषधौ । गुदायां सोमवल्लयां च प्रियंगुवल्गुलीकयोः । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ । नीलिकायामि'ति मेदिनी । धूञ् कंपने । धूमः । युजिर् योगे । निपातनात् जस्य गः । युग्मं । रुच दीप्तौ । निपातनात् चस्य कः । रुक्मं'रुक्मं तु कांचने लोहे' इति विश्वः । तिज निशाने । निपातनात् जस्य गः तिग्मं । 'तिग्मं तीक्ष्णं खरं तद्वादि' त्यमरः । हन हिंसागत्योः । हंतेर्हिरादेशो निपातनात् । हिमम् । 'हिमं तुषारमलयभवयोः स्यान्नपुंसकं । शीतले वाच्यलिंगक' इति मेदिनी । ञिभी भये भियः षुगागमो वा निपात्यते । बिभेत्यस्मादिति भीमः।भीष्मः।'भीष्मो गांगेयघोरयो'रिति विश्वः । 'भीमो ऽम्लवेतसे घोरे शंभौ मध्यमपांडवे' इति मेदिनी। घुरक्षरणदीप्त्योर्निपातनाद्गुणः । घर्मः । 'घर्मः स्यादातपग्रीष्मेप्युष्णस्वेदांभसोरपि' इति मेदिनी । ग्रस अदने । अस्य निपातनात् ग्रीषादेशः ग्रीष्मः । 'ग्रीष्मउष्णर्तुभेदयोरि'ति मेदिनी ॥

**मू०-प्रथेःषिवःसम्प्रसारणञ्च ॥ पृथिवी ।**

सुबोधिनी-प्रथेःषिवःसंप्रसारणंच । षिवप्रत्ययमाह । षित्वादीप् । षवप्रत्ययइत्येके । प्रथ प्रख्याने । 'पृथिवी पृथवी पृथ्वी धरा सर्वसहा रसे'ति शब्दार्णवः ॥

तत्त्वदीपिका-प्रथेःषिवइति । षवइत्येके । पृथिवी पृथवी पृथ्वी च ।

**मू०-अशादेःक्वः ॥ अश्वः । खट कांक्षायाम् । खट्वा । विश्वम् । सर्वादिरयम् ।**

सुबोधिनी-अशादेःक्वः । कित्त्वान्न गुणः । क्वप्रत्ययमाह । अशूङ् व्याप्तौ । अश्वः । 'अश्वः पुंजातिभेदे च तुरंगे च पुमानयामि'ति मेदिनी । 'अश्वः पुंभेदवाजिनोरि'ति विश्वः । खट कांक्षायां । खट्यते शयनार्थिभिः कांक्ष्यते इति खट्वा । विश प्रवेशने । विश्वः 'विश्वा प्रतिविषायां स्त्री जगति स्यान्नपुंसकं । नना शुंठ्यां पुंसि देवप्रभेदेष्वखिलेत्रिष्वि'ति मेदिनी ॥

**मू०-स्रादेर्वः ॥ सृतमनेन विश्वमिति सर्वः । शर्वः । गर्वः ।**

सुबोधिनी-स्रादेर्वः । वप्रत्ययमाह । सृ गतौ । सृतमनेन विश्वमिति सर्वः । गृ निगरणे गर्वः अहंकारः । शृ हिंसायां । शर्वो रुद्रः ॥

**मू०-ग्रीवादयोवप्रत्ययांतानिपात्यंते ॥ ग्रीवा । लिहंत्यनयेतिजिह्वा ।**

सुबोधिनी–ग्रीवादयो वप्रत्ययांतानिपात्यंते । गॄ निगरणे । ईडागमो गुणाभावश्च निपातनात् । गिरंत्यनयेति ग्रीवा । लिह आस्वादने । लस्य जो गुणाभावश्च निपातनात् । लिहंत्यनयेति जिव्हा ॥

तत्त्वदीपिका–ग्रीवादय इति । गिरंत्यनया ग्रीवा ।

**मू०–श्वादेःकन् ॥ युवा । वृषा । तक्ष्णोति काष्ठानि तक्षा । राजा । धवि गतौ । धन्वयति शरानिति धन्वा । प्रतिदिवा ।**

सुबोधिनी–श्वादेःकन् । कन्प्रत्ययमाह । कित्त्वान्नगुणः । यु मिश्रणे । यौतीति युधातोरित्युव् । नोपधाया इति दीर्घः । नाम्नो नोलोपशिति नलोपः । युवा । 'युवास्यात्तरुणे श्रेष्ठे निसर्गबलशालिनी' ति मेदिनी । वृषु सेचने । वृषा । 'वृषा कर्णे महेंद्रे ने' ति मेदिनी । तक्षू तनूकरणे । तक्षा । ' तक्षातु वर्द्धकिस्त्वष्टा रथकारश्च काष्ठतडि'त्यमरः । राजृ दीप्तौ राजा । 'राजा प्रभौ नृपे चंद्रे पक्षे क्षत्रियशक्रयोरि'त्यमरः । धवि गतौ । धन्वा । 'समानौ मरुधन्वानौ'इत्यमरः ।'अथास्त्रियाम् । धनुश्चापौ धन्वशरासनकोदण्डकार्मुक'मित्यमरः॥ 'धन्वा तु मरुदेशेना क्लीबे चापे शरेपिचे'ति मेदिनी । दिवु क्रीडादौ । प्रतिदीव्यत्यस्मिन्निति प्रतिदिवा दिवसः ॥

**मू०–सप्यशूभ्यांतुट्च ॥ षप समवाये । सप्त । अष्ट ।**

सुबोधिनी–सप्यशूभ्यान्तुट्च । आभ्यां कन् प्रत्ययः स्यात् तस्य तुडागमश्च । षप समवाये । जस्शसोरितिजसोलुक् । नाम्नोनोलोपाशिति नलोपः । सप्त । अशूङ्व्याप्तौ । छशषेति षत्वम् । अष्ट ॥

**मू०–नञिजहातेः ॥ अहः ।**

सुबोधिनी–नञिजहातेः । ओहाक् त्यागे । अस्मात् कन् प्रत्ययः स्यात् । न जहाति प्रकाशमिति आतोनपीत्यालोपः । अन्हइति नस्य सः । अहः ॥

**मू०–श्वादयः ॥ श्वा । उक्षा । पुष्णाति कमलानीति पूषा । प्लेहति प्लीहा । मुह्यन्त्यस्मिन्नाहते मूर्द्धा । मज्जत्यस्थिषु मज्जा । अर्य्यपूर्वान्माङः अर्य्यमा । मातर्य्यन्तरिक्षेश्वयतीति मातरिश्वा । मह पूजायाम् । मह्यते इति मघवा । इत्युणादौ प्रथमः पादः ॥**

सुबोधिनी–श्वादयः । कन्प्रत्ययान्ता निपात्यंते । टुओश्वि गतिवृद्ध्योः । श्वयतीति इकारलोपो निपातनात् । श्वा । उक्ष सेचने । उक्षा वृषभः । पूष वृद्धौ । इनामिति दीर्घः । पूषा । पूषणौ । पूषणः । प्लिह गतौ । इकारस्य दीर्घत्वं निपात्यते । प्लीहा कुक्षिव्याधिः । मुहवैचित्ये । मुहेरुपधाया दीर्घः । धोन्तादेशो रमागमश्च निपातनात् । मूर्द्धा । 'मूर्द्धा ना मस्तकोऽस्त्रिया मि'त्यमरः । मुर्वीबंधने । अस्योकारस्य दीर्घत्वं वस्य धश्च निपात्यते इत्युज्ज्वलदत्तः । मूर्द्धा । टुमस्जो शुद्धौ । मस्जेःश्चुत्वेन सस्य शः । झभेजबा इति शस्य जः । मज्जा । नकारांतोयामवंतोप्यभ्युपगम्यते । ' ऊष्मया सार्द्धमूष्मापि मज्जोक्तौ मज्जया सहे' ति द्विरूपकोशः । माङ् माने । इनामिति दीर्घः । अर्यमा । ' अर्यमा तु पुमान् सूर्ये पितृदेवा-

तरेपिचे'ति मेदिनी। टुओश्वि गतिवृद्ध्योः । धातोरिकारलोपः संप्रसारणाभावः सप्तम्याअलुक च निपात्यंते । मातरीत्यव्ययमन्तरिक्षवाचि तस्मिन् श्वयतीति मातरिश्वा । 'मातरिश्वासदागतिरि'त्यमरः । अथ च श्वादेरिति सूत्रेण वस्योत्वं न भवति । अभिव्यक्तिपरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य तदंतस्य च ग्रहणात् तेन मातरिश्वनः मातरिश्वनेत्यादि । मह पूजायाम् । धातोर्हस्य घः अवुगागमश्च निपात्यते । मघवा । इन्द्रः । इत्युणादौ प्रथमः पादः ॥

**मू०- कृहञोरेणुः ॥ करेणुः । हरेणुः ।**

सुबोधिनी—कृहञोरेणुः ॥ एणुप्रत्ययमाह । डुकृञ् करणे । करेणुः । 'करणेरिभ्यां स्त्रीनेभ' इत्यमरः । 'करेणुर्गजयोषायां स्त्रियां पुंसि मतंगजे ' इति मेदिनी । हृञ् हरणे । हरेणुः । 'हरेणुर्ना सती न स्त्री रेणुकाकुलयोषयोरि'ति मेदिनी । हरेणुर्गंधद्रव्यं । कलापश्चेतिबोध्यम् । ' कलापस्तु सतीनक ' इत्यमरः ॥

**मू०- कुषादेःक्थः ॥ कुष्ठम् । रथः । काशृदीप्तौ काष्ठम् । अवभृथः ।**

सुबोधिनी—कुषादेःक्थः । क्थप्रत्ययमाह । किस्वान्न गुणः । कुष निष्कर्षे । कुष्ठम् । ' कुष्ठं रोगे पुष्करे स्त्री'ति मेदिनी । 'कुष्ठं रोगे सुगंधे चे'ति विश्वः । रमु क्रीडायां । लोपस्त्वनुदात्ततनामिति मलोपः । रथः । ' रथः पुमानवयवेस्यंदने वेतसेपिचे'ति मेदिनी । 'रथः स्यात् स्यंदने काये चरणे वेतसेऽपिचे'ति विश्वः । काशृ दीप्तौ छशषेति षत्वं ष्टुत्वं काष्ठं । ' काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकमि' ति मेदिनी । 'काष्ठं दार्विंधनं त्वेध' इत्यमरः । डुभृञ् धारणादौ अवभृथो यज्ञस्नानम् ॥

**मू०-उषादेस्थः ॥ ओष्ठः । कोष्ठम् । गाथा । अर्थः । शु गतौ । शोथः ।**

सुबोधिनी—उषादेस्थः । थप्रत्ययमाह । उष दाहे ओष्ठः । कुष निष्कर्षे । कोष्ठः । 'कोष्ठः कुक्षिकुसूलयोः' । गै शब्दे । गाथा । ' गाथा श्लोके संस्कृतान्यभाषार्थाशेषवृत्तयोरि' ति मेदिनी । ऋ गतौ । अर्थः । ' अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ' इत्यमरः । शुगतौ । शोथः । श्वयथुः ॥

**मू०-सर्तेर्णित् ॥ सार्थः ।**

सुबोधिनी—सर्त्तेर्णित् । थणप्रत्ययमाह । णित्त्वाद्वृद्धिः । सृ गतौ । सार्थः ' सार्थो वणिक्समूहे स्यादपि संघातमात्रके ' इति मेदिनी ॥

**मू०-निशीथादयः ॥ निशीथः । तीर्थः । रिचिर् विरेचने । रिक्थम् । षिचिर् क्षरणे । सिक्थम् । पृष् सेचने । पृष्ठम् । गूथम् । यु मिश्रणे । यूथम् । प्रोथः ।**

सुबोधिनी—निशीथादयः । थक्प्रत्ययान्ता निपात्यंते । शीङ् स्वप्ने । निशीथः । ' निशीथस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी । तॄ प्लवनसंतरणयोः ऋतइरितीर् य्वोर्विहसे इति दीर्घः । तीर्थं । 'तीर्थंसाध्वक्षरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतारर्षिजुष्टांभः स्त्रीरजःसु च विश्रुतमि'ति विश्वः । रिचिर्विरेचने । चोःकुरितिकः । रिक्थम् 'रिक्थमृक्थं धनं वसु' इत्यमरः । षिचिर् क्षरणे । सिक्थम् । 'सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकमि'ति मेदिनी ।

पृष सेचने पृष्ठं ।'पृष्ठं तु चरमं तनोरि'त्यमरः। 'पृष्ठं चरममात्रेपि देहस्यावयवांतरे' इति मेदिनी । स्तोत्रविशेषेपि । पृष्ठः । पृष्ठैः स्तूयते इत्यादौ तथा निर्णयात् । गु पुरीषोत्सर्गे । निपातनाद्दीर्घः । गूथं विष्ठा । यु मिश्रणे । निपातनाद्दीर्घः । यूथं 'यूथं तिर्यक्समूहेपि वृंदमात्रेपि भाषितामि'ति विश्वः । 'यूथं तदग्रसरगर्वितकृष्णसारमि'ति रघुः। प्रुङ् गतौ निपातनाद्गुणः प्रोथः । 'प्रोथो स्त्री हयघोणायां ना कट्यामध्वगे त्रिष्वि'ति मेदिनी । 'प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते' ॥

तत्त्वदीपिका–निशीथादय इति । रात्रावर्द्धरात्रे च निशीथः । तीर्थमिति । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतारर्षिजुष्टांभःस्त्रीरजस्सु च विश्रुतमि'ति विश्वः । रिक्थमिति । 'रिक्थमृक्थं धनं वसु' । गूथं विष्ठा । यूथं समूहः । 'प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते' ।

**मू०–स्फायादेरक् ॥ स्फारम् । तंचू संकोचने । तक्रम् । वंचु वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । चक्रम् । चदि चन्द्रः । उन्दी उन्द्रः । श्विता श्वित्रम् । वृत्रः । वीरः । नीरम् । छिद्रम् । उस्रा । शुभ्रम् ।**

सुबोधिनी–स्फायादेरक् । रक्प्रत्ययमाह । किस्वाद्गुणो न । स्फायी वृद्धौ ईवत्योरितीण्न । यवयोर्वसे इति यलोपः । स्फारः 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी ॥ तंचू संकोचने । न्यंक्वादित्वात्कुत्वम् । नोलोप इति नोलोपः । तक्रम् । 'तक्रं ह्युदश्विन्मथितं पादांब्वर्द्धांबुनिर्जलमि'त्यमरः । वंचु प्रलंभने वक्रः 'वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः । शक्ॢ शक्तौ । शक्रः । 'शक्रः पुमान्देवराजे कुटजार्जुनभूरुहोरि'ति मेदिनी । क्षिप प्रेरणे । क्षिप्रः । क्षुदिर संपेषणे । क्षुद्रः । 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवदि'ति मेदिनी । चदि आल्हादने । इदित इति नलोपाभावः । चंद्रः । पचाद्यप्रत्यये चन्दोपि । 'हिमांशुश्चंद्रमाश्चंद्रः' 'शशीचंदो हिमद्युतिरि'ति शब्दार्णवः । उन्दी क्लेदने । उन्द्रः जलमार्जारः । श्वितावर्णे । श्वित्रं कुष्ठं । वृतु वर्तने वृत्रः । 'वृत्रो रिपौ ध्वनौ ध्वांते शैले चक्रे च दानवे' इति विश्वः । अशगतिक्षेपणयोः । अजेर्वीरिति वीरादेशः । वीरः । णीञ् प्रापणे । नीरं । छिदिर् द्वैधीकरणे छिद्रः । वस निवासे । यजामिति संप्रसारणं । घसादेःषः इति षत्वे प्राप्ते निषेधमाह । रपिसृपिसृजिस्पृशिस्पृहिसवनादीनां सस्य षत्वंनेति । उस्रः। 'उस्रो वृषे च किरणे उस्रा धेनुपवित्रयोरि'ति मेदिनी । 'माहेयी सौरभेयी गौरुस्रा माताच शृंगिणी'त्यमरः । शुभ दीप्तौ शुभ्रं । 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिष्वि'ति मेदिनी ॥

तत्त्वदीपिका–स्फायादेरिति । उन्द्रो जलचरः । श्वित्रं कुष्ठम् । उस्रोरश्मिः उस्रा गौः ।

**मू०–अमितम्योर्दीर्घश्च ॥ आम्रः । ताम्रम् ।**

सुबोधिनी–अमितम्योर्दीर्घश्च । आभ्यां रक् स्यादुपधायादीर्घश्च । अम गत्यादौ । आम्रः 'आम्रश्चूतो रसालोसौ' इत्यमरः ॥ तमु कांक्षायां । ताम्रम् ॥

**मू०–निद्रादयः ॥ णिदि निद्रा । अर्द आर्द्रम् । शुचू शूद्रः । दुःखेनेयते दूरम् । कृती कृच्छ्रम् । क्रूरः । रोदयतीति रुद्रः । ज्या वयोहानौ । जीरः ।**

सुबोधिनी–निद्रादयः । रक्प्रत्ययांता निपात्यंते । णिदि कुत्सायां । नलोपो निपातनात् । निद्रा । 'स्यान्निद्रा शयनं स्वाप' इत्यमरः । अर्दगतौ । अर्देर्दीर्घो निपातनात् । आर्द्रा । 'आर्द्रा नक्षत्रभेदे स्यात् स्त्रियां क्लिन्नेभिधेयवदि'ति मेदिनी । शुच शोके । चस्य दो धातोर्दीर्घश्च

तेरपिचे’ति मेदिनी। टुओश्वि गतिवृद्ध्योः । धातोरिकारलोपः संप्रसारणाभावः सप्तम्याअलुक च निपात्यंते । मातरीत्यव्ययमन्तरिक्षवाचि तस्मिन् श्वयतीति मातरिश्वा । ‘मातरिश्वासदागतिरि’त्यमरः । अथ च श्वादेरिति सूत्रेण वस्योत्वं न भवति । अभिव्यक्तिपरत्वेन कुक्कुर-वाचकस्यैव श्वशब्दस्य तदंतस्य च ग्रहणात् तेन मातरिश्वनः मातरिश्वनेत्यादि । मह पूजायाम् । धातोर्हस्य घः अवुगागमश्च निपात्यते । मघवा । इन्द्रः । इत्युणादौ प्रथमः पादः ॥

मू०— कृहञोरेणुः ॥ करेणुः । हरेणुः ।

सुबोधिनी–कृहञोरेणुः ॥ एणुप्रत्ययमाह । डुकृञ् करणे । करेणुः । ‘करणुरिभ्यां स्त्रीनेभ’ इत्यमरः । ‘करेणुर्गजयोषायां स्त्रियां पुंसि मतंगजे ’ इति मेदिनी । हृञ् हरणे । हरेणुः । ‘हरेणुर्ना सती न स्त्री रेणुकाकुलयोषयोरि’ति मेदिनी । हरेणुर्गंधद्रव्यं । कलापश्चेतिबोध्यम् । ‘ कलापस्तु सतीनक ’ इत्यमरः ॥

मू०— कुषादेःक्थः ॥ कुष्ठम् । रथः । काशृदीप्तौ काष्ठम् । अवभृथः ।

सुबोधिनी–कुषादेःक्थः । क्थप्रत्ययमाह । कित्त्वान्न गुणः । कुष निष्कर्षे । कुष्ठम् । ‘ कुष्ठं रोगे पुष्करे स्त्री’ति मेदिनी । ‘कुष्ठं रोगे सुगंधे चे’ति विश्वः । रमु क्रीडायां । लोप-स्त्वनुदात्ततनामिति मलोपः । रथः । ‘ रथः पुमानवयवेस्यंदने वेतसेपिचे’ति मेदिनी । ‘रथः स्यात् स्यंदने काये चरणे वेतसेऽपिचे’ति विश्वः । काशृ दीप्तौ छशषेति षत्वं ष्टुत्वं काष्ठं । ‘ काष्ठा दारुहरिद्रायां कालमानप्रकर्षयोः । स्थानमात्रे दिशि च स्त्री दारुणि स्यान्नपुंसकमि’ति मेदिनी । ‘काष्ठं दार्विंधनं त्वेध’ इत्यमरः । डुभृञ् धारणादौ अवभृथो यज्ञस्नानम् ॥

मू०–उषादेस्थः ॥ ओष्ठः । कोष्ठम् । गाथा । अर्थः । शु गतौ । शोथः ।

सुबोधिनी–उषादेस्थः । थप्रत्ययमाह । उष दाहे ओष्ठः । कुष निष्कर्षे । कोष्ठः । ‘कोष्ठः कुक्षिकुसूलयोः’ । गै शब्दे । गाथा । ‘ गाथा श्लोके संस्कृतान्यभाषार्थाशेषवृत्तयोरि’ ति मेदिनी । ऋ गतौ । अर्थः । ‘ अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु ’ इत्यमरः । शुगतौ । शोथः । श्वयथुः ॥

मू०–सर्त्तेर्णित् ॥ सार्थः ।

सुबोधिनी–सर्त्तेर्णित् । थण्प्रत्ययमाह । णित्त्वाद्वृद्धिः । सृ गतौ । सार्थः ‘ सार्थो वणिक्-समूहे स्यादपि संघातमात्रके ’ इति मेदिनी ॥

मू०–निशीथादयः ॥ निशीथः । तीर्थः । रिचिर् विरेचने । रिक्थम् । षिचिर् क्षरणे । सिक्थम् । पृषु सेचने । पृष्ठम् । गूथम् । यु मिश्रणे । यूथ-म् । प्रोथः ।

सुबोधिनी–निशीथादयः । थक्प्रत्ययान्ता निपात्यंते । शीङ् स्वप्ने । निशीथः । ‘ निशी-थस्तु पुमानर्द्धरात्रे स्याद्रात्रिमात्रके’ इति मेदिनी । तॄ प्लवनसंतरणयोः ऋतइरितीर् र्वोर्वि-हसे इति दीर्घः । तीर्थं । ‘तीर्थंसाध्वक्षरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतारर्षिजुष्टांभः स्त्रीरजः-सु च विश्रुतमि’ति विश्वः । रिचिर्विरेचने । चोःकुरितिकः । रिक्थम् ‘रिक्थमृक्थं धनं वसु’ इत्यमरः । षिचिर् क्षरणे । सिक्थम् । ‘सिक्थो भक्तपुलाके ना मधूच्छिष्टे नपुंसकमि’ति मेदिनी ।

पृष सेचने पृष्ठं ।'पृष्ठं तु चरमं तनोरि'त्यमरः । 'पृष्ठं चरममात्रेपि देहस्यावयवांतरे' इति मेदिनी । स्तोत्रविशेषेपि । पृष्ठः । पृष्ठैः स्तूयते इत्यादौ तथा निर्णयात् । गु पुरीषोत्सर्गे । निपातनाद्दीर्घः । गूथं विष्ठा । यु मिश्रणे । निपातनाद्दीर्घः । यूथं 'यूथं तिर्यक्समूहेपि वृंदमात्रेपि भाषितमि'ति विश्वः । 'यूथं तदग्रसरगर्वितकृष्णसारमि'ति रघुः। पुङ् गतौ निपातनाद्गुणः प्रोथः । 'प्रोथो ऽस्त्री हयघोणायां ना कट्यामध्वग त्रिष्वि'ति मेदिनी । 'प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते' ॥

तत्त्वदीपिका–निशीथादय इति । रात्रावर्द्धरात्रे च निशीथः । तीर्थमिति । 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमंत्रिषु । अवतारर्षिजुष्टांभःस्त्रीरजस्सु च विश्रुतमि'ति विश्वः । रिक्थमिति । 'रिक्थमृक्थं धनं वसु' । गूथं विष्ठा । यूथं समूहः । 'प्रोथमस्त्री तुरंगास्ये प्रोथः प्रस्थित उच्यते' ।

**मू०–स्फायादेरक् ॥ स्फारम् । तंचू संकोचने । तक्रम् । वंचु वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । चक्रम् । चदि चन्द्रः । उन्दी उन्द्रः । श्विता श्वित्रम् । वृत्रः । वीरः । नीरम् । छिद्रम् । उस्रा । शुभ्रम् ।**

सुबोधिनी–स्फायादेरक् । रक्प्रत्ययमाह । कित्त्वाद्गुणो न । स्फायी वृद्धौ ईवत्योरितीण्न । यवयोर्वसे इति यलोपः । स्फारः 'स्फारः स्यात्पुंसि विकटे करकादेश्च बुद्बुदे' इति मेदिनी । तंचू संकोचने । न्यंक्वादित्वात्कुत्वम् । नोलोप इति नोलोपः । तक्रम् । 'तक्रं ह्युदश्विन्मथितं पादांब्वर्द्धांबुनिर्जलमि'त्यमरः । वंचु प्रलंभने वक्रः 'वक्रः स्यात्कुटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः । शक्लृ शक्तौ । शक्रः । 'शक्रः पुमान्देवराजे कुटजे र्जुनभूरुहोरि'ति मेदिनी । क्षिप प्रेरणे । क्षिप्रः । क्षुदिर संपेषणे । क्षुद्रः । 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवदि'ति मेदिनी । चादि आल्हादने । इदित इति नलोपाभावः । चंद्रः । पचाद्यच्प्रत्यये चन्द्रोपि । 'हिमांशुश्चंद्रमाश्चंद्रः' 'शशीचंद्रो हिमद्युतिरि'ति शब्दार्णवः । उन्दी क्लेदने । उन्द्रः जलमार्जारः । श्वितावर्णे । श्वित्रं कुष्ठं । वृतु वर्तने वृत्रः । 'वृत्रो रिपौ ध्वनौ ध्वांते शैले चक्रे च दानवे' इति विश्वः । अजगतिक्षेपणयोः । अजेर्वीरिति वीरादेशः । वीरः । णीञ् प्रापणे । नीरं । छिदिर् द्वैधीकरणे छिद्रः । वस निवासे । यजामिति संप्रसारणं । षसादेःषः इति षत्वे प्राप्ते निषेधमाह । रपिसृपिसृजिस्पृशिस्पृहिसवनादीनां सस्य षत्वंनेति । उस्रः । 'उस्रो वृषे च किरणे उस्रा धेनुपवित्रयोरि'ति मेदिनी । 'माहेयी सौरभेयी गौरुस्रा माताच शृंगिणी'त्यमरः । शुभ दीप्तौ शुभ्रं । 'शुभ्रं स्यादभ्रके क्लीबमुद्दीप्तशुक्लयोस्त्रिष्वि'ति मेदिनी ॥

तत्त्वदीपिका–स्फायादेरिति । उन्द्रो जलचरः । श्वित्रं कुष्ठम् । उस्रोरश्मिः उस्रा गौः ।

**मू०–अमितम्योर्दीर्घश्च ॥ आम्रः । ताम्रम् ।**

सुबोधिनी–अमितम्योर्दीर्घश्च । आभ्यां रक् स्यादुपधायादीर्घश्च । अम गत्यादौ । आम्रः 'आम्रश्चूतो रसालोसौ' इत्यमरः ॥ तमु कांक्षायां । ताम्रम् ॥

**मू०–निद्रादयः ॥ णिदि निद्रा । अर्द आर्द्रम् । शुचू शूद्रः । दुःखेनेयते दूरम् । कृती कृच्छ्रम् । क्रूरः । रोदयतीति रुद्रः । ज्या वयोहानौ । जीरः ।**

सुबोधिनी–निद्रादयः । रक्प्रत्ययांता निपात्यंते । णिदि कुत्सायां । नलोपो निपातनात् । निद्रा । 'स्यान्निद्रा शयनं स्वाप' इत्यमरः । अर्दगतौ । अर्देर्दीर्घो निपातनात् । आर्द्रा । 'आर्द्रा नक्षत्रभेदे स्यात् स्त्रियां क्लिन्नाभिधेयवदि'ति मेदिनी । शुच शोके । चस्य दो धातोर्दीर्घश्च

निपात्यते । शूद्रः । इण् गतौ । दुःपूर्वः धातोर्लोपो निपातनात् । रिलोपोदीर्घश्चेतिरलोपपूर्वदीर्घौ । दुःखेनेयते प्राप्यते इति दूरं । कृती छेदने । कृतेःकृच्छ्र इत्येतावादेशौ निपातनात्। कृच्छ्रम् । क्रूर 'कृच्छ्रमाख्यातमाभीले पापसंतापयोरपी'ति विश्वः । 'स्यात्कष्टं कृच्छ्रमाभीलमि'त्यमरः । क्रूरः । 'क्रूरस्तु कठिने घोरे नृशंसे चाभिधेयवदि'ति विश्वः । 'नृशंसो घातुकः क्रूरः पापो धूर्तस्तु वंचक' इत्यमरः । रुदिर् अश्रुविमोचने । ण्यंतः रोदयतीति णेरिति णिलोपः । रुद्रः । जु गतौ । ईकारो निपातनात् । जीरः । ज्या वयोहनौ अस्माद्रक्प्रत्यये ग्रहामिति संप्रसारणे च कृते जीरइत्येके । 'जीरः खड्गे वणिग्द्रव्ये' इति विश्वः 'जीरस्तु जरणे खड्ग' इति मेदिनी ॥

मू०—स्वादेःक्रः ॥ सुरः । षूङ् प्राणिप्रसवे । सूरः । धीरः । गृध्रः ।

सुबोधिनी—स्वादेःक्रः । क्रप्रत्ययमाह । कित्त्वान्न गुणः । षुञ् अभिषवे । सुरः 'सुरा चषकमद्ययोः । पुँल्लिंगस्त्रिदिवेशे स्यादि'ति मेदिनी । 'सुरो देवे सुरा मद्ये चषकेपि सुरा क्वचिदि'ति विश्वः । षूङ् प्राणिगर्भविमोचने । सावयति प्रेरयति कर्माणि लोकमिति सूरः । 'सूरसूर्यार्यमादित्य' इत्यमरः । डुधाञ् धारणादौ । अपिह्वाधेतीत्वं । धीरः। 'धीरो धैर्यान्विते स्वैरे बुधे क्लीबं तु कुंकुमे । स्त्रियां श्रवणशब्दकुल्यामि'ति मेदिनी । गृधु अभिकांक्षायां । गृध्रः । 'गृध्रः खगांतरे पुंसि वाच्यलिंगोथ लुब्धके' इति मेदिनी ॥

मू०—शूरादयः ॥ शु सौत्रः । शूरः । षिञ् सीरः । चिञ् चीरम् ।

सुबोधिनी—शूरादयः । क्रप्रत्ययांता निपात्यंते । शु गतौ । निपातनाद्दीर्घः सर्वत्र । शूर । 'शूरः स्यात्पादपे भटे' इति मेदिनी । 'शूरश्चारुभटे सूर्ये' इति विश्वहेमचंद्रौ । षिञ् बंधने । सीरः । 'सीरोऽर्कहलयोः पुंसी'तिः मेदिनी । चिञ् चयने । चीरम् । 'चीरो झिल्ल्यां नपुंसकम् । गोस्तने वस्त्रभेदे च रेखालेखनयोरि'ति मेदिनी । 'चीरं तु गोस्तने वस्त्रे चूडायां सीसकेपि च । चीरा कृच्छ्राटिकाझिल्ल्योरि'ति विश्वः ॥

मू०—वाविन्धेः ॥ वीध्रम् । वृधु वर्ध्रम् । वप्रः । इन्द्रः । अगि गतौ । अग्रम् । वज्रम् । टुवप् विप्रः । उच समवाये । उग्रः । ञिभीभये । भेरी । शुच शोके । शुक्रः । शुक्लः । गुङ् गतौ । गौरः । इण् इरा । माला ।

सुबोधिनी—वाविंधेः । ञिइंधी दीप्तौ । विपूर्वादस्मात् क्रन् स्यात् । नोलोपः इति नलोपः। वीध्रं । 'वीध्रं तु विमलार्थकमि'त्यमरः । वृधु वृद्धौ वर्ध्रचर्म । टुवप् बीजतंतुसंताने । वप्रः प्राकारः 'वप्रः पितरि केदारे वप्रः प्राकाररोधसोरि'ति धरणिः । इदि परमैश्वर्ये । इंद्रः 'इंद्रः शचीपतीवंतरात्मन्यादित्ययोगयोरि'ति विश्वः। अगि गतौ नलोपो निपात्यते । अग्रम्। अग्रं पुरस्तादुपरि परिमाणे पलस्य च । आलंबने समूहे च प्रांतरे पुंनपुंसकम् । अधिके च प्रधाने च प्रथमे चाभिधेयवदि'ति मेदिनी । वज गतौ । वज्रः । 'वज्रोऽस्त्री हीरके पवौ' । टुवप् बीजतंतुसंताने उपधाया इत्वंनिपातनात् । विप्रः । उच समवाये चस्य गो निपातनात् उग्रः । 'उग्रः शूद्रासुते क्षत्राद् रुद्रे पुंसि त्रिषूत्कटे' इति मेदिनी । ञिभी भये । नंदादित्वादीप्'भेरी स्त्री दुंदुभिः पुमान्' इत्यमरः । पक्षे रस्य लत्वं निपात्यते । भेलः । 'भेलः प्लवमणौ पुंसि भीरुवज्ञे च वाच्यवदि'ति मेदिनी । शुच शोके को निपातनात् शुक्रः । 'शुक्रः स्याद्भार्गवे ज्येष्ठ

मासे वैश्वानरे पुमान् । रेतोऽक्षिरुग्भिदोः क्लीबमि'ति पक्षे लत्वं निपात्यते । शुक्रः । 'शुक्रो योगांतरे सिते । नपुंसकं तु रजते' इति च मेदिनी । गुङ् अव्यक्ते शब्दे । वृद्धिर्निपातनात् । गौरः । 'गौरः पीतेऽरुणे श्वेते विशुद्धेप्यभिधेयवत् । नाश्वेतसर्षपे चंद्रे न द्वयोः पद्मकेशरे । गौरी त्वसंजातरजःकन्याशंकरभार्य्ययोः । रोचने रजनीपिंगाप्रियंगुवसुधासु च । आपगायाविशेषेपि यादसांपतियोषिती'ति मेदिनी । 'गौरोऽरुणे सिते पीते' इति विश्वः । इणू गतौ । इणो गुणाभावो निपातनात् । इरा । 'इरा मद्ये च वारिणी'ति विश्वः । मा माने । प्रत्ययरस्य लत्वं निपातनात् । माला । 'मालं क्षेत्रे स्त्रियां पृक्का स्रजो जात्यंतरे पुमानि'ति मेदिनी । 'मालं क्षेत्रे जने मालो मालापुष्पादिदामनी' ति विश्वः । 'मालमुन्नतभूतल मि'त्युत्पले 'क्षेत्रमारुह्य मालमि'तिमेघदूतः ॥

**मू०–कुश्शिल्पिसंज्ञयोः ॥ रजकः । चष् भक्षणे । चषकम् । कुह विस्मापने । कुहकम् ।**

सुबोधिनी–कुश्शिल्पिसंज्ञयोः ॥ शिल्पिन्यभिधेयसंज्ञायां गम्यमानायां च कुः स्यात् । कुप्रत्ययमाह । कित्वान्न गुणः । युवोरित्यकादेशः । रंज रागे । नोलोप इति नलोपः । रजकः । 'रजको धावकशुका'विति हैमः । 'रजको धावके शुके' इति विश्वः । चष भक्षणे । संज्ञायां तु चषकः । 'चषकोऽस्त्री पानपात्रमि'त्यमरः । कुह विस्मापने । कुहकः । दांभिकः । कृती छेदने । कृतकः ॥

**मू०–मुषेःकिकोर्दीर्घश्च ॥ मूषिकः ।**

सुबोधिनी–मुषेःकिकोर्दीर्घश्च । मुष स्तेये । अस्मात्किकः । किकप्रत्ययमाह । कित्वान्न गुणः । मूषिकः आखुः ॥

**मू०–क्रियइकः ॥ क्रयिकः ।**

सुबोधिनी–क्रियइकः । इकप्रत्ययमाह । डुक्रीञ् द्रव्यविनिमये । क्रयिकः । क्रेता ॥

**मू०–श्यास्त्याहृञादिभ्यइनः ॥ श्येनः । स्त्येनः । हरिणः ।**

सुबोधिनी–श्यास्त्याहृञादिभ्यइनः । इनप्रत्ययमाह । श्यैङ् गतौ । संध्यक्षराणामित्यात्वं । श्येनः 'श्येनः पत्त्रिणि पांडुरे' इति मेदिनी । स्त्यै ष्ट्यै शब्दसंघातयोः । स्त्येनः चौरः । हृञ् हरणे हरिणः । 'हरिणः पुंसि सारंगे विशदे त्वभिधेयवत् । हरिणी हरितायां च गणिकावृक्षभेदयोः । सुवर्णप्रतिमायां चे'तिमेदिनी । अव रक्षणादौ । अविनः । अध्वर्युः ॥

**मू०–वृजादेःकिनः ॥ वृजिनम् ।**

सुबोधिनी–वृजादेःकिनः । किनप्रत्ययमाह । कित्वान्न गुणः वृजी वर्ज्जने । वृजिनं । 'वृजिनं कल्मषे क्लीबं केशे ना कुटिलेऽन्यवदि'ति मेदिनी ।

**मू०–अजेर्विनः ॥ अजिनम् । कठ कृच्छ्रजीवने । कठिनम् । मल गन्धे । मलिनम् । कुडि दाहे । कुण्डिनम् । दो दिनम् ।**

सुबोधिनी–अजेर्विनः । किनप्रत्यये विभावो न स्यात् । अज गत्यादौ । 'अजिनं चर्म

कृत्तिः स्त्री'त्यमरः । कठ कृच्छ्रजीवने । 'कठिनः । कठिनमपि निष्ठुरे स्यात्स्तब्धे तु त्रिषु नपुंसकं स्थाल्यां । कठिनी खटिकायामपि कठिना गुडशर्करायां चे' ति मेदिनी । नल गंधने । नलिनं पद्मं । मल धारणे । मलिनं । 'मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिती' ति मेदिनी । कुडि दाहे । कुंडिनं नगरं कुंडिन ऋषिः । दोअवखंडने । संध्यक्षराणामित्यात्वे । आतोनपीत्यालोपः । दिनम् ॥

**मू०–द्रुदक्षिभ्यामिनः ॥** द्रविणम् । दक्ष वृद्धौ । दक्षिणः । दक्षिणा ।

सुबोधिनी–द्रुदक्षिभ्यामिनः । द्रुगतौ । 'द्रविणः । द्रविणं नद्वयोर्वित्ते कांचने च पराक्रमे' इति मेदिनी । दक्ष वृद्धौ । दक्षिणः । 'दक्षिणस्तु परच्छंदानुवर्तिनि । दक्षेऽपसव्ये सरले प्राचीनेत्यथ दाक्षिणा । दिक् प्रतिष्ठा यज्ञदानमि' ति हेमचंद्रः । 'दक्षिणः सरलोदारपरच्छंदानुवर्तिषु । वाच्यवद्दक्षिणावाची यज्ञदानप्रतिष्ठयोरि'ति विश्वः ।

**मू०–अर्तेःकिदिच्च ॥** इरिणम् ।

सुबोधिनी–अर्तेः किदिच्च । ऋ गतौ । अस्मादिनः प्रत्ययः स्यात् धातोरिरादेशश्च । इरिणं 'इरिणंशून्यमूषरमि'त्यमरः ॥

**मू०–वेपितुह्योर्ह्रस्वश्च ॥** विपिनम् । तुहिनम् ।

सुबोधिनी–वेपितुह्योर्ह्रस्वश्च । आभ्यामिनप्रत्ययः स्यात् । धातोर्ह्रस्वश्च । टुवेपृ कंपने । विपिनं । 'अटव्यरण्यम् विपिनमि'त्यमरः। तुहिर् अर्दने । उपधायागुणे कृते ह्रस्वः । तुहिनं हिमम् ॥

**मू०–तलिपुलिभ्यांच ॥** तल प्रतिष्ठायाम् । तलिनम् । पुलिनम् ।

सुबोधिनी–तलिपुलिभ्यांच । इन्प्रत्ययः स्यात् । तल प्रतिष्ठायां तलिनं । 'तलिनं विरले स्तोके स्वच्छेपि तलिनं त्रिषु' । पुल महत्त्वे पुलिनम् ॥

**मू०–रुहेश्च ॥** रोहिणः ।

सुबोधिनी–रुहेश्च । इनप्रत्ययः स्यात् । रुह बीजजन्मनि रोहिणः । चंदनतरुः ॥

**मू०–आप्नोतेःक्विप्ह्रस्वश्च ॥** आपः । अद्भिः ।

सुबोधिनी–आप्नोतेःक्विप्ह्रस्वश्च । आप्लृव्याप्तौ । अस्मात्क्विप्धातोर्ह्रस्वश्च क्विप् प्रत्ययमाह । न्सम्महतो धौ दीर्घः । आपः । भिदपामिति दत्वम् । अद्भिः ॥

**मू०–ग्लानुदिभ्यांडौः ॥** ग्लौः । नौः ।

सुबोधिनी–ग्लानुदिभ्यांडौः । डौप्रत्ययमाह । डित्त्वाट्टिलोपः । ग्ले हर्षक्षये । ग्लौः 'ग्लौर्मृगांकः कलानिधिरि' त्यमरः । नुदि प्रेरणे । नौः । 'स्त्रियां नौस्तरणिस्तरिरि' त्यमरः ॥

**मू०–रातेर्डैः ॥** राः । रायौ ।

सुबोधिनी–रातेर्डैः । डैप्रत्ययमाह । डित्त्वाट्टिलोपः । रा दाने । रैस्भिइत्यात्वम् । राः । 'रः स्मृतः पावकस्तीक्ष्णः राः पुंसि स्वर्णवित्तयोरि'ति मेदिनी । 'रस्तीक्ष्णे दहने रास्तु सुवर्णे जलदे धने' इति हैमः ॥

मू०–गमेर्डोः ॥ गौः।

सुबोधिनी–गमेर्डोः। डोप्रत्ययमाह। डित्त्वाट्टिलोपः। गम्लृ गतौ। ओतोणित्योः। गौः। 'गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु' इति केशवः। 'गौः स्वर्गे वृषभे रश्मौ वज्रे चंद्रे पुमान् भवेत्। अर्जुने नेत्रदिग्बाणभूर्वाग्वारि गौर्मता'। इत्यमरः।

तत्त्वदीपिका–गमेरिति। गौरिति। 'गौर्नादित्येबलीवर्देकिरणक्रतुभेदयोः। स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि। नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु'।

मू०–भ्रमेर्डूः ॥ भ्रूः।

सुबोधिनी–भ्रमेर्डूः। डूप्रत्ययमाह। डित्त्वाट्टिलोपः। भ्रमु अनवस्थाने। भ्रूः।

मू०–दमेर्डोस् ॥ दोः। दोषौ।

सुबोधिनी–दमेर्डोस्। डोस्प्रत्ययमाह। डित्त्वाट्टिलोपः। दमु उपशमे। दोषांद इति रः। दोः 'दोषंतस्यतथाविधस्ये'ति श्रीहर्षप्रयोगात् पुंस्त्वम्। ककुद्दोषणी इति भाष्यप्रयोगान्न-पुंसकत्वम्। 'दोर्दोषा च भुजोबाहुरि'ति धनंजयकोशात्। स्त्रीलिंगोप्ययम्।

मू०–पणेरिज्आदेर्वः ॥ वणिक्।

सुबोधिनी–पणेरिज्आदेर्वः। इज् प्रत्ययमाह। पणव्यवहारे स्तुतौ च वणिक्। 'नैगमो वणिजो वणिगि'त्यमरः॥

मू०–आशेरशादेशोयुप्रत्ययः ॥ रशना।

सुबोधिनी–आशेरशादेशोयुप्रत्ययः। युप्रत्ययमाह। युवोरित्यनादेशः। अशूङ् व्याप्तौ। अश् भोजने वा। रशना। 'तालव्या अपि दंत्याश्च शंबसूकरशूकराः। रशनापि च जिव्हायामि'ति विश्वः। रस आस्वादने रस शब्दे इति धातुभ्यां युप्रत्यये दंत्यसकारवानपि। 'रसनस्वदने ध्वनौ। जिव्हायां तु न पुंसि स्याद्रास्नायां रसना स्त्रियामि'ति मेदिनी। 'रसनं निःस्वने स्वादे रसना कांचिजिव्हयोरि'ति धरणिः॥

तत्त्वदीपिका–रशनेति कांचौ। जिव्हायां दन्त्यसकारवान्।

मू०–उन्देर्नलोपश्च ॥ ओदनः।

सुबोधिनी–उंदेर्नलोपश्च। युः स्यात्। उंदी क्लेदने। ओदनः। 'ओदनं नास्त्रियां भक्ते बलायामोदिनी स्त्रियामि'ति मेदिनी॥

मू०–गमेर्गान्तादेशश्च ॥ गगनम्। अन्येभ्योऽपियुः। स्यंदनम्। रोच-नः। रंजिकृभ्यांक्युः। रजनम्। कृ किरणः।

सुबोधिनी–गमेर्गांतादेशश्च। युः स्यात् मस्य गश्च। गम्लृ गतौ। गगनम्। 'नभोंतरि-क्षं गगन'मित्यमरः। अन्येभ्योपि युः। स्यंदू प्रस्रवणे। स्यंदनः। 'स्यंदनं तु स्रुतौ नीरे तिनिशेनारथे स्त्रियामि'त्यमरः। रुच दीप्तौ। रोचनः। 'रोचनं रक्तकल्हारे गोपित्तवरयो-षितोः। रोचनं कूटशाल्मल्यां पुंसि स्याद्रोचके त्रिषु'ति मेदिनी। रंजिकृभ्यां क्युः। क्यु-

प्रत्ययमाह । कित्त्वान्न गुणः । रंज रागे । नोलोपः । रजनं । 'रजनो रागजनने रजनं रक्तचंदने' इति मेदिनी । कॄ विक्षेपे ॠतइरितीर् । किरणः ॥

**मू०–धृषेर्धिषश्च ॥ धिषणा । धाञश्च । निधनम् ।**

सुबोधिनी–धृषेर्धिषश्च । धृषेर्धिष् आदेशश्च । ञिधृषा प्रागल्भ्ये । धिषणः । 'धिषणस्त्रिदशाचार्ये धिषणाधिपयोषितो'ति मेदिनी । 'गीष्पतिर्धिषणो गुरुरि'त्यमरः । डुधाञ् धारणादौ। आतोनलोपीत्यालोपः । निधनं । 'निधनं स्यात्कुले नाशे' इति मेदिनी । 'निधनं कुलनाशयोरि'ति हैमः ॥

तत्त्वदीपिका–धिषणेति बुद्धौ । गुरौ तु पुंवत् ।

**मू०–पृषदादयः ॥ पृषु सेचने । पृषत् । पृषन्ति । बृह उद्यमे । बृहत् । महान् । जगत् । विपूर्वाद्धनः ॥ वेहत् ।**

सुबोधिनी–पृषदादयः । अत्प्रत्ययांता निपात्यंते वर्त्तमानेऽर्थे । अत्प्रत्ययमाह । ऋदित्वात् पुंसि त्रितोनुमिति नुम् । स्त्रियां तु ष्ट्रिवतइतीप् । पृषु सेचने । निपातनात् गुणाभावः । पृषत् । पृषन्ति । बिंदुवाची पृषच्छब्दो नपुंसकमिति ध्वननाय बहुवचनांतमुदाहृतं । 'पृषन्मृगे पुमान् बिंदौ नद्वयोः पृषतोऽपिचे'ति मेदिनी । बृह वृद्धौ । बृहत् । विपुलं । 'बृहती क्षुद्रवार्तिक्यां कंटकार्य्यां च वाचि चे'ति विश्वः । मह पूजायां । महान् । 'महती वल्लकीभेदे राज्ये तु स्यान्नपुंसकम् । तत्वभेदे पुमान् श्रेष्ठे वाच्यव'दिति विश्वः । ' विश्वावसोस्तु बृहती तुंबरोश्च कलावती । महती नारदस्य स्यात् सरस्वस्त्यास्तु कच्छपी'ति वैजयंती । 'अवेक्षमाणं महतीं मुहुर्मुहुरि'ति माघः । हन हिंसागत्योः । विपूर्वाद्धंतेरत् प्रत्ययो धातोष्टिलोपश्च निपातनात् । उपसर्गेकारस्यैत्वं च । विहंति गर्भमिति वेहत् । 'वेहद्गर्भोपघातिनी' त्यमरः ॥

**मू०–नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृभ्रातृजामातृमातृपितृदुहितृएते निपात्यंतेतृप्रत्ययान्ताः ॥ नपतन्त्यनेनेति नप्ता । नेष्टा । त्वेषयतीति त्वष्टा । क्षद भक्षणे । क्षत्ता । होता । पोता । प्रशास्ता । भ्राता । जायाम्मातीति जामाता । मान पूजायाम् । माता । पातीति पिता । दुहिता ।**

सुबोधिनी–नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृभ्रातृजामातृमातृपितृदुहितृएते निपात्यंतेतृप्रत्ययांताः । पत्लृपतने । तृप्रत्ययमाह । नञः प्रकृतिभावो धातोष्टिलोपश्च निपातनात् । सेराइत्यात्वं । नप्ता पौत्रो दौहित्रश्च । णीञ् प्रापणे । नयतेः षुक् गुणश्च निपातनात् ष्टुत्वं नेष्टा । त्विष् दीप्तौ । धातोरितोऽत् निपातनात् । त्वष्टा । 'त्वष्टा पुमान् देवशिल्पितक्षणोरादित्यवाच्यपी'ति मेदिनी । हु दानादनयोः । होता । पूञ् पवने । पोता । भ्राजृ दीप्तौ । भ्राजतेर्जलोपो निपातनात् । भ्राता मा माने । जायां मातीतिजायायाजादेशो निपातनात् । जामाता । मान पूजायां नस्य लोपो निपातनात् । माता । पा रक्षणे । पातेराकारस्यैत्वं च निपात्यते पिता । दुहप्रपूरणे । दुहेस्तृप्रत्ययस्येट् गुणाभावश्च निपातनात् । दुहिता । क्षद शकलीकरणे भक्षणे च अनुदात्तेत् क्षत्ता । 'क्षत्तास्यात्सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे' इति विश्वः ॥

**मू०—स्वावसेर्ऋः ॥ स्वसा ।**

सुबोधिनी—स्वावसेर्ऋः । सु उपपदे असु क्षेपणे इत्यस्मादृप्रत्ययः स्यात् । ऋप्रत्ययमाह। स्वसा भगिनी ॥

**मू०—यतेर्वृद्धिश्च ॥ याता ।**

सुबोधिनी—यतेर्वृद्धिश्च । यतीप्रयत्नेऽस्मादृः स्यात् वृद्धिश्च । याता । 'भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परमि'त्यमरः ॥

**मू०—नञिनन्देश्च ॥ नवांदतीति ननांदा ननंदेत्येके ।**

सुबोधिनी—नञिनंदेश्च । ऋः स्याद्वृद्धिश्च । टुनदि समृद्धौ । ननंदतीति कृतायामपि सेवायां रुष्यतीत्यर्थः । ननन्दा ननान्दा । वृद्धिर्वानुवर्तते इत्येके ।'ननान्दातु स्वसा पत्युर्ननन्दानंदनी च से'ति शब्दार्णवः । 'उषा पूपा ननान्दाच ननन्दाच प्रकीर्तिते'तिविश्वः ॥

**मू०—दिवेर्ऋः ॥ देवा । देवरौ ।**

सुबोधिनी—दिवेर्ऋः । दिवु क्रीडादौ । देवा । 'स्वामिनौ देवृदेवरावि'त्यमरः ॥

**मू०—नयतेर्डिच्च ॥ ना । नरौ । नरः ।**

सुबोधिनी—नयतेर्डिच्च । ऋप्रत्ययमाह । डित्वाट्टिलोपः । णीञ् प्रापणे । ना । 'स्युः पुमांसः पंचजनाः पुरुषाः पूरुषा नर' इत्यमरः ॥

**मू०—अर्त्यादेरनिः ॥ अरणिः । सरणिः तरणिः । धमनिः अशनिः । अवनिः । रजनिः ।**

सुबोधिनी—अर्त्यादेरनिः । अनिप्रत्ययमाह । ऋ गतौ । अरणिः । 'अरणिर्वन्हिमंथे ना द्वयोर्निर्मथ्यदारुणी'ति मेदिनी। सृ गतौ । सरणिः। 'सरणिः श्रेणिवर्त्मनोरि'ति दंत्यादौ रभसः। शृ हिंसायां । ततोऽनिः शरणिरित्येके । धृञ् धारणे धरणिः भूमिः । धमिः सौत्रः । धमनिः शिरा । अश भोजने । अश्यते भुज्यते राज्यमिंद्रेणानयेति अशनिः । 'अशनिः स्त्रीपुंसयोः स्याच्चंचलायां पत्रावपी'ति मेदिनी । अव रक्षणादौ । अवनिः । पृथिवी । तृ प्लवनसंतरणयोः 'तरणिर्द्युमणौ पुंसि कुमारीनौकयोः स्त्रियामि'ति मेदिनी । कुमारी लताविशेषः । 'तरणी रामतरणी कर्णिका चारुकेसरा । सहाकुमारी गंधाढ्ये'ति धन्वंतरिनिघंटुः । रंज रागे नलोपो निपातनात् । रजनिः । कृतीकारादितीपि रजनी। 'रजनी हस्तिनीरात्रिहरिद्राजतुकासु चे'ति मेदिनी ॥

**मू०—अर्च्यादेरिस् ॥ आर्चिः । अर्चिषी । रोचिः । शोचिः । छादिः । हविः । सर्पिः ।**

सुबोधिनी—अर्च्यादेरिस् । इस्प्रत्ययमाह । अर्च पूजायाम् । आर्चिः। 'ज्वालाभासोर्नपुंस्यर्चिरि'ति सांतेष्वमरः । ज्यंतादर्चेरिप्रत्यये 'अर्चिर्हेतिः शिखास्त्रियामि'त्यमरः । शुच शोके शोचिः । 'रोचिः शोचिरुभे क्लीबे' इत्यमरः । हुदानादनयोः हविः । घृतम् । सृप्लृ गतौ । सर्पिः । आज्यम् ॥

तत्त्वदीपिका—अर्चादेरिति । आर्चिर्ज्वाला । इदंतोपि शोचिर्दीप्तिः ।

**मू०—द्युतेरादेर्ज्जः ॥ ज्योतिः ।**

सुबोधिनी—द्युतेरादेर्जः इत् स्यात् दस्य जश्च । द्युत दीप्तौ । ज्योतिः । 'ज्योतिरग्नौ दिवाकरे । पुमान् नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोरि'ति मेदिनी ॥

**मू०—बृंहेर्नलोपश्च ॥ बर्हिः ।**

सुबोधिनी—बृंहेर्नलोपश्च । बृह वृद्धौ अस्मादिस्प्रत्ययः स्यान्नकारस्य लोपश्च । बर्हिः । 'बर्हिः स्यात्कुशशुष्मणो'रित्यमरः ॥

**मू०—जनादेरुस् ॥ जनुः । ऋ अरुः । चक्षेर्दिशत् । चक्षुः । वप् वपुः । यज् यजुः ।**

सुबोधिनी—जनादेरुस् । उस्प्रत्ययमाह । जनी प्रादुर्भावे । जनुः । 'जनुर्जननजन्मानी'त्यमरः । ऋ गतौ । अरुः । 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः । पॄ पालनपूरणयोः । परुः । 'ग्रंथिर्नापर्वपरुषी' इत्यमरः । टुवप् बीजतंतुसंताने । वपुः । 'वपुः क्लीबे तनौ शस्ताकृतावपी'ति मेदिनी । शस्ताकृतिः प्रशस्ताकृतिरित्यर्थः । यज देवपूजादौ । यजुर्वेदः ॥

तत्त्वदीपिका—जनादेरिति । जनुर्जननं परुर्ग्रंथिः ।

**मू०—एतेर्णित् ॥ आयुः ।**

सुबोधिनी—एतेर्णित् । इण् गतावित्यस्मात् णुस् प्रत्ययः स्यात् । णित्त्वाद्वृद्धिः । वृद्धौ कृतायामायादेशः । आयुः । आयुषी । इति उणादौ द्वितीयः पादः ।

**मू०—धीवरादयःष्वरप्रत्ययान्तानिपात्यंते ॥ धीवरः । शर्वरी । निषद्वरः । पीवरः ।**

सुबोधिनी—धीवरादयःष्वरप्रत्ययांता निपात्यते । ष्वरप्रत्ययमाह । षित्त्वात् ङीप्रत्ययइतीप् डुधाञ् धारणादौ । इत्वं निपातनात् । धीवरः । 'कैवर्त्ते दाशधीवरा'वित्यमरः । शॄ हिंसायां । शर्वरी । 'शर्वरी यामिनी स्त्रियोरि'ति मेदिनी । षद्लृ विशरणादौ निषद्वरः । 'निषद्वरः स्मरे पंके निशायां तु निषद्वरी'ति मेदिनी । पा पाने । ईत्वं निपात्यते । पीवरः । अन्ये तु पीव स्थौल्ये अस्मात् ष्वरप्रत्यये यवयोर्वसेइकारेचेतिवलोपे पीवर इत्याहुः । 'पीवर :कच्छपे स्थूले' इति मेदिनी ॥

तत्त्वदीपिका—धीवरादय इति । शर्वरीरात्रीः । निषिद्वरस्तु जम्बालः निषद्वरी रात्रिः ।

**मू०— इणादेर्नक् ॥ इनः । जिनः । दीनः । कृष्णः ।**

सुबोधिनी—इणादेर्नक् । नक्प्रत्ययमाह । कित्त्वान्न गुणः । इण् गतौ इनः । 'इनः पत्यौ नृपार्कयोरि'ति मेदिनी । जि जये । जिनः । 'जिनोऽर्हति च बुद्धे च पुंसिस्यात्त्रिषु जित्वरे' इति मेदिनी । दीङ् क्षये । दीनः । 'दीना मूषिकयोषायां दुर्गते कातरेन्यवदि'ति विश्वः कृष् विलेखने । कृष्णः । 'कृष्णः सत्यवतीपुत्रे केशवे वायसेर्जुने । कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति । वर्णके वाच्यलिंगः स्यात् क्लीबे मरिचलोहयोरि'ति मेदिनी ॥

तत्त्वदीपिका–इणादेरिति । इनः सूर्यनृपपत्यौ ।

**मू०–बंधेर्ब्रधबुधौच ॥ ब्रध्नः । बुध्नः ।**

सुबोधिनी–बंधेर्ब्रधबुधौच । बंध बंधने । अस्मात् नक् स्यात् । धातोः स्थाने एतावादेशौ च स्याताम् । ब्रध्नः बुध्नः । 'भास्करााहस्करब्रध्नप्रभाकरदिवाकरा' इत्यमरः । 'बुध्नो नामूलरुद्रयोरि'ति मेदिनी ॥

**मू०–धादेर्नः ॥ धानाः । पर्णम् । वस्नः । श्रोणः ।**

सुबोधिनी–धादेर्नः ॥ नप्रत्ययमाह । डुधाञ् धारणादौ । 'धाना भ्रष्टयवे स्त्रियाम्' इत्यमरः। 'धाना भ्रष्टयवे शक्तौ धान्याकेऽभिनवोद्भिदी'ति विश्वः । पॄ पालनादौ । पर्णं । 'पर्णं पत्रे किंशुके ने'ति मेदिनी । वस निवासे । वस्नः । 'वस्नो मूल्ये वेतने च'ति विश्वः । 'वस्नस्त्ववक्रये पुंसि वेतने स्यान्नपुंसक मि'ति मेदिनी । अविक्रये मूल्ये इत्यर्थः । श्रु श्रवणे श्रोणः । पंगुः ॥

तत्त्वदीपिका–धादेरिति । 'धानाभ्रष्टयवाः स्त्रियः' । 'मूल्यवेतनयोर्वस्नः' । श्रोणःपंगुः ।

**मू०–लक्षेर्नस्याण्मटौ ॥ लक्षणः । लक्ष्मणः ।**

सुबोधिनी–लक्षेर्नस्याण्मटौ । लक्ष दर्शनांकनयोः । अस्माच्चुरादिण्यंतात् नःस्यात्प्रत्ययस्याड्मटागमौ च स्याताम् । लक्षणं लक्ष्मणः । 'लक्षणा हंसयोषायां सारसस्य च लक्ष्मणे'ति। 'लक्षणे नाम्नि चिह्ने स्यात् सौमित्रिरपि लक्ष्मणः । लक्ष्मणा चौषधावपि रामभ्रातरि लक्ष्मण' इति विश्वः । 'लक्षणं नाम्नि चिह्ने स्यात् सारस्यां लक्षणा क्वचित् । लक्ष्मणा त्वौषधीभेदे सारस्यामपि योषिति । रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवदि'ति मेदिनी ॥

तत्त्वदीपिका–'लक्षणं लक्ष्मणं नाम्नि चिह्ने च द्वयं । रामभ्रातरि च । लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा' ।

**मू०–रास्नादयः ॥ रासृ शब्दे । रास्ना । सास्ना । स्थूणा । वीणा । कृती कृत्स्नम् । तिज तीक्ष्णम् । श्लिषेः श्लक्ष्णम् ।**

सुबोधिनी–रास्नादयः । नक्प्रत्ययांता निपात्यंते । रस आस्वादने उपधाया दीर्घो निपातनात् । रास्ना । 'रास्ना तु स्याद्भुजंगाख्यामेलापर्ण्यामपि स्त्रिया मि'ति मेदिनी । षस् स्वप्ने । उपधाया दीर्घो निपातनात् । सास्ना । 'सास्ना तु गलकंबल' इति मेदिनी । ष्ठा गतिनिवृत्तौ ऊत्वं णत्वं च निपात्यते । स्थूणा । 'स्थूणा स्यात् सूर्म्यां स्तंभे गृहस्य च'ति मेदिनी। सूर्मी लोहप्रतिमा । वी गत्यादिषु णत्वं निपातनात् । वीणा । 'वीणा विद्युति वल्लक्या मि'ति मेदिनी । कृती छेदने । वक्ष्यमाणेभ्यः क्स्नप्रत्ययो निपातनात् । कृत्स्नं । तिज निशाने । धातोर्दीर्घो निपातनात् । चोःकुरिति गः खसेचपाझलानामिति कः । षत्वणत्वे । तीक्ष्णं । 'तीक्ष्णं सामुद्रलवणे विषलोहाजिमुष्कके । क्लीबं पत्राग्रके पुंसि तिग्मात्मत्यागिनोस्त्रिष्वि' ति मेदिनी । श्लिष आलिंगने । श्लिषेरिकारस्यात्वं निपातनात् । षढोरिति कत्वं श्लक्ष्णम् ॥

तत्त्वदीपिका–रास्नादयः । रास्ना गंधद्रव्यं । सास्नागोगलकम्बलः । स्थूणा गृहस्तंभः ।

**मू०– मनादेर्य्युः ॥ मन्युः । दस्युः । जन्युः ।**

सुबोधिनी—मनादेर्युः। युप्रत्ययमाह। मन ज्ञाने। निपातनान्न युवोरित्यनादेशः। मन्युः। 'मन्युर्दैन्ये क्रतौ क्रुधि'। दसु उपक्षये। दस्युः। 'दस्युश्चौरे रिपौ पुंसी' ति मेदिनी। जनी प्रादुर्भावे। जन्युः। 'अथ जन्युः स्यात्प्राण्यग्निधातृष्वि' ति मेदिनी॥

तत्त्वदीपिका—मनादेरिति। 'मन्युर्दैन्ये क्रतौ क्रुधि।' दस्युश्चोरः। जन्युर्देही।

**मू०— मृङस्त्युक्॥ मृत्युः।**

सुबोधिनी—मृङस्त्युक्। त्युक्प्रत्ययमाह। कित्त्वान्न गुणः। मृङ् प्राणत्यागे मृत्युः। 'मृत्युर्ना मरणे यमे' इति मेदिनी॥

**मू०— सर्तेरय्वयू॥ सरयुः। सरयूः।**

सुबोधिनी—सर्त्तेरय्वयू। अयुअयूप्रत्ययावाह। सृ गतौ सरयुः सरयूः नदी॥

**मू०— पादेःपः॥ पापम्।**

सुबोधिनी—पादेःपः। पप्रत्ययमाह। पा रक्षणे। पाति रक्षति धर्मादात्मानमिति पापं॥

**मू०— न्यादेःकित्॥ नीपः। सूपः। कूङ् शब्दे कूपः।**

सुबोधिनी—न्यादेःकित्। पक्प्रत्ययमाह। णीञ् प्रापणे। नीपः। 'नीपः कदंबबंधूकनीलाशोकद्रुमेपि चे'ति मेदिनी। षुञ् अभिषवे। बाहुलकाद्दीर्घः सूपः।'सूपोव्यञ्जनसूदयो रि'ति मेदिनी। कुशब्दे बाहुलकाद्दीर्घः। कुवन्ति मंडूका अस्मिन्निति कूपः।

**मू०—शिल्पादयः॥ शील शिल्पम्। शसु शष्पम्। बाधृ बाष्पम्। रु रूपम्। शु शूर्पम्।**

सुबोधिनी—शिल्पादयः। पक्प्रत्ययांता निपात्यंते। शील समाधौ। ह्रस्वोनिपातनात्। शिल्पं। कौशलम्। शसु हिंसायाम् निपातनात्षत्वं। शष्पः। 'शष्पं बालतृणेपि च पुंसि स्यात् प्रतिभाहीने' इति मेदिनी। 'शष्पं बालतृणं घास' इत्यमरः। बाधृ विलोडने। धस्य षत्वं निपातनात् बाष्पः। 'बाष्पो नेत्रजलोष्मणो रि'ति विश्वः। 'बाष्पमूष्माणि चाश्रुणी'ति च। रुशब्दे। दीर्घत्वं निपातनात्। रूपं। 'रूपं स्वभावे सौंदर्ये' इति विश्वः। शॄ हिंसायां निपातनादुर्। य्वोर्विहसे इति दीर्घः। शूर्पं। 'प्रस्फोटनंशूर्पमस्त्री' त्यमरः॥

तत्त्वदीपिका—शिल्पादयइति। शिल्पंकौशलं। शष्पंबालतृणं। प्रतिभाक्षयश्च। बाष्पमिति। 'अस्त्री नेत्रजलोष्मणोः।' 'रूपं स्वभावे सौंदर्ये'।

**मू०—स्तनादेर्ण्यन्तादित्नुः॥ स्तनयित्नुः। गदयित्नुः।**

सुबोधिनी—स्तनादेर्ण्यंतादित्नुः। इत्नुप्रत्ययमाह। स्तन गद देवशब्दे। चुरादी ण्यंतौ। गुणे कृते अयादेशः। स्तनयित्नुः 'स्तनयित्नुः। पुमान् वारिधरेपि स्तानितेपि चे'ति मेदिनी। 'स्तनयित्नुः पयोवाहे तद्वृत्तौ मृगरोगयो रि'ति विश्वः। गदयित्नुः 'गदयित्नुः पुमान् कामे जल्पाके कार्मुके पिचे'ति विश्वः॥

तत्त्वदीपिका—स्तनादेरिति। स्तनयित्नुः। णेरलोपः।

**मू०—दाभाभ्यां नुः॥ दानुः। भानुः।**

सुबोधिनी–दाभाभ्यांनुः । नुप्रत्ययमाह । डुदाञ् दाने । दानुः । 'दानुर्दातरि विक्रांते' इति मेदिनी । भा दीप्तौ । भानुः । 'भानूरश्मिदिवाकरावि'त्यमरः ॥

**मू०–धेटइच्च ॥ धेनुः ।**

सुबोधिनी–धेटइच्च । नुः स्यात् । धातोरित्वं च । धेट् पाने । संध्यक्षराणामित्यात्वे कृते इत्वं ततो गुणः । धेनुः । 'धेनुः स्यान्नवसूतिके'त्यमरः ॥

**मू०–सुवःकिच्च ॥ सूनुः ।**

सुबोधिनी–सुवःकिच्च । नुः स्यात् । कित्त्वान्न गुणः । षूङ् प्राणिप्रसवे । सूनुः 'सूनुः पुत्रेऽनुजे रवावि'ति विश्वः ॥

तत्त्वदीपिका–सूनुरिति । पुत्रेऽनुजेरवौ ।

**मू०–अजिवृभ्यांणुः ॥ वेणुः । वर्णुः ।**

सुबोधिनी–अजिवृभ्यांणुः । णुप्रत्ययमाह । अज गतौ । अजेर्वीति वीः । वेणुः । 'वेणुर्नृपांतरे वंशे' इति विश्वः । वृङ् संभक्तौ । वर्णुः । नददेशभेदयोः ॥

**मू०–स्थारीभ्यांणुः ॥ स्थाणुः । रेणुः ।**

सुबोधिनी–स्थारीभ्यांणुः । ष्ठा गतिनिवृत्तौ । स्थाणुः । 'स्थाणुः कीले हरे पुमान् । अस्त्री ध्रुवे' इति मेदिनी । 'स्थाणुः कीलि स्थिरे' इति विश्वः । री गतिरेषणयोः । रेणुः । 'रेणुः स्त्रीपुंसयोर्धूलौ पुँल्लिंगः पर्पटे पुनरि'ति मेदिनी । 'रेणुर्द्वयोः स्त्रियां धूलिरि'त्यमरः ॥

तत्त्वदीपिका–स्थाणुरिति । कीलेस्थिरेहरे । रेणुर्द्वयोः स्त्रियांधूलिः ।

**मू०–विषेःकित् ॥ विष्णुः ।**

सुबोधिनी–विषेः कित् । णुप्रत्ययमाह । कित्त्वान्न गुणः । विषॢ व्याप्तौ । 'विष्णुर्नारायणः कृष्ण' इत्यमरः ॥

**मू०–कादेःकः ॥ कर्कः । राका । अर्कः । कल्कः । इण् एकः । भेकः । काकः । पाकः । निहाकाः ।**

सुबोधिनी–कादेःकः । कप्रत्ययमाह । बाहुलकान्न कस्येत्संज्ञा । डुकृञ् करणे । कर्कः कर्के तनौ वन्हौ शुक्लाश्वे दर्पणे घटे' इति विश्वः । रा दाने । राका । 'राका नद्यंतरे कच्छौ नवजातरजःस्त्रियाम् । संपूर्णेन्दावि'ति मेदिनी । 'राका तु सरिदंतरे । राका नवरजःकन्या पूर्णेन्दुःपूर्णिमापिच्चे'ति विश्वः । अर्च पूजायां । चोःकुरिति कः । अर्कः । 'अर्कोऽर्कपर्णे स्फटिके रवौ ताम्रे बृहस्पतावि'ति विश्वः । कल गतौ । कल्कः । 'कल्कोऽस्त्री घनतैलादिशेषे दंभेविभीतके । विट्किट्टयोश्च पापे च त्रिषु पापाशये पुनरि'ति मेदिनी । 'कल्कः पापाशये पापे दंभे विट्किट्टयोरपी'ति विश्वः । इण् गतौ । एकः । 'एकः संख्यांतरे श्रेष्ठे केवलेतरयोस्त्रिष्वि'ति मेदिनी । 'एके मुख्यान्यकेवलाः' इति विश्वः । ञिभी भये । भेकः । 'भेको मंडूकमेघयोरि'ति विश्वः । कै शब्दे काकः । 'काकः स्याद्वायसे वृक्षप्रभेदे पीठसर्पिणि । शिरोऽवक्षालने मानप्रभेदद्वीपभेदयोः । काका स्यात्काकनासायां काकोलीकाकजं-

घयोः । रक्तिकायां मलय्वां च काकमाच्यां च योषिति । काकं सुरतबंधे स्यात् काकाना मपि संहतावि'ति मेदिनी । मलयूः काकोदुंबरिका । पा पाने पाकः । 'पाकः परिणतौ शिशौ । केशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेपि चे'ति मेदिनी । ओहाक् त्यागे । निहाका । 'निहाका गोधिका समे' इत्यमरः ॥

तत्त्वदीपिका–कादेरिति । कर्कोधवलघोटकः । राकापूर्णिमातिथिः । कल्कः पापाशये पापे दंभे विट्-किट्टयोरपि । एकेमुख्यान्यकेवलाः । भेको मंडूकमेघयोः । पाकः शिशुः । निहाकागोधिकासमे ।

**मू०–नौसदेर्डित् ॥ निष्कः ।**

सुबोधिनी–नौसदेर्डित् । कड् प्रत्ययमाह । डित्त्वाट्टिलोपः । षद्लृ विशरणादौ 'निष्को-ऽस्त्री हेम्नि तत्पले' इति विश्वः ॥

तत्त्वदीपिका–निष्कोस्त्री हेम्नि तत्पले ।

**मू०–शकेरुनउन्तउन्तिउनिप्रत्ययाः ॥ शकुनः । शकुन्तः । शकुन्तिः । शकुनिः ।**

सुबोधिनी–शकेः उनउंतउंतिउनिप्रत्ययाः । उन उंत उंति उनिप्रत्ययानाह । शक्ल शक्तौ शकुनः । शकुंतः । शकुंतिः । शकुनिः । 'शकुंतिपक्षिशकुनिशकुंतशकुनद्विजा'इत्य-मरः । 'शकुनस्तु पुमान् पक्षिमात्रपक्षिविशेषयोः । शुभशंसिनिमित्ते च शकुनंस्यान्नपुंसक-मि'ति मेदिनी । 'शकुंतः कीटभेदे स्यात् भासपक्षिविहंगयोरि'ति मेदिनी ।

**मू०–हृशाभ्यामितः ॥ हरितः । श्येतः ।**

सुबोधिनी–हृशाभ्यामितः । इतप्रत्ययमाह । हृञ् हरणे । हरितः । 'हरिता स्त्री च दूर्वायां हरिद्वर्णयुतेन्यवदि'ति मेदिनी । श्यैङ् गतौ श्येतः । 'शुक्लशुभ्रशुचिश्वेतविशदश्ये-तपांडुरा' इत्यमरः ॥

**मू०–रुहेरस्यलोवा ॥ रोहितः । लोहितम् ।**

सुबोधिनी–रुहेरस्यलोवा । अस्मादितः स्यात् रस्य वा लकारः । रुह बीजजन्मनि रोहितः । लोहितः । 'रोहितं कुंकुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहि-तकद्रुमे' इति मेदिनी । लोहितं रक्तगोशीर्षकुंकुमाजिकुचंदने । पुमान्नदांतरे भौमे वर्णे च त्रिषु तद्वता'ति मेदिनी ॥

**मू०–श्रवादेराप्यः ॥ श्रवाप्यः । स्पृहयाप्यः ।**

सुबोधिनी–श्रवादेराप्यः । आप्यप्रत्ययमाह । श्रु श्रवणे । श्रवाप्यः । श्रवाप्यो यज्ञपशुः । स्पृह ईप्सायां चुरादिरदंतः । स्पृहयाप्यः ॥

तत्त्वदीपिका–श्रवादेरिति । श्रवाप्यो यज्ञपशुः ।

**मू०–वृञएण्यः ॥ वरेण्यः ।**

सुबोधिनी–वृञएण्यः । एण्यप्रत्ययमाह । वृञ् वरणे । वरेण्यः । श्रेष्ठः ॥

**मू०–अर्तेरन्यः ॥ अरण्यम् । पृषु सवने । पृषेश्च षस्यजः । पर्जन्यः ।**

सुबोधिनी–अर्त्तेरन्यः। अन्यप्रत्ययमाह। ऋ गतौ। अरण्यम् 'अटव्यरण्यं विपिनमि'त्यमरः। पृषु सेचने षस्य जः अन्यश्च स्यात्। पर्जन्यः। 'पर्जन्यो मेघशब्देपि ध्वनदंबुदशक्रयोरि'ति मेदिनी॥

तत्त्वदीपिका–पर्जन्यइति। पर्जन्यः शक्रमेघयोः।

**मू०–वदेरान्यः॥ वदान्यः।**

सुबोधिनी–वदेरान्यः। आन्यप्रत्ययमाह। वद व्यक्तायांवाचि वदान्यः। 'वदान्यस्त्यागिवाग्मिनारि'त्यजयकोशः।

तत्त्वदीपिका–वदेरिति। वदान्यस्त्यागिवाग्मिनोः।

**मू०–अमादेरत्रः॥ अमत्रम्। नक्षत्रम्। पतत्रम्। कलत्रम्। वरत्रा।**

सुबोधिनी–अमादेरत्रः। अत्रप्रत्ययमाह। अम गत्यादौ। अमत्रं भाजनं। नक्ष गतौ। नक्षत्रं। नञः प्रकृतिभावे नक्षत्रमिति साधितं तत्तु व्युत्पत्त्यंतरं। पत्लृ पतने। पतत्रं। तनूरुहं। गड सेचने। गडेरादेश्च कः कडत्रं। डलयोरेकत्वस्मरणात् कलत्रं। 'कलत्रं श्रोणिभार्ययोरि'त्यमरः। वृञ् वरणे। वरत्रा। 'नध्री वध्री वरत्रा चे'त्यमरः। चर्ममयी रज्जुरित्यर्थः।

तत्त्वदीपिका–अमादेरिति। अमत्रं भाजनं पतत्रं तनूरुहं। वरत्रा चर्ममयी रज्जुः।

**मू०–भादेरतः॥ भरतः। पर्व पूर्तौ। पर्वतः।**

सुबोधिनी–भादेरतः। अतप्रत्ययमाह। भृञ् भरणे भरतः 'भरतः शबरे नटे। क्षेत्रे रामानुजे शास्त्रे दौष्यंतावृषभात्मजे। तंतुवाये' इति हेमचंद्रः। 'भरतो ना नाट्यशास्त्रे शबरे च मुनौ नटे। रामानुजे च दौष्यंतावि'ति मेदिनी। पर्व पूरणे। पर्वतः। 'पर्वतः पादपे पुंसि शाकमत्स्यप्रभेदयोः। देवमुन्यंतरे शैले' इति मेदिनी॥

**मू०–पृषिरञ्जिभ्यांकित्॥ पृषतः। रजतम्।**

सुबोधिनी– पृषिरंजिभ्यांकित्। अतप्रत्ययमाह। कित्त्वान्न गुणः। पृषु सेचने। पृषतः 'पृषन्मृगे पुमान् बिंदौ न द्वयोः पृषतोपि ना। अनयोश्च त्रिषु श्वेतबिंदुयुक्तेप्युभाविमावि'ति मेदिनी। रंज रागे। नोलोप इति नलोपः। रजतं। 'रजतं त्रिषु शुक्लेस्यात् क्लीबे हारे च दुर्वने' इति मेदिनी॥

तत्त्वदीपिका–पृषि। पृषतो बिंदुमृगयो.।

**मू०–शपादेरथः॥ शपथः। शमथः। दमथः। वस आवसथः। संवसथः।**

सुबोधिनी–शपादेरथः। अथप्रत्ययमाह। शप आक्रोशे। शपथः। शमु दमु उपशमे। शमथः। दमथः। 'शमथः शांतिमंत्रिणोरि'ति मेदिनी। 'दमथस्तु पुमान् दंडे दमे च परिकीर्तित' इति मेदिनी। 'शमथस्तु शमः शांतिर्दांतिस्तु दमथो दम' इत्यमरः। वस। निवासे। आवसथो गृहं। संवसथो ग्रामः॥

तत्त्वदीपिका–शपादेरिति। शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः।

**मू०–रभादेरसः ॥ रभसः ।**

सुबोधिनी–रभादेरसः । असप्रत्ययमाह । रभ राभस्ये । रभसः । 'रभसो वेगहर्षयोः' ।

**मू०– वेञआत्वाभावस्तुट्च ॥ वेतसः ।**

सुबोधिनी–वेञआत्वाभावस्तुट्च । वेञ् तंतुसंताने । अस्मात्सप्रत्यये परे आत्वाभाव-प्रत्ययस्य तुडागमश्च स्यात् । वेतसः ॥

**मू०– दिवेः कित् ॥ दिवु दिवसः ।**

सुबोधिनी–दिवेः कित् । कसप्रत्ययमाह । कित्त्वान्नगुणः । दिवु क्रीडादौ । दिवसः । 'वा तु क्लीबे दिवसवासरावि'त्यमरः ॥

**मू०– कादेरभः ॥ कॄ करभः । शॄ शरभः । शल गतौ । शलभः । कल गतौ । कलभः । गर्द कुत्सिते शब्दे । गर्दभः ।**

सुबोधिनी–कादेरभः । अभप्रत्ययमाह । कॄ विक्षेपे । करभः । 'करभो मणिबंधादिक-निष्ठांतोष्ट्रतत्सुते इति' मेदिनी । 'मणिबंधादाकनिष्ठं करस्य करभो बहिरि'त्यमरः । शॄ हिंसायां शरभः । 'शरभस्तु पशौ सिंहे करभे वानरे सिध्यती'ति मेदिनी । शल गतौ । शलभः । 'समौ पतंगशलभावि'त्यमरः । कल गतौ । कलभः । 'कलभः करिपोतके' । गर्द शब्दे । गर्दभः । 'गर्दभः । श्वेतकुमुदे गदे भोगंधभिद्यपि । रासभे गर्दभांडे च क्षुद्रजंतुरो-गप्रभेदयोरि'ति मेदिनी ॥

**मू०–ऋषिवृषिभ्यांकित् ॥ ऋषभः । वृषभः ।**

सुबोधिनी–ऋषिवृषिभ्यांकित् । कभप्रत्ययमाह । कित्त्वान्नगुणः । ऋषी गतौ ऋषभः 'ऋषभ स्यादादिजिने वृषभे भेषजे स्वरे । कर्णरंध्रे कोलपुच्छे श्रेष्ठे चाप्युत्तरेस्थितः । ऋषभी शूक-शिंब्यां स्यात् पुरुषाकारयोषिति । विधवायां शिरालायामि'ति हेमचंद्रः । 'ऋषभस्त्वौषधांतरे । स्वरवृषभयोः कर्णरंध्रे गर्दभपुच्छयोः । उत्तरस्थः स्मृतः श्रेष्ठे स्त्रीनराकारयोषिति । शूक-शिंब्यां शिरालायां विधवायां क्वचिन्मते'ति मेदिनी । वृषु सेचने । वृषभः । 'वृषभः श्रेष्ठवृ-षयोः' ॥

**मू०–रासवल्लिभ्यांच ॥ रासृ शब्दे । रासभः । वल वल्ल संवरणे । वल्लभः ।**

सुबोधिनी–रासवल्लिभ्यांच । अभः स्यात् । रासृ शब्दे । रासभः । वल्ल संवरणे । वल्लभः । 'वल्लभो दयितेऽध्यक्षे सलक्षणतुरंगमे' इति मेदिनी ॥

**मू०–विशादेरन्तः ॥ वेशन्तः । वसन्तः । जयन्तः ।**

सुबोधिनी–विशादेरंतः । अंतप्रत्ययमाह । विश प्रवेशने । वेशंतः । 'वेशंतः पल्वलं चाल्पसर' इत्यमरः । वस निवासे । वसंतः ऋतुः । जि जये । जयंतः । 'जयंतः पाकशास-निरि'त्यमरः ॥

तत्त्वदीपिका–विशादेरिति । वेशन्तःपल्वलं । जयन्तः शक्रपुत्रः ।

**मू०–हन्तेर्हिंमुट्च ॥ हेमन्तः ।**

सुबोधिनी–हंतेर्हिमुट्च । हन हिंसागत्योः अस्यहिरादेशोंतप्रत्ययश्च प्रत्ययस्य मुडागश्च स्यात् । हेमंतः बाहुलकादन्येभ्योप्यंतः । अर्ह पूजायां । अर्हतः 'अर्हतः क्षपणको जिन' इति विक्रमादित्यकोशः ॥

**मू०–अर्त्यादेररः ॥ अररम् । भ्रमरः । चमरः । देवरः । वासृ शब्दे । वासरः ।**

सुबोधिनी–अर्त्यादेररः । अरप्रत्ययमाह । ऋ गतौ । अररम् । 'अररं छदकपाटयो-रि'ति मेदिनी । 'कपाटमररं तुल्ये' इत्यमरः । भ्रमुअनवस्थाने । भ्रमरः । 'भ्रमरः कामुके भृंगे' इति मेदिनी । चमु अदने । चमरः । 'चमरं चामरे स्त्री तु मंजरीमृगभेदयोरि'ति मेदिनी । दिवु क्रीडादौ । ण्यंतः । देवयतीति देवरः पत्युःकनिष्ठभ्राता । वस निवासे । ण्यंतः । वासयतीति वासरो दिवसः ॥

तत्वदीपिका–अत्यदेरिति । अररंकपाटम् ।

**मू०–कुवःकित् ॥ कुररः ।**

सुबोधिनी–कुवःकित् । करप्रत्ययमाह । कित्त्वान्न गुणः । कु शब्दे । कुररः । 'उत्क्रो-शकुररौ समावि'त्यमरः ॥

**मू०–अंग्यादेरारः ॥ अंगारः । मन्दारः ।**

सुबोधिनी–अंग्यादेरारः । आरप्रत्ययमाह । अगि गतौ । अंगारः । 'अंगारमुल्मुके न स्त्री पुँल्लिंगस्तु महीसुते' इति मेदिनी । मदि स्तुत्यादौ । मंदारः । बाहुलकादारुप्रत्ययोपि मंदारुः 'पारिभद्रे तु मंदारुर्मंदारः पारिजातके ' इति शब्दार्णवः । 'मंदारुः स्यात्सुरद्रुमे पारिभद्रेऽर्कपर्णे चे'ति विश्वः ॥

**मू०–गडेःकड्च ॥ गडआसेचने । कडारः ।**

सुबोधिनी–गडेःकड्च । गडि वदनैकदेशे गड सेचने वा । अस्य कडादेशः आरप्रत्य-यश्च स्यात् । कडारः 'कडारः कपिलः पिंग ' इत्यमरः । 'कडारः कपिले दासे ' इति मेदिनी ॥

**मू०–शृंगारादयः ॥ शृंगारः । भृंगारः । मृजूष् मार्जारः । कमु कुमारः । तुषारः । कासारः ।**

सुबोधिनी–शृंगारादयः । आरप्रत्ययांता निपात्यंते । शृ हिंसायां । नुम् गुक् ह्रस्वश्च निपात्यते । शृंगारः । 'शृंगारः सुरते नाटचरसे च गजमण्डने । नपुंसकं लवंगेपि नाग-संभवचूर्णयोरि'ति मेदिनी । भृञ् भरणे । नुम् गुक् ह्रस्वश्च निपात्यते । भृंगारः । 'भृंगारः कनकालुका । भृंगारी झिल्लिकायां स्यात् कनकालौ पुनः पुमान्' इति च । मृजूष् शुद्धौ । मृजेर्वृद्धिरिति वृद्धिः मार्जारः । 'ओतुर्बिडालो मार्जार ' इत्यमरः ॥ 'मार्जार ओतौ खट्वांगे' इति मेदिनी' । कमु कांतौ उपधाया उत्वं गुणाभावश्च निपातनात् । कुमारः । 'कुमारः

स्यात् शके स्कंदे युवराजेऽश्ववारके । बालके वरुणाद्रौ ना नद्वयोर्जात्यकांचने । कुमारी शैलतनयावनमाल्योर्नदीभिदि । सहाऽपराजिताकन्याजंबुद्वीपेषु च स्त्रिया'मि'ति मेदिनी । तुष् तुष्टौ । तुषारः । ' तुषारस्तुहिनं हिममि'त्यमरः । कासृ शब्दकुत्सायां । कासारः । ' कासारः सरसी सर ' इत्यमरः ॥

तत्त्वदीपिका–भृंगारइति । भृंगारः कनकालुका ।

**मू०–सर्तेरपःषुक्च ॥ सर्षपः ।**

सुबोधिनी–सर्त्तेरपःषुक्च । सृ गतौ अस्मादपप्रत्ययः स्यात् धातोः षुगागमश्च । अप प्रत्ययमाह । सर्षपः ॥

**मू०–विटपादयः ॥ विट शब्दे । विटपः । विष्टपम् । कुणपम् । वलसंवरणे । उलपम् ।**

सुबोधिनी–विटपादयः । कपप्रत्ययांता निपात्यंते ।कित्त्वान्न गुणः। विट् शब्दे । विटपः 'विटपो न स्त्रियां स्तंबे शाखा विस्तारपल्लवे । विटाधिपे ने'ति मेदिनी । विशप्रवेशने । विशतेः प्रत्ययस्य तुडागमो निपात्यते । छशषेति षत्वं ष्टुत्वं । विष्टपं । 'विष्टपं भुवनं जगदि'त्यमरः' । कण शब्दे । वस्योत्वं निपातनात् । कुणपं' कुणपः पूतिगंधे शवेऽपि चे'ति मेदिनी। 'कुणपः शवमस्त्रिया'मि'त्यमरः । वल संवरणे । वस्योत्वं निपातनात् । उलपम् । ' उलपो न स्त्री गुल्मिन्यामुलपो ना तृणांतरे' इति मेदिनी ॥

तत्त्वदीपिका–उलप इति । कोमलं तृणम् ।

**मू०–वृतादेस्तिकः ॥ वर्तिका ।**

सुबोधिनी–वृतादेस्तिकः । तिकप्रत्ययमाह । वृतु वर्तने । वार्तिका ॥

**मू०–कृतःकित् ॥ कृत्तिका ।**

सुबोधिनी–कृतःकित् । कृती छेदने इत्यादिभ्यः तिकक् स्यात् कित्त्वान्न गुणः। कृत्तिका । भिदिर् विदारणे । भित्तिका । भित्तिः । लतु सौत्रो धातुः । लत्तिका गोधा ॥

**मू०–इष्यशिभ्यान्तकः ॥ इष्टका । अष्टका ।**

सुबोधिनी–इष्यशिभ्यांतकः । तकप्रत्ययमाह । इषु इच्छायां । ष्टुत्वं इष्टका । अशूङ् व्याप्तौ छशषेति षत्वम् । अष्टका ॥

**मू०–वीपतिभ्यांतनः ॥ वेतनम् । पत्तनम् ।**

सुबोधिनी–वीपतिभ्यांतनः। तनप्रत्ययमाह । वी गत्यादौ । वेतनम् । पत्लृपतने पत्तनम् 'पत्तनं पुटभेदनमि'त्यमरः ॥

**मू०–अर्त्यादेर्भः ॥ अर्भः । दृभये । दर्भः । गर्भः ।**

सुबोधिनी–अर्त्यादेर्भः । भप्रत्ययमाह । ऋ गतौ । इयर्तीति अर्भः शिशुः । कप्रत्यये अर्भकः । दृ विदारणे । दर्भः । गॄ निगरणे । गर्भः । 'गर्भो भ्रूणेऽर्भके कुक्षौ संधौ पनसकंटके' इति मेदिनी ॥

**मू०–इणः कित् ॥ इभः ।**

सुबोधिनी–इणःकित् । कभः स्यात् । कित्त्वान्न गुणः । इण् गतौ । इभः । 'इभः स्तंबेरमः पद्मी'त्यमरः ॥

**मू०–असिसंजिभ्यांक्थिः ॥ अस्थि । सक्थि ।**

सुबोधिनी–असिसंजिभ्यांक्थिः । क्थिप्रत्ययमाह । कित्त्वान्न गुणः । असुक्षेपणे । अस्थि । 'कीकसं कुल्यमस्थि चे'त्यमरः । षंज् संगे । चोः कुरिति जस्य गः । खसे चपा इति कः । नलोपइतिनलोपः । सक्थि । 'सक्थि क्लीबे पुमानूरुरि'त्यमरः ॥

**मू०–शुषादेःक्सिः ॥ शुक्षिः । कुष निष्कर्षे । कुक्षिः । अशू आक्षि ।**

सुबोधिनी–शुषादेःक्सिः । क्सिप्रत्ययमाह । कित्त्वान्न गुणः । शुष् शोषणे । षढोरिति कः । षत्वं शुक्षिः वातः । कुष दाहे । कुक्षिः । अशूङ् व्याप्तौ । छ्वशेति षत्वे कत्वं च । आक्षि नयनम् ॥

तत्त्वदीपिका–शुक्षिरिति । वातः शुक्षिः ।

**मू०–इषःक्सुः ॥ इक्षुः ।**

सुबोधिनी–इषःक्सुः । क्सुप्रत्ययमाह । कित्त्वान्न गुणः । इषु इच्छायां । कत्वे षत्वे इक्षुः 'रसालइक्षुरि'त्यमरः ॥

**मू०–अवितृस्तृतंत्रिभ्यईः ॥ अवीः । तरीः । स्तरीर्धूमः । तंत्रीः ।**

सुबोधिनी–अवितृस्तृतंत्रिभ्यईः । ईप्रत्ययमाह । अव रक्षणादौ । अवीः । 'अवीर्नारी रजस्वला' । तॄ प्लवनतरणयोः । तरीः । 'स्त्रियां नौस्तरणिस्तरिरि'त्यमरः । स्तृञ् आच्छादने स्तरीः धूमः । तत्रि कुटुंबधारणे । चुरादिः । तंत्रयतीति णेरिति णिलोपः । तंत्रीर्वीणा ॥

तत्त्वदीपिका–अवि । अवीरिति । अवतिगर्भमवीः । अवीस्त्रीगर्भिणी विदुः । तरीनौः । स्तरीः शयनं धूमइतिच ।

**मू०–लक्षेरीमुट्च ॥ लक्ष्मीः ॥ इति तृतीयः पादः ॥**

सुबोधिनी–लक्षेरीमुट्च । लक्ष दर्शनांकनयोः । चुरादिः । अस्मादीप्रत्ययः स्यात् प्रत्ययस्य मुडागमश्च । णेरिति णिलोपः । लक्ष्मीः । 'लक्ष्मीःसंपत्तिशोभयोः ॥ ऋद्ध्यौषधौ च पद्मायामि'ति मेदिनी । दीर्घादपि कृदिकारादिति पाक्षिक ईप् कैश्चिदिष्यते अत एव वातप्रमी श्री लक्ष्मीत्यादिशब्दाः पक्षे ईबंता अपि । 'आशीराश्यहिदंष्ट्रायां लक्ष्मीर्लक्ष्मी हरिप्रिया' इति द्विरूपकोशः ॥ इति उणादौ तृतीयः पादः संपूर्णतामगमत् ॥ ३ ॥

**मू०– वातप्रम्यादयः ॥ वातप्रमीः । यांत्यनेनेति ययीः । पारक्षणे । पपीः ।**

सुबोधिनी–वातप्रम्यादयः । कीप्रत्ययांता निपात्यंते । कस्येत्संज्ञा । माङ् माने आतोनपीत्यालोपः । वातं प्रमिमीते इति वातप्रमीः । 'वातप्रमीर्वातमृग' इत्यमरः । अयं स्त्रीपुंसयोः ।

या प्रापणे । ययीरश्वः । पा रक्षणे । पपीः । निपातनादुभयत्र द्वित्वं । 'पपीः स्यात्सोमसूर्य्ययोरि'ति विश्वः ॥

तत्त्वदीपिका–वातप्रम्यादयइति । ययीरश्वः । पपीःस्यात्सोमसूर्ययोः ।

**मू०– रत्न्यादयः ॥ ऋ रत्निः । अंजु अञ्जलिः । मदी मत्स्यः । अत् अतिथिः । अगि अंगुलिः । कु कवसः । कौतेः । कवचः । यु यवासः । कृश् कृशानुः ।**

सुबोधिनी–रत्न्यादयः। निपात्यंते । ऋ अञ्जू मदी अत् अगि कु यु कृशिभ्योऽष्टभ्यः क्त्निः अलि स्य इथि उलि अच आस आनुक् प्रत्यया यथासंख्यमष्टौ भवंति । ऋ गतौ क्त्निः कित्त्वान्नगुणः। रत्वं रत्निः। 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृतांगुलिः'। अरत्निरत्र नञ्समासः। प्रसृतांगुलिर्यो हस्तः सोऽरत्निरित्यर्थः। अंजू व्यक्त्यादौ अलिः। अंजलिः। 'अंजलिस्तु पुमान् हस्तसंपुटे कुडवेपि चे'ति मेदिनी। मदी हर्षे स्यः मत्स्यः। 'मत्स्यो मीनेऽथ पुंभूम्नि देशे' इति मेदिनी। अत सातत्यगमने। इथिः अतिथिः। 'अतिथिः कुशपुत्रे स्यात् पुमानागंतुके त्रिष्वि'ति मेदिनी। अगि गतौ उलिः अंगुलिः। 'अंगुलिः करशाखायां कर्णिकायां गजस्य चे'ति हैमः। कु शब्दे। अचः कवचः। 'कवचो गर्दभांडे च सन्नाहे पर्पटेपि चे'ति मेदिनी। यु मिश्रणे आसः यवासः। 'यासो यवासो दुःस्पर्श' इत्यमरः। कृश् तनूकरणे। आनुक् कृशानुः। 'कृशानुः पावकोऽनलइत्यमरः' ॥

तत्त्वदीपिका–रत्न्यादयइति। ऋइत्यस्यरत्निरिति। बद्धमुष्टिकरो रत्निः सोऽरत्निःप्रसृतांगुलिः।

**मू०– शृः करः ॥ शर्करा ।**

सुबोधिनी–शृःकरः। करप्रत्ययमाह। ककारस्य नेत्त्वं बाहुलकात्। शॄ हिंसायां। शर्करा। 'शर्करा खंडविकृतौ उपलाकर्परांशयोः॥ शर्करान्वितदेशे च रुग्भेदे सकलेपि चे'ति मेदिनी ॥

**मू०–पुषःकित् ॥ पुष्करः ।**

सुबोधिनी–पुषःकित्। करक् प्रत्ययमाह। पुष पुष्टौ। पुष्करं। 'पुष्करं खेंबुपद्मयोः। तुर्य्यवक्रे खड्गफले हस्तिहस्ताग्रकांडयोः॥कुष्ठोषधौ द्वीपतीर्थभेदयोश्चनपुंसकम्॥ उरंगरागविहगनृत्यभेदेषु चांबुदे' इति मेदिनी ॥

**मू०– गमेरिनिर्भविष्यति ॥ गमिष्यतीति गमी ।**

सुबोधिनी–गमेरिनिर्भविष्यति। इकार उच्चारणार्थः। इनुप्रत्ययमाह। गम्लृगतौ। इनामिति दीर्घः। गमी। आङ्पूर्वाद् गमेरिनिप्रत्ययस्तु णित् णित्त्वाद्वृद्धिः। आगमिष्यतीति आगामी। भूसत्तायामस्मादपि इनिः सच णित्स्यात्। भविष्यतीतिभावी ॥

**मू०– परमेस्थःकित् ॥ परमेष्ठी ।**

सुबोधिनी–परमेस्थःकित्। परमशब्दे उपपदे तिष्ठतेरिनिः कित् स्यात्। कित्वादातोलोपः। परमेष्ठी। 'परमेष्ठी पितामहः' इत्यमरः। सप्तम्या अलुक् ॥

**मू०—मन्थइनिःकित् ॥ मन्था । मन्थानौ ।**

सुबोधिनी—मंथइनिःकित् । मंथ विलोडने । अस्मादिनिः कित् । नोलोप इति नलोपः। इतोत्संचसु इत्यत्वम् आसौ इति टेरात्वे थोनुट् मंथाः । 'मंथा मंथनदंडे च वज्रे चापेपि च स्मृतः' ॥

**मू०—पतेस्थश्च ॥ पंथाः । पंथानौ ।**

सुबोधिनी—पतेस्थश्च । पत्ऌ गतौ । अस्मादिनिः स्यात् तकारस्य थश्च । पंथाः । पथि गतावित्यस्मात्पचाद्यप्रत्यये आकारांतोप्यस्ति । 'वाटः पथश्च मार्गश्चे'ति सुभूतिचंद्रः। ऋभवो देवाः क्षपंत्यऽस्मिन्निति विग्रहे बाहुलकात् डप्रत्यये ऋभुक्षः । 'ऋभुक्षः स्वर्गवज्रयोरि'ति विश्वः । ततोमत्वर्थीयोनिः । ऋभुक्षिन्निति नांतं प्रातिपदिकम् अत्वे आत्वे च ऋभुक्षा इंद्रः॥

**मू०—बलाकादयः ॥ बलाका । पताका । खज मन्थे । खजाकः । पिनाकः । तड आघाते । तडाकः ।**

सुबोधिनी—बलाकादयः । आकप्रत्ययांता निपात्यंते । बल प्राणने । बलाका । 'बलाका बकपंक्तिः स्याद्बलाका बिसकण्ठिका । बलाका कामुकी प्रोक्ता बलाकश्च बको मतः' इति विश्वः । पत्ऌ पतने । पताका । 'पताका वैजयंत्यां च सौभाग्येऽङ्के ध्वजेपि चे'ति विश्वः । 'पताका वैजयंत्यां च सौभाग्ये नाटकांगयो'रिति मेदिनी । खज मंथे खजाकः पक्षी । पा रक्षणे । पातेरित्वं नुम् च निपात्यते । पिनाकः । 'क्लीबपुंसोः पिनाकः स्याच्छूलशंकरधन्वनो'रि'त्यमरः । 'पिनाकोस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोरि'ति मेदिनी । पिष्ऌ संचूर्णने । षस्य णत्वं धातोर्यगागमश्च निपात्यते पिण्याकः । 'पिण्याको ऽस्त्री तिलकल्के हिंगुबाह्लीकसिह्लके' इति मेदिनी । तड आघाते । तडाकः ॥

तत्त्वदीपिका—पिनाकइति । क्लीबपुंसोः पिनाकःस्याच्छूलशंकरधन्वनोः ।

**मू०— दूषेरीकः ॥ दूषीका ।**

सुबोधिनी—दूषेरीकः । ईकप्रत्ययमाह । दुष् वैकृत्ये । ण्यंतः दुषेर्याविति दीर्घः । णेरिति णिलोपः । 'दूषीका नेत्रयोर्मलमि'त्यमरः । किंच अकृतेपि ईकप्रत्यये दूषयतेर्धातोरितीप्रत्यये दूषिः । कृदिकारादिति वेपि दूषी । उभाभ्यामपिस्वार्थे कप्रत्यये ह्स्वो वेति पाक्षिके ह्स्वे च कृते दूषिका दूषीका च सिद्ध्यति । 'पिचंडी दूषिका दूषी पिचाटचहशोर्मलमि'ति विक्रमादित्यकोशः । 'दूषिका तूलिकायां च मले स्याल्लोचनस्य चे'ति मेदिनी ॥

तत्त्वदीपिका—दूषेरिति । दूषीकानेत्रयोर्मलम् ।

**मू०—अनिहृषिभ्यांकिच्च ॥ अनीकम् । हृषीकम् ।**

सुबोधिनी—अनिहृषिभ्यांकिच्च । कीकप्रत्ययः स्यात् । कित्त्वान्नगुणः । अन प्राणने । अनीकम् । 'अनीको ऽस्त्री रणे सैन्ये' इति मेदिनी । हृष तुष्टौ । हृषीकं । 'हृषीकं विषयींद्रियमि'त्यमरः ॥

**मू०—अलीकादयः ॥ अल भूषणादौ अलीकम् । वलीकम् । पुण कर्माणि शुभे । पुण्डरीकम् । ईषिका । इषीका ।**

सुबोधिनी–अलीकादयः । ईकप्रत्ययांता निपात्यंते । अल भूषणादौ । अलीकं 'अलीकं त्वप्रियेपि स्याद्दिव्ये सत्ये नपुंसकमि'ति मेदिनी । 'अलीकमप्रिये लाभे वितथे' इति हेमचंद्रः । विपूर्वात् व्यलीकं 'व्यलीकमप्रियाकार्यवैलक्ष्येष्वपि पीडने । नानागरे' इति मेदिनी । वल संवरणे । वलीकं । 'वलीकनीध्रे पटलप्रांते' इत्यमरः । वलतेर्निपातनात् मुगागमे कृते वल्मीकं । 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकमि'त्यमरः । पुण शुभे कर्म्मणि । धातोर्नुमागमो णस्य डश्च प्रत्ययस्यारुडागमश्च निपातनात् पुंडरीकं । 'पुंडरीकं सितांभोजं सितच्छत्रे च भेषजे । पुंसि व्याघ्रे च दिङ्नागे कोशकारांतरेपि चे'ति मेदिनी । ईष गतौ । निपातनात् ह्रस्वः । इषीका शलाका ॥

तत्त्वदीपिका–अलीकादयइति । अलीकंमिथ्या । वलीकं पटलप्रांते ।

**मू०–कृादेरीषः ॥ करीषम् । तॄ तरीषः ।**

सुबोधिनी–कृादेरीषः । ईषप्रत्ययमाह । कृ विक्षेपे । करीषः । 'करीषं गोमयं शुष्कमि'त्यमरः । तॄ प्लवनतरणयोः । तरीषः तरीषा ॥

तत्त्वदीपिका–कृादेरिति । करीषोऽस्त्री पशुशुष्कगोमययोः ।

**मू०–शृादेःकीषः ॥ शॄ शिरीषः पॄ पुरीषम् ।**

सुबोधिनी–शृादेःकीषः । शॄ हिंसायाम् । ऋतइतीत् । शिरीषो वृक्षः । पॄपालनपूरणयोः । पोरुरित्युत् । पुरीषं । 'गूथं पुरीषं वर्चस्कमस्त्री विष्ठाविशौ स्त्रिया'मित्यमरः ॥

**मू०–अर्जेर्ऋजः ॥ ऋजीषम् । अबिशब्दे । अंबरीषोनिपात्यः । अंबरीषम् ।**

सुबोधिनी–अर्जेर्ऋजः । अर्ज अर्जने । अस्मात्कीषः स्यात् धातोर्ऋजादेशश्च । 'ऋजीषं पिष्टपचनमि'त्यमरः । अबि शब्दे । निपातनात् ईषप्रत्ययः प्रत्ययस्यारुडागमश्च । अंबरीषः 'अंबरीषं रणे भ्राष्ट्रे क्लीबपुंसि नृपांतरे । नरकस्य प्रभेदे च किशोरे भास्करेपि च । आम्रातके तु पुंते चे'ति मेदिनी । 'अंबरीषः पुमान् भ्राष्ट्रमि'तिबोपालितः । 'क्लीबे पुंसि नृपांतरे क्लीबेंऽबरीषं भ्राष्ट्रो' नेत्यमरः ॥

तत्त्वदीपिका–अंबरीषइति । अंबरीषः पुमान् भ्राष्ट्रं । क्लीबेपि ।

**मू०–कृादेरीरः ॥ करीरः । शॄ शरीरम् ।**

सुबोधिनी–कृादेरीरः । ईरप्रत्ययमाह कृ विक्षेपे । करीरः । 'वंशांकुरे करीरोऽस्त्री वृक्षभिद्घट्टयोः पुमान् । करीरा चीरिकायां च दंतमूले च दंडिना'मि'ति मेदिनी । शॄ हिंसायां । शीर्य्यते इति शरीरम् । अर्द्धर्चादिः । 'शरीरं वर्ष्मविग्रहामि'त्यमरः ॥

तत्त्वदीपिका–कृादेरिति । करीरो वंशांकुरः ।

**मू०–गभीरादयः ॥ गम्लृ । गभीरः गम्भीरः । वश । उषीरम् । वस्लृ । क्षीरम् ।**

सुबोधिनी–गभीरादयः । ईरप्रत्ययांता निपात्यंते । गम्लृ गतौ । मस्य भः पाक्षिको नुमच निपातनात् । गभीरं । 'निम्नं गभीरं गम्भीरमि'त्यमरः । वश् कांतौ । निपातनात्कीर-

प्रत्ययः । ग्रहादिति संप्रसारणम् । उशीरं 'मूलेऽस्योशीरमस्त्रियाम् । अभयं नलदं सेव्यमि'-त्यमरः । घस्लृ अदने । कीरप्रत्ययो निपातनात् । गमामित्युपधालोपे कत्वं षत्वं क्षीरं । 'क्षीरं दुग्धे च नीरे चे'ति विश्वः ।

**मू०-शीङोधुक्लकवलवलञ्वालपालाः ॥** शीधु । शीलम् । शेवलः । शैवलः । शेवालम् । शेपालम् ।

**सुबोधिनी**-शीङोधुक्लकवलवलञ्वालपालाः । शीङ् स्वप्ने अस्मात् षट् प्रत्यया भवंति । शेरतेऽनेनेति शीधुरर्द्धर्चादिः ।'मैरेयमासवःशीधुरि'त्यमरः । लक् । शीलं । 'शीलं स्वभावे सद्वृत्ते' इति मेदिनी । वल । शेवलं । वलञ् । शैवलं । 'जलनील्यां तु शैवालं शैवल' इत्यमरः । 'शैवलं पद्मकाष्ठे स्यात् शेवाले तु पुमानयमि'ति मेदिनी । वाल । शेवालं । पाल । शेपालं । 'शेवालं शैवलो न स्त्री शेपालो जलनीलिके'ति शब्दार्णवः ॥

**तत्त्वदीपिका**-शीधुइति । मद्यं । शेवालं शेवलो न स्त्री शेवालो जलनीलिका ।

**मू०-उलूकादयः ॥** उलूकः । शमु शम्बूकः । शल शालूकः । मडि भूषायाम् । मण्डूकः ।

**सुबोधिनी**-उलूकादयः । ऊक प्रत्ययांता निपात्यंते । वल संवरणे । सम्प्रसारणं निपातनात् । उलूकः 'उलूकः पुंसि काकारिविंद्रे भारतयोधिनी'ति मेदिनी । शम् उपशमे । धातोर्बुगागमो निपातनात् । शंबूकः । 'शंबूको गजकुंभांते घोषे च शूद्रतापसे' इति मेदिनी । बाहुलकात् डकप्रत्ययेपि । 'जंबूकं जंबुकं प्रोक्तं शंबूकमपि शंबुकमि'ति द्विरूपकोशः । शंबूका जलशूक्तय इत्यमरः । शल गतौ निपातनाद्वृद्धिः । शालूकं । 'सौगंधिकं तु कल्हारमि'त्याद्युपक्रम्य 'शालूकमेषां कंद'स्यादि'त्यमरः । एषां सौगंधिकादीनां कुमुदकैरवांतानां कंदो मूलं शालूकमित्यर्थः । मडि भूषायां । मंडते वर्षासमयमिति मंडूकः । भेकः ॥

**तत्त्वदीपिका**-उलूकादयइति । उलूकाविंद्रमेचकौ । शंबूको जलशुक्तिः । शालूकं कंदविशेषः ।

**मू०-नियोमिः ॥** नेमिः ।

**सुबोधिनी**-नियोमिः । मिप्रत्ययमाह । णीञ् प्रापणे । नयति चक्रमिति नेमिः । 'नेमिर्ना तिनिशे नूपनिकाचक्रांतयोः स्त्रियामि'ति मेदिनी ॥

**मू०-अर्तेरुच्च ॥** ऊर्मिः ।

**सुबोधिनी**-अर्तेरुच्च । मिप्रत्ययः स्यात् धातोरुरादेशश्च । ऋगतौ ऊर्मिः । 'ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्गयोः । वस्त्रसंकोचरेखायां वेदनापीडयोरपी'ति मेदिनी ॥

**मू०-भुवःकिच्च ॥** भूमिः ।

**सुबोधिनी**-भुवःकिच्च । मिः स्यात् । कित्त्वान्न गुणः । भूसत्तायां भवंति भूतान्यस्यामिति भूमिः । 'भूमिर्वसुंधरायां स्यात् स्थानमात्रेपि च स्त्रियामि'ति मेदिनी ॥

**मू०-अश्नोतेरश्च ॥** रश्मिः ।

सुबोधिनी–अश्नोतेरश्च । अशूङ् व्याप्तावस्मात् मिः स्यात् धातो रशादेशश्च । रश्मिः । 'रश्मिः पुमान् दीधितौ स्यात्पक्ष्मप्रग्रहयोरपी'ति मेदिनी ॥

तत्त्वदीपिका–रश्मिरिति । रज्जूकिरणयो रश्मिः ।

## मू०–सृादेर्निः कित् ॥ सृणिः । वृष्णिः ।

सुबोधिनी–सृादेर्निः कित् । सृ गतौ । सृणिः । 'अंकुशोऽस्त्री सृणिः स्त्रियामि'त्यमरः । 'सृणिः स्यादंकुशः पुमानि'ति । वृषु सेचने । वृष्णिः । 'वृष्णिस्तु यादवे मेष वृष्णिः पाषंडचंडयोरि'ति विश्वः । 'वृष्णिः क्षत्रियमेषयोः' ॥

तत्त्वदीपिका–सृणिरिति । अंकुशः । वृष्णिरिति । क्षत्रियमेषयोः ।

## मू०–अङ्गेर्नलोपश्च ॥ अग्निः ।

सुबोधिनी–अंगेर्नलोपश्च । अगि गतौ । निः । अग्निः । 'अग्निर्वैश्वानरो वन्हिरि'त्यमरः । 'अग्निर्वैश्वानरेऽपि स्यात् चित्रकाख्यौषधौ पुमानि'ति मेदिनी ॥

## मू०–वहादेर्निः ॥ वन्हिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः ।

सुबोधिनी–वहादेर्निः । निप्रत्ययमाह वह प्रापणे । वन्हिः । 'वन्हिर्वैश्वानरेऽपि स्यात् चित्रकाख्यौषधौ पुमानि'ति मेदिनी । श्रिञ् सेवायाम् । श्रेणिः । 'श्रेणिः स्त्रीपुंसयोः पंक्तौ समाने शिल्पिसंहताववि'ति मेदिनी।'निःश्रेणिस्त्वधिरोहिणी'। श्रुश्रवणे। श्रोणिः। कटिः।'श्रोणिः ककुद्मती'त्यमरः । यु मिश्रणे । योनिः 'योनिः स्त्रीपुंसयोश्च स्यादाकारे स्मरमंदिरे' इति मेदिनी । द्रुगतौ । द्रोणिः सेचिनी । ग्लै हर्षक्षये । ग्लानिः दौर्बल्यम् ॥

## मू०–घृण्यादयः ॥ घृणिः । स्पृश् पृश्निः । पृषु पार्ष्णिः ।

सुबोधिनी–घृण्यादयः । निकप्रत्ययान्ता निपात्यंते। घृ सेचने । घृणिः 'घृणिः पुमान् । अंशुज्वालांतरंगेष्वि'ति हेमचंद्रः । स्पृश संस्पर्शने । स्पृशतेः सलोपो निपातनात् । छ्राशेति षत्वं ष्टुत्वं पृष्णिः । 'पृष्णिरल्पतनावि'त्यमरः । पृषु सेचने पृषेर्वृद्धिर्निपात्यते । पार्ष्णिः । 'पार्ष्णिः स्यादुन्मदास्त्रियां । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रंथ्यधरेऽपि चे'ति मेदिनी ॥

तत्त्वदीपिका–घृणिरिति । किरणः । पृष्णिरिति स्पृशेः सलोपे । पृषेस्तुवृद्धौ । पार्ष्णिः ।

## मू०–पातेर्डतिः ॥ पतिः ।

सुबोधिनी–पातेर्डतिः । डतिप्रत्ययमाह । डित्त्वाट्टिलोपः । पा रक्षणे । पतिः 'पतिर्धवे नाऽन्निऽग्रीशे' इति मेदिनी ॥

## मू०–शकेर्ऋतन् ॥ शकृत् ।

सुबोधिनी–शकेर्ऋतन् । ऋतन्प्रत्ययमाह । शकॢ शक्तौ । शकृत् । 'उच्चारावस्करौ शमलं शकृत् । गूथं पुरीषं वर्चस्कमस्त्रीविष्ठाविशौस्त्रियामि'त्यमरः ॥

## मू०–हन्तेरतिरंहच ॥ हन्ति दुरितमनया अंहतिः ।

सुबोधिनी–हंतेरतिरंहच । हनहिंसागत्योः अस्मादतिः स्यात् धातोरंहादेशश्च । अंहतिः । 'प्रादेशनं निर्वपणमपवर्जनमंहतिरि'त्यमरः ॥

मू०–सूङादेः क्रिः ॥ सूरिः । भूरिः । अद्रिः ।

सुबोधिनी–सूङादेः क्रिः । क्रिप्रत्ययमाह । कित्त्वान्न गुणः । षूङ् प्राणिप्रसवे । सूरिः 'धीमान् सूरिः कृतिः कृष्टिर्लब्धवर्णो विचक्षण' इत्यमरः । अभिधानमालायां सूरीति नांतमुदाहृतम् । भूसत्तायां । भूरिः । 'भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि । नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिंगक' इति मेदिनी । अद भक्षणे । अद्रिः 'अद्रयो द्रुमशैलार्का इत्यमरः' ॥

मू०–रादेस्त्रिः ॥ रात्रिः । शत्रिः । अत्रिः ।

सुबोधिनी–रादेस्त्रिः । त्रिप्रत्ययमाह । रा दाने । रात्रिः । शद्लृ शातने । शत्रिः । 'शत्रिर्नाभोधरे विष्णावि'ति मेदिनी । अद भक्षणे । अत्रिर्मुनिभेदः ॥

मू०–पतेरत्रिः ॥ पतत्रिः ।

सुबोधिनी–पतेरत्रिः । अत्रिप्रत्ययमाह । पत्लृ गतौ । पतत्रिः । पक्षी । पतत्रात् पक्षवाचकात् शब्दान्मत्वर्थे इनि तु नांतः । पतत्री । पतत्रिणौ ॥

तत्त्वदीपिका–पतत्रिरिति पक्षिणि ।

मू०–मृङईचिः ॥ मरीचिः ।

सुबोधिनी–मृङईचिः । ईचिप्रत्ययमाह । मृङ् प्राणत्यागे । मरीचिः । 'मरीचिः कृपणे दीप्तौ ऋषिभेदे च दृश्यते' इति विश्वः । 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकमि'ति मेदिनी ॥

मू०–वेञोडिच्च ॥ वीचिः ।

सुबोधिनी–वेञोडिच्च । वेञ् तंतुसंताने । अस्मादीचिर्डित् स्यात् । वीचिः । 'वीचिः स्वल्पे तरंगे स्यादवकाशे सुखे द्वयोरि'ति विश्वः ॥

मू०–पुरःकुषः ॥ पुर अग्रगमने । पुरुषः ।

सुबोधिनी–पुरःकुषः । कुषप्रत्ययमाह । कित्त्वान्न गुणः । पुर अग्रगमने । पुरुषः । बाहुलकाद्दीर्घे पूरुषः । 'पुरुषस्त्वात्मनि नरे पुन्नागे चे'ति हैमः । 'पुरुषाः पूरुषा नर इत्यमरः ॥

मू०–पृनहिकलिभ्यउषः ॥ परुषम् । नहुषः । कलुषम् ।

सुबोधिनी–पृनहिकलिभ्यउषः । उषप्रत्ययमाह । पॄ पालनपूरणयोः । परुषं 'परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवदि'ति मेदिनी । णह बंधने । नहुषः । 'नहुषो राजविशेषे नागभिद्यपी'ति हैमः । कल शब्दसंख्यानयोः । कलुषं । 'कलुषं त्वाविलैनसोरि'ति विश्वः ॥

मू०–पीयेरूषः ॥ पीय पाने सौत्रः । पीयूषम् । पेयूषम् ।

सुबोधिनी–पीयेरूषः । ऊषप्रत्ययमाह । पीय पाने सौत्रोधातुः । पीयूषम् । बाहुलकाद्गुणाभावः गुणे तु पेयूषः । 'पीयूषोऽभिनवं पय' इत्यमरः । 'पीयूषममृतं सुधे'त्यमरः । 'पीयूषं सप्तदिवसावधिक्षीरे तथामृते' इति मेदिनी । 'पीयूषममृते नव्यसूतधेनोः पयस्यपी'ति हैमः ॥

मू०–मस्जेर्नुम्च ॥ मञ्जूषा ।

सुबोधिनी–मस्जेर्नुम्च । टुमस्जो शुद्धौ । अस्मादूषः स्यात् धातोर्नुमागमश्च । मित्त्वा-दंत्यात्स्वरात्परः । सस्य श्चुत्वेन शः झभेजबा इति शस्य जः हलात्परस्य झसस्येति वा जलोपः । लोपाभावपक्षे जकारद्वयं । मञ्जूषा । ' पिटकः पेटकः पेटा मञ्जूषे'त्यमरः ॥

**मू०–गण्डेश्च ॥ गडि वदनैकदेशे । गण्डूषः ।**

सुबोधिनी–गंडेश्च । गडि वदनैकदेशे । अस्मादूषः स्यात् । गंडूषः 'गंडूषो मुखपूतीभ-पुष्करप्रसृतोन्मिते इति मेदिनी' ॥

**मू०–शकादेरटः ॥ शकटम् । ककि गतौ कंकटः । कृञ् करटः ।**

सुबोधिनी–शकादेरटः । अटप्रत्ययमाह । शकि गतौ । शक्ल शक्तौ । शकटः । 'क्लीबेऽनः शकटोऽस्त्री स्यादि'त्यमरः । ककि गतौ । कंकटः । सन्नाहः । डुकृञ् करणे । कृ विक्षेपे वा । करटः । ' काकेभगंडौ करटावि'त्यमरः । 'करटो गजगंडे स्यात् कुसुंभे निंद्यजीविनि । एकादशादिश्राद्धेच दुर्दुरूढेऽपि वायसे' इति मेदिनी ।

तत्त्वदीपिका–कंकट इति । सन्नाहे ।

**मू०–कलिकर्द्योरमः ॥ कलमः । कर्द कुत्सितेशब्दे । कर्दमः ।**

सुबोधिनी–कलिकर्द्योरमः । अमप्रत्ययमाह । कल संख्याने । कलमः । 'कलमः शालिचौरयोरि'ति हैमः । 'कलमः पुंसि लेखिन्यां शालौ पाटच्चरेपि च'ेति मेदिनी । कर्द कुत्सिते शब्दे । कर्दमः पंकः ॥

**मू०–पुल्यादेःकिन्दः ॥ पुलिन्दः ।**

सुबोधिनी–पुल्यादेःकिंदः । किंदप्रत्ययमाह । कित्त्वान्न गुणः । पुल महत्त्वे । पुलिंदः जातिविशेषः ।

तत्त्वदीपिका–पुलिंद इति जातिविशेषे ।

**मू०–कुपेर्वाव: ॥ कुपिन्दः । कुविन्दः ।**

सुबोधिनी–कुपेर्वावः । किंदः स्यात् । कुप क्रोधे पस्य वा वकारश्च । कुविंदः, कुपिंदः । 'तंतुवायः कुविंदः स्यादि'त्यमरः ॥

तत्त्वदीपिका–कुपिंदकुविंदौ तन्तुवाये ।

**मू०–नौषञ्जेर्घथिः ॥ निषंगथिः ।**

सुबोधिनी–नौषंजेर्घथिः । षंज संगे निपूर्वादस्मात् घथि प्रत्ययः स्यात् । घथिप्रत्ययमाह । घित्त्वाच्च नारिति कुत्वं प्रादेश्चेति षत्वं । निषगथिः । आलिङ्गकः ॥

तत्त्वदीपिका–निषंगथिरिति आलिंगके ।

**मू०–सर्तेर्णिच्च ॥ सारथिः ।**

सुबोधिनी–सर्तेर्णिच्च । सृ गतौ । अस्मात् घथिः स्यात् स च णित् । सारथिः । 'नियता प्राजिता यंता सूतः क्षत्ता च सारथिरि'त्यमरः ॥

**मू०– खर्जादिरूरः ॥ खर्जूरः । कर्पूरम् । वल्लूरम् ।**

सुबोधिनी–खर्जादिरूरः । ऊरप्रत्ययमाह । खर्ज आर्जवे । खर्जूरः । 'खर्जूरंरूप्यफलयोः खर्जूरः कीटवृक्षयोरिति' मेदिनी । कृप् सामर्थ्ये । बाहुलकात् कृपोरील इति लत्वाभावः । कर्पूरं । ' अथ कर्पूरमस्त्रियां । घनसारश्चंद्रसंज्ञः सिताभ्रो हिमवालुको'त्यमरः । वल्ल संवरणे वल्लूरं । ' वल्लूरं शुष्कमांसं स्यात्' ॥

तत्त्वदीपिका–वल्लूरमिति । शुष्कमांसम् ।

**मू०–लंगेर्वृद्धिश्च ॥ लांगूलम् । कुसश्च । कुसूलम् ।**

सुबोधिनी–लंगेर्वृद्धिश्च । लगि गतौ । अस्मादूलप्रत्ययः स्यात् । धातोर्वृद्धिश्च । लांगूलं 'लांगूलं पुच्छशेफतोरि'ति मेदिनी । कुस संश्लेषणे । ऊलः । निपातनाद्गुणाभावः । कुसूलं । 'कुसूलं च कुसीदं च मध्यदंतमुदाहृतम्' इति विश्वः ॥

**मू०–कुवश्चट्दीर्घश्च ॥ कूची ।**

सुबोधिनी–कुवश्चट्दीर्घश्च । कु शब्दे अस्माच्चट् प्रत्ययः स्यात् धातोः पाक्षिको दीर्घश्च । चट्प्रत्ययमाह । टित्त्वाद्दीप् कूची । 'कूची चित्रलेखनिका कुच कूचौ स्तने मतावि'ति विश्वः ॥

तत्त्वदीपिका–कूचीति । चित्रलेखिका ।

**मू०–सिवेरूच ॥ सूची ।**

सुबोधिनी–सिवेरूच । षिवु तंतुसंताने । अस्माच्चट् स्यात् धातोष्टेरूश्च । सूची दर्भांकुरः । 'सूची तु सीवनद्रव्येप्यांगिकाभिनयांतरे' इति मेदिनी ॥

तत्त्वदीपिका–सूचीति । सूची दर्भांकुरः ।

**मू०–शमेर्बः ॥ शमु शम्बः ॥**

सुबोधिनी–शमेर्बः । शमु उपशमे अस्मात् बःस्यात् । बप्रत्ययमाह । शम्बः । ' शंबः स्यान्मुशलाग्रस्थलोहमण्डके । पवौ शुभान्विते त्रिष्वि'ति विश्वमेदिन्यौ ॥

तत्त्वदीपिका–शम्ब इति मुशले ।

**मू०–उल्बादयः ॥ उच समवाये । उल्बः । शुल्बम् । स्था स्तंबः । स्तबकः ।**

सुबोधिनी उल्बादयः । बप्रत्ययांता निपात्यंते । उच समवाये । सस्य लत्वं गुणाभावश्च उल्बं । 'गर्भाशयो जरायुः स्यादुल्बं च कललोऽस्त्रियामि'ति मेदिनी । शुच शोके । चस्य लत्वं गुणाभावश्च निपातनात् । शुल्बं । 'शुल्बं ताम्रे यज्ञकर्मण्याचारे जलसंनिधावि'ति मेदिनी । ष्ठा गतिनिवृत्तौ अस्मादंबअबकप्रत्ययौ प्रत्ययौ निपातनात् धातोस्थस्य तश्च । स्तंबः । स्तबकः । 'स्तंबो गुल्मे तृणादीनामप्रकांडद्रुमेपिचेति विश्वः । स्तंबो प्रकांडद्रुमगुच्छयोरि'ति मेदिनी । स्याद्गुच्छकस्तु स्तबक' इत्यमरः ॥

तत्त्वदीपिका–उल्बंगर्भाशयः । शुल्बं ताम्रं । स्तंबो गुच्छस्तृणादीनां । स्तबकः पुष्पगुच्छः ।

**मू०—शाशपिभ्यांदः ॥ शादः । शब्दः ।**

सुबोधिनी—शाशपिभ्यांदः । दप्रत्ययमाह । शो तनूकरणे । शादः । 'शादो जंबालशष्पयोरि'त्यमरः । 'शादः स्यात्कर्दमे शष्पे' इति मेदिनी । 'शष्पं बालतृणं घास' इत्यमरः । शप् आक्रोशे । शब्दो निनादः ॥

तत्त्वदीपिका—शादइति जम्बालशष्पयोः ।

**मू०—अब्दादयः ॥ अबतीत्यब्दः । कुन्दः ।**

सुबोधिनी—अब्दादयः । दप्रत्ययांता निपात्यंते अव रक्षणे । वस्य बः अब्दः । 'अब्दः संवत्सरे वारिवाहमुस्तकयोः पुमानि'ति मेदिनी । कु शब्दे । निपातनान्नुम् । कुंदः । 'कुंदो माघ्येऽस्त्री मुकुंदभ्रमिनिध्यंतरेषु ने'ति मेदिनी ॥

**मू०—वलिमलितनिभ्यःकयः ॥ वलयम् । मलयः । तनयः ।**

सुबोधिनी—वलिमलितनिभ्यःकयः । कयप्रत्ययमाह । कित्त्वाद्गुणनिषेधादि । वल संवरणे । वलयः । 'वलयः कंठरोगे ना कंकणे पुंनपुंसकमि'ति मेदिनी । मल धारणे । मलयः । 'मलयः पर्वतांतरे । शैलांगे देशआरामे त्रिवृतायां तु योषिती'ति मेदिनी । तनु विस्तारे । तनयः । 'आत्मजस्तनयः सूनुरि'त्यमरः ॥

**मू०—हृञोदुक्च ॥ हरतीति हृदयम् ।**

सुबोधिनी—हृञोदुक्च । हृञ् हरणे । अस्मात्कयः स्यात् धातोर्दुगागमश्च । ह्रियते विषयैरिति हृदयं मनः ॥

**मू०—मिनोतेरुः ॥ मेरुः ।**

सुबोधिनी—मिनोतेरुः । रुप्रत्ययमाह । डुमिञ् प्रक्षेपणे । मेरुः । 'मेरुः सुमेरुर्हेमाद्रिरि'त्यमरः ॥

**मू०—जन्वादयः ॥ जत्रु । अश्रु । रुरुः । शातयतीति शत्रुः ।**

सुबोधिनी—जन्वादयः रुप्रत्ययांता निपात्यंते । जनी प्रादुर्भावे । नस्य तो निपातनात् । जत्रु । 'संधी तस्यैव जत्रुणी'त्यमरः । तस्य स्कंधस्येत्यर्थः । अशूङ् व्याप्तौ । अश्रु नयनजलं । रुशब्दे निपातनाद्गुणाभावः । रुरुः । 'कृष्णसाररुरुन्यंकुरंकुशंबररोहिषा' इत्यमरः । 'रुरुर्मृगे दैत्ये ऽपिचे'ति मेदिनी । शदॢ शातने ण्यंतः । शातयतीति णेरिति णिलोपः निपातनाद्ध्रस्वत्वं । शत्रुः ॥

तत्त्वदीपिका—रुरुरिति मृगभेदे ।

**मू०—कुसेरुम्भोमेदेताः ॥ कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितः ॥**

सुबोधिनी—कुसेरुंभोमेदेताः । कुस संश्लेषणे । अस्मात् उंभ उम ईद इत एते प्रत्ययाः स्युः । उंभादिप्रत्ययानाह । कुसुंभं । 'कुसुंभं हेमानि महारत्ने नेनाकमंडलावि'ति मेदिनी । कुसुमं । 'कुसुमं स्त्रीनेत्ररोगयोः फलपुष्पयोरि'ति मेदिनी । कुसीदं । 'कुसीदं जीवने वृद्ध्यां क्लीबं त्रिषु कुसीदके' इतिमेदिनी । कुसितो जनपदः ॥

तत्त्वदीपिका—कुसितइति जनपदे ।

**मू०-तण्डुलादयः ॥** तड आघाते । तण्डुलः । आकि लक्षणे । अंकुशः । चष चषालः । पल्वलम् । ञिधृषा धिष्ण्यम् । शल्यम् ।

सुबोधिनी-तण्डुलादयोनिपात्याः । तड आघाते उल प्रत्ययो नुमागमश्च निपात्यते । तंडुलः । 'तंडुलः स्याद्विडंगे च धान्यादिनिकरे पुमानीति मेदिनी' । आकि लक्षणे । उश प्रत्ययो निपातनात् । अंकुशः । 'अंकुशोऽस्त्री सृणिः स्त्रियामित्यमरः' । चष भक्षणे । आल-प्रत्ययो निपातनात् । चषालः । 'चषालो यूपकटक' इत्यमरः। पा पाने । वलप्रत्ययो निपात्यते लुगागमश्च धातोर्ह्रस्वत्वं च पल्वलमल्पसरः । ञिधृषा प्रागल्भ्ये । ण्यप्रत्ययः ऋत इत्वं च निपात्यते । धिष्ण्यं । ' ।धिष्ण्यं स्थाने गृहे भेऽग्नावित्यमरः । धिष्ण्यं स्थानाग्निसद्मसु । ऋक्षे शक्तौ चेति मेदिनी ' । शल गतौ । यप्रत्ययः । शल्यं । 'शल्यं तु न स्त्रियां शंकौ क्लीबं क्ष्वेडेषु तोमरे । मदनद्रुमा विधानेति मेदिनी ' ॥

**मू०-मूङ्शक्यम्यविभ्यःक्लः ॥** मूलम् । शक्लः । अम्लः । अवि गतौ । अंव्लः ।

सुबोधिनी-मूङ्शक्यम्यविभ्यःक्लः । क्लप्रत्ययमाह । कित्त्वान्नगुणः । मूङ् बंधने मूलं । 'मूलं बुध्नोऽंघ्रिनामक' इत्यमरः । शक्लृ शक्तौ । शक्लः। 'शक्लः प्रियंवदे' इत्यमरः । अमरोगे चुरादिर्ण्यंतः । बाहुल कादुपधाह्रस्वः' ओरिति ञिलोपः । अम्लः। 'अम्लो रसविशेषे स्यात् क्लीबे च गैरिकौषधाविति मेदिनी ' । अवि शब्दे । अंव्लोरसः ॥

तत्त्वदीपिका-शक्ल इति प्रियंवदे ।

**मू०-मादेर्यः ॥** माया । छाया । सस्यं । पुञ् । सव्यम् ।

सुबोधिनी-मादेर्यः । यप्रत्ययमाह । मा माने । माया । 'माया स्याच्छांबरी पुष्प्योर्मयः पीतांबरे सुरे' इति मेदिनी । छो छेदने। छाया । 'छाया स्यादातपाभावे प्रतिबिंबार्कयोषितोः । पालनोत्काययोः कांतिराच्छोभापंक्तिषु स्त्रियामिति विश्वः' । षस् स्वप्ने । सस्यं । ' वृक्षादीनां फलं सस्यमित्यमरः ' । षुञ् आभिषवे । 'सव्यं । सव्यं वामे प्रतीपेचोति मेदिनी । सव्यं दक्षिणवामयोरिति विश्वः ' ॥

तत्त्वदीपिका-सव्यमिति । दक्षिणवामयोः ।

**मू०-जनेर्यक् ॥** जाया । जन्यम् ।

सुबोधिनी-जनेर्यक् । जन जनने । अस्माद्यक् प्रत्ययः स्यात् जनसनेति वात्वं । जन्यं । जाया । ' जन्यं हट्टे परीवादे संग्रामे च नपुंसकम् । जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान् । त्रिपूत्पाद्ये नवोढायां स्निग्धे जामातृभृत्ययोरिति मेदिनी ' ॥

तत्त्वदीपिका-जन्यामिति युद्धे ।

**मू०-अघ्न्यादयः ॥** हन् । अघ्न्या । कनी दीप्तौ । कन्या । वन्ध्या ।

सुबोधिनी-अघ्न्यादयः । यक् प्रत्ययांता निपात्यंते । हन् हिंसागत्योः । धातोरडागमः

उपधालोपश्च निपातनात् । हनोऽघ्न इति घः । अघ्न्या । नञ्पूर्वाद्धंतेर्यक् उपधालोपश्चेत्यन्ये। अघ्न्यः । प्रजापतिः । 'माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी । अर्जुन्यघ्न्या रोहिणी स्यादित्यमरः' । कनी दीप्तौ । कन्या । 'कन्या कुमारिकानार्योरोषधीराशिभेदयोरिति विश्वः'। बंध बंधने । बवयोरैक्यात् निपातनान्नलोपाभावः । वन्ध्या । वन्ध्यस्त्वफलवृक्षादौ स्त्रियां स्यादप्रजास्त्रियामिति मेदिनी ' । संपूर्वाद्धाञा यक् । आतोलोपश्च निपातनात् । संध्या । ' सायं संध्या पितृप्रसूरित्यमरः ' ॥

**मू०–अर्त्यादेर्वन्** ॥ अर्वा । पृ पर्वा ।

सुबोधिनी–अर्त्यादेर्वन् । वन् प्रत्ययमाह । अर्वा । 'अर्वा तुरगगर्दभयोरिति विश्वः । अर्वातुरंगमे पुंसि कुत्सिते वाच्यलिंगक इति मेदिनी ' । पृ पालनादौ पर्वा । पर्व क्लीब महे ग्रंथौ प्रस्तावे लक्षणांतरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपीति मेदिनी' ॥

**मू०–ध्याप्योस्सम्प्रसारणम्** ॥ प्यैङ् ध्यैङ् वृद्धौ । पीवा । धीवा ।

सुबोधिनी–ध्याप्योःसंप्रसारणं । ध्यै चिंतायाम् । प्यैङ् वृद्धौ । आभ्यां वन् प्रत्ययः स्यात् धातोः संप्रसारणं च । धीवा कर्मकरः । पीवा स्थूलः ॥

तत्त्वदीपिका–धीवेति कर्मकर । पीवा स्थूलः ।

**मू०–अदेर्धश्च** ॥ अध्वा ।

सुबोधिनी–अदेर्धश्च । अद् भक्षणे । अस्मात् वन् स्यात् । दस्य धश्च अध्वा मार्गः ॥

**मू०–धातोरिः** ॥ यजिः । वट वेष्टने । वटिः । जनिः । बोधिः । हरिः । वर्तिः ।

सुबोधिनी–धातोरिः । इप्रत्ययमाह । यज देवपूजादौ । यजिः । वट वेष्टने वटिः । बुध अवगमने । बोधिः । ' बोधिः पुंसि समाधिश्वभेदे पिप्पलपादपे ' इति मेदिनी । हञ् हरिः । ' हरिर्विष्णावहाविंद्रे भेके सिंहे हये रवौ ॥ चंद्रे कोले प्लवंगे च यमे वाते प्रकीर्तितः ' । वृतु वर्त्तने । वर्तिर्दीपोपकरणम् ॥

तत्त्वदीपिका–हरिरिति हरिर्विष्णावहाविंद्रे भेके सिंहे हये रवौ । चंद्रे कोले प्लवंगे च यामे वाते च कीर्तितः ।

**मू०–नाम्युपधात्किः** ॥ कृषिः । ऋषिः । शुचिः । लिपिः । तूल निष्कर्षे । तूलिः ।

सुबोधिनी–नाम्युपधात्किः । नाम्युपधाद्धातोः किः स्यात् । किप्रत्ययमाह । कित्वान्न गुणः । कृष विलेखने । कृषिः । ऋषी गतौ । ऋषिः । 'ऋषिर्वेदे वसिष्ठादौ दीधितौ च पुमानयमिति मेदिनी ' । शुच शोके । 'शुचिः शुद्धे सितेऽनले । ग्रीष्माषाढानुपहतेषूपधायुद्धमंत्रिणि । शृंगारे इति हैमः ' लिप उपदेहे । लिपिः । बाहुलकाद्वत्वमपि । लिविः । तूलिः । कूर्चिका ॥

**मू०–क्रमितमिशतिस्तम्भामतइच्च** ॥ क्रिमिः । तिमिः । शितिः । स्तिभिः ।

सुबोधिनी—क्रमितमिशतिस्तंभामतइच्च । एभ्यः किः स्यात् एषामत इकारादेशश्च । क्रमु पादविक्षेपे । क्रिमिः । निपातनाद्रस्य संप्रसारणमपि भवति । कृमिः 'कृमिर्ना कृमिवत्कीटे इति मेदिनी ' । तमु कांक्षायां तिमिः । तिमिर्मत्स्यभेदः । शतिः । सौत्रो धातुः । शितिः । 'शितिः कृष्णे सिते भूर्जे इति विश्वः । शितिर्भूर्जे नासितासितयोस्त्रिष्विति मेदिनी ' । स्तंभः सौत्रः । स्तिभिः । समुद्रः ॥

मू०—मनेरतउच्च ॥ मुनिः ।

सुबोधिनी—मनेरतउच्च । मन ज्ञाने अस्मात्किः स्यात् अकारस्योकारादेशश्च । मन्यते जानातीति मुनिः । 'मुनिःपुमान् वसिष्ठादौ वेगहीनतरौ जिने' इति मेदिनी ॥

मू०—वर्णेर्वलिश्च ॥ वर्ण वर्णने । सौत्रः बलिः ।

सुबोधिनी—वर्णेर्वलिश्च । वर्णिः सौत्रोऽस्मात्किः स्यात् धातोर्बलिरादेशश्च । बलिः 'करोपहारयोः पुंसि बलिः प्राण्यंगजे स्त्रियां ' बवयोरैक्याद्वलिः ॥

तत्त्वदीपिका—बलिः पूजापहारयोः ।

मू०—वपादेरिञ् ॥ वापिः । राजिः । वारिः ।

सुबोधिनी—वपादेरिञ् । इञ्प्रत्ययमाह । ञित्त्वाद्वृद्धिः । टुवप् बीजतंतुसंताने । वापिः । राजृ दीप्तौ । राजिः । 'राजिः स्त्रीपंक्तिरेखयोरिति मेदिनी' । वृञ् वरणे ञ्यंतः । ञेरिति ञिलोपः । वारिः । 'वारिः स्मृता सरस्वत्यां वारि स्त्रीभेदनीरयोरिति विश्वः' । कृदिकारादितीष् तु पाक्षिकः सर्वत्र भवति । 'वारी तु गजबंधनीत्यमरः । वारिः पथिकसंहतौ इति च' ॥

तत्त्वदीपिका—वारिर्गजबंधनी । जले क्लीबे ।

मू०—नहोभः ॥ नाभिः । जनिः । आजिः । आतिः ।

सुबोधिनी—नहोभः । णह बंधने । अस्मादिञ् स्यात् हस्य भश्च नाभिः । नाभिर्मुख्य नृपे चक्रमध्यक्षत्रिययोः पुमान् । द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे इति मेदिनी' । जनी प्रादुर्भावे इञ् । जनिवध्योरिति न वृद्धिः जनिः । कृदिकारादिति पक्षे ङीप् । जनी । ' जनी सीमंतिनी वध्वोरुत्पत्तावोषधौ तथेति मेदिनी ' । अज गतौ क्षेपणे च बाहुलकादजेर्वीभावो न । आजिः संग्रामः । अत सातत्यगमने । आतिः पक्षी ॥

तत्त्वदीपिका—नाभिः स्यात्क्षत्रिये पुंसि । प्राण्यंगे तु स्त्रियाम् ।

मू०—अशेरुट् ॥ राशिः ।

सुबोधिनी—अशेरुट् अशूङ् । व्याप्तौ । अस्मादिञ् प्रत्ययो धातोरुडागमश्च स्यात् । राशिः । 'राशिर्मेषादिपुंजयोरिति मेदिनी' ॥

मू०—वातेर्डित् ॥ विः ।

सुबोधिनी—वातेर्डित् । वा गतिगंधनयोरस्माड्डित् स्यात् । डित्वाट्टिलोपः । विः पक्षी । स्त्रियां वीत्यपि ॥

**मू०-नीव्यादयः ॥** निपूर्वोऽव्येञ् नीविः । प्राहिः । समानं ख्यायतेजनैरिति सखा ।

**सुबोधिनी**-नीव्यादयः । डिप्रत्ययांता निपात्यंते निपूर्वः व्येञ् संवरणे । डित्वाट्टिलोपः नेर्दीर्घोनिपात्यते । यत इति यलोपः । नीविः कृदिकारादितीपि । नीवी 'स्त्रीकटौ वस्त्रबंधेपि नीवी परिपणेपि चेत्यमरः' । परिपणो मूलधनं । हृञ् हरणे । टिलोपे प्राहिः 'पुंस्येवांधुः प्राहिः कूप' इत्यमरः । ख्या प्रकथने । टिलोपे सति यलोपः सहादेरिति समानस्य सादेशः सेडांघेरिति डा । सखा ॥

**तत्त्वदीपिका**-प्राहिः कूपः ।

**मू०-आङ्पूर्वौश्रीहनी ॥** अश्रिः । आहिः ।

**सुबोधिनी**-आङ्पूर्वौश्रीहनी । श्रिञ् सेवायां । टिलोपे सति आङो ह्रस्वः निपातनात् । अश्रिः । 'स्त्रियः पाल्यश्रिकोटय इत्यमरः' । दंत्यसकारवांस्तुअदंतः । 'अस्त्रः कोणे कचे पुंसि क्लीबमश्रुणि शोणित इति मेदिनी' । आङ्पूर्वो हनाहिंसागत्योः । टिलोपे सति आङो ह्रस्वो निपातनात् । आहिः । 'अहिर्वृत्रासुरे सर्पे इति मेदिनी' ॥

**तत्त्वदीपिका**-स्त्रियां पाल्यश्रिकोटयः ।

**मू०-कॄादेःकिः ॥** कॄ किरिः । गॄ गिरिः । पॄ पुरिः ।

**सुबोधिनी**-कॄादेःकिः । किप्रत्ययमाह । कित्वान्न गुणः । कॄ विक्षेपे । ऋतइरितीर् । किरिः । 'वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिरित्यमरः' । तॄकॄज्ञाभ्यश्चेति कप्रत्यये ऽदन्तोप्यस्ति । 'त्वचि त्वचः किरोपि स्यात् किरौ प्राक्तःपथः पथि इति द्विरूपकोशः' । गॄ निगरणे गिरिः । 'गिरिर्ना नेत्ररुग्‌भेदे । अद्रौ गिरियके योषित् गीर्णौ पूज्ये पुनस्त्रिषु' इति मेदिनी । पॄ पालनादौ । पोरुरित्युर् । पुरिर्नगरं । राजा नदी च ॥

**मू०-मनधातोः ॥** कर्म्म । चर्म्म । भस भर्त्सनदीप्त्योः । भस्म । जन्म । छद्म । सुत्रामा ।

**सुबोधिनी**-मनधातोः ॥ मन्प्रत्ययमाह । डुकृञ करणे । क्रियते इति कर्म्म । 'कर्म व्याप्ये क्रियायां च पुंनपुंसकयोर्मतामिति रुद्रः' । चर गत्यादौ । चर्म । 'चर्म कृत्तौ च फलके' इति मेदिनी । भस भर्त्सनदीप्त्योः भस्म । जन जनने । जन्म । छद अपवारणे चुरादिः । इस्मनिति ह्रस्वः । णेरिति णिलोपः । छद्म । त्रैङ् पालने । सुष्ठु त्रायते इति सुत्रामा इन्द्रः ॥

**मू०-बृंहेर्नस्यअः ॥** ब्रह्म ।

**सुबोधिनी**-बृंहेर्नस्यअः । बृहि वृद्धावस्मान्मन् स्यात् । नुमो नस्य अकारे कृते रत्वं ब्रह्म । 'ब्रह्म तत्त्वं तपो वेदो नद्वयोः पुंसि वेधसि । ऋत्विग् रागभिदोर्विप्रे इति मेदिनी । ब्रह्म तत्त्वं । तपो वेदो ब्रह्मा विप्रः प्रजापतिरित्यमरः' ॥

**तत्त्वदीपिका**-ब्रह्मतत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः ।

मू०—नामादयः ॥ म्ना नाम । षिञ् सीमा । व्येञ् व्योम । रु रोम । पै शोषणे पाप्मा । वेमा । अतेर्मनिण् । आत्मा ।

सुबोधिनी—नामादयः । मन् प्रत्ययांता निपात्यंते । म्ना अभ्यासे । म्नायतेऽनेनेति मलोपो निपातनात् । नाम । 'आख्याऽऽह्वे अभिधानं च नामधेयं च नाम चेत्यमरः' षोऽन्तकर्म्मणि । साम । 'साम क्लीबमुपायस्य भेदे वेदांतरेऽपि चेति मेदिनी' । षिञ् बंधने सिनोतिर्दीर्घो निपात्यते । सीमा । 'सीमसीमे स्त्रियामुभे इत्यमरः' । व्येञ् संवरणे । अंत्यस्योत्वम् निपातनात् गुणः । व्योम । रु शब्दे । रोम । गात्रकेशः । पा पाने । पुगागमो निपात्यते । पाप्मा पापम् । वेञ् तंतुसंताने । वेमा । तंतुवायदंडः । अर्द्धर्चादिः । अतेर्मनिण् । णित्वाद्वृद्धिः । इकार उच्चारणार्थः । अत सातत्यगमने । आत्मा । 'आत्मा पुंसि स्वभावेऽपि प्रयत्नमनसोरपि । धृतावपि मनीषायां शरीरब्रह्मणोरपीति मेदिनी' ॥

तत्त्वदीपिका—वेमा तन्तुवायदंडः ।

मू०—हनिमशिभ्यांसिकः ॥ हंसिका । मश शब्दे । मक्षिका ।

सुबोधिनी—हनिमशिभ्यांसिकः । आभ्यां सिकप्रत्ययः स्यात् । सिकप्रत्ययमाह । हन हिंसागत्योः हंसिका 'हंसिका हंसयोषिति' । मश शब्दे रोषकृते च । छशषेति षत्वम् षढोरिति कत्वं षत्वं च । मक्षिका । 'मक्षिका भ्रमरालीस्यादिति हारावली' ॥

मू०—कोररः ॥ कबरः ।

सुबोधिनी—कोररः । कु शब्दे अस्मादरः स्यात् । कबरः । पाटकः । बवयोरैक्यात् ङीपि प्रत्यये कबरी । केशविन्यासः । अन्यत्र कबरा ॥

मू०—गिरउडः ॥

सुबोधिनी—गिरउडः । गॄ निगरणे । अस्मादुडप्रत्ययः । गरुडः ॥

मू०—इन्देःकमिर्नलोपश्च ॥ इदम् ।

सुबोधिनी—इंदेःकमिर्नलोपश्च । इदि परमैश्वर्ये । अस्मात्कमिः स्यात् नलोपश्च कित्वाद्गुणो न । इकार उच्चारणार्थः । इदमिति सर्वादिगणशब्दोयं सन्निहितपरामर्शकः ॥

मू०—कायतेर्डिम् ॥ किम् ।

सुबोधिनी—कायतेर्डिम् । कै शब्दे । अस्मात् डिम् प्रत्ययः स्यात् डित्वाट्टिलोपः किम् ॥

मू०—धातोस्त्रः ॥ वस्त्रम् । अस्त्रम् । छत्रम् ।

सुबोधिनी—धातोस्त्रः । त्रप्रत्ययमाह वस निवासे । वस्त्रं । असु क्षेपणे । अस्त्रं । 'अस्त्रं प्रहरणे चापे करवाले नपुंसकमिति मेदिनी' । छद अपवारणे । चुरादिर्ण्यंतः । इस्मनेति ह्रस्वत्वं णेरिति णिलोपः छत्रम् ॥

मू०—सिविमुच्योष्टेरूः ॥ षिवु सूत्रम् । मुच्लृ मूत्रम् ।

सुबोधिनी–सिविमुच्योष्टेरूः । आभ्यां त्रप्रत्ययः स्यात् । अनयोष्टेरूकारादेशश्च कित्वान्न गुणः । षिवु तंतुसंताने । सूत्रं । 'सूत्रं तु सूचनाग्रंथे सूत्रे तंतुव्यवस्थयोरिति विश्वः' । मुच्लृ मोक्षणे । मूत्रम् ॥

**मू०–अमादेः क्त्रः ॥** आंत्रम् । चित्रम् । मित्रम् । वश उष्ट्रः ।

सुबोधिनी–अमादेःक्त्रः । अम गतिशब्दसंभक्तिषु । अमांतस्येतिदीर्घः आंत्रं । चिञ् चयने । चित्रम् । आलेख्याश्चर्ययोश्चित्रमित्यमरः । ञिमिदा स्नेहने । मित्रम् । 'मित्रं सुहृदि न द्वयोः । सूर्य्ये पुंसि इति मेदिनी' । उष दाहे । ष्टुत्वं । उष्ट्रः । 'उष्ट्रे क्रमेलकमयमहांगा इत्यमरः' ॥

**मू०–पूञो ह्रस्वश्च ॥** पुत्रः ।

सुबोधिनी–पूञो ह्रस्वश्च । पूञ् पवने । अस्मात् क्त्रः स्यात् धातोर्ह्रस्वत्वं च । पुनाति स्ववंश्यानिति पुत्रः । पुत् नरकस्तस्मात् त्रायते इति आतोड इति डप्रत्यये पुत्र इति व्युत्पत्यंतरम् ॥

**मू०–स्त्यायतेर्ड्रट् ॥** स्त्री ।

सुबोधिनी–स्त्यायतेर्ड्रट् । स्त्यैष्ट्यै शब्दसंघातयोरस्मात् ड्रट् स्यात् । टित्वादीप् डित्वाट्टिलोपः । यवयोर्वसे इति यलोपः स्त्री । 'स्त्रीयोषिदबला योषा नारी सीमंतिनी वधूरित्यमरः ॥

**मू०–गमेरा ॥** गात्रम् ।

सुबोधिनी–गमेरा । गम्लृ गतौ । अस्य मस्यात्वं स्यात् त्रप्रत्ययश्च गात्रं । ' गात्रमंगे कलेवरे स्तंबेरमाग्रजंघादि विभागेपि समीरितमिति विश्वः' ॥

**मू०–चरादेरित्रञ् ॥** चारित्रम् । वादित्रम् ।

सुबोधिनी–चरादेरित्रञ् । इत्रञ्प्रत्ययमाह । ञित्वाद्वृद्धिः । चर गतौ । चारित्रं । वद व्यक्तायां वाचि ञ्यंतः । वादित्रम् तूर्यादिः ॥

**मू०–अशित्रादिभ्यइत्रोत्रौ ॥** आशित्रम् । वहित्रम् । धरित्री । अमित्रः । त्रैङ् त्रोत्रम् ।

सुबोधिनी–अशित्रादिभ्यइत्रोत्रौ । अशिश्च त्राच तौ आशित्रौ आशित्रौ आदी येषांते अशित्रादयस्तेभ्यः द्वद्वांते श्रूयमाणः शब्दः प्रत्येकं संबध्यते इत्यादिशब्दः प्रत्येकं योज्यः । अशूङ् व्याप्तौ इत्यादिभ्य इत्रः प्रत्ययः स्यात् । त्रैङ् पालने इत्यादिभ्यः उत्रप्रत्ययः स्यात् । अशूङ् । आशित्रं । वह प्रापणे । वहित्रम् । धृञ् धारणे । धरित्रं । ईपि धरित्री । अम गतौ । आमित्रः शत्रुः । मित्रं नेति विग्रहे त्वमित्रमिति नपुंसकं त्रैङ् आत्वे उत्रे च त्रोत्रं प्रहरण । वृञ् वरणे । वरुत्रम् प्रावरणम् ॥

तत्वदीपिका–तोत्रमिति प्रहरणे ।

**मू०—चितेः कणः कश्च ॥ चिक्कणम् ।**

सुबोधिनी—चितेः कणः कश्च । चिती संज्ञाने । अस्मात् कण प्रत्ययः स्यात् तस्य कश्च बाहुलकाद्गुणाभावः । चिक्कणं । 'चिक्कणं मसृणं स्निग्धमित्यमरः' ॥

तत्त्वदीपिका—चिक्कणमिति स्निग्धम् ।

**मू०—सूचेस्स्मः ॥ सूक्ष्मम् ।**

सुबोधिनी—सूचेःस्मः । सूच पैशून्ये । चुरादिरस्मात् स्म प्रत्ययः स्यात । णेरिति णिलोपः । कुत्वषत्वे । सूक्ष्मं । 'सूक्ष्मं स्यात्कंटके ऽध्यात्मे पुंस्यणौ त्रिषु चाल्पके' इति मेदिनी॥

**मू०—पातेर्डुम्सुः ॥ पुमान् ।**

सुबोधिनी—पातेर्डुम्सुः । पा रक्षणेऽस्मात् डुम्सुप्रत्ययः स्यात् डित्वाट्टिलोपः । उदित्वात् स्त्रियामीप् । सुपुंसी । पुंसोऽसुङित्यसुङ् । पुमान् ॥

**मू०—भुजादेःक्विष्यः ॥ भुजिष्यो दासः ।**

सुबोधिनी—भुजादेःकिष्यः । भुज पालनादौ । अस्मात् किष्यप्रत्ययः स्यात् कित्वान्न गुणः । भुजिष्यः । 'भुजिष्यस्तु स्वतंत्रे च हस्तसूत्रकयोः स्त्रियामिति मेदिनी । भुजिष्यः परिचारक इत्यमरः' ॥

**मू०—वसादेस्तिः ॥ वस्तिः । शास्तिः । अगमस्यतीति अगस्तिः ।**

सुबोधिनी—वसादेस्तिः । तिप्रत्ययमाह । वस निवासे वस आच्छादने च वस्तिः 'वस्तिर्द्वयो निरूहे नाऽभ्यधोभूमिदशासु चेति मेदिनी । बस्तिर्नाभेरधोद्वयोरित्यमरः' । शासु अनुशिष्टौ शास्तिः । राजदंडः । असु क्षेपणे । विंध्याख्यमगमस्यतीति हलादौरिति टिलोपः। अगस्तिः । 'अगस्तिः कुंभयोनौ च वंगसेनतरौ पुमानिति मेदिनी' ॥

तत्त्वदीपिका—वस्तिरिति । वस्तिर्नाभेरधो द्वयोः । दशासूत्रेपि वस्तयः । शास्तिरिति । राजदण्डे अगमिति विंध्याख्यमित्यर्थः ।

**मू०—वौतसेः ॥ तसु उपक्षये । वितस्तिः । पत्तिः ।**

सुबोधिनी—वौतसेः । तसु उपक्षये । अस्मात् विपूर्वात्तिः स्यात् । वितस्तिः 'अंगुष्ठे सकनिष्ठे स्यात् वितस्तिर्द्वादशांगुलइत्यमरः । स्त्रीपुंसयोर्वितस्तिः स्यादित्यमरमाला' । पद गतौ । पत्तिः । ॥

**मू०—दृणातेर्ह्रस्वः ॥ दृतिः ।**

सुबोधिनी—दृणातेर्ह्रस्वः । दॄ विदारणे अस्मात्तिः स्यात् धातोर्ह्रस्वत्वं च दृतिः । 'दृतिश्चर्म पुटे मत्स्ये ना' इति मेदिनी ॥

**मू०—कृतॄकृपिभ्यः कीटः ॥ किरीटम् । तिरीटम् । कृपीटम् ।**

सुबोधिनी—कृतॄकृपिभ्यःकीटः । कीटप्रत्ययमाह । कित्त्वान्नगुणः । कॄ विक्षेपे । ऋतइरितीर् । किरीटं । 'किरीटं मुकुटे न स्त्रीति हेमचंद्रः' । तॄ प्लवनसंतरणयोः । ऋतइरितीर् । तिरीटं सुवर्णं शिरोवेष्टनं च । कृपू सामर्थ्ये । कृपीटं । 'गोमीकृपीटमुदरे नीरे' इति विश्वः ॥

तत्त्वदीपिका—किरीटमिति । शिरोवेष्टने । तिरीटमिति सुवर्णे । कृपीटमिति वारिकुक्ष्योश्च ।

**मू०—धातोरसुः ॥ चेतः । सरः । पयः ।**

सुबोधिनी—धातोरसुः । असुप्रत्ययमाह । उदित्वादीप् चित संचेतने । चिती संज्ञाने । चुरादिश्च । चेतः । ‘ चित्तं तु चेतो हृदयं स्वांतं हृन्मानसं मन इत्यमरः’ । सृ गतौ । सरः ईपि सरसी । ‘ सरसी तु महासर इति शब्दार्णवः । महांति सरांसि सरस्य इति भाष्यम् ’। पय गतौ । पीङ् पाने च । पयः । ‘ पयः स्यात् क्षीरनीरयोरिति मेदिनी ’ ॥

**मू०—अशेर्युट्स्तुतौ ॥ स्तूयते इति यशः ।**

सुबोधिनी—अशेर्युट्स्तुतौ । अशूङ् व्याप्तावस्मात् असुः स्यात् धातोर्युडागमश्च । यशः कीर्तिः ॥

**मू०—उब्जेर्बलेबलोपः ॥ ओजः ।**

सुबोधिनी—उब्जेर्बलेबलोपः । उब्ज आर्जवे । अस्मादसु स्यात् बले वाच्ये बस्य लोपश्च । ओजः । ‘ ओजो दीप्ताववष्टंभे प्रकाशबलयोरपीति मेदिनी’ । ॥

**मू०— श्रिञःशिरःकिच्च ॥ शिरः ।**

सुबोधिनी—श्रिञःशिरःकिच्च । श्रिञ् सेवायां । अस्मादसुः स्यात् स च कित् धातोः शिरादेशश्च । शिरः । ‘उत्तमांगं शिरः शीर्षमित्यमरः’ । कप्रत्यये तु शिर इत्यदंतोपि शिरोवाची । ‘शिरोदंतो रजोवाची रजस्तथेति कोशांतरम्’ । पिंडं दद्याद्गयाशिरे इति वायुपुराणे । ‘कुण्डलैर्वृष्टगंडानां कुमाराणां तरस्विनां । निचकर्त शिरान् द्रौणिर्नालेभ्य इव पंकजानिति महाभारते’ ॥

**मू०—अर्तेरुरः ॥ उरः ।**

सुबोधिनी—अर्तेरुरः । ऋगतावस्मादसुः स्यात् स च कित् धातोरुरादेशश्च । उरः । ‘उरो वत्सं च वक्षश्चेत्यमरः’ ॥

**मू०—व्याधौशुट् ॥ अर्शः ।**

सुबोधिनी—व्याधौशुट् । ऋ गतौ । अस्मादसुः स्यात् प्रत्ययस्य शुडागमश्च स्यात् व्याधौ वाच्ये । अर्शः । गुदव्याधिः ॥

तत्त्वदीपिका—अर्शइति गुदव्याधौ ।

**मू०— उदकेनुट् ॥ अर्णः ।**

सुबोधिनी—उदकेनुट् । अर्तेरसुः स्यात् तस्य नुट् च अर्णः । जलम् ॥

**मू०— इणआगसि ॥ एनः ।**

सुबोधिनी—इणआगसि । इण् गतावस्मात्पापे वाच्येऽसुः स्यात् प्रत्ययस्य नुगागमश्च । एनः । पापम् ॥

**मू०— स्रुरीभ्यांतुट्च ॥ स्रोतः । रेतः ।**

सुबोधिनी–स्रुरीभ्यांतुट्च । आभ्यामसुः स्यात् प्रत्ययस्य तुडागमश्च । स्रु गतौ । स्रोतः । 'स्रोतोंबुवेगेन्द्रिययोरिति विश्वः' । रीङ् श्रवणे । रेतः । 'रेतः शुक्र पारदे चेति मेदिनी' ॥

**मू०– पातेरुदकेथुट् ॥ पाथः ।**

सुबोधिनी–पातेरुदकेथुट् । पा रक्षणे । अस्मादसुः प्रत्ययः स्यात् प्रत्ययस्य थुडागमश्च पाथः । 'कबंधमुदकं पाथ इत्यमरः' ॥

**मू०– अदेर्भक्तेधोनुम्च ॥ अन्धः ।**

सुबोधिनी–अदेर्भक्तेधोनुम्च । अद् भक्षणे । अस्मादसुः स्यात् धातोर्दस्य धो नुम् च । अंधः । 'भिस्सा स्त्री भक्तमंधोन्नमित्यमरः' ॥

**मू०– आपउदकेऱ्हस्वोनुम्भौ ॥ अम्भः ।**

सुबोधिनी–आपउदकेऱ्हस्वोनुम्भौ । आप्नोतेरसुः स्यात् धातोर्ऱ्हस्वत्वं च नुमागमो भश्चांतादेशः उदके वाच्ये । अम्भः । उदकम् ॥

**मू०– नहेर्दिविभः ॥ नभः ।**

सुबोधिनी–नहेर्दिविभः । णह बंधने । अस्मात् गगने वाच्ये असुः स्यात् भश्चांतादेशः। नभः । 'नभो व्योम्नि नभो मेघे श्रावणे च पतत् ग्रहे । घ्राणे मृणालसूत्रे च वर्षासु च नभः स्मृतं इति विश्वः । नभः खं श्रावणो नभा इत्यमरः । नभं तु नभसा सार्द्धमिति द्विरूप-कोशः' ।

**मू०– इणआगअपराधे ॥ आगः ।**

सुबोधिनी–इणआगअपराधे । इण् गतावस्मादसुः स्यात् अपराधे वाच्ये धातोरागा-देशश्च । आगः । 'आगः पापापराधयोरिति विश्वः । आगोऽपराधो मंतुश्चेत्यमरः' ॥

तत्त्वदीपिका–आगः पापापराधयोः ।

**मू०– अमेर्हुक् ॥ अंहः ।**

सुबोधिनी–अमेर्हुक् । अमगत्यादावस्मादसुः स्यात् धातोर्हुगागमश्च । अमंति गच्छंत्य-धस्तादनेनेति । अंहः । दुरितम् ॥

**मू०– रमेश्च ॥ रंहः । देशेहच । रमंतेऽस्मिन् रहः ।**

सुबोधिनी–रमेश्च । रमुक्रीडायामस्मादसुः स्यात् धातोर्हुगागमश्च रंहः । वेगः । देशे वाच्ये रमे रसुः स्यात् धातोर्मस्य हश्च रहः । 'रहस्तत्त्वे रते गुह्ये इति मेदिनी '॥

**मू०– रंज्यादेःकित ॥ रजः । भुवः ।**

सुबोधिनी–रंज्यादेःकित् । असुः स्यात् स च कित् । रंज रागे । कित्त्वान्नोलोपा इति नलोपः । रजः । 'रजः क्लीबं गुणांतरे । आर्त्तवे च परागे च रेणुमात्रेऽपि दृश्यते'

इति मेदिनी । कप्रत्यये अकारांतोपि । 'रजोयं रजसा सार्धं स्त्रीपुष्पगुणधूलिष्वित्यजयकोशः'। भू सत्तायां । नुधातोरित्युट् । भुवः । अंतरिक्षं । षष्ठचंतप्रतिरूपकमव्ययमिदम् ॥

**मू०— वसेर्णित् ॥ वासः ।**

सुबोधिनी—वसेर्णित् । वस निवासे । अस्मादसुः स्यात् स च णित् । णित्वाद्वृद्धिः । वासः । वस्त्रम् ॥

**मू०— चंदेरादेश्चच्छः ॥ छन्दः ।**

सुबोधिनी—चंदेरादेश्चच्छः । चदि आल्हादने अस्मादसुः स्यात् धातोश्चस्य छश्च । छंदः । 'छंदः पद्यप्रभेदेऽपि स्वैराचाराभिलाषयोरिति मेदिनी' । अदंतोप्ययं । 'छंदावभिप्राय-वशाविति द्विरूपकोश'ः ॥

**मू०—वचादेस्सुट् ॥ वक्षः । पक्षः ।**

सुबोधिनी—वचादेस्सुट् । वच परिभाषणे इत्यादिभ्योऽसुः स्यात् प्रत्ययस्य सुडागमश्च चस्य कत्वे सस्य षत्वं । वक्षो हृदयं । डुपचष् पाके । पक्षः । 'पक्षसी तु स्मृतौ पक्षौ इति'।

तत्त्वदीपिका—पक्षइति । पक्षसी तु स्मृतौ पक्षौ ।

**मू०—नञिहनएहच ॥ अनेहाः । अनेहसौ ।**

सुबोधिनी—नञिहनएहच । असिप्रत्ययमाह । नञ्युपपदे हंते रसिप्रत्ययः स्यात् धातो-रेहादेशश्च । इकार उच्चारणार्थः हन हिंसागत्योः । उशनसामिति सेर्डा । अनेहाः । कालः॥

**मू०—विधाञोवेधच ॥ वेधाः ।**

सुबोधिनी—विधाञोवेधच । डुधाञ् धारणादौ । विपूर्वादस्मादसिः स्यात् सोपसर्गस्य धातोर्वेधादेशश्च । विदधातीति वेधाः । अत्वसोःसाविति दीर्घः । 'वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनीति मेदिनी' ॥

**मू०—चन्द्रेमाङोडित् ॥ चन्द्रमाः ।**

सुबोधिनी—चंद्रेमाङोडित् । चंद्रोपपदान्माङोऽसिः स्यात् स चाडित् । डित्वाट्टिलोपः । माङ्माने । चंद्रं रजतममृतं च मिमीतेऽसौ चंद्रमाः । अत्वसोःसाविति दीर्घः ॥

**मू०—पुरसिधाञः ॥ पुरोधाः ।**

सुबोधिनी—पुरसिधाञः । पुरस्शब्दे उपपदे धाञोऽसिप्रत्ययः स्यात् । डुधाञ् धारणादौ पुरोधाः । 'पुरोधास्तु पुरोहित इत्यमरः' ॥

**मू०—उषःकित् ॥ उषः ।**

सुबोधिनी—उषःकित् । उष दाहे अस्मादासिः स्यात् स च कित् किन्त्वान्न गुणः । उषः प्रभातम् ॥

**मू०—दमेरुनासिः ॥ दमुनाः ।**

सुबोधिनी–दमेरुनसिः । दमु उपशमे अस्माद्रुनसिः स्यात् । दमुनाः । 'सप्तार्चिर्दमुनाः शुक्र इत्यमरः' ॥

तत्त्वदीपिका–दमुना अग्निः ।

**मू०–वशेःकनसिः ॥ उशनाः ।**

सुबोधिनी–वशेःकनसिः । वश कांतावस्मात् कनसिः स्यात् । किंत्त्वादूग्रहामिति संप्रसारणं । उशनाः । 'उशना भार्गवः कविरित्यमरः' ॥

**मू०–अंगिराद्यः ॥ अगि अङ्गिराः ।**

सुबोधिनी–अंगिरादयः । असि प्रत्ययांता निपात्यंते । अगि गतौ । असि प्रत्ययस्य इडागमो निपातनात् । अंगिराः । ऋषिभेदः ॥

**मू०–अपूपूर्वस्सर्त्तिः ॥ अप्सराः ।**

सुबोधिनी–अप्पूर्वःसर्तिः । सृगतावप्पूर्वः अप्सराः । स्त्रियांबहुष्वप्सरसः । स्यादेकत्वेप्सरा इति शब्दार्णवः । 'अपूसरस्त्वप्सराः प्रोक्ताः सुमनाः सुमनः सुचेति द्विरूपकोशः'॥

तत्त्वदीपिका–अप्सरा इति । प्रायेण भूम्नि अप्सरसः ।

**मू०–पुरुपूर्वोरौतिः ॥ पुरूरवाः । इत्युणादौ चतुर्थःपादः ॥**

सुबोधिनी–पुरुपूर्वोरौतिः । रुशब्दे पुरुपूर्वः पुरुशब्दांतस्य दीर्घोनिपातनात् । पुरूरवाः । 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवा इत्यमरः' ॥ इत्युणादिषुचतुर्थःपादः ॥

**मू०–अदिभुवोडुतः ॥ अद्भुतम् ।**

सुबोधिनी–अदिभुवोडुतः । अदित्यव्ययमाकस्मिकार्थे तस्मिन्नुपपदे भूधातोर्डुतः प्रत्ययः स्यात् । डित्वाट्टिलोपः । अद्भुतं । आश्चर्य्यम् ॥

**मू०–गुधेरूमः ॥ गोधूमः ।**

सुबोधिनी–गुधेरूमः । गुध परिवेष्टने । अस्मादूमः स्यात् । गुध्यते वेष्ट्यते प्राणिभिरिति गोधूमः । 'गोधूमो नागरंगे स्यादोषधीव्रीहिभेदयोरिति मेदिनी' ॥

**मू०–मसेरूरः ॥ मसूरः ।**

सुबोधिनी–मसेरूरः । मसी परिणामे अस्मात् ऊरः स्यात् । मसूरः ॥

**मू०–तृहेःक्नोहलोपः ॥ तृणम् ।**

सुबोधिनी–तृहेःक्नोहलोपः । तृहू हिंसायामस्मात् क्नः स्यात् धातोर्हस्य लोपश्च । कित्वाद्गुणाभावः । तृणम् ॥

**मू०–दंसेष्टोनआच ॥ दासः ।**

सुबोधिनी–दंसेष्टोनआच । दसि दंशनदर्शनयोरस्माट्टप्रत्ययः नस्यात्वं च टित्वादीप् । दासः । दासी । 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपीति विश्वः' ॥

तत्त्वदीपिका—दासइति । सेवकशूद्रयोर्दासः दासो धीवरः ।

**मू०—दंशेश्च ॥ दाशः ।**

सुबोधिनी—दंशेश्च । अस्मादपि स्यात् नस्यात्वं च । दाशः । 'कैवर्ते दाशधीवरावित्यमरः' ॥

**मू०—सौरमेःक्तःसोर्दीर्घः ॥ सूरतः ।**

सुबोधिनी—सौरमेःक्तःसोर्दीर्घः । रमु क्रीडायां । सुपूर्वादस्मात् क्तः स्यात् पूर्वपदस्य दीर्घश्च । कित्वात्लोपस्त्वनुदात्ततनामिति मलोपः । सूरतः । उपशांतो दयालुश्च ॥

तत्त्वदीपिका—सूरत इति उपशांतदयावतोः ।

**मू०—पूञोयोणुक्ह्रस्वश्च ॥ पुण्यम् ।**

सुबोधिनी—पूञोयोणुक्ह्रस्वश्च । पूङ् पवने ऽस्माद्यः प्रत्ययः स्यात् धातोर्णुक् ह्रस्वश्च । पुण्यं । 'पुण्यं मनोज्ञेऽभिहिते तथा सुकृतधर्मयोरिति विश्वः' ॥

**मू०—स्रंसतेश्शिरयस्यकित्त्वंकुट्च ॥ शिक्यम् ।**

सुबोधिनी—स्रंसतेःशिर्यस्यकित्त्वंकुट्च । स्रंसु अधःपतने अस्माद् यः स्यात् स च कित् प्रत्ययस्य कुडागमश्च धातोः शिरादेशश्च । शिक्यम् ॥

**मू०—अर्तेःक्युरुट्च ॥ उरणः ।**

सुबोधिनी—अर्तेःक्युरुट्च । ऋगतौ । अस्मात् क्यः प्रत्ययः स्यात् धातोरुदादेशश्च कित्त्वान्नगुणः । युवोरित्यनादेशः । उरणः । 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके इत्यमरः' ।

तत्त्वदीपिका—उरणमिति । मेषे ।

**मू०—उदिदृणातेरउदोदलोपश्च ॥ उदरम् ।**

सुबोधिनी—उदिदृणातेरउदोदलोपश्च । दृ विदारणे । अस्मादुदूपूर्वाद्दः स्यात् उदो दस्य लोपश्च उदरम् ॥

**मू०—खनेर्मुट्डप्रत्ययः ॥ मुखम् ।**

सुबोधिनी—खनेर्मुट्डप्रत्ययः । खनु अवदारणे अस्मात् डः प्रत्ययः स्यात् धातोर्मुडागमश्च । डित्त्वाट्टिलोपः मुखं । 'मुखं निःसरणे वक्त्रे प्रारंभोपाययोरपि । संध्यंतरे नाटकादेः शब्देपि च नपुंसकमिति मेदिनी । मुखमुपाये प्रारंभे श्रेष्ठे निःसरणास्ययोरिति' हैमः ।

**मू०—अमेःसः ॥ अंसः ।**

सुबोधिनी—अमेःसः । अमगतावस्मात्सप्रत्ययः स्यात् । अंसः । 'स्कंधो भुजशिरोंसोऽस्त्रीत्यमरः । अंसः स्कंधे विभागे चेति विश्वः' ॥

**मू०—मुहेःखोमूर्च ॥ मूर्खः ।**

सुबोधिनी—मुहेःखोमूर्च । मुह वैचित्ये । अस्मात्खप्रत्ययः स्यात् धातोर्मूरादेशश्च । मुह्यति इति मूर्खः । 'अज्ञे मूढयथाजातमूर्खवैधेयबालिशा इत्यमरः' ॥

**मू०—नहेर्हलोपश्च ॥ नखः ।**

सुबोधिनी—नहेर्हलोपश्च । णह बंधने अस्मात् खप्रत्ययः स्यात् हकारस्य लोपश्च । नखः । 'नखः कररुहे षंढे गंधद्रव्ये नखं नखीति विश्वः । नखी स्त्रीक्लीबयोः शुक्तौ नखरे पुंनपुंसकमिति मेदिनी ' ॥

**मू०—शीङोऽह्रस्वश्च ॥ शिखा ।**

सुबोधिनी—शीङोऽह्रस्वश्च । शीङ् स्वप्नेऽस्मात्खः स्यात् धातोर्ह्रस्वश्च । ह्रस्वविधान-सामर्थ्याद्गुणाभावश्च । 'शिखा शाखाबर्हिचूडा लांगलिक्यग्रमात्रके । चूडामात्रशिफायां च ज्वालायां प्रपदेऽपि चेति मेदिनी ' ॥

**मू०—माङऊखोमयच्च ॥ मयूखः ।**

सुबोधिनी—माङऊखोमयच्च । माङ् माने । अस्मादूखप्रत्ययः स्यात् धातोर्मयादेशश्च मयूखः । 'मयूखस्त्विट्करज्वालास्वित्यमरः' ॥

**मू०—गलेःफोगस्योच्च ॥ गुल्फः ।**

सुबोधिनी—गलेःफोगस्योच्च । गल अदने अस्मात् फप्रत्ययः स्यात् धातोरकारस्योत्वं च । गुल्फः । 'तद्ग्रंथी घुटिके गुल्फावित्यमरः' । तयोः पादयोर्ग्रंथी इत्यर्थः ॥

तत्त्वदीपिका—गुल्फइति । शरीरावयवरोगयोः ।

**मू०—स्पृशेःश्वुश्वणौपृच्च ॥ पर्शुः । पार्श्वः ।**

सुबोधिनी—स्पृशेःश्वुश्वणौपृच्च । स्पृश स्पर्शने । अस्माच्छ्वुश्वणौ प्रत्ययौ स्तः धातोः पृइत्यादेशश्च णित्त्वाद्वृद्धिः । पर्शुः । पार्श्वः । पर्शुरस्त्री कक्षयोरध इति । पार्श्वमंतिके । 'कक्षाधोऽवयवे वक्रोपायपर्शुसमूहयोरिति हैमः ' ॥

तत्त्वदीपिका—पार्श्वे । स्त्रीकक्षयोरधः ।

**मू०—श्मनिश्रिञोडुन् ॥ श्मन् शब्दो मुखवाची । श्मानं मुखं श्रयते श्मश्रु ।**

सुबोधिनी—श्मनिश्रिञोडुन् ॥ श्रिञ् सेवायामस्मात् श्मन्युपपदे डुन् स्यात् । डित्त्वा-ट्टिलोपः । श्मन् शब्दो मुखवाची मुखमाश्रयते इति श्मश्रु । नोलोप इतिनलोपः । 'तद्वृद्धौ श्मश्रु पुम्मुखे'इत्यमरः । पुरुषमुखे तेषां रोम्णां वृद्धौ श्मश्रु शब्दो वर्तते इत्यर्थः ॥

**मू०—जनेरोजंघच्च ॥ जंघा ।**

सुबोधिनी—जनेरोजंघच्च । जनी प्रादुर्भावे । अस्मादप्रत्ययः स्यात् धातोर्जंघादेशश्च । जंघा ॥

**मू०—हन्तेःशरीरावयवेद्वेच ॥ जघनम् ।**

सुबोधिनी—हन्तेःशरीरावयवेद्वेच । हन् हिंसागत्योरस्मादः स्यात् धातोर्द्वित्वं च । पर्वाद् हतेरिति हस्य घः । जघनं । 'पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघनं पुर इत्यमरः' ॥

तत्त्वदीपिका–जघनमिति । पश्चान्नितंबः स्त्रीकट्याः क्लीबे तु जघनं पुरः ।

**मू०–क्लिशेर्लस्यलोपश्च ॥ केशः ।**

सुबोधिनी–क्लिशेर्लस्यलोपश्च । क्लिशु विबाधनेऽस्मादः स्यात् धातोर्लकारस्य लोपश्च । केशः । 'केशः स्यात् पुंसि वरुणे ह्रीबेरे कुंतलेऽपिचेति मेदिनी' ॥

**मू०–फलेरितः फस्यपः ॥ पलितम् ।**

सुबोधिनी–फलेरितःफस्य पः । फल निष्पत्तौ अस्मादितः प्रत्ययः स्यात् धातोरादेर्वर्णस्य पत्वंच पलितं । 'पलितं जरसा शौक्ल्यमित्यमरः । पलितं शैलजे तापेकेशपाशे च कर्दमे इति मेदिनी' ॥

**मू०–कृञादेर्वुः ॥ करकः । कटकः । कुर गतौ । कोरकः । नरकः ।**

सुबोधिनी–कृञादेर्वुः । वुप्रत्ययमाह । युवोरित्यकादेशश्च । डुकृञ् करणे करकः । कमंडलुः । करका वृष्टिपाषाणाः । कटे वर्षावरणयोः । कटको वलयः । नृनये नरकः । 'स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियामित्यमरः । नरकः पुंसि निरये देवारातिप्रभेदयोरिति मेदिनी' ॥

तत्त्वदीपिका–नरक इति नारकोपि च । कोरकोस्त्री कोरकः पुमानिति । अस्य प्रायेण पुमानिति व्याख्यानात् ।

**मू०–चीकयतेराद्यन्तविपर्ययः ॥ चीकृ शब्दे । कीचकः ।**

सुबोधिनी–चीकयतेराद्यंतविपर्ययः । चीक आमंत्रणे । चुरादिरस्याद्यंतविपर्ययः वुश्च । कीचकः । णेरिति णिलोपः । 'कीचकोध्वनिमद्वंशे दैत्यभेदे द्रुमांतरे' इति हैमः ॥

तत्त्वदीपिका–कीचकइति । वायुना शब्दकारी सच्छिद्रो वंशः ।

**मू०–पचिमच्योरितः ॥ पेचकः । मेचकः । मच शब्दे ।**

सुबोधिनी–पचिमच्योरितः । एतयोरुपधाया अत इः स्यात् वुप्रत्ययश्च । गुणः । डुपच्ष् पाके । पेचकः । 'उलूके करिणः पुच्छे मूलोपांतेच पेचक इत्यमरः । पेचको गजलांगूलेमूलोपांतेच कौशिके इति मेदिनी' । मचि कल्कने मेचकः । 'मेचकस्तु मयूरस्य चंद्रके श्यामले पुमान् । तद्युक्ते वाच्यवत् क्लीबं स्रोतोंजनांधकारयोरिति मेदिनी' ॥

**मू०–जनेररष्ठच ॥ जठरम् ।**

सुबोधिनी–जनेररष्ठच । जन जनने जनी प्रादुर्भावे च आभ्यामरप्रत्ययः स्यात् धातोर्नस्य ठश्च । जठरः । 'जठरः कठिनेऽपि स्यादित्यमरः' ॥

**मू०–हर्यतेःकन्योहिरच ॥ हिरण्यम् ।**

सुबोधिनी–हर्यतेःकन्योहिरच । हर्य गतिकांत्योरस्मात् कन्यप्रत्ययः स्यात् धातोर्हिरादेशश्च । कित्वान्न गुणः । हिरण्यम् । सुवर्णम् ॥

**मू०–कृञःपासः ॥ कर्पासः ।**

सुबोधिनी–कृञःपासः । डुकृञ् करणेऽस्मात्पासप्रत्ययः स्यात् । कर्पासः । अणिप्रत्यये कार्पासं वस्त्रम् ॥

**मू०–ऊर्णोतेर्डः ॥ ऊर्णा ।**

सुबोधिनी–ऊर्णोतेर्डः । ऊर्णुञ् आच्छादने अस्माड्डप्रत्ययः स्यात् । डित्त्वाट्टिलोपः । ऊर्णा । 'ऊर्णा मेषादिलोम्नि स्यादावर्ते चांतराभ्रुवावित्यमरः । भ्रुवोर्मध्ये यआवर्त्तस्तत्रेत्यर्थः । अंतरायोगे भ्रुवाविति द्वितीया ॥

**मू०–दधातेर्यौनुट्च ॥ धान्यम् ।**

सुबोधिनी–दधातेर्यौनुट्च । डुधाञ् धारणपोषणयोरस्माद्यप्रत्ययः स्यात् प्रत्ययस्य नुडागमश्च । धान्यं । 'धान्यं व्रीहिषु धान्याके' इति मेदिनी ॥

**मू०–तनोतेर्डउःसवच्च ॥ तितउः ।**

सुबोधिनी–तनोतेर्डउःसवच्च । तनु विस्तारे अस्मात् डउप्रत्ययः स्यात् । डउप्रत्ययः सप्रत्ययतुल्यो भवति । तेन द्वित्वादि । डित्त्वाट्टिलोपः । यःसे इति पूर्वस्येत्वं । तितउः । पुंसि क्लीबे च । पृथगुच्चारणसामर्थ्याद्गुणो न । 'चालनी तितउः पुमानित्यमरः' ॥

तत्त्वदीपिका–तितउरिति चालन्यां । भाष्ये क्लीबनिर्देशात् । क्लीबता चालनी तितउः पुमानित्यमरोक्तेः पुंस्त्वमिति ।

**मू०–अर्भकादयः ॥ ऋधु अर्भकः ।**

सुबोधिनी–अर्भकादयः । अर्भकादयोनिपात्यंते । ऋधु वृद्धौ अस्मात्कप्रत्ययो धातोर्धकारस्य भश्च निपात्यते अर्भकः । 'अर्भकः कथितो बाले मूर्खेपि कशिपौ तथेति मेदिनी ॥

**मू०–प्रथेरुकूसम्प्रसारणंच ॥ प्रथ । पृथुकः ।**

सुबोधिनी–प्रथेरुकूसंप्रसारणंच । प्रथ प्रख्याने । अस्मादुकू प्रत्ययः स्यात्संप्रसारणं निपात्यते । 'पृथुकः पुंसि चिपिटे शिशौ स्यादभिधेयवदिति मेदिनी' ॥

**मू०–पिबतेःकः ॥ पाकः ।**

सुबोधिनी–पिबतेःकः । पा पानेऽस्मात्कप्रत्ययो निपातनात् । पाकः । 'पाकः परिणतौ शिशौ । देशस्य जरसा शौक्ल्ये स्थाल्यादौ पचनेपि चेति मेदिनी' ॥

**मू०–वदेर्नञियः ॥ अवद्यम् । अव अवमः । अधमः ।**

सुबोधिनी–वदेर्नञियः । वद व्यक्तायां वाचि । नञ्युपपदादस्माद्यप्रत्ययो निपात्यते । अवद्यं पापं । 'कुपूयकुत्सितावद्यखेटगर्ह्याणकाः समा इत्यमरः' । अवरक्षणादौ । अस्मादमप्रत्ययो निपात्यते धातोर्वकारस्य वा धकारश्च । अधमः । अवमः । 'नेकृष्टप्रतिकृष्टार्वरेफयाप्यावमाधमा इत्यमरः' ॥

**मू०– क्लिशेरः ॥ कीनाशः ।**

सुबोधिनी–क्लिशेरः । क्लिश विबाधने । अस्मादप्रत्ययो निपात्यते उपधाया ईत्वं लस्य लोपो नागागमश्च । कीनाशः । 'कीनाशः कर्षकक्षुद्रपांसुघातिषु वाच्यवत् । यमे नेति विश्वः'॥

**मू०–चतेरुरः ॥ चत्वारः ।**

सुबोधिनी–चतेरुरः । चते याचनेऽस्मादुरप्रत्ययः स्यात् । चतुरमृशौचेत्याम् । चत्वारः ॥

**मू०–हन्तेर्घुरच् ॥ घोरम् ।**

सुबोधिनी–हंतेर्घुरच् । हन हिंसागत्योरस्मादप्रत्ययः स्यात् धातोर्घुरादेशश्च । गुणः । घोरं 'घोरं भीमे हरे' इति विश्वः ॥

**मू०–क्षमेरलोपश्च ॥ क्ष्मा ।**

सुबोधिनी–क्षमेरलोपश्च । क्षमूष् सहने । अस्मादप्रत्ययः स्यात् धातोरुपधाया लोपश्च क्ष्मा । 'क्ष्माऽवनिर्मेदिनी महीत्यमरः' ॥

**मू०–तरतेर्ड्रिः । त्रयः । त्रीन् ।**

सुबोधिनी–तरतेर्ड्रिः । तॄ प्लवनसंतरणयोरस्मात् ड्रिप्रत्ययः स्यात् । डित्त्वाट्टिलोपः । एओजसात्यत्त्वं । त्रयः ॥

**मू०–ग्रहेरनिः ॥ ग्रहणिः ।**

सुबोधिनी–ग्रहेरनिः । ग्रह उपादानेऽस्मादनिप्रत्ययः स्यात् । कृदिकारादितीप् च । ग्रहणिः । 'ग्रहणी रुक् प्रवाहिकेत्यमरः' ॥

**मू०–प्रथेरमः ॥ प्रथमः ।**

सुबोधिनी–प्रथेरमः । प्रथ प्रख्यानेऽस्मादमप्रत्ययः स्यात् । प्रथमः । 'प्रथमस्तु भवेदादौ प्रधानेपि च वाच्यवदित्यमरः'। प्रथमचरमेति वैकल्पिकं सर्वादिकार्यमस्य ॥

**मू०–चरेश्च ॥ चरमः ।**

सुबोधिनी–चरेश्च । चर गतिभक्षणयोरस्मादमप्रत्ययः स्यात् । चरमः ॥

**मू०–मंगेरलः ॥ मंगलः । सदोणादयः । सर्वस्मिन्काले उणादयः । उणादयोऽपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्याः । इत्युणादौ पंचमःपादः ॥**

सुबोधिनी–मंगेरलः । मगि गतावस्मादलप्रत्ययः स्यात् । मंगलं । 'मंगलोसितदूर्वायामुमायां पुंसि भूमिजे । नपुंसकं तु कल्याणे सर्वार्थरक्षणेपिचेति मेदिनी' ॥ इत्युणादौ पंचमः पादः ।

तत्त्वदीपिका–उणादयइति । तथा चोणादिषु प्रयोगं दृष्ट्वैवं प्रकृतिप्रत्ययानुबंधककल्पनं कार्यमित्यर्थः ।

इति उणादयः ।

**मू०–तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्** — **तुमतदर्थायाम्भविष्यति ॥** धातोर्भविष्यति काले तुम्प्रत्ययस्तदर्थायां क्रियायां गम्यमानायाम् । गुडं भोक्तुं व्रजाति । व्याकरणं पठितुमीष्टे ।

सुबोधिनी–तुमतदर्थायांभविष्याति । क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोर्भावे तुम् प्रत्ययः स्यात् । तच्छब्देन क्रियाया अर्थः प्रयोजनं यस्याः साक्रियार्था तस्यां क्त्वाद्यंतं चेत्यव्ययसंज्ञा । भुज पालनादौ । भोक्तुं व्रजाति देवदत्तः । भविष्यद्रूपं यद्भोजनं तत् प्रयोजनकं देवदत्तकर्तृकं व्रजनमित्यर्थः । पठ व्यक्तायां वाचि । कृतइतीट् । पठितुमीष्टे देवदत्तः । भविष्यद्रूपं यत्पठनं तत्प्रयोजनकं देवदत्तकर्तृकं कामनमित्यर्थः ॥

तत्त्वदीपिका–तुमतदर्थायामिति । क्रियायामिति । विशेष्यपदमात्रानुवृत्तं । तस्यै क्रियायै इयं तदर्था तस्यां । यद्वा सा क्रिया अर्थः प्रयोजनं यस्याः सा तस्यां । तुमुन्भाव इति पंडिताः ।

**मू०–तुमर्थेवुण् ॥** कृष्णं दर्शको व्रजाति ।

सुबोधिनी–तुमर्थेवुण् । क्रियायां क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोः कर्त्तरि वुण् प्रत्ययः स्यात् । युवोरित्यकादेशः । दृशिर् प्रेक्षणे । कृष्णं दर्शको याति । कृष्णकर्मकं भविष्यदर्शनकर्तृकं दर्शनप्रयोजनकं च यानमित्यर्थः ॥

**मू०–कालसमयवेलासु ॥** अध्येतुं कालः । स्तोतुं समयः । भोक्तुं वेला ॥

सुबोधिनी–कालसमयवेलासु । कालादिषूपपदेषु तुम् स्यात् । पर्य्यायोपादानमर्थोपलक्षणार्थं । इङ् अध्ययने । अध्येतुं कालः । ष्टुञ् स्तुतौ । स्तोतुं समयः । भुज पालनादौ भोक्तुम् वेला । एवमन्ये । इसादियोगेपि अनुवादेऽर्थे तुम् न भवति । सिद्धस्वरूपोच्चारणमनुवादः । भूतानि कालः पचतीति वार्त्ता इति ॥

तत्वदीपिका–कालेति । प्रेरणमात्रानुवर्त्तते तेन भूतानि कालः पचतीति वार्त्तेत्यत्र न ।

**मू०–इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुम् ॥** भोक्तुमिच्छाति वष्टि वांछति वा ।

सुबोधिनी–इच्छार्थेष्वेककर्तृकेषूपपदेषुधातोस्तुम् । अक्रियार्थोपपदार्थमेतत् । भोक्तुमिच्छति वांच्छति । वशकांतावयमपीच्छार्थकः । कांतिरिच्छा इत्युक्तत्वात् । भोक्तुमिच्छेत्यत्र भोजनविषयिणीच्छा प्रतीयते नतु भोजनार्थेच्छेति । एककर्तृकेष्विति किं । पुत्रस्य पठनमिच्छति । पुत्रस्येति कर्त्तरि षष्ठी । पुत्रकर्तृकं पठनमिच्छतीत्यर्थः ॥

तत्त्वदीपिका–इच्छार्थेष्विति । इच्छतिभोक्तुमित्यादाविच्छायां भुजिं प्रति तादर्थ्याभावात् । प्रवृत्तिसामान्ये हेतवस्यावधारित्वेनाप्रतिपाद्यत्वात् । यद्वास्तु तादर्थ्यं । एककर्तृत्वादिलाभार्थमेतत् ।

**मू०–शकधृषज्ञाग्लाघटरभलभक्रमसहार्हाऽस्त्यर्थेषु ॥** शक्नोति भोक्तुम् । धृष्णोति । जानातीत्यादि ।

सुबोधिनी–शकधृषज्ञाग्लाघटरभलभक्रमसहार्हाऽस्त्यर्थेषु । एषूपपदेषु धातोस्तुम् स्यात् । अक्रियार्थोपपदार्थमेतत् । शक्ल शक्तौ । ञिधृषा प्रागल्भ्ये । ज्ञा अवबोधने । ग्लै हर्षक्षये ।

घट चेष्टायां । रभ राभस्ये । डुलभष् प्राप्तौ । क्रमु पादविक्षेपे । षह मर्षणे । अर्ह पूजायाम् । अस् भुवि । अर्थग्रहणमास्तिनैव संबध्यतेऽनंतरत्वात् । भोक्तुं शक्नोति धृष्णोति जानाति इत्यत्र भुज्यर्थो विषयतया संबध्यते । ग्लापयति भोक्तुमित्यत्र भोजनविषयिणी शक्तिर्गृह्यते । भोक्तुं महती योग्यता गम्यते । आरभते भोक्तुमित्यत्र भुजेराद्यावस्था गम्यते । लभते भोक्तुमित्यत्र प्राप्तिर्गम्यते । उत्सहते भोक्तुमित्यत्र भुजेराद्यावस्था गम्यते । अर्हति भोक्तुमित्यत्रापि योग्यता । अस्ति भवति विद्यते वा भोक्तुमित्यादौ संभवमात्रम् ॥

**मू०–पूर्णतावाचिषुसामर्थ्यार्थेषु ॥ पर्याप्तो भोक्तुम् । प्रवीणः । कुशलः । समर्थः । पूर्णतेति किम् । अलं भुक्त्वा । सामर्थ्यार्थेषु किम् । पर्याप्तं भुंक्ते ।**

सुबोधिनी–पूर्णतावाचिषुसामर्थ्यार्थेषु । पर्याप्तिवाचिषु सामर्थ्यवचनेषु उपपदेषुधातोस्तुमु स्यात् । पर्याप्तो भोक्तुं समर्थः कुशलः पटुः प्रवीण इत्यर्थः । पूर्णतावाचिष्विति किं पर्याप्तं भुंक्ते । प्रभूततेह गम्यते । न तु भोक्तुः सामर्थ्यम् ॥

**मू०–घञ्भावे ॥ पाकः । त्यागः । भावः । दायः ।**

सुबोधिनी–घञ्भावे । सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोर्घञ् स्यात् । क्रियांतराकांक्षोत्थापकतावच्छेदकाक्रांतत्वं सिद्धत्वं । पिबतीत्यादौ तु साध्यावस्थापन्ने धात्वर्थे भाव इति भावे इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायामुपपदे भवंतीत्यर्थः । ञित्वाद्वृद्धिः । घित्त्वाच्चजोः कगौ घितीति कः पच्यते पचनं वा पाकः । त्यज वयोहानौ । त्यज्यते त्यजनं वा त्यागः । भू सत्तायां । भूयते भवनं वा भावः । डुदाञ् दाने । दीयते दानं । आतोयुगिति युक् दायः ॥

तत्त्वदीपिका–घञ्इति । भावइति । भवनं भावः क्रियासामान्यं नतु भवत्यर्थमात्रम् । सिद्धताभूय एव भावे घञ् । उक्तं च । क्रियायाः साध्यतावस्था सिद्धावस्था च कीर्तिता । सिद्धतां द्रव्यमिच्छंति तत्रैवेच्छंति घञ्विधिमिति । पाकइति ञित्वादुपधावृद्धिः ञित्वात्कुत्वम् ।

**मू०–संज्ञायामकर्तरिच ॥ कर्तृवर्जिते कारके भावे च घञ् सञ्ज्ञायामसञ्ज्ञायाञ्च । कार्य्यम्प्रत्याह्रियते यः सः प्रत्याहारः । दीयतेऽस्मै दायः । विक्रियतेऽनेनेति विकारः । उपाध्यायः । घञर्थे कः । घञोऽपवादः । विशेषेण हन्यते कार्य्यमनेनेति विघ्नः । सुघ्नः ।**

सुबोधिनी–संज्ञायामकर्तरिच । कर्तृभिन्ने कारकेऽर्थे धातोर्घञ् स्यात् संज्ञायामसंज्ञायां च वाच्यमानायां । हृञ् हरणे । प्रत्याह्रियते इति प्रत्याहारः । डुदाञ्दाने । दीयते अस्मै इति आतोयुगिति युक् दायः । डुकृञ् करणे । विक्रियतेऽनेनेति विकारः । इङ् अध्ययने । उपेत्याऽधीयतेऽस्मादित्युपाध्यायः । स्वराद इत्यस्यापवादोऽयं घञ् ॥

तत्त्वदीपिका–भावइति । बाहुलकादनुपसर्गाद्धुवोपिघञ् । उपाध्यायेति । घञंतस्य पुंस्त्वनियमात्कथमिति चेत्सत्यं । अपादाने स्त्रियामप्यभिधानात् ।

**मू०–स्वरादः ॥ भावादौ । घञोऽपवादः । चयनं चयः । नयनं नयः । षिञ् बन्धने । विशेषेण सीयंते बध्यंते जना अनेनेति विषयः । स्तूयते अनेनेति-**

स्तवः । सवनं सवः । लवनं लवः । कृञ् क्रियते कार्य्यमनेनेति करः । गिरत्यतेनेति गरः । गलः । द्व्याद्युपसर्गहीनस्य छादेर्ह्रस्वोऽप्रत्यये । परिच्छदः । छत्रम् । दन्ता छाद्यन्तेऽनेनेति दन्तच्छदः ओष्ठः । द्व्यादिकिम् । अन्ववप्रच्छादः । समवपरिच्छादः ।

सुबोधिनी-स्वरादः । स्वरांताद्धातोरप्रत्ययः स्यात् भावादौ । घञोऽपवादः । चिञ् चयने चयः । णीञ् प्रापणे । नयः । षिञ् बंधने । विपूर्वः विषयः । ष्टुञ् स्तुतौ । स्तवः । 'स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः' । लुञ् छेदने । लवः । 'लवलेशकणाणव इत्यमरः' । कृविक्षेपे करः । गॄ निगरणे । गरः ॥

मू०-मदामः ॥ मदादीनामप्रत्ययो भावादौ । मदः । पणः । प्रमदः । संमदः । शमः । आश्रमः ।

सुबोधिनी-मदामः । मदादिभ्योऽप्रत्ययः स्यात् भावादौ । मदी हर्षे । मदः प्रमदः संमदः पण व्यवहारे स्तुतौ च । पणः । शमु उपशमे । श्रमू तपसि खेदे च श्रमः ॥

तत्वदीपिका-मदामइति । मदइति । मद्यतेनेनेतिकरणादावपि । कथंप्रमादोनवधानतेति । बाहुलकाद्घञपि । यद्वा मद एव माद इति स्वार्थिकणान्तस्यप्रशब्देन पश्चात्समासः । सम इति । अथ कथं विश्राम इति अपाणिनीयमिति तु दीक्षितः । विश्रामं लभतामिदं च शिथिलं ज्यावद्धमस्मद्धनुरित्यादौ तु विश्रान्तिपदप्रक्षेपेणाप्युपपत्तिः विश्राममूरिति त्वन्याय्यमेवेति वामनादयः । वस्तुतस्त्वत्रापिप्रमादशब्दवत्समाधानम् ।

मू०-मूर्तौघनः ॥ काठिन्ये परिच्छेदे च हन्तेरप्रत्ययो घनादेशश्च । दधिघनः । सैन्धवघनः ।

सुबोधिनी-मूर्तौघनः । मूर्तिः काठिन्यं तस्मिन्नभिधेये हंतेरः स्यात् धातोर्घनादेशश्च कठिनं दधि इति दधिघनः । परिच्छेदे सैंधवघनः ॥

तत्वदीपिका-मूर्तौघनइति । मूर्तिः काठिन्यम् ।

मू०-हनोवधोऽप्रत्ययश्च ॥ हननमिति वधः ।

सुबोधिनी-हनोवधोऽप्रत्ययश्च । अनुपसर्गाद्धंतेर्भावे अप्रत्ययः स्यात् धातोर्वधादेशश्च । वधः । चकारात् घञपि । हनोघदिति घदादेशः । घातः ॥

मू०-ट्वितोऽथुः ॥ ट्वितोधातोरथुर्भवति भावादौ । टुवेपृ कम्पने वेपनं । वेपथुः । वमथुः । नन्दथुः । श्वयथुः ।

सुबोधिनी-ट्वितोथुः । अयमपि स्वभावाद्भावे एव । टुवेपृ कंपने । वेपथुः । टुणदि समृद्धौ । नंदथुः । टुओश्विइर् गतिवृध्व्योः श्वयथुः ॥

तत्वदीपिका-ट्वितोथुरिति । टुरितस्य स ट्वित् तस्मात् ।

मू०-ड्वितात्रिमकृतत्कृते ॥ ड्वितो धातोस्त्रिमक् प्रत्ययो धात्वर्थेन कृतेर्थे । करणेन निर्वृतः कृत्रिमः घटः । पक्त्रिमः ।

सुबोधिनी–ड्वितक्त्रिमक्तत्कृते । धात्वर्थनिर्वृत्तेऽर्थेऽयं स्वभावाद्भावे । कित्त्वात्संप्रसारणादि । डुकृञ् करणे करणेन निर्वृतः कृत्रिमः । डुपचष् पाके । पाकेन निर्वृतः पक्त्रिमः । टुवपू बीजतंतुसंताने । वापेन निर्वृतं यजामिति संप्रसारणं । उप्त्रिमम् ॥

तत्वदीपिका–ड्वितइति । डुइत्यस्य स ड्वित् तस्मात् । तत्कृतेइति । तेन धात्वर्थेन कृतस्तत्कृतस्तास्मिन्नित्यर्थः । यद्यपि भावादावित्यनुवर्त्तते तथापि स्वभावात् भाव एवैतद्वयं नहि कृतेन निर्वृत्तमित्येवं क्वापि विग्रहः ।

**मू०–नंकी ॥** धातोर्नङ्की प्रत्ययो भावादौ । यज इज्यन्ते देवो अनेनेति यज्ञः । याञ्चा । यततीति यत्नः । प्रच्छविच्छोशोनेऽसम्प्रसारणं च । विश्नः । प्रश्नः । रक्ष पालने । रक्ष्णः । स्वप्नः । अन्तः धीयते यः सः अन्तर्द्धिः । आधिः । विशेषेण जनेषु पीडा आधीयतेऽनेनेति व्याधिः । प्रकर्षेण दधाति रथमार्गमनेनेति प्रधिः । वारि धीयतेऽस्मिन्निति वारिधिः । पाथः धीयतेऽस्मिन्निति पाथोधिः ।

सुबोधिनी–नङ्की । ङकारककारा एतौ भावे कर्तरि कारके च भवतः । नङ्प्रत्ययमाह । क्ङिति चेति गुणो न । यज देवपूजादौ । श्चुत्वं यज्ञः । 'यज्ञः सवोऽध्वरो याग' इत्यमरः । टुयाचृ याञ्चायां । याञ्चा । यती प्रयत्ने । यत्नं । क्ङितिझसेकौञमेचेत्यनेन प्रच्छविच्छोः शोने प्रच्छ ज्ञीप्सायां । ग्रहामिति संप्रसारणं न । भाष्याऽनुक्तत्वात् । प्रश्नः । विश प्रवेशने विश्नः । रक्ष पालने । रक्ष्णः । ञिष्वप् शये । स्वप्नः । किप्रत्ययमाह । डुधाञ् धारणादौ आतोनपीत्यालोपः । अंतर्द्धिः । प्रधिः । पयांसि धीयंतेऽस्मिन्निति पयोधिः । वारिधिः । डुदाञ् दाने अदादिः ॥

तत्वदीपिका–नङ्कीति । नङ् च किश्च नङ्की । यज्ञ इति यजनं यज्ञः । यज्ञार्थात्कर्मणोऽन्यत्र लोकोयं कर्मबंधन इत्यत्र तु । इज्यतइति यज्ञो विष्णुरिति कर्मणि व्याख्यानम् । याञ्चेति । यद्यपि नङन्ताः पुंस्येव तथाप्ययं स्त्रीलिंगः स्वभावात् । प्रश्न इति । संज्ञापूर्वकत्वेनानित्यत्वान्नसंप्रसारणं । अंतर्द्धिरिति कित्वादातो लोप इत्यालोपः । आधिरिति । आदानमादीयत इति वा । वारिधिरिति । वारीणि धीयन्तेऽस्मिन्निति वारिधिः

**मू०–युट्भावेच ॥** ज्ञानम् । करणम् । कारणम् ।

सुबोधिनी–युट्भावेच । धातोर्भावे युट्स्याच्चकारात् । युण् च । युवोरित्यनादेशः । टित्त्वादीप् । ञित्त्वाद्वृद्धिः । ज्ञा अवबोधने । ज्ञानम् । डुकृञ् करणे । युण् प्रत्ययः । कारणम् ॥

**मू०–साधनाधारयोश्च ॥** पच्यतेनेनेति पचनोऽग्निः । पच्यतेऽस्यां पचनी । स्थाली ।

सुबोधिनी–साधनाधारयोश्च । साधनेऽधिकरणे चार्थे धातोर्युट् प्रत्ययः स्यात् । डुपचष् पाके । पच्यतेऽनेनेति पचनः । अत्र करणे युट् । ष्टित इतीप्पच्यतेऽस्यामित्यधिकरणे युट् । पचनी ॥

**मू०–ईषद्दुःसुषुखल्यू ॥** ईषदादिषु प्रयुज्यमानेषु खल्यू एतौ भावादौ । ईषद्भवः । दुर्भवः । सुकरः । दुःखेन युध्यतेऽस्मादिति दुर्योधनः । दुःखेन शिष्यते इति दुश्शासनः । कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु चोपपदेषु भूकृञोः

खल् । अदुराढ्येन दुराढ्येन भूयते दुराढ्यंभवं भवता । अस्वाढ्यः स्वाढ्यः क्रियते स्वाढ्यंकरः ।

सुबोधिनी–ईषद्दुःसुषुखल्यू । एषूपपदेषु धातोः खल्यू प्रत्ययौ स्तः भावे कर्मणि च । खल्प्रत्ययमाह । खित्त्वात् खितिपदस्येति मुम् । भू सत्तायां । ईषद्भवः । दुर्भवः । डुकृञ् करणे । सुकरः । युप्रत्ययमाह । युध संप्रहारे । दुःखेन युध्यते इति दुर्योधनः । शासु अनुशिष्टौ दुःखेन शिष्यते इति । दुःशासनः । दुरिति कृच्छ्रार्थे वर्त्तते इतरौ त्वकृच्छ्रार्थे वर्तेते कर्तृकर्मणोश्च्व्यर्थयोरीषदादिषु चोपपदेषु भूकृञोः खल् । कर्तृकर्मवाचकौ शब्दौ धातोरव्यवधाने तु प्राक् प्रयुज्येते । ईषदादयस्तु ताभ्यां प्राक् प्रयोज्याः दुःखेनाढ्येन भूयते इति दुराढ्यंभवं भवता । अक्तादाविति निषेधात् कर्तरितृतीया सुखेनानाढ्यः क्रियते स्वाढ्यंकरः सः ।

तत्त्वदीपिका–ईषद्दुःसुषु खल्यू । खल्यू लकार इखखीत्यत्रोक्तात्खप्रत्ययाद्भेदज्ञापनार्थःखकारो मुमागमार्थः ईषद्भवइति । ईषद्भवनम् ।

मू०–तव्यानीयौ ॥ भावकार्ययोः । एधितव्यं । एधनीयं । आसितव्यं । आसनीयं । पातव्यम् । पानीयम् ।

सुबोधिनी–कृत्यसंज्ञकान् प्रत्ययानाह तव्यानीयौ । धातोरेतौ प्रत्ययौस्तः भावकर्मणोः । तव्यप्रत्ययमनीयप्रत्ययं चाह । एध वृद्धौ कृत इतीट् एधितव्यं । एधनीयं त्वया । आस उपवेशने । आसितव्यं । आसनीयं । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च ॥

तत्त्वदीपिका–तव्यानीयाविति । एधनीयमिति । भावे एकवचनमेव । औत्सर्गिकत्वात् क्लीबत्वं च लिंगविशेषात् ।

मू०–वसेस्तव्यःकर्त्तरिणिच्च ॥ वसतीति वास्तव्यः ।

सुबोधिनी–वसेस्तव्यःकर्तरिणिच्च । वस निवासे इत्यस्यैव ग्रहणं न तु वस आच्छादने इत्यस्य । लुग्विकरणत्वात् । वस निवासे अस्मात् कर्तरि तव्यः स्यात् । स च णित् । णित्त्वाद्वृद्धिः ॥

तत्त्वदीपिका–वसेरिति । वसति वस निवासे इत्यस्यैव ग्रहणं नतु वस आच्छादन इत्यस्य । वास्तव्य इति णित्वाद्वृद्धिः । वस्तुनि भवो वास्तव्य इति ण्यप्रत्ययेनैव रूपसिद्धिमिच्छन्तः केचिदेतन्न मन्यंते ।

मू०–केलिमः ॥ सौकर्ये धातोः केलिमः प्रत्ययो भवति । पचेलिमा माषाः । भिदेलिमाः सरलाः ।

सुबोधिनी–केलिमः । धातोः कर्मणि केलिमः प्रत्ययः स्यात् । कित्त्वान्न गुणः । भिदिर् विदारणे । भिदेलिमाः सरलाः । डुपचष् पाके । पचेलिमा माषाः । पक्तव्या इत्यर्थः ॥

मू०– स्वराद्यः ॥ स्वरांताद्धातोर्यः । चेयम् । जेयम् । तव्यादयोऽपि । चेतव्यः । चयनीयः । दित्स्यम् ।

सुबोधिनी—स्वराद्यः । स्वरग्रहणं धातोर्विशेषणं विशेषणेन तदंताविधिः चिञ् चयने । चेयम् । जि जये । जेयं । तव्यादयोपि भवंति । चेतव्यः । चयनीयः । डुदाञ् दाने अस्मादिच्छायामात्मनः स इति सः । इस्से इति इसादेशः द्वित्वलोपश्च । सस्तोनपीति सस्य तः । दित्साति । सांताद्यप्रत्यये यत इत्यलोपः दित्स्यते इति दित्स्यम् ॥

तत्त्वदीपिका—स्वराद्य इति । यद्वाव्यं तद्भविष्याति इत्यत्र तु ओरावश्यक इति घ्यण् । अत्र स्वरग्रहणं चिस्यं धातोर्विधित्वेनैव हसान्ताद्घ्यणो विधानेन परिशेषात्स्वरान्तलाभात् । यदि तु यत इत्यत्रानपीति विषयसप्तमी तदाभूतपूर्वस्वरान्तादपि यदित्येतदर्थं स्वरग्रहणं । तेन दित्स्यमित्यादौ एव । वस्तुतस्तत्र स्वरप्रयोजनाभावात् घ्यण्यपि न क्षतिरिति ध्येयम् ।

**मू०—ईच्चातः ॥ आदन्ताद्धातोर्य आकारस्य च ईकारः । देयम् । ग्लेयम् । गेयम् ।**

सुबोधिनी—ईच्चातः । डुदाञ् दाने । देयं । गै शब्दे गेयं । ग्लै हर्षक्षये ग्लेयम् ॥

तत्त्वदीपिका—ईच्चातइति । ह्रस्व एव सुपठः । यत्तु वासुदेवेनोक्तं दीर्घेकारविधानं खेयमित्यत्र चकारात्खनेर्ये नस्यत्वे रूपसिद्धये । अन्यथापक्षे आत्वं स्यादिति तद्भाष्यविरोधादुपेक्ष्यम् ।

**मू०—पुशकात॥ पवर्गान्ताच्छकादेश्च य प्रत्ययः । शप्यम् । यम्यं । जप्यम् । शक्यम् । सह्यम् ।**

सुबोधिनी—पुशकात् । अत्र घ्यण् न भवति तव्यादयस्तु स्युरेव । शप उपालंभे । शप्यम् । यमु उपरमे । यम्यं । जप व्यक्तायां वाचि । जप्यम् । शकादेस्तु शकॢ शक्तौ । शक्यं । षह मर्षणे । सह्यम्॥

तत्त्वदीपिका—पुशकादिति । पुश्च शकश्च पुशकं तस्मात् ।

**मू०—ऋहसान्ताद्घ्यण्॥ ऋवर्णान्तात् हसान्ताद्धातोर्घ्यण् । भावकार्ययोः। कार्यं । हार्यम् । वाह्यम् । घात्यम् । वाक्यम् । पाक्यम् । रोग्यम् ।**

सुबोधिनी—ऋहसांताद्घ्यण् । ऋ इति धातोर्न ग्रहणं । किंतु ऋवर्णस्य हसासाहचर्यात् घित्त्वाच्चजोः कगाविति कगौ । णित्त्वाद्वृद्धिः डुकृञ् करणे । कार्यं । हृञ् हरणे । हार्यं । वह प्रापणे । वाह्यं । हन हिंसागत्योः हनो घादिति घत् । घात्यम् । डुपचष् पाके । पाक्यम् । रुज् रोगे । रोग्यम् । वच परिभाषणे वाक्यम् ॥

तत्त्वदीपिका—ऋहसान्तादिति । आच हसश्च ऋहसं तस्मात् । घो घित्कार्यार्थः । णो वृद्ध्यर्थः ।

**मू०—घ्यणिक्वचित्कुत्वाभावः ॥ याज्यम् । याच्यम् । वाच्यम् । रोच्यम् । अर्च्यम् ।**

सुबोधिनी—घ्यणिक्वचित्कुत्वाभावः । यज् याच् प्रवच् रुच् एषां कुत्वं न घ्यणि । यज देवपूजादौ । याज्यं । टुयाचृ याञ्चायां । याच्यं । वच परिभाषणे प्रपूर्वः । प्रवाच्यं ग्रंथविशेषः। रुच दीप्तौ । रोच्यं । ऋच स्तुतौ । अर्च्यम् । ऋदुपधात् क्विपि तु न भवति ॥

**मू०—ओरावश्यके ॥ उवर्णान्तादावश्यकेऽर्थेघ्यण् ।**

सुबोधिनी—ओरावश्यके । अवश्यमेवेत्यावश्यकं तस्मिन् ॥

तत्त्वदीपिका—ओरावश्यक इति । आवश्यं भाव अवश्यकं । अवश्यमष्ठिलोपस्तद्धिते । अव्ययत्वात् ।

**मू०—ओदौतोर्यस्स्वरवत् ॥** ओकारौकारयोर्निमित्तं यः प्रत्ययः स्वरवत् । 'लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः ।' अवश्यं भाव्योऽवश्यभाव्यः । भोक्तुकामः । श्रोतुमनाः । संहितम्, सहितं । संततम्, सततम् । मांसस्य पचनम् । मांस्पचनम्, मांसपचनम् । मांसस्य पाकः । मांस्पाकः, मांसपाकः ।

सुबोधिनी—ओदौतोर्यः स्वरवत् । यं प्रत्ययं निमित्तत्वेनाश्रित्य गुणेन यत्र ओकारो भवति वृद्ध्या च यत्र औकारो भवति स च प्रत्ययः स्वरवद्भवतीत्यर्थः । 'लुंपेदवश्यमः कृत्ये तुम्काममनसोरपि । समो वा हिततयोर्मांसस्य पचि युड्घञोः' अवश्यमोनिपातस्यांत्यं लुंपेत् । लोपं कुर्य्यात् । कृत्ये कृत्यसंज्ञके प्रत्यये परे । यथा अवश्यलाव्यः । तुम्प्रत्ययस्यांत्यं लुंपेत् काममनसोः शब्दयोः परयोः । यथा भोक्तुकामः । श्रोतुमनाः । समुपसर्गस्यांत्यं वा लुंपेत् हिततयोः शब्दयोः परयोः । यथा सहितं, संहितं । सततं, संततं - मांसशब्दस्यांत्यं वा लुंपेत् । पचिप्रकृतियुट्घञ् प्रत्यययोः परयोः । यथा मांस्पचनं मांसपचनं । मांस्पाकः । मांसपाकः ॥

तत्त्वदीपिका—घातितार्थस्यापि क्वचित्प्रयोगो दृश्यते । लाघवं प्रत्यनादरादित्यत आह । अवश्यलाव्यम् ।

**मू०— हनोवधादेशोये ॥** वध्यम् ।

सुबोधिनी—हनोवधादेशोये । हन हिंसागत्योरस्मात् यप्रत्ययः स्यात् धातोर्वधादेशश्च । वध्यः । पक्षे घ्यणपि । हनोघादिति घत् घात्यः ॥

**मू०— ऋदुपधात्क्यप् ॥** ऋकारोपधाद्धातोः क्यप् । कृती कृत्यम् । वृत्यम् ।

सुबोधिनी—ऋदुपधात्क्यप् । कित्त्वाद्गुणो न पित्त्वात् ह्रस्वस्यपितीति तुक् कृती छेदने । कृत्यं । वृतु वर्त्तने । वृत्यं । वृधु वृद्धौ । वृध्यम् । तपरकरणं किं कॄत संशब्दने । युट कीर्तनम् ॥

तत्त्वदीपिका—ऋदुपधादितितपरत्वाद्दीर्घोपधान्न तेन कॄत इतिकीर्त्यम् ।

**मू०— कृपिचृत्योर्न ॥** कल्प्यम् । चृत दीप्तौ । चर्त्यम् ।

सुबोधिनी—कृपिचृत्योर्न । आभ्यां क्यप् न स्यात् । घ्यण् । कृपू सामर्थ्ये । कल्प्यं चृती हिंसायां । चर्त्यम् ॥

**मू०— मृजोवा ॥** मृज्यम् । मार्ग्यम् ।

सुबोधिनी—मृजोवा । ऋदुपधादिति नित्यं प्राप्ते विकल्पार्थमारंभः मृजूष् शुद्धौ । मृज्यम् । क्यबभावेघ्यण् । मृजेर्वृद्धिरिति वृद्धिः । चजोरिति गः मार्ग्यः ॥

**मू०—भुवोभावे ॥** नाम्न्युपपदे भुवो भावे क्यप् । ब्रह्मणो भावः । ब्रह्मभूयम् । नाम्नि किम् । भव्यम् ।

सुबोधिनी–भुवोभावे । भू सत्तायां । ब्रह्मभूयं । नाम्न्युपपदे इति किं । भव्यं । स्वरादय इति यः ॥

**मू०– इण्स्तुभृदृवृशासुजुषूखनःक्यप्च ॥** इत्यः । स्तुत्यः । दृङ्आदरे । दृत्यः । वृत्यः । शासेरिः । शिष्यः । जुषीप्रीतिसेवनयोः । जुष्यः ।

सुबोधिनी–इण्स्तुभृदृवृशासुजुषूखनःक्यप्च । एभ्यो धातुभ्यः क्यप् स्यात् । इण् गतौ इत्यः । ष्टुञ् स्तुतौ । स्तुत्यः । वृ इति वृञ् वरणे इत्यस्य ग्रहणं । वृङ्संभक्तावस्मात्तु घ्यणेव । वार्यः । दृ आदरे । दृत्यः । भृञ् भरणे । भृत्यः कर्मकरः । भर्त्तव्य इत्यर्थः । क्रियाशब्दोयं न तु संज्ञा । शासु अनुशिष्टौ । शासेरितीत्वम् । घसादेरिति षः । शिष्यः । जुषी प्रीतिसेवनयोः । जुष्यः ॥

तत्त्वदीपिका–इण्स्तु । वृ इति वृञ् नतु वृङ् तस्यवार्यः ऋत्विजः घ्यणेव । शासु अनुशिष्टौ । शासु इच्छायामपीति कश्चित् स्वरभेदार्थमेव ।

**मू०– खनइत्वंक्यपि ॥** खेयम् ।

सुबोधिनी–खनइत्वंक्यपि । खन खनने इत्यस्य नस्य इत्वं स्यात् क्यपि खेयम् ॥

**मू०– भिद्योद्ध्यौनदे ॥** भिनत्ति कूलमिति भिद्यः । उज्झति जलमित्युद्ध्यः ।

सुबोधिनी–भिद्योद्ध्यौनदे । भिदिर् विदारणे । उज्झ त्यागे । आभ्यां क्यप् स्यात् कर्तरि उज्झेर्धत्वं च निपात्यते नदे वाच्ये । भिनत्ति कूलमिति भिद्यः । उज्झत्युदकामिति उद्ध्यः । नदे किं । भेत्ता । उज्झिता तृप्रत्ययः ॥

तत्त्वदीपिका–भिद्योद्ध्यौ । धत्वं निपात्यं । नदेइति । भेत्ता । उज्झिता ।

**मू०– कृवृषोर्वाक्यप् ॥** कृत्यम् । कार्यं । वृष्यम् । वर्ष्यम् ।

सुबोधिनी–कृवृषोर्वाक्यप् । कर्त्तरि । डुकृञ् करणे । वृषु सेचने । आभ्यां वा क्यप् स्यात् करोतेः क्यप् अप्राप्तौ वृषस्तु ऋदुपधादिति नित्यं प्राप्ते विकल्पः । ह्रस्वस्य पितीति तुक् कृत्यम् । वृष्यम् । क्यबभावपक्षे घ्यण् । कार्यम् । वर्ष्यम् ॥

**मू०– पुष्यसिध्यौनक्षत्रे ॥** पुष्णन्ति कार्याण्यस्मिन्निति पुष्यः । सिध्यंति कार्याण्यस्मिन्निति सिद्ध्यः ।

सुबोधिनी–पुष्यसिद्ध्यौनक्षत्रे । पुष पुष्टौ । षिधु गत्यां आभ्यामधिकरणेऽर्थे क्यप् निपात्यते पुष्यः । सिद्ध्यः । नक्षत्रे किम् । पोषणं । सेधनं । साधनाधारयोरिति युट् ।

**मू०– राजसूयादयः ॥** राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः । राजसूयः । सरत्याकाशे सूर्यः ।

सुबोधिनी–राजसूयादयः । क्यबंताः शब्दा निपात्यंते । षुञ् अभिषवे । राज्ञा सोतव्यः इति राजसूयः । अभिषवद्वारा निष्पादयितव्य इत्यर्थः । यद्वा राजा सूयते कंड्यतेऽत्रेति राजसूयः । राजेति सोमः अधिकरणे क्यप् । निपातनाद्दीर्घः अर्द्धर्चादित्वात् पुन्नपुंसकः । सू

गतौ । सरत्याकाशे इति सूर्यः कर्तरि क्यप् । निपातनादुरादेशः । र्वोरुपधाया दीर्घ इति दीर्घः । यद्वा षू प्रेरणे तुदादिः । सुवति कर्मणि लोकं प्रेरयतीति सूर्यः । क्यपोरुट् निपातनात् ॥

तत्त्वदीपिका-राजसूयादय इति । लतात्मकः सोमोराजा सस्रुयतेकण्ड्यतेऽत्रेति अधिकरणे क्यप् । निपातनाद्दीर्घः अर्द्धर्चादिरयम् सूर्य इति । सरत्याकाशे । सुवाति कर्मणि लोकं प्रेरयति वा ।

**मू०-तव्यादयोऽर्हेर्थेविधौशक्तौचवक्तव्याः ॥ दर्शनार्हो द्रष्टव्यः । दर्शनीयः । दृश्यः । स्वाध्यायोऽध्येतव्यः । अध्ययनीयः । अध्येयः । श्रोतव्यः । मंतव्यः । वोढव्यः । तव्यादीनांकृत्यसंज्ञा ।**

सुबोधिनी-तव्यादयोऽर्हेर्थेविधौशक्तौचवक्तव्याः । दृशिर् प्रेक्षणेऽस्मात्तव्यप्रत्यये गुणे कृते रारोझसेदृशामिति रः छशषेति षत्वं ष्टुत्वं । द्रष्टव्यः । अनीयप्रत्यये तु दर्शनीयः । क्यपि तु दृश्यः । इङ् अध्ययनेऽस्मात्तव्यप्रत्यये गुणे कृते अध्येतव्यः । अनीये तु अध्ययनीयः । यप्रत्यये अध्येयः । श्रु श्रवणे । श्रोतव्यः । श्रवणीयः । क्यपि तु श्रुत्यः । मन ज्ञाने मंतव्यः । मननीयः । वह प्रापणे । अस्मात्तव्यप्रत्यये होढ इति ढत्वे तथोर्द्ध इति धत्वं ष्टुत्वं ढ्ढेलोप इति ढलोपपूर्वदीर्घौ सहवहोरित्योत्वं वोढव्यः । वहनीयः । कृत्यक्तखलर्थाः प्रत्ययाः भावकर्मणोर्भवंति ॥ इतिकृत्यप्रत्ययाः ॥

**मू०-स्त्रियांयजांभावे ॥ यजादेर्धातोःस्त्रियांभावे क्यप् । इज्या । व्रज्या । समज्या । निषद्या । निपत्या । मन्या । विद्या । सुत्या । शय्या । भृत्या । इत्या । कृत्या ।**

सुबोधिनी-स्त्रियांयजांभावे । क्यप्प्रत्ययमाह । पित्वात्तुक् कित्वाद्गुणनिषेधः संप्रसारणं च । यज देवपूजादौ । यजामिति संप्रसारणं यजनमिज्या । व्रज गतौ व्रजनं व्रज्या । अज गतौ क्षेपणे च । समजंतस्यामिति समज्या सभा । अजेः क्यपि वीभावो न निपातनात् । षदॢ विशरणादौ । निषीदंत्यस्यामिति निषद्या आपणः । प्रादेश्चेति षत्वं पतॢ पतने । निपतंत्यस्यामिति निपत्या । पिच्छिला भूमिः । मन ज्ञाने मन्यतेऽनयेति मन्या गलपार्श्वनाडी । विद ज्ञाने । विदंत्यनयेति विद्या । षुञ् अभिषवे । ह्रस्वस्येति तुक् । सुत्या । अभिषवः । शीङ् स्वप्ने । शेरतेऽस्यामिति शीङो यङ् । येङ्कितीत्ययङ् । शय्या । डुभृञ् धारणादौ । भृत्या । जीविका । इण् गतौ । ईयतेऽनयेति इत्या । शिबिका । डुकृञ् करणे कृत्या ॥

तत्त्वदीपिका-स्त्रियां यजामिति । बहुवचनमाद्यर्थं । तेन यजशीङ् व्रजविदः षुञ्श्रु मनविद्भृञ्अटाट्य इण् समज निषद निपत कृञ् हन् एषां ग्रहणं । इज्येति । कित्वात्संप्रसारणं । समज्या सभा । निषद्या आपणः । निपात्या पिच्छिला भूमिः । मन्यतेऽनया क्रुद्धादिरिति मन्या गलपार्श्वशिरा । विद्यते ज्ञायतेऽर्थतत्त्वमनया विद्या। सूयते सोमोऽत्रेति सुत्याऽभिषवो दिवसः । शय्यतेऽस्यां शय्या खट्वादि । भरणं भृत्यवेतनं । ईयते गम्यतेऽनयेति इत्या शिबिकादिः । भृतिर्मतिरासुतिरिति तु सूत्रेषु निपातनात् ।

**मू०-कृञोयग्वा ॥ अयकि । क्रिया । इषेरिच्छेति निपातः । इषेरपूच्छत्वादेशः । इच्छा । सर्तेर्गुणः । परिसर्या । अटाट्या । आस्या जागर्तेर्गुणः । जागर्या ।**

सुबोधिनी-कृञोयग्वा । करोतेर्यक् प्रत्ययो वा स्यात् यक् प्रत्ययाभावे शप्रत्ययो निपातनात् भवाति भावकर्मणोरर्थयोः यक्प्रत्यये अयकीति रिङ् आप् च । क्रिया । इषुइच्छायाम-स्मात् शप्रत्ययो निपात्यते शित्त्वाच्चतुर्वत्कार्यं तेन गमामितिछः । आबत इत्याप् । इच्छा । सृ गतौ । अस्मात् शप्रत्यययक्प्रत्ययौ निपात्येते धातोर्गुणश्च । शप्रत्यये यक्चतुर्ष्विति यक्-यत इत्यल्लोपः आप् । परिसर्पणंपरिसर्या । यकि तु निपातनाद्गुणः । परिसर्या । अट गतौ । अस्मादपि शयकौ निपात्येते शप्रत्यये तु यक्चतुर्ष्विति यक् यत इत्यल्लोपः निपातनात् । व्यशब्दस्य द्वित्वं पूर्वभागे यकारनिवृत्तिदीर्घावपि निपातनात् आबत इत्याप् । अटाट्या यकि तु व्यशब्दस्य द्वित्वं यकारनिवृत्तिदीर्घौ पूर्ववदेव । अटाट्या । अन्ये तु अटगताव-स्मात् सूचिसूत्रिमूत्र्यटीति यङ्स्वरादेरिति व्यशब्दस्य द्वित्वं आत इति पूर्वस्यात्वं । अटाट्ये-त्यस्मात् प्रत्ययांतादित्यङ् । प्रत्ययः । अनपिचेति यलोपः यत इत्यलोपः आप्च । अटाट्या आस उपवेशने निपातनाद्यक् आस्या । जागृ निद्राक्षये । अस्मात् शयगकारप्रत्यया निपातनाद्भवंति शप्रत्यये शित्वाच्चतुर्वत्कार्य्यं तेन यक्चतुर्ष्विति यक् जागर्तेर्वेइतीण् णप्ङित्मि-न्नोति गुणः आप् च । जागर्या । याकि तु जागर्तेरिति गुणः । जागर्या । आकारप्रत्यये गुणः । जागरा ॥

तत्त्वदीपिका-इच्छेति इच्छादया निपात्याः परिसर्येति । परिसरणम् ।

**मू०-हनस्तः ॥ हत्या ।**

सुबोधिनी-हनस्तः । अनुपसर्गे नाम्न्युपपदे हंतेर्भावे क्यप् स्यात् धातोर्नस्य तश्च । ब्रह्मणो हननं ब्रह्महत्या ॥

**मू०-क्तिः ॥ धातोः क्तिः स्त्रियां भावे । कृतिः । बुद्धिः । स्मृतिः । ञमान्तस्य दीर्घः । शान्तिः । दान्तिः । कान्तिः । क्षान्तिः । ञ्हेञ् हूतिः । ऊढिः । स्फातिः ।**

सुबोधिनी-क्तिः । धातोः स्त्रीलिंगे भावादौ क्तिप्रत्ययः स्यात् । घञोऽपवादः । डुकृञ् करणे । कृतिः । बुध अवगमने । तथोर्द्ध इति तस्य धः झभेजबा इति पूर्वधस्य दः । बुद्धिः । स्मृ चिंतायां । स्मृतिः शमु दमु उपशमे । कमु कांतौ । क्षमूष् सहने ञमांतस्य क्ङितीति दीर्घः । शांतिः । दांतिः । कांतिः । क्षांतिः ।

तत्त्वदीपिका-क्तिः स्त्रियां यजामित्यतः स्त्रियामनुवर्त्तते ।

**मू०-हवक्तयोर्नेट् ॥ संशीतिः ।**

सुबोधिनी-हवक्तयोर्नेट् । हवप्रत्याहारःक्तिप्रत्ययस्तयोरिण्न स्यात् । शीङ् स्वप्ने । संशीतिः ॥

तत्त्वदीपिका-हवक्तयोरिति हव प्रत्याहारः हवश्च क्तिश्च हवक्ती तयोरित्यर्थः ।

**मू०-ग्रहादीनामिट् ॥ निगृहीतिः ।**

सुबोधिनी-ग्रहादीनामिट् । ग्रहादीनां क्तिप्रत्ययस्येट् स्यात् । ग्रह उपादाने । ग्रहामिति संप्रसारणं इटो ग्रहामिति दीर्घः । निगृहीतिः । पठ व्यक्तायां वाचि । निपठतिः ॥

तत्त्वदीपिका—ग्रहादीनामिति । पूर्वेण निषेधे प्राप्ते वचनं । स्फायी । फीतिः । बवयोरिति यलोपः फीतिकाम इत्यत्र क्तांतात् औप्रत्यये समाधेयं न च फायःफीतिकितीत्युक्तेरचापि भविष्यतीति वाच्यं।क्तक्तवत्वोरेव तत्राधिकृतत्वेन लाभात् नान्यस्य ।

**मू०—ग्लादेर्निः ॥** ग्लानिः । म्लानिः । त्वरतेर्वस्योत्वम् । तूर्णिः ।

सुबोधिनी—ग्लादेर्निः । ग्लादेर्धातोर्निः प्रत्ययः स्यात् । ग्लै म्लै हर्षक्षये । ग्लानिः । ञित्वरा संभ्रमे जरत्वरेत्यूः तूर्णिः ॥

**मू०—ऋल्वादिभ्यःक्तेर्निः ॥** कीर्णिः । गीर्णिः । लूनिः । धूनिः ।

सुबोधिनी—ऋल्वादिभ्यःक्तेर्निः । ऋदंतात् ल्वादिभ्यश्च परस्य क्तेस्तस्य निः स्यात् । कॄ विक्षेपे । ऋत इरितीर् । य्वोर्विहसे इति दीर्घः । कीर्णिः । गॄ निगरणे । गीर्णिः । लूञ् छेदने लूनिः । धूञ् कंपने । धूनिः ॥

**मू०—संपदादेःक्विब्वा ॥** संपदनं सम्पत् । संपत्तिः । कर्तरि क्तिः ।

सुबोधिनी—संपदादिभ्यः क्विब्वा । पक्षे क्तिः । पद गतौ । संपत् । विपत् । संपत्तिः । विपत्तिः कर्तरिक्तिः ॥

**मू०—संज्ञायाम् ॥** प्रकुरुते इति प्रकृतिः ।

सुबोधिनी—संज्ञायां । धातोः कर्तरि क्तिः स्यात् संज्ञायां वाच्यायां । प्रकुरुते इति प्रकृतिः ॥

**मू०—षिद्भिदामङ् ॥** षितोधातोर्भिदादेश्च स्त्रियामङ् । पचा । माया ।

सुबोधिनी—षिद्भिदामङ् । षितोधातोर्भिदादिभ्यश्च स्त्रियामङ् स्यात् । डुपचष् पाके आबत इत्याप् पचा । मृजूष् शुद्धौ । मृजा । भिदिर् विदारणेऽर्थे भिदा । अन्या भिद्यते इति भित्तिः कुड्यं । कथं तर्हि 'सुखान्जं गंधलब्धेरिति माघः । प्रेक्षोपलब्धिश्चित् संविदि। त्यमरश्च' । षित्त्वादिङ्प्रत्यय उचितः । सत्यं । अनर्थकास्तु प्रातिवर्णमनुपलब्धेरिति भाष्यप्रयोगाद्बाहुलकात् क्तिः प्रत्ययोपि बोध्यः ॥

तत्त्वदीपिका—षिद्भिदामिति । ष इद्येषां ते षितः तेच भिदश्च तेषां भिदेरिति । विदारणे एव । अन्यत्र भित्तिः छित्तिः ।

**मू०—ऋतोऽङिगुणः ॥** जरा । भिदा । छिदा । क्षिपा । गुहा ।

सुबोधिनी—ऋतोङिगुणः । ऋतोधातोर्गुणः स्यात् आङि परे । जॄष्इष्वयोहानौ । जरा । छिदिर् । द्वैधीकरणे छिदा । द्वैधी करणे एवायं । अन्यत्र तु छिद्यते इति छित्तिः छिद्रं । कृपेः संप्रसारणं च । कृप कृपायामस्य संप्रसारणं स्यात् आङि परे । कृपा । क्षिप प्रेरणे । क्षिपा । गुहू संवरणे । गुहा ॥

तत्त्वदीपिका—गुहेति । कंदरौषध्योः अन्यत्र गूढिः ।

**मू०—गुरोर्हसात् ॥** गुरुमतो हसान्तात्स्त्रियामङ् । नक्तिः । ईहा । ऊहा । कुण्डा ।

सुबोधिनी—गुरोर्हसात्। ईह चेष्टायाम्। ईहा। ऊह वितर्के। ऊहा। कुडि दाहे। कुंडा। गुरुमत इति किं। भक्तिः। हसांतादिति किं नीतिः ॥

तत्त्वदीपिका—गुरोरिति। हसेन धातोर्विशेषणात्तदन्तलाभ इत्याह हसान्तादिति। तथा च तादृशसमुदायो न गुरुर्भवितुमर्हतीति गुरुपदं तद्घलक्षकमित्याशयेनाह। गुरुमतइति। प्रशंसायां रूप इत्यादिनिर्देशाद्विपर्ययोपि नाशंक्यः।

**सू०—प्रत्ययांतात् ॥** स्त्रियामङ्। चिकीर्षा। लोलूया। कण्डूया। पुत्रकाम्या।

सुबोधिनी—प्रत्ययांताद्धातोरङ् प्रत्ययः स्यात्। स्त्रियां। डुकृञ् करणेऽस्मात् इच्छायामात्मन इति सप्रत्यये कृते वुः से इतीण् न। नानिटिसे इति न गुणः। सेर्दीर्घ इति दीर्घे कृते ऋतइरितीर् य्वोर्विहसे इति दीर्घः द्वित्वादि पूर्ववत् सधातुरिति धातुत्वादङ्। कर्तुमिच्छतीति। चिकीर्षतीति चिकीर्षा। लुञ् छेदनेऽस्मादतिशये हसादेरिति यङ्। द्वित्वं च यङीति। पूर्वस्य गुणः। लोलूयते इत्यस्मादङ्प्रत्यये यत इत्यल्लोपः। अतिशयेन लूनातीति लोलूयते इति लोलूया। कंडूञ् गात्रविघर्षणे। अस्मात् कंड्वादिभ्य इति यक् यगंतादङि परे यत इत्यलोपः। कंडूयते इति कंडूया। पुत्रशब्दात्काम्यश्चेति काम्यप्रत्ययस्ततोऽङ् यत इत्यल्लोपः। पुत्रमिच्छतीति पुत्रकाम्यति पुत्रकाम्यतीति पुत्रकाम्या ॥

तत्त्व०—प्रत्ययान्तात्। कंडूयेति। कंड्वादिपदान्तात्। केवलात् क्तिरपि कंडूतिः।

**सू०—धात्वर्थनिर्देशेवुण्वक्तव्यः ॥** आशिका। शायिका।

सुबोधिनी—धात्वर्थनिर्देशेवुण्वक्तव्यः। आशिका। शायिका। काप्यतइतीत्वम् ॥

**सू०—इक्श्तिपौधातुनिर्देशे ॥** पचिः। पचतिः।

सुबोधिनी—इक्श्तिपौधातुनिर्देशे। इक्श्तिपौ प्रत्ययावाह। कित्त्वाद्गुणो न शित्वाद्धातुवेत्। डुपचष्पाके। पचिः अपृक्तत्तरीत्यप्। पचतिः। बहुलमित्यनुवृत्तेः क्वचिन्नैतौ। भुवो-वुगिति ॥

तत्त्वदी०—इक्श्तिपाविति। निर्देशोनुकरणं बाहुलकत्त्वात् क्वचिन्न। गुभ्य इत्यादौ।

**सू०—ण्यन्तार्थासश्रंथघटिवन्दिविदिइषिभ्यःस्त्रियांयुः ॥** कारणा। अर्थना। आसना। श्रंथना। घटना। वन्दना। वेदना। एषणा।

सुबोधिनी—ण्यंतार्थासश्रंथघटिवंदिविदिइषिभ्यः स्त्रियांयुः। एभ्यो युः स्यात्। अल्लोपवादः। युप्रत्ययमाह। युवोरित्यनादेशः। डुकृञ्करणे। णेरिति णिलोपः। कारणा। हृञ् हरणे। हारयतीति हारणा। अर्थ याच्ञायां। अर्थयतीति अर्थना। त्रीण्यपि ण्यंतोदाहरणानि। आस उपवेशने। आस्यंतेऽस्यामिति आसना। ण्यत्प्रत्यये तु आस्या। श्रंथ संदर्भे। श्रंथना। घट चेष्टायां। घटना। वदि अभिवादनस्तुत्योः। वंदना। अत्र विद्लाभे अयमेव गृह्यते। वेदना। ज्ञानार्थस्य विदेस्तु संवित्तिः। अनिच्छार्थस्येषेरत्र ग्रहणं इष गतौ अन्वेषणा ॥

तत्वदीपिका—ण्यन्तासंघटचलने । भ्रादिः चुरादेस्तु ण्यन्तत्वादेव विद्लाभार्थः । ज्ञाने तु विदचेतना-दिष्विति चुरादिण्यन्तस्यैव । ईषेस्तु गत्यर्थस्याभीक्ष्णार्थस्य च नत्विच्छार्थस्य ।

**मू०–इञ्अजादिभ्यः ॥ आजिः । आतिः**

**सुबोधिनी**–इञ्अजादिभ्यः । अजप्रभृतिभ्यो धातुभ्य इञ् स्यात् । इञ् प्रत्ययमाह । ञित्वाद्वृद्धिः । अज गत्यादौ । बाहुलकादजेर्वीभावो न । आजिः । संग्रामः अट गतौ । आटिः । अत सातत्यगमने । आतिः ॥

तत्त्वदीपिका—इञजा । ञित्वाद्वृद्धिः । आजिरिति । वीभावस्तु न बाहुलकात् ।

**मू०–विभाषाख्यानपरिप्रश्नयोरिञ्च ॥ आक्रोशेनञ्यनिः अकरणिः । अजननिः ।**

**सुबोधिनी**–विभाषाख्यानपरिप्रश्नयोरिञ्च । परिप्रश्ने आख्याने च गम्येधातोरिञ् वा स्यात् वुञ् च । यथाप्राप्तमन्येपि प्रत्यया भवंति । का त्वं कारिं कारिकां कृत्यां कृतिं वाऽकार्षीः एवं गणिं गणिकां गणनां । पाचिं पाचिकां पचां पाक्तिम् आख्यानेप्येवम् ॥

**मू०–इक्कृष्यादिभ्यः ॥ कृषिः । गिरिः ।**

**सुबोधिनी**–इक्कृष्यादिभ्यः । इक्प्रत्ययमाह किस्त्वान्न गुणः कृष् विलेखने । कृषिः । गॄ निगरणे । ऋतइरितीर् । गिरिः । कॄ विक्षेपे किरिः आवश्यकाधमर्ण्ययोर्णिनिः अवश्यं-कारी । शतंदायी । भविष्यदर्थेणिनिश्च । ग्रामंगामी ॥

तत्त्व०–इक् कित्वान्न गुणः । कृषिरिति । ऋतइर् । गिरिः ।

**मू०–पूर्वकालेक्त्वा ॥ धातोः समानकर्तृके धातौ प्रयुज्यमाने पूर्वकालेऽर्थे क्त्वा प्रत्ययः ।**

**सुबोधिनी**–पूर्वकालेक्त्वा । समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात् । पूर्वकालेऽत्र बहुव्रीहिः । क्त्वा तु अव्ययकृतो भाव इति भावे । भावोपि घञादा-विव नेह सिद्धावस्थापन्नः । किंतु साध्यावस्थापन्नः । स च धातुनैव लब्धः । क्त्वा प्रत्ययार्थ-भूता क्रिया च क्रियांतरं प्रति विशेषणं भवति क्त्वाप्रत्ययमाह । किस्त्वान्न गुणः । क्त्वाद्यं-तमित्यव्ययत्वाद्विभक्तेर्लुक् ॥

तत्वदीपिका—पूर्वकाले । धातोरिति । पूर्वकालक्रियावचनादित्यर्थः । समानकर्तृके धातौ प्रयुज्यमाने ॥ यस्माद्धातोः क्त्वाविधीयते तत्क्रियाकर्त्ता यस्य धातोः कर्त्ता तस्मिन् प्रयुज्यमाने क्त्वा प्रत्ययो भवतीत्यर्थः। स्नात्वा भुंक्ते इत्यत्र स्नानभोजनक्रिययोरेक एव कर्त्ता । स्नानक्रियायाः पूर्वभावित्वेन स्ना धातोः क्त्वा । यद्यपि शक्तिः कारकं सा च प्रतिक्रियं विद्यते तथापि शक्तिमतोरभेदादेककर्तृकत्वमुक्तं । एवमेककर्तृकाणामपि नत्वा स्तुत्वा व्रजति । ननु चात्र सर्वपूर्वाया एव भविष्यत्यथामीषां विप्राणां पूर्वमानीयतामित्युक्ते सर्वपूर्व एवानीयते । अत्र वदंति । आख्यातवाच्यायाः विशेषणत्वेन प्राधान्यं तेन तामेव प्रति सर्वासां विशेषणत्वात् परस्परेण सम्ब-न्धः नहि भिक्षुको भिक्षुकान्तरं याचते किन्तु सर्व एव प्रभुमिति नतैरिह न स्तुत्यपेक्षं पौर्वकाल्यमिति । पूर्वं भुंक्ते ततो व्रजतीत्यत्र तु पूर्वशब्देनैककालस्योक्तत्वान्न क्त्वा प्रत्ययः । अस्यते भोक्तुमित्यपि भवति । असित्वा भोक्तुमिति न भवति । अनभिधानात् । किन्त्वसित्वा भुंक्त इत्येव ।

**मू०–क्त्वासेट्किन्न ॥ धातोः सेट् क्त्वा किन्न । वर्तित्वा । शयित्वा ।**

सुबोधिनी–क्त्वासेट्किन्न। धातोः परः सेट् क्त्वा किन्न स्यात्। वृतु वर्तने कृत इतीट् वर्तित्वा। शीङ् स्वप्ने। शयित्वा। सेट् किं। कृत्वा। कित इतीण्न॥

मू०–मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्रहिभ्यः कित्॥ मृडित्वा। मृदित्वा। गुधित्वा। कुषित्वा। क्लिशित्वा। उदित्वा। उषित्वा। रुदित्वा। विदित्वा। मुषित्वा। गृहीत्वा।

सुबोधिनी–मृडमृदगुधकुषक्लिशवदवसरुदविदमुषग्रहिभ्यः कित्। एभ्यो धातुभ्यः। सेट् क्त्वा कित्। मृड सुखे। मृदु क्षोदे। गुध परिवेष्टने। गुध रोषे च। कुष निष्कर्षे। क्लिशु हिंसायां दिवादिः। क्लिशु विबाधने क्र्यादिः। वद व्यक्तायां वाचि। वस निवासे। रुदिर् अश्रुविमोचने। विद ज्ञाने। मुष स्तेये। ग्रहउपादाने। मृग मृडित्वा। मृद मृदित्वा। गुध गुधित्वा। कुष कुषित्वा। क्लिशु ऊदित्वाद्वेट् क्लिशित्वा क्लिष्ट्वा। वद यजामिति संप्रसारणम् उदित्वा। वस वसिक्षुध्योरितीट्। यजामिति संप्रसारणं। घसादेरितिष। उषित्वा। रुदिर् रुदित्वा। विद् विदित्वा। मुष मुषित्वा। ग्रहामिति संप्रसारणं। ईटोग्रहामिति दीर्घः। गृहीत्वा॥

मू०–नोपधात्थफान्ताद्वा॥ कित्। ग्रंथित्वा, ग्रथित्वा। गुंफित्वा, गुफित्वा।

सुबोधिनी–नोपधात्थफांताद्वा। नोपधाद्धातोः थफान्ताच्च परः सेट् क्त्वा वा कित् स्यात्। ग्रंथ संदर्भे। कित्वान्नोलोप इति न लोपः। ग्रथित्वा। ग्रंथित्वा। गुफ गुंफने। कित्वात्पक्षे नलोपः। गुफित्वा, गुंफित्वा। नोपधात् किं। कोथित्वा। रेफित्वा। कुथ पूतीभावे। रिफ कत्थनयुद्धनिंदाहिंसादानेषु इह इवर्णोपधादिति विकल्पोपि न भवति नोपधग्रहणसामर्थ्यात्॥

मू०–अलंखल्वोःप्रतिषेधे॥ अलंभुक्त्वा। खलुकृत्वा।

सुबोधिनी–अलंखल्वोःप्रतिषेधे। धात्वर्थे अलंखल्वोरुपपदयोर्धातोः क्त्वा स्यात्। भुज पालनादौ। अलंभुक्त्वा। डुकृञ् करणे। कित इतीट् न खलुकृत्वा। अलंखल्वोः किं। माकार्षीत्। प्रतिषेधयोः किं। अलंकारः॥

मू०–उदितःक्त्वोवेट्॥ एषित्वा, इष्ट्वा। भ्रमित्वा, भ्रान्त्वा।

सुबोधिनी–उदितः क्त्वोवेट्। उदितो धातोः परस्य क्त्वाप्रत्ययस्येड्वा स्यात्। इषु इच्छायां। उदित्वाद्वेट्। इट्पक्षे क्त्वासेडित्यकित्वाद्गुणः। एषित्वइडभावे ष्टुत्वं। इष्ट्वा। भ्रमु चलने। उदित्वाद्वेट्। भ्रमित्वा। इडभावे अमांतस्येति दीर्घः भ्रान्त्वा।

तत्वदीपिका–उदित इति। उदिद्यस्य स तथा तस्मात्।

मू०-अदोजघ्धः॥ जग्ध्वा।

सुबोधिनी–अदोजघ्धः। अद भक्षणे। अस्य जघादेशः क्त्वा प्रत्यये। तथोर्द्धइति धः खसेचपा इति धस्य कः झभेझबाइति कस्य गः जग्ध्वा॥

**मू०—समासेऽनञ्पूर्वे क्त्वो ल्यप् ॥** समासे सति पूर्वकाले क्यप् समानकर्तृकधातौ प्रयुज्यमाने । सम्भृत्य करोति । प्रणम्य गच्छति । अनञ्पूर्व इत्येके । अकृत्वा ।

सुबोधिनी—समासेक्यप् । अव्ययपूर्वपदे अनञ्समासे समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्यप् स्यात् । क्यप्प्रत्ययमाह कित्वाद्गुणो न पित्वात् ह्रस्वस्य पितीति तुक् । डुभृञ् धारणादौ । णम् प्रह्वत्वे शब्दे च । प्रणमूशब्दो नाम्रश्वकुतेति क्त्वांतेन नित्यं समस्यते संभृत्य । प्रणम्य । अनञ्किम् । अकृत्वा । अव्ययपूर्वपदे इति किम् । परमकृत्वा । मांतानिटां धातूनां तु मस्य लोपो वा भवति क्यपि । वनति तनोत्यादिनां तु लोपस्त्वनुदात्ततनामिति नित्यम् । अमस्य लोपः । आगत्य । आगम्य । प्रणत्य । प्रणम्य । अन्यत्र तु नित्यम् । प्रहत्य । प्रमत्य । वितत्य ।

तत्त्वदीपिका—समासे क्यप् । समानकर्तृकत्व । एव यत्तु मत्प्रसूतिमनाराध्य इत्यादिमहाकविप्रयोगाद्भिन्नकर्तृकेपि । क्यबिति वासुदेवेनोक्तं । तन्महान्तो न क्षमंते स्थितस्येत्यध्याहार्येणैव तत्र निर्वाहः । ओदनः पक्त्वा भुज्यत इत्यत्र प्रधानशक्त्याभिधाने गुणशक्तिरभिहितवत्प्रकाशते इति न्यायात् प्रधानक्रियया कर्मोक्तमतो गुणक्रियायाप्रासिकर्मविभक्तिर्नभवति ।

**मू०—क्यपिलघुपूर्वात्परस्यञेरय् ॥** परिणमय्य । लघुपूर्वात्किम् । संप्रधार्य ।

सुबोधिनी—क्यपिलघुपूर्वात्परस्यञेरय् । लघुः पूर्वो यस्माद्वर्णात् लघुपूर्ववर्णात्परस्य ञेरयादेशः स्यादित्यर्थः । णम् प्रह्वत्वे शब्दे च । अस्मात्प्रयोजकञिप्रत्यये जनीजॄषित्यमन्तत्वान्मित्वम् । मितांह्रस्व इति ह्रस्वस्ततोञेरयादेशः । प्रणमय्य । गण संख्याने । चुरादिरदंतः । अस्मात् स्वार्थे ञिप्रत्यये यत इत्यलोपः । नन्विह कृतस्याल्लोपस्य स्थानिवद्भावेन लघुपूर्वकवर्णात्परत्वं नास्ति कथमयादेशः स्यात् । उच्यते । अत्रायादेशे कर्तव्ये अल्लोपस्य स्थानिवत्त्वं भाष्यादौ न स्वीकृतमस्ति । विगणय्य । लघु पूर्वादिति किम् । संप्रधार्य । संपूर्वात् धृ धारणे अस्मात् प्रयोजकञिप्रत्ययांतात् क्यपि कृते । ञेरिति ञिलोपः ॥

**मू०—आप्नोतेर्वा ॥** प्रापय्य, प्राप्य ।

सुबोधिनी—आप्नोतेर्वा । आप्लृव्याप्तावस्मात्परस्य ञेरयादेशो वा स्यात् । अप्राप्तविभाषेयं । तथाच श्रीहर्षः । 'अयमयोगिवधूवधपातकी भ्रमिमवाप्य दिवः खलुपात्यते ।' इत्यत्रावाप्येत्यस्यावापय्येत्यर्थो बोध्यः ॥

**मू०—क्यपीत्वाभावः ॥** प्रदाय । प्रधाय । प्रस्थाय । प्रसाय । मिनोतिमीनातीत्यात्वम् । प्रमाय । निमाय । एवं लिलीङोरात्वम्वेत्यादि विलीय । विलाय ।

सुबोधिनी—क्यपीत्वाभावः । दादेरित्वम् स्थामीत्वं च प्राप्तमनेन निषिध्यते । डुदाञ् दाने प्रदाय । ष्ठा गतिनिवृत्तौ । प्रस्थाय । षोंतकर्मणि प्रसाय । डुधाञ् धारणादौ । विधाय । कथं तर्हि । निपीय यस्येति श्रीहर्षप्रयोग इति चेदत्राहुः । दिवादिगणस्थस्य पीङ् पाने इत्यस्य रूपमिति ॥

**मू०—कालेऽपिक्वचित् ॥** नेत्रे संमील्य हसति । मुखं व्यादाय स्वपिति ।

सुबोधिनी—कालेपिकश्चित् । क्यपि स्यात् डुदाञ् दाने । व्यादाय यदैव स्वापिति तदैव मुखं व्यादत्ते । मील निमीलने निमील्य यदैव हसति तदैव नेत्रे संमीलयतीत्यर्थः ।

**मू०—पौनःपुन्येणम्पदंद्विश्च ॥** समानकर्तृकेषु धातुषु प्रयुज्यमानेषु पूर्वकाले धातोर्णम् क्त्वा च णमन्तस्य द्विर्वचनम् । पायंपायङ्गच्छति । भोजंभोजम् । स्मारंस्मारम् । मितां ञ्यन्तानामिणि णमि च वा दीर्घः । गामंगामम् । गमंगमम् । लाभंलाभम् । लंभंलंभम् ।

सुबोधिनी—पौनःपुन्येणमूपदंद्विश्च । पौनःपुन्ये द्योत्ये समानकर्तृकयोः पूर्वकाले धातोर्णम् स्यात् चकारात् क्त्वाच । णमंतस्य द्वित्वं च । णमूप्रत्ययमाह । णित्वाद्वृद्धिः क्त्वाचंतंचेत्यव्ययत्वाद्विभक्तेर्लुक् । पा पानेऽस्मात् णमि कृते आतोयुगिति युक् पायंपायं । पक्षे पीत्वापीत्वा । स्थामीतीत्वं । भुज पालनादौ । भोजंभोजं । भुक्त्वा २ । स्मृ चिंतायां । स्मारं २ । पक्षे स्मृत्वा २ । गम्लृ गतौ । ञ्यंतादस्मात् णमि कृते जनीजृषित्यमंतत्वात् मित् संज्ञायां मितांह्रस्वे इति ह्रस्वे कृते मितांञ्यंतानामिणि णमिचेति वा दीर्घः । गामं २ गमम् २ । पक्षे गत्वा २ । डुलभष् प्राप्तौ । अस्मात् णमि कृते लभेरिणमोरिति वा नुम् । लंभम् २ । नुमभावे वृद्धिः लाभम् २ । पक्षे लब्ध्वा २ ॥

तत्त्वदीपिका—पौनःपुन्ये णमूपदं द्विश्च । णमन्तस्य नामत्वात्स्यादौ पदत्वं । पापमिति । आतोयुगिति युक् । गामामिति । अमांतस्येति दीर्घः । लंभामिति । णमिवानुम् ।व्यवस्थितत्वादुपसृष्टस्य प्रलंभामित्यादौ नित्यमेव ।

**मू०—कथमादिषुस्वार्थेकृञोणम् ॥** कथंकारम् । अन्यथाकारं । एवंकारम् । इत्थंकारम् पठति । एवंकारं पठतीत्यर्थः ।

सुबोधिनी—कथमादिषुस्वार्थेषुकृञोणम् । कथमित्थमन्यथैवामित्यादिषूपपदेषु कृञो णम् स्यात् यदि कृञ् प्रयोगाऽनर्हः स्यात् । कथंकारं पठति । कथंपठतीत्यर्थः । अन्यथाकारं भुंक्ते । अन्यथाभुंक्तेत्यर्थः ।एवंकारं करोति । एवं करोतीत्यर्थः । इत्थंकारं वदति । इत्थं वदतीत्यर्थः । प्रयोगानर्ह इति किम् । शिरोऽन्यथा कृत्वा भुंक्ते ॥

**मू०—अग्रेप्रथमपूर्वेषूपपदेषुक्त्वाणमौवा ॥** अग्रेभोजं व्रजति, अग्रेभुक्त्वा । प्रथमम्भोजम्, प्रथमम्भुक्त्वा । पूर्वम्भोजम्, पूर्वम्भुक्त्वा । पक्षे प्रत्ययाभावः । अग्रे भुंक्ते ततो व्रजति । आभीक्ष्ण्ये तु पूर्वेण नित्यमेव णम् । अग्रेभोजं व्रजति ।

सुबोधिनी—अग्रेप्रथमपूर्वेषूपपदेषुक्त्वाणमौवा । पौनःपुन्ये इति नानुवर्त्तते । एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमौवास्तः । अग्रेति सप्तम्यंतस्यानुकरणं प्रकृतिवदनुकरणमित्यस्य वैकल्पिकत्वाद्विभक्ते र्लुक् न कृतः । अग्रेभोजं अग्रेभुक्त्वा वा व्रजति । अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा व्रजतीत्यर्थः । पक्षे लडादयः । अग्रेभुंक्ते । पौनःपुन्ये तु नित्यमेवणम् क्त्वाच । अग्रेभोजं २ भुक्त्वा २ वा व्रजति ॥

**मू०—कर्मण्याक्रोशेकृञः खमुञ् ॥** चौरंकारमाक्रोशति । चौरशब्दमुच्चार्येत्यर्थः ।

सुबोधिनी—कर्मण्याक्रोशेकृञः खमुञ्। कर्मण्युपपदे आक्रोशे गम्ये करोतेः खमुञ् स्यात्। खमुञ्प्रत्ययमाह। खित्वात्खितिपदस्येति मुम्। ञित्वाद्वृद्धिः। उकारउच्चारणार्थः। करोतिरुच्चारणेऽर्थे वर्तते। अत्र चौरंकारमाक्रोशति। चौरशब्दमुच्चार्येत्यर्थः॥

तत्त्वदीपिका—चौरंकारमिति खित्वान्मुम्। करोतिरत्रोच्चारणार्थः। चौरादयश्च शब्दप्रधानाः। चौर-त्वमित्युच्चार्य क्रोशतीत्यर्थः। नात्र चोरत्वं करणं किं त्वाक्रोशसंपादनार्थमचोरोपि चोर इत्युच्यते।

मू०—स्व्यर्थेषुस्वाद्वर्थे॥ कृञो णमुस्यादेककर्तृकयोः पूर्वकाले। पूर्वपदस्य मान्तत्वंनिपात्यते। अस्वादुं स्वादुंकृत्वा भुंक्ते। स्वादुंकारं भुंक्ते। संपन्नंकार-म्। लवणंकारं। सम्पन्नलवणशब्दौ स्वादुपर्यायौ। क्त्वापि। स्वादुंकृत्वा भुंक्ते।

सुबोधिनी—स्व्यर्थेषुस्वाद्वर्थे। कृञो णम् स्वादुपर्यायेषूपपदेषु एककर्तृकयोः पूर्वकाले करोतेर्णम् स्यात्। पूर्वपदस्य मांतत्वं निपात्यते॥

तत्त्वदीपिका—स्वाद्वर्थेइति। प्रकृतेन खमुञासिद्धेपि अव्ययत्वान्न मुम् स्यात्। ईषश्च निवृत्तिरित्याद्यर्थं निपातनम्।

मू०—यथातथयोरसूयाप्रतिवचने॥

सुबोधिनी—यथातथयोरसूयाप्रतिवचने। यथातथयोरुपपदयोः॥

तत्त्वदीपिका—यथातथयोरिति।

मू०—कृञःसिद्धाऽप्रयोगेणम्॥ यथाकारमहं भोक्ष्ये तथाकारम् भोक्ष्ये किंतवानेन। सिद्धाप्रयोगे किं। सिद्धंकृत्वा भुंक्ते।

सुबोधिनी—कृञःसिद्धाप्रयोगेणम्। करोतेः सिद्धाऽप्रयोगे णम् स्यात्। सिद्धः प्रयो-गोऽस्य एवं भूतश्चेत् कृञ् व्यर्थत्वात् प्रयोगानर्ह इत्यर्थः। गुणेषु दोषारोपणमसूया। असू-यया प्रतिवचनं असूयाप्रतिवचनं तस्मिन् वाच्ये सति। यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये। यथा भोक्ष्येऽहं तथा भोक्ष्य इत्यर्थः॥

तत्त्वदीपिका—सिद्धाप्रयोगे इति। सिद्धः अप्रयोगोऽस्य कृञो निःप्रयोजनत्वात्प्रयोगानर्ह इत्यर्थः।

मू०—कर्मणिदृशिविदोःसाकल्ये॥ कन्यादर्शं वरयति। सर्वाः कन्या इत्यर्थः। ब्राह्मणवेदं भोजयति यं यं ब्राह्मणं जानाति लभते विचारयति वा तं तं सर्वं भोजयतीत्यर्थः।

सुबोधिनी—कर्मणिदृशिविदोःसाकल्ये। कर्मण्युपपदे दृशिविदोर्णम् स्यात् साकल्ये। सक-लस्य भावः साकल्यं तस्मिन्। दृशिर् प्रेक्षणे। विद ज्ञाने। विदॢ लाभे। विद विचारणे इति त्रयाणां ग्रहणम्॥

मू०—यावतिविन्दजीवोः॥ यावद्वेदं भुंक्ते। यावल्लभते तावदित्यर्थः। यावज्जीवमधीते विप्रः।

सुबोधिनी–यावतिविंदजीवोः। यावच्छब्दे उपपदे विदॢ लाभे जीव प्राणधारणे आभ्यां णम् स्यात् ॥

तत्त्वदीपिका–यावदिति। पूर्वकाल इतीह नास्ति। असाकल्यार्थमिदं। साकल्ये दृशिविदोरित्येव सिद्धेः

**मू॰–कर्मणोश्चर्मोदरयोःपूरेः ॥** चर्मपूरं स्तृणाति। उदरपूरं भुंक्ते।

सुबोधिनी–कर्मणोश्चर्मोदरयोःपूरेः। चर्मोदरयोः कर्मणोरुपपदयोः पूरी आप्यायनेऽस्मात् णम्स्यात्। चर्मपूरं स्तृणाति। आच्छादयतीत्यर्थः ॥

**मू॰–कर्मण्युपपदेपूरेरूलोपश्चवा ॥** वर्षप्रमाणे गम्ये णम्। गोष्पदप्रमाणम् वृष्टो देवः। गोष्पदपूरं वा मूषिकाबिलप्रम् वृष्टोदेवः। मूषिकाबिलपूरं वा।

सुबोधिनी–कर्मण्युपपदेपूरेरूलोपश्चवा। वर्षप्रमाणे गम्ये णम् स्यात् समुदायेन वर्षप्रमाणे गम्ये। 'वर्षं वृष्टिरि'त्यमरः। वर्षस्य वृष्टेः प्रमाणं वर्षप्रमाणं तस्मिन् ॥

**मू॰–चैलार्थेषुकर्मसूपपदेषुक्नोपेर्वर्षप्रमाणे ॥** णम्। चैलक्नोपं वृष्टो देवः। वस्त्रक्नोपम्। वसनक्नोपम्।

सुबोधिनी–चैलार्थेषुकर्मसूपपदेषुक्नोपेर्वर्षप्रमाणे। चैलमर्थो येषां तानि चैलार्थानि तेषु कर्मसूपपदेषु क्नूयी शब्दे उंदे च ञ्यंतादस्मात् णम् स्यात्। क्नूयूधातोः प्रयोजके ञिप्रत्यये कृते र्हीव्लीरीक्नूयीक्ष्माय्यीनामिति पुक्। यवयोर्वसे हकारे चेति यलोपः। पुकीति गुणः। क्नोपीति ञ्यंताण्णम्। ञेरिति ञिलोपः। चैलं क्नोपयत्यार्द्रीकरोतीति चैलक्नोपम् ॥

**मू॰–निमूलसमूलयोऽकषः ॥** कषादिषु यथाविध्यनुप्रयोगः प्रयोक्तव्यः। अत्र प्रकरणे पूर्वकाल इति न संबध्यते। असम्भवादप्रतीतेश्च। निमूलकाषं कषति। समूलकाषं कषति। निमूलं समूलं वा कषतीत्यर्थः।

सुबोधिनी–निमूलसमूलयोःकषः। निमूलसमूलयोः कर्मणोरुपपदयोः कषहिंसायामस्मात् धातोर्णम् स्यात् ॥

तत्त्वदीपिका–निमूलप्रकृतिधातोरेवकषादेर्नत्वन्यधातुयोगेपीति बोध्यं। निमूलकाषमिति। निगतं मूलमस्येति निमूलं एकस्यापि धात्वर्थस्य निमूलादिविशेषणसंबंधाद्भेदे सति सामान्यविशेषभावेन विशेषणविशेष्यभावः एवमग्रेपि।

**मू॰–शुष्कचूर्णरूक्षेषुकर्मसूपपदेषुपिषः ॥** शुष्कपेषं पिनष्टि। शुष्कं पिनष्टीत्यर्थः। चूर्णपेषम्। रूक्षपेषम्।

सुबोधिनी–शुष्कचूर्णरूक्षेषुकर्मसूपपदेषुपिषः। एषु कर्मसूपपदेषु पिषॢ संचूर्णनेऽस्मात् धातोर्णम् स्यात् ॥

**मू॰–समूलाकृतजीवेषुकर्मसुहन्कृञ्ग्रहांणम् ॥** समूलघातं हन्ति। समूलं हन्तीत्यर्थः। अकृतकारं करोति। जीवग्राहं गृह्णाति। जीवं गृह्णातीत्यर्थः।

सुबोधिनी—समूलाकृतजीवेषुहन्कृञ्ग्रहांणम् । समूलादिषु कर्मसूपपदेषु हनादिभ्यो णम् स्यात् । इनादीनामेव यथाविध्यनुप्रयोगश्च कर्त्तव्यः । समूलोपपदाद्धंतेर्णमि कृते हनोघदिति घत् । ततोऽतउपधाया इति वृद्धिः । समूलघातं । जीवोपपदाद् गृह्णातेर्णमि कृते वृद्धिः । जीवग्राहं । जीवतीति जीवः । नाम्युपधादितिकः । जीवंतं गृह्णातीत्यर्थः ॥

**मू०—करणेहनः ॥** पादघातं हन्ति । पादेन हन्तीत्यर्थः।

सुबोधिनी—करणेहनः । करणकारकोपपदात् हंतेर्णम् स्यात् हंतेरनुप्रयोगश्च । नित्यसमासार्थमिदंसूत्रं । भिन्नधातुसंबंधे तु हिंसार्थानामिति वक्ष्यते ॥

**मू०—स्नेहनेपिषः ।** उदपेषं पिनष्टि । उदकेन पिनष्टीत्यर्थः ।

सुबोधिनी—स्नेहनेपिषः । स्नेहनकरणोपपदात् पिषॢ संचूर्णनेऽस्मात् णम्स्यात् स्निह्यते येन तत् स्नेहनं तास्मिन् । पेषंवासवाहनधिषु परेषु उदकस्योदादेशोवक्तव्यः । इत्युदादेशः । उदपेषम् ॥

**मू०—हस्तार्थेकरणेवर्तिग्रहोः ॥** हस्तवर्त्तं वर्त्तयति । करवर्त्तम् । हस्तेन गुटिकां करोतीत्यर्थः । हस्तग्राहं गृह्णाति । करग्राहम् । पाणिग्राहम् ।

सुबोधिनी—हस्तार्थेकरणेवर्तिग्रहोः। हस्तार्थकरणकारकोपपदाभ्यां वर्तिग्रहिभ्यां णम् स्यात् अनयोर्यथाविध्यनुप्रयोगश्च । वृतु वर्तने । ण्यंतादस्मात् णमि कृते णेरिति णिलोपः हस्तवर्तं । हस्तग्राहम् गृह्णाति । हस्तेन गृह्णातीत्यर्थः ॥

**मू०—धनार्थेकरणेपुषः ॥** धनपोषं पुष्णाति । स्वपोषम् । गोपोषम्।

सुबोधिनी—धनार्थेकरणेपुषः । धनपर्यायविशेषे चोपपदेषु पुष पुष्टावस्मात् णम् स्यात् अनुप्रयोगश्च ॥

**मू०—आधारेबन्धः ॥** चक्रबन्धं बध्नाति । चक्रे बध्नातीत्यर्थः ।

सुबोधिनी—आधारेबंधः । अधिकरणोपपदाद्बंध बंधनेऽस्मात् णम् स्यात् अनुप्रयोगश्च ।

**मू०—संज्ञायांबध्नातेः ॥** क्रौञ्चबंधं बद्धः । मयूरिकाबन्धं बद्धः । अट्टालिकाबन्धं बद्धः । बन्धविशेषाणां संज्ञा एताः ।

सुबोधिनी—संज्ञायांबध्नातेः । संज्ञायां वाच्यायामस्मात् णम् स्यात् ॥

**मू०—कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥** जीवनाशं नश्यति जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषोवहतीत्यर्थः ।

सुबोधिनी—कर्त्रोर्जीवपुरुषयोर्नशिवहोः । जीवपुरुषकर्तृकोपपदाभ्यां णश अदर्शने । वह प्रापणे । आभ्यां णम् स्यात् यथाविध्यनुप्रयोगश्च ॥

तत्त्वदीपिका—जीवंतमिति जीवः । नाम्युपधादिति कः करणे ।

**मू०—ऊर्ध्वेकर्त्तरिशुषिपूरोः ॥** ऊर्ध्वशोषं शुष्यति । ऊर्ध्वः शुष्यतीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वः पूर्यत इत्यर्थः ।

सुबोधिनी-ऊर्ध्वेकर्तरिशुषिपूरोः । ऊर्ध्वकर्त्रोपपदाभ्यां शुष शोषणे पूरी आप्यायने आभ्य णम् स्यात् यथा अनयोरनुप्रयोगश्च । ऊर्ध्वशोषं शुष्यति । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्य तीत्यर्थः । ऊर्ध्वपूरं पूर्यते । ऊर्ध्वमुखएवघटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः ॥

**मू०-उपमानेकर्मणिकर्त्तरिच ॥ घृतनिधायं निहितं जलम् । घृतमिव सुरक्षितमित्यर्थः । अजनाशं नष्टः । अज इव नष्ट इत्यर्थः । कषादिषु यस्मा-ण्णम् विहितस्सएवानुप्रयोक्तव्यः । तथैवोदाहृतम् ।**

सुबोधिनी-उपमानेकर्मणिकर्त्तरिच । उपमानवाचके कर्तरि कर्मणि चोपपदे धातोर्ण स्यात् तस्यैव धातोरनुप्रयोगश्च ॥

**मू०-उपदंशस्तृतीयायाम् ॥ इतः प्रभृति पूर्वकालइति संबध्यते । मूल-कोपदंशं भुंक्ते । मूलकेनोपदंशम् । दश्यमानस्य मूलकस्य भुजिंप्रति करण-त्वात्तृतीया । यद्यप्युपदंशिना सह न शाब्दः संबंधः । तथाऽप्यार्थोऽस्त्येव ।**

सुबोधिनी-उपदंशस्तृतीयायाम् । तृतीयांतोपपदादुपदंशतेर्णम् स्यात् । मूलकोपदंशं वाक्यमपि च । मूलकेनोपदंशम् ॥

तत्त्वदी०-उपदंशस्तृतीयायामिति । मूलकोपदंशं भुंक्ते । मूलकेनोपदंश्य भुंक्त इत्यर्थः । अत्र मूलकस्य भुज्यपेक्षया करणत्वं शाब्दं मूलकेन भुंक्ते । किं कृत्वा । उपदंश्य । किं अर्थान्मूलकमित्येतदेव कर्म गम्यते ।

**मू०-हिंसार्थानांचानुप्रयोगधातुनासमानकर्मणांतृतीयान्तेउप-पदे ॥ दण्डोपघातं गाः कालयति । दंडेनोपघातं दंडताडं दण्डेन ताडं वा । समानकर्मकाणां किम् । दण्डेन चौरमाहत्य गाः कालयतीत्यर्थः ।**

सुबोधिनी-हिंसार्थानांचानुप्रयोगधातुनासमानकर्मणांतृतीयांतेउपपदे । तृतीयांतोपपदा-दनुप्रयोगधातुना सह समानकर्मकाद्धिंसार्थाण्णम् स्यात् । हंतेर्णमि कृते हनोघदिति घत वृद्धिः । दंडोपघातं गाः कालयति । कल विक्षेपे चुरादिः । प्रेरयतीत्यर्थः दंडताडं । तड आघाते चुरादिः ॥

**मू०-सप्तम्यांतृतीयायाञ्चोपपदेउपपीडरुधकर्षः ॥ पार्श्वोपपीडं शेते । पार्श्वाभ्यामुपपीडम् । पार्श्वयोरुपपीडं वा । व्रजोपरोधं गाः स्थापयति । व्रजे-नोपरोधम् । पाण्युपकर्षं धानास्संगृह्णाति । पाणावुपकर्षम् । पाणिनोपकर्षम् ।**

सुबोधिनी-सप्तम्यांतृतीयायांचोपपदेउपपीडरुधकर्षः । सप्तमीतृतीयांतोपपदेभ्य उपपू-र्वेभ्यः पीडादिभ्यो णम् स्यात् । इह सूत्रे पीडादीनां समाहारद्वंद्वं कृत्वा उपपूर्वः पीडरुध-कर्ष इत्युत्तरपदलोपी समासः कर्तव्यः । सूत्रे पुंस्त्वं सौत्रं ज्ञेयं । पंचम्यर्थे प्रथमा च ज्ञेया । पीड पीडायां । रुधिर आवरणे । कृष विलेखने । अयं भौवादिक एव गृह्यते । गुणसहितस्य कृषेरपानिर्देशात् । तत्फलं तुदादेर्व्युदासः । यद्यपि विलेखने एव तौदादिकोपि पठ्यते । तथापि क्षेत्रविषयकविलेखने एव तौदादिकः प्रयुज्यते । एवं ॥ तौदादिकात्कर्षेः क्यप् प्रत्यय एव भवति । क्षेत्रे उपकृष्य हलेनोपकृष्योति ।

मू०—तृतीयासप्तम्योरुपपदयोस्संनिकर्षेधातोः ॥ केशग्राहं युध्यन्ते। केशेषु गृहीत्वा युध्यंत इत्यर्थः। हस्तग्राहम्। हस्तेन गृहीत्वा।

सुबोधिनी—तृतीयासप्तम्योरुपपदयोःसन्निकर्षेधातोः। तृतीयांतसप्तम्युपपदाद्धातोर्णम् स्यात्। सन्निकर्षः। संबंधः॥

मू०—तृतीयासप्तम्योःप्रमाणेगम्येधातोः ॥ द्व्यंगुलोत्कर्षं खण्डिकां छिनत्तीति। द्व्यंगुलेन द्व्यंगुले वोत्कर्षम्।

सुबोधिनी—तृतीयासप्तम्योःप्रमाणेगम्येधातोः। तृतीयांतसप्तम्युपपदाद्धातोर्णम् स्यात् प्रमाणे गम्ये। द्वयोरंगुल्योः समाहारो द्व्यंगुलं द्व्यंगुलोत्कर्षं द्व्यंगुलेनोत्कृष्य परिच्छिद्य इत्यर्थः। खंडिकां छिनत्ति। ह्रस्वः खण्डः खंडिका ताम्॥

मू०—अपादानेद्वितीयायांचत्वरायांगम्यमानायांधातोः॥ शय्योत्थायं धावति। यष्टिग्राहं युध्यन्ते। लोष्टग्राहम्।

सुबोधिनी—अपादानेद्वितीयायांत्वरायांगम्यमानायांधातोः। पंचमीद्वितीयांतोपपदाद्धातोर्णम् त्वरायां गम्यमानायां। शय्योत्थायं धावति। शय्याया उत्थाय धावतीत्यर्थः। आतोयुगिति युक्। उदःस्थास्तंभोरिति सलोपः। यष्टिग्राहं युध्यते। एवं खलु युद्धाय त्वरंते। यष्ट्यादिकमपि गृहीत्वा धावंति। नायुधं प्रतीक्षंते इत्यर्थः॥

मू०—अपगुरोर्वाणम्योतः॥ गुरी उद्यमे। अस्यपगारं युध्यन्ते। अस्यपगोरं वा।

सुबोधिनी—अपगुरोर्वाणम्योतः। गुरी उद्यमे इत्यस्योकारस्यात्वं वा स्यात् णमि प्रत्यये। अस्यपगारं युध्यंते। असिमुद्यम्येत्यर्थः॥

मू०—अध्रुवेस्वाङ्गेद्वितीयान्तेधातोः॥ भ्रूविक्षेपं कथयति भ्रुवं विक्षेपम्। अध्रुवे किम्। शिरउत्क्षिप्य कथयति। येन विना न जीवनं तद्ध्रुवम्।

सुबोधिनी—अध्रुवस्वांगेद्वितीयांतेधातोः। द्वितीयांतादध्रुवस्वांगोपपदाद्धातोर्णमस्यात्।

मू०—परिक्लिश्यमानेद्वितीयान्तेस्वाङ्गेधातोः॥ उरःप्रतिपेषं युध्यन्ते। कृत्स्नमुरस्संपीडयित्वेत्यर्थः। 'उरोविदारं प्रतिचस्करे नखैः'। ध्रुवार्थमिदम्।

सुबोधिनी—परिक्लिश्यमानेद्वितीयांतेस्वांगेधातोः। सर्वतो बाध्यमाने स्वांगे द्वितीयांते उपपदे सति धातोर्णम् स्यात्। पिष्लृ संचूर्णने। उरःप्रतिपेषम्॥

मू०—द्वितीयान्तेविशिपतिपदिस्कंदांव्याप्यमानासेव्यमानयोः॥ गेहादिद्रव्याणांविश्यादिक्रियाभिःसाकल्येन संबंधो व्याप्तिः। क्रियायाः पौनःपुन्यमासेवा। गेहानुप्रवेशमास्ते। गेहंगेहमनुप्रवेशम्। एवं गेहानुप्रपातं। गेहानुप्रपादं। गेहानुस्कंदम्। असमासे गेहस्य णमन्तस्य च पर्यायेण द्वित्वम्। गेहंगेहमनुप्रवेशम्। गेहमनुप्रवेशमनुप्रवेशम्।

सुबोधिनी–द्वितीयांतेविशिपतिपदिस्कंदांव्याप्यमानासेव्यमानयोः । द्वितीयांतोपपदेभ्यो विश्यादिभ्यो णम् स्यात् व्याप्तावर्थे पौनःपुन्ये चार्थे गम्ये । वीप्सायां पदं द्विरिति क्रियासमभिहारे इति द्वित्वं तु न भवति । समासेनैव वीप्सासमभिहारयोरुक्तत्वात् । यद्यपि पौनःपुन्ये णमुक्त एव तथापि द्वितीयांतस्योपपदसंज्ञार्थं समासे वायमिति पुनर्विधिः समासे गेहानुप्रवेशम् । असमासे गेहंगेहमनुप्रवेशमिति च ॥

**मू०–क्रियांतरेषुकालेषुद्वितीयान्तेषूपपदेषुक्रियाव्यवधानेवर्तमानयोरस्यतितृषोः ॥** द्व्यहात्यासं गाः पाययति । द्व्यहमत्यासम् । द्व्यहतर्षम् । अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते । अद्यपाययित्वा । द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः ।

सुबोधिनी–क्रियांतरेषुकालेषुद्वितीयांतेषूपपदेषुक्रियाव्यवधानेवर्तमानयोरस्यतितृषोः ।क्रियामंतरयंति व्यवधानेनेति क्रियांतरास्तेषु क्रियांतरकालवाचिषु शब्देषु द्वितीयांतेषूपपदेषु सत्सु क्रियाव्यवधाने वर्तमानाभ्यामसुक्षेपणे ञितृषपिपासायामाभ्यां णम् स्यात् ॥

**मू०–नाम्निद्वितीयान्तेआदिशिग्रहोः ॥** नामादेशमाचष्टे नामग्राहं कथयति ॥

सुबोधिनी–नाम्निद्वितीयांतेआदिशिग्रहोः । द्वितीयांते नामशब्दोपपदाभ्यां आङ्पूर्वकदिश अतिसर्जने ग्रह उपादाने आभ्यां णम् स्यात् ॥

**मू०–अव्ययेऽयथाभिप्रेताख्यानेकृञः क्त्वाणमौवा ॥** अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य नीचैः कथनम् । उच्चैःकृत्य उच्चैः कृत्वा उच्चैःकारं वाऽप्रियमाचष्टे । नीचैःकृत्य नीचैःकृत्वा नीचैःकारं वा प्रियं ब्रूते ।

सुबोधिनी–अव्ययेऽयथाभिप्रेताख्यानेकृञः क्त्वाणमौवा । अव्ययपूर्वपदात्करोतेः क्त्वाणमौ वास्तः । अयथाभिप्रेताख्यानेर्थे । यथाभिप्रेतं तथाख्यातमित्यर्थः । अप्रियस्य नीचैः कथनं । यथाभिप्रेताख्यानं । तद्विपरीतं अयथाभिप्रेताख्यानमिति ॥

**मू०–तिर्यगुपपदेसमाप्तौकृञः क्त्वाणमौवा ॥** तिर्यक्कृत्य गतइति तिर्यक्कृत्वा । तिर्यक्कारम् । समाप्य गत इत्यर्थः । समाप्तौ किम् । तिर्यक्कृत्वा काष्ठङ्गतः ।

सुबोधिनी–तिर्यगुपपदेसमाप्तौकृञः क्त्वाणमौवा । तिर्यक्शब्दोपपदात्करोतेः क्त्वाणमौ स्तः समाप्तौ गम्यमानायां । समाप्तौ किम् । तिर्यक्कृत्वा काष्ठं गतः अग्रतः स्थितम् । र्वतः कृत्वा गत इत्यर्थः ॥

**मू०–स्वाङ्गेतस्प्रत्ययेकृभ्वोः ॥** मुखतःकृत्य गतः । मुखतः कृत्वा मुखतःकारम् । मुखतोभूय गत इति । मुखतोभूत्वा । मुखतोभावम् ।

सुबोधिनी–स्वांगेतस्प्रत्ययेकृभ्वोः । तस्प्रत्ययांते स्वांगे उपपदे डुकृञ्करणे । भूसत्तायाम् । आभ्यां णम् स्यात् तस प्रत्ययो यस्मात्तत्तसप्रत्ययं तस्मिन् । तसप्रत्यये किम् ।

ति तस्यक्रीति मुखतः कृत्वा गतः तत्तु उपक्षयेऽस्मात् क्विपि कृते बाहुलकाद्विड़ अलसोः ...लिति दीर्घो न भवति ॥

**मू०—नाधार्थप्रत्ययान्तेच्व्यर्थेकृभ्वोःक्त्वाणमौवा ॥** अनाना नाना-कृत्य नानाकृत्वा नानाकारम् । विनाकृत्य विनाकृत्वा विनाकारम् । नानाभूय नानाभूत्वा नानाभावम् । अनेकंद्रव्यमेकंकृत्वा एकधाकृत्य एकधाकृत्वा एक-धाकारम् । एकधाभूय एकधाभूत्वा एकधाभावम् । प्रत्ययग्रहणं किम् । हिरुक् कृत्वा । पृथग्भूत्वा ।

सुबोधिनी—नाधार्थप्रत्ययान्तेच्व्यर्थेकृभ्वोः क्त्वाणमौवा । नाधार्थप्रत्ययान्ते च्व्यर्थे विषये ...पपदे कृभ्वोःक्त्वाणमौ वा स्तः । विनञ्भ्यांनानाञाविति नानाञौ प्रत्ययौ । संख्यायाः ...कारेधा इति धाप्रत्ययः । द्वित्रिभ्यांधमुञ्चेति एधाच्धमुञाविति । नाधार्थप्रत्ययः । ...न द्वैधं कृत्येत्यादि । प्रत्ययग्रहणं किम् । हिरुक् कृत्वा पृथक् कृत्वा । हिरुक् मध्ये ...नार्थे चेति रुद्रः । हिरुगुक्तं च सामीप्ये इत्यमरमाला । पृथक् विनान्तरेणर्ते हिरुक् नाना ...वर्जने इत्यमरः ।

**मू०—तूष्णींशब्देभुवःक्त्वाणमौ ॥** तूष्णींभूय गतः । तूष्णींभूत्वा । तूष्णीं-भावम् ।

सुबोधिनी—तूष्णींशब्देभुवःक्त्वाणमौ । तूष्णींशब्दे उपपदे भूधातोः क्त्वाणमौ स्तः ।

**मू०—अन्वक्शब्देभुवःक्त्वाणमौवा ॥** आनुकूल्ये गम्ये । अन्वग्भूयास्ते । अन्वग्भूत्वा । अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वानुकूलोभूत्वा आस्ते इत्यर्थः । आनुकूल्ये किम् । अन्वग्भूत्वा तिष्ठति पृष्ठतोभूत्वेत्यर्थः ।

सुबोधिनी—अन्वक्शब्देभुवःक्त्वाणमौवा । अन्वक्शब्दे उपपदे भुवःक्त्वाणमौवास्तः ।

**मू०—वर्णात्कारः ॥** अकारः । इकारः । वकारः ।

सुबोधिनी—वर्णात्कारः । वर्णनिर्देशे वाच्येऽक्षरात् कारप्रत्ययः स्यात् । निर्देशोऽनुकर-...म् । कारप्रत्ययमाह । बहुलग्रहणमत्र कर्त्तव्यम् । तेन क्वचिन्न ॥

तत्त्वदीपिका—वर्णात्कार इति । प्रयोगस्य वर्णवाचिनः कारप्रत्ययः अतः अः केशवे विरञ्च्येवेत्यादौ ...योगस्यवर्णप्रतिपादकत्वाभावात्कारप्रत्ययो नेति वासुदेवेनोक्तं तन्न । अकारो वासुदेवस्यादित्यादौ हसस्वरसमुदा-...स्योच्चार्यमाणत्वात्कारप्रत्ययो न स्यात् । अतो वर्णनिर्देश इत्यनुवर्त्य वर्णमात्रानुकरण इत्यर्थे आकारस्योच्चार-...र्थत्वाद्वर्णमात्रस्यैवानुकार्यत्वात् । यत्तु लघुभाष्ये न एव नकार इत्यादौ समुदायात्कारप्रत्ययाभावेन करोतेरु-...रणार्थत्वात् करणं कार इति व्युत्पत्त्यैव सिद्धत्वे मकारादिसिद्धौ वर्णात्कार इति वार्तिकं व्यर्थमित्युक्तं । यत्तु ...ष्णपण्डितेन ... कारकरणं न सिध्येत् । करोतेः पौनरुक्त्यादिसार्थकं वार्तिकमित्युक्तं । तन्नेदं वाच्यम् । अका-...करणमित्यत्र यङन्तकरोतेरुच्चारणार्थत्वे पौनरुक्त्याभावात् ।

**मू०—रादिफोवा ॥** रेफः । रकारः ।

सुबोधिनी—रादिफोवा । रकाराक्षराद्वा इफ प्रत्ययः स्यात् ॥

मू ... च्छेषस्यसिद्धिः। यथा मातराद्यः ॥

सुबोधिनी–लोकाच्छेषस्यासिद्धिः। उक्तादन्यः शेषः। अत्रानुक्तस्य सिद्धिः साधन लोकादन्यव्याकरणात् ज्ञातव्यं। यथा। माता च पिता चेति मातरपितरौ। मातरेति निपातनादिति ॥

तत्त्वदीपिका–धातूनामानंत्यात्तेभ्यश्चोत्पद्यमानानां कृतामप्यानन्त्यमतो न सर्वशः शब्दाव्युत्पादयितुं शक्या इत्याह। लोकादिति। शेषस्य उक्तादन्यस्य सिद्धिर्निष्पत्तिर्लोकादनादिवृद्धशब्दप्रयोगाद्व्याकरणान्तराच्च ज्ञेयेत्यर्थः। सिद्धिशब्दोमंगलवाचक इत्यन्ते प्रयुक्तः॥ आदिमध्यावसानेषु मंगलमाचरणीयामित्युक्तेः समंगलानि शास्त्राणि प्रथन्ते वीरपुरुषकाराण्यापुण्यपुरुषकाराणि भवंत्यध्येतारश्चास्य वर्द्धन्ते। एवं चैतदध्येतॄणां कार्यसिद्धिः स्यादिति ध्वनितम्।

इति श्री...रामाश्रमविरचितायां सिद्धान्तचंद्रिकायामुत्तरार्द्धं समाप्तम् ॥

...ठकधुर्यभक्तिविनया नंदंति सद्विद्यया
...शास्त्रविचारजातपरमानंदाः स्वभावोज्ज्वलाः ॥
संवेगादिगुणैर्वशीकृतजना विख्यातकीर्तिप्रभा–
स्तेषामस्ति विचक्षणो विनयवान् शिष्यः सदानंदकः ॥ १ ॥
निधिनंदार्वभूवर्षे ॥ १७९९ सदानंदः सुधीमुदे ॥
सिद्धांतचंद्रिकावृत्तिं कृदंते कृतवानृजुम् ॥ १ ॥

इति श्रीसिद्धान्तचंद्रिकायाव्याख्या सुबोधिनीसमाख्याता सदानंदी समाप्ता ॥

लोकेशंकरसंज्ञेनश्रीक्षेमकरसूनुना। मुदे भूयादुमाशंभोर्विहिता तत्त्वदीपिका ॥ १ ॥
चन्द्रवेदहयभूमिसंयुते १७४१ वत्सरे नभसि मासि शोभने।
शुक्लपक्षदशमीतिथावियं दीपिका बुधप्रदीपिका कृता ॥ २ ॥
श्रीचंडिकायाश्चरणारविन्दप्रसादतो यल्लघुदीपिकाभूत्।
मनीषयापीह भवत्यमुष्या अध्येतुरध्यापनहेतुराशु ॥ ३ ॥
इतिश्रीमद्रामकरपौत्रश्रीक्षेमकरसूनुलोकेशंकरविरचितासिद्धान्तचन्द्रिका व्याख्या तत्त्वदीपिका समाप्ता शुभमस्तु ॥ सिद्धिरस्तु ॥

समाप्तोऽयं ग्रन्थः।

---

...तक मिलनेका ठिकाणा–
खेमराज श्रीकृष्णदास